आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः २६

पालकाप्यमुनिविरचितो

# हस्त्यायुर्वेदः ।

भूतपूर्वजयपुरराजकीयसंस्कृतपाठशालाध्यापकेन संप्रति लाहो-
रराजकीयसंस्कृतपाठशालाप्रथमाध्यापकेन काव्यमालासं-
पादकेन च दाधीचपण्डितबदरीनाथात्मजेन
शिवदत्तशर्मणा संशोधितः ।

स च

महादेव चिमणाजी आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितः ।

शालिवाहनशकाब्दाः १८१६

खिस्ताब्दाः १८९४



[illegible] ।

ॐ तत्सद्ब्रह्मणे नमः ।

# हस्त्यायुर्वेदप्रस्तावना ।

गोपालसेवासततानुरक्तश्रीमाधवाधीशसुदृष्टिहृष्टे ॥
लक्ष्मीसमुल्लासितकान्तिचन्द्रामात्यप्रसादेन निरन्धकारे ॥ १ ॥
ढुण्ढारदेशे जयपत्तनेऽस्मिन्नधीतिना संस्कृतशास्त्रसार्थे ॥
दाधीचधीमच्छिवदत्तनाम्ना प्रयत्यते शोधनभूमिकार्थम् ॥ २ ॥

'धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयसंपत्तिर्हि शरीरस्थित्यधीना' इत्यत्र न केषामपि विप्रतिपत्तिः । शरीरस्थितिश्चाऽऽयुर्वेदज्ञानाधीना । आयुर्वेदश्च मनुष्याणां ब्रह्मसनत्कुमाराश्विनीकुमारादिभिर्बहुभिर्ऋषिभिरिव गजाश्वादीनां तिरश्चामपि पालकाप्यशालिहोत्रादिभिर्महत्या कृपया निर्मितः । तत्र मनुष्यायुर्वेदे चरकसुश्रुतवाग्भटादिग्रन्थानां प्रसिद्धत्वाद्बहुत्र मुद्रितत्वाच्च गजायुर्वेदे कस्यापि ग्रन्थस्यामुद्रणेनाप्रसिद्धत्त्वाद्बहुत्र टीकाग्रन्थेषु 'इति पालकाप्यः' इत्यस्यैव प्रायशो दर्शनेन पालकाप्यविरचितहस्त्यायुर्वेदस्यैव प्रकाश्यत्वं मन्यमानेन 'आपटे' इत्युपाख्यचिमणाजीतनूजेन महादेवशर्मणाऽऽनन्दाश्रमनिर्मापकेण प्रोत्साहितोऽहमिमं ग्रन्थं चतुर्भिः पुस्तकैः संमेल्य शोधयित्वाऽऽनन्दाश्रममुद्रणाय समर्पितवान् ।

एतद्धस्त्यायुर्वेदनिर्माणदेशकालज्ञानस्याप्यावश्यकत्वमिति कृत्वा तद्विषयेऽपि यथाकिंचिद्यथामति प्रयत्यते ।

तत्र देशस्तु—

'अङ्गदेशेष्वभूच्छ्रीमाल्लोमपादो महीपतिः' ।
'अङ्गराजो महाप्राज्ञश्चम्पायां पृथिवीपतिः ।
महाप्रभावमासीनं पालकाप्यं स्म पृच्छति' ।

इत्यादिना तत्र तत्र समुपलभ्यमानेनाङ्गदेशो चम्पानगरीरूपो व्यक्तमत्रैव निर्णीतः ।

कालस्तु—

'इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः ।
नाम्ना दशरथो राजा श्रीमान्सत्यमतिश्रवः ॥

---

१ श्रीमन्महाराजाधिराजश्री१०८युतसवाईमाधवसिंहजी ( G. C. S. I. ) वर्मणां सौम्यदृष्ट्या हर्षिते । २ रावबहादुरबाबूसाहेबश्रीकान्तिचन्द्रमुकुरजी ( C. I. E. ) शर्मणां प्रसन्नतया दुष्कोशादिजन्यान्यायरूपान्धकारशून्ये ।

अङ्गराजेन सख्यं च तस्य राज्ञो भविष्यति ।
कन्या चास्य महाभागा शान्ता नाम भविष्यति ॥
पुत्रस्त्वङ्गस्य राज्ञस्तु रोमपाद इति श्रुतः ।
तं स राजा दशरथो गमिष्यति महायशाः ' ॥

इत्यादिना रामायणबालकाण्डकथानकेनाङ्गाधिपरोमपादस्य दशरथस्य च सख्यवर्णनेन समकालवृत्तित्वनिश्चयेन रोमपादमहाराजप्रश्नोत्तरदातृपालकाप्यमुनेरपि दशरथसमकालवर्तित्वमेव निश्चीयते । अत एवाग्निपुराणे भगवता व्यासेनापि षट्सप्तत्यधिकद्विशत(२७६)मितेऽध्याये गजायुर्वेदः पालकाप्योपदेशरूप एव दर्शितः । अग्निपुराणस्य भगवद्वेदव्यासारचितत्वमावेदयन्त आधुनिकास्तु 'अष्टादशपुराणानां कर्ता सत्यवतीसुतः' इत्यापामरप्रसिद्धिप्रतिकीलिता एव न श्रद्धालुभिरादरणीयाः । 'दशरथमहाराजप्रादुर्भावसमयस्तु चतुर्विंशस्त्रेतायुगः' इति

"चतुर्विंशे युगे रामो वसिष्ठेन पुरोधसा ।
सप्तमो रावणस्यार्थे जज्ञे दशरथात्मजः" ॥

इति मत्स्यपुराणीयसप्तचत्वारिंशाध्याये ( २४२ ) श्लोकतोऽवगम्यते । इत्थमवगतातिप्राचीनत्वस्यास्य ग्रन्थस्य पुस्तकचतुष्टयमस्माभिरासादितम् । तत्र—

(क.) संज्ञकम्—जयपुरमहाराजाश्रितायुर्वेदाध्यापककच्छवंशादिकाव्यकवयितृश्रीकृष्णशर्मणाम् ।

(ख.) संज्ञकम्—पुण्यपत्तनीयराजकीयपुस्तकागारस्थम् ।

(ग.) संज्ञकम्—कलकत्तानगरीयराजकीयपुस्तकागारस्थम् ।

(घ.) संज्ञकम्—जयपुरराष्ट्रान्तर्गतशीकरनगराधीशगुरुगोस्वामिश्रीयुतानन्दीलालशर्मणाम् ।

बहुकालभ्रष्टपठनपाठनकेऽस्मिन्ग्रन्थेऽशुद्धित्रुटिबाहुल्येऽप्यभिप्रायस्त्ववगम्यत एव ।

इति निवेदयति भूतपूर्वजयपुरराजकीयसंस्कृतपाठशालाध्यापकः संप्रति लाहोरस्थसंस्कृतपाठशालाप्रथमाध्यापकः काव्यमालासंपादकश्च पण्डितशिवदत्तशर्मा ।

---

# अथ हस्त्यायुर्वेदाध्यायविषयानुक्रमः ।

## तत्र प्रथमं महारोगस्थानम् ।

विषयाः अ०

मङ्गलाचरणम्, वनचारिगजस्वायत्तीकरणचिन्ताक्रान्तरोमपादनृपेण गौतमादिमुनिसमागमवर्णनम्, प्रसङ्गाद्गङ्गादक्षिणतीरवर्णनम्, गौतमादीन्प्रति रोमपादकृतसुरप्रदत्तस्ववरकथनं वनचारिगजानां विधिवदानयने तत्प्रार्थना च । गजानयनार्थं गौतमादिप्रेषितदूतान्प्रति पालकाप्यमुनेर्गजानां च दर्शनकथनम्, प्रसङ्गात्पालकाप्यस्य तदाश्रमस्य च वर्णनम्, चम्पासमीपे रोमपादकृतगजानयनं गौतमादीन्प्रति गजशिक्षणे रोमपादकृतप्रार्थना च। पालकाप्यं प्रति रोमपादकृततदीयजन्मनामगजप्रीतिशिक्षणादिप्रश्नवर्णनम् । प्रसङ्गाद्दीर्घतपोमुनिदत्तशापचिन्ताक्रान्तगजान्प्रति · ब्रह्मकृतभाविहस्त्यायुर्वेदविदुत्पत्तिकथनवर्णनं प्रसङ्गाद्यक्षिणीकृतसामगायनाख्यमुनिधर्षणकथनं करेणुकृतसामगायनमुनिसरेतोमूत्रप्राशनवर्णनं तद्गर्भधारणवर्णनं च । प्रसङ्गाद्गुचिराख्यानकथनं रुचिरायै ब्रह्मदत्तशापस्य तया सह भार्गवसमागमस्य च वर्णनम्, वसुकुलोत्पन्नगुणवतीं प्रति मतङ्गक्रोशाापस्य भाविहस्त्यायुर्वेदवेत्तृपालकाप्यमुनेरुत्पत्त्यनन्तरं तत्कृतशापविमोक्षणस्य च कथनम् । सामगायनकृतपालकाप्यमुनिजातकर्मादिसंस्कारकरणकथनम्, रोमपादं प्रति पालकाप्यकृतस्वकीयगजसहितस्थितितपआचरणादिवनवर्तनकथनम्, प्रसङ्गाद्गजोत्पत्तिकथनम् । वनाद्ग्रामं प्रत्यानीतगजानां व्याध्युत्पत्तिहेतुकथनम्, पालकाप्यकृतरोमपादसमीपस्थित्यङ्गीकारो रोमपादं प्रति पालकाप्यकृतहस्त्यायुर्वेदानुवर्तनाशाकरणं च ... १

गजानां अलप्रवेशघृततैलसेकादिकथनम्, कृतेजोबर्धकगुडतण्डुलदानसमयपरिमाणादिकथनं व्याध्यनुत्पत्तिहेतुभक्ष्यपानीयवस्तुतत्समयपरिमाणादिकथनं च ... ...

वनस्थगजानां पर्वतपतनादिपञ्चदशमरणहेतुकथनम्, आहारजादिसात्म्यकथनम्, ब्रह्मदत्तदेववाहनत्ववृक्षभङ्गतृणाहारत्वबलवत्त्वनिरामयत्वादिकथनम् ... ... ...

एतद्ग्रन्थस्थमहारोगादिस्थानचतुष्टयकथनं प्रतिस्थानगताध्यायानां सान्तर्भेदनामसंख्याकथनं समग्रग्रन्थगताध्यायश्लोकसमष्टयङ्ककथनं च ... ... ... ...

गजानां प्रशंसा गुणवर्णनं च, समरे गजं त्यजतो दुर्गतिप्राप्तिकथनं गजाधिकार्योदीनामष्टानां स्वभावकथनं च ... ... ...

हस्त्यायुर्वेदाध्येतृशिष्यगुणवर्णनमध्ययनात्पूर्वं शिष्यकर्तव्योपवासब्रह्मादिपूजनभवादिदेवतोद्देश्यकहवनप्रकारवर्णनं च । आचार्यगुणवर्णनम्, आचार्यशिष्ययोः परस्परमन्यथाचरणेऽन्योन्यपापभुक्त्वकथनं हस्त्यायुर्वेदस्याथर्ववेदोपवेदत्वकथनं ब्राह्मणक्षत्रियवैश्यकर्तव्याध्यापनयोग्यवर्णकथनं नास्तिकादिशिष्याध्यापननिषेधकथनं च ... ...

गजरोगाणामाध्यात्मिकागन्तुकभेदद्वयकथनम्, षट्सप्ततिमितवातिकरोगाणां नामकथनम्, सप्तविंशतिमितपैत्तिकरोगाणां नामकथनम्, द्वात्रिंशन्मितश्लैष्मिकरोगाणां नामकथनम्, पञ्चदशरक्तजरोगाणां नामकथनम्, द्वाविंशतिमितसांनिपातिकरोगाणां नामकथनम्, चतुर्दशवातपित्तात्मकरोगाणां नामकथनम्, वातश्लेष्मसमुत्थषोडशरोगाणां नामकथनम्, वातरक्तजसप्तरोगाणां नामकथनम्, श्लेष्मशोणितपित्तकफादिसंकररोगाणां नामसंख्याक-

| विषयाः | अ० |
|---|---|
| ...म्, आगन्तुकरोगाणां नामसंख्याकथनं क्रमेष्टपञ्चकथनं साध्यासाध्यकृच्छ्रसाध्यरोगाणां नामकथनं, च ... ... ... | ७ |
| ज्वरोत्पत्तिकथनम्, प्रसङ्गाद्देवदानवयोर्युद्धकथनम्, देवानां स्वरक्षणार्थं शिवविष्णू प्रति गमनवर्णनम्, शिवविष्णुसृष्टज्वरप्रज्वरपीडितदानवानां स्वरक्षणार्थं ब्रह्माणं प्रति गमनं स्वस्य ज्वरप्रज्वरपीडाविमुक्तिप्रार्थना च। प्रसङ्गाज्ज्वरप्रज्वरयोः स्वरूपवर्णनम्, ब्रह्मकृतदैत्यविज्वरत्वकथनं मृत्युलोकं प्रति ज्वरप्रज्वरयोः प्रेषणं च। ज्वरप्रज्वरपूर्वरूपलक्षणकथनम्... ... ... | ८ |
| ज्वरस्य नरहयखरादिस्थानविशेषभेदेन ज्वराभिलापखारेकादिनामविशेषकथनम्, गजस्थितज्वरस्य पाकल इतिनामतदवयवार्थकथनं मनुष्यभिन्नासह्यत्वकथनं च। ज्वरस्य मनुष्यसह्यत्वगजासह्यत्वयोर्हेतुकथनम्, पाकलस्य शुद्धवालादिदशभेदकथनम्, शुद्धबालादिदशविधपाकलस्य प्रत्येकमुत्पत्तिहेतुलक्षणकार्यपरिहारादिकथनम्... ... ... | ९ |
| स्कन्दरोगस्य शोषणमितिनामान्तरान्वर्थत्वान्तरायामादिभेदत्रयकथनम्, अन्तरायामस्कन्दस्योत्पत्तिनिदानचिकित्सितकृच्छ्रसाध्यत्वकथनम्, बहिरायामव्याविद्धस्कन्दयोरुत्पत्तिनिदानासाध्यत्वकथनम्... ... | १० |
| पुराणकृशरोगस्य पाण्डुरोगइतिनामान्तरकथनं वातपित्तकफसंभवात्त्रैविध्यकथनं च। पित्तजपुराणकृशनामान्तरपाण्डुरोगस्योत्पत्तिनिदानचिकित्सितकथनम्, कफजकर्तुसरिनामान्तरपाण्डुरोगस्योत्पत्तिनिदानचिकित्सितकथनं वातजप्लीहोदरनामान्तरपाण्डुरोगस्योत्पत्तिनिदानचिकित्सितकथनं च ... | ११ |
| आनाहरोगस्यात्याशितादिभेदपञ्चककथनम्, अत्याशितस्योत्पत्तिनिदानचिकित्सादिकथनं शुद्धासंसक्तभेदद्वयवातोन्मथितानाहस्योत्पत्तिनिदानचिकित्साकथनं तृतीयसंसक्तवातोन्मथितानाहस्योत्पत्तिनिदानासाध्यत्वकथनं च। धान्यानाहस्य प्रदुष्टाप्रदुष्टभेदद्वयकथनपूर्वकमुत्पत्तिनिदानचिकित्साकथनं प्रदुष्टानाहस्य दुश्चिकित्स्यतमत्वकथनं च। मृत्तिकाजग्धानाहस्योत्पत्तिनिदानचिकित्साकथनं संनिपातानाहस्योत्पत्तिनिदानासाध्यत्वकथनं च... ... ... ... ... | १२ |
| मूर्छाया द्वादशभेदकथनम्, अतिभोजनमूर्छोत्पत्तिनिदानचिकित्साकथनं विदग्धभोजनमूर्छोत्पत्तिनिदानचिकित्साकथनं धान्यमूर्छोत्पत्तिनिदानचिकित्साकथनं स्नेहमूर्छोत्पत्तिनिदानचिकित्साकथनं वातमूर्छोत्पत्तिनिदानचिकित्साकथनं पित्तमूर्छोत्पत्तिनिदानचिकित्साकथनं श्लेष्ममूर्छोत्पत्तिनिदानचिकित्साकथनं संनिपातमूर्छोत्पत्तिनिदानचिकित्साकथनं वारिमूर्छोत्पत्तिनिदानचिकित्साकथनं मार्गमूर्छोत्पत्तिनिदानचिकित्साकथनं मद्यमूर्छोत्पत्तिनिदानचिकित्साकथनं यवसमूर्छोत्पत्तिनिदानचिकित्साकथनं च... ... | १३ |
| वातपित्तजादिसप्तविधशिरोरोगकथनम्, वातिकशिरोरोगोत्पत्तिनिदानचिकित्साकथनं पैत्तिकशिरोरोगोत्पत्तिनिदानचिकित्साकथनं, कफजशिरोरोगोत्पत्तिनिदानचिकित्साकथनं रक्तजशिरोरोगोत्पत्तिनिदानचिकित्साकथनं सांनिपातिकशिरोरोगोत्पत्तिनिदानचिकित्साकथनं कृमिजशिरोरोगोत्पत्तिनिदानचिकित्साकथनमभिघातजशिरोरोगोत्पत्तिनिदानचिकित्साकथनं च... ... ... ... | १४ |
| त्रिंशत्पादरोगाणां नामकथनं वनस्थगजानां पादरोगानुत्पत्तिहेतुकथनं ग्राम्यगजानां पादरोगोत्पत्तिहेतुकथनं च। पादरोगाणां शरीरसमुत्थागन्तुकभेदद्वयकथनं नवविधागन्तुकपादरोगाणां नामकथनं त्रिंशत्पादरोगाणां प्रत्येकमुत्पत्तिनिदानचिकित्साकथनं साध्यासाध्यकृच्छ्रसाध्ययाप्यपादरोगाणां नामकथनं क्षारकर्मविधिकथनमग्निकर्मविधिकथनं च ... ... ... ... ... | १५ |
| अष्टविधव्यापद्रोगकथनम्, तैलव्यापदुत्पत्तिनिदानचिकित्साकथनं सर्पिर्व्यापदुत्पत्तिनिदानचिकित्साकथनं वसाव्यापदुत्पत्तिनिदानचिकित्साकथनं क्षीरव्यापदुत्पत्तिनिदानचिकित्साकथनं मद्यव्यापदुत्पत्तिनिदानचिकि- | |

| विषयाः | अ० |
|---|---|
| त्साकथनं धान्यव्यापदुत्पत्तिनिदानचिकित्साकथनं वारिव्यापदुत्पत्तिनिदानचिकित्साकथनमुपधाव्यापदुत्पत्तिनिदानचिकित्साकथनं च ... ... ... ... ... ... | १६ |
| मन्यादिसप्तविधशोफस्य नामोत्पत्तिस्थानकथनम्, शुद्धशोफस्य वातजादिभेदषट्ककथनं वातिकशुद्धशोफस्य स्वेदकर्मकथनं विलेपनकथनं च। सप्तविधशोफस्य सान्तर्भेदमुत्पत्तिनिदानादिकथनमसाध्यशोफनामकथनं च ... ... ... ... ... | १७ |
| स्वेदस्य वापीभङ्गाद्यनेकविधत्वकथनं वापीभङ्गादिस्वेदस्य प्रत्येकमुत्पत्तिप्रकारगुणादिकथनं च। पाकलरोगस्य हवनदेवतार्चनब्राह्मणभोजनगोदानादिभिः शान्तिकरणकथनं मन्त्रपठनादिभी राक्षसपिशाचादिभ्यो रक्षाकर्मकथनं नवग्रहाद्युद्देश्यकबलिदानकथनं भूतिकर्मविधिकथनं च । नेत्ररोगाणां नामसंख्यास्थानादिकथनं नेत्रजातिकथनं दृष्टिजातिकथनमसाध्यनेत्रस्वरूपकथनं प्रावारक्यादिविंशतिनेत्ररोगाणां प्रत्येकमुत्पत्तिनिदानचिकित्साकथनं च ... ... | १८ |


समाप्तं चैतन्महारोगस्थानं प्रथमम् ।

## अथ क्षुद्ररोगस्थानं द्वितीयम् ।


| विषयाः | अ० |
|---|---|
| वमथुरोगस्य दोषजागन्तुकभेदद्वयकथनं दोषजवमथुरोगस्योत्पत्तिनिदानचिकित्साकथनं छर्दिप्रादुर्भावचिकित्साकथनमागन्तुकवमथुरोगस्योत्पत्तिनिदानचिकित्साकृच्छ्रसाध्यासाध्यत्वकथनं च ... ... ... ... | १ |
| अतीसाररोगस्य पक्वाशयसमुत्थामाशयसमुत्थभेदद्वयकथनं द्विविधातीसारस्योत्पत्तिनिदानचिकित्सासाध्यासाध्यत्वलक्षणकथनं च | २ |
| मदनजग्धकस्योत्पत्तिनिदानचिकित्सामूर्छापरिहारप्रकारादिकथनम् ... ... | ३ |
| तृणशोषीरोगस्योत्पत्तिनिदानचिकित्साकथनमुत्पत्तिसमकालं परिहारकथनं वृद्धस्यापरिहार्यत्वकथनं च... ... ... ... | ४ |
| कर्मातिनीतरोगस्योत्पत्तिनिदानचिकित्साकथनम् ... ... ... ... ... ... | ५ |
| हस्तिशालांप्रति जिगमिषोरज्ञातमानवस्य निषेधकरणकथनम्, विषदातृपुरुषस्य लक्षणकथनं गजभक्ष्यान्नपानादेः सविषत्वादिज्ञानार्थं पूर्वं मार्जारवायसादिभ्यो ग्रासदानकथनं सविषान्नादिभक्षणेन मार्जारवायसादिचेष्टाकथनं च। सविषान्नादेरग्निजलप्रक्षेपतज्जन्यविकारादिकथनम्, सविषतैलदुग्धादीनां स्वरूपकथनम्, गजगतविषस्य निदानचिकित्साकथनं विषस्य मूलजादिभेदत्रयकथनं च ... ... ... ... | ६ |
| दूषीविषस्योत्पत्तिकार्यादिकथनम् ... | ७ |
| त्वङ्मांसादिदशस्थानगतविषस्य प्रतिस्थानं लक्षणसाध्यासाध्यत्वकथनम्, प्रसङ्गाद्विषाभिभूतगजभिन्नानां भूतानां सप्तवेगागमनकथनं विषाभिभूतगजानां वेगत्रयागमनलक्षणकथनं साध्यविषाणां निदानमन्त्रौषधिभिः परिहारप्रकारकथनं च ... ... | ८ |
| दिग्धविद्धस्य निदानचिकित्सादिकथनम् | ९ |
| सर्पदंशनस्य दष्टादिभेदत्रयकथनं सर्पकोपादिकारणपञ्चककथनं च। पन्नगानां भेदचतुष्टयकथनं प्रत्येकं स्वरूपकथनं च। चतुर्विधपन्नगदंशनस्य प्रत्येकं निदानचिकित्सामन्त्रपठनप्रकारादिकथनम्... ... ... | १० |
| स्फोटिकाया उत्पत्तिनिदानचिकित्साकथनं साध्यासाध्यलक्षणकथनं च । प्रसङ्गात्पशून्प्रति वसिष्ठदत्तविषाभयकथनं गजानां स्फोटिकाकदाचिद्भावित्वकथनं लूतोत्पत्तिनिदानचिकित्साकथनं च... ... ... ... | ११ |
| अपवादबद्धस्योत्पत्तिनिदानादिकथनम् | १२ |
| पूर्वाबद्धस्य नामान्वर्थताकथनमुत्पत्तिकथनमरण्यगमनं विनाऽसाध्यत्वकथनं च। प्रस- | |

# हस्त्यायुर्वेदाध्यायविषयानुक्रमे—


| विषयाः | अ० |
|---|---|
| …द्वनारामवृक्षनदीसरोदिगाकाशादीनां वसन्तादिषड्ऋतुभेदेन सौन्दर्यवर्णनं करेण्वा सह गजकृतवन्यविलासादिवर्णनं च ... | १३ |
| पञ्चविधविसर्परोगस्योत्पत्तिनिदानकथनमसाध्यत्वकथनं च... ... ... ... | १४ |
| हृद्‌यस्फालीरोगस्योत्पत्तिनिदानकथनमसाध्यत्वकथनम् ... ... ... ... | १५ |
| वालक्षाणीरोगस्यान्वर्थनामताया दोषजागन्तुकभेदद्वयस्य च कथनम्, द्विविधवालक्षाणीरोगस्योत्पत्तिनिदानचिकित्सासाध्यासाध्यत्वकथनम् ... ... ... ... | १६ |
| मेढ्रक्षाणीरोगस्य दोषजागन्तुकभेदद्वयकथनं निदानोत्पत्तिचिकित्साकथनमुपेक्षणात्प्राणहरत्वकथनं च। हस्तग्रहणरोगस्योत्पत्तिनिदानचिकित्सासाध्यासाध्यत्वकथनम् | १७ |
| हस्तोन्मथितरोगस्योत्पत्त्यसाध्यत्वकथनं निदानषट्कभेदेन मरणादिनावधिकथनं च | १८ |
| उदावर्तरोगस्योत्पत्तिनिदानचिकित्साकथनम् | १९ |
| उत्कर्णकरोगस्योत्पत्तिकथनं वातपित्तकफजभेदेन तन्निदानचिकित्साविशेषकथनं च | २० |
| वातगातिरोगस्योत्पत्तिनिदानचिकित्साकथनम् | २१ |
| मन्याग्रहरोगस्योत्पत्तिनिदानचिकित्साकथनं विगतमन्याग्रहकर्तव्यघृतपानादिकथनं च | २२ |
| मदक्षयस्योत्पत्तिनिदानचिकित्साकथनम् | २३ |
| कृशत्वोत्पत्तिचिकित्साकथनम्... ... | २४ |
| बलक्षयोत्पत्तिचिकित्साकथनम् ... | २५ |
| श्लेष्माभिषन्ननिदानचिकित्साकथनम् ... | २६ |
| मुखद्वारविशोधनस्य वनसात्म्यानुलोमिकाचिकित्साकथनम् ... ... ... | २७ |
| तलकाशीरोगस्योत्पत्तिनिदानकथनं तलकर्मकालप्रकारादिकथनं च ... ... | २८ |
| तलकाशीरोगस्य चिकित्सादिकथनम्... | २९ |
| गलग्रहरोगस्योत्पत्तिनिदानचिकित्साकथनम् | ३० |
| …र्णार्दितनिदानादिकथनं सिद्धार्थकरो- हस्त्य… सक… निदानचिकित्साकथनं च ... ... | ३१ |
| भूतग्रहप्रवेशसमयकारणादिकथनं कामाख्यारतिकादिग्रहाविष्टानां प्रत्येकं लक्षणकथनं कामाख्यादिग्रहत्रितयप्रवेशजपीडापरि…कथनं सामान्यभूतग्रहप्रविष्टलक्षणकथनं मन्त्रबलिपूजादिभिर्भूतग्रहपरिहारप्रकारकथनं च... ... ... ... ... | ३२ |
| उन्मादस्य निदानचिकित्साकथनम् ... | ३३ |
| अपस्मारग्रहस्य निदानकथनं नवग्रहोन्मादग्रहचिकित्साप्रकारेण वर्षस्यान्तःप्रसाधनकथनं परतो निष्प्रतिक्रियत्वकथनं च... | ३४ |
| वातकुण्डलीरोगस्योत्पत्तिनिदानाचिकित्साकथनमन्योक्तापरिहार्यत्वकथनं च ... | ३५ |
| भारोन्मथननिदानचिकित्साकथनम् ... | ३६ |
| लुप्तरोगोत्पत्तिनिदानचिकित्साकथनम्... | ३७ |
| पत्रकृमिरोगोत्पत्तिनिदानचिकित्साकथनम् | ३८ |
| उरःक्षतरोगोत्पत्तिनिदानचिकित्साकथनम् | ३९ |
| शोणिताण्डरोगोत्पत्तिनिदानचिकित्साकथनम् | ४० |
| यवगण्डशिराभिधपादरोगस्योत्पत्तिनिदानचिकित्साकथनमन्यत्रिंशत्पादरोगापेक्षयाऽस्य कष्टदातृत्वकथनमुत्पन्नमात्रस्य साध्यत्वकथनं कालातिक्रमेऽसाध्यत्वकथनं च ... | ४१ |
| चर्मकीलोत्पत्तिचिकित्साकथनम् ... | ४२ |
| वृद्धचिकित्साकथनम् ... ... ... | ४३ |
| अवसानहेतुचिकित्साकथनम् ... ... | ४४ |
| जठरकरोगोत्पत्तिनिदानचिकित्साकथनम् | ४५ |
| वाल्ये गृहीतस्य पोषणप्रकारकथनम्... | ४६ |
| रात्रिक्षिप्तरोगस्योत्पत्तिनिदानचिकित्साकथनं तदुत्पत्तिसमकालं रक्षोग्रहादिकृतपीडाकथनं तन्निवृत्त्यर्थं मन्त्रपठनहवनब्राह्मणभोजनादिकरणकथनं च ... ... ... | ४७ |
| मूत्रसङ्गरोगस्य भिन्नबस्त्याद्यनेकभेदकथनं प्रत्येकं तदुत्पत्तिनिदानचिकित्साकथनं भिन्नबस्तेरसाध्यत्वकथनं संनिपातसमुत्थस्यान्योक्तापरिहार्यत्वकथनं च ... ... | ४८ |
| सूतिकावातसमुत्थव्यापन्निदानचिकित्साकथनम् ... ... ... ... ... | ४९ |
| दन्तरोगस्य दोषजादिभेदचतुष्टयकथनं तत्सामान्यलक्षणकथनं प्रत्येकमुत्पत्तिनिदानचिकित्साकथनं साध्यासाध्यलक्षणकथनं च। दोषजदन्तरोगस्य वातसमुत्थादिभेदकथनं प्रत्येकमुत्पत्तिनिदानचिकित्साकथनं दन्तपातनप्रकारकथनं च ... ... ... | ५० |
| चेतोभ्रंशनस्योत्पत्तिनिदानचिकित्साकथन- | |

# द्वितीयं क्षुद्ररोगस्थानम् ।


| विषयाः | अ० |
|---|---|
| मुक्ततत्सर्वलक्षणयुक्तस्य दशाहात्परमसाध्यत्वकथनं च ... ... ... ... | ५१ |
| लुसरोगोत्पत्तिनिदानचिकित्साकथनम्, | |
| शूलरोगस्य सपित्तवातजसकफवातजभेदद्वयकथनमुत्पत्तिनिदानचिकित्साकथनं प्रसङ्गान्मदनोद्देश्यकहरकोपादितत्प्रथमनिर्मितिप्रकारकथनं च ... ... ... ... | ५२ |
| शारदरोगस्य स्थूलादिभेदचतुष्टयकथनम्, स्थूलशारदस्योत्पत्तिनिदानचिकित्साकथनं कृशशारदस्योत्पत्तिनिदानचिकित्साकथनं प्राकृतशारदस्योत्पत्तिनिदानचिकित्साकथनं लोहितशारदस्योत्पत्तिनिदानचिकित्साकथनं च | ५३ |
| मधुमक्षिकादंशनस्य निदानाचिकित्साकथनम् ... ... ... ... ... | ५४ |
| छवीदोषस्यैकादशभेदनामकथनं प्रत्येकं तदुत्पत्तिनिदानाचिकित्सासाध्यासाध्यत्वकथनं च ... ... ... ... ... ... | ५५ |
| मृत्तिकाया देशवर्णभेदेन गुणदोषकथनं वन्यानां मृद्भक्षणेऽपि नीरोगताहेतुकथनं ग्राम्याणां मृद्भक्षणे रोगोत्पत्तिहेतुकथनं मृद्भक्षणजन्यरोगाणां निदानचिकित्साकथनं साध्यासाध्यलक्षणकथनं च ... ... | ५६ |
| ग्रहणीदोषस्य वातिकादिभेदत्रयकथनं वातिकग्रहणीदोषस्योत्पत्तिनिदानचिकित्साकथनं पैत्तिकग्रहणीदोषस्योत्पत्तिनिदानचिकित्साकथनं कफजग्रहणीदोषस्योत्पत्तिनिदानचिकित्साकथनं च ... ... .... | ५७ |
| आमस्योत्पत्तिनिदानचिकित्साकथनमुपेक्षणात्कृच्छ्रसाध्यत्वासाध्यत्वकथनं च ... | ५८ |
| कोष्ठकृमिनिदानाचिकित्साकथनम् ... | ५९ |
| चतुर्विधदौर्बल्यकथनं दशविधक्षयरोगस्य प्रत्येकमुत्पत्तिनिदानचिकित्साकथनं राजयक्ष्मादिनामान्तरकथनं तदन्वर्थत्वकथनं प्रसङ्गाद्दक्षदत्तचन्द्रोद्देश्यकशापकथनमस्य तज्जन्यत्वादिकथनं च ... ... ... ... | ६० |
| मदस्रावं प्रति वातादिचतुर्दशहेतूनां | |

| विषयाः | अ० |
|---|---|
| नामकथनं प्रत्येकं निदानकथनं वातादिहेतुपञ्चकमदस्रावस्य प्रत्येकं चिकित्साकथनं च | |
| कर्णवालजकृमीणां निदानचिकित्साकथनं साध्यासाध्यलक्षणकथनं च ... ... | |
| कर्णरोगोत्पत्तिनिदानचिकित्साकथनम् ... | |
| अभक्तच्छन्दोत्पत्तिनिदानचिकित्साकथनम् | |
| भक्तग्रासोपरुद्धनिदानचिकित्साकथनम् | |
| द्रोणीकशोफस्य वातजादिभेदपञ्चककथनम्, वातजद्रोणीकस्योत्पत्तिनिदानचिकित्साकथनं पित्तजद्रोणीकस्योत्पत्तिनिदानचिकित्साकथनं कफजद्रोणीकस्योत्पत्तिनिदानचिकित्साकथनं रक्तजद्रोणीकस्योत्पत्तिनिदानचिकित्साकथनं संनिपातजद्रोणीकस्योत्पत्तिनिदानचिकित्साकथनमुपेक्षणात्प्राणहरत्वकथनं च ... ... ... ... ... | |
| अतियातस्य निदानचिकित्साकथनम् ... | |
| गुल्मरोगस्य वातजादिपञ्चविधत्वकथनम्, वातजगुल्मोत्पत्तिनिदानचिकित्साकथनं पित्तजगुल्मोत्पत्तिनिदानचिकित्साकथनं कफजगुल्मोत्पत्तिनिदानचिकित्साकथनं रक्तजगुल्मोत्पत्तिनिदानचिकित्साकथनं संनिपातजगुल्मोत्पत्तिनिदानचिकित्साकथनं च ... ... | |
| हृद्रोगस्य वातिकादिभेदत्रयकथनम्, वातिकहृद्रोगोत्पत्तिनिदानचिकित्साकथनं पैत्तिकहृद्रोगोत्पत्तिनिदानचिकित्साकथनं कफजहृद्रोगोत्पत्तिनिदानचिकित्साकथनं च ... | |
| गात्ररोगाणां वातिकादिभेदचतुष्टयकथनम्, वातिकगात्ररोगोत्पत्तिनिदानचिकित्साकथनं पैत्तिकगात्ररोगोत्पत्तिनिदानचिकित्साकथनं कफजगात्ररोगोत्पत्तिनिदानचिकित्साकथनं सांनिपातिकरोगोत्पत्तिनिदानाचिकित्साकथनं च ... ... ... ... | |
| आगन्तुकगात्ररोगाणां पतनादिहेतुकथनं षडाबाधद्विविधगात्रसङ्कनिकथनमागन्तुकगात्ररोगचिकित्सादिकथनं च | |
| गात्ररोगाणां स्तब्धादिद्वादशभेदतन्नामकथनं प्रत्येकं लक्षणचिकित्साकथनं च | |


समाप्तमेतद्द्वितीयं क्षुद्ररोगस्थानम् ।

## अथ तृतीयं शल्यस्थानम् ।


| विषयाः | अ० |
|---|---|
| ...ानामात्मयोन्यधिष्ठानाकृतिस्रावश-...क्रमाणां भेदसंख्याकथनं त्रिविधयोनि-...कथनमष्टविधाधिष्ठानलक्षणकथनं शुद्धा-...द्विविधस्रावस्य वस्तुविशेषेण चतुर्विंशति-...लक्षणकथनं त्रिविधात्मनः साध्यासाध्य-...कथनं द्विविधशल्यस्य लक्षणकथनमु-...पक्रमस्य लक्षणकथनं षड्दोषाणां लक्ष-...णं लेपधूपरोपणादिप्रकारकथनं च ... | १ |
| ...सहव्याघ्रादिनखजस्याग्निक्षारविषादिजस्य ...यःक्षतस्य प्रत्येकं निदानकथनम् ... | २ |
| ...यःक्षतस्य चिकित्साकथनम्, सामान्य-...रिष्टलक्षणकथनं वैद्यं प्रति गच्छतो ...य लक्षणादिकथनं वैद्यगमने शुभाशुभनि-...तिथिनक्षत्रादिकथनमामच्छेदाकरणतद्धे-...नं जाठराग्निकृतपाचनप्रकारादिकथनं च | ३ |
| ...डल्ययोपचारकथनम् ... ... ... | ४ |
| ...ातपित्तकफजव्रणानां प्रत्येकमुत्पत्तिलक्ष-...नं व्रणानामेकोनविंशत्याकृतिकथनं सा-...ध्यं वस्तुविशेषत्रयकथनं च । पक्वापक्व-...मानस्वयथुग्रन्थीनां लक्षणकथनं चतुश्च-...शद्व्रणोपक्रमकथनं च ... ... | ५ |
| ...थिव्यादिपञ्चभूतानां नामगुणक्रियाकथनं ...जन्यवस्तुकथनं च । शरीरस्थसप्त-...ां नामकथनम्, वातपित्तकफकृत-...क्रियाकथनम्, आहारोपचारक्रियाकथ-...स्वेदजादिचतुर्विधप्राणिनामन्तर्भेदक-... प्राणादिपञ्चकस्य मानसादिचतुष्ट-...ाऽऽनुकूल्ये विप्रतिपन्नत्वे च कार्य-...म्, षड्रसानां नामगुणक्रियाकथनम्, ...लादिचतुर्दशवस्तूनां प्रत्येकमन्त-...लक्षणक्रियाचिकित्सादिकथनम्, ...न... कथनमेतत्सर्वज्ञस्य वैद्यत्व-... ... ... ... ... | ६ |
| ...म् त्रुटिलवनिमेषादिब्रह्मादिनान्त-...नामक्रमकथनमीश्वरेच्छावशाज्जगदु-...कथनं गर्भोत्पत्तिप्रकारकथनं गर्भ-...तिमास[illegible]त्पत्तिकथनं ... धातूनां नामकथनं च ... ... ... | ७ |
| ऋतुमतीलक्षणकथनं गर्भिणीलक्षणकथनं विस्तरेण गर्भधारणप्रकारकथनमवयवेन्द्रियोत्पत्तिवृद्धिप्रकारकथनं पुंस्त्रीषण्ढोत्पत्तिकारणकथनमवयवगतश्वेतकृष्णत्वादिहेतुकथनं वातपित्तकफप्रकृतिलक्षणकथनं भद्रायनेकजात्युत्पत्तिहेतुलक्षणादिकथनं च ... ... | ८ |
| शरीरस्थदन्तनखमर्मशिरास्थिसंध्यादीनां स्थानसंख्याकथनं वातपित्तकफरक्तादीनां स्थानकथनं च ... ... ... ... | ९ |
| शस्त्रप्रणिधानप्रकारकथनमग्निप्रणिधानप्रकारकथनं च ... ... ... ... | १० |
| स्तम्भयन्त्रणाप्रकारकथनं प्रतिकर्मक्रियाकथनं यन्त्रयोग्यायोग्यवृक्षतत्पूजादिकथनं यन्त्रनिर्माणप्रकारकथनं तद्गतदेवतोद्देश्यकपूजनहवनप्रकारादिकथनं च ... ... | ११ |
| एतच्छास्त्रस्य ब्रह्मणः सकाशादुत्पत्तिकथनमग्निमशिष्यपरम्पराकथनं च । बाह्यशरीरजशल्यकथनं सशल्यलक्षणकथनमनेकविधयन्त्रैः स्थानविशेषगतशल्योद्धारप्रकारकथनं मर्मविद्धस्यासाध्यत्वादिकथनं च ... ... | १२ |
| विद्रधिरोगस्य वातजादिभेदचतुष्टयकथनम्, वातजविद्रधिरोगोत्पत्तिनिदानचिकित्साकथनं पित्तजविद्रधिरोगोत्पत्तिनिदानचिकित्साकथनं कफजविद्रधिरोगोत्पत्तिनिदानचिकित्साकथनं संनिपातजविद्रधिरोगोत्पत्तिनिदानचिकित्साकथनं च ... ... ... | १३ |
| व्रणस्य सान्तर्भेदं शारीरागन्तुकभेदद्वयकथनं प्रत्येकं निदानचिकित्सासाध्यासाध्यलक्षणकथनं च ... ... ... ... | १४ |
| नाडीव्रणस्योत्पत्तिनिदानकथनं साध्यासाध्यलक्षणकथनं साध्यव्रणस्य शस्त्राग्निक्षारकर्मादिचिकित्साकथनं च ... ... ... | १५ |
| शरीरस्थसप्तशतशिराणां कण्ठादिस्थानगतत्वेन विभागसंख्याकथनं वातपित्तादित्रितयशोणितादिसप्तधातुवाहकशिराणां प्रत्येकं संख्याकथनं रोगविशेषेण वेध्यशिराकथनं ... | १६ |

| विषयाः | अ० |
|---|---|
| दन्तनाडीनिदानचिकित्साकथनम् ... | १७ |
| दन्तचिकित्साकथनम् ... ... ... | १८ |
| शिराच्छेदप्रकारकथनं छेदयोग्यायोग्यशिराकथनं च ... ... ... ... | १९ |
| सप्तोत्तरशतमर्मकथनं तेषां स्थानप्रमाणकथनं छविषट्ककथनं च । सद्यःप्राणहरमर्मकथनं विलम्बप्राणहरमर्मकथनं तत्संख्याकालावधिकथनं च । वैगुण्यकरमर्मकथनं तेषां लक्षणादिकथनं च ... ... ... | २० |
| शुनः सविषत्वे कारणकथनं शुनो ब्राह्मणादिजातिचतुष्टयतल्लक्षणकथनं च । श्वदष्टस्य वेगत्रयागमनकथनं तन्निदानचिकित्साकथनमसाध्यलक्षणकथनं च ... ... | २१ |
| विस्तरेण मर्मस्थानतन्नामचिकित्साकथनं शस्त्रकर्मयोग्यायोग्यत्वादिकथनं च ... | २२ |
| पुनश्च प्रकारान्तरेण मर्मस्थानतन्नामचिकित्साकथनम् ... ... ... ... | २३ |
| पुनश्च बालादिपाकलानामुत्पत्तिहेतुकथनं प्रसङ्गात्पित्तादीनां स्थानकथनं च ... ... | २४ |
| पुनश्चाग्निदग्धस्य सेकलेपादिचिकित्साकथनम् ... ... ... ... | |
| एकविंशतिलूतानां नामसंख्याकथनं मन्त्रपठनादिपरिहारप्रकारकथनं च ... | |
| विषकीटोत्पत्तिनिदानचिकित्साकथनम् | |
| व्यालदष्टनिदानचिकित्सासाध्यासाध्यलक्षणकथनं च ... ... ... ... ... | |
| शरीरस्य हस्तमुखादिपञ्चदशभागकथनं प्रतिभागगतप्रदेशानां नामसंख्याकथनं शरीरगतसर्वप्रदेशानां समष्टयङ्ककथनं च ... | |
| दशविधशस्त्राणां नामप्रमाणसंस्थानकथनमग्निकर्मशल्योद्धरणसाधनानामेषिणीनां च प्रत्येकं नामसंख्याप्रमाणसंस्थानकथनं च ... | |
| क्षारयोगप्रकारकथनम्... ... ... | |
| अस्थिभङ्गस्य कारणभेदकथनं संज्ञापूर्वकं तन्निदानचिकित्सासाध्यासाध्यलक्षणकथनं च | |
| मृतगर्भायाः लक्षणकथनं मृतगर्भस्य बहिर्निष्कासनच्छेदनादिप्रकारकथनं च ... ... | |
| हवनपूर्वकदन्तोद्धरणप्रकारकथनं दन्तानां भेदसंभवादिकथनं च ... ... ... | |


समाप्तं चेदं तृतीयं शल्यस्थानम् ।

---

## अथ चतुर्थमुत्तरस्थानम् ।


| विषयाः | अ० |
|---|---|
| स्थावरजङ्गमद्विविधस्नेहस्यान्तर्भेदकथनं घृततैलपानयोग्यायोग्यकालकथनं त्रिविधपीनीनां प्रमाणकथनं घृततैलमात्राकथनं च | १ |
| विस्तरेण घृततैलादिपानस्यर्तुषट्कभेदेन योग्यायोग्यकालतत्कारणादिकथनं प्रतिदिनं घृततैलादिपानस्य जात्यवस्थादिभेदेन गुणदोषप्रमाणादिकथनं च ... ... ... | २ |
| उत्तममध्यमाधमानां गजानां हस्तिनीनां च प्रत्येकं बलवर्णादिकथनं चतुर्विधाहारकथनं भोज्यभक्ष्यपेयानां प्रत्येकमन्तर्भेदतन्नामादिकथनं लेह्यस्योत्कारिकादिभेदत्रयकथनं प्रत्येकं लक्षणकथनं [illegible]लादीनां भक्षणप्रकारतत्परिमाणादिकथनं सुरापानजगुणदोषकथनं मेदकगुणदोषकथनं [illegible]योर्गुणदोषकथनं | |
| शालियवमाषगोधूमादीनां गुणदोषकथनं गात्रसेचनाशिरोम्रक्षणयोर्गुणकथनं दन्तनेत्राभ्यङ्गयोर्गुणकथनं च ... ... ... ... | |
| पुनश्च स्नेहस्य स्वसंमतनवभेदकथनं गार्ग्यादिसंमतभेदकथनं स्नेहपानस्य कालप्रकारादिकथनं वसामज्जाविधादीनां गुणकथनमृतुषट्कभेदेन स्नेहपानप्रकारकथनं सद्यःस्नेहविधिकथनं बस्तिगुणकथनं पत्रभङ्गबलातिबलवज्रकतैलविधिकथनं त्रिवृतविधिकथनं च | |
| नवविधबस्तीनां दानप्रकारादिकथनम् | |
| हस्तिशालानिर्माणयोग्यदेशशुभतिथिनक्षत्रादिकथनमुत्तममध्यमाधमगजस्थितियोग्यशालायामपरिणाहादिकथनं ग्रीष्मादिकालोचितस्थलनिर्माणकथनं हवनब्राह्मणभोज | |

## हस्त्यायुर्वेदाध्यायविषयानुक्रमे—


| विषयाः | अ० |
|---|---|
| ...नेर्माणकथनं च ... ... | ६ |
| ...भिकथनं दुर्विरिक्तातिविरि-...रिक्तलक्षणकथनं च ... ... | ७ |
| ...भेदेन भक्षणयोग्यशुष्कार्द्रयवस-...थनम् ... ... ... ... | ८ |
| ...सूचकलक्षणकथनं तद्भेदेन मरणाव-...च... ... ... ... ... | ९ |
| ...कल्पनाप्रकारकथनं तद्योग्यायोग्य-...ादिकथनमयोग्यकालावस्थयोर्दन्त-...रणेऽमात्यव्यसनादिकथनं च। दन्त-...थनं कल्पनाकरणयोग्यदन्तकथनं ...करणकथनमुत्तमादिभेदेन तत्परिमा-...थनं च ... ... ... ... | १० |
| ...ीर्यविपाककथनं वातपित्तकफादीनां ...दीपकरसकथनं च ... ... ... | ११ |
| ...मादिभेदेनेक्षुदानपरिमाणकथनं तद्गु-...थनं च ... ... ... ... | १२ |
| ...नश्च विस्तरेण नस्यदानविधिकथनम् | १३ |
| ...त्ररोगघ्नश्रीविजयाभिधगुटिकानिर्माणप्र-...थनं रक्तपित्तदाहशामकवर्तिकरणप्र-...थनं प्रपौण्डरीकादिरसक्रियाकथनं नी-...भिधगुटिकाकरणप्रकारकथनं कल्का-...ञ्जनयोर्विधिकथनमनेकविधनेत्ररोग-...चिकित्साकथनं च ... ... ... | १४ |
| ...लस्य संवत्सरायनादिविवक्षाभेदेनाने-...त्वकथनमृतुषट्कभेदेन पिण्डदानकथन-...नादिदानस्नानसेकादिप्रकारकथनं च... | १५ |
| ...ाय जलदाननिषेधनेकविधिहेतु-...हेतुकमुत्तरकथनम् ... ... | १६ |
| ...दकक्षीरसर्पिरादीनामन्नपाचनमांस-...क्रियाकथनम् ... ... ... | १७ |
| ...कपानविधिकथनम् ... ... | १८ |
| ...यमाधमभेदेन सुराया गुणदोष-...नानन्तरकरणीयंप्रतिपानाविधि-...कभेदेन गुडलवणादिमिश्रणकथनं ...क्षादिमिश्रितसुराया विशेषगुणाव-...च ... ... ... ... | १९ |
| ...विधानकथनम् ...कभेदेन तैल-...दानकथनं च ... ... | २० |
| क्षीरस्य सामान्यगुणकथनं गव्यमाहिषाद्यष्टभेदकथनं प्रत्येकं तद्गुणकथनं च ... | २१ |
| श्रीगजोत्पत्तिकथनं प्रसङ्गाद्देवदानवयोर्युद्धकथनं मेघाभिधैरावणसुतं प्रति शिवदत्तवरकथनमाषाढ्यां वैद्यकर्तव्यपूजाप्रकारकथनं गजारोहणादिकथनं च ... ... | २२ |
| विस्तरेण सर्पिस्तैलाद्यनेकद्रव्यदानस्य प्रत्येकं हेतुगुणकथनम् ... ... ... | २३ |
| स्निग्धास्निग्धातिस्निग्धादीनां प्रत्येकं लक्षणकथनं विरिक्तदुर्विरिक्तादीनां प्रत्येकं लक्षणकथनं च ... ... ... ... | २४ |
| यवसस्य भेदद्वयकथनमाहारस्य भेदत्रयकथनं देशस्य भेदत्रयकथनं प्रत्येकं तल्लक्षणादिकथनं च ... ... ... ... | २५ |
| वातप्रकृतिकस्य सत्त्वशरीरायुरादिलक्षणकथनं पित्तप्रकृतिकस्य सत्त्वशरीरायुरादिलक्षणकथनं कफप्रकृतिकस्य सत्त्वशरीरायुरादिलक्षणकथनं च ... ... ... ... | २६ |
| गव्यमाहिषाद्यष्टविधमूत्रकरीषयोः प्रत्येकं गुणदोषकथनम् ... ... ... ... | २७ |
| लशुनस्योत्पत्तिकथनं मूलबीजादिभेदेन मधुरतिक्तादितद्रसभेदकथनमनुपानभेदेन तद्गुणदोषादिकथनं च ... ... ... | २८ |
| पिप्पलीशृङ्गवेरादिमिश्रितलवणदानप्रकारकथनं तद्गुणादिकथनं च... ... ... | २९ |
| गजानामारण्यकादिभेदचतुष्टयकथनं प्रत्येकं तल्लक्षणकथनं च। पांशुदानप्रकारकथनं तद्गुणकथनं च ... ... ... ... | ३० |
| रसरक्तमांसादिसप्तधातुसमुत्थसप्तमदावस्थाकथनं प्रत्येकं लक्षणकथनं सप्तमावस्थां प्राप्तस्य मरणागमनकथनं तत्कारणादिकथनं च ... ... ... ... ... | ३१ |
| ग्राहस्य नागतन्तुकभेदद्वयकथनं नागग्राहस्योत्पत्तिनिदानासाध्यत्वकथनं तन्तुकग्राहस्योत्पत्तिनिदानचिकित्सादिकथनम् ... | ३२ |
| जलजहस्तिस्वरूपकथनं तत्स्थानस्थजलपानादिना गजानां मरणागमनकथनमष्टमीचतुर्दश्यमावास्यासु नदीयज्ञविधानेन तदुद्देश्य-...नादिकथनं ... | ... |

## चतुर्थमुत्तरस्थानम् ।


| विषयाः | अ० |
|---|---|
| जलौकानां द्वादशजातिकथनं सविषनिर्विषभेदद्वयकथनं प्रत्येकमुत्पत्तिस्थानलक्षणादिकथनं च ... ... ... ... | ३४ |
| गजशालायां भूतानां व्याधिरूपेण संचारकथनं तद्धेतुकथनं रौद्रवैष्णवपाकलयोः स्वरूपकथनं तद्दर्शने गजानां भीत्युत्पत्तिकथनं तत्कारणीभूताभिशापकथनं ज्वरसंचारलक्षणकथनं ज्वरपरिहारार्थं शिवविष्णुपूजाभूतबलिदानादिकथनं च ... ... ... | ३५ |

| विषयाः | अ० |
|---|---|
| गजनीराजनाविधिकथनं तत्कालकारणादिकथनं गजशान्तियोग्यशुभतिथिनक्षत्रसावित्रादिमुहूर्तकथनं गजशान्तिविधिकथनं विष्णुप्रजापत्यादिदेवतानां पूजाप्रार्थनाप्रकारकथनं हवनकालिकमन्त्रपठनप्रकारकथनं गजरक्षणे विष्णुप्रजापत्यादीनां प्रार्थनाप्रकारकथनं हवनकालिकवह्निधूमस्वरूपभेदेन गजशब्दभेदेन च शुभाशुभसूचकत्वादिकथनं च | |


समाप्तमिदमुत्तरस्थानं तुरीयम् ।

---

इति हस्त्यायुर्वेदाध्यायविषयानुक्रमः समाप्तः ।

---

ॐ तत्सद्ब्रह्मणे नमः ।

# पालकाप्यमुनिविरचितो

# हस्त्यायुर्वेदः ।

---

## तत्र प्रथमं महारोगस्थानम् ।

---

### तत्र प्रथमो वनानुचरिताध्यायः ।

श्रीगणेशाय नमः ॥

प्रत्यूहव्यूहविच्छेदकारणं गणनायकः ॥
जयति स्थिरसंपत्तिर्गजभक्तनिदर्शनः ॥ १ ॥
आमोदश्च प्रमोदश्च सुमुखो दुर्मुखस्तथा ॥
अविघ्नो विघ्नहर्ता च हेरम्बो गणनायकः ॥ २ ॥
लम्बोदरो गजमुखो धूम्रकेतुर्गजाननः ॥
सर्वकार्येषु हेरम्बनामान्येतानि संस्मरेत् ॥ ३ ॥

वनानुचरितमध्यायं व्याख्यास्यामः—

अङ्गानामधिपः श्रेष्ठः श्रीमानिन्दुसमद्युतिः ॥
वेदवेदाङ्गतत्त्वज्ञः सर्वशास्त्रविशारदः ॥ ४ ॥
येनेयं पृथिवी सर्वा सशैलवनकानना ॥
चतुःसागरपर्यन्ता भुक्ता ह्यमिततेजसा ॥ ५ ॥
स रोमपादो नृपतिश्चक्रवर्ती महायशाः ॥
मेधावी धर्मवान्धीरो निर्जितारिः प्रतापवान् ॥ ६ ॥
*अङ्गदेशेष्वभूच्छ्रीमान्रोमपादो महीपतिः ॥
गजारोहणशक्तेव(?) धृतबुद्धिर्जितश्रमः ॥ ७ ॥

---

* अयमर्धश्लोकः कपुस्तके नास्ति । उत्तरार्धमात्रं लिखित्वा श्लो (७)स्तु लिखितः ।

---

१ क. °भक्तिनि° । २ क. °त्त्वज्ञो वदान्यः सर्वशास्त्रवित् ॥ ग. °क्ते च भू° ।

आसने काञ्चने दिव्ये नानारत्नविभूषिते ॥
उपविष्टो महीपालः प्रजासुखहिते रतः ॥ ८ ॥
तपसा भावितात्मा वै राजा राजीवलोचनः ॥

( 'अङ्गानाम्' इत्याद्येकान्वयम् )

गङ्गाया दक्षिणे तीरे ब्रह्मर्षिगणसेविते ॥ ९ ॥
स्वर्गारोहणसोपानकृततीर्थकृतापहे (?) ॥
मातेव मुक्तिजनने पदन्यासकृताश्रमे ॥ १० ॥
शालतालतमालैश्च प्रियालैर्वञ्जुलैश्चिते ॥
पुंनागाशोकबकुलैर्भूषिते चारुचम्पकैः ॥ ११ ॥
सहकारार्जुनाश्वत्थवरामलकजम्बुभिः ॥
कदम्बोदुम्बरप्लक्षैर्नानावृक्षैश्च शोभिते ॥ १२ ॥
कमलोत्पलकह्लारपुष्पगन्धाधिवासिते ॥
शुककोकिलसारीभिः कोककेकारवै रुते ॥ १३ ॥
शीतमन्दसुगन्धेन मारुतेनोपसंस्कृते ॥
यक्षगन्धर्वनिलये सिद्धचारणसेविते ॥ १४ ॥
सर्वलक्षणसंपन्नं सर्वविद्यासुशोभितम् ॥
धर्मार्थज्ञानतत्त्वज्ञं तथा शक्रोपमं नृपम् ॥ १५ ॥
चन्दनागुरुकर्पूरदिग्धाङ्गाभिः सुकेशिभिः ॥
दिव्याभरणभूषाभिर्मानिनीभिश्च मोदितम् ॥ १६ ॥
पीनोन्नतस्तनभरक्षामाङ्गीभिर्मृगाक्षिभिः (?) ॥
सुकङ्कणरवोपेतैर्वीज्यमानं तु चामरैः ॥ १७ ॥
महाबला महाकाया कुञ्जरा वनचारिणः ॥
कथं वश्या भवन्त्येते चिन्तयन्तं मुहुर्मुहुः ॥ १८ ॥
इतिहासकथाः काव्यं श्रोष्यमाणं मनोरमम् ॥
श्रितं सुरगुरुप्रख्यैः पुरोधोभिश्च मन्त्रिभिः ॥ १९ ॥
सुखासीनं तु तत्रस्थं पौरजानपदैः सह ॥
प्रेरिता भाविविधिना दयाभरणभूषिताः ॥ २० ॥
जटामुकुटधर्तारो मोक्षद्वारपथानुगाः ॥
कन्दमूलफलाहाराः कौपीनवसनावृताः ॥ २१ ॥

---

१ ग. °तीर्थे कृ°। २ ग. °श्रमः ॥ १० ॥ ३ ख. ग. °लैर्युते। ४ ख. [illegible] °वं। ६ ख. ग. [illegible] प°। ७ क. °ना दिव्याभ°।

दण्डकमण्डलूपेता दीप्यमानाः स्वतेजसा ॥
यज्ञोपवीतसहिता अक्षमालाविभूषिताः ॥ २२ ॥
नाकवत्सुवर्णधारा महीवच्च सुमेखलाः ॥
पातालवत्तपोनन्तास्त्रिषु लोकेषु मध्यगाः ॥ २३ ॥
रविबिम्बसमाकाराः षट्त्रिंशत्तपकोविदाः ॥
*अपश्यन्नागताश्चम्पां मुनयः संशितव्रताः ॥ २४ ॥
('गङ्गायाः' इत्यादि कुलकम् )
†.................................................................. ॥
गौतमं चाग्निवेश्यं च राजपुत्रं च बाष्कलिम् ॥ २५ ॥
काश्यपं मृगशर्माणं भारद्वाजं च सौबलम् ॥
काङ्कायनं च गार्ग्यं च रैभ्यं चैव बृहस्पतिम् ॥ २६ ॥
अरिमेदं च माण्डव्यं कुमुदं तं तथैव च ॥
याज्ञवल्क्यं हिरण्यं च भृगुं चाङ्गिरसं तथा ॥ २७ ॥
पराशरमचूडं च मतङ्गं चोर्मिमालिनम् ॥
सारस्वतं सच्यवनं पुलस्त्यं पुलहं क्रतुम् ॥ २८ ॥
विश्वामित्रं वशिष्ठं च जमदग्निं च भार्गवम् ॥
अगस्त्यं च त्रिशङ्कुं च मरीच्यत्रिसुपर्वणम् ॥ २९ ॥
दीर्घं परिकरं काप्यं नारदं सुरवन्दितम् ॥
एतानन्यान्महाभागानागतान्सुरशासनात् ॥ ३० ॥
दृष्ट्वैव परमप्रीतो राजा विस्मयमागतः ॥
+प्रत्युत्थायाऽऽसनात्तूर्णं स्थित्वा चाभ्यर्च्य तान्नृपः ॥ ३१
†अर्घेणाऽऽसनदानेन पाद्येन च परंतपः ॥
स्तूयमानस्तु राजा तैः कुशलं धर्मसंमतम् ॥ ३२ ॥

---

* इतः पूर्वं 'धनकार्याणि लोकानां राजा सन्मन्त्रिभिः सह' इति ग. पुस्तके विकः पाठः ।

† पुस्तकद्वये श्लोकार्धोत्तरमेव श्लोकाङ्क( २५ )दानं कृतमतो ज्ञायते—'पूर्वार्धं त्रुटितः' इति ।

+ अयमर्धश्लोकः 'क' पुस्तके नास्ति ।

† अयमर्धश्लोकः 'क' पुस्तके, उत्तरार्धभूतः ।

---

१ ख. ग. समेखलाः । २ ख. वाष्कलिम् । ग. वाक्पतिम् । ३ क. °च ॥ भृं चाङ्गिरसं चैव पुलस्त्यं पुलहं त° । ४ ख. ग. पाराशरमरम्भूडं म° । ५ ख. ग. वसिष्ठ ६ ख. ग. अगस्तिं ।

विज्ञाय[1] तान्रोमपाद उपविष्टो नृपस्तदा ॥
पप्रच्छ वदतां[2] श्रेष्ठो सामात्यः सपुरोहितः ॥ ३३ ॥
*भयकारानतिश्रेष्ठानभिवीक्ष्यैवमब्रवीत् ॥
पुरा मम सुरैः प्रीतैर्वरो दत्तो हि तोषितैः[3] ॥ ३४ ॥
वाहनास्ते भविष्यन्ति वारणा दिग्गजान्वयाः ॥
अहं जिघृक्षुर्द्विरदान्वन्योऽश्रुतविशारदाः ॥ ३५ ॥
†दर्शनेन यथोक्तेन प्रेष्यतां(न्तां) हस्तिचारिणः ॥
अथ राज्ञो वचः श्रुत्वा विधिना गजचारिणः[4] ॥ ३६ ॥
प्रेषयामासुर्वै धीरास्ते राज्ञो हितकाङ्क्षिणः ॥
अन्वेषद्भिर्वने नागानथ दृष्टं तु तैः पदम् ॥ ३७ ॥
अनुगन्तुं तदारब्धा मुदा परमया युताः ॥
वने यस्याऽऽश्रमपदं नानाद्रुमसमाकुलम् ॥ ३८ ॥
मयूरैः कोकिलाभिश्च रुतं मधुकरैरपि ॥
शैलराजाश्रितं पुण्यं ‡लौहित्यं सागरं प्रति ॥ ३९ ॥
देवानां काननैस्तुल्यं[5] क्रीडनं देवयोषिताम् ॥
यक्षगन्धर्वनारीणां तथा चोरगयोषिताम् ॥ ४० ॥
आलयं सिद्धयक्षाणां दिव्यानां पक्षिणामपि ॥
सिद्धचारणसंजुष्टं[6] किंनरोद्गीतिनादितम् ॥ ४१ ॥
मृगास्तत्र समं व्याघ्रैर्मित्रवत्संवसन्ति च ॥
तदाश्रमं प्रविष्टं हि तस्य यूथस्य तत्पदम् ॥ ४२ ॥
अपश्यंश्च मुनिं तत्र सामगायनमाश्रमे ॥
दिव्यज्ञानसमायुक्तं तपसा जितकिल्बिषम् ॥
श्रीमन्तं सौम्यवदनं सर्वभूतहिते रतम् ॥ ४३ ॥
पुनस्ततो निरीक्षद्भिर्दृष्टं[9] यूथमदूरतः ॥
भद्रमन्द्रमृगैर्नागैरुपेतं[10] हि मनोरमैः ॥ ४४ ॥

* अयमर्धश्लोकः 'ग' पुस्तके 'अहं जिघृक्षुः' इत्यतः प्राग्दृश्यते ।
† 'अयं श्लोकः 'क' पुस्तके त्रुटितः ।
‡ 'लौहित्यं लोहितत्वे स्यात्क्लीबं पुंसि नदान्तरे ' इति मेदिनी ।

१ क. °ज्ञातान्रोम° । २ ख. °वाग्यदम° । ३ ख. हितैषिभिः । ४ ख. [illegible] वनचारिणः ॥ ३५ ॥ ५ क. °न्यान्सुरवि° । ६ ख. °रास्तद्रुमौ हि° । ७ ख. [illegible] ° । ८ ख. ग. °संतुष्टं । ९ क. °मथोऽग्रतः । १० क. °गैर्योगै° ।

चावङ्गीभिर्वशाभिश्च पोतैश्च प्रियदर्शनैः ॥
मध्येऽपश्यन्मुनिं चैवं तत्रार्कसमतेजसम् ॥ ४५ ॥
तपसा नियमैर्युक्तं कृशदेहं क्रियान्वितम् ॥
धृतिक्षमाभ्यां युक्तं च तथा दमपरायणम् ॥ ४६ ॥
*शरण्यं सर्वभूतानां जटावल्कलधारिणम् ॥
युक्तं परेण हर्षेण क्रीडन्तं सह वारणैः ॥ ४७ ॥
कलभैर्धेनुकाभिश्च भ्रमरोद्गीतिशालिषु ॥
नानापुष्पसमृद्धेषु द्रुमखण्डेषु तैः सह ॥ ४८ ॥
कमलोत्पलरम्येषु विगाहन्तं सरःसु च ॥
उत्पन्नेयं मतिस्तेषामनेनैतद्धि रक्ष्यते ॥ ४९ ॥
कालं तं मृगयामासुर्यस्मिन्विरहितं भवेत् ॥
अनेन मुनिना यूथमन्विष्यामो यथासुखम् ॥ ५० ॥
अथ मध्याह्नकाले तु आश्रमं मुनिरागतः ॥
ऋषिस्तस्य प्रयत्नेन कर्तुं शुश्रूषणक्रियाम् ॥ ५१ ॥
सायाह्नकाले तु मुनिर्यूथमध्यं पुनर्गतः ॥
एतत्सर्वं यथावत्तैरङ्गराजाय कीर्तितम् ॥ ५२ ॥
तस्मै नरो बहिर्भागास्तथाऽऽगम्य न्यवेदयन् ॥
मूर्ध्नि कृत्वाऽञ्जलिं प्रीता महीमास्थाय जानुभिः ॥ ५३ ॥
दर्शनीयानि दीर्घाणि न द्रवन्ति महान्ति च ॥
बहून्यदृष्टपूर्वाणि सत्त्वानि भुवि कानि च ॥ ५४ ॥
सर्वसस्यविनाशं च राजन्कुर्वन्ति नित्यशः ॥
तेषां देशहितार्थाय प्रतियत्नो विधीयताम् ॥ ५५ ॥
ततस्तेषां वचः श्रुत्वा ग्रहार्थं कृतनिश्चयः ॥
प्रस्थितो हृदि तं कृत्वा यः कालस्तैर्निवेदितः ॥ ५६ ॥
गृहीत्वा महतीं सेनां नगर्या निर्ययौ तदा ॥
अचिरात्समनुप्राप्तस्तं देशं यत्र ते गजाः ॥ ५७ ॥

---

* अयं श्लोकः 'क' पुस्तके नास्ति ।

---

१ क. °भिश्च वश्याभि; पो° । २ ग. °व शतार्क° । ३ क. °था देवप° । ४ क. °प्रपेत्त° । ५ क. °गम्यावदंस्तथा । मू° । ६ क. °णि भद्र° । ७ ख. ग. विधीयते ।

स तां[1]ञ्शापवशप्राप्तान्गजाञ्जग्राह पार्थिवः ॥
तस्मिन्काले यथाख्याते यूथं बद्ध्वा नृपेण तत् ॥ ५८ ॥
चम्पासमीपमानीतं ततः पूजयाभिवाद्य च ॥
विधिना शास्त्रदृष्टेन नयकर्तॄं[2]स्तथाऽब्रवीत् ॥ ५९ ॥
स्तम्भेषु च यथोक्तेषु स्थान[3]ग्रासे तथैव च ॥
विधिना च यथोक्तेन यूथमेतद्धि दम्यताम् ॥ ६० ॥
प्रत्यब्रुवन्नङ्गराजं सर्वे ते नयकोविदाः ॥
स्वकार्यमिदमस्माकं शेषं कार्यं विचिन्त्यताम् ॥ ६१ ॥
चम्पाप्रवेशः क्रियतां राजन्स्वस्थमना भव ॥
ते राजनि प्रविष्टे तु यूथं स्तम्भेष्ववबन्धयन् ॥ ६२ ॥
अथ शुश्रूषणां कृत्वा स निष्क्रम्याऽऽश्रमान्मुनिः ॥
तं देशमभिसंप्राप्तस्त्वासीद्यस्मिन्स्थितं तु तत् ॥ ६३ ॥
तस्मिन्नपश्यंस्तद्यूथं मनसा व्याकुलेन तु ॥
आ[4]गतोऽन्वेषणं कर्तुं पुरा तिष्ठन्ति येषु च ॥ ६४ ॥
ते दे[5]शेष्ववगाहन्ते येषु चैव सरःसु च ॥
अपश्यंस्तेषु सर्वेषु चम्पामभ्यागतस्ततः ॥ ६५ ॥
पदेन मुनिशार्दूलः शोचन्स्नेहेन हस्तिनः ॥
अथ पूर्वनियु[7]क्तैस्तु तस्य चेष्टाचरैर्मुनेः ॥ ६६ ॥
शुश्रूषणाद्या निखिलाश्चेष्टा राज्ञोऽ(ज्ञेऽ)नुकीर्तिताः ॥
तत्राऽऽसीना महात्मानो यूथस्य नयकोविदाः ॥ ६७ ॥
गौतमप्रमुखाः सर्वे सर्वभूतहिते रताः ॥
तपोनियमसंपन्नास्तेन यूथस्य मध्यगाः ॥ ६८ ॥
ददृशुर्योगपद्येन तस्मिंस्तु गजमण्डले ॥
श्रीमन्तं ब्राह्मणं कंचिज्जटिलं साधुसंमतम् ॥ ६९ ॥
उग्रेण तपसा युक्तं वेदवेदाङ्गपारगम् ॥
कृष्णाजिनधरं युक्तमृषिमुग्रेण वर्चसा ॥ ७० ॥
अपश्यन्मौनसंपन्नं प्रविष्टं हस्तिमण्डले ॥
अचिन्तयंस्तु तान्सर्वान्स दृष्ट्वा वारणान्मुनिः ॥ ७१ ॥

[illegible] ग. °वशात्प्राप्ता° । २ क. °न नागनेतॄंस्त° । ३ क. स्थानं ग्रा° । [illegible]रभ्योऽन्वे° । ६ ख. देशेष्वथावगाहन्ते । ७ क. °युक्तस्तु । [illegible] ९ क. °ममन्नास्ते तेन ।

आसीदुद्विग्ननेत्रश्च दीनानुपजगाम च ॥
ज्ञातिवर्गं स तान्नागान्व्रणितान्दुःखपीडितान् ॥ ७२ ॥
उपेत्य तान्सव्यथितान्संस्पृशन्परिनिश्वसन् ॥
त्वङ्मूलभङ्गांश्च बहूनाहृत्य व्रणरोपणान् ॥ ७३ ॥
संक्षुद्य तेषां नामानां स व्रणान्लिम्पति स्म तान् ॥
कुड्मलान्पल्लवांश्चैव त्वचो मूलफलानि च ॥ ७४ ॥
यवसानि विचित्राणि स तेभ्यः प्रददौ मुनिः ॥
एकरात्रोषितं तत्र तं प्रकारो यशस्विनः ॥ ७५ ॥
तं मुनिं कर्म चैवास्य पप्रच्छुर्विस्मितास्तदा ॥
अनुकम्पसे गजान्केन कस्मादालिम्पसि व्रणान् ॥ ७६ ॥
इति तैः पृच्छ्यमानोऽपि न किंचित्प्रत्युवाच सः ॥
अनतिव्याहृतास्तेन तत्र ते विस्मितास्तदा ॥ ७७ ॥
तं मुनिं कर्म चैवास्य तद्राज्ञे प्रत्यवेदयन् ॥
तेषां श्रुत्वा वचो राजा महर्षिमभिगम्य तम् ॥ ७८ ॥
अर्घेणाऽऽसनदानेन पाद्येन च महामुनिम् ॥
प्रणिपातेन चाभ्यर्च्य *स्पृष्ट्वाऽग्रे स्तुतिकौशलम् ॥ ७९ ॥
सान्त्वयन्परिपप्रच्छ विनयेन कृताञ्जलिः ॥
भगवञ्ज्ञातुमिच्छामि जन्म नाम श्रुतं च यत् ॥ ८० ॥
दमनप्रतिरूपं च इयां प्रीतिं च हस्तिषु ॥
इति तं परिपृच्छन्तं भूमिपालं कृताञ्जलिम् ॥ ८१ ॥
मौनसंपदमास्थाय न किंचित्प्रत्युवाच सः ॥
पृष्टवान्पार्थिवश्चैवं ततो ब्राह्मणकाम्यया ॥ ८२ ॥
अथास्मै धर्मवित्साधुः शशंसाऽऽत्मानमात्मवित् ॥
पुरा हि वारणा राजन्कामगाः कामरूपिणः ॥ ८३ ॥
चरन्ति मानुषे लोके देवलोके च पार्थिव ॥
अथोत्तरे हिमवतो महान्न्यग्रोधपादपः ॥ ८४ ॥
द्वे योजनशते राजन्नुच्छ्रितस्तद्वदायतः ॥
ऋषिर्दीर्घतपा नाम तत्राऽऽसीत्सपरिग्रहः ॥ ८५ ॥

---

* 'स्पृष्ट्वा' इति तूचितम् ।

---

१ क. °श्च मता° । ख. °श्च सुता° । २ ख. °नां व्रणानालिम्प° । ३ क. तत्रकारो । ४ क. सः ॥ आन° । ५ ख. ग. °ष्ट्वाऽग्निस्तु° । ६ क. °वान्ब्राह्मणश्चै° ।

न्यग्रोधं ते कदाचित्तु समाजग्मुरनेकपाः ॥
निपेतुस्तस्य शाखायां सर्वे ते संहिता गजाः ॥ ८६ ॥
अतिभारेण तेषां तु सा शाखा शतयोजना ॥
विदारयन्ती तं देशं निपपात महीतले ॥ ८७ ॥
ते चापि वारणाः सर्वे शाखामन्यां समाश्रिताः ॥
ततः क्रोधसमाविष्टस्तान्गजानृषिरब्रवीत् ॥ ८८ ॥
मदद्पोच्छ्रयाद्यस्मान्मम भग्नः परिग्रहः ॥
विमुक्ताः कामचारेण भविष्यथ न संशयः ॥ ८९ ॥
नराणां वाहनत्वं च तस्मात्प्राप्स्यथ वारणाः ॥
अथान्तरिक्षान्महती राजन्वाणी विनिर्गता ॥ ९० ॥
यैः क्षयं दानवा नीतास्तान्मुक्त्वा ऋषिसत्तम ॥
वाणीं श्रुत्वा शुभामेनामेवमाह महामुनिः ॥ ९१ ॥
अथ ते वारणाः श्रुत्वा शापमात्मापराधजम् ॥
परं दैन्यमुपागम्य ब्रह्माणमुपतस्थिरे ॥ ९२ ॥
अथ तान्पूर्वमेवाऽऽह ब्रह्मा लोकपितामहः ॥
मा कार्षुर्वारणाः शोकं न हि शक्यं तदन्यथा ॥ ९३ ॥
कर्तुं यत्तेन मुनिना वचनं समुदाहृतम् ॥
एतद्वाक्यं ततः श्रुत्वा प्रत्यूचुस्ते दिशां गजाः ॥ ९४ ॥
अस्माकमनुजानां तु गजानां ग्रामवासिनाम् ॥
रोगाः प्रादुर्भविष्यन्ति विषमाद्यशनादिभिः ॥ ९५ ॥
दिग्गजानां वचः श्रुत्वा प्रत्युवाच पितामहः ॥
न विषादे मनः कार्यं व्याधीन्प्रति मतङ्गजाः ॥ ९६ ॥
उत्पत्स्यत्यचिरेणाथ गजबन्धुर्महामुनिः ॥
आयुर्वेदस्य वेत्ता वै मत्कृतस्य भविष्यति ॥ ९७ ॥
तेषां रोगान्समुत्पन्नान्हनिष्यत्यौषधीबलात् ॥
एवमुक्त्वा दिशो नागान्विससर्ज यथादिशम् ॥ ९८ ॥
ततस्ते प्रययुः स्थानं स्वं स्वमैरावतादयः ॥
दिग्वारणान्वयास्ते तु लोकं मानुषमागताः ॥ ९९ ॥

---

१ क. मदीयाश्रयणे यस्मा°। २ ख. °हता वाणी राजन्विनि°। ३ ग. वाणीमेवं शु°। ४ क. शापमात्मपराजयम् । ५ क. °स्माकमन्वये नूनं ग°। ख. ग. °स्माकं मनु° । ६ ग. यथासुखम् ।

विचरन्ति महीं कृत्स्नां पद्भिः सागरमेखलाम् ॥
शतशो यूथसंख्याभिः महद्भिश्च सहस्रशः ॥ १०० ॥
राजन्हिमवतः पार्श्वे महर्षिः सामगायनः ॥
सागरं प्रति लौहित्यं तपस्तीव्रमतप्यत ॥ १०१ ॥
तस्याऽऽश्रमपदाभ्यासमाजगाम यदृच्छया ॥
सवृद्धबालं सुमहद्गजयूथं सयूथपम् ॥ १०२ ॥
तं स्वप्ने धर्षयामास यक्षिणी कामरूपिणी ॥
का न्वियं शयनात्तूर्णमुत्थितः स व्यचिन्तयन् ॥ १०३ ॥
आश्रमादभिनिष्क्रम्य मुनिर्मूत्रं चकार सः ॥
तस्य मूत्रेण संसृष्टं तत्रैवेन्द्रियमभ्र(स्र)वत् ॥ १०४ ॥
कृत्वा शौचं यथान्यायं मुनिर्धर्मपरायणः ॥
प्रविष्टमात्रे निलयं तस्मिंस्तमृषिसत्तमे ॥ १०५ ॥
दैवकारणसंयुक्तं तत्तु तद्रेतसाऽन्वितम् ॥
अपिबद्धस्तिनी मूत्रं ततो गर्भमधत्त सा ॥ १०६ ॥
तस्य तद्वचनं श्रुत्वा राजा वचनमब्रवीत् ॥
कथं करेणुस्तच्छुक्रं पीत्वा गर्भमधत्त सा ॥ १०७ ॥
को हेतु कारणं किं वा भगवन्वक्तुमर्हसि ॥
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥ १०८ ॥
शृणु सर्वं महाराज शुक्रं पीतवती च सा ॥
गर्भं दध्ने यदर्थं च सा भूदेवं हि हस्तिनी ॥ १०९ ॥
ब्रह्मणा विहिता मूर्ती रुचिरा नाम देवता ॥
आदिकाले प्रजासर्गे विचिन्त्य भगवान्प्रभुः ॥ ११० ॥
देवानां मानुषाणां च गन्धर्वाणां च रक्षसाम् ॥
गृहीत्वा सोऽसृजत्तेजः स्वयं स्वायंभुवामिव ॥ १११ ॥
तां दृष्ट्वा रुचिरां देवा ऋषयश्च तपोधनाः ॥
इत्यूचुरमितं प्राप्य विस्मयं सर्वपारगाः ॥ ११२ ॥
रुचिरेत्यभिविख्याता लोकेषु रुचिता त्रिषु ॥
अचिन्तयित्वा सा देवान्प्रजापतिपुरोगमान् ॥ ११३ ॥

---

१ क. तत्र । २ ख. ग. संमृष्टं । ३ ख. दधे । ४ ग. प्रजासर्वे । ५ क. रुचिरा ।

यौवनस्यैव गर्वाड्या केवलं लीलयाऽपि वा ॥
तत्रैव मुनिभिः ख्यातैः कीर्त्यमाना ययौ तदा ॥ ११४ ॥
तां रुष्टो भगवान्ब्रह्मा शशाप वसुधाधिप ॥
भविष्यसि करेणुस्त्वं कदाचिद्वसुधातले ॥ ११५ ॥
मम शापवशात्प्राप्तिं ब्रूहि नाथ क्षितौ कदा ॥
इत्युक्त्वा ब्रह्मणः सा तु पादयोरपतत्तदा ॥ ११६ ॥
तामुवाचाश्रुपूर्णाक्षीं प्रमदां विमदां शुभाम् ॥
करेणुभावो मेदिन्यां मतक्रान्ते भविष्यति ॥ ११७ ॥
प्रभूय भार्गवाख्याते वसुवंशे सुकन्यका ॥
भविष्यसि तदा भद्रे पुनः शापमवाप्स्यसि ॥ ११८ ॥
प्राप्तशापा वसुकुले जन्म कामयते यदा ॥
उपायं चिन्तयन्त्यत्र जन्मार्थे पश्चिमां गता ॥ ११९ ॥
ततः शापाभिभूता सा प्रयाता सहसा भुवि ॥
महर्षेर्भार्गवस्याथ मृगव्यालनिषेवितम् ॥ १२० ॥
आश्रमं मुनिभिः श्रेष्ठैः शोभितं ब्रह्मनिःस्वनैः ॥
ब्रह्मसद्मनिभं चित्रं सिद्धगन्धर्वसेवितम् ॥ १२१ ॥
शैलराजस्य पार्श्वस्थं मणिराजिविराजितम् ॥
अप्सरोभिः समाकीर्णं किंनरोद्गीतिनादितम् ॥ १२२ ॥
आकुलं यज्ञधूमैश्च स्वाध्यायैः स्वरसंयुतैः ॥
पावकापीडसंकाशैरशोकस्तबकैरपि ॥ १२३ ॥
शोभितं वृक्षखण्डैश्च नीलधाराधरोपमैः ॥
कमलोत्पलखण्डैश्च सरोभिरुपशोभितम् ॥ १२४ ॥
नानारूपैर्मुनिचयैः ऋतूनां शोभितं शुभम् ॥
ददर्श तत्र धीमन्तं पावकोपमतेजसम् ॥ १२५ ॥
सुवर्णस्तम्भवर्ष्माणं जटामुकुटधारिणम् ॥
तं मेरुशिखराकारं श्रिया विगतकल्मषम् ॥ १२६ ॥
उवाच रुदती श्रेष्ठं कृत्वा मूर्धनि सोऽञ्जलिम् ॥
ऋषीणां भार्गव श्रेष्ठ क्रोधस्यान्तः कथं भवेत् ॥ १२७ ॥

---

१ क. ख्याताः । २ क. इत्युक्ता ब्रह्मणा सा । ३ ख. °र्णाक्षां प्र° । ४ ख. ग. °शे च क° । ५ क. भविष्यति । ६ ग. °न्तयंस्तत्र । ७ क. °ज्ञभूमै° । ८ ख. °ध्यायस्व° । ९ क. शोभितां । १० क. °रिणीम् ॥ तं । ११ क. ख. श्रेष्ठ । १२ ख. सोऽञ्जलिम् ।

इत्युक्त्वा ब्रह्मणस्तस्य साऽपतत्पादयोस्त्वरा ॥
सोऽब्रवीच्छोकसंतप्तामश्रुपूर्णायतेक्षणाम् ॥ १२८ ॥
मा भैषीः केन चं त्रस्ता कलुषा वा शुभानने ॥
बाबुवाच महाप्राज्ञो ह्यवस्थां चिन्तयंस्तदा ॥ १२९ ॥
ददर्श सर्वं निर्द्वंद्वं दिव्यचक्षु(ः)समन्वितः ॥
वसूनामुत्तमे वंशे जननं ते भविष्यति ॥ १३० ॥
तत्र वर्षसहस्रं तु नीत्वा शापमवाप्स्यसि ॥
एतत्ते कथितं राजन्पुनश्चैनमभिगद्यते ॥ १३१ ॥
गर्भं धत्ते यदर्थं तु साऽभूद्येन च हस्तिनी ॥
वसूनां कन्यका राजन्नाम्ना गुणवती किल ॥ १३२ ॥
देवगन्धर्वकन्याभिः सखीभिः सह शोभना ॥
मातापितृमतेनैव विचचार महीतले ॥ १३३ ॥
दर्शनीयानि पश्यन्ती वनान्युपवनानि च ॥
निर्झरान्सरितः शैलान्पुष्पवन्ति सरांसि च ॥ १३४ ॥
अथाऽऽश्रमं मतङ्गस्य कदाचित्प्रविवेश सा ॥
मनोहरत्वात्क्रीडन्ती *विस्मृता तत्र सा सखी ॥ १३५ ॥
युक्ता दैवेन विधिना विचरन्ती मतं सुताम् (?) ॥
दृष्ट्वा लक्षणसंपन्नां रूपयौवनशालिनीम् ॥ १३६ ॥
धर्मविघ्नकरीं मत्वा शक्रेण प्रेषितां स्वयम् ॥
ततः शशाप संक्रुद्धोऽ*नागसां वसुकन्यकाम् ॥ १३७ ॥
अरण्ये विचरस्येका यस्मान्मानुषवर्जिता ॥
तस्मादरण्यनिलया करेणुस्त्वं भविष्यसि ॥ १३८ ॥
मा भूदरण्यवासेऽपि(?) †नाऽऽप्स्यसे स्वस्य चेतसः (?) ॥
अथ शापभयत्रस्ता पादयोरपतन्मुनेः ॥ १३९ ॥
नापराधोऽस्ति मे ब्रह्मन्किमर्थं शप्तवानसि ॥
ब्रह्मणो भवनाकारं सिद्धगन्धर्वसेवितम् ॥ १४० ॥

---

* 'विस्मृत्य तत्र सा सखीः' इति पाठस्तूचितः । * 'अनागसं' इति भवेत् । † 'यथा ते स्वस्थचित्तता' इति पाठस्तूचितः ।

---

१ ख. वै । २ क. कथिता । ३ ख. ग. °नश्चेदं निग° । ४ ख. तरसा । ५ ख. सुताम् । ६ ग. °र्जिते ॥ त° । ७ क. °लयी क° । ८ क. चेतसा । ग. तेजसा ।

परं विस्मयमागम्य राजा प्राञ्जलिरब्रवीत् ॥
अपूर्वो भगवंश्चर्यामिमां श्रुत्वा तपोनिधे ॥ १६९ ॥
जन्म चाद्य तव श्रुत्वा परं कौतूहलं हि मे ॥
कथं भगवता चीर्णं वने सह मृगद्विपैः ॥ १७० ॥
नदीनां पर्वतानां च समेषु विषमेषु च ॥
काननेषु च रम्येषु हस्तियूथैः समं विभो ॥ १७१ ॥
कालो वा कोऽप्यतिक्रान्तः प्रभिन्नैर्वरवारणैः ॥
वने विचरतः सार्धं तप उग्रं च कुर्वतः ॥ १७२ ॥
एतदिच्छाम्यहं ज्ञातुं भगवंस्तद्ब्रवीहि मे ॥
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥ १७३ ॥
शृणु सर्वं महाराज मया चीर्णं यथा वने ॥
हस्तियूथेन महता सार्धं धर्ममवेक्ष्य च ॥ १७४ ॥
कालश्चरति नो यावेच्छीर्णपर्णाम्बुभोजिनः ॥
भ्रमद्भ्रमरसंघेषु बहुपुष्पेषु शा[३]खिषु ॥ १७५ ॥
सहकारैः सतिलकैः पुंनागार्जुनकेसरैः ॥
अशोकैश्चम्पकैश्चापि[४] कमलेन्दीवरैस्तथा ॥ १७६ ॥
शालतालतमालैश्च परिशोभितराजिषु ॥
अतिमुक्तकनद्धेषु तरुखण्डेषु निस्पृशः ॥ १७७ ॥
स्थितिर्मे वारणैः सार्धं सुप्तुक्रान्ते नवे दिवा ॥
प्रसन्नशीततोयेषु क्रीडता[५] पद्मगन्धिषु ॥ १७८ ॥
सरस्सु कलभैः सार्धं पीतं च सलिलं मया ॥
शाड्वलानि वनान्तेषु मणिवर्णानि भूमिप ॥ १७९ ॥
पुलिनानि नदीनां च पर्वतानां च सानुषु ॥
निवातानि प्रवातेषु वनानि चरितानि च ॥ १८० ॥
सेविताः पादपाः फुल्ला मदगन्धाधिवासिताः ॥
अकर्दमा वनोद्देशा वर्षास्वल्पद्रुमास्तथा ॥ १८१ ॥
सेविता वारणैः सार्धं स्थलमायाः सुखं मया ॥
दश वर्षसहस्राणि दश वर्षशतानि च ॥ १८२ ॥

---

१ क. तपोनिधेः । २ क. ख. °बत्सीर्ण° । ३ ख. शालिषु । ४ ख. °पि मुकुले° । ५ क. ख. क्रीडिता । ६ ख. मन्दग° ।

त्रीणि पञ्च च वर्षाणि मया चीर्णं सह द्विपैः ॥
हृष्टेन मनसा राजन्मयाऽऽख्यातं ततो हितम् ॥ १८३ ॥
अथ संपूज्य तं राजा प्रसन्नमनसं मुनिम् ॥
गजार्थे चोदयामास विनयेन कृताञ्जलिः ॥ १८४ ॥
केऽरण्ये व्याधयो नागानुपघ्नन्ति स्पृशन्ति च ॥
ग्रामाणां व्याधयो ये च तान्ममाऽऽख्याहि पृच्छतः ॥ १८५ ॥
इत्युक्तो भूमिपालेन पालकाप्यस्ततो मुनिः ॥
हेतुमत्पुष्कलार्थं च वाक्यं राजानमब्रवीत् ॥ १८६ ॥
वने निबोध मे हेतुमारोग्ये वनचारिणाम् ॥
मधुगन्धिष्वरण्येषु करेणुसहिता गजाः ॥ १८७ ॥
चरन्ति विविधं शष्पं स्वच्छन्देन यथासुखम् ॥
त्वग्वल्लीफलभङ्गांश्च पल्लवान्विविधानपि ॥ १८८ ॥
कषायं कटुकं चैव तिक्तं लवणमेव च ॥
अम्लं च मधुरं चैव रसानेतान्मतङ्गजाः ॥ १८९ ॥
यथर्तु चोपसेवन्ते प्रविभागेन पार्थिव ॥
वर्जयन्ति ह्यरण्येषु वृक्षभङ्गं घनागमे ॥ १९० ॥
हेमन्ते चापि मातङ्गा निदाघे भक्षयन्ति च ॥
शल्लकीकर्णिकारं च कोविदारमुदुम्बरम् ॥ १९१ ॥
प्लक्षं न्यग्रोधवृक्षं च पवसं चोदकं तथा ॥
वर्षास्वरण्ये सेवन्ते जाङ्गलं स्थलजं च तत् ॥ १९२ ॥
हेमन्ते स्थलजं चापि भक्षयन्ति मतङ्गजाः ॥
ते स्वैरं तृणपुष्टास्तु स्वच्छन्दातपसेविनः ॥ १९३ ॥
मह्यां चैव मनोज्ञायां रमन्ते धेनुकासुताः ॥
गच्छन्ति मैथुनं स्वैरं गर्भं चैवाऽऽदधत्यपि ॥ १९४ ॥
समेऽभिकामं चरतामुदकं पिबतां तथा ॥
स्वयूथजातैः सार्धं च विहारमुपसेविनाम् ॥ १९५ ॥
कामं च *सेव्यमानानां शय्यास्थानं तथाऽशनम् ॥
† निर्वाणं पांशुघातं च परिव्यञ्जनमेव च ॥ १९६ ॥

*'सेवमानानाम्' इति तूचितम् । †'निर्वाणमस्तंगमने निर्वृतौ गजमज्जने' इति मेदिनी ।

१ क. करण्यै । २ क. ख. °लभङ्गाश्च । ग. °लभागाश्च । ३ क. समभिकामं चरिता° ।

स्वप्रांश्चागरणाचैव म व्याधिरुपजायते ॥
तेऽरण्याद्ग्राममानीता भयशोकसमन्विताः ॥ १९७ ॥
उद्विग्ना वधबन्धाभ्यां शोचन्तो धेनुभिर्विना ॥
तीक्ष्णाभिर्वाग्भिरुग्राभिस्तथैव भृशमर्दिताः ॥ १९८ ॥
अकामाशनयानैश्च योज्यमाना मतङ्गजाः ॥
दुस्थानशयनाभ्यां च कर्मभिश्चातिपीडिताः ॥ १९९ ॥
स्वयोनिभ्यो निरोधाय भवन्ति भृशमातुराः ॥
साध्यैर्याप्यैस्त्वसाध्यैश्च व्याधिभिश्च शरीरजैः॥ २०० ॥
ततोऽहमिह संप्राप्तस्त्वयाऽऽनीतेषु हस्तिषु ॥
विज्ञप्तो गौरवैरर्थैस्तथैवाऽऽमन्त्रितस्त्वया ॥ २०१ ॥
बन्धुस्नेहाच्च नागानां त्वया दृष्टोऽस्मि पार्थिव ॥
इति ब्रुवाणं तं विप्रं गजशास्त्रविशारदम् ॥ २०२ ॥
विज्ञापागोचरैरर्थैर्न्यमन्त्रयत सान्त्वयन् ॥
मम त्वनुग्रहार्थं च वासेऽस्मिन्क्रियतां मतिः ॥ २०३ ॥
ऋषिभिश्च स तैः सर्वैर्याच्यमानो नृपेण च ॥
बन्धुस्नेहाच्च नागानां तत्र वासे मनो दधे ॥ २०४ ॥
आश्रमं कारयामास चम्पाभ्यासे च पार्थिवः ॥
अप्सरोभिः समाकीर्णं दम्यमानगजाकुलम् ॥ २०५ ॥
वासाय कृतबुद्धिश्च मुनिमध्ये महामुनिः ॥
वारणानां हितार्थाय राजानमिदमब्रवीत् ॥ २०६ ॥
अण्डे किल समुत्पन्ना वारणाः पौर्वकालिकाः ॥
ब्रह्माण्डं तैजसं प्रोक्तमतः क्रीडन्ति पांशुभिः ॥ २०७ ॥
मार्तण्डकायशकलैस्तदण्डमभवत्किल ॥
तस्मादैरावतः श्रीमानुत्पन्नः प्रथमो गजः ॥ २०८ ॥
पुण्डरीकादयः पश्चात्कपालशकलेऽभवन् ॥
तैजसीं तनुमिच्छन्ति नागानां भूतचिन्तकाः ॥ २०९ ॥
तस्माण्डमर्कतनुजैर्जातं तन्मयमेव च ॥
समानजन्मयोनित्वादिह तस्मान्मतङ्गजाः ॥ २१० ॥

१ ख. °तान् ॥ १९७ ॥ २ क. शोचते । ३ क. °स्थानाश° । ४ क. °थैवमभित° । ५ क. दृष्टोऽस्मि । ६ क. च साचेस्मि° । ७ क. पार्थिव । ८ ग. °जा वत्रनुम° । ९ क. °रणायोर्थका° । १० ख. नु । ग. तु ।

पांशुकर्दमतोयैश्च ततः क्रीडन्ति हर्षिताः ॥
*धातुप्रसादं क्षिप्रं तु क्रीडतां जायतेऽधिकम् ॥ २११ ॥
धातुप्रसादादारोग्यमारोग्याद्बलमेव च ॥
बलाच्च सर्वरोगाणां निवृत्तिः स्यादतः परम् ॥ २१२ ॥
विशेषेण रणे तस्माद्गजस्कन्धहता नराः ॥
निर्मलाः स्वर्गमायान्ति येऽपि स्युः पापयोनयः ॥ २१३ ॥
जन्मप्रभृति संतप्ता भास्करस्यापि तेजसा ॥
अतः सलिलमिच्छन्ति दह्यमाना मुहुर्मुहुः ॥ २१४ ॥
हस्तिनामुदकं प्राणास्तद्गतिस्तत्परायणाः ॥
तस्मात्सलिलमेतेषां कामतोऽनुप्रसादयेत् ॥ २१५ ॥
आयोजनशतं सार्धं विचरन्तोऽपि कुञ्जराः ॥
निर्वहन्ति न सीदन्ति सलिलेनैव केवलम् ॥ २१६ ॥
यदा न परिषिच्यन्ते कर्दमोदकशीकरैः ॥
भवन्ति कुष्ठिनोऽन्धाश्च हस्तिनस्तेन हेतुना ॥ २१७ ॥
सूर्यस्याण्डकपाले द्वे समानीय प्रजापतिः ॥
हस्ताभ्यां परिगृह्याऽऽदौ सप्त सामान्यगायत ॥ २१८ ॥
गायतो ब्रह्मणस्तस्य समुत्पन्ना मतङ्गजाः ॥
तस्माद्धितार्थं देवानां यज्ञानां रक्षणाय च ॥ २१९ ॥
ततो निमित्तं नागानां सृष्टिर्धर्मात्मिका स्मृता ॥
निबन्ध्यास्तावदेवैते यावच्छक्यास्तु पोषितुम् ॥ २२० ॥
वधबन्धपरिक्लेशैर्ये तु ताम्यन्ति नित्यशः ॥
न च पुष्यन्ति मातङ्गा दुःखशोकसमन्विताः ॥ २२१ ॥
कुलं राज्ञो दहन्त्येते मानिता निर्दहन्त्यरीन् ॥
तस्मात्प्रयत्नः कर्तव्यो ग्रहणे पोषणे सदा ॥ २२२ ॥
राज्ञां हि विजयो नित्यं वारणेषु प्रतिष्ठितः ॥
अस्नातपीतभुक्तेषु वारणेषु नराधिपः ॥ २२३ ॥
न स्नानभोजने कुर्याद्यदीच्छेद्गतिमात्मनः ॥
नवग्रहे च मातङ्गे क्षीणे वृद्धे तथाऽऽतुरे ॥ २२४ ॥

---

* 'धातुप्रसादः' इति तूचितम् ।

---

१ ख.ग. °प्रदापये° । २ क. विवहन्ति । ३ क. कन्दमो° । ४ क. °न्ध्यास्तव दे° । ५ क. पोथितुम् । ६ कपुस्तकटिप्पण्याम्—तस्मादभुक्तपीतेषु न भुञ्जीत नराधिपः ।



4365

यत्नतो रक्षणं कुर्यात्स्वयमन्वेषणं तथा ॥
अन्नपानैश्च विविधैर्विचित्रैर्यवसैरपि ॥ २२५ ॥
स्थानेषु तु विचित्रेषु योज्यमानास्त्वया गजाः ॥
निर्वृत्ताश्च[१] भविष्यन्ति सुखं प्राप्स्यन्ति च क्रियाम् ॥ २२६ ॥
भविष्यन्ति च ते नित्यं युद्धेषु विजयावहाः ॥
तस्मादिह महीपाल कुरु हस्तिषु मन्मतम् ॥ २२७ ॥
*विधामति[२]विधानैश्च यवसैः पल्लवैरपि ॥
मच्छास्त्रे वर्त्तमानस्य बलवन्तो निरामयाः ॥ २२८ ॥
दीर्घमायुरवाप्स्यन्ति गजास्तव विशां पते ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥ २२९ ॥

इति पुरुषवराय सम्यगाह
मुनिगणमध्यगतः स चाऽऽत्मनः स्वरूपम् ॥
वदन्ति †मुनयो वरं स्वजन्म
नाम श्रुतमखिलं च संगतिम् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेद[३]महाप्रवचने महारोगस्थाने
वनानुचरितो नाम प्रथमोऽध्यायः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः ।

---

अङ्गो[४] हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
अरण्येषु[५] चिता नागास्तृणौषधिफलाशनाः ॥ १ ॥
वल्लीमूलत्वगाहारा[६] भक्षयन्ति कडंगरान् ॥
स्वच्छन्दतः पांशुघाता[७]न्निषेवन्तश्च कर्दमान् ॥ २ ॥
सेव्यमानाश्च सलिलं प्रकर्षन्तश्च पद्मिनीम्[८] ॥
वृक्षभङ्गा[९]न्निषेवन्ते सहिताश्च करेणुभिः ॥ ३ ॥

---

* 'विधा गजासने रुद्धौ प्रकारे वेतने विधौ' इति मेदिनी ।

† त्रिष्वपि पुस्तकेषु 'न्मन्यंति' इति पाठ उपलब्धः ।

---

१ क. निवृत्ताश्च । २ क. विधिप्र° । ३ ख. °र्वेदे प्र° । ४ ख. ग. आङ्गो । ५ ख. ग. °ण्येऽप्युचि° । ६ ख. °हारी भ° । ७ ग. °शुवाता° । ८ क. पद्मिनाम् । ९ क. वृक्षाभ° ।

सुखाहारप्रचारांस्तान्वनवाससुखोचितान् ॥[1]
अरण्याद्ग्राममानीतान्कथं सम्यगुपाचरेत् ॥ ४ ॥
भोजने रसपानेश्च यवसेनोदकेन च ॥
कथं न जायते व्याधिरिति भुक्तेन दन्तिनाम् ॥ ५ ॥
एतन्मे पृच्छतो ब्रूहि गजानां कुशलो ह्यसि ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥ ६ ॥
बद्धाः सन्तस्तु मातङ्गा वने स्वैरसुखोचिताः[2]॥
अपि दीर्घायुषो भूत्वा दुःखैः शारीरमानसैः ॥ ७ ॥
न सर्व एव राजेन्द्र प्राणान्धारयितुं क्षमाः ॥
या वने निर्वृतिस्तेषां सा पुनर्जन्मनामसौ ॥ ८ ॥
न जातिजं नान्वयजं न प्रचारवनोद्भवम् ॥
लक्षणं महदल्पं वा शुद्धं संकीर्णमेव च ॥ ९ ॥
आघातवधबन्धेभ्यः प्राणान्धारयितुं क्षमाः ॥
तस्माद्वैद्यैर्महामात्रैर्यथाशास्त्रोपचारतः ॥ १० ॥
बन्धने प्राणसंदेहे परिरक्ष्याः[3] प्रयत्नतः ॥
राज्ञा चैषां च कर्तव्यो दयापूर्वमनुग्रहः ॥ ११ ॥
उचितो वनवासे यस्तस्यालाभेन दन्तिनाम् ॥
दोषाः कुप्यन्त्यसात्म्यत्वादपूर्वस्येह भोजनात् ॥ १२ ॥
पुष्कलां वा विधां लब्ध्वा पुनस्तान्न लभन्ति चेत् ॥
लाभालाभेन नागानामयोगाच्च महीपते ॥ १३ ॥
अभोजनादत्यशनाद्दुःस्थानशयनादपि[4] ॥
अकामाशनपानाच्च[5] बन्धेन च वधेन च ॥ १४ ॥
लवणस्यातियोगाच्च तथा ह्यलवणेन च ॥
एतैस्तु रोगा जायन्ते दोषकोपसमुद्भवाः ॥ १५ ॥
वातिकाः पैत्तिकाश्चैव श्लैष्मिकाः[6] सांनिपातिकाः ॥
तस्मादरण्यादानीतान्नागान्सम्यगुपाचरेत् ॥ १६ ॥
खरैरुष्ट्रैर्मनुष्यैश्च वाहयेदुदकं नृपः[7] ॥
द्रोणीभिश्चक्रयुक्ताभिः पाययेच्च मतङ्गजान् ॥ १७ ॥

---

१ क. ग. °चारास्ता°। २ क. भूयुः । ३ क. परिरक्षा । ४ क. °स्थानाश°।
५ क. अकामाशनयोनद्धे । ६ क. श्लेष्मकाः । ७ क. नृप ।

जलपर्शैश्च शीतेन जलेन परिषेचयेत् ॥
आकर्णमूलात्सलिलैः* प्रतरेतान्प्रवेशयेत् ॥ १८ ॥
शीतसात्म्यतया नित्यमेते हि वनजं सुखम् ॥
न स्मरन्ति महाराज ग्लान्यादिश्चोपशाम्यति ॥ १९ ॥
दिवाऽर्धप्रहरे शेषे मृदुभूते दिवाकरे ॥
तस्मादुत्तार्य सलिलाद्यत्नैरुत्तारयेद्गजान् ॥ २० ॥
ततः स्तम्भनिबद्धानां शतधौतेन सर्पिषा ॥
सर्वसेकः प्रदातव्यो वारणानां नराधिप ॥ २१ ॥
दिनान्ते त्वरितं दद्यात्सर्पिषा सह यावकान् ॥
वर्जयित्वा शरद्ग्रीष्मौ सेकांस्त्रीन्सार्वकालिकान् ॥ २२ ॥
ऊर्ध्वं कृताभिषेकेभ्यो दद्याद्यावदभीप्सितम् ॥
गजस्योक्तेन विधिना सेकांस्तैलेन पाक्षिकान् ॥ २३ ॥
कालेन यन्ता नागस्य हरेदम्बु शनैः शनैः ॥
निरुद्धांश्च ततो नागान्स्थापयेद्वसुधातले ॥ २४ ॥
नीरुजं तु ततो नागं वैद्यः सम्यगुपाचरेत् ॥
यथा दोषा न कुप्यन्ति तथा तेषां विशेषतः ॥ २५ ॥
वेक्ष्यते हि यथा तेषां ग्रहणी दीप्तिमाप्नुयात् ॥
कडंगरैर्वेणुभागैः पल्लवैर्यवसैस्तथा ॥ २६ ॥
मृणालेक्षुविशेषैश्च तथाऽन्यैर्मधुरैरपि ॥
ग्रहणीमुचितामेतैर्निरुणद्धि न मारुतः ॥ २७ ॥
यथाऽग्निवर्ष्मवयसां योगवित्समुपाचरेत् ॥
शय्यायां तु यदा गच्छेत्सुखं निद्रां मतङ्गजः ॥ २८ ॥
तदा तस्मै प्रदातव्या गुडमिश्रास्तु तन्दुलाः ॥
पलं पलं वर्धयेत यावच्च कुडवो भवेत् ॥ २९ ॥

---

* °त्सलिले' इत्युचितम् ।

---

१ ख. प्रारतेता° । २ ग. ख. स्तम्भे नि° । ३ क. ख. दिनान्तरे तं यवो दद्यात्प्राज्येन सर्पिषा सह । ख. पुस्तके शोधितः पाठः द्विदिनान्तरितं पश्चाद्दद्यात्प्राज्येन सर्पिषा । ४ ग. काले नियन्ता । ५ ग. तान्निरुद्धांस्ततो । ६ क. विवक्ष्यते । ७ ख. °विशैश्चैव त° । ८ ख. ग. °रसैः । प्र° । ९ क. ग. °मेति निरु° । १० क. प्रकर्तव्या । ११ ख. वर्धयेत्तु ।

ततो द्विगुणिता वृद्धिस्तन्दुलानां गुडस्य च* ॥
अतस्त्रिगुणितं देयं दद्याद्वाऽपि चतुर्गुणम् ॥ ३० ॥
अनेन क्रमयोगेन वर्धयेदासमाप्तितः ॥
तन्दुलान्गुडसंयुक्तानुपनाह्य प्रदापयेत् ॥
तेनास्य दीप्यते वह्निर्बलं तेजश्च जायते ॥ ३१ ॥
तन्दुलाँल्लवणं चैव उपनाह्य प्रदापयेत् ॥
एतेन वर्धते वह्निर्बलं तेजश्च जायते ॥ ३२ ॥
तन्दुलान्मूत्रसंसृष्टानुपनाह्य प्रदापयेत् ॥
एतेन वायुर्ग्रहणीमुचितां निरुणद्धि न ॥ ३३ ॥
कुल्माषमेदकं चैव गुडयुक्तं प्रदापयेत् ॥
एतेन दीप्यतेऽस्याग्निर्बलं तेजश्च वर्धते ॥ ३४ ॥
ग्रहणी वर्धते तेन न च वायुः प्रबाधते ॥
ओदनं चापि युक्तिज्ञः क्रमशो दापयेद्भिषक् ॥ ३५ ॥
चतुर्भागं तथाऽर्धं च पादहीनं तथा समम् ॥
क्रमेणानेन नागानां सर्वद्रव्याणि दापयेत् ॥ ३६ ॥
घृतस्निग्धं गुडयुतं प्रातर्भुञ्जीत वारणः ॥
सायं लवणतैलाभ्यां यथाकालमवेक्ष्य च ॥ ३७ ॥
दद्यात्पानीयपीताय विदाहः स्यादतोऽन्यथा ॥
गोमूत्रक्षीरमद्यासिं दीपनीयानि यानि च ॥ ३८ ॥
दधि सौवीरकं चैव मेदकं च महीपते ॥
अपीतायाम्बु देयानि श्लेष्मा कुप्येत्ततोऽन्यथा ॥ ३९ ॥
मध्यंदिने तु सगुडं सक्तु द्रोणेन संमितम् ॥
उदमन्थं पिबेद्ग्रीष्मे रात्रिपर्युषिते जले ॥ ४० ॥
काले जलावगाहं च +यथार्तु समुपाचरेत् ॥
यदा स्थिराग्निः संपन्नः सुविशुद्धमुखो गजः ॥ ४१ ॥

---

* अयं श्लोकस्त्रुटितः कपुस्तके । † अयं सार्धश्लोकोऽपि कगपुस्तके त्रुटितः । + कगपुस्तके, इतःपूर्वं 'उपनह्यान्यथा स्विन्नान्गोधूमांश्चापि दापयेत्' । इत्युपलभ्यते । ‡ 'यथर्तु' इत्युचितम् ।

---

१ क. °लानजमूत्र° । २ क. °पनह्यं प्र° । ३ ग. तदायुर्वर्धे° । ४ क. प्रबोधयेत् । ५ क. °त्पानाय पी° । ६ ग. °नि दापयेद्दीपनानि च । ७ क. °तायां तु दे° ।

अकाशाशनपानेषु प्रशमो विधिवद्भवेत् ॥
प्रकृतिं चास्य विज्ञाय यथार्तु स्नेहमाचरेत् ॥ ४२ ॥
विधानं वाऽस्य कार्त्स्न्येन स्नेहदाने प्रवक्ष्यते ॥
परमाणु(:) सुसूक्ष्मानुभावग्राह्यो न चक्षुषा ॥
येदभेद्यतमं लोके परमाणुः स उच्यते ॥ ४३ ॥
जालान्तरगते भानौ यदणीयो रजो भवेत् ॥
तस्य त्रिंशत्तमो भागः परमाणुः स उच्यते ॥ ४४ ॥
त्रसरेणुः स विज्ञेयः परमाण्वष्टभिर्मतः ॥
त्रसरेण्वष्टकं चापि रथरेणुरुदाहृतः ॥ ४५ ॥
रथरेण्वष्टकं चापि वालाग्रं समुदाहृतम् ॥
वालाग्रकोट्यश्चाष्टौ लिक्षा सा समुदाहृता ॥ ४६ ॥
लिक्षाभिरष्टभिर्यूका यूकास्त्वष्टौ यवो मतः ॥
अङ्गुलं स्याद्यवाश्चाष्टौ पादोऽरत्नेः षडङ्गुलैः ॥ ४७ ॥
चतुर्विंशाङ्गुलोऽरत्निर्वितस्तिर्द्वादशाङ्गुलः ॥
द्वौ वितस्ती भवेत्किष्कुर्द्वौ किष्कू धनुरुच्यते ॥ ४८ ॥
*धनुः क्रोशः सहस्रं तु गव्यूतिर्द्विगुणं स्मृतम् ॥
गव्यूतानि तु चत्वारि योजनं कर्म यौगिकम् ॥ ४९ ॥
एतया संख्यया नागान्मापयेद्भिषजां वर(:) ॥
हस्त्यागाराणि वारीश्च गजदन्तांश्च कल्पयेत् ॥ ५० ॥
गजानां विनयार्थं च या क्रिया समुदाहृता ॥
प्रमाणमेतद्विहितं सर्वैस्तु नयकोविदैः ॥ ५१ ॥
सचूलिकाफलान्यष्टौ सर्षपं स्यात्प्रमाणतः ॥
यवः स्यात्सर्षपास्त्वष्टौ चत्वारः काकिनी यवाः ॥ ५२ ॥
माषश्चतस्रः काकिन्यश्चतुर्माषस्तु शाणकः ॥
सुवर्णस्तु चतुःशाणः पलं स्यात्तु चतुर्गुणम् ॥ ५३ ॥

* 'धनुःसहस्रं क्रोशः स्यात्' इत्युचितम् ।

१ क. ख. प्रवेक्ष्यते । ग. प्रचक्षते । २ क. यदा भेद्यतमा । ३ ग. ०कं वंशी रेखारे° । ४ ग. रेखारेण्वष्टकं । ५ क. लिप्या । ख. ग. लिख्या । ६ क. लिप्याभि° । ख. ग. लिख्याभि० । ७ क. °यूथिका° । ८ क. °रत्ने प° । ९ क. ख. °स्तीर्भवे° । १० क. क्रोशसहस्रं । ख. क्रोशं सहस्रं । ११ ख. हस्त्यगा° । १२ क. वाराश्च । १३ क. विजयार्थे । १४ क. ख. च यत्क्रया समुदाहृतम् ।

चतुष्पलस्तु कुडवः प्रस्थः स्यात्तच्चतुर्गुणः ॥
आढकं ते तु चत्वारो द्रोणः स्याच्चतुराढकः ॥ ५४ ॥
मानिका स्याच्चतुर्द्रोणा खारी स्यात्तच्चतुर्गुणा ॥
विशेषेण प्रवक्ष्यामि रसानां शृणु पार्थिव ॥
पञ्चकोडविकं प्रस्थं रसानामिति निर्दिशेत् ॥ ५५ ॥
यदन्तरिक्षात्स्रवति पर्वताद्वा जलं पुनः ॥
अर्धत्रयोदशपलं तोयप्रस्थं विनिर्दिशेत् ॥ ५६ ॥
स्नेहं भक्तं च नागानां विधिज्ञस्तेन दापयेत् ॥
एतत्प्रमाणमाख्यातं कृत्स्नमानस्य भूमिप ॥ ५७ ॥
नवारत्न्युच्छ्रितो नागस्तथैवैकादशायतः ॥
*नाहतो द्वादश तथा सोऽत्यराल इति स्मृतः ॥ ५८ ॥
अष्टारत्निर्दशायामस्त्वेकादश च नाहतः ॥
अराल इति विज्ञेयो न स कर्मसु पूजितः ॥ ५९ ॥
अत्युच्छ्रितत्वाद्द्वावेतौ ग्रहणे परिवर्जितौ ॥
वारणौ नृपशार्दूल नयशिक्षाविशारदैः ॥ ६० ॥
सप्तोत्सेधो नवायामो दश यः परिणाहतः ॥
सप्तद्रोणान्स भोज्यः स्याद्यथाग्न्यपि च युक्तितः ॥ ६१ ॥
आयामेऽष्टौ षडुत्सेधो नवारत्निश्च नाहतः ॥
षड्द्रोणानि स भोज्यः स्यादग्नियुक्तो मतङ्गजः ॥ ६२ ॥
पञ्चोच्छ्रितोऽष्टौ नाहेन सप्त चाप्यायतस्तु यः ॥
पञ्च द्रोणानि भोज्यः स्याद्यथाग्न्यपि च युक्तितः ॥ ६३ ॥
चतुरुच्चः षडायामः सप्तारत्निश्च नाहतः ॥
चतुर्द्रोणं तु तस्यापि भोजने विहितं नृप ॥ ६४ ॥
एतां मात्रां समं नागं यथावद्भोजयेद्भिषक् ॥
त्र्यरत्निश्चैव यो नागो द्व्यरत्निश्चैव यो भवेत् ॥
त्रीणि द्वे युक्तितो नागं द्रोणान्याहारयेद्भिषक् ॥ ६५ ॥
यावन्तोऽरत्नयस्तूर्ध्वं कुञ्जरे स्युः प्रमाणतः ॥
द्रोणानि भोज्यास्तावन्ति द्रोणाख्यं विद्ध्यरत्नितः ॥ ६६ ॥

---

* नाहः परिणाहवद्विशालतावाची ।

---

१ क. द्रोणस्यार्धतुलाढकः । २ क. नहीया° । ३ ख. षडुत्सेधौ । ४ ग. चतुरूर्ध्वः । ५ क. नाशं ।

मधुरं[1] लवणं चाऽऽम्लं कषायं रसमेव च ॥
दद्याद्विपलिकारत्नि नागस्य प्रथमे विधौ ॥ ६७ ॥
कर्षश्च कटुकस्याथ तिक्तस्य च कर्षद्वयम् ॥
भागवृद्धया क्रमः कार्यो यावत्सम्यक्प्रतिष्ठिताः ॥ ६८ ॥
स्थिरसात्म्यस्य नागस्य सुविशुद्धमुखस्य च ॥
पलानि षष्टिर्मधुरः पिण्डः स्यात्परिमाणतः ॥ ६९ ॥
तिक्तस्य स ततोऽर्धं स्यात्ततोऽर्धं कटुकस्य च ॥
कषायस्य ततः षष्टिस्तथैव लवणाम्लयोः ॥ ७० ॥
यथाक्रमं पलानि स्युः सप्तारत्निप्रमाणतः ॥
मात्रया *हीनता द्रव्यं विकारं न निवर्तयेत् ॥ ७१ ॥
मात्रायाश्चातियोगेन व्यापत्संजायते भृशम् ॥
बलिने भेषजं क्षुण्णं प्रदेयं कवलीकृतम् ॥ ७२ ॥
तथैव रोगक्लिष्टेभ्यः क्वथितं भेषजं भवेत् ॥
आर्द्रस्य भेषजस्यैतत्प्रमाणं परिकीर्तितम् ॥ ७३ ॥
शुष्कस्य द्विगुणा वृद्धिर्यवसस्यापि भूमिप[4] ॥
हस्तिनीष्वेवमेव स्याद्यथा नागेषु कीर्तितम् ॥ ७४ ॥
मध्यमस्य प्रमाणेन चोत्तमा[5] हस्तिनी भवेत् ॥
अजस्रं हस्तिनो भक्ष्यं भक्षयन्ति यतस्ततः ॥ ७५ ॥
उभयोः कालयोस्तस्माद्भैषज्यं दापयेद्भिषक् ॥
पेष्याणां[6] विंशतिपलद्रव्याणां द्रोणसंख्यया ॥ ७६ ॥
क्राथानां[7] चतुर्गुणा वृद्धिर्द्रोणं त्वाढकसंमितम् ॥
प्रतिवापश्च पेष्याणां द्रव्याणामष्टभागवान् ॥ ७७ ॥
स्नेहप्रमाणं द्रोणं तु मितमर्धाढकं[8] भवेत् ॥
षडङ्कं प्रतिपाने च मेदकेष्वेतदेव च ॥ ७८ ॥
एतदेव प्रमाणं तु नागानामनुवासने ॥
एतदेवानुभक्ते स्याद्विगुणोदकतैलके ॥ ७९ ॥

---

* 'हीनया' इति तु वरम् ।

---

१ खपुस्तके शोधितपाठः—तिक्तस्य च तदर्धं। २ क. यद्वा। ३ क. बलिनो। ४ ख. भूमिपः । ५ क. ख. चौत्तमा । ६ क. पेश्यमाणां विंशतियत्पल° । ७ ग. ख. °नां तु पुनर्वृद्धि° । ८ क. °र्धाष्टकं ।

निरूहाणां तु संयोगे द्रोणो द्विकुडवो भवेत्[१] ॥
चूर्णार्धकुडवो द्रोणे संयोगार्थं विधीयते ॥ ८० ॥
†अनुवासनया मात्रा सा देया सर्वसेचने ॥
स्यादर्धेर्दशपला गैरिकस्यानुषेचने ॥ ८१ ॥
तुला पलशतं भागे विंशतिः सा प्रमाणतः ॥
सममेतेन यवसं भारः स्याद्द्रोणसंख्यया ॥ ८२ ॥
आर्द्रस्य यवसस्यैतत्प्रमाणं समुदाहृतम् ॥
शुष्काणां च लघूनां च वृक्षाणां च महीपते ॥ ८३ ॥
ततः स्याद्द्विगुणो भागो ये चान्ये लघवो द्रुमाः ॥
गर्भितानां पुनर्विद्धि त्रिभागोनं प्रदापयेत् ॥ ८४ ॥
फलितानां तृणानां तु अर्धभागं प्रदापयेत् ॥
गात्रसेके च तैलस्य द्रोणो द्विकुडवं भवेत् ॥ ८५ ॥
तथैवोत्तरपानेषु द्रोणे[२] स्यात्प्रस्थसंस्थितम् ॥
भवेत्कौडविकारैस्त्रिभिर्नागस्योत्तरबस्तिषु[३] ॥ ८६ ॥
श्रोतसोः कटयोश्चैव कुडवैः कुडवः पृथक्[४] ॥
अनुषेके च तैलस्य द्रोणे द्वे कुडवं भवेत् ॥ ८७ ॥
मेषीचूर्णार्धकुडवं घृतस्य कुडवं तथा ॥
शिरसो म्रक्षणे दद्यात्क्षतोपशमने हितम् ॥ ८८ ॥
उत्कृष्टक्षयभागेषु कुडवार्धं विधीयते ॥
दीपतैले च कुडवं प्रमाणे विद्धि पार्थिव ॥ ८९ ॥
अण्डकोशशिरोभ्यङ्गे[५] कुडवं च प्रमाणतः ॥
योगाद्द्विगुणमेवाऽऽहुः सर्पिः क्षीरं प्रमाणतः ॥ ९० ॥
द्रोणे दशपलं ज्ञेयं गुडस्य लवणस्य च ॥
भुक्तस्नेहप्रमाणेन मूत्रसौवीरके तथा ॥ ९१ ॥
मूत्रं सौवीरकादर्धं मात्रायोगं प्रदापयेत् ॥
दधिमेदकदुग्धानां मद्यस्य च नराधिप ॥ ९२ ॥
द्रोणं प्रमाणतो ज्ञेयं ह्याढकं तु तथैव च ॥
मृगाणां महिषादीनां जाङ्गलोदकपक्षिणाम् ॥ ९३ ॥

---

† 'अनुवासे तु या मात्रा' इति पाठो भवेत् ।

---

१ क. °र्णार्थकु°। २ ख. द्रोणे । ३ क. °त्रिनाग°। ४ ग. °वः स पृथक्पृ°। ५ क. °कोशे शि° । ६ क. कुडवस्य।

पलान्मांसस्य पञ्चाशज्ज्ञेयानि द्रोणसंख्यया ॥
स्नेहस्य कुडवश्चात्र वप्रश्चार्धाढकं भवेत् ॥ ९४ ॥
द्रोणत्रिकटुकस्यापि रससंस्कारतः पलम् ॥
दध्ना पललसंयुक्तं गुडपिण्डसमं घृतम् ॥ ९५ ॥
पूर्वाह्णे भोजयेन्नागं प्रतिपीतमतन्द्रितः ॥
भुक्त्वा तौ नु पिबेद्वाऽपि पीत्वा भुञ्जीत वा रसम् ॥ ९६ ॥
मांसस्नेहरसैर्युक्तं सायाह्ने भोजयेत्ततः ॥
निष्पावमात्रो नागानां कल्कस्तीक्ष्णाञ्जनस्य च ॥ ९७ ॥
अध्यर्धं मध्यमस्यापि मृदुनो द्विगुणं भवेत् ॥
कल्काञ्जनात्पादहीनं ज्ञेयं चूर्णाञ्जनं नृप ॥ ९८ ॥
भेषजानां दशपलं द्रोणं चूर्णस्य दापयेत् ॥
पलानि विंशतिं चैव चत्वारि च नराधिप ॥ ९९ ॥
रसप्रस्थस्तु विज्ञेयो भिषजाभावचारणे ॥
माषाणां द्वादश द्रोणीं तुलामारोप्य धारयेत् ॥ १०० ॥
सममेतेन यवसो भारः स्याद्द्रोणसंख्यया ॥
अतः परं तु गतयः प्रवक्ष्यन्ते यथाबलम् ॥ १०१ ॥
श्रेष्ठमध्यजघन्यानां गजानामनुपूर्वशः ॥
परं तु विद्यादध्वानं श्रेष्ठस्य दशयोजनम् ॥ १०२ ॥
मध्यमस्य परं विद्यादध्वानं सप्तयोजनम् ॥
परं जघन्यस्य पुनः पञ्चयोजनमुच्यते ॥ १०३ ॥
विनीतानां यथाशास्त्रं गतयश्चैव पार्थिव ॥
सप्त पञ्च च चत्वारि विनीता या हि धेनुकाः ॥ १०४ ॥
एतद्द्विधा प्रमाणं स्यान्मानोन्मानं च हस्तिनाम् ॥
क्रमयोगात्क्रियायुक्त्या *ऋतुयोगास्तथैवच ॥ १०५ ॥
सत्त्वप्रकृतिसात्म्यानां विशेषो वयसस्तथा ॥
परिवारेण कात्स्न्र्येन वक्ष्यते राजसत्तम ॥ १०६ ॥
यः प्रमाणं न जानाति मानोन्मानं च तत्त्वतः ॥
वयःप्रकृतिसात्म्यानां कर्मणां च यथातथम् ॥ १०७ ॥

---

* 'ऋतुयोगास्तथैव च' इति तु स्यात् ।

---

१ ख. द्रोणे त्रि° । २ क. तु । ३ क. निष्पावमात्रे । ४ क. ख. ग. प्रवक्षन्ते । ५ ख. ग. °नां नागाना° ।

विधाया पवनस्यापि स्नेहादीनां तथैव च ॥
अभ्यञ्जनाञ्जनादीनामज्ञः कर्मसु मुह्यति ॥ १०८ ॥
मानोन्मानप्रमाणानां विज्ञाता श्रेष्ठ उच्यते ॥
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ १०९ ॥ ३३८ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थानेऽन्न-समाचारो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

अथ तृतीयोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यमुपस्थितम् ॥
कृताञ्जलिरिदं वाक्यमब्रवीद्वदतां वरः ॥ १ ॥
भगवन्गुणमाहात्म्यं सर्वं तव तपोमयम् ॥
मातुश्च तव दिव्यत्वं पितुश्च विपुला गुणाः ॥ २ ॥
कथितं *भवतः सर्वमेतदेवमशेषतः ॥
[2]विस्मितेनाग्निवेशेन गौतमेन तथर्षिभिः ॥ [3]३ ॥
यथा त्वं पवनाहारः शीर्णपर्णाम्बुभोजनः ॥
वने [4]विचेरिवान्सार्धं प्रभिन्नैर्वरवारणैः ॥ ४ ॥
अतस्त्वां विनयाधानादिमं पृच्छामि हस्तिषु ॥
त्वं हि तेषां विजानासि सहवासेन चेष्टितम् ॥ ५ ॥
पृथिव्यां वननागानां किं त्वमेकश्चिकित्सकः ॥
अथान्येऽपि चिकित्सन्ति त्वत्समा वारणान्वने ॥ ६ ॥
ततः प्रोवाच भगवान्पालकाप्यो महामुनिः ॥
न स्पृशन्ति वने रोगाश्चिरस्थूणप्रभवा गजान् ॥ ७ ॥
†वनोत्तेऽत्र समानीताः प्राजनैरङ्कुशैरपि ॥
वधबन्धपरिक्लिष्टाश्चिन्तयन्तो वनानि च ॥ ८ ॥
रोगास्तान्संश्रयन्तीह सागरं सरितो यथा ॥
वनेषु चरतां तेषां न भवन्त्यामया नृप ॥ ९ ॥

---

* 'भवता' इति तूचितम् ।

† इतः श्लोकत्रयं कपुस्तके नास्ति ।

---

१ ख. °स्थितः ॥ कृ° । २ क. ख. विश्मिते° । ग. श्रीमते° । ३ ख. ग. तथार्षिभिः । ४ क. ख. ग. विचरवा° । ५ ग. °नात्ते ग्रामप्रा° । ६ ग. °ताः स्रज° ।

केवलं पञ्चदश च वने मरणहेतवः ॥
ये मया बहुशो दृष्टाश्चरता सह हस्तिभिः ॥ १० ॥
गजानां विविधैर्द्रव्यैर्यैश्चाप्यागन्तवो व्रणाः ॥
न भवन्ति वने सौख्यात्कामतश्छन्दतः सदा ॥ ११ ॥
तत्र शृणु महाराज हेतून्मृत्युषु हस्तिनाम् ॥
पर्वतात्पतनं पङ्को विषवल्ली जराऽनलः ॥ १२ ॥
कूपः प्रतिगजो ग्राहो विद्युल्लुब्धो भुजंगमः ॥
अलक्ष्मस्तथा व्याडो बाल्ये मातुर्विवर्जनम् ॥ १३ ॥
दशभिः पञ्चभिश्चैव हेतुभिर्वारणा वने ॥
म्रियन्ते न हि नागानां त्रिस्थूणाज्जायते त्रयम् ॥ १४ ॥
अङ्गराजस्ततो भूपः पालकाप्यं तु विस्मितः ॥
वचनं प्रत्युवाचेदं शिष्यभावादशङ्कितः ॥ १५ ॥
भगवन्किं वनस्थानां न सन्ति पवनादयः ॥
नागानां त्रिविधा दोषा न चैते सप्त धातवः ॥ १६ ॥
ततः प्रोवाच भगवानुत्तरं विदितोत्तरः ॥
पालकाप्यस्ततो दृष्ट्वा सहवासं च हस्तिनाम् ॥ १७ ॥
सात्म्यं नाम महाराज यथैवाऽऽत्मा तथा स्मृतम् ॥
तत्तेऽहं संप्रवक्ष्यामि सह तैरात्मनो गुणैः ॥ १८ ॥
तत्तु जन्मसमाचारैः प्रहृष्टेन्द्रियमानसैः ॥
न दूषयति वातादीन्दोषान्सततसेवया ॥ १९ ॥
ते चादुष्टा न रोगाय भवन्ति वनहस्तिनाम् ॥
आहाराचारयोगो हि सात्मीभूतो गुणावहः ॥ २० ॥
तत्राऽऽहारात्मकं सात्म्यं वृक्षभङ्गास्तृणानि च ॥
त्वग्मूलं पादपानां च बाल्ये मातुः पयो जलम् ॥ २१ ॥
एतदाहारजं सात्म्यं प्रोच्यते वनहस्तिनाम् ॥
जलपांशुप्रमाथीनां शयनस्थानकर्मणाम् ॥ २२ ॥
विहाराहारचेष्टानां स्ववशेनोपसेविनाम् ॥
एतदाचारजं सात्म्यं प्रोच्यते वनहस्तिनाम् ॥ २३ ॥
श्रुत्वा चेदं ततो वाक्यं पुनः प्रोवाच पार्थिवः ॥
यद्येते तृणमात्रेण भगवन्सुखिनो गजाः ॥ २४ ॥

---

१ क. °राश्चार° । २ ख. ग. °दाहार° ।

हन्त तेनैव पुष्यन्तां तद्धि तेषां सुखावहम् ॥
ततः प्रोवाच भगवान्पालकाप्यो महामुनिः ॥ २५ ॥
अनुनेतुं नरपतिं हेतुभिः स्पष्टलक्षणैः ॥
न संशयस्तृणप्राणास्तृणसात्म्यास्तृणप्रियाः ॥ २६ ॥
मृगाः सर्वे वनचरा विशेषेण तु हस्तिनः ॥
कारणेन च येनैषां केवलं न तृणं हितम् ॥ २७ ॥
शेषाश्च वनजा भक्ष्या ग्राम्याणां तन्निबोध मे ॥
निरवग्रहता राजन्दन्तिनां परमं सुखम् ॥ २८ ॥
ये च तस्या गुणास्तेषां तन्मे निगदतः शृणु ॥
यदीहते तत्कुरुते सर्वमन्यन्मतङ्गजः ॥ २९ ॥
विहाराहारचेष्टासु स्वतन्त्रो निरवग्रहः ॥
तस्याभिप्रायसंवृत्तेः प्रीतिः प्रीतेर्ध्रुवं बलम् ॥ ३० ॥
बलिनो दीप्यतेऽस्याग्निर्दीप्ताग्नेर्धातवः समाः ॥
धातुसात्म्याच्च रोगाणां सर्वेषामपकर्षणम् ॥ ३१ ॥
गजानामुदकं राजन्प्राणानाहुर्मनीषिणः ॥
विशेषेण तु नागानां प्रायेण जलमौषधम् ॥ ३२ ॥
अतो वनगजा राजन्नष्टरोगास्तृणोदकैः ॥
एतत्सर्वं विपर्यस्तमाहाराचारकर्मसु ॥ ३३ ॥
ग्राममानीतमात्राणां जायते वनहस्तिनाम् ॥
ततः स्वच्छन्दचेष्टानां निवृत्त्या तप्यते मनः ॥ ३४ ॥
वर्धते च मनोदुःखं न बलं नाग्निजं बलम् ॥
तेषामग्निप्रहीणानामसात्म्यस्य च भोजनात् ॥ ३५ ॥
जायन्ते धातुवैषम्याद्विकारा दोषसंभवाः ॥
तेषां तु वधबन्धाभ्यां लाभालाभाच्च भोजनात् ॥ ३६ ॥
अशय्यादुःखशय्याभ्यां धेनुकानां च वर्जनात् ॥
प्ररोधात्सततं स्थानात्कामचारनिवारणात् ॥ ३७ ॥
ग्रामवासेऽप्यनुद्विग्नास्तेऽप्यरोगा मतङ्गजाः ॥
अयं तु सुमहान्हेतुर्गजानां वनवासिनाम् ॥ ३८ ॥

---

१ क. केवलेन । २ क. °षा वनगजा । ३ क. ग्रामाणां । ४ क. तस्य । ५ क. यदाहते । ६ क. °प्यमानग्नि° । ७ क. ख. धातुः सा° । ८ क. गजवना । ९ क. °र्यस्तं विहा° । १० क. तृप्यते । ११ क. °त्कामाच्च रतिवा° ।

आरोग्ये चाप्रमोदे च तृणैरेव बलार्जने ॥
आदिसर्गे हि करिणः स्वयं प्रोक्ताः स्वयंभुवा ॥ ३९ ॥
देवानां वाहनार्थाय वारणाः प्रतिगच्छत ॥
वृक्षभङ्गतृणाहारा बलवन्तो निरामयाः ॥ ४० ॥
विचरिष्यथ रम्येषु वनेष्विति महात्मना ॥
स वरो ब्रह्मणा दत्तो देवप्रीत्या महीपते ॥
वर्तते च न रोगेषु वत्स्यत्यपि च नित्यशः ॥ ४१ ॥

तत्र श्लोकाः—

अथ तु वनरतानां पोतकापोतिकानां
रतिकरकलभानां धेनुकानां तथैव ॥
श्रमगुरुनयनानां कामिनीनां द्विधाऽपि
श्वपति वनचराणां नैव कार्श्यं गजानाम् ॥ ४२ ॥
बहुलकमलखण्डेष्वाढ्यतोयेषु नागा
विपुलतरुलताभिर्गूढतीरेषु चैव ॥
कुमुदकुवलयाद्यैर्भूषितामेषु(?)राज-
न्सुखतरमवगाह्य श्लिष्टमांसा भवन्ति ॥ ४३ ॥
न रसघृतगुणैर्वा भोजनानां गुणैर्वा
गुडलवणगुणैर्वा पुष्टिमिच्छन्त्यरण्ये ॥
अथ वनमृगतीक्ष्णैर्नादिता नागसिंहा
वनगुणफलपुष्पैः पुष्टदेहा[1] नरेन्द्र ॥ ४४ ॥ ३८२ ॥
अविपिननिजकुञ्जाकर्षिता रोगयुक्ताः
पुनरपि निरुजस्ते सिद्धसंघोपदेशात् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थाने (सात्म्या)
सात्म्याविनिश्चयो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## अथ चतुर्थोऽध्यायः ।

---

अङ्गाधिपतिरेकाग्रं महर्षिममितौजसम् ॥
हस्तिशालासमासीनं पालकाप्यं स्म पृच्छति ॥ १ ॥

---

१ ख. पुष्पदेहा ।

भगवन्यस्त्वया प्रोक्तं निखिलं सात्म्यनिश्चयम् ॥
जायन्ते दन्तिनां रोगा ह्यसात्म्यादिति निश्चितम् ॥ २ ॥
तेषां तत्त्वेन विज्ञातुं परिमाणं महामुने ॥
अहमिच्छामि धर्मज्ञ व्याधीनामखिलेन हि ॥ ३ ॥
अध्यायानां तथा तेषां परिमाणं च वेदितुम् ॥
ये चाप्यागन्तवो रोगास्तथा ये चापि मानसाः ॥ ४ ॥
तेषां तत्त्वेन विज्ञानं भगवन्वक्तुमर्हसि ॥
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥ ५ ॥
संग्रहं शृणु मे राजन्नस्य शास्त्रस्य तत्त्वतः ॥
रोगाणां चैवसर्वेषामध्याया ये च संख्यया ॥ ६ ॥
स्थानानि च यथा [1]विद्याद्विभक्तान(न्य)नुपूर्वशः ॥
वारणानां चिकित्सार्थं शृणु मे सर्वमेव तत् ॥ ७ ॥
वनानुचरितोऽध्यायः प्रथमस्तत्र संख्यया ॥
द्वितीयोऽन्नसमाचारस्तृतीयः सात्म्यनिश्चयः ॥ ८ ॥
चतुर्थः संग्रहाध्यायः शास्त्रस्यास्य विनिश्चयः ॥
गजरक्षणविन्यासः शिष्योपनयनं ततः ॥ ९ ॥
तथा [2]रोगविभक्तिः स्याज्ज्वरोत्पत्तिरतः परम् ॥
*पालकास्तु ततो ज्ञेया दश तान्नामतः शृणु ॥ १० ॥
शुद्धो बालश्च विज्ञेयस्तृतीयश्चापि पक्कलः ॥
मृदुग्रहश्चतुर्थश्च पञ्चमः कुक्कुटः स्मृतः ॥ ११ ॥
षष्ठं तु तं विजानीयादेकाङ्गग्रहसंज्ञितम् ॥
प्रसुप्तः सप्तमो ज्ञेयः कूटश्चाप्यष्टमो भवेत् ॥ १२ ॥
नवमः पुण्डरीकाख्यो महापालक एव च ॥
दशमः परिसंख्यातः पाकलेष्वेकसंख्यया ॥ १३ ॥
अतः स्कन्दान्विजानीयात्रीनेव तु विनिश्चयात् ॥
अन्तर्बहिश्चाप्यायामो व्याविद्धस्कन्द एव च ॥ १४ ॥

---

* 'पाकला' इति पाठ एव साधीयान् । अत एवाग्रे पाकलाध्यायेऽपि 'पचतीति पाकलः' इति व्युत्पत्तिर्दर्शिता ।

---

१ ख. विन्ध्याद्वि° । २ क. रोगविभक्तः । ३ क. °हविज्ञताम् ॥ प्र° । ४ क. °यः कुट° ।

पाण्डुरोगास्त्रयो ज्ञेयाः पुराणकृशसंज्ञिताः ॥
वातिकाः पैत्तिकाश्चैव श्लेष्मिकाश्चैव संख्यया ॥ १५ ॥
पञ्चानाहास्ततो ज्ञेयास्त एव भेदसंख्यया ॥
अत्याशितोऽथ प्रथमस्त्वेक एव विनिश्चितः ॥ १६ ॥
त्रिविधं तु विजानीयाद्वातोन्मथितसंज्ञितम् ॥
वातोपरुद्ध एवात्र ज्ञेयः संसक्त एव च ॥ १७ ॥
असंसक्तश्च विज्ञेयस्त्रयस्त्रिविधलक्षणाः ॥
धान्यप्रदुष्टं जानीयाद्विविधं परिसंख्यया ॥
प्रदुष्टं चाप्रदुष्टं च जानीयात्तं नराधिप ॥ १८ ॥
ततः स्यान्मृत्तिकाजग्धः सांनिपातिक एव च ॥
इत्यानाहाः समुद्दिष्टाः शृणु मूर्छास्ततः परम् ॥ १९ ॥
अत्यर्थभोजनान्मूर्छा विदग्धाच्चैव भोजनात् ॥
धान्यमूर्छा ततो ज्ञेया स्नेहमूर्छा ततः परम् ॥ २० ॥
वातात्पित्तात्कफाच्चैव संनिपातात्तथैव च ॥
उदकान्मार्गमूर्छा च मद्यमूर्छा च कीर्तिता ॥ २१ ॥
यवसाद्वाऽपि विज्ञेया मूर्छा सा द्वादशी भवेत् ॥
इत्येता द्वादश प्रोक्ता मूर्छाः पार्थिवसत्तम ॥ २२ ॥
शिरोरोगास्त्वतस्त्वन्ये सप्तैव परिसंख्यया ॥
वातिकाः पैत्तिकाश्चैव श्लेष्मिकाः सांनिपातिकाः ॥ २३ ॥
शोणिताज्जायते चान्यः कृमिजस्त्वभिघातजः ॥
पादरोगास्ततो ज्ञेयास्त्रिंशत्तु परिसंख्यया ॥ २४ ॥
उत्कारकी ततः पूर्वं कारकी तदनन्तरम् ॥
नाडीजातस्तृतीयः स्यात्ततः संराट्ट एव च ॥ २५ ॥
नखभेदं ततो विद्यात्पूयकेशं ततः परम् ॥
विप्लावकस्ततस्त्वन्यः केशग्रन्थिः सविप्लुतः ॥ २६ ॥
समन्तकेशश्च भवेत्कचकेशश्च कीर्त्यते ॥
कदम्बपुष्पो विज्ञेयः सफुल्लोऽथ कुठारकः ॥ २७ ॥

---

१ ख. वातिकः पैत्तिकश्चैव श्लेष्मिकश्चैव संख्यया । २ क. °श्चानां हस्त° । ३ क. इत्याहाराः । ४ ख. विन्द्यात्पू° ।

फुल्लपादस्ततो ज्ञेयस्तथा भिन्ननखोऽपरः ॥
स्फुटितैर्हनुंदन्तै(?)श्च त्वन्यैर्वाऽपि नखैर्भवेत् ॥ २८ ॥
†शरनद्धोऽथ विज्ञेयो +दग्धुकेशस्तथैव च ॥
‡प्रगुल्मकेशो गम्भीरस्तथा चर्मतलोऽपरः ॥ २९ ॥
क्षतो निर्मूलितश्चैव तथा केशः सलोहितः ॥
स्थाण्वाहतः क्षीणतलस्$तथा चाभ्यन्तरीकृतः ॥ ३० ॥
निष्पिष्टो मांसकेशश्च तथा स्थानरतोऽपरः ॥
इत्येष पादरोगाणां संग्रहः समुदाहृतः ॥ ३१ ॥
व्यापदां तु पुनः संख्यां कीर्त्यमानां निबोध मे ॥
व्यापदं विद्धि तैलेन सर्पिषा तदनन्तरम् ॥ ३२ ॥
तृतीयां वसया विद्याच्चतुर्थीं पयसा तथा ॥
¶धान्याच्च पञ्चमीं विद्यान्मद्यात्षष्ठीमथापि वा ॥ ३३ ॥
उदकाद्*दुपधान्याश्च व्यापदोऽष्टाविति स्मृताः ॥
शोफानां संग्रहश्चात्र सप्तानां सं†चक्ष्यते ॥ ३४ ॥
मन्याशोफश्च विज्ञेयः सगदाशोफ एव च ॥
द्रोणीकशोफश्चाप्यन्यो व्यवच्छिन्नस्तथैव च ॥ ३५ ॥
शाल्मलीस्कन्धशोफश्च कदलीस्कन्ध एव च ॥
शुद्धशोफश्च विज्ञेयः सप्तमः परिसंख्यया ॥ ३६ ॥
$संग्रहस्त्वक्षिरोगाणामत ऊर्ध्वं प्रचक्षते ॥
प्राचारकी तु प्रथमस्त्वौदकी तदनन्तरम् ॥ ३७ ॥
अण्डाक्षस्त्वथ काचाक्षो नायंप्रेक्षी तथैव च ॥
प्रतिनुन्नस्ततो ज्ञेयो निष्पेषहत एव च ॥ ३८ ॥
विद्युन्निष्पातदग्धश्च विद्युद्धारिहतस्तथा ॥
ऊष्मापरिगतस्त्वन्य*श्चर्मक्लिष्टस्ततः परम् ॥ ३९ ॥

---

* 'अनुद्धतैः' इति त्वग्रे। † 'शरनद्ध' इति त्वग्रे लिख्यते। + 'दर्द्धुकेश' इति त्वग्रे ‡ 'प्रगुल्मिकेश' इति त्वग्रे। $ 'तथा चान्यः क्षरीकृतः' इत्येव पाठ उचित उत्तरग्रन्थानुरोधात्। ¶ अग्रे व्यापदध्याये प्राक्मद्यव्यापन्निरूपिता, ततो धान्यव्यापत्। * 'दुपधाना' इति तु वरम् 'उपधान्यापदो वर्णनात्। † 'संप्रचक्षते' इति तु युक्तम्। $ अष्टादशस्य शोफचिकित्सितस्य, एकोनविंशस्याक्षिरोगचिकित्सितस्य, मध्ये स्वेदशान्तिरक्षाध्यायावपि स्तः। * अग्रेऽक्षिरोगाध्याये तु 'वर्त्मक्लिष्ट' इत्युपलभ्यते।

---

१ क. प्रगुल्फकेशो। २ ख. विन्द्याच°। ३ क. स्मृतः। ४ ख. प्रचक्ष्यते।

*श्रोतोन्धो बुद्बुदी चैवाक्षिपाकस्तथैवच ॥
+पाटलाख्यश्च विज्ञेयो †दण्डाख्यश्च ततः परम् ॥ ४० ॥
मुञ्जोऽथ मुञ्जजालश्च लोहितांक्षस्तथैव च ॥
पिटकाक्षश्च विज्ञेय इत्येते विंशतिः स्मृताः ॥ ४१ ॥
इत्येतत्प्रथमं स्थानं महारोगाभिसंज्ञितम् ॥
एतच्छतं तु रोगाणामष्टौ चैव नराधिप ॥ ४२ ॥
कीर्तितं ते मया सम्यग्यथोवदनुपूर्वशः ॥
अध्यायाश्चात्र संख्याता अष्टादश महीपते ॥ ४३ ॥

---

अथातः क्षुद्ररोगाणां स्थानं सम्यक्प्रवर्तते ॥
वमथुः प्रथमस्तत्र स चापि द्विविधः स्मृतः ॥ ४४ ॥
आगन्तुर्दोषजश्चैव दोषजः स चतुर्विधः ॥
वातजः पित्तजश्चापि कफजः संनिपातजः ॥ ४५ ॥
ततः परमतीसारो द्विविधः परिकीर्तितः ॥
पक्वाशयसमुत्थस्तु तथैवाऽऽमाशयोद्भवः ॥ ४६ ॥
स च दोषविभागेन चतुर्धा परिकीर्तितः ॥
पुनश्च सप्तधा भिन्नो दुष्टधान्यादिभेदतः ॥ ४७ ॥
एवमेकादशविधस्त्वतीसारो विभागतः ॥
मदनाख्यस्तृणैः शोषी कर्मातिनीत एव च ॥ ४८ ॥
विषाशितस्ततो दूषी सर्पार्तः स्फोटिकी ततः ॥
दिग्धविद्धोपवादाख्यः पूर्वविद्धोऽथ एव च ॥ ४९ ॥
विसर्पो हृदयस्फाली *वलक्षाणी तथैव च ॥
षड्विधा मेहनक्षाणी तस्माद्धस्तग्रहोऽपरः ॥ ५० ॥
हस्तेनोन्मथितं विद्याद्विभागः षड्विधस्ततः ॥
प्रथमः सप्तरात्रेण प्राणांस्त्यजति वारणः ॥ ५१ ॥

---

* 'स्रोतोन्धः' इति तूचितम् । + 'पटलाक्ष' इति त्वग्रानुरोधेन । † 'दण्डाक्ष' इति त्वग्रे । * 'वालक्षाणी' इत्यग्रे ।

---

१ क. °ताख्यस्त° । २ क. °था वेदानु° । ३ ख. कर्माभिनी° । ४ क. दूषा । ५ सर्पति । ६ क. °टिका त° । ७ क. पूर्वो विद्धोऽथ । ८ क. सः । ९ क. तस्माद्धस्तग्रहापरः ।

अष्टरात्रेण चाप्यन्यो नवरात्रेण चापरः ॥
एकश्च दशरात्रेण प्राणानादाय गच्छति ॥ ५२ ॥
एकश्चैकादशं प्राप्य द्वादशीमपि चापरः ॥
इत्येष षड्विधः प्रोक्तो हस्तोन्मथितसंज्ञितः ॥ ५३ ॥
उत्कर्णको वातगतिर्मन्यास्तम्भो मदक्षयः ॥
कृशस्तथा बलक्षीणः [1]श्लेष्माभि†ष्विन्न एव च ॥ ५४ ॥
सात्म्यानुलोमिकश्चैव तलकाशी ततःपरम् ॥
गलग्रहश्च विज्ञेयो व्याधिः सिद्धार्थकस्तथा ॥ ५५ ॥
भूतग्रहस्त्वथो वातकुण्डली भारपीडितः ॥
उन्मादापस्मृती लुप्त उदा[2]वर्तः [3]प्रगुल्मिकः ॥ ५६ ॥
पत्रकृमिस्ततो ज्ञेय उरसिक्षत एव च ॥
शोणिताण्डी समाख्यातो यवगण्डशिरास्त्वतः ॥ ५७ ॥
चर्मकीलो जठरको बालानां चैव रक्षणम् ॥
अवसन्नस्ततो ज्ञेयो रात्रिक्षिप्तस्तथापरः ॥ ५८ ॥
मूत्रसङ्गास्ततो ज्ञेयाः षडेव परिसंख्यया ॥
भिन्नबस्तिश्च विज्ञेयो गाढमूत्री तथैव च ॥ ५९ ॥
परिमूत्री तथैवान्यः पिष्टमेही च वारणः ॥
ततः शोणितमेही च तथाऽन्यो जातशर्करः ॥ ६० ॥
इत्येते षट्समुद्दिष्टा मूत्रसङ्गा यथाक्रमम् ॥
अथातः सूतिकारोगा सप्तामी रदनामयाः ॥ ६१ ॥
देवागन्तुजरायोगसमस्तव्यस्तदोषजाः ॥
चेतोभ्रंशस्तथा प्रोक्तः शूलद्वितयमेव च ॥ ६२ ॥
चत्वारः शारदाश्चैव जरगण्डस्ततः परम् ॥
शीतस्कन्नश्च विज्ञेयो मक्षिकादष्ट एव च ॥ ६३ ॥
एकादश च्छवीदोषा मृत्तिकाध्याय एव च ॥
कृमिकोष्ठश्च विज्ञेयः क्षयश्चापि [4]सुदुर्लभः ॥ ६४ ॥
क्षयो दशविधश्चैव दौर्बल्यं च चतुर्विधम् ॥
धातुदोषक्षयात्क्षीणश्चत्वारोऽन्येऽपि दुर्बलाः ॥ ६५ ॥

† श्लेष्माभिपन्न इति त्वग्रे ।

१ क. श्लेष्माभिप्यन्न । ख. श्लेष्माभिष्पिन्न । २ ख. °वर्तप्र° । ३ क. प्रगुल्फिकः । ४ ग. सुदुर्बलः ।

प्रकृत्या दुर्बलश्चैव व्याधिना दुर्बलोऽपरः ॥
अत्यौषधोपयोगाच्च चतुर्थे वयसि स्थितः ॥ ६६ ॥
संग्रहः संग्रहाश्चान्ये प्रभिन्नानां प्रेचक्षते ॥
वातात्पित्तात्कफाद्रक्तात्संनिपातात्तथैव च ॥ ६७ ॥
कृमयः कर्णवालेत्था कर्णरोगास्ततः परम् ॥
अभक्तच्छन्दो ग्रासोपरुद्धो द्रोणीकपञ्चकम् ॥ ६८ ॥
अतिपातस्ततश्चान्यत्तथा स्याद्गुल्मपञ्चकम् ॥
वातपित्तकफैर्गुल्माः संभवन्ति त्रयस्त्रिभिः ॥ ६९ ॥
शोणिताज्जायते चान्यः संनिपातात्तथैव च ॥
हृद्रोगाश्च ततो ज्ञेया वातपित्तकफात्मकाः ॥ ७० ॥
अतश्च गात्ररोगाः स्युश्चत्वारः संप्रकीर्तिताः ॥
वातात्पित्तात्कफाच्चैव संनिपातात्तथाऽपरः ॥ ७१ ॥
आगन्तुगात्ररोगाश्च षडेवैते प्रकीर्तिताः ॥
इत्येतत्क्षुद्ररोगाणां स्थानं सम्यक्प्रकीर्तितम् ॥ ७२ ॥
इह सप्ततिरध्यायाः सचतुःषष्टिरिष्यते ॥
सर्वेषामेव रोगाणां रोगज्ञानं प्रचक्षते ॥ ७३ ॥
साध्यासाध्यत्वयाप्यत्वादुत्पत्तिश्च सलक्षणा ॥
तथा ये मानसा रोगास्तथैवाऽऽगन्तवश्च ये ॥ ७४ ॥
तेषां यः संविभागस्तु यथावत्संप्रवक्ष्यते ॥
प्रथमे च द्वितीये च स्थाने सम्यङ्नराधिप ॥ ७५ ॥



शल्याख्यस्य तृतीयस्य स्थानस्यातः प्रेचक्षते ॥
संग्रहः क्रमयोगेन शृणु तन्मे नराधिप ॥ ७६ ॥
प्रथमं द्विव्रणीयोऽत्र सद्यःक्षतमतः परम् ॥
षडत्ययोपचारोऽत्र व्रणोपक्रमलक्षणः ॥ ७७ ॥
द्वादशोपक्रमो गर्भामनाध्यायस्ततः परम् ॥
गर्भावक्रान्तिरस्मात्स्याच्छरीरनिश्चयस्तथा ॥ ७८ ॥
शस्त्राग्निपत्रमर्माणधी शल्योद्धरणविद्रधी ॥
व्रणनाडी शिराव्यूहव्याधिर्नाडी च दन्तजाः ॥ ७९ ॥

१ ख. चतुर्थो । २ ख. प्रचक्ष्यते । ३ ख. °रोगस्ततः परः । ४ ख. °प्रचक्ष्य° । ५ ख. संप्रचक्ष्यते ।

अधिदन्तशिराच्छेदमर्मैरण्डास्तथाऽर्बुदाः ॥
मर्मविद्धो दोषगतिर्दग्धं लूताः सकीटकाः ॥ ८० ॥
व्यालाः प्रदेशाः शस्त्राणि क्षारो भग्नचिकित्सितम् ॥
मूढगर्भापनयनं दन्तोद्धरणमेव च ॥ ८१ ॥
त्रयस्त्रिंशदिहाध्यायाः शल्यस्थाने प्रकीर्तिताः ॥
तृतीयं स्थानमेतच्च येगांश्चात्र निबोध मे ॥ ८२ ॥
भग्नं घृष्टं क्षतं दग्धं विद्युत्क्षारतुषारतः ॥
संतापोऽर्काग्नितश्चेति षड्विधं षडुपद्रवाः ॥ ८३ ॥
वातपित्तकफेभ्योऽसृग्भेदः संतापतस्तथा ॥
दोषैः समस्तैर्व्यस्तैश्च चतुरो विद्रधीन्विदुः ॥ ८४ ॥
मूढगर्भश्च शल्यं च तथा यश्चाधिदन्तकः ॥
व्यालैरण्डार्बुदालूता कीटचूर्णे विचूर्णितः ॥ ८५ ॥
अष्टाविंशतिरित्येते रोगाः शल्यसमाश्रयाः ॥
तृतीयं परिसंख्यातमिति स्थानं नराधिप ॥ ८६ ॥

---

चतुर्थमुत्तरं स्थानमत ऊर्ध्वं प्रचक्षते ॥
एतत्त्रयाणां स्थानानां परिवाराभिसंज्ञितम् ॥ ८७ ॥
स्नेहपानं प्रथमतस्त्वन्नपानविधिस्तथा ॥
अथ स्नेहविकल्पश्च बस्तिसिद्धिरतः परम् ॥ ८८ ॥
स्थानाध्यायस्ततो ज्ञेयो नस्यदानमतः परम् ॥
अञ्जनानि च जानीयाद्यवसाध्याय एव च ॥ ८९ ॥
रसवीर्यविपाकश्च शोभाश्चापि ततः परम् ॥
आयुर्ज्ञानं वयोज्ञानं नक्षत्रारिष्टमेव च ॥ ९० ॥
अरिष्टं गुग्गुलोः कल्पपिण्डगुग्गुलुरेव च ॥
लाक्षाप्रदानं लाक्षा च सुरायाः संप्रयोजितम् ॥ ९१ ॥
संपदोऽशितपीतस्य सौवीरकविधिस्ततः ॥
लवणानां तथाऽध्यायः क्रमेण परिकीर्तितः ॥ ९२ ॥
प्रतिपानं मदावस्थाः कवलात्कवले रतः ॥
व्यापत्तिः क्षीरदानस्य दूताः श्रीगजसंभवाः ॥ ९३ ॥

---

१ क. °रद्धस्त° । २ क. ख. शास्त्राणि । ३ क. दृष्टं । ४ क. °तापाद्कीग्नि° । ५ क. व्यालेरण्डाच्छदा° । ६ क. °सिद्धततः ।

किमर्थं हेतुप्रकृतिः प्रतिकर्मसमाह्वयः ॥
दुष्टदोषपरीक्षा च करीषाध्याय एव च ॥ ९४ ॥
सुमनोदुर्मनोज्ञानं मदकृमिनिवर्तनम् ॥
कल्पनाश्चाथ दन्तानामिक्षुदानमतः परम् ॥ ९५ ॥
लशुनारोग्यलवणं पांशुदानानि चाप्यथ ॥
कार्याकार्यविधिस्तस्मादृतुचर्या प्रकीर्तिता ॥ ९६ ॥
चूर्णारिष्टं ततो ग्राहो जलहस्ती जलौकसः ॥
विचित्रविधिसंभागो लवणाध्याय एव च ॥ ९७ ॥
गन्धज्ञानं ततो राजन्कटबस्तिस्तथैव च ॥
वनाध्यायस्ततो राजन्नस्मिञ्शास्त्रे प्रकीर्तितः ॥ ९८ ॥
उपसर्गविधिश्चान्ते यज्ञसूत्रमिति स्मृतम् ॥
ऊनपञ्चाशदध्याया रोगाः पञ्चदश त्वमी ॥ ९९ ॥
बस्तिव्यापत्तयोऽप्यष्टौ कवलव्यापदेव च ॥
लशुनव्यापदेका च तस्य मूर्ध्नि विरेचने ॥ १०० ॥
दोषद्वयं स्यात्कटुभुग्ग्रहावथ जलद्विपः ॥
गोत्रातङ्का च निर्दिष्टा इत्येतस्मिन्नराधिप ॥ १०१ ॥
परिवार इति ख्यातं स्थानमुत्तरसंज्ञितम् ॥
स्याच्छास्त्रेऽध्यायपिण्डोऽस्मिन्नेकसप्ततिकं शतम् ॥ १०२ ॥
शतत्रयं च रोगाणां प्रोक्तं पञ्चदशोत्तरम् ॥
दश द्वे च सहस्राणि श्लोकानां च नराधिप ॥ १०३ ॥
इत्येष संग्रहः प्रोक्तः शास्त्रस्यास्य समासतः ॥
विस्तरेण यथाशास्त्रं तथा सम्यक्प्रचक्षते ॥ १०४ ॥
स्कन्दा चिकित्सते मूलं सिद्धिः कर्माश्रया स्मृता ॥
प्रमाणं च प्रयोगश्च कालश्च विहितस्त्विह ॥ १०५ ॥
तस्मान्मूलं चिकित्सायाः पठितार इहोच्यते ॥
प्रोच्यते शास्त्रतत्त्वज्ञैरेतैस्साङ्गमसंशयम् ॥ १०६ ॥
अधीयते चिकित्सां ये केवलामपरिग्रहम् ॥
न ते विकाराञ्जानन्ति ये भवन्त्यबहुश्रुताः ॥ १०७ ॥

१ क. °दोषापरीक्ष्या च। २ क. °हस्तिज°। ३ क. °स्मिन्नस्त्रे। ४ क. मूर्धवि°। ५ ख. गात्रातङ्की। ६ क निर्दिष्ट। ७ ग. मतम्। ८ ख. °चक्ष्यते। ९ क. कर्मसमा। १० क. विहितंस्त्वया। ११ ख.परिचार। १२ क. °तत्संगम°।

सांग्राहिकं वा कवलं तथा वातानुलोमिकम् ॥
यद्वा पचति भुक्तं च स्यादधोभागिकं च यत् ॥ १०८ ॥
अनुवासं निरूहं वा तथैवोत्तरबस्तिकम् ॥
स्नैहिकं वा विरेकं वा तथा शीर्षविरेचनम् ॥ १०९ ॥
प्रमाणमुपचारं वा ये न जानन्त्यबुद्धयः ॥
किं करिष्यन्ति ते मूढाः समरेष्विव भीरवः ॥ ११० ॥
अनिवृत्ते त्विदं देयमिदं देयं च निर्वृते ॥
किंतु प्रतिनये देयं किंचिद्भिन्नयेष्विह ॥ १११ ॥
इमे वातसमुत्थाना इमे वा रक्तसंभवाः ॥
संसृष्टा व्याधयो ये च ये च स्युः सांनिपातिकाः ॥ ११२ ॥
तानविज्ञाय ये कुर्युः कर्म तेषां न सिध्यति ॥
उत्तरं त्वनधीयाना न तान्कर्मसु योजयेत् ॥ ११३ ॥
कर्मज्ञं निखिलज्ञं च सिद्धिषु प्रतियोजयेत् ॥
यस्तु रोगमविज्ञाय भिषक्कर्म प्रयोजयेत् ॥ ११४ ॥
तस्य मिथ्याप्रयोगेण व्याधिर्वर्धेत दन्तिनाम् ॥
शास्त्रज्ञो वाऽप्यकर्मज्ञः कर्मज्ञो वाऽप्यशास्त्रवित् ॥ ११५ ॥
उभौ तौ गर्हितौ वैद्यावर्धवेदधरौ स्मृतौ ॥
भैषज्यं योगविहितममृतत्वाय कल्पते ॥ ११६ ॥
तदेवायोगविहितं तीक्ष्णं संपद्यते विषम् ॥
परिवारे तु कुशलश्चिकित्सितविशारदः ॥ ११७ ॥
कर्माभिज्ञः कुलीनश्च स भिषक्श्रेष्ठ उच्यते ॥
योगभैषज्यकुशलः शस्त्रकर्मविशारदः ॥ ११८ ॥
दृष्टोपचारः स्मृतिमान्सोऽप्युत्तम इति स्मृतः ॥
विशेषान्परतन्त्रेभ्यो गृह्णीयादनसूयकः ॥ ११९ ॥
संशयं परिपृच्छेच्च यथावितथशास्त्रिषु ॥
ऊहापोहार्थयुक्तश्च जानीते सर्वमेव यः ॥
स तु श्रेष्ठश्च पूज्यश्च देवानामिव वासवः ॥ १२० ॥

तत्र श्लोकौ भवतः—

१ क. किं वा विभिन्नये° । २ क. तान्विज्ञाय । ३ क. च । ४ क. त्वद-धीयानां । ५ क. °स्य सिध्या प्र° । ६ क. कर्मतो । ७ ग. गर्वितौ । ८ ख. ग. कर्मज्ञश्च । ९ ग. °षादन्यत° ।

यद्वक्षितं तद्विधिनैव कुर्व-
ञ्शास्त्रानुगं मार्गमवेक्षमाणः ॥
सिद्धिं भिषग्गच्छति कर्म चास्य
न विक्रियां गच्छति वै कदाचित् ॥ १२१ ॥
तस्माद्भिषग्यो गुरुवाक्यविन्नः
समाप्ततन्त्रश्च विचक्षणश्च ॥
स हस्तिनामर्हति कर्म कर्तुं
पूज्यश्च नित्यं स नृपेण धीमान् ॥ १२२ ॥ ५०४ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे महारोगस्थाने शास्त्रसंग्रहो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## अथ पञ्चमोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
गजाः सर्वबलश्रेष्ठाः पार्थिवानां जयप्रदाः ॥ १ ॥
तेषाममितसत्त्वानां कर्तव्यमनुपालनम् ॥
बलसारविधिज्ञेन नृपेण विजिगीषुणा ॥ २ ॥
यथा तन्मे द्विजश्रेष्ठ वक्तुमर्हसि तत्त्वतः ॥ ३ ॥
ततः प्रोवाच भगवान्पालकाप्यो महामुनिः ॥
प्रत्यक्षदेवता नागा देवजात्या यतस्त्वतः ॥ ४ ॥
स्वामिनश्च भवन्त्येते यस्मात्प्रोक्तास्तु भूमिदाः ॥
राजारूढो गजो भाति गजस्थः शोभते नृपः ॥ ५ ॥
उभयोरविशेषत्वाद्राज्ञामात्मसमा गजाः ॥
क्षुधितास्तृषिताश्चापि व्यापत्सु महतीषु च ॥ ६ ॥
न त्यजन्ति नृपं यस्माद्बान्धवास्तेन वारणाः ॥
विनयग्रहणे शिष्या भृत्याश्छन्दानुवर्तनात् ॥ ७ ॥
विक्रीताश्च प्रदत्ताश्च यान्ति तूष्णीं तु दासवत् ॥
विनये ऋषिभिस्तुल्याः क्रुद्धा नागास्तु राक्षसाः ॥ ८ ॥
निस्त्रिंशादधिकत्वाच्च शस्त्रं नागा महीपते ॥
स्वयं रक्षन्ति युध्यन्ति वहन्ति रणमूर्धनि ॥ ९ ॥

---

१ क. ख. °मवेक्ष्यमा° । २ ग. यतस्ततः । ३ क. °नये ग्र° ।

प्राणांस्त्यजन्ति कृच्छ्रेण श्वभ्राक्रान्तेन वारणाः ॥
प्राकारगोपुराट्टालकपाटोद्घाटनादिषु ॥ १० ॥
भञ्जने मर्दने चैव नागा वज्रोपमाः स्मृताः ॥
स्वसैन्यं परिरक्षन्ति परसैन्यं क्षपन्ति च ॥ ११ ॥
घंटाभिर्रचिता नागाः प्राकारा इव दुर्जयाः ॥
सहसैवाऽऽगतं सैन्यं घंटास्था वारणाः पुनः ॥ १२ ॥
दर्पिताः प्रतिरुन्धन्ति सेतुबन्ध इवार्णवे ॥
सहसोत्पतिते कार्ये नागारूढो महीपतिः ॥ १३ ॥
एकाङ्गविजयं कुर्यादेकाङ्गविजयः कुतः ॥
कल्पितः शिक्षितः शूरः शूरारूढः प्रतापवान् ॥ १४ ॥
जयत्येकोऽपि मातङ्गः षट्सहस्राणि वाजिनाम् ॥
यथा स्वकर्मवच्छीघ्रं प्राप्य मन्दरपर्वतम् ॥ १५ ॥
भग्नवेगा निवर्तन्ते तथाऽश्वाः प्राप्य कुञ्जरम् ॥
यां गतिं ब्रह्महा गच्छेत्पितृहा मातृहा तथा ॥ १६ ॥
तथा कन्यानृतश्चैव स्त्रीहन्ता गुरुतल्पगः ॥
क्षत्रियो यां गतिं गच्छेद्युद्धे दृष्टपराङ्मुखः ॥ १७ ॥
तां गतिं प्रतिपद्येत यो नागं समरे त्यजेत् ॥
एकशक्तिप्रहारेण म्रियतेऽश्वो नरोऽपि वा ॥ १८ ॥
सहेत शक्तिघातानां शतं युद्धेषु वारणः ॥
शरजालाञ्चितमुखः कोऽन्यः शक्तः परं गजात् ॥ १९ ॥
हन्तुं प्राकारमुन्मथ्य रथाश्वनरकुञ्जरान् ॥
निशायां नष्टचन्द्रायां समन्तादग्निदीपने ॥ २० ॥
मर्दने परसैन्यानां कोऽन्यो नागात्परः सहेत् ॥ २१ ॥
मोक्षात्परा गतिर्नास्ति नास्ति वेदात्परा श्रुतिः ॥
नास्ति कृष्णात्परं भूतं नास्ति यानं गजात्परम् ॥ २२ ॥
पृथिव्या भूषणं मेरुः शर्वर्या भूषणं शशी ॥
नराणां भूषणं विद्या सैन्यानां भूषणं गजाः ॥ २३ ॥

---

* 'रञ्चिता' इति तु युक्तम् ।

---

१ क. नागव° । २ क. घण्टाभि° । ३ क. घण्टास्थाः । ग. घटस्थाः । ४ ख. ग. दर्पतः । ५ ख. ग. कल्पिनः । ६ ख. स्वकर्मविच्छीघ्रं । ७ क. ख. °ण मृय° । ८ क. पृथिव्यां ।

तत्सौख्यं यत्र संतोषस्तद्राष्ट्रं यत्र पार्थिवः ॥
तन्मित्रं यत्र विश्वासस्तत्सैन्यं यत्र कुञ्जराः ॥ २४ ॥
शीलात्तु शोभते रूपं चारित्राच्छोभते कुलम् ॥
पुष्पितं शोभतेऽरण्यं शोभते सगजं बलम् ॥ २५ ॥
विभूतेर्भूषणं ज्ञातिः कुलानां भूषणं धनम् ॥
मदिरा भूषणं स्त्रीणां सैन्यानां भूषणं गजाः ॥ २६ ॥

तत्र श्लोकः—

नासौ व्ययो यत्र गुणे न लोभो नासौ बुधो येन तपो न तप्तम् ॥
नासौ पुमान्यत्र हिता न भार्या नासौ नृपो यस्य हिता न नागाः॥२७॥
यद्वद्वनमसिंहं तु यद्वद्राष्ट्रमपार्थिवम् ॥
यद्वच्छौर्यमशस्त्रं तु तद्वत्सैन्यमकुञ्जरम् ॥ २८ ॥
यतः सत्यं ततो धर्मो यतो धर्मस्ततो धनम् ॥
यतो रूपं ततः शीलं यतो नागास्ततो जयः ॥ २९ ॥
शरतोमरचक्रैस्तु नागस्कन्धाहता नराः ॥
क्षणात्स्वर्गं तु गच्छन्ति तस्मात्स्वर्गोपमा गजाः ॥ ३० ॥
प्रासादाशनशय्यासु निषण्णाः शिबिकासु च ॥
वहन्ति प्रमदा राजन्नुद्यानेषु वनेषु च ॥ ३१ ॥
क्रीडासु च नरेंद्राणां जले पुष्पितपङ्कजे ॥
स्नापयन्ति गजा हस्तैर्लग्नपुष्करपुष्करैः ॥ ३२ ॥
श्रियोऽवतारयन्त्येते मृन्मया इव निश्चलाः ॥
नास्ति हस्तिसमो बन्धुर्नास्ति हस्तिसमः सखा ॥ ३३ ॥
नास्ति हस्तिसमो योधो नास्ति हस्तिसमो रिपुः ॥
नास्ति हस्तिसमः कायो नास्ति हस्तिसमो बली ॥ ३४ ॥
वारणेषु तु सामर्थ्यं विशेषेणेह दृश्यते ॥
त्रयाणामपि सैन्यानां विद्यन्ते नैव ते गुणाः ॥ ३५ ॥
दृश्यन्ते ये सदा राजन्हीनेष्वपि हि दन्तिषु ॥
चन्द्रहीना यथा रात्रिः सस्यहीना वसुंधरा ॥ ३६ ॥
गजहीना तथा सेना विस्तीर्णाऽपि न शोभते ॥
एते चान्येऽपि बहवो वारणानां गुणाः स्मृताः ॥ ३७ ॥

---

१ क. सबलं गजम् । २ ग. लोभो । ३ क. गजे ।

तस्मात्प्रयत्नतो रक्षेत्स्वपुत्रानिव नित्यशः ॥
तेषाममितसत्त्वानां कर्तव्यमनुपालनम् ॥ ३८ ॥
प्रोच्यन्ते[1] यादृशा युक्ता गजरक्षाधिकारिणः ॥
धार्मिकाः शुचयः सर्वे श्रुतवन्तो विमत्सराः ॥ ३९ ॥
सत्त्वाभिजनसंपन्नाः सर्वव्यसनवर्जिताः ॥ ४० ॥
गजभर्तृहिते युक्ताः समयज्ञाः प्रियंवदाः ॥
उत्साहबलसंपन्नाः कृतज्ञा[2] लोभवर्जिताः ॥ ४१ ॥
मौलांस्त्वहार्यदक्षाश्च*[3] ज्ञातिपक्षहिते रताः ॥
नृपादेशस्य कर्तारस्तत्प्रियान्वेषिणः सदा ॥ ४२ ॥
मङ्गल्यनामधेयाश्च प्रगल्भा वाग्विशारदाः ॥
गजाधिकारिणः कार्या गजकर्मविशारदाः ॥ ४३ ॥
हस्त्यध्यक्षवशे युक्ता भिषजां च विशेषतः ॥
भोजनस्थानशयननिर्वाणगमनेषु च ॥ ४४ ॥
द्रष्टव्याः[4] सह वैद्येन शश्वत्तैरपि वारणाः ॥
यस्य यत्करणीयं तु तन्निवेद्य महीपते ॥ ४५ ॥
गजाध्यक्षेण तु पुनः कार्यं च भिषजा सह ॥
भिषग्विनीतो मेधावी ग्रन्थार्थप्रतिपत्तिमान् ॥ ४६ ॥
नृपतुल्यः प्रियाभाषी महाभोगपरिग्रहः ॥
वाग्मी प्रगल्भः क्षान्तात्मा धृतिमान्धार्मिकः शुचिः ॥ ४७ ॥
मौलोऽनुरक्तो मधुरः कुलीनश्च प्रशस्यते ॥
शब्दार्थन्यायकुशलः शुचिर्मौलो निरामयः ॥ ४८ ॥
गणितव्यवहारज्ञो गजामात्यः प्रशस्यते ॥
गजाध्यक्षोऽतिमतिमाञ्शरण्यः[5] सुजितेन्द्रियः ॥ ४९ ॥
विनीतः सत्यसंधश्च वयस्थः प्रतिपत्तिमान् ॥
गजाजीवी गजानां तु हितकार्ये रतः सदा ॥ ५० ॥
स्वामिभक्तः शुचिर्दक्षो धार्मिकश्च प्रशस्यते ॥
रहस्यवित्प्रियः शूरो धृतिमान्सुदृढेन्द्रियः ॥ ५१ ॥

---

* 'गरीयसः' इति कपुस्तकटिप्पणी ।

---

१ क. प्रोच्यते । २ ग. °ज्ञा लाभ° । ३ ख. ग. °लास्त्वाहा° । ४ क. ख. द्रष्टव्याः । ५ ख. °क्षोऽथ म° ।

सुशरीरस्त्वरोगश्च यन्ताऽङ्कुशविभागवित् ॥
निमित्तोत्पातकुशलश्चिकित्सितविशारदः ॥ ५२ ॥
इष्टश्च कुशलोत्साही गजभर्तृहिते रतः ॥
ईदृग्विधगुणोपेतो महामात्रः प्रशस्यते ॥ ५३ ॥
ब्राह्मणः शीलसंपन्नो यज्ञकर्मसु निष्ठितः ॥
स एवोत्थाभिषेक्षी (?) नागारोढा तु प्रशस्यते ॥ ५४ ॥
एवंविधगुणोपेतैः परस्परहितैषिभिः ॥ ५५ ॥
गजाष्टकुलिकैर्वैद्यैर्महामात्रैर्यशोर्थिभिः ॥
अवेक्ष्यमाणा वर्धन्ते बलवन्तो निरामयाः ॥ ५६ ॥
प्रहृष्टमनसो मत्ता कामिनः सुखिनो गजाः ॥
शुभव्यञ्जनसंपन्ना भवन्ति नृपकामदाः ॥ ५७ ॥
विधायाऽऽसवपानं तु स्थानशय्यास्वधिष्ठिताः ॥
यस्य नागास्तु कुशलैर्भिन्त्यन्ते गजचिन्तकैः ॥ ५८ ॥
नित्यं क्रुद्धैर्व्यसनिभिर्लुब्धैर्बुद्धिबहिष्कृतैः ॥
गजकर्मस्वकुशलैर्ज्ञातिपक्षविरोधिभिः ॥ ५९ ॥
प्रमादकृद्भिः पिशुनैरसंबद्धप्रलापिभिः ॥
तस्य राज्ञः क्षयं यान्ति गजाः सपरिवारकाः ॥ ६० ॥
असम्यक्पाल्यमानास्तु क्षुद्व्याधिवधपीडिताः ॥ ६१ ॥

तत्र श्लोकाः—

जगद्धितार्थं जगतः प्रणेत्रा सृष्टा गजेन्द्राः प्रथितप्रतापाः ॥
तेषां हितान्वेषणतत्परस्तु यः पार्थिवस्तस्य जयोऽग्रहस्ते ॥ ६२ ॥
†सुवाहिता न प्रतिवीर्यसत्त्वं रथाश्वपत्तिप्रतिबृंहितास्तु ॥
तथाऽपि नागैः किल तान्निहत्य देवा जयं प्रापितवन्त एव ॥ ६३ ॥
गजेन्द्रवीर्यैः क्षितिपः क्षितीशान्संहृष्टपुष्टोदीर्णान्हयपत्तिसंघैः ॥
हन्यात्प्रसह्यैव विकुर्वतस्तान्सिंहो यथा क्षुद्रमृगान्वनस्थान् ॥ ६४ ॥

---

* गजरक्षाधिकारी, गजाधिकारी, वैद्यः, गजामात्यः, गजाध्यक्षः, गजाजीवी, महामात्रः, आरोढा, एवमष्ट कुलानि—इति कपुस्तकटिप्पणी । † 'सुराहिताः' इति कदाचित्स्यात् । ‡ सत्त्वा इति सत्त्वरथा इति वा स्यात् ।

---

१ ग. °वाऽऽत्साषे° । २ क. °जाष्टाकु° । ३ क. प्रवेक्ष्यमाणा । ४ ख. सुषिनो । ५ क. प्रसाद° । ६ क. असम्यकालमाना । ७ क. टिप्पणीगतः 'दैत्या हि पूर्वं स्तुतिपूर्वभेद्या रथाश्वपत्तिप्रतिबृंहिताश्च' इति । ८ ख. क्षितिपं । ९ क. °न्सिंहा य° ।

हयाश्च भूमावपि वर्तमानाः कृतं गजं प्राप्य विनाशमीयुः ॥
रथाश्च वाताभिहता इवाब्दाः क्षणेन नाशं समरे प्रयान्ति ॥ ६५ ॥
स्वाधीनकेनापवता* गजेन बलोपपन्नेन दृढेन्द्रियेण ॥
निःसंशयं पत्तिगणोऽपि राजन्क्षणेन मृत्योर्वशतां स यायात् ॥ ६६ ॥
तस्माद्गजेन्द्राः परिरक्षणीयाः स जीवितं चातिशयेन राज्ञाम् ॥
नान्योऽस्ति हेतुर्जयतः पृथिव्यां मुक्त्वोरुवीर्यातिशयप्रभावान् ॥६७॥५७०॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थाने गजरक्षणविन्यासो नाम पञ्चमोध्यायः ॥ ५ ॥

---

## अथ षष्ठोऽध्यायः ।

---

अत ऊर्ध्वं प्रवक्ष्यामि शिष्योपनयने विधिम् ॥
यैर्गुणैर्यादृशो यश्च शिष्यः स्यादिति पार्थिव(ः) ॥ १ ॥
तत्र शिष्यस्तु कर्तव्यः कामक्रोधविवर्जितः ॥
शास्त्रार्थकर्मतत्त्वज्ञः कुलशीलगुणान्वितः ॥ २ ॥
मेधावी स्मृतिमान्दक्षः शूरोदारः प्रियंवदः ॥
ऊहवान्कर्मविच्छक्तः शुश्रूषुरशठः शुचिः ॥ ३ ॥
दृष्ट्वैवमादिभिर्युक्तं शिष्यं शिष्यगुणान्वितम् ॥
मुहूर्ते तिथिनक्षत्रप्रशस्ते गुरुरादितः ॥ ४ ॥
शुक्लवासाः सशिष्यस्तु सोपवासो जितेन्द्रियः ॥
प्रागुदीचीं दिशं गत्वा नातिदूरोदके नृप ॥ ५ ॥
शुचौ देशे लिखेद्बीजैश्चतुर्विंशत्परान्तिकम् ॥
मण्डलं पूर्णकुम्भैस्तु दर्भैः पुष्पैः सुशोभितम् ॥ ६ ॥
तस्य मध्ये समिद्भिस्तु ज्वालयेच्च हुताशनम् ॥
दिग्देवान्दिग्गजांश्चैव विविधैस्तन्दुलैर्लिखेत् ॥ ७ ॥
ब्रह्माणं शंकरं विष्णुं चन्द्रसूर्यौ ग्रहाँश्चलान्† ॥
ऋषींश्च स्कन्दसहितांश्चाप्सरोरगगुह्यकान् ॥ ८ ॥

---

*नाप्यवता इति सूचितम् । †ग्रहचलान् इति स्यात् ।

---

१ क. °भिहिता इवाष्टाः क्ष° । २ क. नाशे । ३ क. बलोपपत्तेन । ४ क. दृडीन्द्रि° । ५ ख. °वात् ॥ ६७ ॥ ६ क. समीपस्तु । ७ क. ग्रहं चलात् । ८ क. ख. °रोरुग° ।

लिखितेषु यथान्यायं धूपमाल्यानुलेपनैः ॥
सर्वान्नैः सर्वसत्त्वैश्च बलिं विधिवदाचरेत् ॥ ९ ॥
कृत्वा सर्वमशेषेण जुहुयाद्धव्यवाहनम् ॥
मन्त्रेणानेन नियतं सर्पिषा नियतो गुरुः ॥ १० ॥

ॐ भवाय स्वाहा । भूर्भुवः स्वाहा । अग्नये स्वाहा । सोमाय स्वाहा । रुद्राय स्वाहा । सेनान्यै स्वाहा । बलाय स्वाहा । बलाङ्गाय स्वाहा । बलाधिपतये स्वाहा । शक्तिधराय स्वाहा । शिखिकण्ठप्रियाय स्वाहा । कुक्कुटघण्टाप्रियाय स्वाहा । मयूरध्वजाय स्वाहा । ब्रह्मणे स्वाहा । नारायणाय स्वाहा । रुद्राय स्वाहा । विश्वाय स्वाहा । यमाय स्वाहा । वरुणाय स्वाहा । धनदाय स्वाहा । सूर्येभ्यः स्वाहा । वसुभ्यः स्वाहा । शैलेभ्यः स्वाहा । *नन्दिभ्यः स्वाहा । महाकालाय स्वाहा । देवेभ्यः स्वाहा । नदीभ्यः स्वाहा । अनिलाय स्वाहा । धर्माय स्वाहा । समुद्राय स्वाहा । दिग्भ्यः स्वाहा । विदिग्भ्यः स्वाहा । विश्वाय स्वाहा । इति—

हुत्वाऽग्निं विधिवच्छिष्यमाज्येनाभ्यञ्जयेद्गुरुः ॥
कृतप्रणामो देवेभ्यस्त्विदं श्राव्यस्ततो नृप ॥ ११ ॥
न शठेनानृशंसेन न लुब्धेन न मायिना ॥
न निष्ठुरेणानृजुना तथैवानलसेन च ॥ १२ ॥
अपापेनार्यशीलेन कुटुम्बस्यानुकम्पिना ॥
भवितव्यं त्वया वत्स नित्यमाचार्यसेविना ॥ १३ ॥
तदेवमनुवृत्तस्य वस्त्राध्ययनभोजनैः ॥
यदि शाठ्यं गुरुः कुर्यात्स शिष्यमलभाग्भवेत् ॥ १४ ॥
गुरोरपि प्रवृत्तस्य विद्याह्लादनादिभिः ॥
यदि शिष्योऽन्यथा कुर्यात्स गुरोः पापमृच्छति ॥ १५ ॥
एवमेव यथाकालं विद्यामादाय कृत्स्नशः ॥
आचार्येणाभ्यनुज्ञातस्ततस्त्वं गन्तुमर्हसि ॥ १६ ॥
ततो राजानमासाद्य राज्ञा चाभ्यर्थितेन च ॥
पुत्रेष्विव सदा स्नेहः कर्तव्यो हस्तिषु त्वया ॥ १७ ॥

---

* कपुस्तके इत आरभ्य दिग्भ्यः स्वाहा इत्यन्तः पाठो नास्ति ।

---

१ ख. भूर्भुवाय । २ क. चलङ्गाय । ३ क. शिखकण्ठिप्रियाय । ४ ख. °हा । य° । ६ ख. °वा नाल° । ७ क. अपानेना° ।

*अमुष्याणा(?)मवचनां देहीत्यवदतामपि ॥
कर्तव्यस्ते सदा स्नेहः कुञ्जराणां विशेषतः ॥ १८ ॥
यः सम्यक्पश्यतो राज्ञः स्वामिनां चारुवृत्तिभिः ॥
उपेक्षति गजान्वैद्यः स त्वज्ञः पापमश्नुते ॥ १९ ॥
एतदेव विपर्यस्ता यदि राजा न पश्यति ॥
सम्यक्प्रवृत्तमाचार्यं दानमानपरिग्रहैः ॥ २० ॥
पिण्डस्तु नोपजीव्यस्ते वारणानां कदाचन ॥
अवध्यायन्ति तं नागा यः पिण्डमुपजीव्यति ॥ २१ ॥
यथैव नागाः क्षीयन्ते नागवत्क्षीयते हि सः ॥
गजशापाभिभूतस्य नश्यन्ते संचया गृहे ॥ २२ ॥
तस्मात्सदाऽनुकम्पैव कर्तव्या वारणेष्विह ॥
क्षुत्क्षान्तदीनभीतानां मत्तानां युधि रक्षणम् ॥ २३ ॥
विधेयं ब्रह्मणा सृष्टा नागानां हितमिच्छता ॥
मङ्गल्या च पवित्रा च धर्मार्थयशसां निधिः ॥ २४ ॥
गान्धर्वः सामवेदस्य उपवेदो यथा स्मृतः ॥
स्मृतिर्यथा चोपवेद ऋग्वेदस्येह पठ्यते ॥ २५ ॥
नाट्यं यथोपवेदश्च यजुर्वेदस्य पार्थिव ॥
तथोपवेदोऽथर्वाणश्चिकित्सितमिह स्मृतम् ॥ २६ ॥
ब्राह्मणस्त्वथ †वर्णादींस्त्रीनध्यापयितुमर्हसि+ ॥
द्वौ क्षत्रियस्तथा *वैश्यमेकमध्यापयेत्सदा ॥ २७ ॥
गुणवत्स्वपि शूद्रेषु मा बुधं कर्तुमर्हसि ॥
एषा ह्यनुपमा विद्या वेदवेदाङ्गसंमिता ॥ २८ ॥
विद्यानामुपसत्त्वाय कथयेन्न ह्यसाधवे ॥
†अश्रद्दधानो ये च स्युर्नास्तिका येऽभ्यसूयकाः ॥ २९ ॥
तेषां विद्यां न कथयेद्ये च विद्यावमानिनः ॥
आचार्यस्त्वेव कथयेद्विज्ञानकुशलेष्वपि ॥ ३० ॥
नापुत्राय प्रदातव्या नाशिष्यायाहिताय वा ॥
अश्वान्गां रजतं चैव सुवर्णं वाऽपि दक्षिणाम् ॥ ३१ ॥

* 'अमुख्यानाम्' इति भवेत् । † 'वर्णांस्त्रीन्' इति तूचितम् । + 'मर्हति' इति समञ्जसम् । * वैश्य एक इति तूचितम् । † अश्रद्दधाना इति तु वरम् ।

१ ख. °मवाचानां । २ ख. क्षुत्क्लान्तदान° । ३ क. विद्या ।

न भयच्छेत्सु विचार्यो न वशी कर्मपेशितम् ॥
एवमुक्त्वा तु तं शिष्यमाचार्यस्तर्पयेद्द्विजान् ॥ २२ ॥
पुष्पानुलेपनैर्धूपैर्भक्ष्यपानान्नभोजनैः ॥
भक्तैर्द्विजवरैस्तत्र देवतैश्च सुपूजितैः ॥ २३ ॥
यच्छेषमुपभोक्तव्यमिति शिष्यक्रमः स्मृतः ॥ २४ ॥ ६०४ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थाने शिष्योपनयनो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## अथ सप्तमोऽध्यायः ।

---

अङ्गश्चम्पाधिपः श्रीमान्बुद्ध्या परमया युतः ॥
कृतजाप्यमृषिश्रेष्ठं पालकाप्यं स्म पृच्छति ॥ १ ॥
यत्पूर्वं संग्रहाध्याये त्वया प्रोक्तं महामुने ॥
विभक्तिरिति रोगाणां तन्मे व्याचक्ष्व पृच्छतः ॥ २ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
आध्यात्मिकागन्तुभेदा द्विविधा व्याधयः स्मृताः ॥ ३ ॥
आध्यात्मिका दोषजाश्च मानसाश्च प्रकीर्तिताः ॥
आगन्तवोऽपि विज्ञेया आधिभूताधिदैविकाः ॥ ४ ॥
यस्माद्विभजते तांस्तु वातपित्तकफा*त्मिकात् ॥
रक्तजान्सांनिपातांश्च द्वित्रिजान्मानसांस्तथा ॥ ५ ॥
आगन्तुश्चापि जानीयाद्वाधिभौतिकदैविकान् ॥
साध्या†न्साध्यान्यस्यांश्च कृच्छ्रसाध्यांश्च भेदतः ॥ ६ ॥
तस्माद्रोगविभक्तेश्च नाम्नां ख्यातो नराधिप ॥
तत्राऽऽदौ वातिकान्वक्ष्ये षट्सप्ततिमितान्गदान् ॥ ७ ॥
बालः पाण्ड्वामयी च स्यादा*नाहः सर्व एव च ॥
मूर्छाश्च पश्चात्यशनाविदग्धाहारधान्यजाः ॥ ८ ॥
वातिकी मार्गमूर्छा च शिरोरोगाश्च ये स्मृताः ॥
पादरोगा दशोत्कार(ः)कार(रो)नाडीभवोऽपरः ॥ ९ ॥

---

* 'कफात्मकान्' इति भवेत् । † आगन्तुंश्चापि जानीयादाधिभौतिकदैविकान् । इति भवेत् । † 'साध्यान्याप्यांश्च' इति भवेत् । * 'दानाहाः' इत्येव वरम् ।

---

१ ख. °याद्वोधि° । २ गं. षड्विकारानिमान्गदान् । ३ क. °त्यसना° ।

*सराष्ट्रो मखभेदश्च कदम्बाक्षः सुफुल्लकः ॥
फुल्लो भिन्ननखश्चानुंद्धतः स्थाणुहतानुयत् ॥ १० ॥
धान्योपधाभ्यां व्यापत्ती शोफश्चाक्षिरुगोदकी ॥
अण्डाक्षो नायंप्रेक्षी छर्द्यतीसारसंज्ञितौ ॥ ११ ॥
तृणशोषी विसर्पश्च मेढ्रक्षाणी च निश्चिता ॥
हस्तोन्माथाश्च षड्दावर्त उत्कर्णकोऽपि च ॥ १२ ॥
ग्रहणीदोषनामा वै आमरोगस्तथैव च ॥
तथा वातगतिर्यश्च मन्यास्तम्भो मॅदक्षयः ॥ १३ ॥
कृशो बलक्षयश्चोरःक्षतो जठरकस्तथा ॥
गाढमूत्री च विज्ञेयः सूतिकादशनामयौ ॥ १४ ॥
प्राकृतः शारदो यश्च सप्तधातुक्षयास्तथा ॥
प्रकृत्या व्याधिभिश्चापि दुर्बलश्चौषधैरपि ॥ १५ ॥
तथा प्रभिन्नो द्रोणीको गुल्मो हृद्गात्रगामयौ ॥
व्रणस्योपद्रवो यश्च विद्रधिश्चाधिदन्तिकः ॥ १६ ॥
कटस्रोतो निरोधश्च गात्रातङ्कीति वातिकाः ॥
वक्ष्यन्ते पैत्तिकाः सप्तविंशतिस्तत्र पाण्डुरुक् ॥ १७ ॥
मूर्छा पित्ताम्बुमद्यैर्या शिरोरोगः कुठारकः ॥
मॅद्यव्यापत्तथा शोफो वमथुः सातिसारकः ॥ १८ ॥
विसर्पोऽतः परं मेढ्रक्षाणी सिद्धार्थकश्च यः ॥
परिमूत्री रुदनरुग्रोगो यः शारदस्तथा ॥ १९ ॥
पित्तप्रभिन्नो द्रोणीको गुल्मो हृद्गात्रजे रुजौ ॥
उपद्रवो व्रणस्यापि तथा विद्रधिरेव च ॥ २० ॥
नश्य(स्य) धूमप्रधमनैर्दोषो लशुनजा विपत् ॥
कवलव्यापदित्येते पैत्तिकाः संप्रकीर्तिताः ॥ २१ ॥
श्लेष्मिकाश्चैव वक्ष्यन्ते द्वात्रिंशत्संख्यया गदाः ॥
शुद्धस्तथा पाण्डुरोगो मूर्छा च कफसंभवा ॥ २२ ॥

---

* संराष्ट्रो' इत्यग्रे । † 'स्थाणुहतात्तु यत्' इति स्यात् ।

---

१ क. ख. °नुधत्तः स्था° । २ क. धान्योस्यधाभ्यां । ख. धान्योप्यधाभ्यां । ३ ख. °दावर्ता उ° । ४ क. ख. महक्षयः । ५ क. °यः स्तनिका° । ६ ग. क्षारदोषश्च । ७ ग. °थाऽर्द्रभि° । ८ ग. पाण्डुकः । ९ क. मेघव्या° । ख. मेघव्यापात्त° । १० क. श्लेष्मका° ।

शिरोरोगौ तथा द्वौ च कफकृत्कृमिसंभवौ ॥
दद्रुर्मांसात्मकौ केशौ घृतेन वसया तथा ॥ २३ ॥
व्यापत्क्षीरेण चाप्यन्या शोफश्चाप्यथ बुद्बुदी ॥
पटलाक्षस्तथा मुञ्जश्छर्दतीसारसंज्ञितौ ॥ २४ ॥
विसर्पो मेहनक्षाणी *श्लेष्माभिषन्नरुक्तत: ॥
पिष्टमेही दन्तरोगो यथोक्त: स्थूलशारद: ॥ २५ ॥
उद्गम: कृमिकोष्ठश्च प्रभिन्न: कर्णवालज: ॥
तथा द्रोणीकशोफश्च गुल्मो हृद्गात्रजामयौ ॥ २६ ॥
व्रणोपद्रवजश्चान्यो विद्रधिश्च कफात्मका: ॥
अत: परं प्रवक्ष्यामि रक्तात्पञ्चदशामयान् ॥ २७ ॥
शिरोरोग: प्रगुल्मी च गम्भीरो लोहिताह्विज: ॥
क्षा(क्ष)रीकृतोऽथ निष्पिष्ट: शोफो रक्ताक्ष एव च ॥ २८ ॥
मेढ्रक्षाणी क्षीरमेही तथा लोहितशारद: ॥
तत: प्रभिन्नो द्रोणीको गुल्मश्चाग्नेरुपद्रव: ॥ २९ ॥
इत्येते रक्तजा: प्रोक्ता वक्ष्यन्ते सांनिपातिका: ॥
विंशतिर्द्व्यधिकास्तेषामयमादौ मृदुग्रह: ॥ ३० ॥
ततो मूर्छा शिरोरोग: क्रचकेशश्च पार्थिव ॥
शोफ: प्रावारकी मुञ्जजालो वमथुरेव च ॥ ३१ ॥
अतिसारो मदनको विसर्पो मेढ्रवैकृति: ॥
तलकाश्यश्मरीकश्च दन्तरोग: किलासिता ॥ ३२ ॥
तथा प्रभिन्नो द्रोणीको गुल्मो गात्रामयस्तथा ॥
उपद्रवो विद्रधिश्चेत्युक्ता वै सांनिपातिका: ॥ ३३ ॥
वातपित्तात्मका रोगा वक्ष्यन्ते ते चतुर्दश ॥
पक्लो बहिरायाम: स्नेहमूर्छा च पार्थिव ॥ ३४ ॥
पूयकेश(:)समन्तश्च तथा चर्मतिलश्च य: ॥
तैलव्यापत्तथा विद्युन्माली क्लिष्टोऽथ वर्त्मन: ॥ ३५ ॥

---

* 'श्लेष्मावसन्न' इति भवेत् ।

---

१ क. मेहनक्षीणी । २ क. °भिष्यनरु° । ग. °भिछन्न° । ३ क. मेढ्रक्षीणी । ४ क. ख. तल: क्रा° । ५ क. किलासिना । ख. किलासिती । ग. किलासिनी । ६ क. उपद्रवा । ७ क. °यास: स्ने° । ८ क. ख. यूपकेश° । ९ ख. °मेतल° । १० क. विद्युन्मालाक्लिष्टो ।

पिटिकाक्षश्च शूलश्च मृत्तिकाऽथ कफक्षयः ॥
अतिपात इति प्रोक्ता वातपित्तसमुद्भवाः ॥ ३६ ॥
वातश्लेष्मसमुत्थाना वक्ष्यन्ते षोडशाऽऽमयाः ॥
प्रसुप्तोऽथ महाख्योऽन्यः* स्कन्दो मूर्छा तृणोद्भवा ॥ ३७ ॥
कारक्युदकजा व्यापत्योक्तो पश्च गलग्रहः ॥
जरया दन्तरोगश्च शूलोऽन्यो दन्तशूल्यपि ॥ ३८ ॥
तृणपुष्पी क्षीणपित्तो दुर्बलो वयसा च यः ॥
अभक्तच्छन्दोग्रासोपरोधो मेदउपद्रवः ॥ ३९ ॥
इति वातकफोत्पन्नाः[1] सप्तेमे वातरक्तजाः ॥
केशग्रन्थिश्च शोफश्च वातकुण्डलिकाऽपि च ॥ ४० ॥
रक्ताण्डी यवगण्डी च चर्मकीलो विसर्पिणी ॥
इत्युक्ता वातरक्तोत्था श्लेष्मशोणितजास्त्रयः ॥ ४१ ॥
दद्रुकी च महादद्रुरन्या मण्डलिकीति च ॥
त्रयोऽन्ये पित्तकफजाः स्रोतोन्धः[3] पिटकी[4] तथा ॥ ४२ ॥
वातक्षय इति प्रोक्ता वातासृक्पित्तजावुभौ ॥
पाकलः पुण्डरीकाख्यस्तथा विप्लावकोऽपरः[5] ॥ ४३ ॥
त्रयः कफासृक्पवनाद्वक्ष्यन्तेऽथाक्षिपाकरुक्[6] ॥
यवगण्डः कर्णरोग इत्येतेऽपि प्रकीर्तिताः ॥ ४४ ॥
पित्तासृक्कफसंभूता स्यादेकैव विचर्चिका ॥
भूतानिलात्मकाः षट् च तत्राऽऽदौ कुक्कुटः स्मृतः ॥ ४५ ॥
तथैकाङ्गग्रहः कूटश्चान्तरामय† एव च ॥
हस्तग्रहोऽथ[7] रात्र्यन्ध इत्यमी कीर्तिताः क्रमात् ॥ ४६ ॥
मानसास्तत्र पञ्चैको भयातीसारसंज्ञितः ॥
पूर्वाबद्धोऽथ हृच्छाली तथा भ्रंशश्च चेतसः ॥ ४७ ॥
संतापदग्ध इत्येवमुक्ताश्चाऽऽध्यात्मिका गदाः ॥
सर्वे पिण्डेन विख्याता द्वात्रिंशच्च शतद्वयम् ॥ ४८ ॥

---

* अन्यो व्याविद्धनामा ।

† श्चान्तरायाम' इति भवेत् ॥

---

१ ख. मूलश्च । २ क. ख. °त्पन्नः स°। ३ क. ख. श्रोतोधः । ४ क. ख. पटकी । ५ क. विप्लवोऽपरः । ६ क. कफासृक्पवनाद्वक्ष्यन्तेऽथाक्षिपालकरुक् । ७ क. हस्त्यग्र° ।

आगन्तवोऽथ वक्ष्यन्ते ऽ्यशीतिः सर्व एव ते ॥
त्रयः स्युर्दैविकास्तत्र विद्युत्पाताहतोऽक्षिरुक् ॥ ४९ ॥
दन्तरोगोऽथ दग्धोऽन्यो विद्युतेवेति दैविकाः ॥
दश ग्रहात्मकास्तत्र प्रग्रहोऽप्यववाहुकः ॥ ५० ॥
मृगाक्षो रैतिकश्चैव प्रतारः स्वपितिस्तथा ॥
प्रमर्दनोऽथ काम्याक्षो वाणिजस्थविराविति ॥ ५१ ॥
नैवैते पृथगुन्मानो दशमः परिकीर्तितः ॥
अवशिष्टांस्ततश्चोर्ध्वं रोगान्वक्ष्यामि सँप्रतिम् ॥ ५२ ॥
अभिघातः शिरोरोगः शरनद्धः क्षतश्च यः ॥
निर्मूलेन स्थाणुहतस्तथा क्षीणतलोऽपि च ॥ ५३ ॥
शोफः काचः प्रतितुन्नो निष्पेषहत एव च ॥
संतापोऽतीतमुक्तो य ऊष्मापरिगतश्च यः ॥
दण्डाक्षश्छर्द्यतीसारो विषार्तो दग्धदूषितः ॥ ५४ ॥
सर्पार्तिः स्फोटकाश्चापवादबद्धो विसर्परुक् ॥
बलमेहनयोः क्षाण्यौ योऽवसन्नश्च कीर्तितः ॥ ५५ ॥
भिन्नबस्तिर्दन्तरोगो लुप्तः शीतार्दितस्तथा ॥
मक्षिकादष्टमर्माभिनीतौ षोडश चाप्यमी ॥ ५६ ॥
स्तब्धं निःस्रातं निष्पिष्टं विहतं व्याहतं तथा ॥
सूं(शू)नं संकुचितं भग्नं म्लानमावेष्टितं तथा ॥ ५७ ॥
निर्वे(श्वे)ष्टितं शोषितं च तथैवोन्मथितं च यत् ॥
भ्रष्टं छिन्नं च्युतं वा स्याद्दाबाधा गात्रसंश्रयात् ॥ ५८ ॥
सद्यःक्षतं देहभङ्गो घृष्टं दग्धं चतुर्विधम् ॥
अग्निक्षारतुषारार्कैर्मूढगर्भं ततः परम् ॥ ५९ ॥
शैल्यैर्यश्च विनिष्पिष्टो यो व्यालैरण्डकावपि ॥
लूता कीटावचूर्णश्च व्यापदोऽष्टौ च बस्तिजाः ॥ ६० ॥

---

१ ख. °त्पातह° । २ क. °हात्मिका° । ३ क. रतिकाश्चै । ४ क. °क्षो वणि° । ५ क. नैवेते । ६ क. ख. °शिष्टां तत° । ७ क. ख. समतिः । ८ ख. निर्मूलेत । ९ क. °पार्तस्फो° । १० क. °बद्धवि° । ११ क. निःस्रादितं । १२ क. विहितं व्याहृतं । १३ क. स्तनं । १४ ख. स्यादबोधा । १५ क. शल्यैश्वर्यवि° । १६ ख. लूताः ।

द्वौ ग्राहौ जलहस्ती चेत्यागन्तव उदाहृताः ॥
शतत्रयं विभज्योक्तमिति पञ्चदशोत्तरम् ॥ ६१ ॥
तेष्वसाध्याश्च बोद्धव्याः शुद्धः कूटश्च पाकलः ॥
स्कन्दो द्वावथ संसक्तः संपातानाह एव च ॥ ६२ ॥
शिरारोगोऽथ संराष्ट्रे विप्लावो ग्रन्थिविप्लुतः ॥
समन्तोऽथ कुठाराख्यस्तथा स्थानरतोऽपि च ॥ ६३ ॥
विद्युन्निपातदग्धः स्यादूष्मापरिगतश्च यः ॥
संनिपातविसर्पश्च विसर्पः क्षतजस्तथा ॥ ६४ ॥
पूर्वापवादबद्धौ च हृदयस्फाल्यतः परम् ॥
हस्तोन्माथाश्च षडपि योऽवसन्नश्च कीर्तितः ॥ ६५ ॥
भिन्नबस्तिरतो ज्ञेयो दन्तरोगश्च दैविकः ॥
अक्रिया विक्रिया दैवी विविधारिष्टसंयुता ॥ ६६ ॥
असाध्याः स्युरतोऽन्येऽपि रोगा ये चाऽऽयुषः क्षये ॥
इत्यसाध्यास्ततो याप्याः कचकेशः कैदम्बकः ॥ ६७ ॥
सुफुल्लश्चाप्यफुल्लश्च यवगण्डशिरास्तथा ॥
तलकासी ततश्चोक्तो वयःप्रकृतिदुर्बलौ ॥ ६८ ॥
गाँत्रातङ्की ततोऽन्येऽपि साध्याः सन्त उपेक्षिताः ॥
याप्याः स्युः कृच्छ्रसाध्याश्च रोगा ह्येवं विनिश्चये ॥ ६९ ॥
समस्तलिङ्गा ये जाता जाता ये गुरुवेदनाः ॥
मर्मस्था दुरधिष्ठानाः स्थानसंविषमाश्च ये ॥ ७० ॥
अरिष्टलक्षणा ये च ये महारोगरुक्कमाः ॥
इत्यसाध्याश्च याप्याश्च कृच्छ्रसाध्याश्च कीर्तिताः ॥ ७१ ॥
सात्म्यानुलोमिकं चैव तथा बालचिकित्सितम् ॥
उपसर्गे च जायन्ते रोगाः सर्वत्र एव ते ॥ ७२ ॥
दन्तरोगादभिन्नं च दन्तशल्यमितीक्ष्यते ॥
मृदाजीर्णमृदानाहादभिन्नं च यतस्ततः ॥ ७३ ॥

---

१ क. ख. °त्यागतं व । २ क. शुद्धाः । ३ क. °पातं वि° । ४ ख. °सर्पक्ष° । ५ क. हृदयः स्फालतः । ६ क. कबन्धकः । ७ क. गतंत्राकी । ८ ख. ग. °वं विधाश्च ये । ९ ख. स्थासंनविषमा । १० क. साध्याश्च । ११ क. °न्नं यतस्तस्य ।

पो(ष्या (अ) मी तु संख्याता विभक्ता रोमसंग्रहे ॥
उपक्रमविशेषेण निर्दिष्टाश्च पृथक्पृथक् ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥ ७४ ॥ ६७५ ॥
इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थाने
रोगविभक्तिर्नाम सप्तमोऽध्यायः ॥ ७ ॥

---

अथाष्टमोऽध्यायः ।

---

तपस्यग्रे स्थितं विप्रं वेदविद्याविशारदम् ॥
मुनिं परमदुर्धर्षं शिष्यमण्डलमध्यगम् ॥ १ ॥
चम्पाधिपो नरपतिस्तदा पृच्छति संशयम् ॥
भगवन्किंचिदाख्याहि संशयो मे द्विजोत्तम ॥ २ ॥
ज्वरः कथं समुत्पन्नः कस्मिन्वा कारणान्तरे ॥
ज्वराभिभूताश्च कथं नश्यन्ति प्राणिनो भुवि ॥ ३ ॥
वारणा वाजिनश्चापि ये चान्ये मृगपक्षिणः ॥
तथैवान्यानि भूतानि तिर्यग्योनिगतानि च ॥ ४ ॥
प्राणेभ्यो विप्रयुज्यन्ते ज्वरेणाभिद्रुतानि च ॥
एतच्च परमं दुःखं मानसं संप्रवर्तते ॥ ५ ॥
मृत्योर्वशे वर्तमानं दृष्ट्वा तु कृपणं जगत् ॥
एतन्मे पृच्छतो ब्रूहि ज्वरस्योत्पत्तिलक्षणम् ॥ ६ ॥
विज्ञानं चाप्यशेषेण पूर्वरूपाणि यानि च ॥
एवमुक्तः स शिष्येण पालकाप्यस्ततोऽब्रवीत् ॥ ७ ॥
देवानां दानवानां च युद्धमासीत्सुदारुणम् ॥
तत्र देवा न तिष्ठन्ति दानवानां महाहवे ॥ ८ ॥
ततो विश्वेश्वरं देवं नीलकण्ठं वृषध्वजम् ॥
ईशानं सर्वभूतानां वरदं शरणं गताः ॥ ९ ॥
प्रभवं सर्वभूतानां देवं च पुरुषोत्तमम् ॥
तौ देवौ सूर्यसंकाशौ क्रुद्धौ परमदारुणौ ॥ १० ॥
दानवानां विनाशाय रुद्रः स्म सृजति ज्वरम् ॥
द्वितीयं सृष्टवान्विष्णुः प्रज्वरं घोरदर्शनम् ॥ ११ ॥

---

१ ख. पञ्चाप्यमी तु । ग. सप्ताप्यमी । २ ग. तच्च मे प° । ३ वरं शरणदं ।

तौ सृष्टावग्निसंकाशौ दैत्यानीके विचेरतुः ॥
ज्वरश्च मज्ज्वरश्चोभौ कालान्तकयमोपमौ ॥ १२ ॥
रुद्रनारायणमयौ दिव्याग्निरिव दारुणौ ॥
अग्न्यशनिसमस्पर्शौ ब्रह्मलोकेऽप्यनुत्तमौ ॥ १३ ॥
न शक्यमसुरैः स्थातुं मुहूर्तमपि संयुगे ॥
कृशा विवर्णाः शिथिला मुक्तायुधरथध्वजाः ॥ १४ ॥
वेपमाना विमनसो निरुत्साहाः सुदुःखिताः ॥
भयार्ता मरणत्रस्ता ब्रह्माणं समुपस्थिताः ॥ १५ ॥
प्रसीद भगवन्देव त्रातुमर्हसि सुव्रत ॥
रुद्रनारायणावेतौ संहरन्तौ तु दानवान् ॥ १६ ॥
क्रुद्धौ परमदुर्धर्षौ तेजसामूहतो भृशम् ॥
भगवन्गतिरस्माकं गतिरन्या न विद्यते ॥ १७ ॥
स एवमुक्तो भगवान्सर्वलोकपितामहः ॥
दानवानाह सुप्रीतः स्वस्थी भवत विज्वराः ॥ १८ ॥
ज्वरमुक्तास्तु ते सर्वे प्रणेमुः शिरसा प्रभुम् ॥
तौ तु कालान्तकसमौ ज्वरौ संहरतः प्रजाः ॥ १९ ॥
प्रभुस्तौ व्यसृजच्चाशु जङ्गमस्थावरेषु च ॥
रुद्रनारायणमयौ कोपाग्नी त्वतिदारुणौ ॥ २० ॥
ओशीविषमिवात्युग्रं ज्वलन्तमिव पावकम् ॥
कालान्तकसमं क्रुद्धं दैवतैरपि दुस्तरम् ॥ २१ ॥
पृथिव्यां यानि भूतानि स्थावराणि चराणि च ॥
स्पर्शादेव विनश्यन्ति क्षणं विद्युदिवाम्बरे ॥ २२ ॥
ऋते मनुष्याद्राजेन्द्र नान्यो विषहते ज्वरम् ॥
तेजोधिका मनुष्यास्तु सहन्ते तेन ते ज्वरम् ॥ २३ ॥
एष घोरो महाव्याधिर्ज्वरः पाकलसंज्ञितः ॥
ज्वरस्य पूर्वरूपाणि यानि वक्ष्यामि तच्छृणु ॥ २४ ॥
अनवस्थितमात्रश्च बहुशश्च विजृम्भते ॥
शरीरगौरवं चैव हृष्टरोमा च जायते ॥ २५ ॥
ध्यायते दुर्मनाश्चैव यवसं नाभिनन्दति ॥
पर्यश्रुः परिमूत्री च शय्यायां कुरुते मनः ॥ २६ ॥

---

१ ग. तेजसा महतो । २ ख. आसीवि° । ३ क. दुर्मनश्चैव ।

एतद्भवति विज्ञानं गृहीते पाकलेन तु ॥
नामभिर्बहुभिस्तैस्तैः सर्वप्राणिषु कीर्त्यते ॥ २७ ॥
कारणैर्बहुभिः प्रोक्तो दन्तिनां पाकलो भवेत् ॥
रुद्रविष्णुमयं तेजो द्वादशादित्यवर्चसम् ॥ २८ ॥
प्रलयः सर्वभूतानां तस्मान्नित्यं व्यवस्थितः ॥
एषा ज्वरसमुत्पत्तिर्यथावत्संप्रकीर्तिता
पृच्छतस्ते महाराज यथावदनुपूर्वशः ॥ २९ ॥ ७०४ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहापाठे महारोगस्थाने ज्वरोत्पत्तिर्नामाष्टमोऽध्यायः ॥ ८ ॥

---

## अथ नवमोऽध्यायः ।

अङ्गराजो महाप्राज्ञैर्नयकारैर्महात्मभिः ॥
सहोपविष्टं शालायां पालकाप्यं स्म पृच्छति ॥ १ ॥
पोक्ला *येऽन्वये[1] ब्रह्मंस्त्वयोक्तास्तान्प्रचक्ष्व मे ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥ २ ॥
पोकलाञ्शृणु[2] मे राजन्सनिरुक्तान्ससंभवान् ॥
रुद्रस्य क्रोधजो ह्येष (†नामभिर्बहुभिर्ज्वरः ॥ ३ ॥
अन्तकः सर्वभूतानां क्षयं नयति दारुणः ॥
अनाविष्टेन तेनेह कश्चित्प्राणैर्विमुच्यते ॥ ४ ॥
अन्तकाले विशत्येष) जङ्गमाजङ्गमं जगत् ॥

ततः—एष एक एव खलु भो ज्वरो नरेषु हयेष्वभितापः, खरेषु खोरकः, गोष्वीश्वरः, उष्ट्रेष्वलसकः[3], व्याडेष्वाक्षिकः, प्रलापकोऽजादिषु, सरीसृपेषु कृष्णीषः[4], हारिद्रको महिषेषु, मृगरोगो मृगेषु, पक्षिष्ववतापः पतङ्गेषु शुनस्त्वेलर्कः[5], मत्स्येष्विन्द्रमदः, गुल्मेषु गुच्छकः, ओषधिवनस्पतिषु ज्योतिष्कः, मौल्येषु[6] पर्वकः, ऋषभको नलिनीषु, धान्येषु चूर्णकः, ललः कोद्रवेषु, मधूकः शाकेषु, भूम्यामूषरः, अप्सु नीलिका, गजेषु पाकलः ।

---

* 'संग्रहाध्याये' इत्यर्थः प्रतिभाति । † धनुराकारचिह्नमध्यगतपाठः कपुस्तके नास्ति ।

---

१ क. ख. पालकाप्यन्वयो ब्र°। २ क. ख. पालकाञ्शृ°। ३ क. °ष्वसलकः। ग. °ष्वलकसः। ४ क. ग. कुष्णीपः। ५ क. °स्त्वलकः। ६ क. साल्येषु।

रुजतीति रोगः । पचतीति पाकलः । ज्वरयतीति ज्वरः । कलयति लोकमिति कालः । मृद्नातीति मृत्युः ।

एवमेतस्मादीश्वरान्नानाविधरूपसंभवनामकर्मण आशीविषाग्न्यशनिनिपातकल्पात्पाकलसंज्ञकान्नित्यमेव भेतव्यम् । महानेष व्याधिर्यत्नेनोपचर्यः । नैनमन्ये प्राणिनो विषहन्ते, ऋते मनुष्येभ्यः ।

गजास्त्वन्तरोष्मस्वेदत्वान्न सहन्ते, ज्वरं, बहलमांसमेदस्त्वाच्च । पुरुषास्तु बहिःशरीरगतत्वादूष्मणो विषहन्ते ज्वरमूष्मलक्षणम्, तनुमांसमेदस्त्वाच्च । अल्पदोषमृदुभूतं वा द्विरदाः । न चैषामन्येषामिव प्राणिनामूष्मा लक्षणम् ।

सन्निदानलक्षणो ह्येष नागानां दशधा संज्ञितः । तद्यथा—शुद्धः, बालः, पक्कलः, मृदुग्रहः, कुक्कुटः, एकाङ्गग्रहः, प्रसुप्तः, कूटः, पुण्डरीकः, महापाकलश्चेति ।

तत्राऽऽदित एव तावच्छुद्धपाकलविकारं वक्ष्यामः—

स खलु भो दधिगुडतिलपललमत्स्याहारात्, आनूपतृणमांसरसभोजनात्, अव्यायामात्, तथा शिशिरजलनिषेवणात्, दिवास्वप्नात्, अतिस्निग्धमधुराम्ललवणभोजनात्, विशेषतः कफजननेभ्यः, श्लेष्मा प्रवृद्धः स्थानात्स्थानमतिवर्तमानः शिराधमनीभ्यः सर्वशरीरमभिप्रपद्यमानः शुद्धपाकलमभिनिर्वर्तयति ।

तस्य लक्षणानि—नीलिमा श्यामत्वं जघननिष्कोशपेचकेषु, कफाच्च निद्रा जायते, प्रसुप्तत्वमाध्मातत्वं हृष्टरोमस्तब्धत्वम्, लाङ्गूलश्रवणहस्तचेष्टासु निरुत्साहत्वम्, प्रेध्मानम् । निमीलनं चाक्ष्णोः, स्थूलोच्छ्वसनम्, गम्भीरमभिस्वननम्, अव्यञ्जनम्, मक्षिकाणामरक्षणम्, अविज्ञानम्, सलिलद्वेषः, गात्रनिःसङ्गः, पांशोरग्रहणम्, दन्तस्य चावधमनम्, भिन्नपुरीषता, स्थूलाश्रुप्रस्रवणम्, हस्ततः कफप्रसेकः, मुखाच्च लालास्रावः, मह्यां विनिक्षिप्तकायोऽयं निषीदति च, अक्ष्णोः प्राग्भागे चौष्ण्यमन्यत्र शैत्यम्, न च यवसमभिलषति, मत्तवत्कोशकटप्रस्रावी भवति, प्रस्तब्धहस्तो निरीह इव, सर्वगात्राणां दुर्गन्धिः, स्तब्धाङ्गुलिः, श्यावमुखौष्ठः, श्यामनयननखः, स्तब्धाङ्गः, शुद्धकफोत्पत्तिः, तं शुद्धपाकलमित्याचक्ष्महे ।

स गजस्तेनाभिभूतो हृदये श्लेष्मणि प्राप्त एकरात्रं वा त्रिरात्रं वा जीवति । नैव चतुर्थी रात्रिमभिनिवर्तत इति ।

तत्र श्लोकः—

१ ख. कुर्कुटः । २ क. ख. °निवर्तयति । ३ ख. °द्रा च जा° । ४ क. °माधानत्वं । ५ क. प्रधानम् ।

शुद्धात्कफात्समुत्पन्नं शुद्धपाकलमादितः ॥
प्रत्याचक्षीत मेधावी लिङ्गैरेतैः समन्वितम् ॥
( इति ) शुद्धपाकलः ( लहेतुलक्षणासाध्यत्वानि ) ॥

अथातो बालपाकलचिकित्सितं व्याख्यास्यामः । इति ह स्माऽऽह भगवान्पालकाप्यः—

स खलु भो रूक्षलघुशिशिरविशदकटुकषायतिक्तविषमविरुद्धभोजनात्, दुःस्थानशयनात्[1], रात्रिजागरणात्, अतिगुरुभारहरणात्, व्यायामव्यवायात्, अध्वगमनात्, क्षयात्, मनःसंतापात्, ऋतुविपर्यासात्, लङ्घनात्, अतिबन्धनात्, मूत्रपुरीषधारणात्, प्रावृषि च प्रकुप्यति पवनः । स प्रकुपितः करचरणनयनवदनकर्णलाङ्गूलकुक्षिपक्षस्कन्धजघनमेहनशिरसामन्यतममासाद्याङ्गं सर्वाङ्गानि वा गृहीत्वेमान्विकारा[2]नापादयति ।

तत्र करगते मारुते—नावमृशति नोन्मृशति, न हस्तं संकोचयति, न प्रसारयति, न निर्धमति । चरणगते—युगपदेकैकशो वा गात्राणि परं स्तम्भयति । ( *नयनगते—न संवर्तयति, ) नोन्मीलयति, न संमीलयति, न स्वपिति नेत्राभ्याम् । मुखे[3] गृहीतो—नात्ति किंचित् । कर्णगते[4]—स्तब्धकर्णो भवति । लाङ्गूलगते—लाङ्गूलवंशं स्तम्भयति, लाङ्गूलं[5] शूनं च कुरुते । कुक्षिपक्षगतश्च—आध्मानाटोपसंकोचनपक्षघातान्निर्वर्तयति, शूलं कुरुते । स्कन्धगते—न निर्णमति[6], नोन्नमति, नावनमति, मन्ये स्तम्भयति । जघनगते—मूत्रपुरीषसङ्गानापादयति । मेहनगते—मेहनं स्तम्भयति, मेहनं च शूनं[7] कुरुते, रक्तमूत्रं वा प्रवर्तयति । शिरोगते—स्तब्धोन्नतशिरोग्रीवो भवति । पूर्वभागमाश्रितः—तदाश्रयां क्रियां विरोधयति, स्पृष्टमपि च न तत्र मर्षयति । सर्वाङ्गगतः—सर्वानेवाङ्गप्रदेशानन्तर्बहिश्च प्रस्तभ्य तिष्ठति, ततो गजः प्रध्यायति निमीलयति, अश्रूणि प्रवर्तयति, न स्थानस्तम्भरथ्यासु मनो धत्ते कृच्छ्रवातमूत्रपुरीषश्च भवति । भोजनकवलकुवलपल्लवाहारद्वेषी वेदना चास्य सुखदुःखान्वयाद्यामिश्री भवति । रूक्षत्वक्करचरणादिषु प्रकुपितो बालचेष्टेव[8] क्रमादभिवर्धते यावत्सर्वाङ्गगतो भवतीति यस्मात्, तस्मात्—तं बालपाकलमित्याचक्ष्महे ॥

स खल्वेष लिङ्गबाहुल्यात्क्षीणदुर्बलबालवृद्धानां कृच्छ्रप्रतीकारो[9] भवति ।

* धनुराकारचिह्नद्वयान्तर्गतपाठः कपुस्तके नास्ति ।

१ क. °नादुत्थानाच्छयनात् । २ क. °मान्कारा° । ३ क. मुखेन । ४ क. कर्णतेः । ५ क. लाङ्गूलशूलं । ६ क. निर्णयति । ७ क. शूलं । ८ क. °णबा° । ९ ख. °कारतरो ।

तं सुरक्षितं रक्षासु विहितस्थानशयनस्तम्भं रक्षोघ्नभोजनगुप्तमाज्याहुतिबलिकर्मप्रायश्चित्तपुरस्कृतं चिकित्सितमुपक्रमेत । ततो वायुनिग्रहणार्थं यं यं वायुर्गृह्णाति प्रदेशमनेकपस्य, तं तं तप्तस्नेहादिभिरुपक्रमेत । तत्रायं विशेषः—मत्स्यांश्च शकुलिनो बहून्निःशकलीकृत्य तैलोदकेन विपाच्य बलाकाशिखिरोहितचर्मिणां वा सुसंस्कृतेन युक्तं रसं विपाच्य मांसं सलवणीकृत्य कालकन्दकोलविदारीपिप्पलीमरीचकल्कमिश्रं यूषं कारयेत्, तं पाययेदशेषयन्यथानुकूल्यं तम् । भोजनमपि चास्मै मत्स्यमांसरससुसंस्कृतं दापयेत् । तेनापगतदोषो भवति । स खल्वेष तेनैव कल्पेन बिल्वाग्निमन्थश्रीपर्णीवरुणकपाटलीनां मूलानि समाहृत्य संछिद्य प्रक्षाल्य वाराहमांसेनैकत्वं कृत्वा सलिले विपाचयेत् । भोजनं चोपहारयेत् । तेनास्य शकृच्छुध्यति वायुश्च गुदं प्रपद्यते यथावत् । अथवा बदराम्लवेतसमांसपेशीकाश्च दध्यम्लयुक्ताः प्रभूतलवणीकृताः सलिलेन विपाचयेत् । तस्मिन्नपहृते बिल्वमात्रं पिप्पलीकल्कं समावाप्य शीतीकृतं तथैव रसं पाययेत् । द्विपञ्चमूलवरुणकनिष्क्वाथे वराहमांसमुपसाध्य रसं तं त्रिकटुकविदारीचूर्णमिश्रं सतैलं लवणीकृत्य पानभोजनयोर्दद्यात् । तेनास्य करकर्णलाङ्गूलकोष्ठस्कन्धशिरोग्रीवागात्रात्परगतश्चानिलः प्रशान्तिमुपगच्छति । कर्णिकारोरुबूकशाककरवीराणां पत्राणि बृहतीं च समूलपत्रस्कन्धां संक्षुद्य तिलपिष्टयुक्तां महास्थाल्यां वा लौह्यां क्राथयित्वा विधिवत्तैलाभ्यक्तस्य नाडीस्वेदं कुर्यात् । ततोऽस्य मूत्रं प्रवर्तयेत्, गात्राणां च मार्दवमुपजायते, व्याधिश्च नश्यति, अरुक्शरीरश्च भवति । अथवा बिल्वसुरसैरण्डपत्रैश्च सह तिलचूर्णैर्बदराम्लदधिस्थल(स्थ)शूकरमांसैर्नाडीस्वेदं कुर्यात् । एतैरेवौषधैः सार्धं मांसं संस्कारयेत् । सुसंस्कृतैश्चैनं भोजयेत् । रसं चैनं पाययेत् । शाल्योदनं च भोजयेत् । ततः प्राणोऽस्य वर्धते, व्याधिर्निवर्तते । भवत्यपि च शीघ्रं स्वस्थो । कृतस्वेदस्यास्य च शीतीकरणं विदध्यात् । ( †उशीरोत्पलपद्मपत्रैर्दधिमिश्रैः प्रदेहं कुर्यात् । भूयश्च मरिचपिप्पलीभिर्घृतमण्डं विपाच्य तेन सर्वसेकं विदध्यात् ) पयस्याटरूषकश्वेतकिणिही+तृवृन्मरीचानां निर्यूहे पादावशिष्टे तैलं विपाच्य विधिवदनुवासनं विदध्यात् । ततः क्षिप्रतरमेव स्वस्थो भवति । महा-

* 'गात्रापर' इत्येव साधुः । † धनुराकारचिह्नद्वयान्तर्गतपाठः कपुस्तके नास्ति ।
+ तृवत्स्थाने त्रिवृत्साधुः ।

१ क. °तं भवति र° । २ क. °स्तम्भर° । ३ क. वायुं गृह्णा° । ४ क. तं सप्त° । ५ ख. कुशलिनो । ६ ख. चोपाहरेत् । ७ ख. सलिले । ८ क. समवाप्य । ९ क. लौह्या । १० ख. ग. °ति, नीरु° । ११ क. °षकश्वेति कि° ।

पञ्चमूलं बिल्वफलपत्राणि तरुणान्याम्रातकस्याऽऽढक्याश्च पत्रभङ्गाञ्शता-वर्या विदार्याश्च मूलैर्भद्रमुस्ताशाकफलानि च निष्क्वाथ्य तत्र वराहमहिषयोः प्रभूततैलं रसं कृत्वा स्वर्जिकालवणाभ्यां संस्कृतं पाययेत् । तेनैव चैनं भोज-येत्, सद्यः सुखी भवति। अथ बदरामलकयोर्निष्क्काथस्य त्रीन्भागान्दध्नश्चाष्टच-तुर्थमम्लस्य तैलभागं पञ्चमं चात्र कृत्वा पिप्पलीमरिचयोश्च कल्केन यूषं विपाच्य व्यक्तलवणीकृतं दद्यात् । भोजयेच्च वारणं व्याधिप्रशमनार्थम् । ( *अथवा यवगोधूमतिलकल्कतर्कारीरुबूकार्कभङ्गैः शार्ङ्गेष्ठा(?)कल्कयुक्तैर्जलेनैव नाडीस्वेदं कुर्यात् । पृष्टिपर्ण्यंशुमतीफणिज्जकमेषशृङ्गीमुस्तानां निष्क्काथे रोहि-तमत्स्यस्य कृष्णमत्स्यस्य च वा रसं पाययेत् । भोजयेच्चैनं व्याधिप्रशमनार्थं ) विधीयते। निवातस्थस्य स्वभ्यक्तं चैनं नाडीस्वेदपिण्डस्वेदैरुपक्रमेत। विषाणिकां चार्कपर्णीं त्रिकटुकं चित्रकं प्रियङ्गुं च गुग्गुलुतगरफणिज्जकफलानि च सूक्ष्म-चूर्णानि कृत्वा नस्यं प्रधमनं दद्यात्, कर्णिकारोरुबूकाशोकबदरकरवीरखदिर-शल्लकीनीपासनमुस्तमधुशिग्रुवेणुकपित्थबिल्वपाटलाधातकीवासन्तीश्रीपर्णीसु-मनासुरसानवमालिकास्फोतापञ्चमूलबलानागबलाद्विपुनर्नवाचूर्णकानां बृह-त्याश्च पत्रभङ्गान्संक्षुद्य द्विहस्तपरिणाहं चतुर्हस्तावगाढमवटं दृढकूलं स्नान-यित्वा पत्रभङ्गानेतान्प्रक्षिपेदुत्तरोदके । ततोऽग्निवर्णैरयोगुडैरुष्णीकृत्य तदुदकं हस्तिनं तैलेनाभ्यज्य गोण्या प्रतिच्छाद्य स्वेदयेत् । अथवा हस्तिप्रमाणमवटं कारयित्वा पूर्ववदुष्णेनावगाह्य स्वेदयेत् । भूयश्चैनं रोहितमत्स्यमहिषाजहरिण-वराहाणामन्यतमस्य रसेन स्नेहकल्कलवणयुक्तेन भोजयेत् । सर्वाश्च क्रिया निवातस्थस्याभ्यक्तस्य कुर्यात् ॥

तत्र श्लोकः—

कष्टो ह्येष भृशं व्याधिर्वारणप्राणनाशकः ॥
उपाचरेद्यथाशास्त्रं यत्नतो बालपाकलम् ॥

इति बालपाकलहेतुलक्षणचिकित्सितम् ।

---

अथातः पक्वलपाकलचिकित्सितं व्याख्यास्यामः—इति ह स्माऽऽह भगवा-न्पालकाप्यः—

अथ यदा द्विरदः शुक्ताम्लक्षारलवणकटुतिक्तकषायरूक्षाहारप्रसक्तोऽयोग-

---

* धनुराकारमध्यगतपाठः कपुस्तके नास्ति ।

१ ख. °वटुं ह° । २ क. ख. °वटुं का° । ३ क. °पाजाह° । ४ क. अथवा । ५ क. ख. शुक्लाम्ल° ।

व्यायामव्यवायप्रवातोष्णस्थानशयनपरिसरणचेष्टारतः, तस्य वातपित्ते प्रकुपिते हृदयमुपागम्य हृढमुद्भ्रान्तं पक्कलं नाम पाकलमभिनिर्वर्तयतः ॥

स तेनाऽऽविष्ट आटोपितकरनयनकर्णवालधिर्मुहुर्मुहुः कर्णौ स्फोटयति निश्वसिति विजृम्भते संवीजते। सगदे विक्षिपति संरमते गुडुगुडायते, अश्रूणि मुञ्चति कवलाभिनन्दी भवति। तं पुनर्निरस्यति पुनर्भक्षयितुमिच्छति । तं पुनरुत्सृजति (क्रुध्यति विकूजति) विधुनोति शरीरम्, प्राकारगृहतटवृक्षकपाटकुड्यवल्मीकस्तम्भादीन्हन्तुमिच्छति, पुरुषपशुहयरथगजयानशकटादीनि च । विशेषतश्च वैद्यमभिक्रुध्यति । यन्तृपरिकर्मभिश्च नियन्तुं शक्यते वाग्दण्डाङ्कुशयन्तृमतोदनिर्भर्त्सनैः । पक्कल इति कोपः । तेनोपसृष्ट इति पक्कलसमेतैर्लिङ्गैरुपलभ्य पक्कलपाकलं चिकित्सितुमुपक्रमेत त्वरमाणः ॥

पयः पञ्चमूलशृतमुपाहृत्य सुखोष्णं बदरमिश्रं सलवणं पाययेत् । अथवा वचाबिल्वजशृङ्गीभ्यां वराहवसया सह शृतं पयः सौवर्चलेन कपालभृष्टेन सह संयोज्य पाययेत् । अथवा मूर्वापिचुमन्दगवाक्षीगिरिकर्णिकामूलानि ब्राह्मीहरीतकीकपित्थेन च संक्षुद्य पयसाऽऽलोड्य सह तिलचूर्णेन पाययेत् । अथवा—सप्तकृत्वो भृष्टान्यष्टौ लवणानि सामुद्रविडसैन्धवसौवर्चलौद्भिदयवक्षारारामकघटीलवणानि सूक्ष्मचूर्णानि कृत्वा प्रसन्नया सह संयोज्य पाययेत् । आध्मातं शोणितमेहनमतिजातं कृच्छ्रमूत्रिणं चैतेन योगेन चिकित्सयेत् । दन्त्यामलकगवाक्षिकाकालानृवृच्छङ्खिनीनीलिकाफलपिप्पलीः संक्षुद्य गोमूत्रे रात्रिपर्युषितं पाययेत् । ततः पीत्वैव सपुरीषे वातपित्ते निरूहति । विरक्तं चैनं कालाविदारीसृञ्जागोलोमीक्वाथेन स्वेदयेत् । नीपश्वेताकिणिहीनलसुरसावंशार्कानां पत्राणि यवकोलकुलत्थनिष्पावाढकीसणमूलकबीजानि +दधिनि शिशिरे जले निष्क्वाथ्य ससौवर्चलेनाऽऽस्थापनं विधिवद्दद्यात् । अथ वा दधि लवणमधुमधूकपयस्यामत्स्यवसाभिः शृताभिरास्थापयेत् । ततः प्रत्यागतास्थापनमपहृतदोषमुष्णेनैव वारिणा पानपरिषेकैरुपचरेत् । ततस्तं घृतेनाभ्यंज्य कुक्कुटान्कदलीकन्दकैः सह प्रसाध्य पृष्ठं मन्ये च स्वेदयेन्नागस्य । मुस्तामरिचदेवदारुविडङ्गा-

+ 'दधनि' इति तूचितम् ।

१ क. °मुपग° । २ क. ख. °निवर्तयतः । ३ क संसरन्तो गुडगु° । ४ क. तं तु न निर° । ५ क. °कुड्यं च व° । ६ क. °तोदेन नि° । ७ ख. °लः । तमे° । ८ क. ख. °लसृत° । ९ क. ख. सृतं । १० क. °ध्मानशोणितं मे° । ११ क. विचित्सयेत् । १२ ग. °णिहिङ्गुल° । १३ क. सृताभि° ।

जर्शृङ्गीभिः सह पयः शृतशीतं वृश्चिकचित्रककल्कसंयुक्तं पाययेदामाशयविशुद्ध्यर्थम्। अथवा गोपगुन्द्रामेषशृङ्गीनिम्बत्वग्गोमतीवृश्चिकविडङ्गचित्रकैः पयः साधयित्वा पायितो नागो विशुद्धकोष्ठो भवति। अथवा सूक्ष्मैलासर्षपफणिज्झकककुदफललशुनविडङ्गमरिचवचापटोलक्षुद्रमत्स्यपिप्पलीकुलत्थकुकुटाण्डादीनां निर्यूहं पादावशिष्टमवतार्य परिस्राव्य पुनर्महिषमांसवसास्थूलान्त्रैः सह विपाच्य पाययेद्भोजयेच्च वारणम्। भूयश्च शतपत्रैर्विडुलामलकोदुम्बरशमीजम्बुकपित्थपुत्रश्रेण्यश्मन्तकानि संक्षुद्य त्रिरात्रमासवमासुनुयाद्गोमूत्रे। ततश्चैनं पाययेत्पानानि पञ्च पञ्चरात्रम्। लामज्जकोशीरहरीतकीशतपुष्पमियङ्गुरोध्रमधुककटुफलानां चूर्णैरासवं कृत्वा विधिवत्सप्तरात्रादूर्ध्वमष्टौ पानान्यष्टाहं दद्यात्। ततोऽनुलोममारुतोऽपहृतपित्तः स्वस्थो वारणो भवति। ततश्चास्य शतावरीस्फूर्जकफणिज्झकमेषशृङ्गीचाटरूषककोविदारानिम्बार्कनीपपटलीकुटजकपित्थशक्रयवपुनर्नवासोमवल्कान्कल्पयित्वा तिलचूर्णेन सह निष्क्वाथ्य नाडीस्वेदं विधिवत्कुर्यात्। सपत्रेण चैनं निष्क्वाथेन स्वेदयेत्। ततश्चैनं गोधाया रसेन मागधीकिराततिक्तकटुकषाययुक्तेन भोजयेत्। मरिचपिप्पलीचूर्णेन श्लक्ष्णीकृतेन श्वाविच्छल्यकयोर्भैरिरसं पाययेत्। भूयश्च तैरेव मांसैर्भोजयेत्।

तत्र श्लोकः—

द्विदोषकोपात्खलु पक्कलोऽयं वाताच्च पित्ताच्च भवेदुदीर्णात्॥
स्निग्धं च तिक्तं च सदाऽस्य कार्यं पानं च भोज्यं च चिकित्सकेन॥

इति पक्कलपाकलः ( लहेतुलक्षणचिकित्सितानि )॥

---

अथातो मृदुग्रहपाकलचिकित्सितं व्याख्यास्यामः—इति ह स्माऽऽह भगवान्पालकाप्यः।

यदा तु खलु वारणो व्यायाममुष्णेऽतिमात्रं कारितो भवति। अतिगुरुभारखिन्नोऽध्वकर्मणि वा योक्त्राऽधिष्ठितोऽतिमात्रं बलहीनो वातलान्याहार्यते। अथवा क्षीणः प्रक्षीयमाणधातुर्वा कथंचित्सात्म्यविरोधीनि वा सेवते। सलिलं चातिमात्रं पिबति कलुषं दुष्टामगन्धं निवातस्थानशय्यासनसुखं न लभते जागर्ति वा। कथंचित्तस्य वायुर्विमार्गमापन्नो व्यापादयति कफपित्ते रसादीन्वा धातूनस्य देहे। स तु तन्निमित्तं व्यापन्नेऽन्यतरस्मिन्धातौ प्रकृतौ चापि विपर्यस्तायां श्लेष्मोपलिप्तवातधातुः। पित्ते च विमार्गगते प्रक्षीयते श्वसिति च्छर्द-

---

१ क. °शृङ्गाभिः। २ क. °पकाङ्गकक°। ३ क. °त्रवदराम°। ४ क. °निपञ्चरा°। ५ क. °कोलेशी°। ६ ख. °पहत°। ७ क. °क्ककक°। ८ ख. °ति। नाथाज्यते। तापाद्याहतः। अथवा क्षी°।

पश्यत्यभीक्ष्णं वमथुम्, यवसकवलकुवलपल्लवं च नाभिनन्दति, न मृदुग्रहाभिभूतः स्वपिति, ध्यायति गुरुमक्षिकः । गात्राणि च निरस्यति खिन्न इव दुर्मना विकर्षति पूर्वकायम्, कृशश्च हारिद्रवर्ण इव दृश्यते । कथंचित्कवलमेकं द्वौ वा ग्रसते परं त्रीन्, ग्रसित्वा श्लेष्मणा रक्तेन वा सह निरस्यते । शनैः शनैः क्षीयत इति मृदुग्रहः । तं राजयक्ष्मेत्याहुः । केचिद्गृहीतमात्रमेवोपक्रमेत, उपेक्षितो हि न शक्यश्चिकित्सितुमिति ॥

काश्मर्यप्रियङ्गुगोमेदकीच संक्षुद्य शीतेन वारिणा संयोज्य परिस्राव्यं द्रोणमात्रं कषायं यावद्वा साधु मन्यते, तावत्तन्मधुसंयुक्तं पाययेत् । वमथुप्रशमनार्थं सोभाञ्जनकाजशृङ्गीबिल्वानि संक्षुद्य मधुना संयोज्य भोजयेत् । वमथुप्रशमनार्थं कर्णिकारत्वक्शल्लकीबीजमृणालिकातालीसपत्रप्रियङ्गुविदारीकन्दहरीतकीबर्बरतृणानि संक्षुद्य मधुना संयोज्य भोजयेत् । वमथुनाशनो भूयश्चैष गणः—कर्णिकारादिरर्कक्षारसंयुक्तः समधुर्वमथुमुपहन्ति । अथवा शार्ङ्गेष्टाबिल्वातिन्दुकीमधुरसानां मूलैः कषायं कृत्वा मधुसंयुक्तं पाययेत्, वमथुप्रशमनार्थम् । तस्य प्रशान्तवमथोरभ्यञ्जनस्नेहनसेचनस्वेदनबृंहणानि योगतः कुर्यात् । काम्बोजीकसेरुकोशीरनालिकाविशमृद्वीकानां निष्क्वाथेन सर्पिर्मण्डं विपाच्य तेन स्नेहेन विधिवदनुवासनं दद्यात् । यवबदरचूर्णानां मधुसंयुक्तं द्रोणमात्रं तु भोजयेत् । निस्तुषांस्तु माषान्दध्युदश्विदम्लसिद्धान्सर्पिषा प्रभूतेन युक्तान्सलवणान्भोजयेत् । वेणुपर्णाशिनमथैनं कृशरां सुस्निग्धसलवणां भोजयेत् । सायं चैनं वाराहेण मांसेन सुस्निग्धेन सुलवणेन भोजयेत् । अथवा खरकरभतुरगशशकप्लवंगोरभ्रशूकराणां मांसैर्दधिमस्तुसुरासौवीरकघृतमण्डेषु रसं कृत्वा पाययेत् । एतेषामेव यथोपपत्त्या वेसवारैर्भोजयेत्ससर्पिष्कैः । कङ्गुयवगोधूमचूर्णानि तिलमाषयोश्च निस्तुषयोः कृत्वा तेषां नव भागान्दशमं पिप्पलीशृङ्गवेरयोश्चूर्णभागमेतानि विधिवत्पयसि पक्त्वा मधुघृताभ्यां सह भोजयेत् । शृङ्गाटकोशीरशतावरीमूर्वाविशमृणालविदारीकशेरुकाः पयसि समावाप्य दधि जातरसं कृत्वा सौवीरकघृतमण्डेषु बदरक्षोदमिश्रेषु च्छागमृगमांसं साधयित्वा रसं पाययेत् । मांसेन चैनं भोजयेत् । बिल्वतिन्दुकीघोण्टामलकफलानि प्रियङ्गुककुभाशोकवल्लीनां त्वक्चूर्णैरासुनुयात् । आसवं तं मांसस्थितं जातप्रमाणमासायंभोजनादष्टभागं दद्यात् । काचमाचीपत्रफणिज्जकाश्मन्तकफलचूर्णैश्च नस्यमध्मापने कुर्यात् । श्वशृगालखरनकुलानां मांसोष्मणा स्कन्धे स्वेदं कुर्यात् । एकस्य

---

१ क. °द्वा सामधु मन्येत । तावत्तन्मध्ये सं° । २ क. °रतुर° । ३ क. ख. °सुनया° । ४ ख. स्कन्धस्वेदं ।

द्वयोः सर्वेषां वा यथोपपत्त्या, अजस्य सर्वश्वेतस्य सर्वलोहितवर्णस्य वा पिङ्गलस्य शुनस्तरक्षोर्वा रोहितकृष्णमत्स्ययोर्वा हृदयेन सघृतेन धूपयेत् । मूषकस्य क्षारकायस्य वा लावककाकयोर्वा मेदसा नेत्रयोरञ्जनं धूपनं च कुर्यात् ॥

तत्र श्लोकाः—

दुश्चिकित्स्यतमो ह्येष पाकलः प्राणनाशनः ।
मृदुग्रहः समाख्यातो राजयक्ष्मा सुदारुणः ॥
मृदु पूर्वं गृहीत्वैष क्रमाद्भवति दारुणः ।
यस्मात्क्षपयति प्राणांस्तस्मादेष मृदुग्रहः ॥
जीवेत्स चतुरो मासान्षड्ढष्टौ वाऽपि जीवति ।
जीवेत्संवत्सरं वाऽपि न च रोगात्प्रमुच्यते ॥
शान्तिस्वस्त्ययनैर्धूपैरभ्यङ्गैः पानभोजनैः ।
नस्यप्रध्मापनैः स्वेदैः सुप्रयुक्तैस्तु साध्यते ॥
य एतं साधयेद्वैद्यः पाकलं तु मृदुग्रहम् ।
स भिषग्दानपूजाभिः पूज्यस्तु सततं नृपैः ॥
इति मृदुग्रहः ( इपाकलहेतुलक्षणचिकित्सितानि ) ।

---

अथातः कुक्कुटपाकलचिकित्सितं व्याख्यास्यामः—इति ह स्माऽऽह भगवान्पालकाप्यः ।

स यदा वारणः पुरप्रमर्दनादिभिः कर्मभिरतियोगेन पीडितोऽतिमात्रं वातप्रकोपकरमाहारमलवणमस्नेहमतिक्रान्तो भोज्यते हन्यते बध्यते वा गाढं तस्य व्यायामादतिमात्रमभिरूक्षकटुकषायाहारस्य वातः प्रकुपितोऽत्यर्थमेतानि लिङ्गानि दर्शयति—

प्रवेपते प्रहृष्यति पतति परिवर्ततेऽश्ववत्, नदति ताडयते ध्यायति शिरसा भूमितलमाहन्ति, कूजति निःश्वसिति, संरक्तनयनः प्रेक्षते, अष्ठीलिकाभ्यां धरणितलमाहन्ति, ललाटेन वा, *तिष्ठते, कुण्डलीकरोत्यात्मानं समन्तात्परिकर्षति, व्याददाति मुहुर्मुहुर्मुखम्, अतिसार्यते, मत्त इव भवति भूतोपसृष्ट इव

---

* स्थेयाख्यायां प्रकाशने वा तङ् ।

---

१ क. °कस्याक्षा° । २ क. वा वाचक° । ३ क. पालकः । ४ क. एनं । ५ क. पुरः प्र° । ६ क. ध्यापयति । ७ ख. °टेनावतिष्ठ° । ८ ख. अतिसीर्यते ।

च लक्ष्यते ध्यायति कुप्यति, कुक्कुट इव कूजतीति कुक्कुटपाकलः । तं वैद्य एतैर्लिङ्गैरुपलभ्य कुक्कुटपाकलगृहीतमिति विज्ञाय चिकित्सितुमुपक्रमेत—

यवक्षारसमुद्रलवणबदरबिडङ्गहरिद्रामरिचपिप्पलीः समभागाः संकुश्य दधिमधुघृतसंयुक्तान्षोडश कवलान्भोजयेद्यथाग्निवर्ष्म विभज्य वारणम् । अथार्कोरुबूकवत्सकतर्कारीशोभाञ्जनकाढकीनां मूलफलपत्राणि संहृत्य मधुरसापाठाचित्रकांशुमतीपृश्निपर्णीनां च मूलानि कुटजनीपनिर्गुण्डीनां फलानि संक्षुद्य सैन्धवसामुद्रबिडयवक्षारकुलत्थाम्लदधिमस्तुसौवीरकैः सह संयोज्य भोजनायोपाहरेत् । (*अथवा न्यग्रोधाढक्युरुबूकपाटलीकर्पासीनां मूलफलपत्राणि संहृत्य मधुरसापाठाचित्रकांशुमतीपृश्निपर्णीनां च मूलानि कुटजनीपासनशल्लकीनां फलानि संक्षुद्य सैन्धवसामुद्रबिडयवक्षारैः संयोज्य नाडीस्वेदं कुर्यात् । एतेषां च पत्रभङ्गेन सुखोष्णेन स्वेदयेत्)। कुक्कुटस्य कृष्णमत्स्यस्य वा रुधिरेणाञ्जनधूपनम् । पश्चाङ्गस्य निम्बस्य वा मुखे शिरसि शरीरे च कृत्वा नक्तमालफलश्वेतसर्षपकुलत्थहिङ्गुवजाजी(व)बर्बरतृणाश्वगन्धापूतिगन्धार्कविषाणिकाकौशिकैः सह वानररुधिरैर्धूपयेत् । भद्रमुस्ताकाश्मर्यकुस्तुम्बुरी(रु)सुरसपत्रबिडङ्गैस्तैलं विपाच्य विधिवदनुवासनं कुर्यात् । सर्पनिर्मोकवानररोमकुक्कुटमेदोभिरजाघृतसंयुक्तैर्धूपयेत् । काकमाचीपत्रफणिज्जककाश्मर्यकट्फलचूर्णैश्च नस्यं प्रधमनं कुर्यात् । अञ्जनं यवक्षारं काककुक्कुटयो रुधिरेण शिरीषफलसंयुक्तेन कुर्यात् । अतसीशीतशिवाकृष्णकन्दाहरितालमनःशिलासुवर्णपुष्पीमहाकन्दासर्जरसैः सूर्यसंकरणीकैरातमूलनलदवोरकसंयुक्तैः पुराणघृतेन संयोज्य धूपयेत् । आमोक्षाच्चैनं व्याधिमुष्णेनाम्बुना कम्बलैः प्रतिच्छाद्य विना शिरसा योगतः स्वेदयेत् । बिल्वफलानि सलवणानि निम्बपत्रपरिवेष्टितं च पिण्याकं भोजनकाले कवलान्दद्यात् । अथवा यवनालक्षारं सप्तकृत्वः परिस्रुतं सौवीरकं दधि चेत्येतेषामेकैकस्याऽऽढकमुपकल्प्य संयोज्य पाययेत् । भूयश्च मत्स्यरसं मयूररसं पाययेत् ॥

तत्र श्लोकौ—

गजप्राणहरो ह्येष व्याधिः कुक्कुटपाकलः ।
अनेन विधिना राजन्यथोक्तेन प्रशाम्यति ॥

---

* धनुराकारचिह्नद्वयान्तर्गतपाठो नास्ति कपुस्तके ।

---

१ क. °पालकः । २क. °ञ्जनं धू° । ३ क. ख. नश्यं । ४ क. °लयु° । ५ क. सूर्यकणर° । ६ क. °वक्षा° । ७ क. ख. °रिश्रुतं । ८ क. °पालकः ।

९

य एनं साधयेद्वैद्यः कष्टं कुक्कुटपाकलम् ।
पूजयेत्तं सदा राजा ब्रह्माणमिव वासवः ॥

इति कुक्कुटपाकलः ( सहेतुलक्षणचिकित्सितानि ) ॥

अथात एकाङ्गग्रहपाकलचिकित्सितं व्याख्यास्यामः, इति ह स्माऽऽह भगवान्पालकाप्यः ॥

इह खलु भो वरुणग्रहो नाम दैवाद्भवति दोषादित्येके। तस्य दैवादुत्पन्नस्य तावत्कारणं ब्रूमः । अथ यदा नगनदीनदसरस्तडागपल्वलादीनां तीर्थेष्वंशि-वेष्वज्ञातनामकर्ममर्मस्वदृष्टपूर्वेषूदकेषु हस्तिनं वरुणानुचरसेवितेष्वकृतनदीयज्ञेषु नैागबन्धनेषु पाययन्त्यवगाहयन्ति वा हस्तिजीविनः प्रमादान्मोहादज्ञानाद्वा, तदा वरुणस्तेनाभिभूयते । अथ वा देवतायतनपाखण्ड्यावसथाश्रमभञ्जनाव-मर्दनाच्छून्यागारचतुष्पथमहानदीसंकटनिर्झरनिकुञ्जेषु सुदारुणेषु ( *महाप-थनगरसंगमपथेषूग्रदारुणेषु ) तिथिनक्षत्रेषु श्मशानपरिवासाद्भवति । अथवा मन्त्रयोगादुग्रसिद्धचारणमातङ्गशाकिनीन्द्रजालिकशबरबर्बरादिभिरेवंविधैरन्यैश्च मायाविभिरुपहारार्थं गृह्यतस्तथा भवति। भवति च भूतपिशाचयक्षराक्षसनिरी-षणात् । तस्यैवं दैवादुत्पन्नस्य निदानमुपवक्ष्यामः—

हस्तगात्राणामन्यतममङ्गं न शक्नोति संकोचयितुमुत्क्षेप्तुमासितुं परिक्रु(क्र)ष्टुं वा बद्ध इव भवति, निःश्वसिति ( *भ्रमति परिणमति ) संकुचति नदति ध्यायति पर्यश्रुनयनः, तस्यैकाङ्गग्रहणादेकाङ्गग्रहणपाकल इत्याख्यातः । तस्य स्थले जले वा निषण्णस्य निवृत्तं चिकित्सितम् । अथापि यन्तारमिति विचिन्त-यन्धावति स्थलाज्जलाद्वा । यदा च कमलकुमुदकुवलयतामरसकल्हारोत्प(*ला-नामन्येषां वा ज)लजातानां कुसुमानां समानगन्धः, तदाऽप्यस्य निवृत्ता प्रति-क्रिया । प्रकृतिस्थगन्धस्यापि सतो यदि ( *भवति ) हरितालहिङ्गुलमनः-शिलानामन्यतमेन सवर्णता, तदाऽप्यस्य निवृत्तः प्रतीकारः । अविवर्णस्यापि विगन्धस्य प्रभावतः करगात्रापरोदीनां व्यापाराणां पक्षस्तनस्तब्धस्यापि सतोऽङ्गस्य प्रतीकारं वक्ष्यामः—

स्वस्तिकापूपसंयावपूपोल्लापिकापरमान्नगन्धधूपसंयुक्तानि स्थलजलजानि कुसुमान्याहृत्य सौवर्णान्स्वस्तिकांश्चोपहृत्य कन्याः संतोषयित्वा कृतमङ्गला अहते वाससी परिहिता नद्या बलिमुपहरेत्सतूर्यघोषैः । वैद्यश्चाप्युपवासं (स) प्रयतोऽ-

* 'धनुराकारचिह्नचतुष्टयान्तर्गतपाठः कपुस्तके नास्ति ॥

१ क. °ष्वविशेष्व° । २ क. नागबन्धेषु । ३ क. °वासवद्र° । ४ ख. °पि यातार° । ५ क. °वृत्तप्र° । ६ क. °राव्या° । ७ ख. °हतवा° ।

हृतवासास्तत्र यथोक्तमुपहृत्याग्निं प्रागुत्तराग्रैर्दर्भैर्हस्तिनीसमीपे स्थण्डिलं परिस्तीर्योदुम्बरशाखाभिः कुसुममालाभिश्च परिवार्य तत्रौदुम्बरीभिः समिद्भिर्वह्निं प्रज्वाल्य सौवर्णस्वस्तिकादिभिरर्चयित्वा गोदधिमधुघृततिलैर्वरुणाय हुत्वा प्रसन्नां मैरेयं सीधुमुपहृत्य बलिं ब्राह्मणान्स्वस्ति वाचयित्वा वैद्यः प्राङ्मुखो रात्रौ मन्त्रेणानेन जुहुयात्—'नमोऽस्तु वरुणदेवाय सह नदीभिः स्वाहा। नमोऽस्तु पाशेभ्यो नागेभ्यो ग्रहेभ्यः स्वाहा । स्वस्त्यस्तु ते हस्तिने स्वाहा' हुत्वा ब्राह्मणान्स्वस्ति वाच्य हस्तितीर्थे बलिं वरुणायोपहरेत् । सीधुं मैरेयं प्रसन्नां सुरामुद्धृत्य बलिं रात्रौ कृताञ्जलिर्वैद्यः प्रयतो हस्तितीर्थाभिमुखो मन्त्रमिमं ब्रूयात्—

इन्द्रेण दत्तां पृथिवीं राजा पाति स्वकर्मणा ।
तमिन्द्रं पार्थिवं देवा गोपायन्ति सवाहनम् ॥
येनैष धर्षितो हस्ती तं क्रुद्धः पृथिवीपतिः ।
शक्तो निर्विषयं कर्तुमिन्द्रदत्तो न संशयः ॥
मुक्ते ग्रहेण मातङ्गे पूजां राजा करिष्यति ।
तस्मान्मुञ्चतु मातङ्गं मा हिंसीष्ट (स्त्वं) नमोऽस्तु ते ॥
रक्षोभिस्तु गृहीतानां ददाति पिशितौदनम् ।
गन्धर्वकिंनरेभ्यस्तु गीतवादित्रनिःस्वनम् ॥
नागेभ्योऽपि नृपो दद्याद्दधि कुल्माषमोदनम् ।
इति त्रिरुक्त्वा[†] भूयश्चिकित्सितुमुपक्रमेत् ॥

कालकन्दाविदारीकुम्भीकानि तिलपिष्टं च सहोत्क्वाथ्य नाडीस्वेदं कुर्यात् । अथवा नीलोत्पलकुमुदशृङ्गाटककसेरुकशालूकशैवालनलिनकुवलयानि निष्क्वाथ्य नाडीस्वेदं कुर्यात् । उदक्या ह्युत्पलकन्दैश्च घृतेन संसृज्य धूपयेच्छ्रो(स्रो)तोभ्यः। अथवा मत्स्यकच्छपकुक्कुटैः सघृतैर्यवहिङ्गुभिर्धूपयेत् । जलचराणां च सत्त्वानां शिशुमारादीनां रसेन भोजयेत् । अथवाऽजगरमकरचार्मिराजीरसेन भोजयेत् । जलचराणां च पक्षिणां यथालाभं रसेन भोजयेत् । अयोगुडैरुष्णमम्भः पाययेत् । आव्याधिप्रमोक्षाच्च वेल्लनलङ्घनप्रसारणचङ्क्रमणानि शनैः शनैः कारयेत् । नदीं चैनं न गमयेदिति ॥

तत्र श्लोकौ—

[†] इति त्रिरुक्त्वाऽसौ भूय इति पाठः कदाचिद्भवेत् ।

१ क. °न्नां सुरा° । २ क. °मिन्द्रपा° । ३ क. शक्रो । ४ क. °कुम्भिकानिल° । ५ क. °क्यायुत्प° । ६ क. °नं निग° ।

वरुणं प्रतिपाद्यैवं क्रियाः कुर्वन्यथाविधि ।
मोक्षयेत्कुशलो वैद्यो वारणं वरुणग्रहात् ॥
संजातबलमांसं तमेकाङ्गार्दितपाकलात् ।
राज्ञः संदर्शयेद्वैद्यश्चन्द्रं मुक्तमिव ग्रहात् ॥

(इति) एकाङ्गग्रहः ( इहेतुलक्षणचिकित्सितानि ) ॥

अथातः प्रसुप्तपाकलचिकित्सितं व्याख्यास्यामः—इति ह स्माऽऽह भगवान्पालकाप्यः ॥

अथ यदा वारणस्य क्षारलवणकटुतिक्तकषायरूक्षाहाराद्वायुः प्रकुपितः कफपित्तौ युगपद्व्यापादयति । ततोऽस्य दीप्ताग्नेरुदराग्निरतीव भक्ष्यभोज्यपेयलेह्याद्यैराहारैर्दत्तैर्न तृप्यति, भृशमश्नाति, स्वयं च भोजनाभिनन्दी भवति, तृणमप्यत्यर्थमत्ति । ततोऽस्य मांसमुपचीयते, श्लेष्मा मेदश्च वर्धते । तत्र तन्द्रानिद्राक्लमालस्यान्यस्य जायन्ते । स च शिथिलबलो विपुलतरमांसमेदस्त्वात्कृच्छ्रेण गच्छति । स्वल्पमपि च शीतं बहु वेत्ति, सुखायते चोष्णमत्यर्थम् । मदलिङ्गानि[1] दर्शयति, न च माद्यति । विष्टब्धचक्षुः स्वप्नशीलः शय्याभिकामो गम्भीरवेदी । इत्येतैर्लिङ्गैरुपपन्नं दृष्ट्वा प्रसुप्तपाकलोपसृष्टं वारणं विन्द्या(द्या)त् ॥

तस्य साधनमुपदेक्ष्यामः—कार्श्यमस्य विधीयते, न स्थौल्यम् । यवान्नं कोद्रवान्नं चास्मै भोजनं दद्यात् । कुटजपिचुमन्दैः पिण्डांस्त्वग्भिः[2] समुद्रान्साधयित्वा खदिरसारनिष्क्राथेन सह श्वाविन्मांसरसेन भोजनमस्मै दद्यात् । वेणुवेतसपत्राणां पत्रभङ्गांश्च भोजयेत् । तस्मिन्परिणते च माहिषरसमनुपानं दद्यात् । ततो भद्रदारुवचाभयाकृष्णकन्दाशृगालिकानक्तमालत्वग्हरीतकीमधुरसातिक्तरसो(सा)भिः संचूर्णिताभिरासवान्कृत्वा मधुसंयुक्तं[3] मासस्थितं पाययेद्द्विरदम् । करवीरोरुबूककर्णिकारं बृहत्यौ च तिलपिष्टं[4] च सहोत्क्वाथ्य नाडीस्वेदं कुर्यात् । निम्बकुटजखदिरत्वचं मधुसंयुक्तं (क्तां) भोजयेत् । सक्तुद्रोणं चैनमुदमन्थं मधुसंयुक्तं पाययेत् । लगुडैरहनि स्वभ्यक्तस्याधोऽङ्गं मर्दयेत् । मृदिताङ्गस्य चाभ्यङ्गमनु प्रतिशय्यां वातातपसेवां च यथायोगं योजयेत् । पाठाचन्दनहरिद्राद्वयभद्रदारुमहापञ्चमूलैः सह माषान्विपाच्य सप्तपर्णत्वचा सह संक्षुद्य विधिवत्कारयेत् । किण्वोदुम्बरककुभधवनिम्बाम्राजकर्णानां निष्क्राथे मण्डोदकं स्यात् । वचारोध्रपिप्पलीमञ्जकोशीरहरीतकीशुण्ठीभल्लातकमरिच[5]-

१ क. मन्दलिङ्गानि । २ क. °न्दत्त्वग्भिण्डां° । ३ क. मधुरसंयुक्तं । ४ ग. °त् । तिल° । ५ ग. °कीनिर्गुण्डीभ° ।

पिप्पलीफणिज्जकशतपुष्पातगरैलानां सूक्ष्मचूर्णानि कृत्वा तस्मिन्मण्डोदके किण्वेनानेन चूर्णैश्चाऽऽसवं कृत्वा मांसस्थितं पाययेद्द्विरदम् । एतत्पानं पूर्वोक्तेन प्रमाणेन । एवमेतैरुपक्रमविधिविशेषैर्नश्यति प्रसुप्तपाकलः ॥

तत्र श्लोकौ—

कफपित्तसमुत्थस्तु पाकलः पृथिवीपते ।
तिक्तैः कषायैः कटुकैश्चिकित्सेन्मतिमान्भिषक् ॥
प्रसुप्तपाकलं चैनं विधिनाऽन्येन पार्थिव ।
साधयेद्यो भिषक्सम्यक्स पूजामाप्नुयादिति ॥

इति प्रसुप्तपाकलः ( सहेतुलक्षणचिकित्सितानि । )

अथातः कूटपाकलचिकित्सितं व्याख्यास्यामः, इति ह स्माऽऽह ( भगवान् ) पालकाप्यः ।

तत्र गजस्याभीक्ष्णशो रूक्षान्नयवसकवलकुवलतिक्तकटुकषायलघुविषमरूक्षबह्वन्नभोजनात्, अथवाऽतिगुरुभारहरणतरणविलङ्घनात्कुप्यत्यनिलः । तदात्मकश्च कूटः । कूटो नामाऽऽशुघातनम् । आशुघातनाद्द्विरदानाम् । तस्मात्—कूटपाकलमित्याचक्ष्महे ।

तत्संप्रयोगाद्द्विरदः स्तब्धकरचरणनयनकर्णलाङ्गूलः पतत्यशनिहत इव, धरणिगतहरिणशिशुरिव कूटेनाभिहतो म्रियते । क्षिप्रमेव निपतनाच्चास्य न निदानोपलब्धिः ।

अथ चैनमेतेषु कालेषु भजते । स्तम्भोपाश्रयणं प्रतिपानकाले कल्पनाकल्पनवीथी विनयक्रिया, अवगाहस्थानाध्वगमनादिकालेषु ।

तत्राल्पबुद्धयो द्विरदमवनिपतितमवेक्ष्य मन्यन्ते लक्षणाभावाद्विषपरिगत इति केचित् । ग्रहेणायं गृहीत इत्यपरे मूढा मिथ्याज्ञानात् । सनिदानौ हि तौ, अयमनिदानश्चाचिकित्स्यश्चेति ।

तत्र श्लोकः—

यथा हि हन्यात्कूटेन मृगशावं वनेचरः ॥
तथा वातात्मको नागं हन्ति वै कूटपाकलः ॥

इति कूटपाकलः ( सहेतुलक्षणाचिकित्स्यत्वानि ) ॥

अथातः पुण्डरीकपाकलचिकित्सितं व्याख्यास्यामः, इति ह स्माऽऽह भगवान्पालकाप्यः ॥

---

१ क. °चूर्णं कृ° । २ ख. मांसास्थितं । ३ ख. °गतो ह° । ४ क. कपालेषु । ५ ग. कल्पनवी° ।

इह खलु भो नवमः पुण्डरीको नाम पाकलः संभवति रूक्षकटुकषायक्षारतिक्तलवणतीक्ष्णोष्णाम्ललघुविषमभोजनात्तस्य मारुतः कुपितो रक्तं पित्तं च शरीरे समन्ताद्विक्षिपति। ततोऽस्य लिङ्गानि दर्शयति—

करचरणजघनोदरोरुपृष्ठपार्श्वाण्डकोशमुखशिरोग्रीवाङ्गुलिलाङ्गूलेषु यः वा तत्र देशेष्वसितहरितनीलपीतरक्तारुणानामन्यतमवर्णानि कृष्णपर्यन्तानि मण्डलानि प्रादुर्भवन्ति भृशवेदनानि सोष्माण्यग्निदग्धानीव विसर्पीणि पुण्डरीकपत्रप्रतिमानि यतः, तत एष पुण्डरीकपाकलो विसर्पः।

तेनोपसृष्टो वारणः कर्दमेन पांशुभिर्वा विकिरति मण्डलानि बहुश उष्णद्वेषी संमीलितनयनः कूजति निःश्वसिति दह्यमानः।

तस्य पूर्वं पवनमेवोपशमयेत्, प्रवर्तकत्वाद्दोषाणाम्। पित्तमप्याशुगतित्वात्तीक्ष्णत्वाच्च। तस्यावगाहावसेकपानानि निवर्तयेत्। प्राणधारणामात्रं सुखोदकमल्पाल्पं देयम्। सर्पिषेवाभ्यङ्गो घृतमण्डेन वा बहुशः प्रशस्तः। परिषेकश्चास्य सुरया कार्यः। अथवाऽतसीकर्पासीशतपुष्पोरुबूकाटरूषकतर्कारीसुरसाकरवीरभङ्गनिष्काथेनाभ्यज्य परिषेचयेत्। अथवा सुमनासुरसातर्कार्यहिंस्रासारङ्गेष्टादीर्घवृन्तार्कपत्रभङ्गनिष्काथेन स्वभ्यक्तशरीरं परिषेचयेत्। अथवाऽऽढक्याटरूषकारलुपाटलीकर्पासीकरवीरोरुबूकपुनर्नवास्फूर्जार्कपत्रभङ्गनिष्काथेनाभ्यज्य परिषेचयेत्। अभ्यङ्गपरिषेकैश्छविं प्रसाद्य ततः कुटकबीजखदिरनिम्बत्वचः क्षोदयित्वा गोमूत्रे त्रिरात्रपर्युषितानुभयकालं त्रींस्त्रीन्कवलान्पित्तनिर्हरणार्थम्, (*अथवाऽश्मन्तकचारग्वधधन्वनैस्तेनैव विधिना भोजयेत्पित्तनिर्हरणार्थम्, अथवा—अश्मन्तकार्जुनबिल्वत्वचः संक्षुद्य गोमूत्रे त्रिरात्रपर्युषिताः, अथवा—चारुककुभवरुणककदम्बसर्जभल्लातकानां त्वचस्तेनैव विधिना भोजयेत्पित्तनिर्हरणार्थम्। एतेनैव कल्पेन चन्दनलकुचसोमवल्कधवारग्वधत्वचस्तेनैव विधिना भोजयेत्पित्तनिर्हरणार्थम्।) एवमेवाऽऽरग्वधदन्तीचारुकुम्भीकत्वचः क्षोदयित्वा गोमूत्रे रात्रिपर्युषिता भुक्त्वा वारणः पित्तं निरूहति केतकीसुरसाकुठेरकेन्दीवरपत्रैः सह कृष्णतिलान्पयसा पिष्ट्वा कल्केन मण्डलानि प्रक्षिपेद्रुजापहरणार्थम्। वर्णप्रसादनार्थं च तरुणोदुम्बरतगरकृष्णतिलान्क्षीरेण पिष्ट्वा तैर्घृतसंयुक्तैः प्रलेपयेत्। मांसीकाकमाचीपद्मकमञ्जिष्ठाकल्कं सलि-

* धनुराकारचिह्नान्तर्गतपाठः खपुस्तके नास्ति।

१ क. देहेष्व°। २ क. सोष्मणोग्नि°। ३ क. विसर्पिणि। ४ क. पूर्वमे°। ग. सर्वेप°। ५ क. निवर्तयते। ६ क. °स्त्राशाङ्गष्टा°। ७ क. °रूषार°। ८ क. °स्फूर्जाप°। ९ क. °ता उभ°। १० क. मण्डलेन। ११ क. °म्। सर्वप्र°।

लेनाऽऽलोड्य मण्डलानि म्रक्षयेत् । उरुबुकेङ्गुदीकरञ्जद्वयशिरीषाणां बीजैः कल्कपिष्टैस्तैलं विपाच्य प्रसन्नया सह संयोज्य मण्डलानि म्रक्षयेत् । शालीनां षष्टिकानामोदनं मयूरक्रौञ्चहंसबलाकानां वाऽन्यतमस्य रसेन भोजयेत् ॥

तत्र श्लोकः—

अभ्यङ्गैर्नृपवर सेचनैः-प्रदेहैः[1] पानैश्च प्रशममुपैति पुण्डरीकः ॥
वैद्येन प्रथितगुणेन साध्यमानो दीप्ताग्निः सलिलघटैरिवावसिक्तः[2] ॥

इति पुण्डरीकपाकलः (लहेतुलक्षणचिकित्सितानि) ॥

अथातो महापाकलचिकित्सितं व्याख्यास्यामः, इति ह स्माऽऽह भगवान्पालकाप्यः ॥

अथ यदा वारणो नवान्नस्निग्धमधुरघनगुरुशिशिरगुडदधितिलपललजल-[3]चरानूपमांसरसतृणकवलकुवलपल्लवाहारोऽत्यर्थं सुखितत्वादव्यायामशीलः सहसा प्लवजलवितरणानि विनर्मनस्थानानि कार्यते । तस्य वायुः प्रकुपितः कफमादाय हृदयं संपीड्य तिष्ठन्पार्श्वयोः कृच्छ्रां वेदनां जनयति ।

स तया स्वनति जलद इव गम्भीरम्, अतिसार्यते श्लेष्मवत् । असहमानश्च तां रुजं प्रवृद्धपादप इवोन्मूलितः पतति, हठेन पुनश्चोत्तिष्ठति, तटादीन्प्रतिहन्ति, निष्पिनष्टि च करं भूमौ, हृदयपीडितश्च । तं वातकफात्मकं महापाकलं विद्धि । हृदयग्रहणान्महापतनान्महापाकलमित्याहुः ।

भैषज्यविधिरस्य शमीतिन्दुक्याढकीबिल्वशृङ्गाटकैश्च मत्स्यरसं साधुसिद्धं भोजनाय पानाय चास्मै दद्यात्, ततो नश्यतः कफपवनौ । पयश्चैकान्तरमेभि-[5]रेवौषधैः शृतं पाययेत् । अनुलोमो भवति तेनास्य वायुरुद्धतः । सिद्धं चास्मै दध्ना सहार्द्रकमोदनं घृतस्निग्धं सलवणं भोजनाय दद्यात् । तालपत्रीं गोस्तनिकां नागबलां गवेधुकां च क्षुण्णां मधुमिश्रान्कवलान्दद्यात् । मधु-[4]लाजाश्च भोजनम् । तरुणाक्षिकवार्ताकीनक्तमालफलानि च क्षुण्णा(*नि सक्षौद्राणि भोजयेत् । तेनास्य कफपवनौ नश्यतो युगपत् । जम्बूशल्लक्योर्वा किसलयानि च क्षोदयित्वा मधुमिश्राणि भोजनाय दद्यात् । हरिद्राकुशमूलल-शुनविडङ्गेन्द्रयवकङ्कुष्ठानि क्षोदयित्वा ) मधुमिश्राणि भोजयेत्[6] । सपत्रांश्च

* धनुराकारचिह्नान्तर्गतपाठः कपुस्तके नास्ति ।

१ क. सेचनप्रमेहैः । २ क. °रितीव सिक्तः । ३ क. °तिलापललजलजलच° । ४ क. °मस्था° । ५ क. °भिरिवौ° । ६ क. भोजनं ।

शाकवल्लीक्षुण्णान्मधुमिश्रान्कवलान्दद्यात् । ( *अथवाऽश्मन्तकमुष्क)कोदु-म्बरप्लक्षाणां त्वचः कल्पयित्वा गोक्षुरकमधुरसाजीवन्तीबिल्वानि कुरुविन्दं वा क्षोदयित्वा क्वाथयेत् । तेन क्वाथेन तैलं पक्त्वा नागमनुवासयेत् । अश्वाश्वतर-खरोष्ट्रमहिषाणां मांसरसैः पानभोजनमुपहरेत् । तेनास्य नश्यतः कफपवनौ ।

तत्र श्लोकाः—

इत्येते नृपवर पाकला दशोक्ता भैषज्यैः सह सनिदानसंभवास्ते ।
तत्र द्वौ परमसुदारुणावसाध्यौ यः शुद्धो भवति हि कूटपाकलश्च ॥
अष्टानामिह हि चिकित्सितं मयोक्तं सर्वे ते नृपवर मृत्युदण्डकल्पाः ।
यो देशप्रकृतिवयःप्रमाणसात्म्यान्यायुश्च प्रतिगजमीक्ष्य शास्त्रचक्षुः ॥
नागानां ज्वरमुपहन्ति पाकलाख्यं कर्मज्ञः स भवति राजहस्तिवैद्यः ।
एतान्यो भिषगिह साधयेत्स पूज्यो वेदज्ञैरिव हवनेषु वज्रहस्तः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थाने
पाकलाध्यायोऽष्टमः† ( नवमः ) समाप्तः ॥ ९ ॥

अङ्गराजो महाप्राज्ञः कुबेरसमविक्रमः ॥
हस्तिशालासमासीनं पालकाप्यं स्म पृच्छति ॥ १ ॥
भगवन्यत्त्वया प्रोक्तं रोगज्ञानं सलक्षणम् ॥
तत्र मे संशयः कश्चित्तं मे शंसितुमर्हसि ॥ २ ॥
शुद्धश्लेष्मसमुत्पन्नः शुद्धपाकलमादितः ॥
प्राग्भागोष्णः कथं तेन पश्चाद्भवति शीतलः ॥ ३ ॥
न चोष्णलक्षणस्तेषां हस्तिनां जायते ज्वरः ॥
कथं साध्यश्च बालोऽत्र कूटश्चैव न सिध्यति ॥ ४ ॥
समानदोषैर्विभेन्द्र तावुभावपि कीर्तितौ ॥
पकलः पुण्डरीकश्च वातपित्तोद्भवावुभौ ॥ ५ ॥
विकारेषु विरुध्येते चिकित्सायां तथैव च ॥
शनैः क्षीयेत वा केन हेतुनाऽथ मृदुग्रहः ॥ ६ ॥
कथं च भूतसंसृष्टो दुष्टः कुक्कुटपाकलः ॥
देवाश्च केचिदिच्छन्ति दोषतश्चापरे जनाः ॥ ७ ॥

---

* धनुराकारचिह्नान्तर्गतपाठः कपुस्तके नास्ति ।

† नवम इत्येव युक्तम् । यद्वाऽयमध्यायसमाप्त्युल्लेख एव प्रामादिकः, प्रथम-स्थानेऽष्टादशाध्यायप्रतिज्ञाविरोधात् ।

---

१ क. यादृशः प्रकृतिवयोऽप्रमा° । २ ग. तवोक्तल° ।

एकाङ्गग्रहसंज्ञस्तु पाकलो मुनिसत्तम ॥
दृश्यते भूतसंहृष्टो दोषतश्च न दृश्यते ॥ ८ ॥
बेठरत्वेन (?)संयुक्तः कथं तीक्ष्णोदरानलः ॥
सारबन्धोपलक्षश्च प्रसुप्तः पाकलो भवेत् ॥ ९ ॥
महापाकलसंज्ञश्च श्लेष्मणोपचयाद्भवेत् ॥
न चाऽऽदौ क्रियते कस्मात्प्रतीकारः कफस्य वै ॥ १० ॥
महत्त्वं चैव यत्तस्य तन्मे शंसितुमर्हसि ॥
एतान्सपरिहारान्मे सनिरुक्तान्ससंभवान् ॥ ११ ॥
तत्त्वेन निखिलान्प्रश्नान्गूढार्थान्वक्तुमर्हसि ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥ १२ ॥
शृणु राजन्नवहितो यन्मां पृच्छसि संशयम् ॥
नाभेरुपरि पित्तस्य स्थानं हृदयमाश्रितम् ॥ १३ ॥
नाभेः पश्चिमभागे तु स्थानं वायोर्निगद्यते ॥
प्रोक्तान्यामाशयः पर्वाण्युरः कण्ठः शिरस्तथा ॥ १४ ॥
स्थानान्येतानि राजेन्द्र श्लेष्मणो विद्धि दन्तिनाम् ॥
तेन क्षुद्राभिभूतस्य स्थानात्पित्तं तु विच्युतम् ॥ १५ ॥
श्लेष्मणा पश्चिमं भागं नीयते सह वायुना ॥
ततः श्लेष्मानिलौ तत्र शीतलं कुरुतो गजम् ॥ १६ ॥
प्राग्भागे चोष्णताऽप्यस्य सा तु पित्तस्य वीर्यतः ॥
कदाचिदेकमत्यङ्गं यदा गच्छति मारुतः ॥ १७ ॥
तेन कालेन राजेन्द्र युज्यते तस्य भेषजम् ॥
तेन सिध्यति बालोऽयं कूटे हेतुः प्रवक्ष्यते ॥ १८ ॥
कूटे निदानं वातस्तु सर्वदेहाद्विमुच्यते ॥
सहसा हृदयं गच्छेद्धृतश्चापि पातयेत् ॥ १९ ॥
हृदयग्रहणादाशु कूटस्तेन न सिध्यति ॥
व्यानो वायुः प्रकुपितो ह्यपानसहितो नृप ॥ २० ॥
पित्तमाक्षिप्य जनयेत्पक्वलं कोपमाश्रितम् ॥
गुरुस्थानोपरोधाच्च रौद्रकर्मा भवेद्गजः ॥ २१ ॥

१ ग. °संदुष्टो । २ ग. ववरत्वेन । ३ क. °दनानिलः । ४ क. ग. पश्च-फेरः । ५ क. वार्यत । ६ क. °दङ्गं प्र° । ७ क. प्रचक्षते ।

इत्येष पक्कले हेतुः पुण्डरीके प्रवक्ष्यते ॥
मारुतः कुपितः पित्तं कोपयेन्मनुजाधिप ॥ २२ ॥
पित्तं च रक्तसहितं त्वग्दूषयति दन्तिनाम् ॥
तस्माद्वाताधिकश्चायं त्वचि कोपेन लक्ष्यते ॥ २३ ॥
मारुतः कुपितो देहे कारणैः पूर्वकीर्तितैः ॥
रक्तं मांसं च मेदोऽस्थि मज्जां शुक्रं च दन्तिनाम् ॥ २४ ॥
यस्मात्क्रमात्क्षपयति तेनैष क्षीयते शनैः ॥
श्रमाभिभूतो योऽत्यर्थं पेशलं न लभेत चेत् ॥ २५ ॥
समानः कुपितस्तस्य प्राणापानौ प्रदूषयेत् ॥
व्यानोदानौ च संदूष्य कुर्यात्कुक्कुटपाकलम् ॥ २६ ॥
शरीराणां च भूतानां विपर्यासस्ततो भवेत् ॥
विपर्यस्तेषु भूतेषु भवेद्भूतोपसृष्टवान् ॥ २७ ॥
तस्माद्भूतोपसृष्टोऽयं दुष्टः कुक्कुटपाकलः ॥
स्प(स्पृ)ष्टस्य दारुणैः पाशैर्नागस्य मनुजाधिप ॥ २८ ॥
पीड्यमानः(नं)शनैः पाशैर्वातपित्तं च कुप्यति ॥
तेनाऽऽदौ दैविको भूत्वा पश्चाद्दोषेण लिप्यते ॥ २९ ॥
आदानं चैवमेवास्य दोषाणां संप्रकीर्तितम् ॥
पित्तादानैर्गजे पित्तं वृद्धमग्निं विवर्धयेत् ॥ ३० ॥
तीक्ष्णज्योतिः स भवति सरदत्वं च गच्छति ॥
ततः शुषिरमांसत्वाद्वायुर्नागस्य कुप्यति ॥ ३१ ॥
श्लेष्माणं कोपयेत्पश्चाद्विकारैः श्लेष्मिकैस्ततः ॥
वातेन संचितः श्लेष्मा बठरं कुरुते गजम् ॥ ३२ ॥
स यदा बठरो नागः सहसा कर्म कार्यते ॥
समानः कुपितः प्राणः पश्चाद्दूषयते कफम् ॥ ३३ ॥
क्रियते हेतुनाऽनेन कृशत्वेन प्रतिक्रिया ॥
मारुतः कफमादाय हृदयं संसृतो यतः ॥ ३४ ॥
करोति महतीं पीडां तेनायं पाकलो महान् ॥
वातोऽत्र कारणं यस्मात्तेन वातप्रतिक्रिया ॥ ३५ ॥

---

१ ख. °वातं पि° । २ क. विवृद्धयेत् । ३ ख. संभवति । ४ ग. शुचिर° । ५ क. संश्रितो ।

कर्तव्या नृपशार्दूल पालकाप्यमतानुग ॥
महारोगो यतश्चायं पतनाच्च महद्भयम् ॥ ३६ ॥
उभयत्र महत्त्वाच्च महापाकलसंज्ञितः ॥
सुरेशापाद्गजेन्द्राणामन्तःस्वेदितुमोहितुम्(?) ॥ ३७ ॥
न चोष्मलक्षणस्तेषां दन्तिनां जायते ज्वरः ॥
तेनोष्मलक्षणस्तेषां ज्वरः समनुकीर्तितः ॥ ३८ ॥ ७४६ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थाने ज्वरहेतुविनिश्चयो नामाध्यायो +दशमः ( नवमः ) ॥ ९ ॥

---

## अथ दशमाध्यायः ।

---

अथातः स्कन्दाध्यायं व्याख्यास्यामः ॥

अङ्गाधिपतिः पालकाप्यमागतमभिवाद्य प्राञ्जलिरुत्थायोवाच रोमपादः— "स्कन्दा नाम ये व्याधयस्ते किमात्मानः कति कथं वा संभवन्ति कथं वा साध्याः स्युः" इति ॥

स एवमुक्त उवाच पालकाप्यः—स्कन्दा नामावस्कन्दनाज्जीवितस्य । शोषणं स्कन्दनमित्यनर्थान्तरम् । तस्मात्स्कन्दा इत्युच्यन्ते । शरीरापतनाच्चापतनकाः । श्वद्वात्संजायते वातात्संपित्ताच्च कफाच्च वातैः संहितात्रयः स्कन्दा भवन्ति । तेऽन्तरायाम—बहिरायाम—व्याविद्धस्कन्दा इति त्रयः । तेषामेकः कृच्छ्रसाध्योऽन्तरायामः । बहिरायाम—व्याविद्धस्कन्दौ द्वावसाध्यौ ॥

तत्रान्तरायामस्योत्पत्तिं निदानं चिकित्सितं च वक्ष्यामः ।

स तिक्तकटुकषायरसोपयोगात्, व्यायामव्यवायात्, अत्यध्वगमनाच्च विषमविरुद्धरूक्षाशनात्, अध्यशनादपि च विपर्यासान्मनसश्चोपतापात्, यवसानां च विपन्नगिरिजशुष्काणामुपयोगात्, वधबन्धाभ्याम्, मिथ्याभिघातात्प्रतिह-

---

+ यद्यपि पुस्तकत्रये 'दशमः' इत्येव पाठ उपलभ्यते, तथाऽपि 'नवमः' इत्येव युक्तम्, अस्याध्यायस्य पाकलरूपज्वरहेतुविनिश्चयत्वात्, पाकलाध्याय—स्कन्दाध्याययोर्मध्येऽस्य पृथक्संग्रहाध्यायेऽपरिगणितत्वाच्च । यद्वाऽग्रे स्वेद—शान्तिरक्षाध्याययोरिवात्राध्यायसंख्याङ्काभाव एव । अत्रोल्लेखस्तु प्राज्ञेन कृत इति प्रतिभाति ॥

---

१ क. °रसाया गजे° । २ क. °मादिवाम् ॥ ३७ ॥ ३ क. चोष्मा ल° । ४ क. °त्स्कन्द इत्युच्यते । ५ ख. °पतानाच्चापतान° । ६ ख. सहितात्रयः । ७ ख. °त्पत्तिनि° ।

स्त्यभिघातान्मदबलक्षयादुपधाभिश्च योगतः कुपितः पवनः सर्वाङ्गमनुसृतस्तं मवस्कन्दयति ॥

ततो विनमति, संकुचति कूजति विजृम्भते ( *अवेपते ) भ्रमति पतति निःश्वसिति परिवर्तते नदति ताडयति ध्यायति, शिरसा भूमिं गच्छति, निस्तब्धताम्रनयनः परिशुष्कताल्वोष्ठमुखः कृच्छ्रावस्थो वायुना पीड्यमानहृदयशरीरग्रीवागात्रापरः, ततः पुनश्चाष्ठीवाभ्यां गतो भूमिम्, उरो निर्भुजति, शिरो विधुनोति चैकपक्ष इव हतः, स्पन्दति नयनमेकम्, सृक्के कपोलमोष्ठं वा, घुरुघुरायमाणकण्ठः पुनश्च नष्टसंज्ञः पुनर्मृदुवेगः पुनश्च बलवत्पीड्यते । तस्यैतैर्निदानैरन्तरायामं निष्केवलं वातजमभिसमीक्ष्य चिकित्सितमुपक्रमेत ॥

स तु कदाचित्सिध्यतीति कृत्वा तस्य चिकित्सितं वक्ष्यामः ।

एलायुग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामकीः
स्पृक्काचोरकचोचपत्रतगरैः स्थौणेयजातीरसाः ।
शुक्तिर्व्याघ्रनखामराह्वमगरुः श्रीवासकं कुङ्कुमं
चण्डागुग्गुलुदेवधूपखपुराः पुन्नागनागाह्वयः ॥

एलादिको वातकफौ विषं च विनियच्छति ।
वर्णप्रसादनः कण्डूपिटिकाकोठनाशनः ॥

इत्येलादिगणः ।

ततः शौभाञ्जनकमूलैः सर्वगन्धैः सहिङ्गुयवघृतैर्धूपयेत्, करकर्णगुदनाभिमस्तककटनिर्याणानि सर्वच्छिद्राणि बहुना, बहुशः सर्वं वाऽपि शरीरम् । ततः पुनर्नवाग्निमन्थयूथिकातर्कारीवरुणकमधुशिग्रुरोहिषहिंस्रातिलचूर्णान्युरुबूकसारिवांशुमतीपृश्निपर्णीबृहतीद्वयवरुणकतिन्दुकभद्रोदुम्बरीवृक्षादनीः क्वाथयित्वा कम्बलप्रतिच्छन्नशरीरस्य परिषेकं बहुशो विदध्यात् । ततः पञ्चमूलाभ्यां वस्तुकवासिरपिप्पलीमूलहस्तिपिप्पलीकपित्थदेवदारुयववचाशृङ्गवेरगोक्षुरकसारिवाचित्रकान्समसलिले दुग्धे विपाचयेत् । आवापं चात्र दद्यात् । बिल्व(*घृतशालिपिष्टान्युपसंहृत्य परिस्राव्य विधिवत्पाचयेत् । ततः शणमूलाढकीमधुशिग्रूणां बीजानि ) कर्पासास्थीनि तिलयवातसीमाषसर्षपदेवदारुपू-

* धनुराकारचिह्नान्तर्गतः पाठः कपुस्तके नास्ति ।

१ ख. °भिश्चायो° । २ क. °स्तदव° । ३ क. ध्यापयति । ४ क. °रीरो ग्री° । ५ क. विषयं च नि° । ६ क. °गुदानाभिमस्तकनि° । ७ क. ख. °कटिप्टूक° । ८ ख. °वसाशृ° । ९ क. आदाय ।

थ्वीकादधिमस्तुसुरासौवीरकयवोदकेषु किण्वतण्डुललवणचूर्णानि प्रक्षिप्य घृततैलवसाभिश्च पाचयित्वा दर्वीप्रलेपेन पिण्डस्वेदेन वस्त्रोपनद्धेन स्वेदयेत् । एतैरेव सुखोष्णैर्गजं लिम्पेत्सशिरस्कं निवातस्थम् । भूयश्च बलातिबलांशुमत्युरुबूककपित्थबृहतीद्वयतिन्दुकभद्रोदुम्बरीगंडम्लबु(?) चाङ्गेरी द्वे त्रिभे शतावर्यहिंस्रापेहिवातातर्कारीवरुणैडगजलकुचमूलानि यवकोलकुलत्थनिष्पावाढकीशणबीजानि श्रीपर्णीपत्रमूलफलाग्निमन्थपाटल्युभौ गुन्द्रौ क्षुरकं च वसुकं वशिरांश्च संहृत्य समसलिले दुग्धे विपाचयेत् । सिद्धावशेषमपहृत्य पुनर्वराहाजैमत्स्यशिशुमारशशकवसाभिः सह काकोलीक्षीरकाकोलीजीवकर्षभकलिङ्गाक्षीमाषपर्णीमधुकतालपर्णीशुकनासाकल्कैस्तैलं घृतं वा पाचयेत् । तत्साधुसिद्धमपहृत्य भक्तषोडशभागप्रमाणं पानीयं पाययेत् । यवसानि च यथोक्तानि वातप्रशमनानि दद्यात् । एतेनोपक्रमेण मुच्यतेऽन्तरायामात् । बलवान्प्रहृष्टमना निरामयश्च भवति वारणः ॥

इत्यन्तरायामस्कन्दः ॥

बहिरायामो नाम स्कन्दः पित्तसंसृष्टान्मारुताद्भवति । स प्रत्याख्येयोऽसाध्यत्वात् ॥

निदानमस्य वक्ष्यामः—

(*स पक्षेणैकेनावसीदति, विवृणोति चक्षुः, समुत्थैकगात्रः समुद्धतशिरोग्रीवस्तिर्यगायम्यते रज्जुमवलम्बतेऽवसीदन्नूर्ध्वमुच्छ्वसिति । स बहिरायामस्कन्दो नाम प्राणहरो व्याधिः ॥

इति बहिरायामस्कन्दः ॥

व्याविद्धस्कन्दो नाम प्राणहरस्तिर्यग्योनिषु दृश्यते । (स) श्लेष्मसंसृष्टान्मारुताद्भवति । स प्रत्याख्येयः ॥

निदानमस्य वक्ष्यामः—अवनम्यमामः शिरोधरां पीडयति । हत्वा वक्षः) संभज्यत इव उन्नमन्मध्ये जघनमुत्क्षेप्तुकामः पतति भूमौ, असौ गम्भीरमन्तः स्तनति निःश्वसिति निस्तब्धताम्रनयनः स्थूलं निःश्वसिति विसंज्ञकल्पः ॥ स व्याविद्धस्कन्दाभिभूतः प्रजहाति प्राणानिति ॥

तत्र श्लोकाः—

---

* धनुराकारचिह्नान्तर्गतः पाठः कपुस्तके नास्ति ।

---

१ क. गरुडाम्लाम्बु° । ग. गरुम्लचुचा° । २ क. °जशि° । ३ क. °हृष्टाननो नि° ।

असाध्यरूपौ द्वौ स्कन्दौ तयोर्यत्नो न विद्यते ।
अन्तरायाम एकस्तु सोऽपि सिध्यति वा न वा ॥
तमप्रपन्नो यत्नेन चिकित्सितुमुपाचरेत् ।
यथोक्तेनोपचारेण शास्त्रार्थकुशलो भिषक् ॥
अशनिरिव तरून्महेन्द्रमुक्तो दहति तृणानि यथाऽनलः प्रदीप्तः ।
द्विरदमपि तथा हिनस्ति रोगो नृपवर मूर्खभिषक्कृतप्रयोगः ॥ इति ॥

इति श्रीपालकाप्ये गजायुर्वेदमहाप्रवचने महारोगाधिकारे स्कन्दाध्यायः *एकादशः ( दशमः ) ॥ १० ॥

---

## अथैकादशाध्यायः ।

---

अथ कदाचित्पालकाप्यमागतमभिवाद्योपविष्टमुवाचाङ्गराजो रोमपादः— 'पुराणकृश इत्युपदिष्टः संग्रहाध्याये पूर्वं भगवता, स कथम्' इति ॥

ततः प्रोवाच भगवान्पालकाप्यः—पुराणकृशः, पाण्डुरोगः, इत्यनर्थान्तरम् । ते त्रयस्त्रिभिर्दोषैः संभवन्ति वातपित्तकफैः, तत्र पित्तसंभवमेवाऽऽदौ वक्ष्यामः ॥

स गजो जीर्णाजीर्णविदग्धभोजनादम्ललवणप्रायादाहारादत्युष्णाध्वगमनात्परिश्रान्तनिर्वाणात्सहसा पित्तमुदीर्णं वायुः समन्ताच्छरीरे विधुनोति ॥

ततः स भवति कृशः पाण्डुः, अलसः, नान्नाभिलाषी, ध्यानशीलः । तं पुराणकृश इति ब्रूमः पाण्डुरोगम् ॥

तस्य पित्तोद्भूतस्य शान्त्यै हरिद्राबृहत्यौ मरिचपिप्पलीविडङ्गानि समभागानि लवणयुतानि चार्धभागानि कृत्वा स( र )ङ्कुगोमयेन कवलान्भोजयेद्गजम् । पूतीकरञ्जनक्तमालेन्द्रयवदेवदारुहरीतकीप्रियङ्गुसप्तपर्णनिम्बमुस्ताशृङ्गवेरमिति सूक्ष्मचूर्णानि कृत्वा गोमूत्रेणं त्रिरात्रपर्युषितं स्थितं पाययेत् । सततस्तं पीत्वैव प्रणुदति पित्तसंभवं पुराणकृशम् । पिप्पलीपिप्पलीमूलहस्तिपिप्पलीत्रिफलाचित्रकैः सह सिद्धं मुद्गयूषं सर्पिषा सुसंस्कृतं पाययेत् । नैव चैनं भोजयेत्पाण्डुरोगप्रशान्त्यर्थम् ॥

---

* यद्यपि त्रिष्वपि पुस्तके 'एकादशः' इत्येव पाठः, तथाऽपि 'दशमः' इत्येव पाठो युक्तः शास्त्रसंग्रहाध्यायेऽस्य दशमत्वेनोपन्यासस्य फलितत्वात् ॥

---

१ ग. स्कन्दावतर्यामी निगद्यते । २ क. °जोजीर्ण° । ३ क. संभवति । ४ क. °नि सल° । ५ क. तेनैव ।

इति पैत्तिकः पाण्डुरोगः ॥

अथ कफसंभवं कतुसरिं नाम पाण्डुरोगं वक्ष्यामः[1] ।

स यदा वारणस्य स्निग्धमधुराम्ललवणभोजनात्, आनूपमांसयवसभक्षणात्, अजीर्णादत्यशनात्, शीतसलिलावगाहात्, संचितः श्लेष्मा स्थानाच्च्युतं कोष्ठे सादयत्यग्निम् ॥

संभवत्यलसो नीलवर्णः सर्वाहारद्वेषी परिहृष्टरोमा वमति गुरुमक्षिकः[2], आध्मातकोष्ठः[3] ॥

तस्य शृङ्गवेरमरिचपाठाटरूषक[4]कटुकरोहिणीन्द्रयवहरिद्राद्वयतेजोवत्यतिविषाणि संक्षुद्य सक्षौद्रान्कवलान्भोजयेत् । शिरीषामलक्योस्त्वचा मञ्जिष्ठापिप्पलीशृङ्गवेरमधुक[5]मरिचामलकचूर्णानि मधुमिश्राणि भोजयेत् । मैरेयं च प्रतिपानं दद्यात् । मुद्गयूषेण चैनं संस्कृतेन शाल्योदनं भोजयेत् । वेणुशिरीषयोश्च पत्राणि व्यर्णिपादं कुरुविन्दकं च यवसं कतुसरिव्याधिप्रशमनार्थं दद्यात् ॥

इति श्लेष्मिकपाण्डुरोगः ॥

अथ तपनमरीचिसंतप्ताङ्गो मातङ्गो यदा पथि प्रपीडितो नापगतस्वेदः सलिलं तथैवोष्णशरीरः सहसा पीतवान्, स पाण्डुरोगमृच्छति । वातजं तं प्लीहोदरमिति केचिदाहुर्मनीषिणः ॥

संमूर्छति, अवलीयते, विभ्रमति, समुच्छ्वसिति, सीदति, परिपूर्णोदरो विपन्नग्रहणीको ध्यानशीलो दुर्मना निरुत्साहो गुरुमक्षिकः कृशो विवर्णो भवति । तमेवमवस्थं दन्तिनमभिसमीक्ष्य क्षिप्रं चिकित्सितुमुपक्रमेत ॥

ततो मरिचशृङ्गवेरहरीतकीमांसीमेषशृङ्गीकरवीरमूलैः सह खण्डशः कल्पयित्वा कृष्णसर्पमासुनुयात् । तन्मांसं गोमूत्रेण ततश्चैनं पाययेत्पञ्चरात्रम्[7]। जीर्णे च भोजयेद्यथोक्तैर्यवसैराव्याधिषु मोक्षान्नान्यदेयम् । अथवा त्रिकटुकरोहिणीमाठातिविषासुरसाशतावरीविन्तिडीकमहापञ्चमूलविडङ्गाटरूषकहिङ्गुसौवर्चलानि क्षोदयित्वा ततश्चतुर्भागावशिष्टमवतार्य क्वाथं मधुमत्स्यण्डिकाशर्करायुक्तं पुनः पाचयेत् । तच्च सान्द्रमवतार्य ततश्चैनं पाययेत् । ततः प्रणष्टव्याधिरुत्साही बलवर्णवान्निरामयश्च भवति वारण इति ॥

तत्र श्लोकौ—

भिषगिह तु यथोक्तमेनमेवं विधिमनुसृत्य करोति यश्चिकित्साम् ।
स भवति सततं नृपेण पूज्यो नियतमतिः कुशलः परीक्ष्यकारी ॥

---

१ क. प्रवक्ष्यामः । २ क. °रुमाक्षि° । ३ क. अध्यात । ४ क. °पाटलाट° । ५ क. °धुम° । ६ क. °मरिचसं° । ७ °पत्रम्° । ८ क. °र्णेऽथ भो° ।

इति दोषसमुद्भवा गजानां नृपवर कोष्ठगता हि पाण्डुरोगाः ॥
समुपेक्षितवैद्यहीनयोगास्त्रिषु मासेषु भवन्ति ते ह्यसाध्याः ।

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने पाण्डुरोगाध्यायो द्वादशः* ( य एकादशः ) ॥ ११ ॥

---

अथ द्वादशाध्यायः ।

---

अङ्गराजो महाप्राज्ञश्चम्पायां पृथिवीपतिः ॥
महाप्रभावमासीनं पालकाप्यं स्म पृच्छति ॥ १ ॥
आनाहाः[1] कति ते दृष्टा आनाह्यन्ते[2] तु यैर्गजाः ॥
विज्ञानं तु कथं विद्यात्किंच[3] तेषां चिकित्सितम् ॥ २ ॥
पृष्ट एवं[4] ममाऽऽचक्ष्व यथावदनुपूर्वशः ॥
भगवन्सर्वं एवैतज्ज्ञातुमिच्छामि तत्त्वतः ॥ ३ ॥
स पृष्टस्तत्र संप्रश्नमङ्गराजेन धीमता ॥
एवमेवानुपूर्वेण[5] पालकाप्यस्ततोऽब्रवीत् ॥ ४ ॥
आनाहास्त्विह चत्वारो दृश्यन्ते शास्त्रनिश्चयाः ॥
तांस्तेऽहं संप्रवक्ष्यामि संनिपाताच्च पञ्चमम् ॥ ५ ॥
अत्याशितः[6] स्यादानाहो वातोन्मथित एव च ॥
मृत्तिकाधान्यदोषाभ्यां संनिपाताच्च पञ्चमः[7] ॥ ६ ॥
अतः परं प्रवक्ष्यामि त्रिविधं भेदमागतम् ॥
शुद्धश्च वातोन्मथितो यथावदिति निश्चयः[8] ॥ ७ ॥
संसक्तं तं विजानीयादसंसक्तं तथैव च ॥
धान्यप्रदुष्टं जानीयाद्द्विविधं भेदसंख्यया ॥ ८ ॥
प्रदुष्टं चाप्रदुष्टं च स्युरष्टौ भेदसंख्यया ॥
विज्ञानमेषां वक्ष्यामि सर्वेषामनुपूर्वशः ॥ ९ ॥

---

* यद्यपि त्रिष्वपि पुस्तकेषु 'द्वादशः' इत्येवोपलभ्यते, तथाऽपि प्राक्संग्रहाध्याये पाण्डुरोगाध्याय एकादशत्वस्यैव ध्वननात् 'एकादशः' इत्येव पाठः समीचीनः ।

---

१ क. ख. अनाहाः । २ क. अनाह्यन्ते । ३ क. ख. विन्द्यात्किं° । ४ क. °वं समा° । ५ ग. °वमेवै° । ६ क. अत्याशिनः । ७ ख. पञ्चमम् । ८ ग. निश्चितः ।

तत्रात्याशितमेवाऽऽद्यो कथ्यमानं निबोध मे ॥
यदा ह्यत्याशितो नामस्तृणेन विग्रयाऽपि वा ॥ १० ॥
तृषार्तः स पिबेल्लोभात्पानीयमतिमात्रतः ॥
तत्पीतस्याप्रमाणेन तस्य रूपाणि लक्षयेत् ॥ ११ ॥
ततश्चाऽऽध्मातनिष्क्रोशः स्थूलं श्वसिति शूलवान् ॥
अल्पमूत्रपुरीषश्च मन्दवातस्तथैव च ॥ १२ ॥
अत्याशितं तु जानीयादानाहं गाढवेदनम् ॥
एतद्वै तस्य विज्ञानमत ऊर्ध्वं चिकित्सितम् ॥ १३ ॥
अन्नं च यवसं चास्मै न दद्यादुभयं भिषक् ॥
तीक्ष्णांश्चैवास्य कवलान्क्षिप्रमेव प्रदापयेत् ॥ १४ ॥
शृङ्गवेरकरञ्जौ च हरिद्रे चित्रकं वचाम् ॥
सिद्धार्थकमतिविषां हिङ्गुं चात्र प्रदापयेत् ॥ १५ ॥
स्वर्जिकां च यवक्षारं पञ्चैव लवणानि च ॥
शोभाञ्जनकमूलानि कुष्ठं चात्र प्रदापयेत् ॥ १६ ॥
पिप्पलीं पिप्पलीमूलं विडङ्गं हस्तिपिप्पलीम् ॥
उदूखले क्षोदयित्वा शुद्धे निक्षिप्य भाजने ॥ १७ ॥
मृदितान्गोमयेनास्मै कवलान्दापयेद्भिषक् ॥
तेनोपरुद्धमुभयं शकृन्मूत्रं च वारणः ॥ १८ ॥
भक्षितेन यथामार्गं क्षिप्रमेव निरूहति ॥
उष्णोदकं च पानार्थं परिषेकाय दापयेत् ॥ १९ ॥
शीतं संतप्तगाढोष्णमम्बु पाने विवर्जितम् ॥
पेयमर्धावशेषं स्यात्क्वथितं पादशोषितम् ॥ २० ॥
अत्युष्णं नैव दातव्यं क्वथितं नातिशीतलम् ॥
कवोष्णं कफवातघ्नं शीतं पित्तविनाशनम् ॥ २१ ॥
एतदेव त्रिदोषघ्नं केचिदाहुर्मनीषिणः ॥
तैलेन सेचयेच्चास्य सर्वगात्राणि दन्तिनः ॥ २२ ॥
स्वेदाभ्यङ्गः प्रदेहः स्यात्तैलेन श्लेष्मवातहा ॥
सद्योऽभ्यङ्गो गुरुतरः कालदोषं बलं प्रति ॥ २३ ॥
शरीरानुगतः स स्यादनुपानसमो गुणैः ॥
विज्ञाय विगतानाहं विशुद्धशकृतं गजम् ॥ २४ ॥

---

१ क. °शिनो नागास्तृ° । २ क. °मानतः । ३ ग. निगूहति । ४ क. स्वेदोऽभ्यङ्गः । ५ क. °दोषब° ।

अकर्दमे जले चैनमवगाह्य प्रमार्जयेत् ॥
प्रत्युद्गतं स्थानगतं निवृत्तं वारणं ततः ॥ २५ ॥
प्रसन्नां पाययेज्जातां पञ्चभिर्लवणैः सह ॥
वातस्य चाऽऽनुलोम्यार्थं ग्रहणीदीपनाय च ॥ २६ ॥
एतां प्रसन्नां लवणैः पीत्वा भवति निर्वृतः ॥
अथैनमनुपूर्वेण मुद्गयूषेण भोजयेत् ॥ २७ ॥
पूर्वं भुक्तं चतुर्भागमर्धस(भ)क्तं ततः पुनः ॥
क्रमशो दापयेद्भक्तं चतुर्भागोनमेव च ॥ २८ ॥
समग्रं भोजयेत्पश्चाच्छालीनामोदनं मृदुम् ॥
एतेन क्रमयोगेन नागः संपद्यते सुखी ॥ २९ ॥

इत्यत्याशितानाहः ॥

तथैव वातोन्मथितं विद्यात्त्रिविधमेव तु ॥
शुद्धश्च वातोन्मथितः संसक्तोऽसक्त एव च ॥ ३० ॥
अजीर्णाद्व्यपनाद्वायोः सर्वे कोपात्प्रकीर्तिताः ॥
तत्र शुद्धं प्रथमतः कीर्त्यमानं निबोध मे ॥ ३१ ॥
यदा तु भोज्यते नागो विषमं परिचारकैः ॥
रूक्षमत्यर्थमशनं यवसं वाऽप्ययोगतः ॥ ३२ ॥
विषमोदकपानाच्च विषमाग्निः प्रजायते ॥
तेन कोष्ठगतो वायुः सहसैव प्रकुप्यति ॥ ३३ ॥
तेनाऽऽध्मानं च शूलं च वेदना चोपजायते ॥
प्रतिनम्याभिनमति चोन्नम्यावनमत्यपि ॥ ३४ ॥
तुङ्गी करोति गात्राणि वेल्लते चतुरः स्थितः ॥
विष्टभ्य च पुनर्ध्माति गात्रं गात्रेण संस्पृशेत् ॥ ३५ ॥
एवं शुद्धं विजानीयाद्वातोन्मथितसंज्ञितम् ॥
आनद्धं द्वे पदे शेते नयेत्स्थूलोच्चये नतम् ॥ ३६ ॥
निषक्तस्य च निष्कोशौ पर्भ्यां संमार्जयेत्ततः ॥
साधु चैनं परिक्षुद्यात्पार्ष्णिभिः प्रपदैस्तथा ॥ ३७ ॥
वातपित्तकफप्रायः प्रकोपोऽन्योन्यसंश्रयः ॥
आमपक्वसमुत्थश्च भिषक्तमुपलक्षयेत् ॥ ३८ ॥

---

१ ग. साधुत्वेन ।

दोषाणामपि चान्येषां वायुरेव प्रवर्तकः ॥
नैकदोषसमुत्था हि प्रायेणोत्पद्यते रुजा ॥ ३९ ॥
दोषान्समीक्ष्य शुद्धांश्च संसृ(सृ)ष्टांश्चेत्युपाचरेत् ॥
उष्णोदकं च पानार्थे परिषेके च दापयेत् ॥ ४० ॥
समीक्ष्य सर्वसेकश्च तैलेनानन्तरं भवेत् ॥
पिचुमन्दस्य पत्राणां मृदूनां मुष्टिमाहरेत् ॥ ४१ ॥
लशुनस्य च बीजानां नालिका संमिता भवेत् ॥
नालिका स्याद्विडङ्गानां हरिद्रायाश्च नालिका ॥ ४२ ॥
वचाया नालिका देया पिप्पलीनां च नालिका ॥
क्षुण्णान्युदूखले दद्यात्पञ्चभिर्लवणैः सह ॥ ४३ ॥
पिचुमन्दस्य पत्राणि लशुनं बिल्वमेव च ॥
विडङ्गं चित्रकं चैव हरिद्रे द्वे च चूर्णयेत् ॥ ४४ ॥
कवलान्दापयेत्तस्मै पञ्चभिर्लवणैः सह ॥
तेन वातमुदावर्तं वातगुल्मं च संहतम् ॥ ४५ ॥
अनुलोमं जनयति विशुद्धं च प्रमेहति ॥
मृदुसंभोगतां गच्छेदानाहाच्च प्रमुच्यते ॥ ४६ ॥
आरोग्यमथवा देयं वातानाहोपशान्तये ॥
कटुतिक्तकषायास्तु वदन्त्यनिलकोपनात् ॥ ४७ ॥
दृष्टं तुल्यरसेऽप्येवं द्रव्ये द्रव्यगुणान्तरम् ॥
संयोगसिद्धान्येतानि भेषजानि महीपते ॥ ४८ ॥
न विशेषं परीक्षन्ते[1] द्रव्याणां रसवीर्यतः ॥
यथोक्तैर्भेषजैरेतैः क्रियां कुर्वीत दन्तिनाम् ॥ ४९ ॥
प्रतिपानं प्रसन्नां च पञ्चभिर्लवणैः सह ॥
तेनासौ वारणः सौख्यं लभते पृथिवीपते ॥ ५० ॥

इति शुद्धवातोन्मथित आनाहः ॥

*संसक्तभक्तो यस्तं तु कीर्त्यमानं निबोध मे ॥
भुक्तेऽजीर्णे यदा नागो भोज्यते विषमाशनम् ॥ ५१ ॥
संसक्तभक्तस्तेनाऽऽशु जायतेऽजीर्णभोजनात् ॥
अपानप्राणसहितस्तदा मार्गं रुणद्धि सः ॥ ५२ ॥

---

* संसक्तभुक्त इति स्यात् ।

---

१ क. परीक्षेत ।

छिन्नपार्तं च पतति तत्रोत्थाय निषीदति ॥
संरम्भं कुरुते चापि सुखं न लभते गजः ॥ ५३ ॥
न चातिसार्यते नागो निरोधाद्वातमूत्रयोः ॥
उदानस्य प्रकोपेण स्थूलं श्वसिति वारणः ॥ ५४ ॥
संसक्तेन विकारेण न स जीवति तादृशः ॥

इति संसक्तभक्तानाहः ॥

अत ऊर्ध्वमसंसक्तं कीर्तयिष्यामि तं शृणु ॥ ५५ ॥
कटुतिक्तकषायं च विषमं रूक्षमेव च ॥
लभते चोभियोगेन भोजनं यवसं जलम् ॥ ५६ ॥
क्रमेण भक्ष्यभोज्यैस्तु कोष्ठे व्यापद्यतेऽनिलः ॥
स्थूलं श्वसिति निष्कोशो पीनो च भवतोऽधिकम् ॥ ५७ ॥
अल्पमूत्रपुरीषश्च स भवेद्गाढवेदनः ॥
अपराभ्यां निषीदेच्च वेदनार्तो मुहुर्मुहुः ॥ ५८ ॥
पुरीषं कठिनं स्वल्पं वातमिश्रं निरूहति ॥
एतद्धि तस्य विज्ञानमत ऊर्ध्वं चिकित्सितम् ॥ ५९ ॥
स्थूलोच्चयेन वा नद्धं धनुषां द्वे शते नयेत् ॥
निषण्णस्य च निष्कोशौ पद्भ्यामेव विमर्दयेत् ॥ ६० ॥
साधु चैनं परिक्षुन्द्यात्पार्ष्णिभिः प्रपदैस्तथा ॥
तीक्ष्णांश्चैवास्य कवलान्क्षिप्रमेव प्रदापयेत् ॥ ६१ ॥
शृङ्गवेरं विडङ्गानि हरिद्रे चित्रकं तथा ॥
तालीसपत्रं कुष्ठं च मरिचं हस्तिपिप्पली ॥ ६२ ॥
उदूखले क्षोदयित्वा शुद्धे निक्षिप्य भाजने ॥
कवलान्दापयेत्तस्मै पञ्चभिर्लवणैः सह ॥ ६३ ॥
तेन वातमुदावर्तं सपुरीषं निरूहति ॥
क्षोदितं भेषजं दद्यादौषधं क्वथितं पुनः ॥ ६४ ॥
एभिरेवौषधैः सर्वैः पयश्च परिसाधितम् ॥
आनाहस्य प्रशान्त्यर्थं सुखोष्णं प्रतिपापयेत् ॥ ६५ ॥
सौवर्चलयुतां वाऽपि प्रसन्नां दधिमस्तुना ॥
मूत्रं सौवीरकं वाऽपि लवणैः पञ्चभिः सह ॥ ६६ ॥

---

१ क. °गो न रो° । २ क. चाभियोगेन । ३ क. ख. °क्षुद्यात्पा° । ४ क. प्रतिपादयेत् ।

पवनिष्कायमथवा क्रमशः संप्रदापयेत् ॥
न चेत्प्रकृतिमाप्नोति द्रव्याणीमानि योजयेत् ॥ ६७ ॥
मदनस्य बृहत्योश्च फलानि लशुनं तथा ॥
पिप्पलीं पिप्पलीमूलं गोपित्तं सैन्धवं वचाम् ॥ ६८ ॥
सिद्धार्थकांश्च संहृत्य श्लक्ष्णं दृषदि पी(पे)षयेत् ॥
(*बिल्वमात्रेण कल्केन श्लक्ष्णं वस्त्रं प्रलेपयेत् ॥ ६९ ॥
हस्तिपेचकमानेन वर्तिं पायौ प्रवेशयेत् ॥ )
तेन वातमुदावर्तं सपुरीषं निरूहति ॥ ७० ॥
किं वा निरूहयेदेनं निरूहेणानुलोमिना ॥
एवं संहृत्य संभारमानद्धं वारणं भिषक् ॥ ७१ ॥
शृङ्गवेरं वचां कुष्ठं पिप्पलीमरिचानि च ॥
सर्षपाञ्शतपुष्पां च सैन्धवं भद्रदारु च ॥ ७२ ॥
मदनस्य फलैः सार्धं श्लक्ष्णं दृषदि पी(पे)षयेत् ॥
पञ्चमूले तथा द्वे च स्थाल्यां प्रक्षिप्य पाचयेत् ॥ ७३ ॥
ततो रसं परिस्राव्य पयसा सह पाचयेत् ॥
यदि सिद्धं विजानीयात्तदैनमवतारयेत् ॥ ७४ ॥
सिद्धं कल्केन संयोज्य सुखोष्णं लवणीकृतम् ॥
निरूहं दापयेत्तस्मै यथोक्तं बस्तिकर्मणि ॥ ७५ ॥
अरत्निपरिमाणेन द्वौ त्रीन्प्रस्थान्प्रमाणतः ॥
एतत्प्रमाणं कर्तव्यं निरूहे वारणं प्रति ॥ ७६ ॥
शुद्धस्यैवं क्रियां चैनां समीक्ष्य प्रतिकारयेत् ॥
निरूहस्य विधानेन पिण्डो वर्तिस्तथा दृतिः ॥ ७७ ॥
आनाहेषु तु सर्वेषु हितमाहुर्निरूहणम् ॥
तेन वातमुदावर्तं सपुरीषं निरूहति ॥ ७८ ॥
सृष्टमूत्रोऽल्पनिर्वाही शुद्धः श्लेष्माऽतिसार्यते ॥
गुडूचिकायाः क्षारेण बिल्वक्काथं तु मूर्छितम् ॥ ७९ ॥
पञ्चभिर्लवणैः सार्धं तमेनमनुपाययेत् ॥
एतेन क्रमयोगेन नागः संपद्यते सुखी ॥ ८० ॥

*धनुराकारमध्यगतपाठः कपुस्तके नास्ति ।

१ क. यदसिद्धं । २ क. °स्तथादृतः । ३ क. °हताम् । ४ क. °र्वाहाशु° । ५ क. °पाचये° ।

उष्णोदकं च पानार्थे तैलसेकस्त्वथापरम् (:) ॥
शुद्धानाहविधिश्चात्र क्रमशः कीर्त्यते बुधैः ॥ ८१ ॥
प्रतिपानं प्रसन्नां च पञ्चभिर्लवणैः सह ॥
एतेन सौख्यं लभते वारणः पृथिवीपते ॥ ८२ ॥

इत्यसंसक्तान्महः ॥

धान्योपेतं तु जानीयाद्विविधं परिसंख्यया ॥
प्रदुष्टं चाप्रदुष्टं च अप्रदुष्टमिमं शृणु ॥ ८३ ॥
यत्किंचिदिह पक्वं तु धान्यं भुञ्जीत वारणः ॥
यथावत्तदपक्वं तु सद्यः स्नायात्कदाचन ॥ ८४ ॥
तदेवर्छति स व्याधिस्तस्मान्नोत्यशनक्रिया ॥
धान्यं यदा तु हरितं सस्नेहं वा विधां पुनः ॥ ८५ ॥
लभते वाऽतियोगेन जलं वाऽपि पिबेत्तथा ॥
तस्यातिमात्रयोगेन मन्दाग्निरुपजायते ॥ ८६ ॥
आनाहो वाऽतिसारो वा तस्मान्नात्यशनं स्मृतम् ॥
त्रयश्च ग्रहणीदोषाः कफपित्तानलात्मकाः ॥ ८७ ॥
तथाऽऽनाहोऽतिसारश्च वेर्से त्वन्योन्यहेतवः ॥
तेषामग्निबले हीने वृद्धिर्वृद्धे परिक्षयः ॥ ८८ ॥
प्राणिनामग्निरेवाऽऽयुः स रक्ष्यो जीवितार्थिभिः ॥
अपक्वं चापि पक्वान्नं दीप्ताग्निरपि नाशयेत् ॥ ८९ ॥
एवं हि वारणो भुक्त्वा धान्योपहतमृच्छति ॥
धान्येनोपहतो वायुर्धान्योपहत उच्यते ॥ ९० ॥
आटोपयति निष्कोशो पुरीषं चास्य भिद्यते ॥
प्रगृह्य हस्तं प्रध्यायेन्नित्यं चैव विजृम्भते ॥ ९१ ॥
रुद्धस्तत्र पुरीषश्च मन्दवातस्तथैव च ॥
एतद्धि तस्य विज्ञानमत ऊर्ध्वं चिकित्सितम् ॥ ९२ ॥
पक्वान्नं यदि वाऽपक्वमुभयं नैव भोजयेत् ॥
निरूढभक्तं तं नागं यवसेनोपचारयेत् ॥ ९३ ॥

---

१ क. तद्वै ऋच्छति। २ क. °न्नात्याश°। ३ क. °ते चापि यो°। ४ क. °न्नात्याश°। ५ क. सर्वेऽन्योन्यहतेत तव। ६ क. येषा°। ७ क. ख. रक्षो। ८ क. °हते वा°। ९ ख. प्रगृह्य। १० क. °द्धमूत्रपु°।

उष्णोदकं च पानार्थे शकृद्यावन्न वध्यते ॥
एवमप्यस्य निर्दिष्टं देशकालबलं प्रति ॥ ९४ ॥
स्वयमप्यत्र भिषजा तर्क्यं बुद्धिमता भुवि ॥
स्थूलोच्चयेन वा नद्धं धनुषां द्वे शते नयेत् ॥ ९५ ॥
निष्कोशक्षोदनं चास्मै सम्यक्कुर्याच्चिकित्सकः ॥
वचा हरिद्रा लशुनं पिप्पली मरिचानि च ॥ ९६ ॥
करञ्जबीजं तेजोह्वां शृङ्गवेरं फणिज्ञकम् ॥
गण्डीरं पिप्पलीमूलं चित्रकं हस्तिपिप्पली ॥ ९७ ॥
तालीसपत्रकं कुष्ठं शतपुष्पा यवानिका ॥
पञ्चभिर्लवणैः सार्धं कवलं तस्य दापयेत् ॥ ९८ ॥
तेनोपरुद्धं धान्यं हि सपुरीषं निरूहति ॥
विपाच्य लवणं चास्य गजस्याऽऽरोग्यसंज्ञितम् ॥ ९९ ॥
इमं संभृत्य संभारं सुविभक्तं यथाविधि ॥
सैन्धवं काचलवणं लवणं रोमकं तथा ॥ १०० ॥
तथैव यावशूकं च सामुद्रलवणं बिडम् ॥
तथैव काचलवणं तथैवोत्पलपत्रकम् ॥ १०१ ॥
सुवर्चिकाऽपि या मुख्या यवक्षारं तथैव च ॥
तथैव देयाः पिप्पल्याः पाठा कटुकरोहिणी ॥ १०२ ॥
विभीतकहरीतक्यौ शृङ्गवेरं च हिङ्गु च ॥
सारिवाऽतिविषा मुस्ता त्रिफलेन्द्रयवास्तथा ॥ १०३ ॥
वृक्षाम्लं मरिचं चैव तथार्चोऽऽम्राम्लवेतसौ ॥
बालबिल्वं च कुष्ठं च विडङ्गं हस्तिपिप्पली ॥ १०४ ॥
एतत्संहृत्य संभारं सूक्ष्मचूर्णं तु कारयेत् ॥
दधिमण्डेन संयोज्य घृतमण्डेऽपि पाचयेत् ॥ १०५ ॥
अथैनं दधिमण्डेन पुनरालोड्य पाययेत् ॥
प्रसन्ना वाऽपि या मुख्या तया वाऽऽलोड्य पाययेत् ॥ १०६ ॥
तेन कोष्ठगतं भक्तमेकरात्रान्निरूहति ॥
प्रतिपानं च सेकश्च क्रमात्सात्म्यं च भोजनम् ॥ १०७ ॥

---

१ क. बुध्यते । २ क. शतेन यत् । ३ क. हिङ्गुकम् । ४ ख. °चाऽऽम्लाम्छ° । ५ ग. °सौ ॥ बलं बि° । ६ क. °धिमाण्डे° । ७ क. °तमाण्डेन पा° ।

एतेन क्रमयोगेन नागः संपद्यते सुखी ॥
विज्ञाय विगतानाहं निवृत्तशकृतं गजम् ॥ १०८ ॥
अकर्दमे जले चैनमवगाह्य प्रमार्जयेत् ॥
प्रत्युद्गतस्थानगतं निवृत्तं वारणं ततः ॥ १०९ ॥
प्रसन्नां पाययेज्जातां पञ्चभिर्लवणैः सह ॥
वातानुलोमनार्थं च ग्रहणीदीपनाय च ॥ ११० ॥
तथा स लभते सौख्यं तस्मादेनां प्रयाणतः ॥
अथास्मै दापयेद्भुक्तें वोऽनुपूर्वेण हस्तिनः ॥ १११ ॥
इत्यप्रदुष्टानाहः ।
अथातः संप्रवक्ष्यामि दुश्चिकित्स्यतमस्य तु ॥
आनाहस्य प्रपञ्चं ते संप्रदुष्टस्य लक्षणम् ॥ ११२ ॥
धान्यं परिणतं पक्कं शुष्कं वा यदि भक्षयेत् ॥
पक्वान्नं चाप्यकुशलैर्भोज्यते विविधै रसैः ॥ ११३ ॥
अत्यम्बुपानयोगाच्च जायन्ते चाऽऽमयाः क्रमात् ॥
प्रवाहिका तथा शूलमाध्मानं कृच्छ्रमूत्रता ॥ ११४ ॥
पुरीषं ग्रथितं चास्य मन्दवातश्च जायते ॥
पीड्यते चातिसारेण वातगुल्मश्च बाधते ॥ ११५ ॥
स कृशो दुर्बलो नागो हरिद्वर्णप्रदर्शनः ॥
अतीसारेण दुःखार्तो ध्यायत्यपि च कुञ्जरः ॥ ११६ ॥
पादमभ्युद्धरेत्कृच्छ्राद्गात्रैश्च गुरुभिर्भवेत् ॥
निक्षिप्य हस्तं विमनाः शूलार्तः संनिषीदति ॥ ११७ ॥
दुश्चिकित्स्यः स विज्ञेयो महारोगो मृदुग्रहः ॥
तस्मै न दापयेत्पक्वमामं चापि कदाचन ॥ ११८ ॥
निरुद्धभक्तं तं नागमुपलभ्य भिषग्वरः ॥
यवसेनैव शुद्धेन मातङ्गं समुपाचरेत् ॥ ११९ ॥
उष्णोदकं च पानार्थे शकृद्यावन्न बाध्यते ॥
अथैनं कवलांस्तीक्ष्णान्क्षिप्रमेवाभिहारयेत् ॥ १२० ॥
वचां हरिद्रां लशुनं पिप्पलीं मरिचानि च ॥
कुष्ठं तेजोवतीं चात्र दद्यादतिविषां तथा ॥ १२१ ॥
कटुकां सर्षपान्हिङ्गु पञ्चभिर्लवणैः सह ॥
कृत्वा सूक्ष्माणि चूर्णानि सुरामण्डेन पाययेत् ॥ १२२ ॥

१ ख. °क्तेऽथ्यानुपूर्वेण हस्तिने । २ क. ध्यानपूर्वेण हस्तिने । ३ क. अनाहस्य ।

तेन प्रदुष्टधान्यं तु सपुरीषं निरूहति ॥
पश्च कोष्ठगतो वायुस्तस्माच परिमुच्यते ॥ १२३ ॥
पिप्पलीं मरिचं हिङ्गु शृङ्गवेरं फणिज्जकम् ॥
गण्डीरं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ॥ १२४ ॥
तगरं चैव कुष्ठं च दाडिमद्वयमेव च ॥
कृष्णकाश्चमतीं तेजोमूर्वां तिन्तिडिकां तथा ॥ १२५ ॥
पथ्यार्जां स्निग्धकोष्ठं च चित्रतन्दुलमेव च ॥
सुरसान्तरवक्रं च चन्द्रपादी तथैव च ॥ १२६ ॥
उदूखले क्षोदयित्वा शुद्धे निक्षिप्य भाजने ॥
आलोड्य चूर्णमेतत्तु लवणैरष्टभिस्तथा ॥ १२७ ॥
नागाय दापयेद्वैद्यः शूलानाहप्रशान्तये ॥
विज्ञाय विगतानाहं विशुद्धशकृतं गजम् ॥ १२८ ॥
प्रसन्नां पाययेज्जातां पञ्चभिर्लवणैः सह ॥
भोजनं तु क्रमाच्चास्मै शुद्धानाहविधौ यथा ॥ १२९ ॥
अनेन क्रमयोगेन नागः संपद्यते सुखी ॥

इति संप्रदुष्ट आनाहः ॥

अथातो मृत्तिकाजग्धस्त्वानाहः संप्रवक्ष्यते ॥ १३० ॥
पूर्वमेवाभिवृष्टायां गन्धमाघ्राय वारणः ॥
पृथिव्या दौहृदीभूतो भुक्त्वा तामतिमात्रतः ॥ १३१ ॥
विकारी जायते नागस्तस्य वक्ष्यामि लक्षणम् ॥
पुरीषभेद(:)स्तम्भश्च तथाऽऽध्मानं च दारुणम् ॥ १३२ ॥
यवसं नाभिलषति ग्राह्यमाणं पुनः पुनः ॥
अन्नं चापि तथा विद्यान्मृत्तिकाद(ज)ग्धसेवितम् ॥ १३३ ॥
मृत्तिका भक्षिता येन भवेत्पक्वाशयं गता ॥
तस्यामपरिजीर्णायामन्नमश्नाति वारणः ॥ १३४ ॥
ओदनो वा यदा भुक्तो भवेत्पक्वाशयं गजः ॥
तस्मिन्परिणते भुक्ते यदि खादति मृत्तिकाम् ॥ १३५ ॥
स विकारी भवेत्तेन तथा भुक्तेन वारणः ॥
विकारमभिजानीयाद्यथोक्तं कुशलो भिषक् ॥ १३६ ॥

---

१ क. पुरीषं निरुमूहति । २ क. फडंगिरम् । ३ ग. मण्डीरं । ४ क. स्निग्धाक्षोष्ठं । ५ क. °रचक्रं । ६ क. तथा । ७ क. °भिमृष्टा° । ८ क. दौहृदी° ।

मृत्तिका भक्षिता राजन्भवेदामाशयस्थितः (ता) ॥
तस्यामपरिजीर्णायामन्नमश्नाति वारणः ॥ १३७ ॥
विधा वा यदि वा भुक्त्वा ह्यामाशयगता भवेत् ॥
अजीर्णायां तु तस्यां च यदि खादति मृत्तिकाम् ॥ १३८ ॥
विकारी तेन भवति तथा भुक्तेन वारणः ॥
कोष्ठप्रदोषो भवति पुरीषं चास्य भिद्यते ॥ १३९ ॥
तेन चाऽऽनह्यते नागस्तथा स्तम्भश्च जायते ॥
आमं च तस्य पक्वं च भुक्तमन्नं न पच्यते ॥ १४० ॥
तं नागं दिवसं सर्वं ग्रासेन परिवर्जयेत् ॥
पानीयं पाययेत्तप्तमवगाहं न लम्भयेत् ॥ १४१ ॥
हस्तेऽस्य बन्धयेच्छङ्कुं शय्याभागं च कारयेत् ॥
हस्तिलिण्डेन शुष्केण तन्मूत्रेणावसेचयेत् ॥ १४२ ॥
अथ तिक्तौषधैर्भूयो मृत्तिकामभिसंसृजेत् ॥
ततोऽस्मै खादितुं दद्यान्मृत्तिकाया निरूहणे ॥ १४३ ॥
शाकंवल्लीं गडूचीं च सुमनामाटरूपकम् ॥
आस्फोतां लशुनं चापि पटोलं चात्र दापयेत् ॥ १४४ ॥
फणिज्जकं च शैरेयं द्वौ करञ्जौ तथैव च ॥
दद्यात्तथा वल्गुजकां शोभाञ्जनकमेव च ॥ १४५ ॥
उदूखले क्षोदयित्वा शुद्धे निक्षिप्य भाजने ॥
गोमयेनाथ संसृज्य कवलानस्य दापयेत् ॥ १४६ ॥
तेनास्य दौहृदापैति न च खादति मृत्तिकाम् ॥
अथास्मै कवलान्दद्यान्मृत्तिकाया निरूहणे ॥ १४७ ॥
हरिद्रे त्रिफलां पाठां तथा मधुरसामपि ॥
करञ्जबीजं तेजोह्वां शृङ्गवेरं च हिङ्गु च ॥ १४८ ॥
पटोलीं च विशेषेण निम्बं कटुकमत्स्यकान् ॥
कोलानिशाविडङ्गानि तथैवेन्द्रयवानपि ॥ १४९ ॥
पिप्पलीं पिप्पलीमूलं मरिचं चित्रकं तथा ॥
उदूखले क्षोदयित्वा हस्तिमूत्रेण संसृजेत् ॥ १५० ॥

१ क. विधो । २ क. हस्तस्य । ३ क. कल्पयेत् । ४ ग. °लिङ्गेन । ५ क. निरूपणे । ६ क. कैला° ।

प्रसन्नया वा संसृज्य पञ्चभिर्लवणैः सह ॥
तथैव प्रतिनीताय कवलान्संप्रदापयेत् ॥ १५१ ॥
आध्मायमानं वातेन मृदा धान्येन वा पुनः ॥
साधयेत्सर्वमेतेन भवेद्योऽत्याशितो गजः ॥ १५२ ॥
क्षीरेण यवनालानां सर्षपान्प्रति पाचयेत् ॥
तान्पिप्पलीभिः संसृष्टान्सामुद्रलवणेन च ॥ १५३ ॥
शृङ्गवेरकरञ्जानि तत्रैकध्यं समापयेत् ॥
खरमूत्रेण संसृष्टमश्वमूत्रेण वा पुनः ॥ १५४ ॥
तं मूर्छयित्वा क्षारेण मुख्यया वा प्रसन्नया ॥
सौवीरकेण संसृज्य गवां मूत्रेण वा पुनः ॥ १५५ ॥
दधिमण्डेन वा युक्तं बस्तिमस्मै प्रदापयेत् ॥
यथा द्रोणप्रमाणेन निरूहं दापयेद्भिषक् ॥ १५६ ॥
स तेन मृत्तिकाजग्धं सपुरीषं निरूहति ॥
ये च कोष्ठगता वातास्तेभ्यश्च परिमुच्यते ॥ १५७ ॥
तैलेन सेचयेच्चास्य सर्वगात्राणि हस्तिनः ॥
उष्णोदकं च पानार्थं परिषेकाय दापयेत् ॥ १५८ ॥
विज्ञाय विगतानाहं विशुद्धशकृतं गजम् ॥
अकर्दमे जले चैनमवगाह्य प्रमार्जयेत् ॥ १५९ ॥
प्रत्युद्गतं स्थानगतं निवृत्तं वारणं ततः ॥
प्रसन्नां पाययेज्जातां पञ्चभिर्लवणैः सह ॥ १६० ॥
वातानाम(मा)नुलोमा(म्या)र्थं ग्रहणीदीपनाय च ॥
अथास्मै दापयेद्भक्तमानुपूर्वे(र्व्ये)ण हस्तिने ॥ १६१ ॥
एतया क्रियया नागस्तथा संपद्यते सुखी ॥

इति मृत्तिकाजग्धं आनाहः ॥

आनाहः संनिपाताद्य अत ऊर्ध्वं प्रवक्ष्यते ॥ १६२ ॥
अतिमात्रं तु भुक्तेन भोज्येन यवसेन च ॥
स्नेहेन चातिमात्रेण तथा मृत्तिकयाऽपि वा ॥ १६३ ॥
आनाह्यमानः स्तनति मृदङ्ग इव ताडितः ॥
न च वातानुलोमित्वं तथा प्राप्नोति वारणः ॥ १६४ ॥

---

१ क. °त्तिकां ज°। क. °त्तिकां जग्धसपुरीषां नि°। २ ग. °तास्तेभ्यस्ते°। ३ क. °क्त आनु°। ४ क. ख. °ग्धश्चाऽऽना°। ५ क. प्रचक्षते। ग. प्रचक्ष्यते।

भक्षितं चास्य पीतं च न गच्छति जरां तथा ॥
वायुस्तस्य विमार्गस्थो हृदयं परिधावति ॥ १६५ ॥
एवं निरुद्धहृदयो न स जीवति तादृशः ॥
सर्वानाहेषु तैलेन सेर्वसेकं प्रदापयेत् ॥
अंजीर्णंजं वर्जयित्वा रूक्षसेकं प्रदापयेत् ॥ १६६ ॥

तत्र श्लोकाः—

ग्रासाप्रकाङ्क्षा गुरुगात्रता च स्तम्भस्तथा मूत्रपुरीषयोश्च ॥
द्वेषश्च *कल्पाभिनवावगाह( हे )भवन्त्यजीर्णस्य तु लक्षणानि ॥ १६७ ॥
( †शुद्धं शकृन्मूत्रमनाविलं च ग्रासप्रकाङ्क्षाऽगुरुगात्रता च ॥
प्रीतिश्च शय्याभिनयेऽवगाहे भवन्ति जीर्णस्य तु लक्षणानि ॥ १६८ ॥ )
यत्कृष्णवर्णं त्वथ फेनिलं च दुर्गन्धमम्लं बहुदोषयुक्तम् ॥
द्रवं सशूलं च खरं पुरीषं विभिन्नमल्पं च भवेदपक्वम् ॥ १६९ ॥
तथा भवेच्छ्लेष्मविवर्जितं यत्स्निग्धं सवर्णं यवसेन चैव ॥
सपाण्डुवर्णं घनमद्रवं च तत्पक्वलिङ्गं शकृदुद्दिशन्ति ॥ १७० ॥

अत्र द्वौ न खलु चिकित्सितुं हि शक्या-
वानाहौ नृपवर सक्तसंनिपातौ ॥
षण्णां तु प्रतिपदमीरिता चिकित्सा
शास्त्रोक्तं विधिमनुसृत्य विस्तरेण ॥ १७१ ॥ ९१७ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थाने आनाहाध्यायस्त्रयोदशः ( यो द्वादशः ) ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः ।

अथ भगवन्तममिततपसममलद्युतिमाश्रमस्थमिन्दुकान्तिसदृशवपुषं पालकाप्यं पादयोरुपसंगृह्य रोमपादोऽपृच्छत्—'कथमेषां महाबलजववीर्यसत्त्वानां परबलप्रमाथिनां हस्तिनां मूर्छाः संभवन्ति' ॥

अथोवाच भगवान्पालकाप्यः—इह खलु भो द्वादश मूर्छाः संभवन्ति ।

* 'तल्पाभिनयेऽवगाहे' इति, 'तल्पेऽभिनवावगाहे' इति वा पाठः स्यात् ।
† कपुस्तके त्रुटितम् ॥

१ क. सर्वमेवं। २ क. अजीर्णं वर्जयित्वा तु रू°। ३ क. ख. श्लोकः। ४ ग. विच्छिन्न°। ५ क. ख. °नुश्रित्य।

तद्यथा—अ(ति)भोजनात्, (अति)विदग्धभोजनात्, आमधान्योपयोगात्, स्नेहात्, वातात्, पित्तात्, कफात्, संनिपातात्, उदकात्, मार्गगमनात्, मद्यात्, यवसाच्चेति ।

तत्र—अतिभोजनात्कृशस्य सहसा हस्तिनो मूर्छा भवति । ततो निस्तब्धाक्षोऽवसीदति स्तम्भमाश्रयति निःश्वसिति कण्ठेन तिनिति (?) नायते न शक्नोति स्थातुं कुतो गन्तुम् । निषीदत्यपराभ्याम् । तस्यैतैर्लिङ्गैरतिभोजनसमुत्थां मूर्छां विद्यात् ॥

तं पिप्पलीमरिचचव्याजमोदपिप्पलीमूलविश्वभेषजविडङ्गतेजोवतीपाठाकुटजचित्रकसूक्ष्मसर्षपपाटलीलशुनवचाहिङ्गुसौवर्चलानां गोमूत्रे क्वथितानां क्वाथं पादावशेषमवतार्य सुखोष्णं पाययेत् । प्रतिपानं च सलवणां सुरां विशुद्धकोष्ठाय दापयेत् । ततः संपद्यते सुखी ।

इत्यतिभोजनमूर्छा ।

अथ विदग्धभोजनोत्पन्नायां मूर्छायां—निपतति, उत्पतति, परिधावति, परिवर्तते, प्रवेपते, भूमौ चक्रवद्भ्रमति ।

तस्मै मरिचशृङ्गवेराटरूषकबिल्वारग्वधदन्तीगण्डीरपिप्पलीभिर्गोमयसंयुक्ताभिः कवलान्दद्यात् । प्रसन्नां च पञ्चलवणसंयुक्तां प्रतिपानं दद्यात् ।

इति विदग्धभोजनमूर्छा ।

रसं मद्यं वा पीत्वा स यदा धान्यमाममत्यर्थं भक्षयेत् । ततोऽस्य मूर्छा जायते ।

स तया भूमौ चक्रवत्परिवर्तते, निःश्वसिति, आटोपितश्च व्याददाति मुहुर्मुहुर्मुखं स्वं निरीक्षत उत्फुल्लपर्यश्रुनयनः ।

तमेवमवस्थं दन्तिनमवेक्ष्य यवभस्मपरिस्रुतामर्धसौवीरकां ससर्षिप्कां सस्वर्जिकां पञ्चलवणसंयुक्तां प्रसन्नां पाययेत् । हिङ्गुकुटजपाठाटरूषककटुरोहिणी द्वे हरिद्रे तेजोवतीवचाविडङ्गसुरसाशिग्रुतिन्दुकमूलबिल्वमूर्वापूतिकातिविषान्क्षोदयित्वा तस्य सपञ्चलवणान्कवलान्दद्यात् । अथवा पिप्पलीहिङ्गुसर्षपकुटजपाठाटरूषककटुरोहिणीविडङ्गेन्द्रयवातिविषाः संक्षुद्य कवलान्भोजयेत् । ततः संपद्यते सुखी । प्रसन्नां च लवणसंयुक्तां पाययेत् ।

इति धान्यमूर्छा ।

अथ स्नेहमूर्छा । यस्तु केवलं यवसेनैव पुष्टः सहसा रूक्षशरीरः स्नेहं पिबति तस्य स्नेहमूर्छा जायते ।

---

१ ग. °चवचाज° ।

स दुर्मनाः, अतिपीड्यमानहृदयो भोक्तुं नेच्छति, गम्भीरवेदी मन्दाग्निरप्रसृष्टमूत्रपुरीषो निषीदति शीतेच्छुः, स्वप्नभूयिष्ठः शय्याभिनन्दी ध्यायत्यानद्धकुक्षिः, प्रवेपते ।

ततोऽस्मै वटप्ररोहाणां शाकवल्लीगुडूचीक्षुण्णानां मधुमिश्रान्कवलान्दद्यात् । जम्बुशल्लक्यर्जुनानां किश(स)लयानि मधुयुक्तानि भोजयेत् । कषायवृक्षाणां सक्षौद्रान्कवलान्भोजयेत् । यवधान्यानां मधुसंयुक्तान्कवलान्दापयेत् । अथवा दृष्टमूत्रपुरीषेऽवसीदन्प्रायः शीताभि(ः)नन्दी वा भवति । तं सक्षीरपिप्पलीकं मुद्गयूषं पाययेत् । तेनैव चैनं भोजयेन्मृदुशाल्योदनमिति ।

इति स्नेहमूर्छा ॥

अनशनात्पशनविषमाशनाध्यशनैर्धान्यपवससलिलैर्तूनां विपर्यासादकस्माद्वा कुप्यति पवनः । स जनयति मूर्छाम् ॥

अथानेन प्रतिहतगतिस्तिर्यगूर्ध्वं चोत्पतति, हृदयमवपीडयति, शूलमुपजनयति, उदरमाध्मापयति, स वेदनार्तः सर्वेभ्यः सत्त्वेभ्यः कुप्यति, छिन्नपातं च पतति, वृक्षतटभित्तिप्राकारादीन्हन्तुमिच्छति ॥

तं प्राचीनबन्धसंयुक्तं सर्वगन्धैः सहिङ्गुयवघृतैर्धूपयेत् । वरुणबिल्वातिविषाहिङ्गुपत्रीलशुनवचाः संक्षुद्य बिल्वपत्राणि च परिक्षिप्य[कवलान्दापयेत् । भूयश्च हिङ्गुसौवर्चलसर्षपपिप्पलीः क्षोदयित्वा कवलान्दद्यात् । उष्णोदकं च पाययेत् । पञ्चलवणसंयुक्तां च सुरां दद्यात् । मुद्गकुलत्थयोः पञ्चमूलयोर्द्वयोर्यूषं कुक्कुटरससंयुक्तं पाययेत् । ततः स्वस्थो भवति ॥

इति वातमूर्छा ॥

उष्णाध्वगमनादुष्णसलिलपानादतिमात्रलवणोपयोगाद्विषमविरुद्धविदग्धभोजनात्, अम्लोष्णतीक्ष्णोपयोगात्पित्तं प्रकुपितं मूर्छां जनयति ॥

स पाण्डुवर्णः, परिदह्यते संतप्ताङ्गः, पतति भ्रमति श्वसिति वेपते भृशमस्वस्थशरीरः ॥

तं प्रभूतेन शीतसलिलेन सेचयेत् । छायास्थं तालवृन्तैर्वीजयेत् । यवलाजधैरागतर्पणं च प्रभूतशर्करं पाययेत् । इक्षुवालिकेक्षुरकैर्मत्स्यपिण्डकायुक्तान्कवलान्दद्यात् । हरिद्रेन्द्रयवनिम्बपत्रामलकानि फाणितसंयुक्तान्कवलान्दद्यात् ।

---

१ क. °प्रमृष्ट°। २ क. °न्दी ध्माय°। ३ क. जम्बूश°। ४ ग. °धान्यान्मधु°। ५ ख. तं क्षारपि° । ६ क. °लवर्तिनां विपर्ययाद°। ७ क. स जयति मूर्छाऽभिधाने°। ८ क. ते प्राची तं ब° । ९ क. °त् । बि° । १० ख. परिक्षिप्त्वा ।

औदकानि च यवसानि मधुरवीर्याणि समृणालानि शर्करासंयुक्तानि भोजयेत्। व्याधिशैथिल्ये च पाययेदासवम्। ऐणतित्तिरिलावकानां च मांसरसं पाययेद्भोजनार्थम्। ततः सुखी भवति पित्तमूर्छार्तश्च नागः॥

इति पित्तमूर्छा॥

यदा च मधुररसवीर्यविपाकभूयिष्ठमाहारयति तदा श्लेष्मा प्रकुपितो हृदयमवपीड्य मूर्छां जनयति॥

स भवति नीलवर्णः प्रहृष्टरोमा शीतद्वेषी, उष्णाभिकाङ्क्षी गुरुगात्रः॥

तं कपित्थाम्रयोर्मूलकल्कं पयसाऽवलोड्य पाययेत्। सर्जार्दुर्नेन्द्रयवधवनिम्बगण्डीरारग्वधान्संक्षुद्य सक्षौद्रकान्कवलान्दद्यात्। पापचेलिकावेत्राग्रनिम्बपत्रपटोलैः सह सिद्धान्मुद्गान्भोजयेत्। पाययेन्मैरेयम्। आहारे च दापयेच्चूर्णं पादं शिरीषपल्लवांश्चेति॥

इति श्लेष्ममूर्छा॥

यदा तु कफपवनपित्तानां संनिपातान्मूर्छति॥

स विभ्रान्तस्ताम्रो राजीवनयनः प्रस्रवत्करश्रोताः पीतनीलहरितश्यामवर्णः स्तब्धरोमा खरच्छविर्हारिद्रमूत्रोऽनन्नाभिलाषी भृशमस्वस्थशरीरः कफपवनपित्तमूर्छानां लिङ्गानि दर्शयति। यन्तारमभिक्रुध्यति॥

तस्येदं निदानमभिसमीक्ष्य त्रिवृच्चित्रकविडङ्गचूर्णानि, आमलकरसं च पयसाऽऽलोड्य पाययेत्॥ बिल्वफलसुरसाहरिद्रात्रिफलामहौषधीभिः कथनसिद्धं* रक्तशालियवागूं सर्षपतैलेन धूपितां पाययेत्॥ परिणामे च मृगमहिषयूषेन भोजयेत्। ततः स्वस्थो भवति॥

इति संनिपातमूर्छा॥

यदा तु घर्माभितप्तशरीरः, तथैवाभिगतोष्मा सलिलमवगाहते स संनिरुद्धस्वेदोष्मा सहसा मूर्छति॥

स भिन्नविवर्णपुरीषमल्पाल्पं मुञ्चति। प्रहृष्टरोमा बहुशः प्रमेहति परिपूर्णनिष्कोशः, दुर्मनाः स्थातुं न शक्नोति, स्थूलोच्छ्वासी भवति॥

तस्मै कुमुदकसेरुकोत्पलबिसमृणालपनसानि पक्वानि, यानि चान्यानि शीतलानि मधुररसवीर्यविपाकान्यार्तवानि यवसानि तानि च शर्करोपहि-

---

* 'कथनसिद्धां' इति पाठः स्यात्।

---

१ क. उदकानि। २ क. °न्संकुट्य स°। ३ क. °चूर्णपादं। ४ क. कफवातपित्तानां। ५ क. प्रश्रवेत्क°। ६ क. °त्रोन्नताभि°। ७ क. ख. ग. °क्ष्य तृवृ°। ८ ख. कथनं सि°। ९ क. °वाग्रं स°। १० क. °ति स्थलो°।

तानि दापयेत् । सक्तुमन्थं शर्करागुडघृतबदरसंयुक्तं पाययेत् । सेवयेच्च विमलशिशिरसलिलपूर्णैर्नवघटैरन्तर्मत्स्यपिण्डकैश्च कवलैर्भोजयेत् । पीलुपनसमोचनालिकेरपियालदाडिममृद्वीकाः सलिलैः संक्षुद्य रात्रिपर्युषितं फाणितसंस्कृतमेतत्प्रातः पानं पाययेत् । भव्यपारापतमोचकाशीतकानि संक्षुद्य सलिले रात्रिपर्युषितमेतत्पानं पाययेत् । रसं च पाययेन्मृगस्य । महिषस्य वा रसेन भुक्त्वा प्रणुदति वारिमूर्छाम् ॥

इति वारिमूर्छा ॥

सहसाऽतिप्रसक्तस्यातिमात्रयोगादध्वनो मार्गमूर्छा भवति ॥

स तया शूनस्तब्धोष्णगुरुगात्रोऽन्नानभिलाषी स्वप्नकामो भृशमस्वस्थशरीरः ॥

तस्य सर्पिषा सर्वसेक इष्यते । ततः सुखोष्णेन सलिलेन परिषिच्य तिलसर्षपयवचूर्णैरुत्कारिकां दध्ना सुरया वा पक्वां (कृत्वा) तया सुखोष्णया प्रलिम्पेत् । मधुफाणितयुक्तानि चास्मै बिसमृणालानीक्षुवेणुपत्राणि च दद्यात् । द्विहस्तमात्राश्रयणं मृदुपांशुलं सुखशयनमसंबाधं कृत्वा पक्षात्पक्षं निषादयेत् । ततः फाणितसंस्कृतां प्रसन्नां पाययेत् । जीर्णमत्स्यरसेन कुक्कुटरसेन वा भोजयेत् । पानं च दद्यात् ॥

इति मार्गमूर्छा ॥

मद्यं स्थानदोषान्वितमतिवृत्तमजातं विपन्नं वा पीतवतो मद्यमूर्छा भवति ॥

स तया वमति निमीलत्युन्मीलयति, अवलीयते विभ्रमति परिदह्यति मुह्यति संतप्ताङ्गः ॥

तमेवमवस्थं दन्तिनमभिसमीक्ष्य विमलशिशिरसलिले निष्कर्दमे सुतीर्थे ह्रदे शीतच्छायोपगूढे सतीरपादपे विगाहयेत् । इर्वारुबिसमृणालविदारीदाडिमदधित्थकसेरुकमातुलुङ्गमरिचसौवर्चलसंयुक्तान्कवलान्भोजयेत् । अतसीधूमचूर्णैर्दधिमस्तूदकसिद्धां सपञ्चलवणामम्लां यवागूं मांसरससुसंस्कृतां पाययेत् । सपञ्चलवणां च प्रसन्नां दद्यात् । दापयेच्च वेत्रगुडसमत्स्यपिण्डकोपनाहं कुक्कुटसंयुक्तेन मुद्गयूषेण भोजयेत् । ततः संपद्यते सुखी ।

इति मद्यमूर्छा ।

कुयवसमविशुद्धदेशजं क्रिमिजुष्टं स्थानदोषान्वितं वा यवसं भुक्तवतो नागस्य यवसमूर्छा भवति ।

---

१ क. कपालैर्मार्जये° । २ क. °त्रोऽन्नपानान° । ३ क. दग्धा । ४ क. पक्वं । ५ ग्. उदकं । ६ क. मवति । ७ क. °द्रुमदे° । ८ क. युक्तवतो ।

स तया पीडितः स्तब्धकुक्षिः शूलार्तोऽभिवर्तते, निषीदति, वेपते, मुहुर्मुहुर्मुखं व्याददाति ।

ततस्तं त्रिफलासैन्धवविडङ्गव्योषगोमयसंयुक्तान्कवलान्भोजयेत् । प्रियङ्गुलोध्रमधुसंयुक्तान्कवलान्दद्यात् । दार्वीकेन्दं दर्भमूलं समङ्गां मधुरसां पाठां हिङ्गुबृहत्यौ च क्राथयित्वा परिस्राव्य रात्रिस्थितमासवं मधुसंयुक्तं पाययेदिति । यवसाध्यायप्रोक्तानि यवसानि विचित्राणि दद्यात् । अन्नैरन्नपानप्रोक्तैश्च भक्तैर्विविधैर्बृंहयेदिति ।

तत्र श्लोकः—

सहोत्पत्तिनिदानास्ता मूर्छा द्वादश कीर्तिताः ।
सोपक्रमविधानाश्च तव पार्थिव पृच्छतः ॥

इति यवसमूर्छा ।

इति श्रीपालकाप्ये गजायुर्वेदमहाप्रवचने महारोगस्थाने मूर्छाध्यायश्चतुर्दशः ( त्रयोदशः ) ॥ १३ ॥

---

## अथ चतुर्दशोऽध्यायः ।

---

आङ्गो हि वै रोमपादो हस्तिशालास्थं भगवन्तं पालकाप्यमभिवन्द्योवाच—'भगवन्गजानां शिरोभितापाः कथं संभवन्ति, कति, कथं च साध्यन्ते तन्मे व्याख्यातुमर्हसि' ।

इत्युक्त उवाच भगवान्पालकाप्यः—इह खलु भो वारणानां सप्त शिरोरोगाः संभवन्ति । तद्यथा—वात–पित्त–कफ–रुधिर–संनिपातात्, कृमिभ्योऽभिघाताच्चेति ।

तत्र रूक्षविषमलघुकटुकषायतिक्तभोजनैरनिलः प्रकुपितः शिरोऽवपीड्य तिष्ठञ्छिरोभितापं जनयति ।

स स्तब्धसगदमन्यांसपृष्ठशिरोग्रीवानयनः समुन्नद्धोत्तमाङ्गो भवति भ्रमति चास्य दृष्टिराविला, कर्णस्तम्भः शिरोदाहो मुखशोषश्च भवति, छर्दयति, मूर्छा चास्य भवति, तृष्णा चात्यर्थंनेत्रप्रस्रावो वक्त्रस्तम्भः शिरो विधुनोति दहति रुजति कूजति वेपते करास्ययोरजस्रं रूक्षविशददुर्गन्धो विवर्णं नीलं हारिद्रवर्णं प्रस्रवति दोषम् ।

---

१ क. °ङ्गदोष° । २ क. °कन्दद° । ३ क. °मङ्गामधुरमांसे पा° । ४ क. अङ्गो । ५ ख. °षयल° । ६ क. °दनम° ।

तस्मै वेसापानं दद्यात् । ( *मध(ग)मनं चास्य मरिचप्रस्थेन पिप्पल्यर्धप्रस्थेन पृथ्वीकाप्रस्थेन देवदारुशृङ्गवेरसैन्धवैश्च द्विपलिकैरेकैकशः पिष्टैः कुर्यात्सप्रा)हम् । यथायोगं वा प्रक्षालनमपि च करस्य प्रसन्नया चिरस्थितया गुग्गुल्वगुरुमधूच्छिष्टघृतैश्च निवातस्थस्य धूप इष्टः । पुनर्नवासंसीशणबीजमुस्ताकाश्मर्यभिङ्गपूर्येन्पयसि साधयित्वा वस्त्रोपनद्धेन पिण्डस्वेदेन स्वेदयेदुत्तमाङ्गम्, सगदां सफलग्रीवां( वा )श्च बहुशः । प्रपौण्डरीकहरिद्रामनःशिलालोध्रैश्च तैलं विपाच्य नस्यं दद्यात् । यवसानि यथोक्तानि वातप्रशमनानि च दद्यात् । पायसं सघृतशर्करं भोजयेत् । एतेनोपक्रमेण नश्यति वातिकः शिरोरोगः ।

इति वातिकः शिरोरोगः ॥

तीक्ष्णोष्णाम्ललवणक्षारकटुकविषमविरुद्धभोजनादुष्णे व्यायामाध्वगमनस्थानशयनैः पित्तं प्रकुपितं शिरोऽवपीड्य तिष्ठञ्छिरोभितापं जनयति ॥

स भवति परिशुष्कताल्वोष्ठमुखः परिहृष्टरोमा पर्यश्रुनयनः । ( * शिरस्तापाच्चास्य कटश्रोतोभ्यां प्रभेदः प्रवर्तते । कराच्चास्य हरिद्रवर्णः स्रवति दोषः, पच्यते चास्य मुखम्, स्वप्रकामश्च भवति, उष्णशिराः, निमीलिताक्षः, परिशूनान्तनयनः, ) शिरो विधुनोति ( *क्षितितलमभिगम्य, दन्ताभ्यां भूमिं विलिखति, छविश्चास्य भवत्यत्यर्थमुष्णा । तमेतैर्लिङ्गैः पित्तसमन्वितं शिरोभि ) तापं विद्यात् ॥

तस्य पूर्वोक्तं विधिं कारयेत् । सर्पिष्पानं च यथायोगं सर्वकालं नागस्य सेकं कुर्यात् । मेदाछिन्नरुहायष्टीमधुकप्रियङ्गुपिप्पलीः श्लक्ष्णचूर्णीकृत्य नस्यप्रधमने कुर्यात् । करप्रक्षालनमपि च पयसा सृ(शृ)तशीतेन कुर्यात् । चन्दनशृङ्गवेरोशीरपद्मकप्रपौण्डरीकनलदनालिकावालकवञ्जुलवेतसतृणशून्यगुन्द्राणां मूलानि दृषदि पी(पे)षयित्वा कल्कं पयस्यालोड्य शिरः प्रलिम्पेत् । पयस्याजम्बूमधुकविदारीछिन्नरुहामेदाकर्कटशृङ्गीतालपत्रीक्षीरेण पिष्टाऽन्तरिक्षेणाम्भसा (*पयसा च घृतं विपाच्य नस्यं दद्यात् । क्षीरिणश्च ये वृक्षा मधुरकषायाः, तेषां त्वग्रसेनाऽऽमलकीनां च घृतमण्डं विपाच्य नस्यं दद्यात् । पायस्यं) च घृतयुक्तं भोजयेत् । यवसानि च मधुररसवीर्याणि दापयेच्छिरोभितापप्रशान्त्यर्थम् ॥

इति पैत्तिकः शिरोरोगः ॥

* धनुराकारचिह्नान्तर्गतपाठः कपुस्तके नास्ति ॥

१ क. वपापा° । २ क. °यङ्गुपय° । ३ क. °लवकञ्जु° । ४ क. °णमूल्यगु° । ५ क. °त्रीरेणु पि° । ६ ग. पायसं ।

यदा तु वारणो मधुरशिशिरस्निग्धघनविषमविरुद्धभोजनोऽव्यायामशीलः, तस्योत्तमाङ्गगतः कफः शीर्षाभितापं जनयति ॥

तस्य च करवदनाभ्यां कफः परिश्र(स्र)वति, स संनिमीलित (*नयनो गुरुदृष्टिः कृच्छ्रेणोन्मीलयति स्वप्नपरः कूजति वेपते नदति निर्याणेनावनम्य भूमिं दन्ताभ्यां विलिखति, शीतद्वेषी, उष्णाभिलाषी । त ) मेतैर्लिङ्गैः श्लेष्मविका (* रजं शिरोभितापं विद्यात् ॥

तस्मै तैलपानमभ्यङ्गं च यथायोगं दद्यात् । सुखोष्णेन तैलेन परिषेचयेदुरः- शि)रःस्कन्धकण्ठस्य दावितोननिर्याणावग्रहगुहाभार्गपतस्थानानि बहुशः । गुग्गुलं तगरं पिप्पलीं स्वे(श्वे)तसर्षपं प्रियङ्गु श्लक्ष्णचूर्णीकृत्य प्रधमनं कुर्यात् । करप्रक्षालनं सुखोष्णेन वारिणा कुर्यात् । अथाश्वगन्धातसीकिण्वपिण्याकमुद्गचूर्णसैन्धवानि गोवा(व)राहाजवसाभिस्तैलघृताभ्यां च पाचयित्वा वस्त्रावमद्धेन पिण्डस्वेदेन स्वेदयेत् । यवपटोलकिराततिक्तकांशुमतीश्यामातेजोवतीविडङ्गपिप्पलीपिप्पलीमूलनिदिग्धिकाक्षवकमूलमूलैः कल्कपिष्टैस्तैलं विपाच्य नस्यं दद्यात् । पृथ्वीकोरुबूकविडङ्गबृहतीफलेङ्गुदैः सूक्ष्मचूर्णीकृतैः ससर्पिष्कैर्धूपं दद्यात् । एतैरेवौषधैस्तैलं विपाच्य नस्यं दद्यात् । यवसानि च गिरिजशुष्काणि कफप्रशमनानि च दद्यात् ॥

इति कफजः शिरोरोगः ॥

यदा तु रुधिरं पित्तप्रकोपहेतुभिः प्रकुपितं शीर्षाभितापं जनयति ॥

तदा निमीलिताक्षः परिशूनान्तनयनः, सरक्ता च लाला हस्तात्प्रवर्तते । पित्तलिङ्गं प्रायः, ध्यानशीलः ॥

तस्य क्षवकभृङ्गराजतगरफणिज्जकेषु सुरामण्डयुक्तेषु तैलं विपाच्य नस्यं दद्यात् । पिण्डस्वेदेन च स्वेदयेत् । अर्कपत्रभङ्गानि क्वाथेन च स्वेदयेत् । लोध्रमधूकमञ्जिष्ठानीलिकाभिः सूक्ष्मचूर्णीकृताभिः प्रधमनं कुर्यात् । करप्रक्षालनं चास्य सृ(शृ)तशीतेन पयसा मृद्वीकाशर्कराचूर्णसंसृष्टेन कारयेत् । यवसानि यथोक्तानि च दापयेत् ॥

इति रक्तजः शिरोरोगः ॥

अथ वातपित्तरुधिरकफानां समस्तानि लिङ्गानि दर्शयति, तदा सांनिपातिकं शीर्षाभितापं विद्यात् । तस्य प्रत्याख्येयस्यापि सतः पुरुषकारप्राधान्यादवश्यं

* धनुराकारचिह्नान्तर्गतपाठः कपुस्तके नास्ति ।

१ क. °तानि° । २ क. °गपत° । ३ क. °लिङ्गः प्रा° । ४ क. शीर्षाभिस्तापं । ५ क. °वस्याव्या° ।

(श्यं) व्याधिप्रमोक्षपरेण भवितव्यमित्येतां बुद्धिं पुरस्कृत्य चिकित्सितुमारभते तस्य पूर्ववत्पवनमेवाऽऽदावुपक्रमेत । स हि सर्वत्रानुपहतगतिः कफपित्तासृक्प्रवर्तकः प्राणो विचारी । ततः पित्तं दहति पचति तीक्ष्णतरमग्निरिव यत्नेनोपचर्यम् । रुधिरमप्यभिघातं सदुष्टमाहारदूषितं च पित्तवदुपचर्यम्, कदाचिद्विसर्पति विसर्पवत्, कफस्तु घनगुरुशिशिरो विसर्पिप्रभवान्संधिशिरास्नायूनवपीड्य प्राणोपरोधं कुरुते । तस्माद्वातपित्तकफरक्तश्लेष्मणां चिकित्सां कुर्यात् । उल्बणं वा व्याधिं प्राणहरमभिसमीक्ष्य दोषमसंभ्रान्तः शमयेत् । गौरवं जाड्यतां वाऽऽपादयति । तस्मादन्तेऽसावप्यवश्यं चिकित्स्य इति ॥

यस्त्वत्यर्थं दूष्यत्याकुञ्चति वेपते दन्ताभ्यां भूमिं स्पृशति विधुनोति बृंहते । तमेतैर्लिङ्गैः सांनिपातिकं शिरोभितापं विद्यात् ॥

तस्मै सर्पिस्तैलवसापानं दद्यात् । श्वेतसर्षपपिप्पलीपयोघृताभ्यां स्निग्धेन पिण्डस्वेदेन स्वेदं कुर्यात् । द्विपञ्चमूलकुलत्थयवबदरशतावरीश्वदंष्ट्रोशीरबलातिविषावसुकनिष्पावकाश्मर्याग्निमन्थनिष्क्वाथेन घृतमण्डं विपाचयेत् । तत्रावापमनन्तागिरिकर्णिकेन्द्रयवशुकनासातालपत्रीबीजानि वा क्षुद्रसहानां कल्केन ततो विपाच्य सम्यग्ग्रस्तः कर्माभ्यञ्जनं च कुर्यात् । सदारुहरिद्रामेदफलत्रिवृषभमोदानीवचाहरिद्राद्वयश्रीपर्णीगोवन्दनीटिटूकहिङ्गुहरितालमनःशिलास्नुह्यर्कवंशपत्राणि दन्तीं च पिष्ट्वा सर्जरसेन शोनाककाष्ठमुपलिप्य क्षौमवाससा वर्ति(र्तिं) छायायां (*शोषयित्वा धूपमेनं पाययेत् । दिव्येऽम्भसि दध्नि च सिद्धं मयूराणां लावकानां वा रसं) पाययेत् । भोजयेच्च वारणं यवसानि, विचित्राण्यार्तवानि च भोजयेत्, सांनिपातिकशीर्षाभितापप्रशान्त्यर्थम् ॥

इति सांनिपातिकः शिरोभितापः ॥

अथ यदा तु मधुराम्ललवणयवसकुवलकवलभोजनादृतुविपर्यासाद्वा निशाजागरणात्, स्थलस्य चातिप्रसक्तरसोपयोगाच्च दुष्टपानीयपानाद्वा कफरुधिरे प्रकुप्यतो हस्तिनः । ते प्रकुपिते ऊर्ध्वमागम्य शिरोऽवष्टभ्य कृमींञ्शिरसि जनयतः । ततस्ते नागस्य कृमिजं शिरोभितापं जनयन्ति ॥

शिरसि तेन दोदूयमा(*नः स(श)रमाकारतटवृक्षगृहकपाटकुड्यवल्मीकस्तम्भादीञ्शिरसा हन्तुमिच्छति, बहुशश्च व्याददाति मुखम्, पुनः पुनर्बृंहति

* धनुराकारचिह्नान्तर्गतपाठः कपुस्तके नास्ति ॥

१ क. °त्सितमा° । २ क. °घातस्य दु° । ३ क. °त् । श्लेष्मस° । ४ क. सम्यग्ग्रस्तः । ५ क. °लत्रिवृ° । ६ क. °गोरोचन्दना । ख. °गोचन्दना । ७ क. दत्त्वा । ८ क. °रोविष्ट° ।

विधुनोति शिरोऽभीक्ष्णम्, निश्वसतश्चास्य कराग्निपतन्ति कृमयः श्लक्ष्णरोमा)णः कफरुधिरसंभवप्रायाः, शिरसि ताडितश्च सुखायते । तं कृमिप्रचयकृतं शीर्षाभितापं विद्यात् ॥

तस्मै शृङ्गवेरकुटजकुष्ठमरिचातिविषापिप्पलीभिः सवातार्कसर्षपाभिः श्लक्ष्णपिष्टाभिर्नस्यं प्रधमनं कुर्यात् । करप्रक्षालनं चास्य प्रसन्नया । भद्रदारुमरिचशृङ्गवेरपिप्पलीसरलसर्षपचित्रकसैन्धवैर्धूपनं कुर्यात् । अथवा त्रिकटुककरञ्जनिम्बपत्रामलकचित्रकविभीतकहरिद्राभिर्धूपनं कुर्यात् । बृहतीफलकासीसकुष्ठसुवर्चिकाविडङ्गरसोनगिरिकर्णिकापिचुमन्दमूलहिङ्गुवचैलाफणिज्जकमरिचैर्गोमूत्रपिष्टैस्तैलं पक्त्वा सुखोष्णं नस्यं दद्यात् । अथवा हरिद्रामार्कवतगरकुष्ठवचापुनर्नवैः कल्कपिष्टैस्तैलं पक्त्वा सुखोष्णं नस्यं दद्यात् । जाङ्गलैश्च यवसैस्तिक्तकटुप्रायैः पिचुमन्दपिप्पलीमरिचशृङ्गवेरयुक्तैः सिद्धैर्मुद्गैर्मधुघृतसंसृष्टैर्भोजनपानयोरुपचर्यमाणः प्रणुदति कृमिजां रुजं शिरोभितापः ॥

इति कृमिजः शिरोभितापः ॥

अथातोऽभिघातजः शिरोरोगः । स लोष्टाश्ममुशलाङ्कुशप्राजनदण्डवृक्षशाखाभिः प्रतिहस्त्यभिघाताद्वा शिरोभितापः संभवति ॥

ततः प्रस्तब्धकरकर्णचरणो ध्यानपरः शूननयनमुखशिरोग्रीवास्कन्धपूर्वकायसगदावितानावग्रहकटो नातिकिंचिदपि दुर्मनाः ॥

तस्य सर्वसेको घृतमण्डेनेष्टः । विमलशिशिरसलिलावगाहः, प्रदेहश्च पत्रोशीरमधुकमञ्जिष्ठादेवदारुसुनिषण्णकैलातगरवञ्जुलोत्पलतामरसबिसमृणालकह्लारपयस्याकर्कटशृङ्गीप्रपौण्डरीकवर्धमानकवेतससरलगुन्द्राक्षीरत्वक्शतपुष्पाह्रीवेरचन्दनसारिवालोध्रपद्मकुस्तुम्बुरुशैलेयामलकमांसीव्याघ्रनखपरिपेलवाभयाहरेणुकादेवदारुशितकर्णकैः क्षीरपिष्टैर्घृतप्रदिग्धैर्बहुशः प्रलेपयेत् । स्थानं च सुशीतलं गोमयोपलिप्तं कालतुसुमनोभिः प्रकीर्णम् । शिरसि मध्ये च वारिपरिपूर्णा दृतयः स्रवेयुः । यवसैश्च मृदुभिरार्तवैर्हरितैर्बृंहयेत् । रसैश्च स्निग्धमधुरैर्जाङ्गलैर्मांसजैर्भोजयेदिति ॥

तत्र श्लोकौ भवतः—

शिरोभितापा नागानां प्रायशो वातसंभवाः ॥
कफशोणितपित्तानां वायुरेव प्रवर्तकः ॥

---

१ क. °लीशृ° । २ क. °कायसंग° । ख. °कायः स° । ३ क. °शिराव° । ४ क. °न्द्राक्षार° । ५ क. ख. °पुष्पीह्री° । ६ क. ख. °रुसैले° ।

मूले छिन्ने हताः शाखा भवन्ति हि तदाश्रयाः ॥
तस्माद्ज्ञातप्रतीकारः सदा कार्यश्चिकित्सकैः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थाने शिरोरोगाध्यायः पञ्चदशः ( पञ्चतुर्दशः ) ॥ १४ ॥

---

अथ पञ्चदशाध्यायः ।

---

रोमपादो महातेजा दृष्ट्वा पादातुरान्गजान् ॥
हस्तिशालासमासीनं पालकाप्यं स्म पृच्छति ॥ १ ॥
भगवन्केन जायन्ते पादरोगाः पृथग्विधाः ॥
संख्यया कति ते प्रोक्ताः किंच तेषां चिकित्सितम् ॥ २ ॥
स्वशरीरसमुत्थानाः केन वा वनचारिणाम् ॥
पादरोगा न जायन्ते तस्मादाचक्ष्व पृच्छतः ॥ ३ ॥
स एवमङ्गराजेन पृष्टो मधुरया गिरा ॥
वचनं प्रत्युवाचेदं पालकाप्यो महामुनिः ॥ ४ ॥
प्रमाणं पादरोगाणां सनिदानं चिकित्सितम् ॥
केचिदेषां दशेच्छन्ति केचिदिच्छन्ति विंशतिम् ॥ ५ ॥
इह त्रिंशतमिच्छन्ति पादरोगांश्चिकित्सकाः ॥
नामतस्तान्प्रवक्ष्यामि सलिङ्गान्सचि*कित्सकान् ॥ ६ ॥
तत्रोत्कारकी प्रथमः कारकी तदनन्तरम् ॥
नाडीजातस्तृतीयः स्यात्ततः संराष्ट्रकेशकम् ॥ ७ ॥
नखभेदं ततो विद्यात्पूयकेशस्ततः परम् ॥
विप्लावकस्ततस्त्वन्यः केशग्रन्थिः †सविलुकः ॥ ८ ॥
समन्तकेशश्च भवेत्कचकेशश्च कीर्त्यते ॥
कदम्बपुष्पो विज्ञेयः सफुल्लोऽथ कुठारकः ॥ ९ ॥
फुल्लपादस्तथा ज्ञेयस्ततो भिन्ननखोऽपरः ॥
स्फुटितश्चानुद्धतश्च तथाऽन्योऽपि नखो भवेत् ॥ १० ॥

---

* 'चिकित्सितान्' इति तूचितम् । † 'सविप्लुतः' इत्येव पाठः साधुः, अग्रिमग्रन्थानुरोधात् ॥

---

१ क. छिन्नो हतः शा° । २ क. °द्धाते प्र° । ३ क. °कस्त्वत° । ४ क. सुफुल्लो° । ५ क. °स्ततो ज्ञे° । ६ क. °नुबद्धश्च ।

शरनद्धोऽथ विज्ञेयो दर्द्रुकेशश्च दन्तिनः ॥
प्रगुल्मिकेशो गम्भीरस्तथा चर्मतलोऽपरः ॥ ११ ॥
क्षतो निर्मूलितश्चैव तथा केशः सलोहितः ॥
स्थाण्वाहतः क्षीणतलस्तथा *चाभ्यन्तरीकृतः ॥ १२ ॥
निष्पिष्टो मांसकेशश्च तथा स्थानरतोऽपरः ॥
इति रोगसमुद्देशः कीर्तितः पृथिवीपते ॥ १३ ॥
तत्र तावत्प्रवक्ष्यामि गजानां वनवासिनाम् ॥
पादरोगा न जायन्ते स्वशरीरोत्थिता यथा ॥ १४ ॥
प्रकृतिः परिसर्या हि वनेषु वनचारिणाम् ॥
न तिष्ठति ततस्तेषां शोणितं तलसंधिषु ॥ १५ ॥
पवनः प्रकृतिं याति श्लेष्मा चैषां विशुध्यति ॥
पित्तं प्रसन्नतां याति ततो गच्छति भूमिप ॥ १६ ॥
पादरोगा न जायन्ते तेनेह वनचारिणाम् ॥
ग्राम्याणां पारवश्यत्वादालानेष्वेव तिष्ठताम् ॥ १७ ॥
प्रायः पादा विनश्यन्ति सततं स्थानसेवया ॥
सप्तमीं तु दशां प्राप्तान्वयोतीतांस्तु वारणान् ॥ १८ ॥
पादरोगाः प्रबाधन्ते विशेषेणेह पार्थिव ॥
व्याप्य सर्वशरीरं हि शिराः सर्वाः समन्ततः ॥ १९ ॥
सहिताः स्नायुजालेन चरणेषु प्रतिष्ठिताः ॥
गुलिकास्थिसमूहश्च यस्मात्पादेषु दन्तिनाम् ॥ २० ॥
रोगा ये तत्र जायन्ते तस्मात्ते दारुणाः स्मृताः ॥
इति त्रिंशदिमे प्रोक्ता द्विविधा रोगसंख्यया ॥ २१ ॥
स्वशरीरसमुत्थाश्च भवन्त्यागन्तवस्तथा ॥
तेषामपि विभागं तु क्रमयोगात्प्रचक्षते ॥ २२ ॥
तत्र निर्मूलितनखः क्षत (:) क्षीणतलस्तथा ॥
स्थाणुनाऽभिहतश्चैव शरनद्धश्च यो भवेत् ॥ २३ ॥
उत्कारकी स्थानरतो विनिष्पिष्टतलस्तथा ॥
अनुद्धतनखश्चैव स्युरेते शास्त्रनिश्चयात् ॥ २४ ॥

---

* 'चान्यः क्षरीकृतः' इति पाठ उचितः, अग्रिमग्रन्थानुरोधात् ।

---

१ क. ख. दद्रुके° । २ क. °श्रेण च पा° । ३ ग. °णनखस्त° ।

नवैवाऽऽगन्तवो रोगाः शेषाः स्युर्दोषसंभवाः ॥
अत ऊर्ध्वं चिकित्सां च लक्षणं च प्रवक्ष्यते ॥ २५ ॥
तत्र चोत्कारकीलिङ्गं वारणस्य प्रवक्ष्यते ॥
यथानिमित्तं मातङ्गः पादव्याधिं नियच्छति ॥ २६ ॥
तृणमूत्रपुरीषाणां पांशूनां कर्दमस्य च ॥
उत्करे तिष्ठति यदा सततं क्वथिते गजः ॥ २७ ॥
तेनास्य पल्लिपादेषु पवनः परिकुप्यति ॥
दारुणं लभते तेन पादरोगं मतङ्गजः ॥ २८ ॥
नाड्यो वातेन जायन्ते केशा वा भृशदारुणाः ॥
दुःखितस्तेन मातङ्गः स्थाने न लभते सुखम् ॥ २९ ॥
दन्तिनो नखमूलेषु यदा कुप्यति मारुतः ॥
श्लेष्मणा सहितस्तेन कण्डूस्तस्योपजायते ॥ ३० ॥
(*ततः कण्डूयतेऽत्यर्थं करेण सततं करी ॥
तेनावच्छेदनात्केशकारकी नाम जायते ॥ ३१ ॥)
स्वशरीरसमुत्थानाः काष्ठलोष्टक्षतादपि ॥
न साध्यन्ते यदा वैद्यैर्व्रणाः पादेषु दन्तिनाम् ॥ ३२ ॥
विसर्पन्ति ततस्तेषां गतयस्तलसंधिषु ॥
नाडीजात इति प्राहुः पादरोगं गजस्य तम् ॥ ३३ ॥
कदम्बपुष्पसंस्थानैः कुठारसदृशैस्तथा ॥
दर्द्रुभिः[1] कचगुल्मैश्च यदा पादाः समन्ततः ॥ ३४ ॥
द्विरदस्य प्रभिद्यन्ते समन्ताद्गाढवेदनैः ॥
संराष्ट्रकेशं पवनाज्जानीयात्तं नरेश्वरः ॥ ३५ ॥
श्लेष्मशोणितपित्तानां दोषमन्यतमं यदा ॥
संगृह्य पवनो[2] दुष्टो नखमध्येषु तिष्ठति ॥ ३६ ॥
तदा भित्त्वा नखान्केशा[3] जायन्ते भृशदारुणाः ॥
इत्युक्तं नखभेदस्य शास्त्रयोगेन लक्षणम् ॥ ३७ ॥
यदा प्रदुष्टः पवनः पित्तमादाय तिष्ठति ॥ ३८ ॥
नखान्तरेषु सर्वेषु विकानखशिखासु च ॥
यदा संजायते केशो जायमानश्च पच्यते ॥ ३९ ॥

*धनुराकारमध्यस्थपाठो 'ग' पुस्तके त्रुटितः ॥

१ क. ख. दद्रुभिः । २ क. यवनो । ३ क. °षु भित्त्वा न°।

अजस्रश्र(स्र)वणाच्चास्य पूयकेशत्वमिष्यते ॥
इत्येतल्लक्षणं प्रोक्तं पूयकेशस्य दन्तिनः ॥ ४० ॥
नखान्तराणि सर्वाणि तलाः सतलसंधयः ॥
पच्यन्ते सहसा यस्य विसर्पन्ति च सर्वशः ॥ ४१ ॥
पुनश्चैवोपरोहन्ति भिद्यन्ते च पुनः पुनः ॥
केशो[1] विप्लावकश्चैष पित्तासृग्वातसंभवः ॥ ४२ ॥
विप्लुता यस्य लक्ष्यन्ते केशैश्च तलसंधयः ॥
(*सग्रन्थिभिर्वातरक्तोत्केशग्रन्थिः सविप्लुतः ॥ ४३ ॥
कुपितः पित्तमादाय यदा तिष्ठति मारुतः ॥
तलसंधिषु नागस्य तेन केशोऽस्य जायते ॥ ४४ ॥
सरुजः सपरीदाहः क्षिप्रपाकी विसर्पकः ॥
पच्यन्ते सहसा तस्य समन्तात्तलसंधयः ) ॥ ४५ ॥
समन्तकेशं जानीयान्नागस्य भृशदारुणम् ॥
तत्र यस्य विमुच्यन्ते न स शक्यश्चिकित्सितुम् ॥ ४६ ॥
प्रोहयोः पलिहस्ते च विक्कानखशिखासु च ॥
संनिपातोद्भवैः केशैर्मयूरशिखसंस्थितैः ॥ ४७ ॥
दीर्घैः प्रविरलैः कृष्णैः श्वेताग्रैर्वाऽपि रोमभिः ॥
मिश्रैर्दारुणपर्यन्तैः कचकेशः स उच्यते ॥ ४८ ॥
एतेष्वेव प्रदेशेषु रूक्षः परमदारुणः ॥
वातजो लक्ष्यते केशः कदम्बकुसुमाकृतिः ॥ ४९ ॥
कदम्बकेशं तं विद्यान्नागस्य भृशदारुणम् ॥
पलिपादे च कूर्मे च प्रोहयोः पलिहस्तयोः ॥ ५० ॥
विक्कयोरपि यस्य स्यात्केशैः[2] फुल्लैः सवेदनैः ॥
शतध्न्येव च दृश्यन्ते वृत्ताः पादाः समन्ततः ॥ ५१ ॥
सफुल्लमिति तं विद्यात्केशं वातसमुद्भवम् ॥
गजस्य कुपितं पित्तं यदा पादेषु तिष्ठति ॥ ५२ ॥
कुञ्जराख्यस्तदा रोगः पादजो बाधते द्विपम् ॥
नखान्तरेषु सर्वेषु मांसं समुपचीयते ॥ ५३ ॥

---

* धनुराकारचिह्नद्वयमध्यगतपाठः कपुस्तके नास्ति ॥

---

१ क. कोशो । २ ख. °त्कान्केश° ।

कुठाराकृतिसंस्थानस्तेन केशोऽस्य जायते ॥
सरुजः सपरीदाहः क्षिप्रपाकी विसर्पकः ॥ ५४ ॥
कुठारपादमित्याहुस्तं रोगं पादजं पुनः ॥
गात्रापरेषु सुव्यक्तं गजस्य तलसंधयः ॥ ५५ ॥
स्फुटिता यस्य लक्ष्यन्ते फुल्लपादः स वातिकः ॥
दन्तिनो नखमूलेषु यदा कुप्यति मारुतः ॥ ५६ ॥
तदा नखा विपाच्यन्ते भिद्यन्ते च स मारुतः ॥
एष भिन्ननखो नाम पादरोगो विनिश्चितः ॥ ५७ ॥
अप्रतिक्रियया यस्य दन्तिनः स्फुटितो नखः ॥
शुष्कस्त्यनिलसंदुष्टः सोऽनुद्धतनखो भवेत् ॥ ५८ ॥
यदा निर्भिद्यते पादैः शरशक्त्यृष्टितोमरैः ॥
शरनद्धं तदा नागः पादव्याधिं नियच्छति ॥ ५९ ॥
प्रोहसंदानभागेषु दद्रवः श्लेष्मसंभवाः ॥
कण्डूमत्यो बृहत्यश्च जायन्ते यस्य दन्तिनः ॥ ६० ॥
काष्ठलोष्टादिभिस्ताश्च यदा संपीड्य घर्षति ॥
दद्रुकेशः स विज्ञेयस्तेन लिङ्गेन दन्तिनः ॥ ६१ ॥
प्रगुल्मिकेशा जायन्ते गजे शोणितसंभवाः ॥
विक्रयोः प्रोहयोश्चैव तथैव पलिहस्तयोः ॥ ६२ ॥
विस्तीर्णा रक्तपर्यन्ताः कृष्णान्ता मृदवः स्थिराः ॥
प्रगुल्मिकेशाः शीर्यन्ते यदा दोषेण दन्तिनः ॥ ६३ ॥
तेषु मूलेषु गम्भीरास्तद्धि गम्भीरलक्षणम् ॥
यदा प्रकुपितं पित्तं मारुतश्चैव दन्तिनः ॥ ६४ ॥
तलसंधिषु सुव्यक्तं जनयेत्परिपोटनम् ॥
तं चर्मतलमित्याहुः पादरोगं चिकित्सकाः ॥ ६५ ॥
अत ऊर्ध्वं प्रवक्ष्यामि क्षतकेशस्य लक्षणम् ॥
प्राजनैः स्थाणुना लोष्टैरारया वाऽपि विक्षते ॥ ६६ ॥
केशा यत्रोपलक्ष्यन्ते पादरोगः स हि क्षतः ॥
स्खलनादभिघाताद्वा यदा निष्कृत्यते नखः ॥ ६७ ॥
तं तु निर्मूलितं विद्यात्पादरोगं चिकित्सकः ॥
यदा प्रकुपितो वायू रक्तमादाय तिष्ठति ॥ ६८ ॥

---

१ क. भिद्यते स च मा° । २ क. ख. °दः सर° । ३ क. °भिजाता° ।

दन्तिनां मोहदेशेषु विकानखशिखासु च ॥
तेन केशा विवर्धन्ते तत्र शोणितसंभवः ॥ ६९ ॥
शोणितक्षरणाच्चैषां रक्तकेशत्वमिष्यते ॥
वनपर्वतदुर्गेषु चरतां दन्तिनां यथा ॥ ७० ॥
स्थाणुना भिद्यते पादः स तु स्थाण्वाहतो भवेत् ॥
लोष्टाश्मकण्टकाकीर्णो यदा संचार्यते महीम् ॥ ७१ ॥
शराधानवर्तीं वाऽतितप्तं वा बहुशो गजः ॥
तस्य तेनोपतापेन दुष्यन्ति तलसंधयः ॥ ७२ ॥
क्षीयन्ते च तला गाढं स तु क्षीणतलो भवेत् ॥
प्रतिघ्नतो यदा यातुस्तिष्ठत्याक्रम्य शर्कराः ॥ ७३ ॥
मन्दं गच्छति पर्यश्रुः पथि क्षीणतलो गजः ॥
तस्य क्षीणतलस्येह तलेभ्यः पूयशोणिते ॥ ७४ ॥
क्षरतः स तु विज्ञेयः पादरोगः क्षरीकृतः ॥
विनिष्पिनष्टि यः क्रुद्धो मुहुः पादतलं गजः ॥ ७५ ॥
शर्कराशरधानेषु लोष्टाश्मगहनेषु च ॥
तस्य पार्ष्णिप्रदेशेषु शोणितं संप्रदुष्यति ॥ ७६ ॥
प्रदुष्टं जनयेद्व्याधिं गजस्य भृशदारुणम् ॥
निष्पिष्टतलमित्याहुः पादरोगं चिकित्सकाः ॥ ७७ ॥
अत ऊर्ध्वं प्रवक्ष्यामि मांसकेशस्य लक्षणम् ॥
नखान्तरेषु सर्वेषु विकानखशिखासु च ॥ ७८ ॥
यदा संजायते केशो मांसं प्राप्तः सुदारुणः ॥
गम्भीरमूलकठिनो बहुलो गुरुवेदनः ॥ ७९ ॥
मांसकेशः स विज्ञेयः पादरोगश्चिकित्सकैः ॥
क्रोधाद्भयाद्वा मातङ्गं यदा तु परिचारकाः ॥ ८० ॥
न नयन्त्यवगाहं च शय्यायां नापि नाध्वनि ॥
स्थान एव निबद्धस्य कवलं पल्लवं जलम् ॥ ८१ ॥
तृणं चैव प्रयच्छन्ति विधां च लवणानि च ॥
तस्य कुप्यति पादेषु चिरस्थानेन मारुतः ॥ ८२ ॥
स्फेटन्ति सर्वतश्चास्य तलाः सतलसंधयः ॥
नखान्तराणि भिद्यन्ते मोहौ निर्भुजतस्तथा ॥ ८३ ॥

---

१ क. °पि नोऽध्व° । २ क. स्फुटन्ति ।

तं स्थानरतमित्याहुः सततं स्थानसेवया ॥
इति त्रिंशदिमे प्रोक्ताः पादरोगाः सलक्षणाः ॥ ८४ ॥

---

चिकित्सितं यथा येषां विस्तरेण प्रवक्ष्यते ॥
शस्त्राग्निक्षारचूर्णानि धावनालेपनानि च ॥ ८५ ॥
स्नेहनं चान्ववेक्षा च क्रियाधिष्ठानमष्टधा ॥
कुठारपादः स्थानरतः केशग्रन्थिः सविप्लुतः ॥ ८६ ॥
समन्तकेशः संराष्ट्रकेशो विप्लावकश्च यः ॥
असाध्याः पादरोगाः स्युः षडेते शास्त्रनिश्चयात् ॥ ८७ ॥
अत ऊर्ध्वं तु याप्यांश्च साध्यांश्च शृणु पार्थिव ॥
कदम्बपुष्पः संकचः प्रफुल्लः फुल्ल एव च ॥ ८८ ॥
चत्वार एते याप्याः स्युः पादरोगा नरेश्वर ॥
नखभेदो भिन्ननखो निर्मूलितनखस्तथा ॥ ८९ ॥
स्खलितश्चानुद्धतश्च कृच्छ्रसाध्यास्तु ते स्मृताः ॥
पूयकेशः प्रगुल्मी च रक्तकेशश्च पार्थिव ॥ ९० ॥
एतेऽपि दुश्चिकित्स्यास्तु मांसकेशश्च यः स्मृतः ॥
स्खलितो नखभेदश्च केशो भिन्ननखश्च यः ॥ ९१ ॥
उत्कारकी सगम्भीरः साध्याः पश्चाग्निकर्मणा ॥
कारकी दद्रुकेशश्च मांसकेशश्च पार्थिव ॥ ९२ ॥
प्रगुल्मी चेति चत्वारः क्षारसाध्याश्चिकित्सकैः ॥
क्षतो निर्मूलितश्चैव पूयकेशः सलोहितः ॥ ९३ ॥
नाडीजातश्च विज्ञेयः शरनद्धश्च यो भवेत् ॥
स्थाण्वाहतश्च सप्तेते साध्याः स्युः शस्त्रकर्मणा ॥ ९४ ॥
क्षरीकृतः क्षीणतलस्तथा चर्मतलश्च यः ॥
निष्पिष्टतल इत्येते चत्वारः पृथिवीपते ॥ ९५ ॥
अप्रमत्तेन भिषजा साध्याः स्युर्मूलकर्मणा ॥
असाध्याश्चैव याप्याश्च साध्याश्चैव यथा यथा ॥ ९६ ॥
कीर्तिताः पृथिवीपाल चिकित्सितमतः शृणु ॥
द्वावेतौ सहजौ रोगौ सुफुल्लः फुल्ल एव च ॥ ९७ ॥

---

१ क. °नतरमि° । २ ख. ग. °तं तथाऽप्येषां । ३ क. प्रचक्षते । ४ क. चात्र वक्ष्या च । ५ क. सवचः । ६ क. °नुवृत्तश्च । ग. °नुद्धृत° ।

एतयोः स्वेदनं कार्यमभ्यङ्गश्चैव नित्यशः ॥
कदम्बपुष्पकेशश्च कचकेशश्च यो भवेत् ॥ ९८ ॥
घृतं लवणसंयुक्तं नित्यमभ्यञ्जनं हितम् ॥
गोमूत्रं वाऽश्वमूत्रं च खरमूत्रं तथैव च ॥ ९९ ॥
त्रिफलासोमवल्कानां निष्काथः पादधावनम् ॥
भल्लातकानां तैलं च तिलतैलं घृतं वसा ॥ १०० ॥
पादरोगेषु नागानां स्नेहनं हितमुत्तमम् ॥
प्रियङ्गुतगरं कुष्ठं तेजोह्वा रजनीद्वयम् ॥ १०१ ॥
वचासैन्धवसंयुक्तं घृततैलसमन्वितम् ॥
सर्वेषां पादरोगाणां केशशातनमुत्तमम् ॥ १०२ ॥
(*सर्षपाश्चित्रको दन्ती श्वेता कटुकरोहिणी ॥
महावृक्षार्कयोर्मूलं भल्लातकफलानि च ॥ १०३॥
लवणानि हरिद्रे च कोशातक्याः फलानि च ॥
पिचुमन्दपलाशानि[1] त्रिवृता श्वेतसर्षपाः ॥ १०४ ॥
कल्कपिष्टानि सर्वाणि केशशातनमुत्तमम् ॥ )
गुग्गुलं निम्बपत्रं च त्र्यूषणं च तिलैः सह ॥ १०५ ॥
कल्कपिष्टानि सर्वाणि केशशोधनमुत्तमम् ॥
विषघ्नाऽतिविषा कुष्ठं सर्षपाः सुरदारु च ॥ १०६ ॥
त्रिवृद्दन्त्यार्कभल्लातमूलानि च शणं तिलाः ॥
अतसीं च पटोलं च प्रत्येकं[2] केशशोधनम् ॥ १०७ ॥
अतसीं[3] ( * किण्वमेरण्डसुरा क्षारतिलात्त्वचम् ॥
महावृक्षार्कयोर्मूलं पिष्ट्वा भल्लातकानि च ॥ १०८ ॥
मधुशिग्रुफलैः सार्धं पादरोगेषु शोधनम् ॥
कासीसं ) सैन्धवं कांस्यं तथा नीली रसाञ्जनम् ॥ १०९ ॥
सौराष्ट्रा[4] मधुकं चैव पादरोगेषु रोपणम् ॥
घोण्टाफलानि[5] त्रिफला निचुलानां फलानि च ॥ ११० ॥
तलरोगेषु नागानां स्थिरीकरणमुत्तमम् ॥
गोजीत्वचोऽश्वकर्णश्च सोमवल्कधनंजयौ ॥ १११ ॥

---

* धनुराकारचिह्नद्वयान्तर्गतपाठः कपुस्तके नास्ति ॥

---

१ क. ख. °नि तृवृ° । २ क. °कं कोश° । ३ ख. °तसीकि° । ४ क. °राष्ट्रम° । ५ क. ख. घोटाफ° ।

कल्कपिष्टानि सर्वाणि तत्रस्तम्भनमुत्तमम् ॥
सोमवल्कस्य सर्जस्य ककुभाश्मन्तकस्य च ॥ ११२ ॥
( * भल्लातकोदुम्बरयोस्तथाऽश्वत्थकदम्बयोः ॥
आम्रातकाश्वकर्णं च कुम्भीं च क्वाथयेज्जले ॥ ११३ ॥)
पादावशिष्टं क्वथितं पुनरेवाप्यधिश्रयेत् ॥
किरातमूलं कासीसं हरितालं रसाञ्जनम् ॥ ११४ ॥
तथा सर्जरसं दद्याद्रोहिणीचूर्णमेव च ॥
अपहत्य च निर्दग्धमपः कुम्भे निधापयेत् ॥ ११५ ॥
ततस्तेन कषायेण व्रणं नागस्य क्षालयेत् ॥

---

अतः परं प्रवक्ष्यामि क्षारकर्मविधिं शुभम् ॥ ११६ ॥
पालाशं क्षारमादाय मुष्ककस्य धवस्य च ॥
कुटजेक्षुदंवाराणां क्षारमारग्वधस्य च ॥ ११७ ॥
कालस्त्रुकं सप्तपर्णं क्षारं सौगन्धिकस्य च ॥
रोध्रकं चिरबिल्वं च शैरीषं कतकं तथा ॥ ११८ ॥
एतान्क्षारान्समाहृत्य हस्तिमूत्रेण संसृजेत् ॥
संसृजेच्चाश्वमूत्रेण गवां मूत्रेण चैकशः ॥ ११९ ॥
पुनः पुनः समासिञ्चेद्यथा स्यात्सुपरिश्रु(स्रु)तम् ॥
परिश्रु(स्रु)तं तु तं क्षारं सुप्रसन्नं ततो भिषक् ॥ १२० ॥
अपः कुम्भे दृढे धीरः शनैर्मन्दाग्निना पचेत् ॥
सुप्रसन्नं ततो वैद्यः समन्तात्परिघट्टयेत् ॥ १२१ ॥
अनामं चाप्यदग्धं च दर्वीलेपमथोद्धरेत् ॥
अयोमये सापिधाने कलशे रजतप्रभे ॥ १२२ ॥
तस्मिन्क्षारं समावाप्य स्वनुगुप्तं निधापयेत् ॥
पूर्वोक्तेन कषायेण सुखोष्णेनाथ धावनम् ॥ १२३ ॥
तं कपालिकया गाढं तीक्ष्णया परिघट्टयेत् ॥
सम्यक्प्रक्षालितं केशं कृत्वा निरुदकं ततः ॥ १२४ ॥

---

* धनुराकारचिह्नान्तर्गतपाठः कपुस्तके न ॥

---

१ क. अपहृत्य । २ ग. शृणु । ३ क. °दवारा° । ४ क. कालंबुकं । ५ क. रौध्रकं । ६ क. °स्मिन्क्षीरं ।

क्षीरागदेन योगश्चास्तेनैव प्रतिसारयेत् ॥
(*पक्वजाम्बवसंकाशमचिश्र(स्रा)वि यदा भवेत् ॥ १२५ ॥
सम्यग्दग्धतलं विद्यादन्यथा तु विगर्हितम् ॥
कौतकं पञ्चलवणं यवक्षारस्तथैव च ॥ १२६ ॥
एतानि दग्ध्वा क्षारं तु पूर्वकल्पेन साधयेत् ॥)
वगरं पञ्चलवणं हरितालं मनःशिला ॥ १२७ ॥
एतत्समुद्धृतं सर्वं हस्तिमूत्रेण संसृजेत् ॥
पूर्वोक्तेन विधानेन क्षारयोगः प्रशस्यते ॥ १२८ ॥
शुष्काक्षं काञ्चनक्षीरीं दन्तीं लाङ्गलकीं तथा ॥
साधयेत्पूर्ववत्क्षारं ततः सम्यग्विचक्षणः ॥ १२९ ॥
हरितालं सुधाचूर्णं तथैव कटशर्कराम् ॥
व्रणानालेपयेदेभिः पूर्वक्षारेण साधितान् ॥ १३० ॥
रोहत्येवं व्रणो लिप्तो न च रूढः प्रभिद्यते ॥
(*कासीसं हरितालं च कांस्यनीलीसुराष्ट्रजम् ॥ १३१ ॥
मनःशिलां च संभृत्य समभागानि पेषयेत् ॥
तं कल्कं निपुणं पिष्ट्वा व्रणं तेनोपलेपयेत् ॥ १३२ ॥
रोहत्येवं व्रणो लिप्तो न च रूढः प्रभिद्यते) ॥
तृ(त्रि)वृल्लाङ्गलकी दन्ती मधुकं केसरं तथा ॥ १३३ ॥
कृष्णकन्दां तालपत्रीं समभागानि पेषयेत् ॥
कल्कपिष्टैः[4] सुतैः सम्यग्घृतं धीरो विपाचयेत् ॥ १३४ ॥
एतेन सर्पिषाऽभ्यक्तः पादः स्थैर्यं नियच्छति ॥
अत ऊर्ध्वं तु नागानामग्निकर्म प्रवक्ष्यते ॥ १३५ ॥
तत्राग्निकर्म शास्त्रज्ञैश्चतुर्विधमिहोच्यते ॥
स्नेहस्तथेष्टिका लोहं चतुर्थी प्रोच्यते शिला ॥ १३६ ॥
योजयेत्तु यथायोगं बलाबलमवेक्ष्य च ॥
मृद्वग्निसाध्या ये रोगास्तेषु स्नेहः प्रशस्यते ॥ १३७ ॥
मध्याग्निसाध्या ये तांस्तु इष्टकाभिः प्रसाधयेत् ॥
तीक्ष्णाग्निसाध्या ये केशास्ताँल्लोहेन प्रसाधयेत् ॥ १३८ ॥

---

* धनुराकारमध्यस्थपाठो गपुस्तके त्रुटितः ।

---

१ क. क्षीरागदेन । २ ख. शुकाख्यां । ३ क. °ञ्चनं क्षी° । ४ ख. °पिष्टैस्तु तैः ।

अतितीक्ष्णाग्निसाध्यांस्तु शिलाभिः साधयेद्भिषक् ॥
(*एतेन कर्मयोगेन यथाव्याधि प्रयोजयेत् ॥ १३९ ॥
इष्टकां चैव लोहं च तप्तां चैव शिलां भिषक् ) ॥
प्रयोजयेद्यथायोगं वयो बलमवेक्ष्य च ॥ १४० ॥
मासात्तु कार्तिकादूर्ध्वं निवृत्ते शुष्ककर्दमे ॥
हेमन्तस्याऽऽगमे कुर्यात्तत्कर्म विचक्षणः ॥ १४१ ॥
उद्धूतं चावधूतं च मृत्तिकानुगतं च यत् ॥
स्फुटितं दुष्टमांसं च शस्त्रैस्तीक्ष्णैर्विशोधयेत् ॥ १४२ ॥
रक्तस्रावं न कुर्वीत न चातिक्षणुयात्तलम् ॥
शनैः शनैस्तलः शोध्यो यावत्तु मृदुतां व्रजेत् ॥ १४३ ॥
अग्निकर्मविधिः कृत्स्नो यथावदुपदेक्ष्यते ॥
तप्तैरयोभिरुत्तानं तलं सम्यक्शनैर्दहेत् ॥ १४४ ॥
फालजम्ब्वोष्टदर्वीभिर्यथादोषमुपक्रमेत् ॥
जम्ब्वोष्ठैरेव गम्भीरान्दाहयेदग्निकर्मवित् ॥ १४५ ॥
इष्टकाभिस्ततः स्वेदः कार्यः क्लेशेषु हस्तिनाम् ॥
वातिकेषु च रोगेषु श्लेष्मणा कठिनेषु च ॥ १४६ ॥
रत्निमात्रां चतुरस्रां शिलां भूमौ निखात(न)येत् ॥
उत्सेधेनाङ्गुलान्यष्टावग्निवर्णां च कारयेत् ॥ १४७ ॥
मृदा पालीं समन्ताच्च शिलायां कारयेद्भिषक् ॥
शिलां तां खादिरैः काष्ठैः सुतप्तां कारयेत्ततः ॥ १४८ ॥
अपनीयाऽऽशु तत्राग्निमौषधानि समावपेत् ॥
गुडं तैलं वसां माषाञ्श्रीवेष्टं च सगुग्गुलम् ॥ १४९ ॥
तिष्ठेत्पुरा प्रकथितं रोध्रं मधुहरीतकीम् ॥
शृङ्गालिकां महागुन्द्रां सूक्ष्मचूर्णानि कारयेत् ॥ १५० ॥
एकीभूते तु संभारे तस्मिन्प्रकथिते भिषक् ॥
स्थापयेत्पादमेकैकं यथावत्सुप्रतिष्ठितम् ॥ १५१ ॥

---

* धनुराकारमध्यस्थपाठः कपुस्तके न ।

---

१ ख. इष्टिकां । २ क. चामधूमं । ३ क. ख. रक्तभावं । ४ क. °लजृम्भोष्ट° । ग. °लजङ्घोष्ट° । ५ क. जृम्भोष्टै° । ग. जङ्घोष्टै° । ६ ख. इष्टिका° । ७ क. ख. चतुरश्रां । ८ क. °ङ्गुलीन्य° । ९ क समां । १० ख. ग. शृगालिकां ।

मात्राप्रमाणं कालं वा ह्रस्वाक्षरमथापि वा ॥
एष मात्राविधिः प्रोक्तस्त्वग्निदाहे नृपोत्तम ॥ १५२ ॥
अच्छिन्नं वाऽप्यपोढं च ताम्रबिल्वसमप्रभम् ॥
सम्यग्दग्धतलं विद्यादन्यथा तु विगर्हितम् ॥ १५३ ॥
गोमेदकसवर्णाश्च मधुवर्णाश्च ये तलाः ॥
पक्वतालु(ल)सवर्णाश्च समरक्तास्त्ववेदनाः ॥ १५४ ॥
अनुन्नतास्त्वकुल्माषा गम्भीराः कठिनाः स्थिराः ॥
भवन्ति सुखसंस्पर्शाः सम्यग्दग्धा यदा तलाः ॥ १५५ ॥
सुप्ररूढास्तलाः सम्यगुत्तिष्ठन्ति समन्ततः ॥
देहत्यपि च निःशङ्कं समेषु विषमेषु च ॥ १५६ ॥
इति सम्यक्प्रदग्धानां कीर्तितं लक्षणं मया ॥
तलानामामदग्धानामुत्तमं शृणु लक्षणम् ॥ १५७ ॥
आमदग्धेषु पादेषु विकारो नोपशाम्यति ॥
स्रवन्ति सततं रक्तं पाण्डुरा मृदवस्तलाः ॥ १५८ ॥
आमदग्धं विदित्वैवं पुनः कर्म विधीयते ॥
अतिदग्धस्य विज्ञानमतः शृणु महीपते ॥ १५९ ॥
अतिदग्धास्तु मुच्यन्ते संधिभ्यः सहसा तलाः ॥
नखाश्चापि विशीर्यन्ते स्फुटन्ति च समन्ततः ॥ १६० ॥
आश्रा(स्रा)वः पिच्छिलो रक्तस्तलेभ्यस्तस्य गच्छति ॥
स्थातुं न शक्नोति गजो रक्तमूत्री च जायते ॥ १६१ ॥
वमत्यभीक्ष्णं वमथुं सततं च प्रमेहति ॥
प्राणांस्त्यजति वा नागो न स कर्मणि कल्पते ॥ १६२ ॥
नातिदग्धं तलं कुर्यान्नाऽऽमदग्धं च कारयेत् ॥
निर्वापणं प्रवक्ष्यामि दग्धानां हितमुत्तमम् ॥ १६३ ॥
सुरा सौवीरकं तक्रमम्लं दधि पयस्तथा ॥
क्षीरवृक्षकषायो वा देयः शीतो घृतान्वितः ॥ १६४ ॥
अग्निकर्मसु सर्वेषु शीतीकरणमिष्यते ॥
वर्गः कषायमधुरः सर्पिषा शीतलो हितः ॥ १६५ ॥
प्रपौण्डरीकं मधुकं मरिचं रक्तचन्दनम् ॥
उशीरं पद्मकं लोध्रं मञ्जिष्ठा सुनिषण्णकम् ॥ १६६ ॥

---

१ ख. ग. वहत्यपि । २ क. ख. श्रवन्ति । ३ क. पाण्डवा । ख. पण्डुरा ।

मधुकं क्षीरवृक्षाश्च सोमवल्कार्जुनावुभौ ॥
नलवञ्जुलमूलानि पयस्या चोत्पलानि च ॥ १६७ ॥
पयसा कल्कपिष्टानि घृतेन सह योजयेत् ॥
अग्निकर्मक्षतान्पादान्गजस्याऽऽलेपयेद्भिषक् ॥ १६८ ॥
नलिकानलमूलानि शालूकानि विशानि च ॥
प्रपौण्डरीकं मधुकं लोध्रमुत्पलमेव च ॥ १६९ ॥
समभागानि सर्वाणि सलिले परिवासयेत् ॥
एतैः शीतकषायैस्तु पादनिर्वापणं भवेत् ॥ १७० ॥
वारकुम्भिकवृक्षाणां त्वचमारग्वधस्य च ॥
नदीजम्बोश्च मूलानि नलिकाया नलस्य च ॥ १७१ ॥
समभागानि सर्वाणि सलिले परिवासयेत् ॥
एते शीतकषायाः स्युर्दाहनिर्वापणाः स्मृताः ॥ १७२ ॥
उपरूढेषु पादेषु स्थिरता जायते यथा ॥
तथा वक्ष्यामि राजेन्द्र तलानां हितमुत्तमम् ॥ १७३ ॥
धावने त्रिफला कार्या चूर्णं वाऽस्या महीपते ॥
तिलतैलसमायुक्तं स्थिरीकरणमुत्तमम् ॥ १७४ ॥
पिण्डीतकस्य बीजानि चूर्णीकृत्य त्वचा सह ॥
लेपस्तैलेन संयुक्तस्तेनास्य कठिनास्तलाः ॥
शर्करा काष्ठदी(ही)नायां वीथ्या(थ्यां)नागं विचारयेत् ॥ १७५ ॥

तत्र श्लोकौ—

धावनैः स्नेहनैश्चूर्णैश्चर्मकोशैश्च तांस्तलान् ॥
पादरोगप्रशान्त्यर्थं सदा रक्षेत बुद्धिमान् ॥ ७६ ॥
क्रियामष्टविधामेनां सम्यक्शास्त्राणि निश्चितम् ॥
प्रयुङ्क्ते यो यथायोगं स भिषक्श्रेष्ठ उच्यते ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥ ७७ ॥ ९९४ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थाने
पादरोगाध्यायः षोडशः (पञ्चदशः) ॥ १५ ॥

---

१ ख. °त् ॥ चारकु° । २ क. उपगूढेषु । ३ क. शर्करां । ४ क. मार्गनागं ।

## अथ षोडशोऽध्यायः ।

---

अथातोऽष्टव्यापच्चिकित्सितं व्याख्यास्यामः, इति ह स्माऽऽह भगवान्पालकाप्यः । इह खल्वष्टौ व्यापदोऽस्य भवन्ति । तद्यथा—तैलघृतवसाक्षीरसुराधान्योदकोपधाभ्यः पक्वामाभ्यां च व्यापद्यते ग्रहण्ययोगातियोगवियोगेभ्यः ॥

तत्र विरुद्धरसवीर्यविपाकगुणभेषजानां प्रदानमयोगः । अतिमात्रं प्रदानमतियोगः । कफपवनरुधिरपित्तानां प्रकुपितानां वृद्धिकरणं वियोगः । यथावयःप्रकृतिवर्ष्मसत्त्वसात्म्यदेशकालर्तुमात्राप्रदानं योगः ॥

एवमयोगातियोगवियोगैर्व्यापदामुत्पत्तिं निदानं चिकित्सितं वक्ष्यामः ॥

तत्र रूक्षोऽत्यर्थमजीर्णे कृशोऽतिव्यायामकर्शितः पित्तप्रकोपि वा तैलं पायितः सहसा तैलव्यापदमृच्छति । तस्य दुर्बलाग्नेरुदरस्थः स्नेहः शरीरमनुसृत्य व्याधिं जनयति ॥

कष्टां हृदयपीडां वेपथुं शूलमाध्मानं मुखशोषं प्राणहानिमुदावर्तं च जनयति । ततः शूनान्तनयनः, सस्थूलोच्छ्वासो वालमूर्ध्वमुदस्यति कृच्छ्रेण रुधिरमल्पाल्पं च बहुशः पुरीषमुत्सृजति कूजति परिहृष्यति म्लानपेचकश्च भवति ॥

तस्यैवं तैलव्यापन्नस्य चिकित्सितमुपदेक्ष्यामः—पयस्तृ(त्रि)वृद्धिडङ्गचित्रकबिल्वैः सह सृ(शृ)तं सुखोष्णमेनं पाययेत् । अथवा—पलाशभस्म परिश्रा(स्रा)व्य पिप्पलीचित्रकहिङ्गुभिः सूक्ष्मचूर्णीकृतैः पाकादर्धोदकां सुरां पाययेत् । अथवा—अर्कपलाशानां मूलरसं मस्तुना सुरया वा पाययेत् । त्रिफलाविडङ्गानि वा क्वाथं वा सफाणितं पञ्चलवणं पाययेत् । बृहत्योर्वा फलानि मदनलशुनकुटजमरिचे लवणपिप्पलीभिर्गोमूत्रपित्ताभ्यां सम्यक्कपाले पाचयित्वा प्रसन्नया सह पाययेत् । मदनबृहतीनां फलानि लवणलशुनानि च पिष्ट्वा क्षौमवस्त्रं प्रलिप्य वर्तिं गुदे प्रणिदध्यात् । ततो निरूहच्युतदोषः सुविशुद्धहृदयः सुखकोष्ठो भवति । एषा चतसृष्वपि स्नेहव्यापत्सु निरूहवर्तिरिष्टा पुरीषसंवर्तनार्थम् । अश्वत्थसोमवल्कोदुम्बरप्लक्षाणां त्वचं संक्षुद्य द्रवन्तीपिप्पलीमधुसंयुक्तान्कवलान्दद्यात् । क्रमेणाभ्यङ्गं लघुगमनं च सर्वव्यापत्सु कारयेत् । उष्णो-

---

१ ख. °त्सितमध्यायं व्या° । २ क. °त्पत्तिनि° । ३ क. शूलाध्मानं । ४ क. °वा प° । ५ ग. °म्यक्पाच° । ६ क. °षः स वि° । ७ ख. पुरुष° ।

दकं च स्नानपानार्थे दद्यात् । जीर्णावस्थितपुरीषं चावगाहयेत् । *जूर्णपादकदम्बशिरीषकरीरजम्बूशल्लक्यरिमेदकसेरुककुरुविन्दानामन्यतमं भोजयेत् । सपञ्चलवणां प्रसन्नां पाययेत् । क्रमशश्च शालीनामोदनं मुद्गयूषेण सह भोजयेत् ।

इति श्रीपालकाप्ये तैलव्यापत् ॥

कफोपचितदेहः समुपचितमांसमेदाः सर्पिः पायितः सर्पिर्व्यापदमृच्छति । स कोष्ठसंलीनं विष्टभ्य शीनसर्पिरवसीदति कफं प्रकोपयति ॥

ततोऽस्य हृदयं पीड्यते । न शक्नोति स्थातुम्, नाभिलषति यवसकवलकुवलैपल्लवभोजनानि । स उपदिग्धकरनयनपेचकः संमृजति गात्रं गात्रेण, जलयश्रवच्चातिसार्यते, स्थूलाश्रुरप्रगल्भश्च भवति ॥

तस्मै निम्बपत्रत्वक्पटोलानि मधुककरञ्जमधुशिग्रुपूतीकाटरूषकान्, क्षोदयित्वा सपञ्चलवणाक्कवलान्दद्यात् । ततः सपुरीषं सर्पिर्निरूहति । अथवा—अरलुशिग्रुकरञ्जकरघाटापाटलानिम्बदन्तीं द्रवन्तीं च संक्षुण्णान्सपञ्चलवणान्कवलान्दद्यात् । यवमुद्गकुलत्थमाषबदरशणाढकीनां बीजानि निम्बबदरकाश्मर्यकाणि च द्विपञ्चमूलाभ्यां सह क्राथयित्वा सपञ्चलवणं क्राथं पाययेत् ॥

इति सर्पिर्व्यापत् ॥

वसाव्यापदमिदानीं वक्ष्यामः । गात्रस्तम्भव्यायामव्यवायकृते मदबलक्षये भग्नविहितानां क्षये वा विच्युतोरस्के वातप्रकोपे वा वसा नागेभ्यो दीयते गोमहिषवराहाजमत्स्यानामन्यतमस्य । चेन्मांसस्नेहाविराहतस्यायोगातियोगवियोगैर्दीयते, ततोऽस्य व्यापदं जनयति ॥

स भवति निमीलिताक्षः, उपदिग्धपेचककरनयनः, पर्यश्रुः, भिन्नपुरीषः, स्थातुं न शक्नोति, अवसीदति ॥

तस्यैवं वसाव्यापन्नस्य पूतिकार्ककरवीरदन्तीवृ(त्रि)वृच्चित्रकान्क्षोदयित्वा निष्क्राथं सपञ्चलवणं पाययेत् । अथवा—अर्ककटुरोहिणीविश्वभेषजपिप्पलीमूलदेवदारुहस्तिपिप्पलीविडङ्गदन्तीचित्रकान्निष्क्राथं सपञ्चलवणं पाययेत् । त्रिफलाविडङ्गैः सह संक्षुद्य सक्षौद्रान्कवलान्पुरीषसंवर्तनार्थं दद्यात् । अथवा क्षीरवृक्षाणां मधुकारिमेदयोस्त्वचः संक्षुद्य मधुसंयुक्तान्कवलान्दापयेत् । जीर्णे

---

* 'क' पुस्तके तु 'जूर्णपाद' इति, गपुस्तके तु 'उप्णपाद' इति पाठः । द्वयोरपि पुस्तकयोरग्रे तु 'जीर्णपाद' इत्युपलभ्यते ।

---

१ क. °हः सर्पिः । २ क. कोष्ठे सं° । ३ क. ख. शीतस° । ४ क. °लभो° । ५ ख. °धुसिग्रु° । ६ क. °स्तम्भे व्या° ।

सक्षौद्रपिप्पलीकेन मुद्गयूषेण भोजयेत् । यवसानि यथोक्तानि दद्यात् । ततः स्वस्थो भवति ।

इति वसाव्यापत् ॥

अथ यदा वातशोणितपित्तानां विकारैः पीड्यमानस्य दन्तिनः क्षीरपानमनुविधेयं भवति तदा, जीर्णे कफप्रकोपे वा पयः पीत्वा क्षीरव्यापदमृच्छति ।

ततः कुष्ठकिटिभदद्रूकिलासपिटकोद्गमाः प्रादुर्भवन्ति, कण्डूश्च परिहृष्टरोमा न संवीजति विरिच्यते मुखप्रसेकश्चास्य भवति ॥

तस्मै वरुणतिन्दुकोदुम्बरान्मधुसंयुक्तान्कवलान्दद्यात् । अथवा द्राक्षायष्टीमधुसंयुक्तान्कवलान्दापयेत् । पद्मकमोचरससमङ्गानां वा मधुसंयुक्तान्कवलान्भोजयेत् । प्रसन्नां प्रतिपाने च भोजनं मुद्गयूषोदनं दद्यात् । जीर्णपादं शिरीषपल्लवांश्च यवसं दद्यात् । एतेन प्रतीकारेण क्षीरव्यापदो मुच्यते द्विपः प्रकृतिस्थशरीरस्तेजस्वी बलवांश्च भवति ॥

इति क्षीरव्यापत् ॥

स्वस्थवृत्तेर्विकारोपशमनार्थं वा यदा सुरा वारणाय प्रदीयते, द्राक्षागुडतैललवणसंयुक्तां केवलां वा प्रसन्नाम्, अथवाऽपि सुरामेजातां तरुणीं स्थानदोषान्वितां विपन्नां वा पीतवतो व्यापदुद्भवति ॥

ततः प्रमीलयति, उन्मीलयति, अवलीयते, अत्यर्थं दह्यते, प्रमेहति, संवीजति वेपते वमति कूजति परिहृष्यति, अवसीदति च वारणः ॥

गजमवेक्ष्य च्छायास्थं तमेवंगतं विश(?)मृणालोत्पलचन्दननलवेतसमूलैर्जम्बूकिशलयैश्च कर्दमोशीरपद्मकशतपुष्पामञ्जिष्ठाभिः श्लक्ष्णपिष्टाभिः प्रलेपयेत् । शरीरं सशिरस्कमानखेभ्यो जलार्द्रैर्वस्त्रैः प्रतिच्छाद्य व्यजनैर्वीजयेच्छायास्थितम् । ततः स्वस्थो भवति । दाहस्य चास्योपशमो भवति । पारावताम्रदधित्थदाडिमाम्रातकबदरपरूषकभव्यलकुचमृद्वीकामातुलुङ्गानि घटेषु सलिलप्लुतानि वासयेद्रात्रिम् । ततः परिश्रा(स्रा)व्य सशर्करासौवर्चलजीरकं प्रतिपानं पाययेत् । अम्लवेतसवेत्रफलानि तिन्तिडीकफलानि गुडबदररसैरन्यैर्वाऽप्येवंप्रकारैर्वृक्षभङ्गवल्लीकडंगरैर्भोजयेत् । अम्लां वा यवागूं रसमांससंस्कृतां सपञ्चलवणां पाययेत् । सुरां वा सपञ्चलवणामर्धोदकां वा पाययेत् । पिप्पलीमरिचलव-

---

१ ख. ग. °सक्षारपि° । २ क. संजीवति । ३ क. वा समधुयु° । ४ क. प्रतिपानं । ५ क. °मराजतां । ६ प्रलीयतेऽत्यर्थमुन्मी° । ७ क. संजीवति । ८ क. गतविशं । ९ क. सर्वेश° । १० ख. °वागूर° ।

पान्वितेन ताम्रचूडबर्हिणरसेन भोजयेत् । एतेनोपक्रमेण सुराव्यापदो मुच्यते द्विरदः ॥

इति मद्यव्यापत् ॥

धान्यव्यापदमिदानीं वक्ष्यामः । पक्वं चाऽऽमं चातिमात्रमजीर्णाध्य्येस(श)नसमशनेषु भोजितो धान्यव्यापदमृच्छति ॥

तस्यातिसारः प्रवर्ततेऽतिमात्रं दुर्गन्धिरामाशयादामः, पक्वाशयाद्विदग्धः ॥

तस्यैवमुत्पन्नव्यापदः सर्वधान्यानि प्रतिषेधयेत् । कवलं यवसैरेव वर्तयेत् । (*ततोऽस्याऽऽरग्वधत्रिकटुकचित्रकबिल्वगण्डीराटरूषकदन्तीसर्षपांश्च क्षोदयित्वा गोमयसंयुक्तान्प्रयच्छेत्कवलान्सक्तुभिर्वा । ततः संपद्यते सुखी ॥

इति धान्यव्यापत् ॥

अथ वारिव्यापदं वक्ष्यामः । अश्रान्तः सहसा पिपासितोऽतिमात्रं सदोषं शास्त्रार्थप्रयोगतः पीतं पानीयं व्यापदमृच्छति ॥

तस्यातिसारोऽतिमात्रमुदकप्रस्रवत्प्रवर्तते । जठरमाध्मायते वातबस्तिरिव सर्वतः पूर्णम् ॥

तस्मै कटुकनिम्बपत्रामलककरञ्जफलत्रयदाडिमाजमोदाविडङ्गप्रियङ्गुहरिद्रातेजोवती)पाठासूक्ष्मसर्षपतगरकुष्ठैलाचव्यांशुमतीदन्तीगण्डीरचित्रकदेवदार्विन्द्रयवाजाजिगजपिप्पलीसर्जश्रीवेष्टकहिङ्गुवचासैन्धवसुवर्चिकायवक्षारविडसौवर्चलरोमकाणि सपिप्पलीमरिचशृङ्गवेरचव्याजमोदानि सूक्ष्मचूर्णीकृतानि प्रसन्नया पाययेत् । तृणैरेव प्राणं ग्रहणीं च वर्धयेत् । ततः संपद्यते सुखी ॥

इति वारिव्यापत् ॥

परिचारकैरज्ञानाद्वाऽतिलोभादतिसिद्धमसिद्धं वा पर्युषितं वा भोजितवतः संवत्सरस्थितं सदोषं स्थानदोषान्वितं वा यवसं भक्षितवत उपधाभिर्वा, अविधिप्रयुक्ताभिरयोगतो मद्यमकाले त्वरया पीतवतोऽस्नेहलवणां विधिविहितां वा विधां प्रयोगातियोगवियोगैरुपयुक्तवतो दुःसंप्रयुक्तैरौषधैरतिप्रसक्तिवन्तै(द्भि)र्वा व्याधिरप्रतिक्रियया वैद्यापराधाद्वा मदेप्रकृत्याऽवस्थाप्रमाणानुचितपानपिण्डप्रयोगाद्वा शास्त्रप्रयोगस्योपरोधाद्वा भवत्युपधाव्यापत् ॥

तस्यानाहोऽत्यर्थं भवति । तृष्णा चातिमात्रम्, मुखपरिशोषः, पुरीषभेदः,

* धनुराकारचिह्नमध्यस्थः पाठः कपुस्तके त्रुटितः ॥

१ क. °ध्यमन° । २ क. °लराम° । ३ क. ख. °कृत्यानिप्र° । ४ क. °योगातियोगै° । ५ क. °दनप्र° । ६ क. पुरुषभेदः ।

न चाऽऽहारमभिलषति यादृशमुपयुङ्क्ते तादृशं निर्हरति तद्वर्णगन्धपुरीषमुत्सृजति परिमूत्री च भवति । लालाश्रा(स्रा)वी भ्रमति कुप्यति मुह्यति, अवसीदति ॥

तस्यैवंरूपस्य सर्वमाहारं प्रतिषेधयेत्, ऋते च यवसाद्यथोक्तात् । तं त्रिकटुकसंयुक्तां सपञ्चलवणां प्रसन्नां पाययेत् । त्रिफलाबदरपाठाचित्रकशणबीजशोभाञ्जनकहरिद्राद्वयहिङ्गुसर्षपत्रिकटुकेन्द्रयवविदारीकरञ्जकटुकमत्स्योम्लिकापिचुमन्दाटरूषकसैन्धवसौवर्चलकटुकरोहिणीन्द्रयवकुस्तुम्बरीण्युदूखले संक्षुद्य गोमयसंयुक्तान्कवलान्दद्यात् । क्रमशश्चास्य तृणैरेव प्राणं ग्रहणीं च वर्धयेत् । प्रतिषेधयेत्सर्वमन्यत् ॥

इत्युपधाव्यापत् ॥

तत्र श्लोकाः—

युक्तः सदा परीक्षेत वारणे कुशलो भिषक् ।
जीर्णाजीर्णं प्रहर्षं च दौर्मनस्यं बलाबलम् ॥
निदानैः शास्त्रविहितैः सम्यग्व्याधिं परीक्ष्य च ।
यथोक्तेन विधानेन (*चिकित्सितुमुपक्रमेत् ॥
इत्यष्टौ व्यापदः सम्यग्वारणानां हितैषिणा ।
ससंभवा मया प्रोक्ताः सुनिदान)चिकित्सिताः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थाने (अष्टौ) व्यापदध्यायः सप्तदशः ( षोडशः ) ॥ १६ ॥

---

## अथ सप्तदशाध्यायः ।

---

अथ भगवन्तं महर्षिमभिवाद्य रोमपादः प्रपच्छ पालकाप्यम्—'भगवन्ये त्वया व्याधिसंख्यायां सप्त (+शोफा उद्दिष्टाः, तेषां के साध्याः, केऽसाध्याः, कथं वा संभवन्ति, किं वा चिकित्सितम्' इति ॥

पालकाप्य उवाच—'इह खलु भो गजानां सप्त)' शोफाः संभवन्ति । तद्यथा—मन्याशोफः, सगदाशोफः, द्रोणीकशोफः, अवच्छिन्नशोफः, शाल्मलीस्कन्धशोफः, कदलीस्कन्धशोफः, †गात्रशोफः, शुद्धशोफश्चेति ॥

---

* धनुराकारमध्यगः पाठः कपुस्तके न ॥ + धनुराकारमध्यगतपाठः खपुस्तके न ।
† अस्य गात्रशोफस्यैव शुद्धशोफता भवेत् । अत एव सप्तसंख्योद्दिष्टा संग्रहाध्याये गात्रशोफस्यानुल्लेखश्च संगच्छते ॥

---

१ क. °लापद° । २ क. °त्स्याक्षीका° ।

तत्र—मन्याशोफो मन्ययोर्भवति । सगदाशोफः सगदयोर्भवति । द्रोणीकशोफ उरोद्रोण्या(म् भवति ।) अवच्छिन्नशोफोऽण्डकोशे (*पायौ नाभ्यां च भवति । गात्रशोफो गात्रापरयोर्भवति । शाल्मलीस्कन्धशोफो बाह्वन्तरे भवति । कदलीस्कन्धशोफः स्कन्धे भवति ॥

तत्र यौ कदलीशाल्मलीस्कन्धशोफौ, स्वनामसंस्थानौ भवतः । केचित् 'कण्ठबाह्वोश्च' इति ब्रुवते । तावसाध्यौ । शुद्धशोफो ग्रीवायामंसयोर्वंशे च सर्वका)ये वा भवति । द्वावसाध्यौ मन्यावच्छिन्नशोफौ भवतः, द्रोणीकः प्रायशः । एवमेते त्रयो मन्यावच्छिन्नद्रोणीकशोफाः प्रायश एकाकारा भवन्त्युपक्रमतः । अभिषन्न(ण्ण)स्य च्छवीमाध्मापयन्ति कण्डूं च विविधां जनयन्ति ॥

स एष मन्याशोफः सलिलमिवाभिवर्धते मृदुश्चलश्च भवति । तद्यथा मनुष्याणामिन्द्रियसंवि(नि)रोधात्, क्षीरेक्षुगुडदधितिलपललमत्स्यानूपमांसरसभोजनादव्यायामशीलानां[1] कण्ठाश्रया गलगण्डका नाम प्रादुर्भवन्ति, एवमेव खलु नागानां स्नायुमज्जाभिषन्ना(ण्णा)नां छवीमाध्मापयन्ति[2] । तदेवं स्नायुमज्जाध्माने कण्डूभूते[3] द्विविधा प्रतिक्रिया चैषां भवति—अन्तःप्रतिक्रिया, बाह्यप्रतिक्रिया चेति ॥

तत्र श्लोकः—

महांश्चा(प्य)व्यभिचारी च प्राणांश्चापि रुणद्धि वै ।
तस्माद्यत्नेन कुशलस्तस्य कुर्याच्चिकित्सितम्[5] ॥

यस्तत्र शुद्धशोफः स षड्विधो भवति ॥

यः सर्वश्वयथुभूतस्तं[4] निरीक्ष्य यथाविधि ।
शुद्धशोफं तु विज्ञाय भिषक्कर्म समाचरेत् ॥

तस्य भेदा वातपित्तकफशोणितसंनिपातेभ्य आगन्तवश्चेति । एषामुत्पत्तिनिदानं चिकित्सितं च पृथक्पृथग्विभागेन वक्ष्यामः ॥

तत्रातिप्ररोधदौर्बल्याद्दुःस्थानशयनात्कटुकषायरूक्षभोजनादतिकर्मसेवनाच्च प्रकुप्यति पवनः । स कुपितो मृदु चञ्चलं च शोफं जनयति हस्तिनः । स सर्वाङ्गसंचारी[6] स्थानात्स्थानविसर्पी शीतस्पर्शो शीते विवर्धते, उष्णे विलीयते, रूक्षाभश्च भवति ॥

---

* धनुराकारमध्यगपाठः कपुस्तके न ।

---

१ क. °दव्यवायानां शी° । २ क. °माध्याप° । ३ ग. कण्डूते । ४ क. अतः । ५ क. °कित्सकम् । ६ क. सर्वाङ्गचारी ।

तेन मुह्यति भ्रमति, व्याददाति मुखं गजः, स्तब्धगात्रो गाढमूत्रपुरीषो भोजनकवलकुवलद्वेषी च भवति ॥

तस्मै तैलपानमभ्यङ्गं च दद्यात् । (*ततः शृङ्गवेरश्योनाकसोमवल्कपिप्पलीचित्रककुटजकरवीरार्कखदिरकुष्ठतालीसपत्रैश्चैनं कल्कपिष्टैर्बहलमनुलेपयेत् ।) अथवा–तिलपिष्टलवणतन्दुलकिण्वैस्तक्रदध्यम्लसिद्धै रात्रिपर्युषितैः प्रलेपयेत् । अथवा—जलचरसत्त्वानां मांसमेदःकदम्बवल्लीबदरमण्डैस्तक्रदध्यम्लसिद्धैः सुखोष्णैरानखेभ्यः प्रलेपयेत् । अथवा—स्योनाकतालपत्रीमेषशृङ्गीवंशपत्रिकाकाश्मर्यकुलिङ्गाक्षीपाटलीबिल्वारग्वधशोभाञ्जनकक्षुद्रसर्षपैश्चूर्णीकृतैस्तक्रदध्यम्लोत्क्वाथितैः प्रलेपयेत् । शुकनासाकाकादनीवरुणकसुवहातिलपिष्टाबलातिबलाशोभाञ्जनकबीजक्षुद्रसर्षपैश्चूर्णीकृतैस्तक्रदध्यम्लसिद्धैः सुखोष्णैः प्रलेपयेत् । सामुद्रलवणबदरशतपुष्पाहरिद्राद्वयपुनर्नवाधत्तूरकपत्रचित्रकगृहधूपगोमांसैः पञ्चमूलक्वाथतक्रदध्यम्लसिद्धैः सुखोष्णैर्बहुलमनुलेपयेत् । सलवणवालुकया वा श्लेष्मान्तकसंसृष्टया प्रलेपयेत् । कृशरां वा युक्तस्नेहलवणां कृत्वा तयैव सुखोष्णया प्रलेपयेत् । पूर्वाह्णे चैनं पिप्पलीमरिचशृङ्गवेरचूर्णव्यामिश्रितां चिरस्थितां सपञ्चलवणां पाययेत्सुराम् । अश्वमूत्रं वा विडङ्गचूर्णसंयुक्तं पाययेत् । कोद्रवौदनं चैनं सर्षपकल्कव्यामिश्रेण सौवीरकेण भोजयेत् । अथवा पिप्पलीमरिचशृङ्गवेरकल्कसंसृष्टेन कुलत्थरसेन भोजयेत् । पार्वतीयं चास्य यवसमुपहरेत् ॥

तत्र श्लोकौ—

क्रमेणानेन राजेन्द्र यस्तु कुर्यात्क्रियाविधिम् ।
शोफं तस्यापनयति भिषक्कर्मविशारदः ॥
प्रदेहैः स्वेदनाभ्यङ्गैः प्रयत्नैः पानभोजनैः ।
यस्तु कुर्याद्द्विपर्यस्तं स हन्याद्द्विरदं नृप ॥

इति शुद्धशोफसामान्यप्रतिक्रियापर्यायः ॥

अथ शोफे वातिके स्वेदकर्म वक्ष्यामः । घटीमृत्तिकानाडीतापिकाफलपिण्डसलिललवणपाषाणैः स्वेदयेत् । यथायोगं सुरसासुमनानिर्गुण्डीमधुकाकोरुबूकवंशतर्करीकुलिङ्गाक्षीपत्रभङ्गैस्तिलपिष्टलवणसंयुक्तैर्महास्थाल्यां क्वाथयित्वा निवाते देशे तैलाभ्यक्तशरीरं नाडीस्वेदेन स्वेदयेत् । एतेनैव च कल्केन मूत्रैः खरकरभतुरगमहिषाश्वतरवराहाणां स्वेदः कार्यः । अथैषामन्यतमस्य मांसै-

* धनुराकारमध्यस्थपाठः कपुस्तके न ॥

१ क. °श्चूर्णितै° ।

स्तिलपिष्टलवणसंयुक्तैर्नाडीस्वेदं कुर्यात् । एतेषामेवास्थिभिरस्थिस्वेदः, पुरीषैः पुरीषस्वेदः । सर्वश्वयथूनां चोपशमनायास्थिमांसशकृत्स्वेदाः प्रदातव्याः । पित्तशोणितात्मकेन प्रयोज्याः पर्यवसाने वा प्रयोक्तव्याः ॥

तत्र श्लोकौ—

इति व्याधिप्रशमनाः सर्वेषां हस्तिनां हिताः ।
अस्थिमांसशकृत्स्वेदा मूत्रस्वेदाश्च कीर्तिताः ॥
वृषणौ हृदयं नेत्रे स्वेदयेन्मृदु वा न वा ।
नित्यसूक्ष्मपरीतानि स्थानान्येतानि [1]तेजसः ॥

भूयः स्विन्नशरीरस्य हरिद्राजमोदकुष्ठवचालशुनसैन्धवपिप्पलीमरिचबिल्वमृद्वीकाशतपुष्पादेवदारुपृथ्वीका[2]भिर्दधिमस्तुपिष्टाभिः सततं वातशोफमनुलेपनं कारयेत् । पूर्वाह्णे चैनं बिल्वाग्निमन्थश्रीपर्णीवरुणकपाटलानिर्यूहपक्कं तृ(त्रि)वृत्स्नेहं पाययेत् । जीर्णे स्नेहे चास्य जाङ्गलं मृदु हरितं यवसमुपहरेत् । शाल्योदनं चैनं भोजयेत् । भोजनार्थमपि चास्य मत्स्यमांसं सुसंस्कृतं दापयेत् । वाराहं वा रसं युक्ताम्ललवणस्नेहं दद्यात् । रसं वा कौलत्थं युक्तस्नेहलवणं दद्यात् । करीषेण चास्य शय्याभागं प्रकल्पयेत् ॥

तत्र श्लोकः—

एतेन क्रमयोगेन श्वयथुं पवनात्मकम् ।
साधयेत्कुशलो वैद्यो दृष्टकर्मा विचक्षणः ॥

इति वातशोफः ॥

अथाम्ललवणकटुकविदग्धातिभोजनादुष्णोपयोगेभ्यः पित्तं प्रकुपितं शोफमुष्ण*महातमः पादयति ॥

स पाण्डुरुष्णगात्रः शूनश्च भवति वारणः सर्वाङ्गाणि चास्य दोषधातुप्रकोपात्प्रभिद्यन्ते, तेन वेदनार्तो मुहुर्मुहुर्मुखं व्याददाति स्तम्भमाश्रयति श्वसिति परिधमति वमथुं हस्तेन गृहीत्वा श्वयथुमभिषिञ्चति वमति, न स्थानशय्यासु शर्मोपगच्छति । परिदुर्मना यवसकवलकुवलभोजनं च नाभिनन्दति । दह्यते चात्यर्थम् । स दह्यमानः स्थानान्यन्यानि गच्छति सलिलाभिकाङ्क्षी, कर्णतालाभ्यां मन्दं [3]परिवीजति शीतमभिनन्दति, उष्णद्वेषी रात्रौ सुखनिद्रश्च भवति[4] ॥

तस्मै त्रिफलायुक्तं सर्पिष्पानं दद्यात् । प्रपौण्डरीकलशुनोरुबूकहंसपाद्यति-

* 'मुष्णं महान्तं संपादयति' इति पाठः स्यात् ॥

१ क. तेजसा । २ क. °कादिभि° । ३ क. रहितं । ४ क. परिचीयते ।

विषाः कल्कपिष्टाः शृगालमकरशिशुमारशशकमांसैः स्नेहं पाचयित्वा प्रलेपयेत् । अथवा प्रपौण्डरीकदेवदारुपद्मोत्पलकुमुदकह्लारसुनिषण्णककुवलयतामरसैः क्षीरपिष्टैर्घृतयुक्तैः प्रलेपयेत् । चन्दनोशीरसारिवाकुशमूलधत्तूरैः क्षीरपिष्टैः सर्पिःस्निग्धैः प्रलेपयेत् । अथवा—पद्मकोशीरमधुकशृङ्गाटकेक्षुवालिकानलनलिनकुमुदकदलीमूलैः कुवलयकरवीरोत्पलकह्लारवर्धमानकवेतसक्षीरवृक्षसुनिषण्णकैः क्षीरपिष्टैर्दधिसंयुक्तैः सततमनुलेपनं कारयेत् । शिरस्थांश्च यथायोगं नवान्कुम्भान्वारिपूर्णान्परिश्रा(स्रा)वयेत् । जलार्द्रैश्च तालवृन्तैर्वीजयेत् । पूर्वाह्णे चैनं मधुशर्करातुगाक्षीरीकाकोल्यादिसिद्धं सर्पिः पाययेत् । गात्राण्यस्याभ्यञ्जयेत् । पिचुमन्दमेलककुशगडूच्यारग्वधपथ्येलीशतावरीमृद्वीकाश्च संहृत्य जलद्रोणेऽपि विपाच्य चतुर्भागावशिष्टं क्वाथं सशर्करं पाययेत् । शाल्योदनं लावतित्तिरिक्रकरकुर्कुटकपिञ्जलानां रसेन घृतयुक्तेन भोजयेत् । पृष्टिपर्ण्यंशुमतीकपिज्जकसारिवानिर्यूहपक्केन वा मुद्गयूषेण घृतस्निग्धेन भोजयेत् । स्थानं चास्य शीताभिरद्भिः सेचयेत् । नानाविधसुरभिकुसुमोपकीर्णां च शालां कारयेत् । यवसान्यस्मै हरितमृदूनि मधुरविपाकानि दद्यात् । बहिश्चास्य शालायाः शय्याभागं कारयेत् । न वाचं कटुकां ब्रूयात् । न चैनं प्राजनाङ्कुशदण्डैरभिहन्यात् । मनश्चास्य वंशवीणादिभिर्गीतघोषैश्च प्रसादयेत् । ब्राह्मणानि सामानि पाठयेत् ।

तत्र श्लोकः—

तीव्रो ह्येष भृशं व्याधिः श्वयथुः पित्तसंभवः ।
तस्माद्यत्नेन वैद्यस्तु रोगमेनं प्रसाधयेत् ॥

इति पित्तशोफः ॥

अथ शिशिरमधुभोजनादतियोगादव्यायामाच्च कफः संप्रवृद्ध आध्मातमिव कठिनघनशीतसूक्ष्मावियुक्तं श्वयथुमुपजनयेति ॥

स पाण्डुः शीतः स्निग्धो महान्कठिनश्च भवति । ततस्तेन व्याप्तः संभवति गण्डुभिः स्निग्धसंस्थानैः स्तब्धगात्रोऽप्रहृष्यद्रोमा स्वप्नशीलश्च भवति वारणः । तस्य कण्डूरत्यर्थं भवति । उष्णमभिनन्दति । शीतद्वेषी भोजनं नाभिनन्दति गम्भीरवेदी च भवति ॥

तस्य चिकित्सितं व्याख्यास्यामः । कटुतिक्तकषायतीक्ष्णोष्णानि भोजनानि

१ क. °मृदिनीमू°। २ क. °कुक्कुट°। ३ क. शालानां । ४ क. °तिरोगा° । ५ ख. °यन्ति । स ।

दद्यात् । शृङ्गवेरहरिद्राद्वयपिप्पलीविडङ्गहिङ्गुपुनर्नवाकल्कपिष्टैः सलवणैस्तैला-भ्यक्तं प्रलेपयेत् ॥

प्रलेपश्च पिप्पलीशृङ्गवेराजमोदकुष्ठतगरदेवदारुवचातालीसपत्रहरिद्रातिवि-षाचविका(भिः) हस्तिमूत्रश्लक्ष्णपिष्टा(भिः) शुक्तसंयुक्तान(भिः) कार्याः(र्यः) सप-श्चलवणमरिचपिप्पलीशृङ्गवेराजमोदचित्रकविडङ्गवचागृहधूम(प)हरिद्राभिः प्रले-पयेत् । अथवा—अर्कवरुणकरवीरतीक्ष्णगन्धालवणैस्तैलाभ्यक्तं प्रलेपयेत् । स्वेदैश्च पूर्वोक्तैः स्वेदयेत् ॥

तत्र श्लोकः—

कवलैः कटुकैस्तीक्ष्णैस्तथा तीक्ष्णैश्च भोजनैः ।
प्रच्छन्नैः स्वेदनैश्चैव कफशोफं प्रसाधयेत् ॥

इति कफशोफः ॥

सांनिपातिकशोफश्च सर्वशोफसामान्यलिङ्गान्वितो भवति । तस्य [१]सर्वशोफ-सामान्यप्रतिक्रियां कुर्यात् ॥

तत्र श्लोकः—

एतैरेवौषधैः [२]सर्वैः श्वयथुं सांनिपातिकम् ॥
साधयेत्कुशलः सम्यग्यथायोगं चिकित्सकः ॥

इति सांनिपातिकशोफः ॥

अथ रूक्षोष्णाम्ललवणकटुकतीक्ष्ण[३]रसातियोगादुष्णे चातिमात्राध्वकर्मप्रयो-गादतिकर्मसेवनाचासृक्प्रकुपितं हस्तिनः सुकुमारं स्निग्धं महान्तं शोफं [४]सोष्माण-मुपजनयति ॥

तेन स गजः [५]शूनो रक्ताभश्च भवति, उष्णद्वेषी सलिलग्रासं नातिप्रसक्तमुप-[६]युङ्क्ते । पित्तशोफलिङ्गान्वितश्च भवति ॥

तस्मै मधुरमृदुशीतस्निग्धानि भोजनानि दद्यात् । प्रलेपैश्च पूर्वोक्तैः शीतैः प्रलेपयेत् । अथवा किंशुकपियालसर्जतिन्दुकीनां त्वग्भिः कल्कपिष्टाभिर्घृतगु-डयुक्ताभिः प्रलेपयेत् । (*एतां त्वचं संस्कृत्य कृतवेधनत्वचा सम्यक्संक्षुद्य द्विगुणेनाम्भसा सहाधिश्रयेत् । अर्धावशिष्टेन चानेन क्वाथेन घृतं पक्त्वा तेन पानमभ्यङ्गं च दद्यात् । पूर्वमेव घृतेनाभ्यज्य शोणितमोक्षणं च कुर्यात् । मोक्षितशोणितस्य च पलाशसर्जार्जुनतिन्दुकप्रसनमधूकामलकविभीतकातिनिस-

* धनुराकारमध्यस्थपाठः कपुस्तके न ॥

१ क. सर्वस्य शो° । २ क. पूर्वैः । ३ क. °रसनियो° । ४ क. सोष्मणाऽनुप° । ५ क. शून्यो । ६ क. °पभुङ्क्ते ।

(श)पियालानां त्वग्भिः कल्कपिष्टाभिः प्रलेपनं कारयेत् । ) हरिद्रागृहधूमलशुनसैन्धवपिप्पलीमरिचशृङ्गवेरतगरसर्षपकुष्ठबृहतीफलैः प्रतिचूर्णनं कारयेत् । विश्रा(स्रा)व्यमाणे रक्ते शाल्योदनं मुद्गयूषेण घृतस्निग्धेन भोजयेत् । क्षीरिणां च वृक्षाणां कडंगराण्यौदकानि च यवसानि मधुररसान्वितानि मृदुहरितान्यनूपजानि दद्यात् ॥

तत्र श्लोकः—

एवं रक्तात्मजे कर्म श्वयथौ परिकीर्तितम् ।
यच्च पित्तात्मजे प्रोक्तं कार्यं तदपि भेषजम् ॥

इति रक्तशोफः ॥

अथ वक्ष्यामि वै शोफमुत्पन्नं वातशोणितात् ॥
विशेषेणोपलक्ष्येत स गात्रेष्वपरेषु च ॥ १ ॥
अम्लादिभोजनाद्रौक्ष्याद्रुष्णादत्यन्तभोजनात् ॥
अकस्मात्सततस्थानाद्गात्रविक्षोभणक्रमात् ॥ २ ॥
पतनाद्यैश्च नागानां कुप्येते वातशोणिते ॥
शोफः संजायते तेन तस्मात्तु गुरुवेदनाः ॥ ३ ॥
पादस्तम्भश्च नागस्य संधिविश्लेष एव च ॥
अत्यर्थं चैव दौर्बल्यं न चाऽऽहाराभिनन्दनम् ॥ ४ ॥
विद्यात्तस्य तु नागस्य शोफमस्थिसमाश्रयम् ॥
रक्तो वा यदि वा श्यामः शोफः समुपजायते ॥ ५ ॥
तेनातिवेदना वाऽपि स तु मांसाश्रयो भवेत् ॥
प्रपौण्डरीकं कटुकां सारिवे द्वे तथैव च ॥ ६ ॥
मञ्जिष्ठां त्रिफलां चैव पयसा सह पी(पे)षयेत् ॥
ततो घृतविमिश्रेण शोफं कल्केन लेपयेत् ॥ ७ ॥
गोधूमचूर्णमथवा संसृष्टं पयसा सह ॥
अजाक्षीरेण संयुक्तं तस्य लेपं तु कारयेत् ॥ ८ ॥
(*तालीसपत्रं मांसी च दाडिमं कुष्ठमेव च ॥
द्वे हरिद्रे पृथक्पर्णी मञ्जिष्ठा पद्मकेसरम् ॥ ९ ॥

---

* धनुराकारमध्यस्थपाठः कपुस्तके न ।

---

१ क. प्रतिचूर्णं । २ क. °भाणं रक्तशा° । ३ ख. ग. पित्तात्मके । ४ क. यस्मात्तु । ५ क. रोगाश्रयो । ६ ग. पाययेत् ।

अजमोदा विडङ्गानि दन्ती चापि शतावरी ॥
नीलोत्पलानि द्राक्षा च विशल्या देवदारु च ॥ १० ॥
मरिचानि च पिष्टानि घृतेन सह पाचयेत् ॥
पानमभ्यञ्जनं चैव सर्पिषा तस्य कारयेत् ॥ ११ ॥ )
पिप्पली सैन्धवं चैव तृ(त्रि)वृद्दग्धा तथैव च ॥
पी(पे)षयेत्कल्कपिष्टानि गोमूत्रेण तु संसृजेत् ॥ १२ ॥
सैन्धवेनाथ तं भूयो लवणेनैव चूर्णयेत् ॥
विरेचनीयं देयं स्यान्नागं विज्ञाय वर्ष्मतः ॥ १३ ॥
विरिक्तमथ विज्ञाय च्युतदोषमनेकधा ॥
(*संस्कृतैर्मत्स्यमांसैश्च यवागूं पाययेत्ततः ॥ १४ ॥
मत्स्यमांसरसैश्चैव तं नागमनुपाययेत् ॥
नित्यं पाने च सेके च देयमस्मै सुखोदकम् ॥ १५ ॥)
†पिप्पल्यः सारिवा चैव त्रिफला देवदारु च ॥
मृद्वीकाश्चापि संहृत्य कल्कपिष्टानि कारयेत् ॥ १६ ॥
घृतमण्डे समालोड्य पाचयेन्मृदुवह्निना ॥
वातशोणितशान्त्यर्थं कार्यं तेनानुवासनम् ॥ १७ ॥
अथवा स्थापनं कार्यं रोगशान्त्यर्थकारणम् ॥
याप्यस्यैव क्रिया प्रोक्ता वातशोणितशोफजा ॥ १८ ॥

इति गात्रजशोफः ॥

अथाऽऽगन्तुशोफः । शरशक्त्यसितोमरपरश्वधपरशुभिण्डिपालदण्डदन्तमार्जनानामभिघातादत्यायतचिरनिबन्धनाद्घृष्टदष्टाग्निदग्धाश्मलोष्टाभिघातान्मिथ्याशस्त्रोपचारादेवमादिभिरन्यैश्चाभिघातैर्वारणानां श्वयथुरभिनिर्वर्तते ॥

तस्य पित्तश्वयथुवद्वेदना लिङ्गमिति निर्दिशेत् ॥

चिकित्सितं चास्य स्नेहपानभोजनाभ्यङ्गपरिषेकप्रदेहैः कार्यम् । पूर्वोद्दिष्टः क्रियापथश्च । शोणितमोक्षणं च पित्तश्वयथुचिकित्सितं कुर्यात् । व्रणं चास्य द्विव्रणीयोपचारेणोपक्रमेत् ॥

भवति चात्र श्लोकः—

---

* धनुराकारमध्यगतः पाठः कपुस्तके न । † इतः पूर्वं कपुस्तके 'सैन्धवेनाथ संभूयो लवणेनैव चूर्णयेत्' इत्यधिकः पाठः ।

---

१ क. °नाभि° । २ क. °भिवर्धते । ३ ख. °थुवच्चिकि° । ४ क. ख. व्रणश्चास्य ।

पित्तशोफे मया राजन्यदुक्तं लिङ्गभेषजम् ॥
तत्सर्वं यत्नतो विद्यादभिघाते चिकित्सकः ॥
इत्यागन्तुशोफः ॥
श्वयथुर्विषसंसृष्टो यस्य नागस्य जायते ।
(*तस्य मन्त्रौषधैः कार्यः पूर्वोद्दिष्टैः क्रियापथः ॥ १ ॥
क्षीणशोणितमांसस्य श्वयथुर्यस्य जायते । )
यथाऽभिबृंहणं तस्य सम्यग्भवति साधनम् ॥ २ ॥
मन्यागतं श्लेष्मशोफं सांनिपातिकमेव च ॥
वातावच्छिन्नशोफं तु स्वेदैः पूर्वं समाचरेत् ॥ ३ ॥
अनन्तरं प्रेच्छ(प्रोञ्छ)यित्वा प्रतिसंचूर्णयेत्ततः ॥
पानभोजनमप्यस्य लवणाम्लं विवर्जयेत् ॥ ४ ॥
आहारैस्तिक्तकटुकैः कषायैः समुपक्रमेत् ॥
पार्श्वाण्डकोशं नाभिं च येन संछाद्य तिष्ठति ॥ ५ ॥
कफवातात्मकस्तेन शोफोऽवच्छिन्नसंज्ञितः ॥

अतःपरमसाध्यान्वक्ष्यामः ॥

तत्र गुदमन्याकण्ठगलकपोलनाभिमेढ्रजघनपेचकाण्डकोशसगदाष्ठीव्पेषु यस्य शोफ उत्पद्यते न च यवसकवलकुवलभोजनान्यभिनन्दति, उत्पन्नारिष्टश्च वारणः, तमसाध्यं विद्यात् । तेषां प्रदेशैकविभागजीवोत्सर्गकालप्रमाणं लक्षणज्ञानं च पृथक्पृथग्विभागतः सामान्येन चारिष्टज्ञाने वेक्ष्यते ॥

तत्र श्लोकः(काः)—

रिष्टप्राप्तं तु मातङ्गं दृष्ट्वैव परिवर्जयेत् ॥
साध्यं तु साधयेद्वैद्यः शास्त्रोद्दिष्टेन कर्मणा ॥
विश्रा(स्रा)व्यमाणश्वयथोर्जलं यस्मात्प्रवर्तते ।
कदलीस्कन्धशोफं तु तमसाध्यं विनिर्दिशेत् ॥
विधाकवलपानानामद्वेष्टा हृष्टमानसः ।
सम्यग्जानाति संज्ञां च (*तादृक्शोफोऽपि सिध्यति ॥
† .........कदलीस्कन्धश्चेति निरायतः ।
शोफस्तत्प्रतिरूपेण कदलीस्कन्धनं विदुः ॥

---

*धनुराकारमध्यस्थः पाठो नास्ति कपुस्तके । †....द्वयोरपि ख. ग. पुस्तकयोरक्षरपञ्चकं त्रुटितं नोपलभ्यते ।

---

१ क. °वच्छन्न° । २ क. प्रयाच्छित्वा । ग. पृच्छायित्वा । ३ क. °देशैर्विभा° । ४ क. वक्ष्यन्ते ।

यस्य क्षीणस्य नागस्य ) शोफो भवति पादतः ।
विच्छिन्नः कठिनो रूक्षः शुद्धं रक्तं श्र(स्र)वत्यपि ॥
न चात्यर्थं विषहते शीतमुष्णं च वारणः ।
शाल्मलीस्कन्धशोफं तु तमसाध्यं विनिर्दिशेत् ॥
उत्पद्य च विगच्छेद्यो विगत्य पुनरेति च ।
कपोलपायुमन्यासु शोफः सोऽपि न जीवति ॥
एकाङ्गं सू(शू)यते यस्य न च खादितुमिच्छति ।
स्थाने स्तम्भबलश्च स्यान्न स जीवति तादृशः ॥
यस्य मन्ये च नाभिश्च जघनं मेढ्रमेव च ।
पेचकश्चापि वर्धन्ते न स जीवति तादृशः ॥
अण्डकोशः सनाभिस्तु यस्य वर्धेत वेगतः ।
उरश्वांसौ च सहसा विगत्य प्रतिपद्यते ॥
सगदे च यदा प्राप्तः स शोफो यस्य हस्तिनः ।
तदा तेन स शोफेन मासादूर्ध्वं न जीवति ॥
(*क्षीणशोणितमांसस्य वर्धमानस्य हस्तिनः ।
अष्ठीव्यः सहसा सोऽपि मासादूर्ध्वं न जीवति ॥)
मन्ययोर्यस्य लक्ष्येत श्वयथुर्जलचञ्चलः ।
दौर्मनस्यं च सहसा सोऽष्टरात्रं न जीवति ॥
अश्मना सह तुल्यस्तु श्वयथुर्जायते नृप ।
वङ्क्षणौ बस्तिमाश्रित्य ( *दाहरागसमन्वितः ॥
वर्धते चापि जलवत्समन्ताद्बहुवेदनः ।
नवाहाद्वारणस्तेन शोफेनाऽऽर्तो विपद्यते ॥
कर्णसंधिं समाश्रित्य ) श्वयथुर्यस्य जायते ।
वेदनागाढबहुलो विवृद्धिमुपगच्छति ॥
ग्रासं न सेवतेऽत्यर्थं मुहुरुद्विजते द्विपः ।
प्राप्तशोफः स मातङ्गो दशाहं नातिवर्तते ॥
भूयिष्ठं यस्य गात्रेषु शोफो नागस्य जायते ।
अग्निदग्धाभैः स्फोटैः समन्तादचिरस्थिरैः ॥

---

* धनुराकारमध्यस्थः पाठो नास्ति कपुस्तके ॥

---

१ क. ग. उरश्वासौ । २ क. °दस्थिरैः स्थि° । ग. °दचिरैः स्थि° ।

श्वयथुस्तस्य नागस्य विसर्पति समन्ततः ।
अथवा नीलरक्ताभैः श्वेतैर्वाऽपि समन्ततः ॥
यवोदकप्रकाशैश्च साश्रा(स्रा)वैर्बहुवेदनैः ।
ततस्तला विशीर्यन्ते विक्रापार्ष्णिनखैः सह ॥
तमीदृग्लक्षणं नागं भिषग्विद्याद्गतायुषम् ।
इष्टिकाप्रतिसंकाशः श्वयथुर्गुरुवेदनः ॥
*वङ्क्षणैरसिरन्ध्रे च सोऽपि कष्टतरः स्मृतः ।
इति शोफाः समाख्याता ये न शक्याश्चिकित्सितुम् ॥
न तानुपचरेज्जाताञ्शोफान्दृष्ट्वा चिकित्सकः ।

अथ विलापनम्[2] ॥

करवीरतगरकुष्ठकिरातकलाङ्गलीगवेधुकशाल्मलीजाङ्गलकपित्थाङ्कोल्लबिल्वहरिद्राद्वयपुनर्नवामलककालाकाकादनावाणटि(ति)न्दूकभद्रदारुसरलरास्नाप्रियङ्गुशतपुष्पाभिष(ः)कल्कपिष्टाभिर्बहलमनुलेपयेत् । एतैरेव सुखोष्णैः क्षारलवणकिण्वसंयुक्तैः पाचनभेदनानि योगवित्कुर्यात् । वर्धमानानां शोफानां यथायोगं चतुर्विधैः शस्त्रैर्व्रीहिमुखोत्पलपत्रकुठारकवत्सदन्तैश्च रक्तमपनयेत्, जलूकालाबुशृङ्गैर्वा । सार्कुष्ठाविडङ्गलवणचूर्णैश्च प्रतिचूर्णनं कारयेत् । वातकोपसमुत्थे पित्तसमुत्थे पिप्पलीसैन्धवलवणैः समभागसंयुक्तैः प्रतिचूर्णनं कारयेत् । विश्रा(स्रा)व्य चैनं घृतेन शतधौतेनाभ्यञ्जयेत् । कटुकरोहिणीमरिचलवणचूर्णैः सर्षपमिश्रैः कफात्मकमवचूर्णयेत् । एतैरेवौषधैर्यथोक्तैः सांनिपातिकमुपाचरेत् ॥

तत्र श्लोकः—

करोति शिथिलं शोफं दोषं च समुदस्यति ।
दाहस्य चाऽऽयतिं हन्ति तस्मादु(द्र)क्तं प्रमोक्षयेत् ॥

अनेनोपक्रमेणैते शोफाः प्रशान्तिमुपगच्छन्ति । इत्येतेषु षट्सु शोफेषु यथासात्म्यप्रकृतिदेशकालबलाबलं वपश्चावेक्ष्य शोणितमोक्षणं कुर्यात् ॥

शोणिते वर्धिते चैव बलं तेजश्च वर्धते ।
शोणिते क्षीयमाणे तु क्षीयन्ते सप्त धातवः ॥

---

* 'वङ्क्षणोरसि' इति स्यात् ।

---

१ ख. इतिका° । २ ग. विलेपनम् । ३ क. °लाद° । ४ क. ख. °टिण्टूक° । ५ क. °नेन प्रत्युपशोक्र° ।

देहिनां शोणितं विद्धि प्राणायतनवर्धनम् ।
मात्रया रुधिरं तस्माद्दुष्टमप्यपकर्षयेत् ॥

ये चैषां प्रलेपा उद्दिष्टाः, तैश्च यथायोगं यथादोषं वारणमायुस्तनस्तेभ्यः प्रलेपयेत् । शस्त्रकर्मोपजातांश्च व्रणान्प्रभेदनसमुत्थांश्च द्विव्रणीयोपचारेणोपक्रमेत । शोफानां च शैथिल्यं दोषाणामपकर्षणं दाहोपशमश्च भवति रक्तमोक्षात्, तस्माच्छोणितमोक्षणं कुर्यात् । द्रोणीकशोफस्य निदानं लक्षणं चिकित्सितं च स्थाने द्वितीये वक्ष्यामः । तत्र श्लोकाः—

शोफस्य द्विविधा सिद्धिरिति मे निश्चिता मतिः ।
विलीयते वाऽप्यङ्ग च †व्रणीभूत्वाऽथ शाम्यति ॥
तस्मादालेपनैः स्वेदैः प्रच्छन्नाभ्यञ्जनैरपि ।
अनुगन्तुं शनैः सम्यक्प्रयतेत चिकित्सितुम् ॥
आहारांश्च विहारांश्च यथास्वं च क्रियापथम् ।
शोफानां नाशने राजन्यथाशास्त्रं प्रयोजयेत् ॥
अधिकारस्तु कर्तव्य आत्मनः सिद्धिमिच्छता ।
असाध्यं वर्जयेच्चैव साध्यं च समुपाचरेत् ॥
अल्पो वृत्तश्च कठिनो ग्रन्थिरित्यभिधीयते ।
पृथुदीर्घश्च शोफः स्याद्विद्रधिर्गजकुम्भवत् ॥
इति शोफाः समुद्दिष्टा ये न शक्याश्चिकित्सितम् ।
न तानुपक्रमेत्प्राज्ञः शोफान्दृष्ट्वा चिकित्सकः ॥
दह्यते पैत्तिकः शोफश्चलो भवति वातिकः ।
श्लेष्मणां तु स्थिरीभूतः समाध्मातश्च शीतलः ॥
संसृष्टः सर्वरूपेण सांनिपातस्य लक्षणम् ।
योगवाही परं वायुः संयोगादुभयार्थकृत् ॥
दाहकृत्तेजसा युक्तः शीतकृत्सोमसंश्रयात् ।
गतिर्वातं विना नास्ति गौरवं न कफादृते ॥
न च पित्तादृते पाको विसर्पो वाऽपि विद्यते ।
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थाने
शोफाध्यायोऽष्टादशः ( यः सप्तदशः) ॥ १७ ॥

† 'व्रणीभूय' इति तु युक्तम् ॥

१ ग. °यत्नेन चि° । २ क. °च्छति ॥ अ° । ३ क. वृक्षश्च । ४ क. श्लेष्मणं ।

## अथाष्टादशोऽध्यायः ।

भूयोऽङ्गराजः प्रोवाच पालकाप्यम्—'भगवन्ये त्विमे द्विरदपतयो वातश्लेष्मविकारैः सगदामन्यास्तम्भद्रोणीकावचछन्नगात्रापरहस्तग्रहोत्कर्णकस्तम्भादिभिः पीड्यन्ते बहुविधवेदनागुरुत्वादुश्चिकित्स्या दृश्यन्ते तेषामुपशमनार्थं कतिविधः स्वेदः, कः स्वेदोपचारः, तथा रक्तपित्तविकारे वक्रविकारेषु बहुविधोपयोगाच्छीतक्रियाविधिश्चेह भगवता विकल्पिताः, तेषां कथमसम्यक्स्विन्नातिस्विन्नानां लक्षणं विज्ञेयं भवति । कथं स्वेद्याश्च हस्तिनो विज्ञेयाः । कः स्वेदकालः, के च ते स्वेदगुणाः । एतत्सर्वं भगवन्वक्तुमर्हसि ॥

ततः प्रोवाच भगवान्पालकाप्यः—इह खलु भो(ना)गानामनेकविधाः स्वेदाः । तद्यथा—वापीस्वेदः, भङ्गस्वेदः, शं(सं)करस्वेदः, फालस्वेदः, पिण्डस्वेदः, नाडीस्वेदः, स्नेहस्वेदः, पुराषस्वेदः, कूपस्वेदः, घटीस्वेदः, अस्थिस्वेदः, मांसस्वेदः, मृत्तिकास्वेदश्चेति । तेषामुपचारं वक्ष्यामः ॥

तत्र वापीस्वेदः वापीमपि विधायाऽऽयामविस्तारैर्यथाहस्तिप्रमाणां सुखावतारां दृढतरां खानयेत् । तामिष्टकाभिर्दृढतटीं कारयेत् । एतामच्छिद्रां बन्धयेत् । सुधोपलिप्तां कृत्वा तत्र तोयं प्रक्षिपेत् । संपूर्णतोयामग्निवर्णैश्च लोहगुडपाषाणैः पानीयं तापयित्वा वारणं श्वयथुपीडितमवगाह्य पत्रभङ्गानेतान्प्रक्षिपेत् । अशोककरवीरखशिरवसुकान्खण्डशः कल्पयित्वा शल्लकीक्षवकनिर्गुण्डीमधुकवासन्तीबृहत्यंशुमतीपृष्टिपर्णीगोक्षुरकशोभाञ्जनकमधुशिग्रुसुरसारोहीतकार्कबिल्वाग्निमन्थवर्षाभूद्रुपशतावरीकुवेराक्ष्यपेहिवातारलुककुलिङ्गाक्षीनीपासनधातकीकार्णिकारकपित्थास्फोताश्वकर्णनवमालिकापाटलाश्रीपर्णीखदिरारग्वधाटरूषकाजकर्णतर्कारीशौर्पकाश्मन्तकपलाशटिण्टु(तिन्दु)कानाम्, एवमादयो ये—चान्ये वातघ्ना वृक्षगणाः, तेषां च पत्रभङ्गैस्तिलपिष्टलवणकिण्वसंयुक्तैः सुखोष्णैर्वारणमभ्यज्य वाप्यां परिषेचयेत् । ततो यथायोगं स्वेदयेत् । लोहगुडपाषाणांश्च भूयो भूयोऽग्निवर्णान्कृत्वा स्विद्यमाने मातङ्गे वाप्यां प्रक्षिपेत् । तस्मादेष वापीस्वेदः ॥

एतानेव पत्रभङ्गान्कपालभृष्टान्कृत्वा तत्र वालुकाः प्रक्षिपेत् । तत एवमेव च पत्रभङ्गान्कपालभृष्टवालुकागर्भान्सुखोष्णान्कृत्वा पाणिभ्यां पुनः पुनः परिमार्जयेत्स्वेदयेत् । ततोऽभ्यज्य सगदामन्योरःकण्ठगलकपोलगात्रस्तम्भान्यथायोगं वा लिप्त्वा भङ्गस्वेदेन स्वेदयेत् । तस्मादेष भङ्गस्वेदः कार्यः ॥

---

१ ग. °तदोषैर्विका° । २ क. °हुवे° । ३ ग. °तत्क्रिया° । ४ क. °भ्रुसिर° । ५ क. °मम्भुक्ष्य वा° ।

गोवराहाजानां मूत्रपुरीषाणि पयसाऽऽलोड्य पूर्वोक्तांश्च पत्रभङ्गानाहृत्य क्वाथयेत् । ततः स्तैस्तिलपिष्टलवणकिण्वसंयुक्तैः स्वेदयेत् । वातश्लेष्मविकारेष्वव(वि)च्छिन्नस्वेदयोगाः पूर्वोक्तद्रव्यसंयुक्ताः पत्रभङ्गाः स्वेदोपचारवद्भवन्ति । गोजाविखरोष्ट्रमहिषाणां मूत्रपुरीषाणि पयोदधिपत्रभङ्गविमिश्राणि सुखोष्णानि कृत्वा वारणमभ्यज्य बहलमनुलेपयेत् । सगदावच्छिन्नमन्यास्तम्भोत्कर्णकद्रोणीकशोफांश्च पिण्डस्वेदवदुपचरेत् । उपचारमं(व)न्तं संकरस्वेदेन स्वेदयेयुः । तस्मादेष संकरस्वेदः कार्यः ॥

त्रपुस(ष)शणमूलकैरण्डबीजानि सिद्धार्थकतिलपिष्टलवणकिण्वमाषाणां चूर्णानि सुरया पयसा वा सार्धं कृत्वा तेन सुखोष्णेन वारणमभ्यज्य बहलमनुलेपयेत् । ततः पदान्तरितं कृत्वैरण्डार्कपत्रैः परिच्छाद्य तमग्निवर्णैः फालैः समन्तात्परिवारयंस्ततः कटिचरणगात्रापरस्तब्धाङ्गानि च यथायोगं फालस्वेदेन स्वेदयेत् । तस्मादेष फालस्वेदः कार्यः ॥

माषातसीतिलपिष्टलवणकिण्वयवकोलकुलत्थगोधूममूलकैरण्डशणकर्पासीबीजानि त्रपुषसर्षपसरलभद्रदारुकुष्ठतगरशतपुष्पायष्टीमधुकरास्नाश्च संभृत्य यानि चान्यानि द्रव्याणि वातघ्नानि, तेषां मूलानि कल्कपिष्टानि कृत्वा सर्पिस्तैलवसामज्जाभिः संयोज्य पाचयेत्, ततस्तं वारणमभ्यज्य वातश्लेष्मविकारेषु यथायोगं पिण्डस्वेदेन स्वेदयेत् । तस्मादेष पिण्डस्वेदः कार्यः ॥

महास्थाल्यां लौह्यां वा पूर्वोद्दिष्टान्पत्रभङ्गांस्तिलपिष्टलवणकिण्वसंयुक्तान्धान्याम्लेन संयोज्य क्वाथयेत् । ततो वारणमभ्यज्य नाडीस्वेदेन स्वेदयेत् । नाडीं च वैणवदलैः कृत्वा यथाव्याधिप्रदेशमात्रां वाससा वेष्टयित्वा तद्वद्युक्तमाषचूर्णप्रलिप्तां भूयो वस्त्रपरिवेष्टितां कृत्वा यथायोगमितस्ततः संचारयत(न्त)ः प्रोहाष्ठीव्योपस्कारान्सफलकत्र्यस्थिजठरलाङ्गूलकरगात्रापरशोफस्तम्भं च नाडीस्वेदेन स्वेदयेयुः । तस्मादेष नाडीस्वेदः कार्यः ॥

तत्र संस्कृतासंस्कृतैः स्नेहद्रव्यरसैरानुपौदकीनां च सत्त्वानां मांसरसवेसवारैः कूपे द्रोण्यां वाप्यां (*वातहरपत्रभङ्गव्यामिश्रितैः सुखोष्णैः पाणिभ्यां परिमार्जयन्तो यथायोगं स्नेहस्वेदेन स्वेदयेयुः ॥

खरकरभतुरगमहिषाश्वतरवराहाणां मूत्रपुरीषाणि पत्रभङ्गव्यामिश्राणि

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ॥

१ क. °क्तांश्चात्र भ° । २ क. °त्कर्षक° । ३ क. ग. °मतं सं° । ४ क. ग. °गं फल° । ५ क. °र्पासबी° । ६ क. °हाबाल्यं लोल्यां वा° । ७ ख. °लिप्तो य° । ८ क. °दकानां ।

कृत्वा किण्वलवणतिलपिष्टसंयुक्तैर्दध्यम्लकथितैः सुखोष्णैर्वारणमभ्यज्य यथायोगं पिण्डस्वेदवदुपचारयन्तः पुरीषस्वेदेन स्वेदयेयुः ॥

पूर्वोद्दिष्टांश्च पत्रभङ्गान्संहृत्यौदकानां च पत्रभङ्गानां भारचतुष्टयमुदूखले क्षोदयित्वा दुग्धे पाचयेत् । वस्त्रे बहुले प्रक्षिप्य प्रियङ्गुशालिगोधूमव्रीहियवातसीकुलत्थनिष्पावानां चूर्णानि पयसाऽऽलोड्य कुप्यं । ततोऽग्निवर्णं कृत्वा पिण्डस्वेदवदुपचारयन्तः कुप्यस्वेदेन स्वेदयेयुः ॥

घटीस्वेदेऽप्यग्निवर्णां घटीं कृत्वा स्वभ्यक्तं ततः पूर्वोद्दिष्टैर्द्रव्ययोगैर्बहुलमनुलिप्य नागं पटावच्छन्नान्तरितं फालस्वेदविधिवदुपचारयन्यथायोगं घटीस्वेदेन स्वेदयेत् ॥

पूर्वोद्दिष्टानां च खरकरभसत्त्वानां तुरगमहिषाश्वतरवराहाणामस्थीनि कल्कपिष्टानि कृत्वा तिलपिष्टलवणकिण्वदध्यम्लार्कसंयुक्तैर्वाऽभ्यज्य बहुलमनुलेपयेत् । ततः पटान्तरितं कृत्वा फालस्वेदविधिमुपचारयन्तो यथायोगमस्थिपिण्डस्वेदेन स्वेदयेयुः ॥

पिण्डस्वेदवत्तेषामेव सत्त्वानां मांसानि संहृत्य सुखोष्णैर्मांसपोटलैः पूर्वविधिवदुपचारयन्तो यथायोगं मांसस्वेदेन स्वेदयेयुः ॥

पूर्वोक्तैः पत्रभङ्गैर्मृत्तिकां संयोज्य वारणमभ्यज्य यथायोगं पिण्डस्वेदवदुपचारयन्तो मृत्तिकास्वेदेन स्वेदयेयुः ॥

तत्र श्लोकाः—

तत्रानेकविधः स्वेदः सोपचारः प्रकीर्तितः ।
यथाशास्त्रं यथाव्याधि प्रयुञ्जानस्य सिध्यति ॥
येस्त्वेतान्विपरीतांस्तु कुर्यात्स्वेदान्नराधिप ।
न सिद्धिमाप्नुयाद्वैद्यो व्यापादयति वारणम् ॥
तस्मादेतच्छ्रुतवता तथा जीर्णेन भेषजम् ।
बन्धुस्नेहोपयुक्तेन कर्तव्या वारणे क्रिया ॥
एवं स्वेदविधिज्ञश्च प्रयोगज्ञश्च यो भवेत् ।
वरिष्ठश्चैव वैद्यानां पूजनीयः सदा भवेत् ॥
समासाच्च पञ्च स्वेदास्तेषां भेदास्त्रयोदश ॥

अतः परं स्वेदगुणान्वक्ष्यामः । शरीरमार्दवकरो मृदुं प्रस्तम्भयति, स्तब्धं विलापयति ग्रन्थिभेदः शोफहरो वातानुलोमनकरः क्रियासु सर्वासूत्तमः पाचनीयेषु पाचनकरः, सर्ववातकफव्याधिहरश्चेति । यथा काष्ठमस्नेहयोगेन

१ ग. ° वच्छिन्ना° । २ ग. यस्त्वतो विप° ।

स्विद्यमानं विनाशं न गच्छति, तथाहि शरीरं द्रव्यरसैर्युक्तं स्नेहयोगेन स्विद्यमानं विनाशं गच्छति। यथा स्विद्यमानमस्निग्धं काष्ठं विनाशं गच्छति, तथाहि शरीरं स्विद्यमानमस्निग्धं विनाशं गच्छति। तस्माद्भूयो भूयोऽभ्यक्तं नात्युष्णे नातिशीतले काले पूर्वाह्णे वारणं स्वेदयेत्। यथा च दोषाः स्नेहस्वेदैः प्रद्रवीभूताः श्रोतोमुखमापन्नाः शस्त्रैरपिहार्या भवन्ति ॥

यदा स्वेदेन स्विन्नगात्रं परिस्यन्दनमनवस्थितं मार्दवं लघुता वेदनारोगनिग्रहश्चेति, तं सम्यक्स्विन्नमिति विद्यात् ॥

छविस्फोटनं दाहं शोफं मांसपाकः शोणितमो(मे)हित्वं रोमवालाश्च शीर्यन्ते शय्यानभिनन्दी नाभिनन्दति, तृष्णा मूर्छा चास्य भवति, तमेतैर्लिङ्गैरतिस्विन्नं विद्यात् ॥

न विकारप्रशमः, दोषान्प्रच्यवन्ते च्युता वा सीदन्ति, तीव्रा च वेदना गात्राणां परं मार्दवं गुरुगात्रगमनं चेति तमस्विन्नं विद्यात् ॥

तस्मादस्विन्ने हितं शस्त्रमविचारयेत्। दुःस्विन्ने न व्याधेरुपशमो भवति। अतिस्विन्ने च प्रदेहः। पद्मकिंजल्कोशीरक्षीरवृक्षकषायैः पयोदधिमधुसंयुक्तैः सचन्दनैः शीतैश्चान्यैश्च शतधौतेन सर्पिषाऽभ्यज्य नागं परिषेचयेत्। शीतश्च प्रदेहैः कर्दमोशीरसंयुक्तैः सशिरस्कमा नखं बहलमनुलेपयेत्। शिरस्थांश्चोदकुम्भान्परिस्रावयेत्। यवसकुवलभक्तानि शीतानि दापयेत्। स्थानं च सुशीतं वा प्रवातं कुर्यात्। पित्तमूर्छायां यदुक्तं तत्सर्वं योजयेत्। अस्विन्ने पुनः स्वेदे च यथेच्छं विधिवद्भिषक्कुर्यात्। शोणितमोक्षणं च पैत्तिकोत्तरं वारणं मेदुरिणं स्थूलोच्छ्वासं धातुक्षीणं मण्डलिदष्टं विषजग्धं लालाश्रा(स्रा)विणं कृमिकोष्ठिनमातिनीतं च हस्तिनीं गर्भिणीं षड्वर्षपूर्णांश्च विकारान्न स्वेदयेयुः। तथाऽभिघातसमुत्थः श्वयथुः प्रमादात्स्वेदकारणात्, गात्रस्तम्भो विह्वलगमनं चेति तं निष्कम्पं विज्ञाय ततः शीतैः प्रदेहैरुपक्रमेत ततः शोणितविश्रा(स्रा)वं वापीस्वेदं वा यथायोगं पुनर्दद्यात् ॥

यदा तु कफपवनसंमुद्भवेन व्याधिना पीड्यते नागः, तदाऽस्य तीक्ष्णोष्णकटुपत्रभङ्गव्यामिश्रेण तोयेन स्वेदः परिषेकश्च कार्यः। तस्माद्व्याधिप्रशमे स्वेदपरिषेकोपचारादत्यर्थं वारणस्य पित्तमुदीर्यते। तस्य लक्षणं वमथुर्मुहुर्मुहुरतिमात्रं परिक्षिपति परिदह्यते मारुतैर्वीज्यमानः प्रसादमुपगच्छति। एवं स्वेदः परिषेकश्च शीतलश्च कार्यः। ततः संपद्यते सुखी वारणः ॥

तत्र श्लोकः—

---

१ ग. च्यवन्ता। २ ग. पुनर्न दद्यात्।

व्याधिप्रशमनाः(सर्वे)सर्वेषां हस्तिनां हिताः ।
कालं देशं च विज्ञाय ततः स्वेदं प्रयोजयेत् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थाने
*स्वेदाध्यायः ॥

भूयोऽङ्गराजः पप्रच्छ पालकाप्यं महामुनिम् ॥
भगवन्दन्तिनां ह्येते पाकला दश कीर्तिताः ॥ १ ॥
उपसर्गेण जायन्ते सर्वजास्त्विति मे मतिः ॥
वज्राशनिसमस्पर्शाः पाकलाश्च महामुने ॥ २ ॥
आशुकारितराश्चैव सदाप्राणहराश्च ते ॥
पाकलेनाभिभूतस्य वारणस्य महामुने ॥ ३ ॥
रक्षोघ्नैर्भोजनैर्गुप्तं बलिहोमक्रियादिभिः ॥
पुरस्कृत्य ततश्चापि क्रियां कुर्वीत शास्त्रवित् ॥ ४ ॥
इति प्रोक्तं भगवता पाकले वालसंज्ञके ॥
तत्सर्वमखिलेनेह वक्तुमर्हसि तत्त्वतः ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥
इमं विधिं प्रकुर्वीत श्रेयोर्थं भिषजां वरः ॥ ६ ॥
सामान्ययज्ञं निर्वर्त्य भूयः सुप्रयतो भिषक् ॥
रत्नैर्बीजैः फलैः पुष्पैर्देवानभ्यर्च्य यत्नतः ॥ ७ ॥
ब्राह्मणान्भोजयित्वा तु दक्षिणाभिश्च तर्पयेत् ॥
श्वेतां वा कपिलां वाऽपि सवत्सां गामलंकृताम् ॥ ८ ॥
श्वेतचन्दनदिग्धाङ्गीं श्वेतमाल्यविभूषिताम् ॥
रौप्यशृङ्गीं स्वर्णखुरीं सवस्त्रां कांस्यदोहिनीम् ॥ ९ ॥
आरोग्यकरिणीं वैद्यो ब्राह्मणाय प्रदापयेत् ॥
देवताभ्यर्चनेनैव ब्राह्मणानां तथाऽऽशिषा ॥ १० ॥
क्षिप्रं प्रमुच्यते रोगाद्वारणो नात्र संशयः ॥
अत ऊर्ध्वं प्रवक्ष्यामि रक्षाकर्मविधिं च ते ॥ ११ ॥
श्वेतां प्रतिशिरां चैव श्वेतामपि वचां तथा ॥
दन्ते निबन्धयेद्वैद्यो मन्त्रेणानेन मन्त्रवित् ॥ १२ ॥

---

* अयमध्यायः प्रायः शोफाध्यायाङ्गभूतः, अतो नास्य पृथग्गणनेति प्रतिभाति ॥

---

१ क. °घ्नैर्भोज° ।

धृतिः स्मृतिश्च मेधा च रक्षा शान्तिस्त्वमेव च ॥
( *त्वं सिद्धिस्त्वं जया लक्ष्मीः श्रीस्त्वं दुर्गा सरस्वती ॥१३॥
ग्रहणरूपाणि यानीह भूमौ दिवि चराणि च ॥
तेषां तु प्रतिघातार्थं रक्ष त्वं वारणं सदा ॥ १४ ॥
अत ऊर्ध्वं प्रवक्ष्यामि बलिकर्मविधिं शुभम् ॥
भवेदहतसंवीतो वैद्यः सुप्रयतः शुचिः ॥ १५ ॥
सर्वगन्धैश्च माल्यैश्च रत्नैर्बीजैः फलैरपि ॥
मस्तकेऽप्यल्पपिच्छाभि(?)र्मधुना पायसेन च ॥
घृतेन भर्जितैर्दध्ना शुष्कैर्मांसैस्तथैव च ॥
संयावमाल्यमैरेयैः सुरया तु बलिर्भवेत् ॥ १७ ॥
(*सामान्ययज्ञं निर्वर्त्य भूयस्तु प्रयतो भिषक् ॥
रत्नैर्बीजैः फलैः पुष्पैः पूर्णान्प्रतिसरान्वितान् ॥ १८ ॥
चतुरः कलशांश्चैव वारिपूर्णान्सर्वजोज़न (?) ॥
वारणस्य तु दन्ताभ्यां स्वावरोहप्रदक्षिणेत् (?) ॥ १९ ॥
भूयो निवेशयेद्वैद्यो मन्त्रेणानेन मन्त्रवित् ॥
देवराक्षससर्पाश्च पिशाचा गुह्यकास्तथा ॥ २० ॥
निशाचराटवेयाश्च नित्यं तु रक्षन्तु वारणम् ॥
नवग्रहा जलधरा दानवाः पर्वतास्तथा ॥ २१ ॥
अन्तरिक्षगता ये च मुनयो वनदेवताः ॥
ओषध्यो ग्रहनक्षत्रा गजं रक्षन्तु देवताः ॥ २२॥
व्याधिप्रशमनं नित्यं कुर्वन्तु द्विरदाय च ॥
दीर्घमायुर्बलं वीर्यं प्रदिशन्त्विह पूजिताः ॥ २३ ॥)
एवं कृत्वा विधिं सर्वं व्याधिप्रशमनं हितम् ॥
रक्षोघ्नं भोजनं दद्यान्मन्त्रेणानेन मन्त्रवित् ॥ २४ ॥
पुरोडाशं यथा देवा आज्यं वा हुतभुग्यथा ॥
तथा पवित्रं रोगघ्नं भोजनं भुङ्क्ष्व वारण ॥ २५ ॥
भोजयित्वा यथान्यायं प्रदेशकुशलो भिषक् ॥
तत्सर्वं विधिवत्कार्यं यदुक्तं वारणग्रहे ॥ २६ ॥

---

* धनुराकारमध्यस्थो नास्ति पाठो गपुस्तके ॥

---

१ क. °ह दिवि भूमौ चरणं तथा । ते°। २ क. °र्जितो दध्ना°। ३ क. °या बलिर्भिर्भवे° । ४ क. ज्ञात्वा ।

(*बलिं च कलशांश्चैव सर्वांस्तोये विनिक्षिपेत् ॥
कृतेनानेन विधिना पाकलात्तु विमुच्यते ॥ २७ ॥
औषधानां च सर्वेषां मन्त्रं वक्ष्यामि भूपते ॥
यत्किंचिदौषधं नस्ये पाने च कवले तथा ॥ २८ ॥
प्रलेपने च देयं स्यात्तत्सर्वमभिमन्त्रयेत् ॥
रसायनमिवर्षीणाममराणामिवामृतम् ॥ २९ ॥
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥
दद्यादनेन मन्त्रेण सर्वमेवाभिमन्त्रितम् ॥ ३० ॥)
अतः परं प्रवक्ष्यामि भूतिकर्मविधिं शुभम् ॥
रोगिणेऽरोगिणे वाऽपि भूतिं दद्याद्भिषग्वरः ॥ ३१ ॥
पवित्रान्सर्वरोगघ्नाञ्शृणु सत्यान्गुणानिमान् ॥
न राक्षसा न गन्धर्वा न पिशाचा न चोरगाः ॥ ३२ ॥
न यक्षा न च भूतानि रुद्रा रौद्रास्तु देवताः ॥
हिंसात्मकास्तथा चान्ये क्षराद्या व्याधयस्तथा ॥ ३३ ॥
क्रुधा धर्षयितुं शक्ता भूत्या नागं विभूषितम् ॥
कपोलयोस्तथा कुम्भे निर्याणे दन्तवेष्टयोः ॥ ३४ ॥
पक्षयोः प्रतिमाने च कक्षायां वंशयोरपि ॥
द्विपस्यैतेषु चाङ्गेषु देयं भस्म सदा बुधैः ॥ ३५ ॥
व्याधिताव्याधिता वाऽपि भूषिता भस्मना सदा ॥
सुखं निद्रां निषेवन्ते निर्विशङ्का मतङ्गजाः ॥ ३६ ॥
यथा हि शशिनं दृष्ट्वा पद्मं संकोचमृच्छति ॥
भूत्या विभूषितान्दृष्ट्वा ग्रहास्तद्वन्महीपते ॥ ३७ ॥
तदेव पद्मं सूर्यस्य विकसेद्धि यथोदये ॥
तथा ग्रहा गदाश्चापि दृष्ट्वा नागं विभूषितम् ॥ ३८ ॥
पूजिता मुनिभिर्नित्यमारोग्यबलवर्धिनी ॥
सौमनस्यकरी चैव भूतिर्देया हितार्थिना ॥ ३९ ॥
अभिमन्त्र्य महाराज मन्त्रेणानेन मन्त्रिणा ॥
भूतिरक्षा शुभा मेध्या स्मृतिर्मेधा धृतिः श्रुतिः ॥ ४० ॥

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ॥

१ क. °न्तचेष्ट° । २ क. मन्त्रवित् ।

श्रीर्ह्रीः कीर्तिः[1] क्षमा दुर्गा पार्वती पुष्टिरुत्तमा[2] ॥
स्वाहा शान्तिः सुधा चैव लोकधात्री त्वमेव हि ॥ ४१ ॥
अम्बिका हसते नित्यं भूतराक्षससेविते ॥
श्मशाने भस्मलिप्ताङ्गः क्रीडते वृषभध्वजः ॥ ४२ ॥
वृतः सर्वैर्महाभूतैः सत्यं भूतेव[3] तेजसः ॥
अनेन सत्यवाक्येन वारणं रक्ष सर्वतः ॥ ४३ ॥
वृक्षत्वाच्च ततस्तेन भूषयेद्वारणं सदा ॥
पूर्वोक्तेष्वेव भागेषु वैद्यः सततमुत्थितः ॥ ४४ ॥
स्वस्थं तु रोगिणं चैव तस्मान्नित्यं विभूषयेत् ॥
शालाद्वारे तथा स्तम्भे शय्याभागे तथैव च ॥ ४५ ॥
आरोग्यकरणी नित्यं भूतिर्देया हितार्थिना ॥
सततं च प्रकुर्वीत शान्ति स्वस्त्ययनानि च ॥ ४६ ॥
गुणा ये कीर्तिता भूत्यास्तांस्तैर्वच[4] ललक्षयेत् (?) ॥
पाकलेषु यथोद्दिष्टं भेषजं परिक्रियाविधौ ॥ ४७ ॥
तत्सर्वं यत्नतः कुर्यादेवं रोगात्प्रमुच्यते ॥
सर्वेष्वेव तु रोगेषु नित्यं शान्ति प्रयोजयेत् ॥ ४८ ॥ १०४२ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थाने
*शान्तिरक्षाध्यायः ॥

—०००—

अथ कदाचिद्गजशरणमभिगतमृषिवरमनलसदृशवपुषमभिवाद्यार्घ्यं तस्मै प्रदायाङ्गो रोमपादः पप्रच्छ पालकाप्यम्—भगवन्विपुलबलसत्त्वशरीरवर्ष्मप्रमाणानां गिरिशिखरजलदनिचयवपुषां गजानाम् 'नयनविनाशात्सर्वविनाशः' इति कृत्वाऽनुमान्य प्रचोदयामि भगवन्तम्—इच्छामि विज्ञातुं कति कथं वा भवन्ति नेत्ररोगाः साध्या असाध्या याप्याश्चेति ॥

अथ ऋषिरुवाच—राजन्विंशतिरिह गजानां नेत्ररोगा भवन्ति। ते द्विधा—दोषसंभवा आगन्तवश्चेति। तेषां संख्यां निदानं संभवं च श्रोतुमर्हति भवान्[5]॥

तत्र स्वप्रातिभाराध्वगमनाद्वधबन्धनैः शिरसि ताडनादतिकर्मतः प्रतिसूर्य-

* एषोऽध्यायः प्रायः पाकलाध्यायशेषभूतः। अतः संग्रहाध्यायेऽस्य गणना न कृता। अत्रास्य लेखफलं न स्फुटम् ॥

१ क. कीर्तिः। २ क. पुष्टिवर्धनी। ३ क. भूत्येव। ४ क. °वल°। ख. °वलक्ष°। ५ क. °तुमिच्छत्यर्हं°।

स्थानाध्वगमनाद्विद्युन्निपातदर्शनाद्दीप्ताग्निदर्शनादभिघातादनशनादत्यशनाद्विषमविरुद्धरूक्षभोजनाद्वातरुधिरकफपित्तसंनिपातप्रकोपात्प्रादुर्भवन्ति नयनरोगा गजानाम् । (*तेषां नामानि तद्यथा—प्रावारकी, औदकी, अण्डाक्षः, काचाक्षः, नार्यप्रेक्षी, प्रतिनुन्नः, निष्पेषहतः, विद्युन्निपातहतः, विद्युद्वारिहतः, ऊष्मापरिगतः, वर्त्मक्लिष्टः, श्रो(स्रो)तान्धः, बुद्बुदः, अक्षिपाकः, पटलाक्षः, दण्डाक्षः, मुञ्जः, मुञ्जजालः, लोहिताक्षः, पिटकाक्षश्च, इत्येते विंशतिश्चक्षूरोगाः प्रोच्यन्ते गजानाम् ॥

ते षडाश्रयाः—वर्त्मभागसंधिभागशुक्लभागकृष्णभागदृष्टिभागसर्वनयनाश्रिताश्चेति । तत्र—बुद्बुदी पटलाक्षः प्रावारकी वर्त्मक्लिष्टः पिटकाख्यो वर्त्माश्रिताः । मुञ्जमुञ्जजालौदकीरक्ताख्याः संध्याश्रिताः । शुक्लभागाश्रितोऽण्डाक्षः । काचाक्षनार्यप्रेक्षिणौ कृष्णभागाश्रितौ । विद्युद्वारिहतोष्मापरिगतश्रो(स्रो)तोन्धा इति दृष्ट्याश्रिताः । अक्षिपाकविद्युन्निपातहतदण्डाक्षप्रतिनुन्ननिष्पेषहताः सर्वनयनाश्रिताः ॥

अतः परं नेत्रजातिदृष्टिजात्यसाध्यासाध्यनयनव्याधिनिदानसाधनानि व्याख्यास्यामः ॥

तत्र कलविङ्कमणिमार्जारवराहवायसवानरनकुलविश्वदाक्षपरिदग्धविच्छिन्नपिङ्गलाक्षऋक्षहर्यक्षहुताशनार्चिःप्रभृतयो नेत्रजातयः ॥

विस्तीर्णसूक्ष्मविच्छिन्नतिर्यगूर्ध्वाधोगतवृत्तानुवृत्तप्रभृतयो दृष्टिजातयः ॥

तत्र—सितमसितं नीलं विगतोष्माश्रुनिर्भग्ननि(ः)सृततारकाण्यसाध्यान्यक्षीणि भवन्ति ॥

तत्र प्रावारक्या उत्पत्तिं निदानं चिकित्सितं च वक्ष्यामः ॥

विषमविरुद्धकषायभोजनात्प्रतिसूर्याध्वगमनाच्छिरसि च मिथ्यादण्डाङ्कुशाभ्यां ताडनान्निःसारतया वा नेत्राणां पवनः स्थानाच्च्युतः कफपित्ते ह्यूर्ध्वमापादयति नयनयोः । तस्य चक्षुः प्रावृणुते तेन प्रावारकी ॥

तस्या निदानम्—खरकठिनरक्ता कण्डूपिच्छिलपरिश्रा(स्रा)वि च नयनं भवति । अथ च नयनं सलिलवत्पर्यश्रु भवति ॥

---

*धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ॥

---

१ ख. °पातानुप्र° । २ क. °सर्वे न° । ३ क. °क्लिष्टपिटकाख्या व° । ४ क. °जातिर्दृष्टं जात्यं साध्यासाध्ये नयनव्याधिनिदानं सा° । ख. °जातिं दृष्टिं जात्यं साध्यासाध्ये नयनव्याधिनिदानं सा° । ५ ख. °यः ॥ अवि° । ६ क. तस्य ।

भैषज्यमस्य—पूर्वापरपरिक्षिप्तस्याविलस्य दन्त(न्ता)लानि तस्य *दन्तोद्दांनेऽतिबद्धस्य चतुर्भिर्विडिशैर्नेत्रं निर्वृत्य नेत्रमांसचयं शलाकया विद्ध्वा शस्त्रेण च्छित्त्वा दोषापचयमपनयेत् । ततश्चैनं सैन्धवचूर्णेन मधुसर्पिर्भ्यां पूरयित्वा वस्त्रपट्टेन बध्नीयात्त्र्यहम् । त्र्यहात्परं चास्य मुक्तनेत्रस्योदुम्बरामलक्यश्मन्तकावटप्ररोहार्जुनधात्रीत्वग्भिः सह कदलीफलशालूकानि संक्षुद्य सलिले रात्रिं वासयेत् । ततः परिषेकं कुर्यात् । अथवा प्रियङ्गुमञ्जिष्ठादेवदारुत्रिफलाक्षीरेणाऽऽज्येन संयोज्य वस्त्रपरिश्रु(स्रु)तमाश्चोतनं कारयेत् । अथवा त्रिफलारोध्रमधुकमत्स्यण्डिकैरान्तरिक्षोदकसंयुक्तैरेवाऽऽश्चोतनम् । अथवा—चतुरङ्गुलमूलैडगजफलैः सह कल्कपिष्टैरजाक्षीरसंयुक्तैर्घृतमण्डं विपाच्य नस्यं तर्पणं चाक्ष्णोः कुर्यात् । († ततो दृष्टिशुद्धिः, व्याधेरुपशमश्च भवति । अथवा—दन्तीकुन्दीवेणुनलशरीषश्यामाश्वेतासमुद्रफेनवैदूर्यशङ्खकाचसर्जरसैः सह पेषयेत् । ततः सर्पिःक्षौद्रसंयुक्तैरञ्जयेत् । मुहूर्ते चातीते निर्वापणार्थमक्ष्णोः परिषेकं पयसा कुर्यात् ।) अथवा—प्रियङ्गुतगरहरीतक्यामलकविभीतकहरिद्राशङ्खिनीश्वेतानलमूलानि कल्कपिष्टान्याजेन पयसाऽञ्जनम् । एतेनाक्षिणी प्रकृतिस्थे भवतः ॥

इति भावारकी ॥

विषमविरुद्धशिशिरगुरुकटुकषायरूक्षभोजनात्, व्यायामात्, व्यवायात्, अत्यध्वगमनात्, गुरुभारहरणतरणविहरणात्, अतिभोजनाच्च कुप्यति पवनः करिणः । ( परिकुपितः सः ) तस्य शिराभिरूर्ध्वं प्रपन्नोऽस्रं विकारमापादयति ॥

ततो क्षर्पच्छफेनिलमजस्रं श्र(स्र)वति, अक्षि च रूक्षश्यावाभ्रवर्णं भवति । तम् "औदकी" इत्याचक्ष्महे ॥

तस्य प्रशमनार्थं बृहतीमूलोशीरकल्कसंयुक्तं पयो निक्षिप्य दधि कृत्वा तन्मथ्नीयात् । अथोद्धृत्य नवनीतं मञ्जिष्ठारोहिणीपुनर्नवाहरिद्राभिः सह सम्यक्पाचयेत् । सिद्धं शीतीभूतं तन्नेत्रयोः सततं परिषेचनं नस्यं च सम्यग्दद्यात् । त्रिफलामधुरोध्रशणबीजहरिद्राप्रपौण्डरीकैरन्तरिक्षोदकसंयुक्तैः परिषेकं कुर्यात् । परिषेकेणानेन नीरोगनयनो दृढदृष्टिश्च भवति वारणः । अथवा हस्तिनं पक्ष्मयित्वा त्रिभिर्दिवसैर्नयनं विवृत्य मांसोपचयं बडिशेनोत्क्षिप्य शलाकया विद्ध्वा

* 'दन्तोपान्तेऽतिबद्धस्य' इति भवेत् । † धनुराकारमध्यस्थः पाठो नैव कपुस्तके ।

१ ख. °द्दानोऽति° । २ क. °मूलैः स° । ३ क. °न्याज्येन । ४ क. °मायाति । ५ ख. °ञ्जिष्ठां रो° ।

ततोऽस्य दृष्टिभागं वर्जयित्वा सैन्धवचूर्णैश्च सूक्ष्मपिष्टैः पूरयित्वा मधुसर्पिर्भ्यामवस्थापयेत् ॥

इत्यौदकी ॥

शीतकषायकटुतिक्तरूक्षभोजनात्, रात्रिजागरणादिभिः प्रकुप्यति पवनः । स प्रकुपितो नेत्रयोरापन्नः करनयनमुखेभ्यः श्रा(स्रा)वयति प्रसक्तमुष्णमम्भः ॥

तेनाक्षि दर्शनं न कुरुते । कुक्कुडाण्डसंस्थानां च नीलपीतश्यामवर्णानामन्यतमेन युक्तां पिटिकां जनयति । राजिभिश्च हरितश्यामाभिरावृतनेत्रो भवति । तम् 'अण्डाक्षम्' इति विकारं विद्यात् ॥

चिकित्सितमस्य—तं च पटलमेभिरौषधैरनुलिप्य प्रियङ्गुपद्मकमधुकतालीसपत्रकालानुसारीरोध्रैः कल्कपिष्टैः क्षीरमासिच्य कलसे व्यवस्थाप्य (*रजन्यां प्रातः प्रमथ्य नवनीतमुद्धृत्य चन्दनह्रीवेरमधुककालानुसारीकल्कैः सार्धं पचेत् । साधुसिद्धमपहृत्य शीतीभूतं नेत्रयोस्तर्पणम् । ततोऽस्य माषपिष्टेन समन्तात्साधु परिचार्य वाक्सहस्रं सार्धं वाऽक्षि(क्ष)णि क्षीरपरिषेचनं कुर्यात् । अथास्योदुम्बरशिलाटूनि मधुकरोध्रप्रपौण्डरीकहरिद्रात्रिफलाभिर्जर्जरीकृत्य नवघटे स्थितमान्तरिक्षोदकेन रात्रिपर्युषितेन च नेत्रयोः परिषेचनं कुर्यात् । एतैरुपक्रमविशेषैरण्डाक्षः प्रशममुपगच्छति ॥

इत्यण्डाक्षः ॥

अथ गुरुभारगमनवधबन्धप्रतिसूर्यस्थानाध्वगमनादश्मलोष्टशराधानवर्तां पथां मर्दनाद्वा मिथ्या शिरसि दण्डाङ्कुशाभ्यामभिघातादतिप्रवातस्थानाद्रक्तपवनकफपित्तसंनिपातानां प्रकोपात्पर्यश्रुता भवति ॥

अथ नयनमनिलदोषात्परिशुष्कवर्त्मरक्तरूक्षपर्यन्तं घृष्यमाणमिव शर्कराभिर्मन्दोष्माश्रु विसृजति । भवति च शिशिरजलनिषेवणादतिगुरुवेदनम्, पित्तोपद्रवात्परिदह्यते नयनमग्निपरिगतवद्भवति । भवति च पीतरक्तारुणानां वर्णानामन्यतमवर्णम्, विसृजति तोयमुष्णमजस्रम् । सूर्योदये बलवती चास्य वेदना भवति । रक्तोपद्रवाद्रक्ताभिष्यन्दि च भवति । कफोपद्रवान्नयनं प्रलम्बत इव शूनपर्यन्तं शिशिरपिच्छिलपरिश्रा(स्रा)वि गुरुदृष्टि पाण्डुतारकं पटल-

---

* कपुस्तके धनुराकारमध्यस्थः पाठस्त्रुटितः । प्रत्युत विद्युद्द्वारिहतप्रकरणस्थः 'बहिरक्ष्णोः'—इत्यादि, 'भोजयेच्चैनं मृगवराहं कुक्कुटमहिषमांसरससंयुक्तं शाल्योदनं' इत्यन्तः पाठोऽस्ति ।

---

१ क. °टुकाति° ।

विकारि भवति । नागस्य सर्वदोषोपद्रवात्सर्वलिङ्गमनुपक्रमाच्चास्य दृष्टिरुपहन्यते काचपटलाभ्यां तं 'काचाख्यम्' इत्याचक्ष्महे ॥

चिकित्सितमस्य—तं निवातमगारं प्रवेश्य शीतकषायशीतपटेन प्रच्छन्ननयनमवस्थापयेत् । अथाजस्रं परिषेचनैर्विगतनयनोष्मणश्चास्य कुर्यादनेन विधिनाऽञ्जनम् । लशुनसमुद्रफेनसैन्धवबृहतीपिप्पलीः पृथक्पृथक्पेषयित्वा मधुकफणिज्जकरसकान्सनीलामलकगोपित्तैर्मधुसंयुक्तैरर्धमासस्थितमौदुम्बरे पात्रे सूक्ष्मपिष्टां गुलिकामक्षमात्रां कृत्वाऽञ्जनमभीक्ष्णशः कुर्यात् । अथवा—श्रो(स्रो)तोञ्जनसैन्धवविडङ्गहरिद्रामधुसंपुक्तश्रेष्ठमञ्जनमुपदिशेत् । उच्छन्नदृढप्ररूढस्य काचपटलस्य शस्त्रेण लेखनं कृत्वा शतधौतेन घृतेन पूरयेत् । अथ विशुद्धनयनमुपरूढव्रणं चैनमनुषेचयेत् । ततः पञ्चमूलयोर्निष्क्राथेन मधुरगणविपक्वेन सर्पिर्मण्डेन भोजयेत् । अथैनं मृगतित्तिरिलावकानां मांसरसेनाऽऽव्याधिप्रमोक्षाच्छाल्योदनं भोजयेत् । अथ वैद्यो द्विरदं प्रसन्ननयनमुपरूढव्रणं दर्शयेन्नरेन्द्राय ॥

इति काचाक्षः ॥

अथ नायंप्रेक्षी । रात्रिजागरणादत्यध्वगमनादतिभारोद्वहनात्सलिलतरणात्क्षयाच्च रेतसः; दौर्बल्यादतिप्ररोधाच्च कटुकषायविषमविरुद्धभोजनाच्च वातः प्रकोपमापन्नो नयनवहा शिरा निरुणद्धि ।

ततोऽस्य दृष्टिः प्रच्छाद्यतेऽस्वच्छरूपा च भवति । उच्चैः पादान्विहरति । संज्ञया यातारमनुव्रजति । नायं प्रेक्षत इति नायंप्रेक्षी ।

अथास्य भैषज्यम्—तगरमधुकचन्दनैर्घृतमिश्रैर्धूपयेत् । पर्यागतान्यामलकानि पिष्ट्वा क्षीरं च कलसे समावाप्य दधि जातरसं प्रमथ्य नवनीतमुद्धृत्य पचेत् । चन्दनह्रीवेरमधुककालानुसारीहरिद्रामञ्जिष्ठारोहिणीपुनर्नवाकल्कैः साधुसिद्धमपहृत्यानुषेचनं कुर्यात्, नस्यकर्म च । तस्य च मधुघृतसमभागसंयुक्तं त्रिकटुकमधुकपिष्टमञ्जनं भासास्थिकेशकांस्यरजतकुक्कुटाण्डकपालान्यैकध्यं कृत्वा पेषयेत् । ततः शुद्धताम्रकपाले निहितं पिहितमन्तर्धूमां मिषीं कारयेत् । ततस्तया वाजिमूत्रपिष्टया विहितमञ्जनं साधयेन्नायंप्रेक्षी वारण इति ।

तत्र श्लोकः—

एतेन विधिना वैद्यः पटुर्लघुपराक्रमः ।
साधयेद्दृष्टकर्मा च नायंप्रेक्षाख्यमामयम् ॥

इति नायंप्रेक्षी ॥

प्राजनाङ्कुशशलाकाकाष्ठाभिघातादतिकण्डूयनात्प्रतितोदनाच्च प्रतितुन्नः प्रादुर्भवति ।

तस्य लक्षणम्—कलुषपर्यश्रु रक्ततारकं परिशूनान्तं गुरुप्रेक्ष्यं नयनं भवति। भिन्ने प्रथमे पटले नयनपरितोषः, ततः श्रा(स्रा)वः, श्यावता गुरुत्वमुष्णता च भवति। द्वितीयस्य चानुपटलस्य भेदे पिच्छिलफेनोदकवर्णपरिश्रा(स्रा)वः। तृतीये सवेदनं पीतारुणत्वं च। चतुर्थे पटलेऽत्यन्तवेदना रुधिरश्रा(स्रा)वो नयनविनाशश्च भवति।

तत्र श्लोकाः—

प्रथमे नेत्रयो राजन्सरागं तीक्ष्णवेदनम्।
सम्दकप्रच्छाद्य दृष्टिं वा भूयश्चास्य प्रवर्तयेत् ॥)
सर्वत्र च परीदाहः श्वयथुः संनिमीलनम्।
वेदना दृष्टिनाशश्च परिभावश्च लक्ष्यते ॥
द्वितीये पटले भिन्ने कृच्छ्रसाध्यं विनिर्दिशेत्।
तृतीये पटले भिन्ने याप्यमत्र विनिर्दिशेत् ॥
चतुर्थे पटले भिन्ने असाध्यं संप्रचक्षते।
सव्रणं शुक्रमुत्पन्नमसाध्यं तु प्रकीर्तितम् ॥

सर्वत्र चिकित्सितम्—अस्य शलाकया विवृत्य नयनं मधुसर्पिर्भ्यां पूरयेत्, बहुशः क्षीरवृक्षाणां त्वग्भिर्जर्जरीकृताभिर्निशि पर्युषिताभिर्नवं कलसं प्रपूर्य तस्मिन्कलसे क्षीरमासिच्य द्वितीयेऽह्नि मथ्नीयात्। निष्पन्नं नवनीतमुद्धृत्य तच्छतधौतं कृत्वाऽनेन मधुयुक्तेनाभ्यञ्जयेत्। अक्षिपरिषेकश्चास्याजाक्षीरशर्करोदकैः शीतैः प्रपौण्डरीकमधुकापद्मकरोध्रोशीरमञ्जिष्ठाभिश्चान्तरिक्षोदकपर्युषिताभिः परिषेकयेत्। कुशमूलामलकातिलमञ्जिष्ठोशीरकल्कैर्बहिरालेपयेत्। आजेन पयसा भद्रदारुमुस्ताप्रपौण्डरीकमधुकैर्घृतं सिद्धं तर्पणं नस्यं च दद्यात्। तरुणोदुम्बरमधुकदेवदारुमञ्जिष्ठाचन्दनकालानुसार्याकल्कैर्मधुसंयुक्तैरञ्जनम्। अथ शुक्रता बिन्दुर्वा स्यात्, पाष्टमधुघृतसैन्धवैर्लेखनं शस्त्रेण वा ॥

तत्र श्लोकः—

प्रतिनुन्नमिमं व्याधिमागन्तुं नेत्रसंभवम्।
साधयेत्कुशलो यः स पूजामर्हति पार्थिवात् ॥

इति प्रतिनुन्नो नाम नेत्ररोगः ॥

करकर्णविततरुतटविहतमक्षिनिष्पेषहतमित्याचक्षते ॥

तस्य निदानम्—उष्णाश्रुश्रा(स्रा)वः, श्वयथुर्वेदना दाहो गुरुत्वं रक्तता संनिमीलनं चाक्ष्णोः ॥

---

१ क. °क्षीरे श°। २ क. अनेन।

तस्य सिताजकर्णप्रपौण्डरीकमधुककालानुसार्यारोभ्रैः क्षीरेणाऽऽजेन संयोज्यावश्चोतनम् । हृतोष्मणश्चास्य मधुसैन्धवसंयुक्तेन नवनीतेनाञ्जनमिति समानं पूर्वेण । पयसश्च परिषेकः । गोजशकृत्काण्डशः कल्पितं पालाशपत्रपरिवेष्टितं वह्निसिद्धमञ्जनं कुर्यात् । वटप्ररोहचन्दनदेवदारुहरिद्राप्रपौण्डरीकसारिवारोहिणीकालानुसार्योशीरपिष्टैर्मधुसंयुक्तैरञ्जयेत् । रसाञ्जनतरुणोदुम्बरमधुकसितकर्णकैः पिष्टैः क्षौद्रघृतसमन्वितैरञ्जयेन्निष्पेषहतम् ॥

तत्र श्लोकः—

निष्पेषहतमित्याहुर्वारणं तु चिकित्सकाः ।
यथोक्तेसाधुकारी च सिद्धकर्मा सुपूजितः ॥

इति निष्पेषहतरोगः ॥

अशनेः संनिपातनिरीक्षणाद्विपस्य व्यापद्यते दृष्टिः । मांसपेशी च निष्टब्धता च भवति तं प्रत्याख्येयं 'विद्युन्निपातहतम्' इत्याचक्ष्महे ॥

तत्र श्लोकः—

विद्युन्निपातनश्चक्षुर्हतं यस्य तु हस्तिनः ।
असाध्यमिति तं विद्याद्दृष्ट्वा च परिवर्जयेत् ॥

इति विद्युन्निपातहतः ॥

अथाङ्गपतिरवेक्ष्य द्विरदानश्रुपरिगतलोचनान्पक्वकटकर्णकपोलोष्ठप्रतिमान्भगवन्तमुवाच पालकाप्यम्—'भगवन्को नामायं व्याधिः, किमात्मकः, कथं चोत्पद्यते, किं वाऽस्य लक्षणं चिकित्सितम्' इति ॥

अथ ऋषिरुवाच—'राजन्विद्युद्वारिहतो नामैष व्याधिर्वातपित्तात्मकः शीताभितापप्रभवः परिकर्मोपचारात्प्रादुर्भवति । तस्याभितापसंस्थानघर्माध्वगमनभारवहनाग्नितपनमुष्णे चातिकर्मप्रयोगात्, गजसंनिपाताच्च स्नेहावसिक्तस्य घर्मावस्थापनमतिकर्मप्रयोगशारदस्येति ॥

तत्रैवमादिभिस्तप्तो गजः क्लाम्यति, करवदनाभ्यां वमथुमुत्सृजति, परिवीजते दंशमशकावृत इव व्यक्तश्रवणकरलाङ्गूलैः ॥

तथाविधमवेक्ष्य द्विरदं वैद्यस्थानस्थं पक्ष्यापक्ष(?)मुभयतो लब्ध्वाऽऽलानमनुवर्तयेत् । अथैनं विगतवमथुक्लममवेक्ष्योत्थाप्य शिशिरपङ्कजवालुकापांशुभिरवकीर्य प्रकामं जलकुवलकर्दमहरणेषूत्सृजेत्, हरितं च तृणमुपाहरेत् । अथैनं विगतश्रममवेक्ष्य सलिलमवगाहयेत् । तत्र चैनमनुवृत्तं तृणकूर्चान्दुकक्काष्ठकव-

१ क. क्षीरेणाऽऽज्येन । २ क. °क्तमधु° । ३ क. °धिर्वितते पि° । ४ ख. पक्ष्मयक्ष्म मु° । ५ क. °त्थाय शि° । ६ क. °णवर्च्चोन्दुक° ।

लकुवलानामन्यतमेनोद्घृष्य सुप्रक्षालितशिरसं व्यपगतोष्माणमानयेत्स्थानम्, प्रतिच्छादयेच्च कवलैरिति । अत्र श्लोकः—

अवेक्षितव्या द्विरदाः सततं परिकर्मिभिः ॥
बन्धुस्नेहेन संयुक्तैर्हृदयैः क्रमवर्जितैः ॥

तत्र केचिदभितप्तमज्ञानत्वराभ्यां द्विरदमवगाहयन्ति सलिलम् । ततोऽस्य स्वेदनिरोधात्सलिलपानादूष्मणश्चाप्रमोक्षाद्धर्मपरिगतदेहत्वादनिलः प्रकुप्यति । अथ पवनकोपाच्छेषदोषप्रकोपः । तत्राज्ञेयत्वात्पित्तरक्तमादायानिल ऊर्ध्वमागत्य शिरः संतापयति । तत्संतापादश्रुगमनमवगूहनं च नेत्रयोर्भवति । कटवदनकर्णकरगुहाभागपाकः, तस्य सुकुमारप्रदेशपाकश्च स्यात् । प्रस्तब्धकरकर्णप्रतिमानः पर्यश्रुरत्यर्थं भवति । तस्य यदा नेत्रयोः पटलमुत्थितं बहलमनल्पपरिदोषमनश्रु विगतोष्म च भवति,(*तदसाध्यं विद्यात् । विपर्यये साध्यम् । अथ प्रदेशानामस्यैकरात्रं द्विरात्रं त्रिरात्रं वा शूनभावः स्तम्भश्च भवति) तृतीयचतुर्थयोरह्नोः स्फोटोद्गमस्त्वग्भेदश्च भवति ॥

अत ऊर्ध्वं तत्र च साध्यमुपाचरेत्, सात्म्यसत्त्वदेशकालवयःप्रकृतिविधिज्ञो वैद्य एभिरुपक्रमैः—तं निवातमगारं प्रवेश्य दधिमस्तुसौवीरकमृदितेन सर्पिषाऽभ्यज्य ततः पर्युषितजलपूर्णैश्चन्दनोशीरसारिवाकिंजल्कसंयुक्ताञ्शिरसि घटान्प्रश्चोतयेत् । पद्मकरोध्रमधुकमृद्वीकोशीरशर्करामञ्जिष्ठाचन्दनसारिवाप्रपौण्डरीकह्रीवेरतगरपत्रामलकविभीतकहरीतकीसितकार्णिकानां शीतकषायपरिषिक्तनयनं प्राक्सूर्योदयाज्जलमवगाहयेत् । तत्र चैनमनुवृत्तं यथाकालं सुखमवस्थाप्य पुनरुत्तार्य बहिरक्ष्णोस्तिलकरवीरामलकचन्दनकशेरुकबिशमृणालोत्पलसारिवामधुकनलवञ्जुलकुमुदकह्लारतामरसमञ्जिष्ठाप्रपौण्डरीकह्रीवेरतगरपत्रैलालोध्रोशीरमांसीक्षीरिणां त्वग्भिः क्षीरपिष्टाभिरालिप्तनयनं पूर्वोक्तेन सर्पिषाऽभ्यज्य प्रच्छन्ननयनमवस्थापयेत् । [1]प्रदापयेच्चास्मै भव्यपारापतमृद्वीकापनसदाडिमामलकलकुचपरूषकपीलुपियालबदरराजादनसंयुक्तं शक्तुमन्थं सशर्करं यानि चान्यानि शीतानि तेषां त्वग्रसैः कसेरुकोत्पलबिसमृणालेक्षुवालिकाः सर्वं च यवसमोदकं मत्स्यण्डिकागर्भमाहारयेत् । तैश्च प्रदेहः । अथवा—वेतसार्जुनकदम्बोशीराजकर्णक्षीरवृक्षतिलकरवीरोत्पलपद्मकल्कैः सघृतः प्रदेहः । अथ विगतोष्मणः सर्पिषा मधुना चाञ्जनं कार्यम् । अजाक्षीरेण शणबीजमधुसर्पिर्युक्तेन पूर्वोक्तैश्चौषधैः सृ(शृ)तशीतैः परिषेकः सदा भवेत् । तत्र चाष्टिविगतो-

* धनुराकारमध्यस्थः पाठः कपुस्तके न ॥

१ क. °सं विग° । २ क. °मश्रु सौ° । ३ क. °षेकयेत् ।

ष्माणं व्रणीभूतां द्विव्रणीयवदुपाचरेत् । नेत्रयोश्चास्य पटलचिकित्सा कार्या । अथ विशुद्धनयनमुपरूढव्रणं चैनमुपसेचयेत् । नस्यं देयं चास्य पञ्चमूलद्वयनिष्क्वाथेन मधुरगणविपक्वेन सर्पिर्मण्डेन । भोजयेच्चैनं मृगवराहकुक्कुटमहिषमांसरससंयुक्तं शाल्योदनमाव्याधिप्रमोक्षात् । अथ वैद्यो द्विरदं प्रसन्नत्वग्रोमनयनं समुपरूढव्रणं दर्शयेन्नरेन्द्राय, इति ॥

तत्र श्लोकः—

विद्युद्वारिहतं नाम पित्तानिलसमुद्भवम् ।
साधयेन्नेत्ररोगं यः पूज्यः स्यात्स भिषग्वरः ॥

इति विद्युद्वारिहतः ॥

पथि तप्तपांशुवालुकोपलवति बलवदूष्मपरिगतसर्वशरीरस्य वार्यलभमानस्य स्वेदोऽन्तर्गतो नेत्रावरोधी भवति। तमावृतदृष्टिमसाध्यम् 'ऊष्मापरिगतम्' इत्याचक्ष्महे ॥

तत्र श्लोकः—

ऊष्मापरिगताविष्टमक्षि नागस्य दूषितम् ।
तद्दृष्ट्वा वर्जयेद्वैद्योऽसाध्यमित्येव शास्त्रवित् ॥

इत्यूष्मापरिगतः ॥

तीक्ष्णोष्णाम्ललवणक्षारकषायकटुकविषमविरुद्धभोजनाच्च वातपित्ते प्रकुपिते हस्तिनस्तस्य शिराभिरूर्ध्वमागत्याक्षि क्लेदयतः, तत् 'वर्त्मक्लिष्टम् ॥

तस्य विज्ञानं श्रवणपाको दूषिकोद्गमश्च भवति वर्त्मनः ॥

तस्य साधनमुपदेक्ष्यामः—काश्मर्योशीररोध्रकशर्कराद्राक्षादारुहरिद्राभिरञ्जनम् । पयसो वाऽऽश्चोतनम् । त्रिफलां च मधुसंयुक्तामञ्जनं कुर्यात् । भैषज्यविधिरस्य व्याख्यातः ॥

तत्र श्लोकः—

अनया क्रियया युक्तं वर्त्मक्लिष्टं यथाविधि ।
साधयन्सिद्धिमाप्नोति कर्मसूत्रविशारदः ॥

इति वर्त्मक्लिष्टम् ॥

मधुराम्ललवणभोजनाच्छ्रो(त्स्रो)तसा कफपित्तसंभवेन पवनोत्पीडितेनानिमिषतोऽधिकं छाद्यते दृष्टिः ॥

पक्वं चाश्रु(स्रु)मश्र(स्र)वति तं 'श्रो(स्रो)तोन्धम्' इत्याचक्ष्महे ॥

चिकित्साऽप्यस्य—न्यग्रोधोदुम्बराश्वत्थप्लक्षमेषशृङ्गीकुमुदनलिनोत्पलाशकु-

१ क. °सङ्गत्व° । २ क. °साऽवश्चो° ।

सुमसारिवामधुकचन्दनैः क्षीरसिद्धं घृतं नेत्रयोस्तर्पणं नस्यं च सम्यग्दद्यात् । अयस्ताम्ररजतकनकमधुकस्फटिकतरुणोदुम्बरकतकामलकमधुसर्पिर्भिरञ्जयेत् । पयसा च परिषेकः । इति ॥

तत्र श्लोकः—

योगमानेन यः कुर्यात्परिषेकाञ्जनादिकम् ।
नस्याञ्जनक्रियां वैद्यः स श्रो(स्रो)तोन्धं निवर्तयेत् ॥

इति श्रो(स्रो)तोन्धः ॥

स्निग्धमधुरगुरुशिशिरगुडदधितिलपललमत्स्यमांसभोजनादव्यायामाच्च कफः प्रवृद्धिमाप्नोति ॥

स नेत्रयोरापन्नः पिटिकाभिरावृणोति वर्त्मनी जलबुद्बुदाकाराभिः, तं 'बुद्बुदी' इत्याचक्ष्महे विकारम् ॥

तस्य भैषज्यम्—प्रावारक्युक्तेन विधानेन यन्त्रयित्वा तथैव विडिशेन नेत्रं विवर्त्य मार्कवरसेन बुद्बुदमाश्चोत्याभीक्ष्णशः शस्त्रेण च्छेदयेत् । ततः प्रपौण्डरीकमधुकचन्दनोशीरशीतशिवागुरुकालानुसार्यासुनिषण्णकैर्वा पक्वं घृतं नस्यं दद्यात् । तर्पणं च नेत्रयोः समुद्रफेनशङ्खनाभिशर्कराभिर्मनःशिलायुक्ताभिरञ्जयेत् ।

तत्र श्लोकः—

इत्येष बुद्बुदी नाम य एनं साधयेद्भिषक् ।
शास्त्रोद्दिष्टेन विधिना स भवेत्साधुपूजितः ॥

इति बुद्बुदी ॥

अथ यदाऽत्यर्थं रूक्षाहारो जाङ्गलयवसोपसेवी, उष्णेऽध्वानमभिप्रपद्यते । तदाऽस्य वायुरूर्ध्वगतः श्लेष्मपित्तशोणितान्यादायाक्ष्णोर्वेदनामत्यर्थं करोति ॥

न च यवसमभिलषति, तम् 'अक्षिपाकम्' इत्याहुः । तद्यदि शोणितं पूयं वा श्र(स्र)वति, तस्य तदा सिद्धिर्न विद्यते । विपर्यये तु शुद्धजलश्रावी(स्रावि) साध्यम् ॥

अथास्य निवातस्थस्य क्रियारम्भः कर्तव्यः । ततोऽस्य मञ्जिष्ठां विश्वभेषजं रोहिणीं च पिष्ट्वा तैलं विपाच्यते । तेन तैलेन नस्यकर्म कुर्यात् । तस्य पिप्पलीसैन्धवश्यामाककुलत्थहरेणुकैलारोध्रागरुचन्दनानि समभागानि पयसा संयोज्य सर्पिः पाचयेत् । तेनास्य तर्पणं नस्यकर्म च कुर्यात् । तस्य पिप्पलीसैन्धवश्यामाककुलत्थादीन समभागानि पिष्ट्वा मधुसर्पिषा युक्तमेतद्द्यादञ्जनम् ॥

---

१ क. विडशैर्नेत्रं । २ क. °नुकार्या° । ३ क. °कैश्चाप° ।

तत्र श्लोकौ—

असाध्यः शोणितश्रा(स्रा)वः पूयं वा श्र(स्र)वते यदि ।
न तत्र कुर्याद्भैषज्यं तत्र सिद्धिर्न विद्यते ॥
विपरीते तु कर्तव्या क्रिया गजहितैषिणा ।
यथोक्तौषधकल्पेन सोपचारः प्रयत्नतः ॥

इत्यक्षिपाकः ॥

स्निग्धमधुरघनगुरुशिशिरलवणाम्लातिभोजनादव्यायामादानूपतृणकवलकुवलभक्षणाच्च प्रवृद्धः श्लेष्मा *मारुतोद्भूतश्चक्षुरापन्नः श्वेतपटलत्वाय कल्पते । तं 'पटलाक्षम्' इति विद्यात् ॥

तस्योपक्रमम्—त्रिफलात्रिकटुकलोध्रैलवालुकैः ससैन्धवैर्मधुमिश्रैरञ्जयेत् । इङ्गुदाश्मन्तककतकफलमनःशिलासमुद्रफेनशङ्खनाभिसमुद्रमण्डूकीविद्रुमताम्रकनकरजतमणिभिरञ्जनम् । उत्सन्नदृढप्ररूढपटलस्य चास्य सैन्धवलवणचूर्णैर्लेखनम् । तेनासिद्धौ[1] वर्त्मोद्धृत्य बिडिशैर्यथावच्छस्त्रेण पटलमथैनं छेदयेत् ।
तत्र श्लोकौ—

विवर्त्य नेत्रे नागस्य पूर्वं सम्यग्वितानयेत् ।
एनं सामुद्रयन्त्रैस्तं बिडिशैश्च ततो लिखेत् ॥
पूरयेन्मधुसर्पिर्भ्यामथैनं वस्त्रसंवृतम् ।
सप्तरात्रस्थितं[2] चाक्षि पूरयेदञ्जयेत्ततः ॥

इति पटलाक्षः ॥

अथाभिघातादूर्ध्वं तिर्यग्वाराजिदण्डाकृतिर्नयनमावृत्य तिष्ठति । तमन्ये 'दण्डाक्षम्' आहुः । 'नैलिका(क्ष)म्'[3] इत्यपरे ॥

तस्यपूर्ववद्विवर्त्य[4] नयने बिडिशेनोत्क्षिप्य शलाकया विद्ध्वाऽस्त्रेणापहरेत् । पञ्चमूलयोर्निष्क्वाथेन मधुरगणविपक्वेन पयसा च घृतं पक्त्वा नस्यकर्म तर्पणं चास्य कुर्यात् । समुद्रफेनशङ्खसैन्धवसर्जनिर्यासैर्मधुसर्पिर्युक्तैरञ्जनं कुर्यात् ॥
तत्र श्लोकः—

अञ्जनानि यथोक्तानि तर्पणालेपनानि[5] च ।
अवस्थामथ विज्ञाय तत्र कर्म समाचरेत् ॥

इति दण्डाक्षः ॥

---

* 'मारुतोद्धूतः' इति भवेत् ।

---

१ क. तेन सिद्धौ । २ ख. °रात्रिस्थि° । ३ ख. नीलकाचम् । ४ क. °द्विवृत्य न° । ५ क. °णालोकना° ।

अथ यदाऽत्यर्थगुरुभोजनात्प्रवृद्धश्लेष्मा मारुतोद्धूत ऊर्ध्वं तमादाय नेत्रानुसारगतिभिः शिराभिरनुनीतः श्वेतसूत्राकृतिना सूक्ष्मेण कृमिणा नयनमावृतं करोति। तदा 'मुञ्जः' इत्युच्यते कफकृतो व्याधिः ॥

तस्य लक्षणम्—वेदना श्वयथू रक्तताम्रश्रा(स्रा)वो नेत्रस्याप्रतिक्रियया श्वेतभावः। प्रथमे पटले विचरल्लँक्ष्यते सूत्रमन्तर्मणिगतमिव व्यक्ताव्यक्तोऽनवस्थितः। द्वितीये पटले नातिविचारी स्थूलतरः। तृतीये पटले रक्तासितहारिद्राणां वर्णानामन्यतमं भजतेऽसाध्यः। चतुर्थे पटले गते मुञ्जे दह्यते नयनमग्निपरिगतवत्ताम्रराजिभिरावृतं भवति। प्रायशः सर्वेषामेव चतुष्पदानां दृष्टिहरः। न शस्त्रादृतेऽस्य सिद्धिरस्ति ॥

तस्य गात्रापरपरिक्षिप्तस्यालानितस्य †दन्तोदान्त्यं निगृहीतस्यायामितस्य नयनं बिडिशैर्विवर्त्य व्रीहिमुखेन शस्त्रेण सूत्रवेष्टितेन तिलमात्रावशिष्टेनार्धयवविस्तारेण दृष्टिभागं वर्जयित्वाऽपाङ्गभागस्थं सूत्रवच्चलितं कृमिं संचरन्तमभितः प्रथमत एव विध्येत्। पक्ष्माणि वा विशति। शस्त्रं वाऽप्यनुवेल्लति, मुखं वा भजति किंचिदुपहृतम्। बडिशेनोद्धरेन्मुञ्जम्। सम्यग्विद्धमेव विद्यात्। (*ततस्तमुष्णोदकपूर्णे सुवर्णपात्रे प्रक्षिप्य संचरन्तं राज्ञो दर्शयेत्। सप्तरात्रादूर्ध्वं दृष्टिद्रवं पिबति च, तमसाध्यं विद्यात्।) क्षते शस्त्रविधौ बहुशः परिषेचयेन्नयनमासवेन मधुना। पत्त्रयुक्तमाच्छाद्य मुखं वाससा निवातस्थं स्नेहपानैर्धूपनैश्चोपक्रमेत्। सर्जार्जुनकदम्बपुष्पहिङ्गुसर्वगन्धसर्जरसैर्घृतसंयुक्तैर्धूपयेत्। यथाक्रमं मधुपर्णीतैलपर्णीपृथक्पर्णीभिस्तैलं पक्त्वा प्रातः स्नेहं भोजयेत्। एनं च पाययेत्। शिरश्चास्य शृतेनैव स्नेहेनावसिञ्चेत्। गिरिकर्णिकामूलपिप्पलीसैन्धवैः पिष्टैर्मधुसंयुक्तैरञ्जयेत् ॥

तत्र श्लोकः—

विधिना नेत्रमुञ्जे तु क्रियाभिः समुपाचरेत्।
क्षिप्रं प्रमुच्यते रोगात्प्रकृतिस्थश्च जायते ॥

इति मुञ्जः ॥

अथ यदा गजनयनमुपहतमतीव कफपवनपित्तानामन्यतमेन दोषेण सर्वैर्वा विविधवर्णैः शबलैर्वा सितासितनीलपीतरक्तारुणैर्वा कृमिभिश्चितम्, तदा 'मुञ्जजाल' इत्युच्यते ॥

---

† 'दन्तोपान्तं' इति भवेत्। * धनुराकारमध्यस्थः पाठः कपुस्तके न।

---

१ क. °द्धूतमा°। २ क. रक्तसि°। ३ क. यक्ष्माणि। ४ क. पाचयेत्। ५ क. ख. सृतेनैव। ६ क. यथा।

तत्र वातात्परुषाः श्यावाः, पित्ताद्धरितनीलपीताः, कफाच्छ्वेताः, शोणिताद्रक्तारुणाः, संनिपाताद्बहुविधवर्णाः शबला वा राजिमन्तो भवन्ति ॥

तत्र नीलासितपीतारुणहरितरक्तानां चिकित्सा नास्ति । सप्तरात्रस्थितैः[1] कृमिभिः श्वेतोपलवदक्षि भवति, तदप्यसाध्यम्। परिशिष्टानामस्ति चिकित्सा॥

मुञ्जजालेऽपि मुञ्जविधिः कार्यः। क्षीरदधिपललसिन्दुवारमूलकबीजामलककालिकानिर्गुण्डीरोहितकमत्स्यैः क्वथितैः सुखोष्णैर्घृतमण्डाभ्यक्तं शिरः प्रलिम्पेत् । मधुसंसृष्टं तन्दुलोदकं पाययेत् । हरेणुकैलामेषशृङ्गीरोध्रागुरुदेवदारुश्वेतापिप्पलीभिरामलकरससंयुक्ताभिर्घृतमण्डं विपाच्य नस्यं तर्पणं च नेत्रयोः कुर्यात् । (*मेषशृङ्गीश्वेतपाकीतगरहरेणुकाशिग्रुनीलिकागिरिकर्णिकाञ्जलिकारिकाश्वेताश्यामामूलानि सलिलेन पिष्ट्वाऽञ्जनं कुर्यात् । ) हरिद्राद्वयनिम्बपत्रमञ्जिष्ठाहरितालमनःशिलामाषपर्णीभिस्तैलं पक्त्वा नस्यं दद्यात् । मधुकमधूच्छिष्टरोध्रमञ्जिष्ठामनःशिलाजतुकुक्कुटमेदोभिः पानार्थं धूपः कार्यः । लशुनाञ्जनपिप्पलीफणिज्जकरसकांस्यनील्यामलकरसगोपित्तैर्यथासंख्यं पृथक्पृथक्पिष्ट्वा कृमिनाशनमञ्जनमिति ॥

तत्र श्लोकः—

इमं विधिं विधिज्ञस्तु यः कुर्यात्सुसमाहितः ॥
यथासाधु समुद्दिष्टं मुञ्जजालात्स मोचयेत् ॥

इति मुञ्जजालः ॥

उष्णाम्ललवणकटुकगुरुरूक्षान्नभोजनादतिव्यायामाच्च भवति रुधिरं कुपितम्, तदाऽनिलावधूतमूर्ध्ववहाः[2] सिराः प्रपन्नं निरुणद्धि चक्षुः । तेनास्य नयने राज्यः सपरिश्रा(स्रा)वा भवन्ति । शूनवर्त्मनी चाक्षिणी भवतः । तं 'लोहिताक्षम्' इत्याचक्षते गजस्य नयनविकारम् ॥

तस्य साधनम्—लोध्रमधुकप्रपौण्डरीककल्कैः समस्तैरेवाऽऽश्चोतनम् । अञ्जनं मधुघृताभ्यां कारयेत् । घृतमण्डेन नस्यं कुर्यात् । स्थानं सुशीतलम् । वारिपूर्णाश्च घटाः शिरसि वंशे च परिश्रा(स्रा)व्याः । इति ॥

तत्र श्लोकः—

घृतपानैस्तथाऽभ्यङ्गैः स्निग्धैश्च रसभोजनैः ।
पयसैर्मधुरैश्चैव लोहिताक्षं प्रसाधयेत् ॥

इति लोहिताक्षः ॥

---

* 'धनुराकारमध्यस्थः पाठो नैव कपुस्तके ॥

---

१ ख. °रात्रिस्थि° । २ ख. °निलविधू° ।

वातपित्तप्रकोपादजीर्णाम्लविदग्धरूक्षाहारस्योर्ध्वमेवानुश्रित्य पिटका भवन्त्युष्णा नेत्रानुगताः, तस्मिन्नुन्मीलयितुमशक्तः । अर्धाक्ष्णोर्वा पश्येत् । तं 'पिटकाक्षम्' इत्याहुः ॥

तस्य चिकित्सितम्—मधुसैन्धवाभ्यां लेखनम् । श्रीपर्णीवरुणानि चोदूखले क्षोदयित्वा तस्मिन्विश्रा(स्रा)व्य तोयमजाक्षीरयुक्तः परिषेकः । मधुसैन्धवजप्याहुरोभैरञ्जनम् । तस्येदं भैषज्यम्, मधुसर्पिर्भ्यामञ्जनम्, घृतमण्डेनाभ्यङ्गः शिरोनयनस्य । पानभोजनानि नस्य कर्म च कुर्यात् । निवाते स्थाने शय्यां वाऽस्य करीषेण सुखामसंबाधाम्—इति ॥

इति पिटकाक्षः ॥

तत्र श्लोकाः—

बलं हि मूलं राज्यस्य चतुरङ्गमिहोच्यते ।
तत्रापि च गजाः श्रेष्ठाः विज्ञातव्या नराधिप ॥
तेषामिन्द्रियरक्षार्थं यत्नं कुर्याद्विचक्षणः ।
इन्द्रियाणां हि सर्वेषां चक्षुरेवोत्तमं स्मृतम् ॥
अन्धत्वात्सर्वनाशः स्याद्वारणानां विशेषतः ।
तस्मात्सर्वात्मना कार्यमुत्तमेन्द्रियरक्षणम् ॥
इत्यक्षिरोगा विधिवत्सनिदानचिकित्सिताः ।
पृच्छते रोमपादाय विंशतिः परिकीर्तिताः ॥
महारोगमिति मया यत्ते स्थानं प्रकीर्तितम् ।
तत्समाप्तमिहाध्याये प्रथमं शास्त्रनिश्चयात् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महारोगस्थानेऽक्षिरोगाध्याय *एकोनविंशः (षोऽष्टादशः) ॥ १८ ॥

---

समाप्तं चैतन्महारोगस्थानं प्रथमम् ॥

---

* 'एकोनविंशः' इति त्वसंगतमेव प्रतिभाति, पूर्वं संग्रहाध्याये प्रथमस्थानेऽष्टादशानामेवाध्यायानां परिगणितत्वात् । प्रसङ्गतो ज्वरहेतुविनिश्चय—स्वेद—शान्तिरक्षाध्यायानामधिकानां सत्त्वेऽपि 'ज्वरहेतुविनिश्चयाध्याये संख्याङ्कोल्लेखः, स्वेदशान्तिरक्षाध्याययोर्न' इत्यत्र विनिगमकाभावात् ।

---

१ क. °नुसृत्य । २ क. तन्निमील° । ३ क. शय्यायां । ४ क. ख. श्लोकः— । ५ क. बलि । ६ क. मूत्रं ।

## अथातः क्षुद्ररोगस्थानं द्वितीयमारभ्यते ।

---

अथ वमथुरोगाध्यायं व्याख्यास्यामः ॥

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
वारणानां वमथवः संभवन्ति कथं मुने ॥ १ ॥
साध्यासाध्यं चिकित्सां च लक्षणं तद्ब्रवीहि मे ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥ २ ॥
वमथुर्द्विविधो ज्ञेयो दोषैरागन्तुरेव च ॥
भवेदामाशयस्थानात्सर्वा छर्दिर्नराधिप ॥ ३ ॥
हृदये पार्श्वयोः कुक्षौ पीडा वातेन जायते ॥
फेनिलं छर्दयत्यार्तो नीलं श्यावं[1] च भूरि च ॥ ४ ॥
आदौ विरेचनं कार्यमस्य लङ्घनमेव च ॥
अधोभागीकृते दोषे छर्दिराशु निवर्तते ॥ ५ ॥
मधुना ह्यभयाचूर्णं भोजयेच्छर्दिनाशनम् ॥
सुस्निग्धैर्जाङ्गलरसैः कौलत्थैश्चैव भोजयेत् ॥ ६ ॥
अनेन विधिना राजंश्छर्दिर्नश्यति वातिकी ॥
(*अम्लमुष्णं च नीलं च हरितं पीतकं तथा ॥ ७ ॥)
पित्तात्मच्छर्दयत्यार्तो मुहुर्भवति दुर्मनाः ॥
दाहोऽस्य हृदये कण्ठे शरीरे चोपजायते ॥ ८ ॥
चन्दनामलकानां[2] च रसं क्षौद्रेण पाययेत् ॥
पिप्पलीचूर्णमुद्रं च मधुना सह भोजयेत् ॥ ९ ॥
जम्बूप्रवालमरिचं यष्ट्याह्वं नीलमुत्पलम् ॥
क्षोदयित्वा कषायं च शीतलं पाययेद्गजम् ॥ १० ॥
शर्कराधातकीचूर्णं तथा यष्ट्याह्वमुद्गयोः ॥
समालीढ्याथ मातङ्गं पाययेत्तन्दुलाम्बुना ॥ ११ ॥
सहृल्लासं घनं श्वेतं कफाद्वमति पिच्छिलम् ॥
हृष्टरोमा सलवणं क्षौद्रेण सह भोजयेत् ॥ १२ ॥
( †सव्योषं त्रिफलाचूर्णं क्षौद्रेण सह भोजयेत्[3] ।)

---

* धनुराकारमध्यस्थः पाठो नास्ति कपुस्तके । † धनुराकारमध्यस्थः पाठो नैव खपुस्तके ॥

---

१ क. श्यामं । २ क. नन्दना° । ३ क. °णं शीतविद्वेष्टिभोजनम् । स° ।

दधित्थं पिप्पलीं चैव मरिचं च प्रदापयेत् ॥
जम्बूप्रवालमरिचं यष्ट्याह्वं नीलमुत्पलम् ॥ १३ ॥
पिण्डोऽयं मधुना सार्धं क्षौद्रेणैव दुरालभाम् ॥
शिरीषपल्लवान्क्षुण्णान्युक्तांस्त्रिकटुकेन च ॥ १४ ॥
मधुना भोजयेन्नागं क्षिप्रं वमथुनाशनम् ॥
मदिरां मधुसंसृष्टां पाययेच्च चिरस्थिताम् ॥ १५ ॥
कषायं कटुकं तिक्तं कारयेत्पानभोजनम् ॥
संनिपातोद्भवः सर्वैस्तुल्यलक्षणसाधनः ॥ १६ ॥
कीर्तितो दोषजो ह्येष आगन्तुरथ वक्ष्यते ॥
वृश्चिकं कृकलासं वा सर्पं शतपदीमपि ॥ १७ ॥
मण्डूकं प्रवलाकं वा कीटानथ विषान्वितान् ॥
अज्ञानात्कवलैः सार्धं यदि भक्षयति द्विपः ॥ १८ ॥
जायते वमथुस्तस्य तेन जीवति वा न वा ॥
जहाति सद्यः प्राणांस्तु भक्षयित्वोरगं द्विपः ॥ १९ ॥
वारि लोहितसंसृष्टं विशुद्धं वाऽपि लोहितम् ॥
यदि प्रच्छर्दयेन्नागो न स जीवति तादृशः ॥ २० ॥
नीलं प्रच्छर्दयेद्वारि यदि तच्च सपिच्छिलम् ॥
विषजग्धं वदन्त्येनं तस्य नास्ति चिकित्सितम् ॥ २१ ॥
पूतिकां च विवर्णां वा कृष्णां वा पूतिगन्धिकाम् ॥
अजस्रं स्रवते धारां तमसाध्यं विनिर्दिशेत् ॥ २२ ॥
उष्णां प्रस्रवते लालां यवसं यदि खादति ॥
अविवर्णामपूतिं च स तु शक्यश्चिकित्सितुम् ॥ २३ ॥
पलानि लवणात्पञ्च विंशतिं च रसाञ्जनात् ॥
लामज्जाच्च बृहत्योश्च नागरात्सिन्दुवारितात् ॥ २४ ॥
तन्दुलीयकमूलाच्च नागराद्रजनीद्वयात् ॥
तेजोवत्याश्च कुष्ठाच्च रोध्राच्चैवेलुवालुकात् ॥ २५ ॥
पिप्पल्येलाहरेणुभ्यः प्रियङ्गुभ्यः कुटन्नटात् ॥
अर्धाढकीपान्भागांस्तु गृहधूमाच्च संहरेत् ॥ २६ ॥
सक्षौद्रं चूर्णमेतेषां नवे कुम्भे विनिक्षिपेत् ॥
सजिह्वातालु सगदं मुखमेतैः प्रलेपयेत् ॥ २७ ॥

---

१ क. प्रचलाकं ।

एतेनैव च चूर्णेन पिण्डमस्मै प्रदापयेत् ॥
वमथौ विषसंसृष्टे श्रेष्ठमेतद्धि भेषजम् ॥ २८ ॥
निर्विषं वमथुं चैनं योगैरेभिरुपाचरेत् ॥
शालिलाम्बरद्धजानां सूक्ष्मचूर्णानि कारयेत् ॥ २९ ॥
सक्षौद्रं भोजयेत्पिण्डं युक्तं त्रिकटुकेन च ॥
नागस्य वमथुः क्षिप्रं पिण्डेनानेन शाम्यति ॥ ३० ॥
पटोलीं काचमाचीं च मुद्गैः सह विपाचयेत् ॥
सतैललवणं यूषं पाययेद्भोजयेद्धि तम् ॥ ३१ ॥
सारिवां शृङ्गवेरं च द्वे सहे रोध्रमेव तु ॥
प्रियङ्गुं चैव सक्षौद्रान्कवलान्भोजयेद्भिषक् ॥ ३२ ॥
तरुणान्याम्रपत्राणि दधित्थं दाडिमानि च ॥
नीपानि मातुलुङ्गं च लकुचं पवसानि च ॥ ३३ ॥
उदूखले क्षोदयित्वा वारणाय प्रदापयेत् ॥
वमथुः कवलैरेभिः क्षिप्रं नागस्य शाम्यति ॥ ३४ ॥
तिन्दुकानि प्रियालानि मृद्वीका विश्वभेषजम् ॥
पारावतः श्वेतपाकी सौवीरं बदराणि च ॥ ३५ ॥
एतत्संक्षुद्य कवलं मधुयुक्तं विचक्षणः ॥
छर्दिप्रशमनं हृद्यं द्विरदाय प्रदापयेत् ॥ ३६ ॥
स्थूलानिक्षून्द्विधा भित्त्वा विडङ्गैस्तान्प्रलेपयेत् ॥
संवेष्ट्य दर्भैश्चाङ्गारैरधूमैस्तान्विपाचयेत् ॥ ३७ ॥
पक्वांस्तान्विधिवच्छीतान्संवेष्ट्य कवलान्भिषक् ॥
दापयेन्मधुसंयुक्तान्हृद्यान्वमथुनाशनान् ॥ ३८ ॥
हरिद्रामश्वकर्णं तु चतुर्णां क्षीरिणां त्वचः ॥
सोमवल्ककषायांश्च मधुना सह योजितान् ॥ ३९ ॥
कवलान्भोजितो नागो वमथुं प्रतिबाधते ॥
उशीरं त्रिकटून्मिश्रं पाययेच्च चिरस्थितम् ॥ ४० ॥
शिखितित्तिरिभिर्लावैरथवाऽपि कपिञ्जलैः ॥
पिप्पलीमरिचैर्युक्तं कटुकं कारयेद्रसम् ॥ ४१ ॥
अनेन भोजयेन्नागं पुराणं षष्टिकोदनम् ॥
पवसानि कषायाणि कवलं पल्लवानि च ॥ ४२ ॥

---

१ क. °लाश्वर° ।

भोजितो वमथोर्नागः सद्यस्तस्मात्प्रमुच्यते ॥
अरोगः सुमनाश्चैव बलं चास्योपजायते ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥ ४२ ॥ १०८९ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने प्रथमो वमथुरोगाध्यायः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः ।

---

अथातोऽतीसारचिकित्सितं व्याख्यास्यामः—

इति ह स्माऽऽह भगवान्पालकाप्यः। इह खलु द्विविधोऽतीसारः—पक्वाशयसमुत्थः, आमाशयसमुत्थश्च । वातपित्तकफानां प्रकुपितानां समस्तानां व्यस्तानां वा धान्ययवसजलानां दुष्टानामुपयोगात्, भयात्, अध्वगमनात्, अतिस्नेहोपयोगात्, मृत्तिकाभक्षणाच्च ॥

तत्र दोषसमुद्भवो मृत्तिकोद्भवश्च दारुणतरौ, शेषाः परे लघवः। अथाऽऽमं खरं दुर्गन्धं पिच्छिलं श्लेष्मलं फेनिलं वार्यच्छमतिसार्यते । अतोऽन्यथा निरामं लाघवं यवसाकाङ्क्षा वातमूत्रपुरीषाणामुत्सर्गः सुप्रवाहत्वम् । रक्ताद्रक्तमतिसार्यते । दोषान्वयाद्दोषलक्षणान्वितम् । सस्नेहं स्नेहसमुत्थम् । मृद्भक्षणात्सम्मृद्धं परमदुर्गन्धि कृष्णाभमतिसार्यते। वारिजो वारिव्यापदा समानश्रंसनं(नः) भवेत् । तथैव धान्यतृणाभ्यां धान्यतृणव्यापत्समानः । अध्वगमनादुपरिशूनोष्णगात्रवदनप्रायो द्रवोष्णभूयिष्ठमतिसार्यते । भयात्पर्यश्रुफुल्लनयनः प्रायशस्त्वामान्वयमतिसार्यते । सर्वेषां परिश्रा(स्रा)वी, गोशकृत्, नाडीजातश्चेति तिस्रोऽवस्थाः । स तु द्विविधः—शुद्धश्चाशुद्धश्च, सदोषश्चादोषश्च, सकृमिरक्तमिश्च, दुर्गन्धश्चादुर्गन्धश्च साध्यश्चासाध्यश्च ॥

तत्र वातात्—फेनिलं सशूलं सशब्दमपिच्छिलमतिसार्यते । पित्तात्—कृष्णं कषायोदकनिभं चोष्णमतिसार्यते (*कृष्णा प्रायश्च भवति । कफात्—श्वेतं सान्द्रं पिच्छिलमतिसार्यते । संनिपातात्सर्वलिङ्गान्वितमतिसार्यते ॥

यस्तु दीनो यो विचेतनो दुर्गन्धमतिसार्यते ) पक्वर्मोदकगन्धिः कुणपगन्धिर्वा स्तब्धकर्णलाङ्गूलकरनयनः कूजन्विनमति यवसकवलकुवलपल्लवाहार-

---

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ।

---

१ ख. °ने वृद्धपाठे क्षु° । २ ख. अतो निपथा । ३ ख. °मानः श्रं° । ४ ख. °गात्रो व° ।

द्वेषी निःस्तनति निरूहं प्रत्यगृह्य[*]वालमाकर्षति व्याली गुरुमक्षिको वाताध्मातः प्रवेपते प्रध्यायति निमीलति मदनजग्ध इव भवति स खल्वसाध्यः ॥

यस्तु तन्दुलोदकवर्णं हरिद्रोदकवर्णं वा स्निग्धं सविदाहं गोशकृद्वर्णं वाऽतिसार्यते, उत्साहवांश्चाऽऽहारेऽस्यान्न वाऽस्यारिष्टमुपलक्ष्यते तं विदितसमुत्थानं निरुपद्रवं चिकित्सितुमुपक्रमेत् ॥

तस्मै मधुरकषायं सांग्राहिकं दीपनीयगणसंस्कृतमुदकमल्पं देयम् । रौक्ष्यात्प्रवृत्ते युक्त्या स्नेहनम् । स्नेहाद्विरूक्षणम् । भयात्सान्त्वनम् । अध्वगमनादध्वमूर्छामोक्षैः, मृद्भक्षणान्मृदानाहमोक्षैः, उपाचरेत् । पक्वस्य सांग्राहिकं पाचनम्, अपक्वस्य सांग्राहिकं शीतसलिलपरिषेकः कर्दमालेपश्च, न तु सलिलमवगाहयेत् । किं कारणम्—सलिलमुपयुञ्जनात्स्यादतीसारप्रवृद्धिहेतुरिति तस्मै दूर्वामधूलिकां मेषपर्णीं च संकुट्य मधुना संयोज्य कवलान्दद्यात्प्रियङ्गुमधूकरोध्रशृङ्गवेरारलुत्वग्गण्डीर[३]बालबिल्वानि संकुट्य कवलान्पुरीषसंवर्तनार्थं भोजयेत् । पिप्पलीशृङ्गवेररोध्राम्बष्ठाप्रियङ्गुपद्मकसमङ्गागोधातकीपुष्पाणि च संकुट्य शर्करामधुसंयुक्तान्कवलान्दद्यात् । भव्यबदरदधित्थदाडिममरूष(रुब)ककाश्मर्यद्राक्षाभिः सह तरुणोदुम्बराणि कवलान्प्रयोजयेत् । तिन्दुकाटरूषकपलाशधवासनवारसर्जकानां क्वाथैः सिद्धं कोद्रवौदनं धातकीपुष्पचूर्णदधिसंसृष्टं भोजयेत् । अथवा सोमवल्काश्मन्तककदम्बसर्जत्वक्कषायैः सिद्धं षष्टिकौदनं मधुसंसृष्टं संयोज्य दध्ना जातरसेन चैनं गतोष्माणं तु शीतलं भोजयेत् । अथवा—आढक्यौ द्वे कर्पासीकदम्बसर्जार्जुनमेषशृङ्गीबिल्वबालानां त्वचः समभागं पिण्डमग्निदीपनं संवर्तनं च दद्यात् । स्वादुकषायत्वङ्मूलपत्रभङ्गान्सांग्राहिकान्दीपनीयान्सुसंस्कृतान्पानार्थे यथोक्तमुदकं दद्यात् । शाद्वलानि चास्मै यवसानि मधुरकषायाणि दापयेत् । तत्राऽऽदावसाध्यलक्षणमुपदिष्टं सामान्यं च लक्षणं चिकित्सितं समासतः । सांप्रतमतीसाराणां पृथक्पृथग्गजन्दोषसमुत्थानां लक्षणं चिकित्सितं व्याख्यास्यामः ॥

वातात्सशब्दमल्पाल्पं फेनिलं ग्रथितं बहु ।
आध्मातमामं पक्वं वा कृच्छ्रं तत्परिवर्तिकम् ॥

तस्यातिविषाहिङ्गुयवान्यजाजीवचाशतपुष्पाबदरसौवर्चलसैन्धवैः पिण्डं दद्यात् । सुखोदकं चानुपानं युञ्ज्यात् । पेयं च दध्ना धूस्तूरेणौदनान्वितां वा यवागूं सदाडिमामल्पस्नेहां युक्त्या भोजयेत् ॥

[*] 'प्रतिगृह्य' इति स्यात् ॥

१ क. °गृह्य वा° । २ क. °त्सितमु° । ३ क. °रताल° । ४ क. °नचार° ।

पित्तात्पीतारुणं सोष्णं तृष्णादाहार्तिवेदनम् ।
श्यावं तनु च दुर्गन्धं सारक्तं चातिसार्यते ॥

तस्य क्रिया वालकमुस्तातृ(त्रि)वृन्माषपर्णीमधूलिकाप्रपौण्डरीकलोध्रबिल्वपथ्यामलकदूर्वाद्रव्याण्येतानि संहरेत् ॥

समभागानि संयोज्य जलद्रोणैस्त्रिभिः पचेत् ।
पादावशिष्टं शीतं तु शर्करामधुमिश्रितम् ॥
पाययेत्कुशलो वैद्यो ज्ञात्वा पित्तातिसारिणम् ।

परिणामे चास्य मृगतित्तिरिकपिञ्जलमयूरमांसरसमच्छं साधयित्वा नातिस्निग्धेन रसेन शाल्योदनं भोजयेत् ॥

यस्तु पित्तातिसारी पित्तलान्युपसेवते, स रक्तातिसारमृच्छति, स पित्तलिङ्गी, अधिको गुदे दाहश्चोपपद्यत इति ॥

तत्र च्छागं पयो यथालाभं वा स्र(शृ)तशीतं समधुशर्करं पानं भोजनं हरितं मृदु चास्य यवसं शीतस्थानोपगूढं कर्दमानुलिप्तं पित्तवद्रक्तातिसारिणं साधयेत् ॥

अथ—

कफाच्छ्वेतं घनं स्निग्धं पिच्छिलं फेनिलं गुरु ।
तन्द्रालस्यकरं शीतं पुरीषमतिसार्यते ॥

चिकित्सितमस्य—त्रिकटुपिप्पलीमूलचित्रकवचेन्द्रयवपाठातिविषाबिल्वमूलतृवृद्धिङ्गुकरञ्जाभयामलकानि क्वाथयित्वा चतुर्भागावशिष्टं सौवर्चललवणान्वितं पाययेत् । परिणामे चास्य दधित्थदाडिमसर्जाश्मन्तकधात्रीकषायसिद्धं कोद्रवौदनं युक्त्या भोजयेत् । सुरां चिरस्थितां पाययेत् ॥

भवन्ति चात्र श्लोकाः—

हेतवः पूर्वमुद्दिष्टा येषां तेषु च ते तथा ।
अविरोधेन वर्तेत भयोद्विग्ने तु सान्त्वनम् ॥
यथोक्ताभिरतीसारं क्रियाभिः साधयेद्भिषक् ।
संग्राहयेच्च नागानां साध्यासाध्यविचक्षणः ॥
निदानं संभवं मात्रां मत्वा कालोचितानि च ।
प्रयोगं लक्षणं सिद्धिं क्रियामानमथापि वा ॥

---

१ क. °क्तं वाऽति° । २ क. °चलं ल° । ३ क. ख. पारिणामि । ४ क. ख. चिरस्थित्य । ५ क. तु ।

प्रयुञ्जेद्यो यथायोगं स भिषक्श्रेष्ठ उच्यते ।
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥

इति श्रीपालकाप्ये गजायुर्वेदमहाप्रवचने वृद्धपाठे द्वितीये क्षुद्ररोगस्थाने द्वितीयः सर्वातीसाराध्यायः ॥ २ ॥

---

## अथ तृतीयोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
कोरदूषैर्मदनकैर्मूर्छा किं रूपमृच्छति ॥ १ ॥
वारणः कैश्च विज्ञेयो लिङ्गैः साध्यस्तथेतरः ॥
चोदितस्त्वेवमङ्गेन पालकाप्यस्ततोऽब्रवीत् ॥ २ ॥
कोरदूषान्मदनकान्यदि भक्षयति द्विपः ॥
हरितान्भक्षयेद्वाऽपि पिबेद्वा मदनोदकम् ॥ ३ ॥
तदिदं कोपयेच्छीघ्रं रक्तपित्तकफानिलान् ॥
स समुत्कृष्टदोषस्तु मूर्छां नागो नियच्छति ॥ ४ ॥
मूर्छितो वा निषण्णो वा वेपते परिदह्यते ॥
उत्थातुकामः पतति विह्वलमिव गच्छति ॥ ५ ॥
विन्यस्य ध्यायति करं पतन्योत्कुर्नवेति च ॥
गात्रापरपरिष्वक्तो वेदनार्तो हि वीक्ष्यते ॥ ६ ॥
नाभिनन्दति चाऽऽहारं लाला चास्य प्रवर्तते ॥
चक्षुरस्याविलं स्तब्धं न च वालेन वीजते ॥ ७ ॥
सर्वगात्राणि सीदन्ति न च वायुः प्रपद्यते ॥
न च मूत्रं पुरीषं वा आनद्धस्य प्रवर्तते ॥ ८ ॥
पित्तं चास्य प्रवर्तेत श्लेष्मा रुधिरमेव च ॥
सारिष्टमपि तं दृष्ट्वा कर्म कुर्यादतन्द्रितः ॥ ९ ॥
एवं मदनजग्धं तु विदित्वा कुशलो भिषक् ॥
ऋतुसात्म्यं वयो देशं ज्ञात्वा कुर्यात्क्रियामिमाम् ॥ १० ॥
गोमयेन प्रदेहोऽस्य कर्तव्यः कर्दमेन वा ॥
शीतोदकावगाहश्च प्रवाते स्थापनं हितम् ॥ ११ ॥

एवं क्रियासमाक्रान्तो यद्यानाहो न शाम्यति ॥
दधिमण्डमुशीरं च पिष्ट्वा गौरांश्च सर्षपान् ॥ १२ ॥
तैर्निरूहस्तु दातव्यो योऽवगाहः प्रवर्तकः ॥
शकृच्छुद्धौ निरूहेण शीतो बस्तिरनन्तरम् ॥ १३ ॥
पयो घृतं समधुकं क्षौद्रेण सह संसृजेत् ॥
ततोऽस्मै दापयेद्धस्ति कोष्ठनिर्वापणं हितम् ॥ ॥ १४ ॥
बदराण्यथ संक्षुद्य शर्कराचूर्णसंयुतम् ॥
तमस्मै दापयेत्पिण्डमजाजीमरिचैर्युतम् ॥ १५ ॥
निर्वाणमेवं लभते मूर्छा चास्योपशाम्यति ॥
तस्मादनन्तरमिमान्कवलान्दापयेद्भिषक् ॥ १६ ॥
आम्रातकांस्तिन्तिडीकं कपित्थानां शिलाटुकम् ॥
उदूखले क्षोदयित्वा शर्कराचूर्णसंयुतान् ॥ १७ ॥
तेनास्य मूर्छा श्वासश्च पिपासा चोपशाम्यति ॥
हिङ्गुना सह संक्षुद्य मातुलुङ्गं सदाडिमम् ॥ १८ ॥
तस्मै प्रदापयेत्पिण्डं शर्करामधुसंयुतम् ॥
तेनाऽऽध्मानं पिपासा च वेपथुश्चोपशाम्यति ॥ १९ ॥
पियालार्जुनबीजानि द्राक्षाचूतफलानि च ॥
आम्रातकं मातुलुङ्गं लकुचं पनसानि च ॥ २० ॥
उत्तरोदकयुक्तानि संक्षुण्णानि उदूखले ॥
शर्कराचूर्णसंसृष्टं पिप्पलीमरिचैर्युतम् ॥ २१ ॥
तस्मै प्रदापयेत्पिण्डं तदा स लभते सुखम् ॥
यद्येवं स सुखी न स्यादिदमन्यत्समाचरेत् ॥ २२ ॥
खर्जूराण्यपनीपानि कुर्य्यात्पारापतैः सह ॥
तमस्मै दापयेत्पिण्डं शर्कराचूर्णसंयुतम् ॥ २३ ॥
सुमना भवति ह्येष आरोग्यं च नियच्छति ॥
यदा मनःस्थितः स्वस्थः कर्णवालकरो भवेत् ॥ २४ ॥
प्रसन्नचक्षुराहारं यथावदभिनन्दति ॥
ततोऽस्मै मदिरा देया तरुणा दोषवर्जिता ॥ २५ ॥
शर्कराचूर्णसंसृष्टा विधिवत्प्रतिपानिका ॥
पञ्चभिर्लवणैर्युक्ता प्रतिपानं विपश्चिताम् ॥ २६ ॥

---

१. क. यथाना° । २ क. शीघ्रं । ३ क. °मेव ल° । ४ क. °ध्मानपिपासे च ।

यद्येवं स सुखी न स्यादिदमन्यत्समाचरेत् ॥
शृङ्गवेरं ह्यतिविषा पिप्पली कटुरोहिणी ॥ २७ ॥
समभागानि सर्वाणि सूक्ष्मचूर्णानि कारयेत् ॥
प्रसन्नयाऽतिसंयोज्य शर्कराचूर्णसंयुतम् ॥ २८ ॥
देयमेतत्प्रतीपानं क्षिप्रमेव सुखी भवेत् ॥
वातानुलोमनं ह्येतद्रक्तपित्तप्रसादनम् ॥ २९ ॥
श्लेष्मप्रसादनं चैव विशुद्धं तु प्रमेहति ॥
कषायं क्षीरवृक्षाणां भोजयेद्वारणं ततः ॥ ३० ॥
पिशितेन शशानां च वेसवारं प्रकल्पयेत् ॥
हस्तश्रवणवालैश्च यदा व्यजति वारणः ॥ ३१ ॥
ततोऽस्मै भोजनं दद्याद्धितं प्राणाय बृंहणम् ॥
लावतित्तिरिमांसानि साधयेत्तण्डुलोदके ॥ ३२ ॥
ततो रसमवश्रा(स्रा)व्य धूपयेद्घृतमात्रया ॥
पिप्पलीशृङ्गवेरेण प्रसन्नां मरिचैर्युताम् ॥ ३३ ॥
दाडिमीफलसारेण सौवर्चलसमन्वितम् ॥
संयुक्तं लवणं कृत्वा रसमस्मै प्रदापयेत् ॥ ३४ ॥
शालीनां च पुराणानां षष्टिकानामथौदनम् ॥
भोजयेत्तं यथाकालं तथा स लभते सुखम् ॥ ३५ ॥
अथाऽऽसवादिमद्यं च तद्द्विपं प्रतिपाययेत्[1] ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥ ३६ ॥ ११२१ ॥

इति श्रीपालकाप्ये गजायुर्वेदे वृद्धपाठे द्वितीये क्षुद्ररोगस्थाने
मदनजग्धको नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## अथ चतुर्थोऽध्यायः ।

---

अथाङ्गाधिपतिरभिवाद्योवाच भगवन्तं पालकाप्यम्—'भगवन्यः प्राक्संग्रहे दृष्टस्तृणशोषी नाम व्याधिः, स कथं भवति, कथं स साध्यते ॥

ततः प्रोवाच भगवान्पालकाप्यः—इह खलु भो(स्) तृणशोषी नाम संभवति रूक्षस्य मन्दाग्नेर्गर्हितयवसोपयोगात्, वाहितानामतिमात्रोपयोगात् ।

---

१ क. प्रतिपादयेत् ।

तद्यथा—काकादनानीलीक्षिपीलुककालालाङ्गलकीशुकनासानां भक्षणात्, भल्लातकफलानां सविषकवलकुवलपल्लवोपयोगात्, सविषवल्लीतृणगुल्मपत्रलताप्रतानभक्षणाद्वा, अथवा सविषोरगकीटसंस्पर्शनात्, तल्लालाश्वासमूत्रपुरीषोपहत(*तृणानां परिचारकाज्ञानेन भोजनाद्वा, नानाविधकीटसंस्पर्शदोषोपहत)-संस्थानविधिभिः परिचारकाज्ञानादभोजनाद्वा ॥

स विवर्णः प्रक्षीयमाणबलजवशरीरः श्वासी विजृम्भते, आध्मायते, शूल्यते, च विह्वलति स्तब्धशूनपक्वजिह्वोष्ठसृक्कताम्राक्षः परिशूनान्तनयनः श्लेष्मप्रसेकवान्, तस्य प्राक्छर्दिःप्रवर्तनात्प्रजायते शोकश्च । स दुश्चिकित्स्यो भवति । कोऽस्य हेतुः—शोषच्छर्दिषी मृदू चिकित्स्ये भवतः । विपरीते अन्यथा ॥

अतः संस्निग्धमधुरकषायैः कवलकुवलयवसोपचारैरुपचरेद्भिषक् । अपि च—पिप्पलीशृङ्गवेररोध्राम्बष्ठामियङ्गुपद्मकसमङ्गाधातकीपुष्पाशोकरोहिणीकसेरुकाश्च क्षोदयित्वा मधुना संयोज्य (†कवलान्भोजयेत् । तन्दुलीयकमूलाधारग्वधशिरीषोरुबूकजीवन्तिकानि च क्षोदयित्वा मधुना संयोज्य) कवलान्दद्यात् । श्लेष्मान्तकारग्वधत्वङ्मूलफलपुष्पपत्राणि तन्दुलीयकमूलारग्वधोदुम्बराणां निष्क्वाथं तन्दुलोदकसंयुक्तं पाययेत् । सल्लकी च मुस्ताञ्जनोशीरचन्दनैर्गोमयसंयुक्तैः प्रलेपः, गोमयेन च । कुटजफलहरिद्रानक्तमालसप्तपर्णीपिप्पलीसर्षपसुगन्धार्धभागयुक्तानि चूर्णं कृत्वा मुखं संमार्जयेत् । प्लक्षन्यग्रोधाश्वत्थकर्णिकारशल्लकीनां पल्लवानि भोजयेत् । अनुक्तानामप्येवंप्रकाराणां वृक्षपत्रभङ्गान्भोजयेत् । तृणशोषिप्रशमनार्थं भोजनं शाल्योदनं मुद्गयूषेण घृतस्निग्धेन रसेन वा दद्यात् ॥

तत्र श्लोकः—

उत्पद्यमानमेवाऽऽदौ तृणशोषिणमुद्धरेत् ।
सोपद्रवोऽतिवृद्धो हि दुश्चिकित्स्यतमो भवेत् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने चतुर्थस्तृणशोषी नामाध्यायः ॥ ४ ॥

---

## अथ पञ्चमोऽध्यायः ।

---

अथातः कर्मातिनीतचिकित्सितमध्यायं व्याख्यास्यामः ।

---

* धनुराकारमध्यस्थः पाठो नैव कपुस्तके ।

† धनुराकारमध्यस्थो नास्ति पाठः खपुस्तके ।

---

१ क. °दनीनीलाक्षिपालु° । २ क. °तापभ° । ३ ख. मृदुचि° ।

इति ह स्माऽऽह भगवान्पालकाप्यः । अथ यदा संयानोपस्थानवर्तनवधबन्धहस्तियुद्धनागरायणसांग्रामिककर्मयोगान्मूर्खमहामात्रापचाराद्वारणोऽतिमात्रं वाह्यते, सान्त्वनप्रतिलम्भनानि यदा योक्ता त्वरया कर्मलोभात्प्रमादाद्वा न प्रयच्छेत्; तदा वारणः कर्मातिनीतशोषेणाभिभूयते ॥

स विवर्णच्छविर्विच्छिन्नभिन्नपुरीषमभीक्ष्णं च मूत्रं रक्ताभं समुत्सृजति, उत्साहतेजोबलवर्णोपहतशरीरो भोजनयवसकवलपल्लवाभिनन्दी च न भवति ॥

तस्यैवं कर्मातिनीतव्याधिजुष्टस्याऽऽदौ सर्वकर्मप्रतिषेधं कुर्यात् । यथाकालं चैनं कूलहरणं पांशुप्रमथनकर्दमहरणादिषूत्सृजेत् । ततश्चैनं प्रफुल्लकुमुदोत्पलपद्मवानीरकन्दलीकदलीवालुकोपशोभितपर्यन्तेषु हंसचक्रवाककुररकारण्डवबककलहंससारसानुनादिततीरेषु सूर्यांशुभिः संतप्तसलिलेषु सरःसु करेणुपरिवृतं यथाकाममवगाहयेत् । ततश्च *वृक्षगुल्मलतावगूढेषु वातसहितभूमिभागवनप्रदेशेषु मदवशाभिर्वारणं यथोत्साहं प्रचारयेत् । मनःप्रसादनार्थं स्नेहदानविधिदृष्टेन चास्य विधिना स्नेहदानं कारयेत् । सुरां च सफाणितां दद्यात् । षष्टिकौदनं च ससर्पिष्कं भोजयेत् । यथाकालं यवसानि च मधुररसवीर्यविपाकान्यार्जवानि मत्स्यण्डिकागर्भाणि भोजयेत् । अभिनयप्रतिनये चास्य यथाकालं कारयेत् ॥

तत्र श्लोकः—

पयोनुपाने रसभोजनैश्च साध्यं तदा वृक्षगणप्रदानैः ॥
उपक्रमेत क्रमशः प्रयत्नात्कर्मातिनीतं विधिवद्गजेन्द्रम् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे वृद्धपाठे द्वितीये क्षुद्ररोगस्थाने कर्मातिनीतो नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ षष्ठोऽध्यायः ।

---

आश्रमस्थमुपासीनं हस्तिशास्त्रविशारदम् ॥
हुताग्निकर्मार्षिश्रेष्ठं पालकाप्यं स्म पृच्छति ॥ १ ॥

---

* 'वृक्षगुल्मलताप्रतानगूढे प्रवातातपरहिते शोभनप्रदेशे सहसा वारणं' प्रत्यन्तरे वा पाठः—इति कपुस्तके टिप्पणी ॥

---

१ क. °यातोप° । २ क. °नीतिशो° । ३ क. °कुसुमोत्प° । ४ क. °मिषु भाव° । ५ क. अत्र । ६ क. ख. °र्माभिनी° । ७ क. ख. °र्माभिनी° ।

उदके यवसे चैव प्रतिपाने च भोजने ॥
स्नेहे क्षीरे शरीरे च लक्षणं विषदूषिते ॥ २ ॥
चिकित्सां चानुपूर्वेण भगवन्वक्तुमर्हसि ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥ ३ ॥
नाज्ञातः प्रविशेच्छालां बालो वृद्धोऽथ भिक्षुकः ॥
पाखण्डोन्मत्तबधिरा मत्तच्छन्दाश्च ये नराः ॥ ४ ॥
व्याधितः क्षुद्रकर्मा वा यश्चान्यः स्यात्तथाविधः ॥
सर्वे ते प्रतिषेध्याः स्युर्हस्तिशालाप्रवेशने ॥ ५ ॥
शत्रुभिः संप्रयुक्तास्ते योजयेयुर्विषं द्विपान् ॥
क्रोधाद्भयाच्च लोभाद्वा संप्रदानैश्च योजिताः ॥ ६ ॥
विषं प्रदद्युस्ते पापा गजानां देहनाशनम् ॥
भक्ष्यभोज्यान्नपानेषु धूपने व्यञ्जनेषु च ॥ ७ ॥
माल्यचूर्णांश्च विविधान्विषदिग्धानुवासितान् ॥
अतः परं प्रवक्ष्यामि नरं पापं विषप्रदम् ॥ ८ ॥
स्विद्यन्ति यस्य गात्राणि वेपथुश्चोपजायते ॥
मुखं संशुष्यते चापि कृच्छ्राद्वाचं प्रपद्यते ॥ ९ ॥
पृच्छ्यमानस्तृणं काष्ठं नखैर्दन्तैश्छिनत्त्यति ॥
भूमिं विलिखते चापि सृक्कणी लेढि चासकृत् ॥ १० ॥
एतैर्लिङ्गैर्विजानीयान्नरं पापं विषप्रदम् ॥
तस्माद्भक्ताञ्जितक्रोधानलुब्धांश्चानसूयकान् ॥ ११ ॥
अनीकस्थान्महामात्रान्वैद्यांश्चापि नियोजयेत् ॥
विधाय रसपानान्नस्थानानि च विशां पते ॥ १२ ॥
शयनानि च नागानां तस्माद्गुप्तानि कारयेत् ॥
सर्वतो ग्रासमुद्धृत्य बलिकर्म च कारयेत् ॥ १३ ॥
परीक्षेत विधां चैव ततः शास्त्रविशारदः ॥
मार्जारवायसश्वभ्यः पिण्डं पूर्वं प्रदापयेत् ॥ १४ ॥
तत्र पश्येत्स्वरूपाणि यानि कुर्वन्ति दूषिताः ॥
भग्नस्कन्धाः परवशा रक्तनेत्रा विचेतसः ॥ १५ ॥
लालाफेनाविलमुखास्तान्विद्युर्विषदूषितान् ॥
विष्किरैः पिशितैर्दृष्ट्वा ते न हृष्यन्ति बर्हिणः ॥ १६ ॥

---

१ क. °गवान्वक्तुमर्हति ॥ ए° । २ क. यथाऽन्यः । ३ क. ख. प्रतिषेधाः । ४ क. सृक्किणी ।

मुखेन नकुलो हन्ति तथैव मृगपक्षिणः ॥
काककङ्कबकानां च न रुचिः स्यात्पिके नृप ॥ १७ ॥
भोजनं स्याद्विवर्णं च मक्षिकाश्चापि मारयेत् ॥
काकः क्षामस्वरं कुर्याच्चकोरोऽक्षि विरञ्जयेत् ॥ १८ ॥
दीप्ते हुताशने चापि पिण्डं वैद्यो विनिक्षिपेत् ॥
तत्र पश्येत्स्वरूपाणि यानि कुर्यात्तु दूषितः ॥ १९ ॥
कृच्छ्रेण प्रज्वलत्यग्निः स्फुटं चिटचिटायते ॥
अनिष्टधूमगन्धोऽग्निर्वामावर्तश्च जायते ॥ २० ॥
मञ्जिष्ठाभोऽथ कृष्णो वा धूमपातोऽपि वा भवेत् ॥
विषोपसृष्टमित्येवं धीरः समुपलक्षयेत् ॥ २१ ॥
उक्तमग्निगतं रूपं विषार्तानां च देहिनाम् ॥
अथ तोयगतं रूपं दूषिते संप्रवक्ष्यते[1] ॥ २२ ॥
काली तु यदि गौरस्य च्छाया श्यामाऽथवा भवेत् ॥
गौरी कालस्य वा छाया तज्जलं विषदूषितम् ॥ २३ ॥
जन्तवो मत्स्यमण्डूका ये चान्ये जलचारिणः ॥
तीरेषूद्वर्तिता यत्र तच्च तोयं प्रदूषितम् ॥ २४ ॥
स्नेहे दुग्धे च पाने च विषयुक्ते नराधिप ॥
यानि रूपाणि दृश्यन्ते तानि वक्ष्यामि तत्त्वतः ॥ २५ ॥
स्नेहः कालस्तु भवति हरिता दृश्यते[2] सुरा ॥
श्यावं च जायते दुग्धं विवर्णं च जलं भवेत् ॥ २६ ॥
उपनीतं यदा तोयं नीलं पश्येन्नराधिप ॥
विषोपसृष्टमित्येवं धीरस्तदुपलक्षयेत् ॥ २७ ॥
उक्तं जले च पाने च स्नेहे क्षीरे च दूषिते ॥
यवसस्यापि राजेन्द्र रूपाणीमानि लक्षयेत् ॥ २८ ॥
श्यावं दग्धनिभं[3] चैव यवसं यत्तु पार्थिव ॥
विवर्णमथ दुष्टं वा छिन्नं वाऽपि तथा क्रमात् ॥ २९ ॥
एवंलक्षणसंयुक्तं यवसं न प्रदापयेत्[4] ॥
निश्वासघ्राणनयनैः सर्पाणां दूषिते द्विपे ॥ ३० ॥
यानि रूपाणि दृश्यन्ते तानि वक्ष्याम्यतः परम् ॥
शक्रगोपकसंस्थानाः काकाण्डकसमप्रभाः ॥ ३१ ॥

---

१ क. संप्रचक्षते । २ क. दृश्यते । ३ क. दुग्धनिभं । ४ क. °त् ॥ निश्वा°।

स्फोटा भवन्ति शीर्यन्ते वारणस्य समन्ततः ॥
श्यावपिच्छिलदुर्गन्धा नीलस्रावाः सुदारुणाः ॥ ३२ ॥
छविर्विशीर्यते चैव रोमाणि च नखानि च ॥
प्रवेपते च कोपेन[1] हृष्टिश्च परिहीयते ॥ ३३ ॥
दह्यते च मुहुर्नागो निद्रा चैनं प्रबाधते ॥
विकर्णे[2] हस्तमोहाभ्यां तथा भूमौ निषीदति ॥ ३४ ॥
लिङ्गैरेतैर्विजानीयाद्विषार्तं वारणं बुधः ॥
ततश्चैनां क्रियां कुर्याद्गजस्य विषनाशनीम् ॥ ३५ ॥
कपित्थमूलं कुष्ठं च सरलं सारिवा मधु ॥
एतदालेपनं[3] श्रेष्ठं चूर्णं च विषदूषिते ॥ ३६ ॥
अथ प्रक्षालनं चास्य व्रणानामपि वक्ष्यते ॥
अर्जुनं वेणुपत्राणि शिरीषं ककुभं[4] धवम् ॥ ३७ ॥
करञ्जं करवीरं च सैन्धवं सिन्दुवारितम्[5] ॥
क्षौद्रेण सह संसृज्य जलमिश्रेण युक्तितः ॥ ३८ ॥
तेन शीतकषायेण क्षालयेद्दन्तिनो व्रणान् ॥
बिल्वमध्यं शैलाटुं[6] च कपित्थं शिग्रुपाटलम् ॥ ३९ ॥
सरलं चैव कुष्ठं च हरितालं पुनर्भवम् ॥
शिरीषस्य च पुष्पाणि मालतीतरुणानि च ॥ ४० ॥
एष *सर्वोत्तमः[7] श्रेष्ठो वारणांस्त्रायते विषात् ॥
वत्सनाभं सुनाभं च ईश्वरां गन्धनाकुलीम् ॥ ४१ ॥
पिप्पलीं शृङ्गवेरं च दद्यात्पोटगलं तथा ॥
कालाभ्यां सह सर्वाणि समभागानि पेषयेत् ॥ ४२ ॥
एष श्रेष्ठो भवेद्योगो वारणानां विषापहः ॥
अविषं सविषं कुर्यात्सविषं चापि निर्विषम् ॥ ४३ ॥
मरिचं मधुकं लोध्रं पिप्पल्यः कुष्ठमेव च ॥
अजाक्षीरेण संयुक्तं मृदा चैव समन्वितम् ॥ ४४ ॥
वृद्धानामथ दुष्टानामुपभुक्तविषाश्च ये ॥
एषां योगोत्तमं दद्याद्वारिपिष्टं पृथक्पृथक् ॥ ४५ ॥

* 'सर्वागदश्रेष्ठो' इति पाठो भवेत् ।

१ क. कायेन । २ क. विकीर्णह° । ३ क. एतैराले° । ४ क. कुङ्कुमं । ५ क. सिन्धुवा° । ६ ख. शिलाटुं । ७ क. सर्वो मदः ।

एकं नृणामजानां द्वौ त्रीणि दद्यात्खरोष्ट्रयोः ॥
अभ्यस्येच्च तथा गोलान्स्थूलामलकसंमितान् ॥ ४६ ॥
आलानस्तम्भशयने मारुते चोत्तरोदके ॥
प्रग्रीवपक्षपरयो रूपं पर्यन्तदूषिते ॥ ४७ ॥
शोफः स्याद्रोमकूपेषु कण्डूर्गात्रेषु जायते ॥
यं यं च भजते देन्यं छविस्तत्र विशीर्यते ॥ ४८ ॥
एवं तस्य विषार्तस्य दृष्ट्वा रूपाणि दन्तिनः ॥
इमं प्रदापयेद्योगं विषयुक्तस्य पार्थिव ॥ ४९ ॥
दध्ना घृतसमायुक्तं गोमयं भोजयेद्द्विपम् ॥
विषं कोष्ठगतं हन्याच्छीघ्रमेव तु दन्तिनः ॥ ५० ॥
ईश्वराङ्कं मरुक्षीरं हरिद्रे द्वे मृदं तथा ॥
चन्दनं मेषशृङ्गीं च पिचुमन्दं च संहरेत् ॥ ५१ ॥
ततो जलविमृष्टं तु पाययेद्वारणं तथा ॥
इत्येषा प्राणसंरक्षाऽभिहिता हस्तिनां पुरा ॥ ५२ ॥
पालकाप्येन विधिवद्रोमपादाय पृच्छते ॥
भूयोऽङ्गराज( : ) पप्रच्छ पालकाप्यं विशेषतः ॥ ५३ ॥
विषोपयुक्तदेहस्य वारणस्य द्विजोत्तम ॥
साध्यासाध्यं चिकित्सां च ब्रूहि लक्षणमेव च ॥ ५४ ॥
ततः श्रुत्वाऽङ्गनृपतेश्चतुरङ्गाधिपस्य तत् ॥
वाक्यं विख्यातयशसः प्रत्युवाच ततो मुनिः ॥ ५५ ॥
पूर्वोक्तैः कारणैर्नागो यदा युञ्जे( ञ्ज्या )द्विषे नृपः ॥
लिङ्गैस्तदा विक्रियते सर्पदष्ट इव द्विपः ॥ ५६ ॥
अक्षिणी चास्य रज्येते हनु विक्षिपते तथा ॥
नेत्रे स्तब्धे भवेतां च तथा मन्ये च हस्तिनः ॥ ५७ ॥
स्रस्तलाङ्गूलकर्णश्च स्रस्तहस्तश्च लक्ष्यते ॥
कुर्वन्नदत्यभीक्ष्णं च मुहुरुद्विजते तथा ॥ ५८ ॥
श्रो( स्रो )तोभ्यश्चास्य सर्वेभ्यो रुधिरं संप्रवर्तते ॥
मक्षिकाश्चापि मातङ्गो नावकर्षति दुर्मनाः ॥ ५९ ॥
यस्मिन्नेतानि रूपाणि सारिष्टानि महीपते ॥
लक्ष्यन्ते विषयुक्तस्य न स जीवति तादृशः ॥ ६० ॥

१ क. देशं ।

यदा स्तम्भश्च जिह्वायाः शून्यत्वक्चोपजायते ॥
बहुश्लेष्मप्रसेकश्च सघोषश्च प्रवर्तते ॥ ६१ ॥
विष्टम्भयति हस्तं च स्पन्देते चाक्षिणी तथा ॥
गच्छन्मुहुः प्रस्खलते क्रिया तस्य प्रवर्तते ॥ ६२ ॥
मेषशृङ्गीशलाटूनि व्याधिघातमुदुम्बरम् ॥
तन्दुलीयकमूलं च श्लेष्मान्तकांश्च दापयेत् ॥ ६३ ॥
क्षुण्णान्येतानि सर्वाणि संसृजेत्तन्दुलोदके ॥
( *तं रसं मधुसंयुक्तं दापयेत्सुखशीतलम् ॥ ६४ ॥
कुटन्नटं तथोशीरं सरलं सैलवालुकम् ॥ )
चन्दनं कठभीमूलमञ्जनं सितपर्वकम् ॥ ६५ ॥
गोमूत्रे गोमये चैनं वासयेदसकृन्नृप ॥
तेन प्रलेपं नागस्य विषदग्धस्य कारयेत् ॥ ६६ ॥
श्यामाकं कन्दलीमूलं हरिद्रे द्वे च पेषयेत् ॥
पाययेद्दधिसंयुक्तमुपयुक्तविषं द्विपम् ॥ ६७ ॥
तगरं बदरीमूलं प्रियङ्गुं खदिरत्वचम् ॥
तालीसपत्रं स्थूलैलां तथा द्वे तन्दुलीयके ॥ ६८ ॥
बीजं ब्राह्मणिकायाश्च गुडं मच्छवसं हरेत् ॥
सर्पिषा चैव दध्ना च क्षुण्णान्येतानि संसृजेत् ॥ ६९ ॥
सक्तुभिः सह संयोज्य पिण्डं नागाय दापयेत् ॥
श्रा( स्रा )वयेत्तिन्दुकीक्षीरं निर्गुण्ड्याः क्षीरयोस्तथा ॥ ७० ॥
क्षीरं समधुसर्पिष्कं तं द्विपं प्रति पाययेत् ॥
पलाशबीजं श्वेतां च गृहधूमं पूनर्नवाम् ॥ ७१ ॥
अरिष्टकं प्रियङ्गुं च हरिद्रां शतकर्णिकाम् ॥
शिरीषस्य च बीजानि तन्दुलीयकमेव च ॥ ७२ ॥
गोमूत्रपिष्टान्येतानि पाययेत्सह सर्पिषा ॥
संयुक्तं सक्तुभिः पिण्डं विषार्तं भोजयेद्गजम् ॥ ७३ ॥
अनेन सर्पिषा चास्य नस्यकर्म विधीयते ॥
द्वे हरिद्रे समञ्जिष्ठे तरुणानन्तपल्लवान् ॥ ७४ ॥

---

*धनुराकारमध्यस्थः पाठो भ्रष्टः कपुस्तकात् ।

---

१ क. कदली° ।

कवलस्तु प्रदातव्यो मधुगोपित्तसंयुतः ॥
पृषतैणमयूराणां कुक्कुटानां च संस्कृतैः ॥ ७५ ॥
रसैस्तं भोजयेन्नागं ससौवर्चलदाडिमैः ॥
पित्तैः सशोणितैश्चैषां पिप्पलीमधुसंयुतैः ॥ ७६ ॥
सविडङ्गैर्भवेत्कार्यमञ्जनं विषशान्तये ॥
प्रांदुर्भावो विषस्यैष त्रिविधस्य विशां पते ॥ ७७ ॥
मूलजं दंष्ट्रजं चैव कृत्रिमं चेति पठ्यते ॥
संस्कार्यस्य क्रिया(ः) सम्यङ्मूलजस्य च कीर्तिताः ॥ ७८ ॥
दंष्ट्रजस्य प्रवक्ष्यामि चिकित्सां लक्षणं तथा ॥
सर्पदष्टे नरश्रेष्ठ यथावत्प्रविभागशः ॥ ७९ ॥ १२०० ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने विषपरीक्षाध्यायः षष्ठः ॥ ६ ॥

---

अथ सप्तमोऽध्यायः ।

---

जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा ॥
स्वभावतो वा गुणविप्रहीणं विषं हि दूषीविषतामुपैति ॥ १ ॥
अपकृष्टं गुणं पश्चात्स्वभावाद्धेतु(तु)तोऽपि वा ॥
तद्विषं विषतत्त्वज्ञैर्दूषीविषमिति स्मृतम् ॥ २ ॥
दूषितं देशकालान्नदिवास्वप्नातिभोजनैः ॥
यस्माद्दूषयते धातुं तस्माद्दूषीविषं स्मृतम् ॥ ३ ॥ १२०३ ॥
दूषीविषार्त इति* ....................................
.................................................... ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने सप्तमो दूषीविषनामाध्यायः ॥ ७ ॥

---

* क–खपुस्तकयोरेतावानेवेदृगेव पाठ उपलक्ष्यते । तत्र न निश्चितम्—पाठत्रुटितः, 'इति दूषीविषार्तः' इतिपाठो वा—इति ॥

---

१ क. प्रादुर्भावं । २ क. विषस्यैव ।

अथाष्टमोऽध्यायः ।

यथा यथा हि देशस्थं विषं भवति दन्तिनः ॥
तथा तथा भवत्येष दुश्चिकित्स्यो विशेषतः ॥ १ ॥
न सुखं त्वग्गते वीर्यं विषं भवति दन्तिनः ॥
सिरास्नाय्वस्थिमांसेषु संधौ चातिबलं भवेत् ॥ २ ॥
तस्मान्नातिप्रविसृते विषे कुर्याच्चिकित्सितम् ॥
तेषां विषेण दुष्टानां धातूनां लक्षणं शृणु ॥ ३ ॥
कठिना भिन्नरोमा च त्वक्प्राप्ते लक्ष्यते छविः ॥
काये तु शोफः कठिनो मांसप्राप्ते सवेदनः ॥ ४ ॥
सिरागते ग्रन्थयः स्युः संस्पर्शेन सुखायते ॥
स्नायुप्राप्ते विषे स्तम्भो गात्राणामुपजायते ॥ ५ ॥
पतंत्यस्थीनि संप्राप्ते मज्जस्थे तु सुदुर्मनाः ॥
विवृताः संधयश्च स्युः सर्वसंधिगते विषे ॥ ६ ॥
शिरः प्राप्तं गच्छेत्कोष्ठं कोष्ठाद्गात्राणि गच्छति ॥
एवं तदनुपूर्वेण सर्वान्धातूनवाप्नुयात् ॥ ७ ॥
तस्मोद्दशस्थानगतं विषं मारयति द्विपम् ॥
विस्मितस्तु ततो भूयो नृपतिः पृष्टवान्द्विजम् ॥ ८ ॥
यथा विषं मारयति यथा चैव निवर्तते ॥
स्थाने स्थाने यथा रूपं भगवान्व्याकरोतु मे ॥ ९ ॥
पालकाप्यस्ततो भूपमङ्गराजं दयान्वितः ॥
उपद्रवास्तु ये तेषां शृणु वेगान्तराणि च ॥ १० ॥
तथैव देहमासाद्य प्राणान्हरति दन्तिनः ॥
विषं पीतं तथा लीढं भक्ते स्नेहे तथाऽक्षते ॥ ११ ॥
तथा सर्वेषु गात्रेषु प्रयुक्तं स्पर्शकर्मणि ॥
क्षणेन क्षतमासाद्य देहे विकुरुते विषम् ॥ १२ ॥
तन्मारयति भूतानि पश्यतामेव भूमिप ॥
*सप्तवेगमहाराज काश्यपेन प्रकीर्तितः ॥ १३ ॥

---

* 'सप्त वेगा महाराज काश्यपेन प्रकीर्तिताः' इति पाठो भवेत् ।

---

१ क. °तन्त्यस्थी° । २ क. °स्माद्दंश° । ३ क. °न्द्विपम् ।

वारणेषु तु दृश्यन्ते भ्रम एव हि केवलम् ॥
अन्तःस्वेदा निसर्गेण तेजसोऽश्च पतस्ततः ॥ १४ ॥
त्रिष्वेव विनिपात्यन्ते चतुर्थं नाऽऽप्नुवन्ति च ॥
तस्माचेषां त्रयो वेगाश्चतुर्थो नोपपद्यते ॥ १५ ॥
स्वेदक्लिन्नानथो दृष्ट्वा सेन्द्रान्देवगणान्पुरा ॥
अन्तःस्वेदः कृतश्चापि वारुणेन महात्मना ॥ १६ ॥
तेषां विषेण दुष्टानां वेगानां लक्षणं शृणु ॥
प्रथमे विषवेगे तु वारणे लक्षणं भवेत् ॥ १७ ॥
निद्रा प्रबाधतेऽत्यर्थं सुखेन निपतत्यपि ॥
द्वितीयं विषवेगं तु जानीयाल्लक्षणैरतः ॥ १८ ॥
निषीदत्यपराभ्यां तु मोहाभ्यां प्रपतत्यपि ॥
तृतीयस्य प्रवक्ष्यामि वेगस्य नृप लक्षणम् ॥ १९ ॥
विह्वलीभूतसर्वाङ्गो वारणः प्रपतेद्भुवि ॥
पश्चात्पक्षमजस्रं तु मेघवद्बृंहते द्विपः ॥ २० ॥
एभिर्लिङ्गैर्विजानीयाद्विषदष्टं मतङ्गजम् ॥
एवं खलु महाराज ये ये वेगाः प्रकीर्तिताः ॥ २१ ॥
तेषां विषेण दुष्टानां साध्यानां साधनं शृणु ॥
खद्योतानिन्द्रगोपांश्च गजातारवितारकैः ॥ २२ ॥
कपिलायाश्च गोः पित्तं गोविषाणे निपातयेत् ॥
तेन भेरीपताकाश्च ध्वजाग्राणि च लेपयेत् ॥ २३ ॥
वाद्यान्यन्यान्यपि क्षिप्रं प्रलिप्तान्यथ घातयेत् ॥
दष्टाश्च विषपीताश्च विषविद्धाश्च वारणाः ॥ २४ ॥
निशम्य वादनं चैषां दृष्ट्वा *तां स्वस्फनिर्विषाः( ? ) ॥
शिरःस्नातो भिषग्वाऽपि स्वस्ति वाच्य द्विजोत्तमान् ॥ २५ ॥
दर्भाञ्शुष्कान्हरितकान्निःस्वाग्रांश्च चिकित्सकाः ॥
तान्दक्षिणेन हस्तेन गृहीत्वा सुसमाहितः ॥ २६ ॥
इमं हि सुमनास्तूष्णीं कृत्वा ब्राह्मणवाचनम् ॥
प्रोदाहरेन्मन्त्रवरं पूर्वोद्दिष्टं स्वयंभुवा ॥ २७ ॥

* 'दृष्ट्वा तांश्च स्युर्निर्विषाः' इति पाठो यथाकथंचिद्भवेत् ॥

१ क. वारुणेषु । २ क. °सा स्वय° । ३ क. च । ४ क. °न्यानि हि क्षि° ।

वासुकिस्तक्षकश्चैव विषमुग्रं हरन्तु ते ॥
अनन्तश्चैव भगवान्विषं हरतु ते स्वाहा ॥ २८ ॥
जले रुद्रो जले ब्रह्मा जले ब्रह्म सनातनम् ॥
जले वायुश्च सोमश्च निर्विषो भव कुञ्जर स्वाहा ॥ २९ ॥
मन्त्रैर्हृत्वा विषं तस्य वारणस्य चिकित्सकः ॥
एतेषां तु यथालाभं पशूनां कारयेद्रसम् ॥ ३० ॥
नकुलानां वराहाणां पृषतानां च युक्तितः ॥
भक्षयित्वाऽथ मांसानि विषिणो भक्षयन्ति ये ॥ ३१ ॥
ओषधानि भिषक्तेषु शीघ्रमेवातिसंहरेत् ॥
पिप्पल्यो मरिचाश्चैव कल्पमेद्य( ? )वृतं मधु ॥ ३२ ॥
गोमयस्य रसेनैव भावयेन्मतिमान्भिषक् ॥
सुस्निग्धमेतद्रसकं विषदुष्टं मतङ्गजम् ॥ ३३ ॥
कदुष्णं पाययेदेनं तेन संपद्यते सुखी ॥
अनेनैव च मांसेन भोजयेद्वारणं भिषक् ॥ ३४ ॥
पीत्वा तु रसकं नागस्तेजस्वी बलवान्भवेत् ॥
न विषान्मरणं तस्य यदि जुष्टो महाविषैः ॥ ३५ ॥
सर्वं विषं विषहते पीते तद्रसके गजः ॥
विषेण दूषितं नागं तैलं दूराद्विवर्जयेत् ॥ ३६ ॥
पानेऽभ्यङ्गे तथा नस्ये घृतमेव प्रशस्यते ॥
अत ऊर्ध्वं क्रिया यस्य निखिलेन प्रशस्यते ॥ ३७ ॥
शीते पद्मह्रदे नागं दष्टं क्षिप्रं विगाहयेत् ॥
अयं विषघ्नो दातव्यः पिण्डस्तस्मै चिकित्सकैः ॥ ३८ ॥
द्वे हरिद्रे वचा चैव पिप्पली मरिचानि च ॥
द्वौ करञ्जौ सठी चैव बलामतिबलामपि ॥ ३९ ॥
एतत्संहृत्य संभारं गव्यं श्रेष्ठं च यद्घृतम् ॥
बस्तमूत्रेण तत्सर्वं क्षोदयित्वा विचक्षणः ॥ ४० ॥
अजानामथवाऽवीनां रक्तं क्षिप्रमुपार्जयेत् ॥
रक्तद्वयेन तं पिण्डं भोजयेद्वारणं भिषक् ॥ ४१ ॥

---

१ क. ख. सनातनः । २ क. सुखम् । ३ क. तु । ४ ख. नु । ५ क. °म् ॥ वत्सम्° ।

पिण्डेन तेन नागस्य विषं क्षिप्रं प्रणश्यति ॥
प्रलेपश्चास्य कर्तव्यः पद्मिनीमृत्तिकाघृतैः ॥ ४२ ॥
इति प्रलेपः प्रथमो द्वितीयः संप्रवक्ष्यते ॥
चन्दनं तगरोशीरं शिरीषस्य तु पल्लवाः ॥ ४३ ॥
पानं पिण्डमजाक्षीरे विषघ्नं स्यात्प्रलेपनम् ॥
शीतलेन जलेनाथ संयुक्तं परिषेचनम् ॥ ४४ ॥
मधुराः क्षीरिणश्चैव कषाया ये च पादपाः ॥
तेषां त्वचः क्वाथयित्वा श्रेष्ठं स्यात्परिषेचनम् ॥ ४५ ॥
सिद्धकं राजवृक्षश्च शुष्ककं पारिभद्रकम् ॥
पाटलामश्वकर्णं च सोमवल्कं तथा धवम् ॥ ४६ ॥
वृक्षानेतान्समाहृत्य क( का )ण्डशः संप्रलेपयेत् ॥
समभागांस्ततः कृत्वा दहेदग्नौ विचक्षणः ॥ ४७ ॥
तद्भस्म ह्युपशान्तेऽग्नौ स्वनुगुप्तं निधापयेत् ॥
प्रतीवापश्च कर्तव्यो भस्मन्यस्मिन्नयं गणः ॥ ४८ ॥
त्रिफलां त्रिकटुं चैव पञ्चैव लवणानि च ॥
समभागानि सर्वाणि भस्मन्यस्मिन्समाचरेत् ॥ ४९ ॥
एष क्षारोऽगदः श्रेष्ठो नारायणमतः शुभः ॥
स्थावरं जङ्गमं चैव विषं हन्ति गजस्य तु ॥ ५० ॥
यथा हि पद्मिनीपत्रे तोयबिन्दुर्न तिष्ठति ॥
एवमत्रागदे दत्ते मधुसर्पिःसमन्विते ॥ ५१ ॥
न तिष्ठति विषं देहे सर्वथाऽपि च यद्भवेत् ॥
त्रिकटुं त्रिफलां चैव पञ्चैव लवणानि च ॥ ५२ ॥
रसशुक्तसमायुक्तं विषसुप्तप्रबोधनम् ॥
निवृता शृङ्गवेरं च शिखिपित्तसमायुतम् ॥ ५३ ॥
अञ्जनं प्रवरं दिव्यं विषसुप्ते मतङ्गजे ॥
कुङ्कुमागुरुसंयुक्तं नागपुष्पं सकेसरम् ॥ ५४ ॥
उत्पलानि च मुख्यानि दद्यात्कुमुदमेव च ॥
आलेपो विषदुष्टानां द्विपानां विषनाशनः ॥ ५५ ॥
मृद्वीका शर्करा चैव खर्जूराणि तथा मधु ॥
तर्पणोदकसंयुक्तं द्विपानां विषनाशनम् ॥ ५६ ॥

---

१ ख. अथ । २ क. °प्रचक्षते । ३ ख. °प्रकल्पये° । ४ क. °वातश्च ।

विषघ्नानि प्रवक्ष्यामि मांसानि मनुजाधिप ॥
विषाणां यानि चोक्तानि अविरुद्धानि नित्यशः ॥ ५७ ॥
कोकिलाश्च बलाकाश्च वर्तकाः सकपिञ्जलाः ॥
कपोता वर्धमानाश्च ऊर्ध्वगाश्चैव ये खगाः ॥ ५८ ॥
मयूरतित्तिरिलावाः पञ्चैव मनुजाधिप ॥
अर्कानिलहता नित्यं विरुद्धगमनास्तथा ॥ ५९ ॥
तस्मात्ते भोजने राजन्विषाणां समुदाहृताः ॥
विषस्य प्रथमे काले जाङ्गलानि समाहरेत् ॥ ६० ॥
शीतलानि च सेवन्ते ये चोष्णानि तथा मृगाः ॥
मध्ये साधारणा राजन्विषाणां समुदाहृताः ॥ ६१ ॥
विषस्य पश्चिमे काले संप्राप्ते प्राणनाशने ॥
विषं तु हृदये येषां रक्तं च कलुषीकृतम् ॥ ६२ ॥
सदा न जायते रक्तं मारुतेन समाहितम् ॥
तेभ्यस्तु मत्स्यमांसानि वाराहाणि च दापयेत् ॥ ६३ ॥
अदनानि तु वक्ष्यामि विधिवत्तेन भूमिप ॥
शालयः षष्टिका व्रीहियवगोधूममेव च ॥ ६४ ॥
आहारार्थं विधीयन्ते गजानामिह नित्यशः ॥
शारदाश्चैव ये मुद्गाः शालीनां तन्दुलास्तथा ॥ ६५ ॥
सुस्विन्नमेतद्द्वितयं ततः समवतारयेत् ॥
तद्भक्तं संसृजेत्सर्वं संयोज्य हविषा ततः ॥ ६६ ॥
बस्तमूत्रमजाक्षीरं शर्करां च रसाञ्जनम् ॥
एवं घृतेन संयुक्तं क्वथितं पद्मिनीजलम् ॥ ६७ ॥
एतद्भक्ते च पाने च दापयेत्सविषे गजे ॥
अतः परं प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ ६८ ॥
चन्दनं तगरं चैव त्वगेलापत्रमेव च ॥
प्रियङ्गुनागपुष्पं च मांसी कुष्ठं सपद्मकम् ॥ ६९ ॥
कुङ्कुमं च मृणालं च मुस्तां स्पृक्कां शताह्वयाम् ॥
सासितां सुरसां हिङ्गु हरितालं मनःशिलाम् ॥ ७० ॥
अष्टौ सिद्धार्थमुस्ताश्च विंशतिश्च हरेणुकाः ॥
रोचना हरिवेरं च कुटंनटमथापि वा ॥ ७१ ॥

---

१ ख. वर्चकाः । २ क. वत्सम्° । ख. वत्सम्° ।

कन्यायाः पुष्ययोगेन पेष्टव्या वारिणा सह ॥
क्षणात्सर्वं विषं हन्ति सर्वपापप्रणाशनः ॥ ७२ ॥
रक्षोघ्नः पुष्टिकामस्य सदा चन्द्रोदयः स्मृतः ॥
आर्द्रस्य वेणोस्त्वक्चापि बीजं चाथ करञ्जयोः ॥ ७३ ॥
मध्यमं च कपित्थस्य कुङ्कुमं चाञ्जनं तथा ॥
शिरीषपुष्पं दशमं गोपित्ते निप्रदापयेत् ॥ ७४ ॥
अश्लेषाज्येष्ठयोः कार्यो ह्यगदः कालको भवेत् ॥
कारयेद्गुटिकां प्राज्ञः शृणु चास्य प्रयोजनम् ॥ ७५ ॥
नस्यकर्म्मणि नागानां युञ्जीताऽऽलेपने भवेत् ॥
सर्पाणां राजिलानां च विषं मण्डलिनां च यत् ॥ ७६ ॥
गूढगर्भां करेणुर्या तस्या योनिं प्रलेपयेत् ॥
आलेप्य वा गुदं वाऽथ गुदे वर्तिं प्रवेशयेत् ॥ ७७ ॥
ततः प्रसूयते क्षिप्रं हस्तिनी क्रिययाऽनया ॥
न हन्यादुपयुक्तस्तु* ..... .... .... .... .... .... .... .... ॥ ७८ ॥
.... .... .... .... .... .... .... .... .... .... .... .... .... .... ॥
.... ....श्लक्ष्णीकृतानेतान्व्यधस्थानेषु योजयेत् ॥७९॥१२८२॥

इति श्रीपालकाप्यमुनिविरचिते हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थानेऽष्टमोऽध्यायः ॥ ८ ॥

---

अथ दिग्धविद्धो नाम नवमोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
दन्तिनो दिग्धविद्धस्य किं कार्यमुपलक्ष्यते ॥ १ ॥
चिकित्सां चाऽऽनुपूर्व्येण भगवन्वक्तुमर्हसि ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥ २ ॥
दन्तिनो दिग्धविद्धस्य चिराच्छ्रु( स्र )वति शोणितम् ॥
विद्धो विवर्णो भवति शोणितं च विवर्धते ॥ ३ ॥

---

* इतोऽग्रे त्रुटितचिह्नभूता काकपदी कपुस्तके, खपुस्तके 'इतः किंचित्त्यक्तमस्ति' इति मूल एव लिखितं गैरिकरक्तं दृश्यते ।

---

१ क. श्लक्ष्णककृतानेतान्व्याध° । २ ख. °न्व्यधः स्था° ।

लाला प्रवर्तते चास्य चक्षुषा च न पश्यति ॥
शोफोऽस्य मृदुनिम्नेषु प्रदेशेषु विवर्धते ॥ ४ ॥
गजस्य दिग्धविद्धस्य द्वयमेतत्प्रकीर्तितम् ॥
तस्य कर्म प्रवक्ष्यामि यथा संपद्यते सुखी ॥ ५ ॥
गात्रापरपरिक्षिप्तं नागं कृत्वा सुपन्त्रितम् ॥
शल्यमुद्धृत्य नागस्य शोधनं तस्य कारयेत् ॥ ६ ॥
सेचयेद्वारिणा वेधं प्रदेहैश्च प्रदेहयेत् ॥
त्वचमामलकीनां च खदिरस्य धवस्य च ॥ ७ ॥
समभागं ततः कुर्यात्समाहृत्य पृथक्पृथक् ॥
खण्डशः कल्पयित्वा वै क्वाथयेद्दिव्यवारिणा ॥ ८ ॥
एतत्क्वाथं परिश्रा( स्रा )व्य भेषजानि समावपेत् ॥
सोमवल्कं वचां श्वेतामोदकीपाटलां तथा ॥ ९ ॥
आस्फोतां वारुणीमूलं पयस्यां मधुकं यवान् ॥
तथैवोत्पलकन्दाश्च भागाः स्युः कर्षसंमिताः ॥ १० ॥
यथा जातः प्रदेहः स्यात्तदैनमवतारयेत् ॥
एवं सुशीतलं कृत्वा विधं तस्यानुलेपयेत् ॥ ११ ॥
विषं हन्ति महीपाल क्षिप्रं च सुखमाप्नुयात् ॥
अथातः संप्रवक्ष्यामि विषप्रशमनं हितम् ॥ १२ ॥
चतुर्द्रोणे तु पयसि भेषजानि समावपेत् ॥
पयस्या क्षीरकाकोली अमृता द्वे च सारिवे ॥ १३ ॥
श्वेता च मुद्गपर्णी च माषपर्णी मृणालिका ॥
कसेरुका ह्यनन्ता च जीवकर्षभकावुभौ ॥ १४ ॥
कपिकच्छूस्तथा देया पिप्पली च महीपते ॥
उदुम्बरसमं कल्कं कारयित्वा पृथक्पृथक् ॥ १५ ॥
तोयं दशाढकं दत्त्वा सर्पिषश्चाऽऽढकं तथा ॥
आढकं शर्करायाश्च ततो मन्दाग्निना पचेत् ॥ १६ ॥
यदोपयुक्ततोयं स्यात्तदैनमवतारयेत् ॥
सुशीतलमिदं कृत्वा पानं दद्याद्विषापहम् ॥ १७ ॥
त्वचावुभे समानीय विदुलस्यार्जुनस्य च ॥
क्षीरिणां पादपानां च कोविदारकदम्बयोः ॥ १८ ॥

---

१ क. मुनिनिम्नेषु । २ क. °र्षकतावु° ।

एतत्प्रकीर्तितं सर्वं ततो निशि निवासयेत् ॥
ततः प्रक्षालयेद्वैद्यो व्रणं शस्त्रेण शोधितम् ॥ १९ ॥
उभे हरिद्रे मञ्जिष्ठां मधूकं तगरं तथा ॥
हरीतकीं प्रियङ्गुं च नाकुलीं कंदरीं तथा ॥ २० ॥
गोपित्तं च समांशानि सूक्ष्मचूर्णानि कारयेत् ॥
एष चूर्णागदः श्रेष्ठो गजानां व्रणरोपणः ॥ २१ ॥
एतैरेव पुनः स्वाङ्गैर्यथोक्तैः साधयेद्घृतम् ॥
एतदभ्यञ्जनं दद्याद्गजानां व्रणरोपणम् ॥ २२ ॥
अथ दिग्धेन विद्धस्य व्रणः पुष्यति दन्तिनः ॥
गतिर्गृह्णाति दूरं च जायन्ते ग्रन्थयोऽधिकाः ॥ २३ ॥
मांसानि च प्रहृष्यन्ति दन्तिनो विषवेगतः ॥
तत्र कर्म प्रवक्ष्यामि येन संपद्यते सुखी ॥ २४ ॥
आमं विदाह्यमानं वा विषादि पक्कमेव वा ॥
रोहन्तं निर्विकारं वा लिङ्गैरेतैर्विनिर्दिशेत् ॥ २५ ॥
सवर्णं कठिनं कोष्णं भारिकं मन्दवेदनम् ॥
आध्मानं सुस्थिरं स्निग्धमाममित्यभिलक्षयेत् ॥ २६ ॥
विवर्णं नातिकठिनं सोष्म वेदनयाऽन्वितम् ॥
विदह्यमानं जानीयाल्लिङ्गैरेतैर्विचक्षणः ॥ २७ ॥
आमे विदह्यमाने च प्रच्छन्नं कारयेद्बुधः ॥
जलौकालाबुशृङ्गैर्वा शोणितं मोक्षयेत्ततः ॥ २८ ॥
आध्मानममृदु स्निग्धं गुरु चोष्णं सवेदनम् ।
अपक्कं तु भिषग्विद्यात्तत्र शस्त्रं न पातयेत् ॥ २९ ॥
शीतलं शीर्णरोमाणं मृदु पाण्डुमवेदनम् ॥
सुपक्कमभिविज्ञाय तत्र शस्त्रं निपातयेत् ॥ ३० ॥
शस्त्रकर्म यथोक्तं तु यथाशास्त्रं समाचरेत् ॥
छेद्यं भेद्यं च वेध्यं च विश्रा( स्रा )व्यं लेख्यमेव च ॥ ३१ ॥
एतत्सर्वं भिषक्कुर्याद्विषार्तानां तु संनिधौ ॥
तद्वैद्यश्चैव विद्येरन्यथाशास्त्रं समाचरेत् ॥ ३२ ॥
एषण्या तु समन्वेष्य गतिर्यत्राऽऽश्रिता यथा ॥
पदं कुर्याद्यथोद्दिष्टं यथा दोषो न तिष्ठति ॥ ३३ ॥

---

१ क. °त्प्रकथितं । २ क. बदरीं । ३ क. गतिं गृह्णा° । ४ क. वा । ५ क. °आप्रासं स ।

व्रणे तु पूतिमांसानि मण्डलाग्रेण शोधयेत् ॥
शुद्धं व्रणमदुर्गन्धमविवर्णमवेदनम् ॥ ३४ ॥
उत्तानं स्थिरमन्तेषु मस्तब्धं च नराधिप ॥
शून्यं श्वयथुदाहाभ्यां निर्विकारं विनिर्दिशेत् ॥ ३५ ॥
दिग्धेनाभिहते नागे तथोष्ट्रखरवाजिनाम् ॥
व्रणं बुध्येत मेधावी गोषु चाश्वतरेषु च ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥ ३६ ॥ १२१८ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने वृद्धपाठे द्वितीये क्षुद्ररोगस्थाने दिग्धविद्धो नाम नवमोऽध्यायः ॥ ९ ॥

---

## अथ दशमोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां सुमनस्कं महामुनिम् ॥
विनयेनोपसंगम्य पालकाप्यं स्म पृच्छति ॥ १ ॥
दुष्टाश्च विषपीताश्च दूषिताश्च मतङ्गजाः ॥
संग्रामे दिग्धविद्धाश्च विषवेगप्रपीडिताः ॥ २ ॥
एवंविधाश्च ये केचित्प्रोच्यन्ते हस्तिनो द्विज ॥
सर्वेषां सविषाणां तु चिकित्सां वक्तुमर्हसि ॥ ३ ॥
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥
पञ्चभिः कारणैः सर्पा दशन्ति पृथिवीपते ॥ ४ ॥
वक्ष्याम्युद्देशमात्रेण तद्ग्राह्यमनुमानतः ॥
दशन्ति कुपिताः केचित्केचिदाहारकाङ्क्षया ॥ ५ ॥
भीताः केचिद्दशन्त्याशु केचिदन्ये यदृच्छया ॥
मृत्युभूता दशन्त्यन्ये विधानविहितान्गजान् ॥ ६ ॥
त्रिविधं दंष्टरूपं तु भुजङ्गेषु प्रकीर्तितम् ॥
दष्टं दष्टनिपीतं च दष्टोद्वृत्तं तथैव च ॥ ७ ॥
दंष्ट्वा तु कश्चिद्भुजगो व्यपक्रामति वेगतः ॥
संक्रामेद्विषभागस्तु दष्टं तत्तु विनिर्दिशेत् ॥ ८ ॥

---

१ क. °नातिह°। २ क. ख. कुक्षिरोगस्थाने । ३ क. दष्टरूपं । ४ क. तु । ५ क. दष्ट्वा ।

दंष्ट्वा तु सर्पो यस्तत्रं पिबेदङ्गनिपीडितम् ॥
दष्टं तत्त्वनुबोद्धव्यं विषभागस्तु संचरेत् ॥ ९ ॥
दष्ट्वा यदि विलम्बी स्यान्निपीतमिति तत्स्मृतम् ॥
विषस्य भागौ द्वावत्र अर्धभागश्च संचरेत् ॥ १० ॥
दष्ट्वा भृशं तु यः सर्पः क्षिप्रमेव प्रवर्तते ॥
दंष्ट्रापातनिषेकेण कुरुते यत्र मोक्षणम् ॥ ११ ॥
दष्टमुद्वर्तितं विद्यात्तत्र भागत्रयं व्रजेत् ॥
मात्राणां शतमात्रं तु तिष्ठन्त्यादंशमाश्रितम् ॥ १२ ॥
ततः शरीरे क्रमते विषं वायुरिवाम्बरे ॥
न ह्यत्र विहितं किंचित्सुखं दुःखं शरीरिणाम् ॥ १३ ॥
तेषां तु खलु सर्वेषामुपसर्गः पृथग्विधः ॥
वक्ष्याम्युद्देशमात्रेण तद्ग्राह्यमनुमानतः ॥ १४ ॥
चतुर्विधास्तु निर्दिष्टाः पैन्नगा मुनिना पुरा ॥
दर्वीकरा मण्डलिनो राजिलास्तु पताकिनः ॥ १५ ॥
तेषां रूपाणि वक्ष्यामि वीर्यं चैव पृथक्पृथक् ॥
दर्वीकरा महाभोगा दीप्ताग्निसमतेजसः ॥ १६ ॥
शीघ्राः फणकराश्चण्डाः कृष्णसर्पादयः स्मृताः ॥
क्षिप्रमेषां विषं काये कक्षाग्निरिव वर्धते ॥ १७ ॥
वातिकं तु विजानीयाद्विषं दंष्ट्राश्रितं भिषक् ॥
प्रशाम्यति तु तत्क्षिप्रं मन्त्रैरन्यैस्तथौषधैः ॥ १८ ॥
तद्धि सत्यं विषं प्राहुः समर्यादं मनीषिणः ॥
अफणा मण्डलैश्चित्रैर्ये तु केचिद्भुजंगमाः ॥ १९ ॥
एणीपदादयः सर्वे ते तु मण्डलिनः स्मृताः ॥
तेषां मन्दं विषं भूत्वा ततो भवति दारुणम् ॥ २० ॥
तत्र मन्त्रौषधैर्यत्नात्पैत्तिकं बाध्यते विषम् ॥
अफणा दर्शनीयाश्च दीर्घराजिभिरावृताः ॥ २१ ॥
श्वेतगन्धादयः सर्वे राजिलाः कीर्तिता नृप ॥
विषं न वर्धते तेषां विषमं चोपलभ्यते ॥ २२ ॥

---

१ क. दष्ट्वा । २ क. °त्र यं पिबेदङ्गपी° । ३ क. तत्त्वं तु बो° । ४ क. यन्नगा । ख. पन्नगा । ५ क. ख. शीघ्रा फणाक° ।

राजिलानां भुजङ्गानां विषं श्लेष्मण्यं भवेत् ॥
अफणास्त्वेकवर्णाश्च पन्नगा ये पताकिनः ॥ २३ ॥
राजिमद्भिः समं तेषां विषं समवतारयेत् ॥
एषामन्योन्यसंसर्गात्प्रविभागाद्विशेषतः ॥ २४ ॥
जायन्ते पन्नगाः सर्वे ते च कृच्छ्रतमाः स्मृताः ॥
आदंशेनैव जानीयात्सर्पदष्टं मतङ्गजम् ॥ २५ ॥
निमीलयति नेत्रे च व्रजन्गात्राणि कर्षति ॥
अक्षिकूटे च वर्धेते वर्त्मनी चापि दन्तिनः ॥ २६ ॥
चिरं क्षतानि चाप्यस्य स्फुटन्ति सहसा नृप ॥
निषीदत्यपराभ्यां च प्रोहाभ्यां प्रपतत्यपि ॥ २७ ॥
स्तम्भे बद्धस्तु मातङ्ग आलानेन दृढेन च ॥
उद्धधाति च दुःखार्तो दंशदेशं स्पृशत्यपि ॥ २८ ॥
मन्दं भोजनमश्नाति यवसं मन्दमेव च ॥
अधोगता भवत्यस्य दृष्टिर्नागस्य पार्थिव ॥ २९ ॥
दर्वीकरापदष्टानामेतद्भवति लक्षणम् ॥
अथ मण्डलिदष्टस्य[2] शृणु रूपं नराधिप ॥ ३० ॥
परिशुष्येद्यदा दंशो धूप्यते परिदह्यते ॥
निद्रा बलवती यस्य कम्पते च पुनः पुनः ॥ ३१ ॥
पूतिमूत्रपुरीषश्च श्वयथुश्चाप्युदीर्यते ॥
व्रणाश्चापि विदीर्यन्ते तृष्णा चैनं प्रबाधते ॥ ३२ ॥
तृष्णार्तस्य च नागस्य लक्षणं यत्प्रवर्तते ॥
निर्वाणं नीयते यत्र तं देशं प्रतिजिघ्रति ॥ ३३ ॥
आर्द्रं वा परिशुष्कं वा तृणमिक्षुमथापि वा ॥
पिपासया समाक्रान्त आहारं नाभिनन्दति ॥ ३४ ॥
अनेन विषवीर्येण क्षिप्रमेव विदीर्यते ॥
एवं मण्डलिदष्टस्य लक्षणं च प्रकीर्तितम् ॥ ३५ ॥
राजीमतां विषं घोरं यदा देहे प्रवर्तते ॥
श्वयथुर्हस्तकर्णेऽस्य लाला प्रस्यन्दते तदा ॥ ३६ ॥
आटोपो लक्ष्यते चास्य विह्वलं चापि गच्छति ॥
श्वेतमूत्रपुरीषश्च यथा ह्यन्धस्तथा स्खलन् ॥ ३७ ॥

---

१ क. °वचार° । २ क. °लिदष्ट° ।

राजीमद्दष्टनागानामेतद्भवति लक्षणम् ॥
इति जङ्गममुद्दिष्टं विषं स्थावरमुच्यते ॥ ३८ ॥
उष्णं रूक्षं तथा चाऽऽम्लं लघु तीक्ष्णं व्यवायि च ॥
विदाहि चाऽऽशु विशदमेवं नवगुणं विषम् ॥ ३९ ॥
पित्तं प्रकोपयत्यौष्ण्याद्रौक्ष्याच्च पवनं कफम् ॥
सौक्ष्म्यादतिविदाहित्वात्सर्वधातुप्रदूषणम् ॥ ४० ॥
(*गच्छत्यूर्ध्वं लघुत्वाच्च तीक्ष्णत्वान्मर्मभेद्यपि ॥
आशु व्याप्नोति शीघ्रत्वाद्वैशद्याच्च विसर्पति ॥ ४१ ॥ )
श्रो( स्रो )तोरोधि व्यवायित्वान्नवधोक्तं प्रभावतः ॥
इति स्थावरमेतस्य शृणु साध्यस्य लक्षणम् ॥ ४२ ॥
पुष्करं मधुसंकाशं शूनं वाऽप्युपलक्षयेत् ॥
दन्ताः श्यावा विवर्णाश्च नखाश्च नयने तथा ॥ ४३ ॥
शीर्यन्ते चास्य रोमाणि दह्यते च मतङ्गजः ॥
पक्ष्माणि चास्य शीर्यन्ते छविश्च परिपाच्यते ॥ ४४ ॥
केशा वालाश्च शीर्यन्ते शिरोरोगश्च जायते ॥
जिह्वा च लक्ष्यते कृष्णा कुत्सिता पृथिवीपते ॥ ४५ ॥
रूपैरेतैर्विजानीयाद्विषपीतं मतङ्गजम् ॥
छर्द्यतीसारसंमोहाः कम्पोऽतीव विजृम्भणम् ॥ ४६ ॥
रक्तविश्रु( स्रु )ति साश्रुत्वं दृशोर्मन्दाङ्गचेष्टितम् ॥
रक्तमूत्रपुरीषत्वं मेढ्रपेचकशूनता ॥ ४७ ॥
इत्येतदन्यरूपाणामभावे विषलक्षणम् ॥
स्थावरस्य विषस्यैतद्रूपं भवति पार्थिव ॥ ४८ ॥
धूपस्य विषयुक्तस्य शृणु रूपं नराधिप ॥
धूपश्चाग्निगतो ज्ञेयो न( नी )लो रक्तोऽथ पीतकः ॥ ४९ ॥
जिघ्रन्गजस्तु तं धूपमतीसारेण पीड्यते ॥
गात्रोद्वेष्टनमाप्नोति वेपते व्यथतेऽपि च ॥ ५० ॥
बृंहितुं च न शक्नोति शब्दांश्चापि न वेत्ति सः ॥
इति धूपेन दुष्टस्य लक्षणं समुदाहृतम् ॥ ५१ ॥

---

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ॥

---

१ क. वपनं । २ क. दह्यन्ते । ३ क. मतङ्गजाः ।

भूम्यां ग्रासे च वक्ष्यामि दूषिते शृणु लक्षणम् ॥
स्वेदेनैव तु जग्धस्य सर्वगात्रेषु हस्तिनः ॥ ५२ ॥
स्फोटाश्चास्योपजायन्ते गात्रकण्डूस्तथैव च ॥
अङ्गानि चाऽस्य सीदन्ति भूमिश्च विषदूषणात् ॥ ५३ ॥
विवर्णो भवति ग्रासे लालाश्रा( स्रा )वी च वारणः ॥
दुर्गन्धं वमथुं कुर्यान्न चेच्छति तृणाशनम् ॥ ५४ ॥
अनवस्थितचित्तश्च कम्पते च मुहुर्मुहुः ॥
विह्वलीकृतसर्वाङ्गो नागो न लभते सुखम् ॥ ५५ ॥
विषोपसृष्टयवसे लक्षे रूपमिदं भवेत् ॥
आघ्रातविषवातस्य शृणु रूपं नराधिप ॥ ५६ ॥
विधुनोति शिरोऽत्यर्थं वमथुं च मुहुः सृजेत् ॥
स्पन्दन्ते चास्य वाऽश्रूणि भवेदत्यर्थवेदनः ॥ ५७ ॥
विह्वलाक्षो भवेदाशु लभते शर्म न क्वचित् ॥
तदा संजातवातस्य निद्रा विशति पार्थिव ॥ ५८ ॥
संरक्तनेत्रो लालावान्करवक्रोऽतिविह्वलः ॥
वातेन संप्रदुष्टस्य रूपमेतत्प्रकीर्तितम् ॥ ५९ ॥
तोयस्य विषयुक्तस्य शृणु रूपं नराधिप ॥
मत्स्यकच्छपमण्डूका यावन्तो जलचारिणः ॥ ६० ॥
सर्वे म्रियन्ते राजेन्द्र निर्दग्धा विषतेजसा ॥
प्रज्वरं तैजसं चाऽऽशु यस्तु नागः पिबेज्जलम् ॥ ६१ ॥
पीतमात्रेण तोयेन क्षिप्रं प्राणैर्वियुज्यते ॥
पानीये विषसंसृष्टे रूपमेतत्प्रकीर्तितम् ॥ ६२ ॥
दिग्धविद्धस्य नागस्य शृणु रूपाणि पार्थिव ॥
वर्णव्यापत्तिमाप्नोति प्रक्लेदश्चास्य जायते ॥ ६३ ॥
केशा वालाश्च शीर्यन्ते त्वक्चैवास्य विधूम्यते ॥
आरोहकमवज्ञाय जलं क्षिप्रं तु वाञ्छति ॥ ६४ ॥
पीतोदके सुशीतस्य लाला प्रस्यन्दतेऽपि च ॥
कृच्छ्राच्च मूत्रं कुरुते वेदना च मुहुर्मुहुः ॥ ६५ ॥
शय्यां मृगयते गन्तुं स्तम्भमालम्ब्य तिष्ठति ॥
दिग्धविद्धस्य नागस्य लक्षणं समुदाहृतम् ॥ ६६ ॥

१ ख. °मविज्ञा° ।

अभ्यञ्जने प्रदेहे च दूषिते लक्षणं स्विदम् ॥
तीव्रा कण्डूः सपिटका क्षिप्रमस्योपजायते ॥ ६७ ॥
मांसानि चास्य शीर्यन्ते छविः सुपरिपच्यते ॥
शूनो गात्रेण भवति दुर्गन्धश्चोपजायते ॥ ६८ ॥
अभ्यञ्जने प्रदेहे च लक्षणं समुदाहृतम् ॥
भूयोऽङ्गराजः पप्रच्छ विनयादृषिसत्तमम् ॥ ६९ ॥
सर्पदष्टस्य नागस्य किं रूपमुपलक्ष्यते ॥
एतदिच्छामि विज्ञातुं ब्रूहि चात्र चिकित्सितम् ॥ ७० ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
श्रूयतामानुपूर्व्येण यन्मां त्वं परिपृच्छसि ॥ ७१ ॥
दंशो विवर्णो भवति शोणितं च विदह्यते ॥
देहेऽस्य शून्यभावस्तु दाहस्तु परिवर्धते ॥ ७२ ॥
समन्ताच्च प्रतिस्तब्धः समाध्मातश्च लक्ष्यते ॥
उष्णश्च स्पर्शो भवति मृदुभावं च गच्छति ॥ ७३ ॥
विभ्रान्तचित्तस्तु गजः शिरः कम्पयते भ्रुवम् ॥
क्रुद्धश्च हस्तमुत्क्षिप्य वारणं प्रपिनष्टि च ॥ ७४ ॥
एतत्तु दर्शनं श्रेष्ठं दंशेषु विषनाशनम् ॥
यदा शुद्धो भवेद्दंशः शोणितं च ध्रुवं भवेत् ॥ ७५ ॥
इन्द्रगोपकवर्णाभं मुक्तदोषमपिच्छिलम् ॥
अथास्यौषधसंभारममुमस्य प्रकल्पयेत् ॥ ७६ ॥
द्वे शते द्वे बृहत्यौ च शल्लकं श्लक्ष्णमेव च ॥
सहाश्वगन्धारोध्रं च पिप्पली मधुकं तिलान् ॥ ७७ ॥
आम्रपत्राणि पद्मानि सूक्ष्मचूर्णानि कारयेत् ॥
द्वौ भागौ च घृतस्याथ तथैको मधुनो भवेत् ॥ ७८ ॥
हरिद्राचूर्णसंयुक्तं दद्याद्व्रणमुखे भिषक् ॥
ततः प्रदेहो देहे स्यादर्जुनं वञ्जुलं नलम् ॥ ७९ ॥
उभे पाठे तथा श्वेता शुकनासा प्रियङ्गु च ॥
सारिवामश्वकर्णं तु सोमवल्कं च दापयेत् ॥ ८० ॥
शीर्षकं चैव शालूकं श्यामं काश्मर्यमेव च ॥
चतुरः क्षीरिणो वृक्षान्मधुकं चैव पाटलाम् ॥ ८१ ॥
गवेधुकां च कालां च तथा चोभे पुनर्नवे ॥
जम्बूं बिल्वं समङ्गां च समभागानि कारयेत् ॥ ८२ ॥

एतत्कल्कं सुपिष्टं वै घृतेन सह योजयेत् ॥
कर्दमेन समालोड्य दंशशोफं प्रकल्पयेत् ॥ ८३ ॥
लभते तेन निर्वाणं विषं चास्योपशाम्यति ॥
लिप्तस्यानेन लेपेन पानमस्याचऽऽरेदिदम् ॥ ८४ ॥
घृतद्रोणं तु पयसो निर्दोषस्याऽऽढकं भवेत् ॥
यष्टीमधुकचूर्णस्य भवेत्तु कुडवद्वयम् ॥ ८५ ॥
पिप्पलीनां च भागः स्यान्मरिचानां तथैव च ॥
श्वेतायाः कुडवः कार्यो मुद्गपर्ण्यास्तथैव च ॥ ८६ ॥
मृणालं च पयस्यां च जीवकर्षभकावुभौ ॥
एलां चैव विडङ्गं च स्वर्जिकां परिपेलवम् ॥ ८७ ॥
सर्वाणि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥
अर्धप्रस्थो विडङ्गस्य सैन्धवस्य तथैव च ॥ ८८ ॥
यवक्षारस्य भागः स्यात्सर्वमेतद्द्रवीकृतम् ॥
पीत्वा सुखमवाप्नोति विषाच्च परिमुच्यते ॥ ८९ ॥
वातिकानां विधिः प्रोक्तः पैत्तिके च प्रवक्ष्यते ॥[1]
अनन्तां च पयस्यां च मुद्गपर्णीं तथैव च ॥ ९० ॥
मृणालीं हंसपादीं च जीवकर्षभकावुभौ ॥
काकोलीं क्षीरकाकोलीं मेदां छिन्नरुहां तथा ॥ ९१ ॥
क्षीरशुक्लां विदारीं च श्यामामतिविषां तथा ॥
दर्भेक्षुवालीपुण्ड्रेक्षु मृद्वीकां च परूषकम् ॥ ९२ ॥
ततः पटोलकं चैव माषपर्णीं च दापयेत् ॥
दुरालभां मधुरसां सारिवां श्वेतया सह ॥ ९३ ॥
तथा कर्कटशृङ्गीं च समभागानि कारयेत् ॥
मधुकं मरिचं चैव क्षवकं चैलया सह ॥ ९४ ॥
तथा कर्कटशृङ्गीं च नागरं चैलवालुकम् ॥
पीलुं करञ्जं मञ्जिष्ठामेतद्द्विगुणभागिकाम् ॥ ९५ ॥
गवां मूत्रेण संयोज्य तथा गुप्तं निधापयेत् ॥
एतत्सर्वं समालोड्य घृतद्रोणे समावपेत् ॥ ९६ ॥
माक्षिकस्याऽऽढकं दत्त्वा वारणं पाययेद्द्विपक् ॥
एष श्रेष्ठोऽगदः कार्यः पैत्तिके पाययेद्विषे ॥ ९७ ॥

---

१ क. प्रचक्षते ।

प्रियङ्गुकास्तथाऽनन्ता समङ्गा धातकी तथा ॥
सुवर्णपुष्पीं दद्यात्तु दाडिमद्वयमेव च ॥ ९८ ॥
द्राक्षारोध्रं च शालं च चन्दनं चात्र दापयेत् ॥
एतत्संभृत्य संभारं समांशं तुलया धृतम् ॥ ९९ ॥
अजामूत्रेण संसृष्टं गवां मूत्रेण पेषयेत् ॥
अभयामलकाक्वाथं क्वाथयेत्ताम्रभाजने ॥ १०० ॥
ततो यूषं परिश्रा( स्रा )व्य तान्कल्कांस्तत्र दापयेत् ॥
ततः क्षौद्रेण संसृज्य पाययेदन्तिनं भिषक् ॥ १०१ ॥
पीतोऽयमगदश्रेष्ठो हन्ति राजीमतो विषम् ॥
अथान्यानगदान्कुर्यात्संनिपाते ततो भिषक् ॥ १०२ ॥
संसृष्टं पाययेच्चैनं वातपित्तकफापहम् ॥
तं पीतवन्तमनु च वारिणा सेचयेद्गजम् ॥ १०३ ॥
स्थानं सुशीतलं कुर्याच्छीतैश्च परिषेचनम् ॥
अञ्जनं च ततः कुर्याद्येन चक्षुर्विशुध्यति ॥ १०४ ॥
गिरिकर्णिकां श्वेतां च हरिद्रां सैन्धवं तथा ॥
शिरीषबीजं लशुनं समभागानि कारयेत् ॥ १०५ ॥
कर्चूरं च जले पिष्ट्वा गुटिकां संप्रदापयेत् ॥
दर्वीकरेण दष्टस्य चक्षुषो हितमञ्जनम् ॥ १०६ ॥
कालानुसारी मृद्वीका काश्मर्याऽथ शिरीषकम् ॥
गुडूचीरससंयुक्तमञ्जनं गुटिकीकृतम् ॥ १०७ ॥
एतन्मण्डलिदष्टानां चक्षुषां हितमञ्जनम् ॥
स्थानं शीतं गृहं कुर्याद्गोमयेन प्रलेपयेत् ॥ १०८ ॥
अथ चेत्कुञ्जरो वेगं तृतीयमतिवर्तते ॥
इमं तत्र विधिं कुर्यात्क्षिप्रमेव विचक्षणः ॥ १०९ ॥
तृ( त्रि )वृद्दन्ती च श्यामा च नागदन्ती प्रियङ्गवः ॥
उदुम्बरसमान्कल्कान्सर्वाण्येव पृथक्पृथक् ॥ ११० ॥
एतत्संभृत्य संभारं कुञ्जरं पाययेद्भिषक् ॥
लवणाम्बुसमायुक्तं मृत्पात्रे विमले स्थितम् ॥ १११ ॥
विरेचनं भिषग्दद्याद्दर्वीकरविषापहम् ॥
कषायप्रतिसंयुक्तं राजीमत्सु विधीयते ॥ ११२ ॥

१ क. चिरंतनं ।

ततो विर(रि)क्तदोषं तु सेचयेद्वारिणा भिषक् ॥
अगदं पाययेच्चैनं पूर्वमुक्तं गजं ततः ॥ ११३ ॥
शिरश्च पीड्यते चास्य कराच्छ्लेष्मा प्रवर्तते ॥
मुखाच्च लाला श्र(स्र)वति वमथुश्च मुहुर्मुहुः ॥ ११४ ॥
इमं तत्र विधिं कुर्यात्क्षिप्रमेव विचक्षणः ॥
*श्वेतां ज्योतिष्मतीं पाठां सुवहामथ वारुणीम् ॥ ११५ ॥
सुनन्दां लावनन्दां च विडङ्गं चाष्टमं भवेत् ॥
एतानि समभागानि कल्कपिष्टानि कारयेत् ॥ ११६ ॥
(†आन्तरिक्षेण पयसा वाससा च परिश्रु(स्रु)ते ॥
द्व्याढकं त्र्याढकं वाऽपि तं रसं पाययेद्भिषक् ॥ ११७ ॥ )
शिरो विरिच्यते तेन विषं चास्योपशाम्यति ॥
द्व्याढकं घृतमण्डस्य विर(रि)क्तशिरसस्तथा ॥ ११८ ॥
अनुषेकं पुनः कुर्यात्ततः स लभते सुखम्[1] ॥
अञ्जनं च ततो दद्याद्येन संपद्यते सुखी ॥ ११९ ॥
मनःशिलां त्रिकटुकं हरितालं रसाञ्जनम् ॥
कतकं सैन्धवं चैव मधुकं च समं घृतम् ॥ १२० ॥
क्षौद्रेण सह संयोज्य श्लक्ष्णं दृषदि [2]पेषयेत् ॥
राजीमता तु दष्टस्य गजस्य हितमञ्जनम्[3] ॥ १२१ ॥
अश्वकर्णकषायस्य कर्णिकारार्जुनस्य च ॥
तृतीयं बृहतीबीजमेते भागास्त्रयः समाः ॥ १२२ ॥
अर्धभागस्तु रालायाः सुनन्दायास्तथैव च ॥
क्षौद्रेण सह संयोज्य अञ्जनं सांनिपातिके ॥ १२३ ॥
अथवाऽञ्जितमात्रस्य सेचयेद्वारिणा शिरः ॥
कुर्याच्छिरस्यावाश्चोतं प्रदेहैश्च प्रदेहयेत् ॥ १२४ ॥
इत्येतत्सर्पदष्टस्य लक्षणं सचिकित्सितम् ॥
अङ्गराजस्ततो भूयः पालकाप्यं स्म पृच्छति ॥ १२५ ॥
आञ्जते विषपीते च धूपगन्धानुवासिते ॥
[4]सविषे कुञ्जरे रूपं भगवन्वक्तुमर्हसि ॥ १२६ ॥

---

*लावनन्दान्तानां प्रथमान्तत्वं युक्तम् । † धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ॥

---

१ ख. °तः सुख° । २ ख. पीषयेत् । ३ क. °तगुत्तमम् । ४ क. सविषं ।

एवमुक्तस्तु भगवान्पालकाप्यस्ततोऽब्रवीत् ॥
विषाञ्जितस्य नागस्य इदं भवति लक्षणम् ॥ १२७ ॥
वेदना च विषार्तस्य पटलश्चोपजायते ॥
अक्षिणी घर्षयेच्चापि हस्तेन कवलेन वा ॥ १२८ ॥
दोषप्रच्छन्ननेत्रश्च विषवेगप्रपीडितः ॥
नेत्राभ्यामथ हृष्टा(ष्टो)र्म्यां नागो न लभते सुखम् ॥ १२९ ॥
हस्तं प्रगृह्य दुःखार्तो क्रोधमारभते मुहुः ॥
वर्त्मानि चास्य शीर्यन्ते वर्त्मशोफश्च जायते ॥ १३० ॥
स्थानेनावस्थितस्यापि बन्धलो भवति द्विपः ॥
प्रवेपते प्रव्यथते लाला चास्य प्रवर्तते ॥ १३१ ॥
तस्य कर्म प्रवक्ष्यामि यथा संपद्यते सुखी ॥
अञ्जनानि विषघ्नानि यानि स्युस्तैरथाञ्जनम् ॥ १३२ ॥
सिञ्चन्घृतेन चैवैनं शीतलेन यथासुखम् ॥
यथोक्तमगदं चैनं सर्पिःक्षीरसमन्वितम् ॥ १३३ ॥
पीपयेन्मधुसंयुक्तमनुषेकं च दापयेत् ॥
कुर्याच्छिरस्यवाश्चोतं ततः संपद्यते सुखी ॥ १३४ ॥
अयमेतेन संपद्येद्योगेन मनुजाधिप ॥
योगमन्यं प्रवक्ष्यामि येन संपद्यते सुखी ॥ १३५ ॥
गृहीत्वा कृष्णसर्पस्य दुष्टाहेर्वा शिरस्तथा ॥
क्षिप्त्वा श्रो(स्रो)तोञ्जनं वाऽस्य ततो मृद्वग्निना पचेत् ॥१३६॥
तावत्तदञ्जनं यावत्तस्य भागोऽष्टमो भवेत् ॥
*पिप्पली तन्दुला श्वेता पुराणामथ वारुणीम् ॥ १३७ ॥
सुनन्दां पालनन्दां च विडङ्गं चाष्टमं तथा ॥
बृहत्या रसनिर्यासे कपित्थस्य रसेऽपि वा ॥ १३८ ॥
पिष्ट्वा तु गुटिकां कृत्वा छायायां परिशोषयेत् ॥
सुबद्धमञ्जयेन्नागं शनैर्न व्यथते यथा ॥ १३९ ॥
मुहूर्तं स्थापयित्वा च घृतमण्डेन तर्पयेत् ॥
चक्षुर्भ्यां स यदा पश्येत्पटलं विगतं भिषक् ॥ १४० ॥

---

* द्वयोर्द्वितीयान्तत्वं युक्तम् ।

---

१ क. विषाञ्जनस्य । २ क. °णी वर्धये° । ३ क. वर्ष्माणि । ४ क. वर्ष्मशो° । ५ क. °सुखम् । ६ ख. °पश्येद्यो° ।

शर्करां मधुकं चैव घृतेन सह संसृजेत् ॥
अञ्जनं तेन कार्यं स्यात्ततः संपद्यते सुखी ॥ १४१ ॥
आजस्य पयसः प्रस्थं कर्षश्च मधुकस्य च ॥
कर्षं किंशुकपुष्पाणां पद्मपुष्पं तथैव च ॥ १४२ ॥
शर्करायाः पलं दद्याद्यवानां प्रसृतिं तथा ॥
प्रस्थेन चान्तरिक्षस्य संसृष्टं पाचयेच्छनैः ॥ १४३ ॥
यदा तु परिपक्वं स्यादथैनमवतारयेत् ॥
एतेन शीतलेनास्य चक्षुषोः परिषेचनम् ॥ १४४ ॥
अनेन परिषेकेण नागः संपद्यते सुखी ॥
विषाच्च मुच्यते क्षिप्रं चक्षुश्चास्य विशुध्यति ॥ १४५ ॥
अत ऊर्ध्वं प्रवक्ष्यामि विषपीतस्य लक्षणम् ॥
गण्डौ हस्तस्तथा तालु मुखं च परिशुष्यति ॥ १४६ ॥
प्रतिगृह्णाति वातं च दह्यमानो मुहुर्मुहुः ॥
न शृणोति च कर्णाभ्यां चक्षुषा च न पश्यति ॥ १४७ ॥
मुखतः पुष्कराच्चास्य श्लेष्मा गच्छति पिच्छिलः ॥
न च वेदयते गन्धं विषवेगप्रपीडितः ॥ १४८ ॥
प्रस्थितश्चापि निर्वाणं गजः सत्त्वरजोधिकम् ॥
जलं प्रवाह्यते क्षिप्रं गन्तारमविदन्भयम् ॥ १४९ ॥
उदकस्पर्शनाच्चैव नागः संपद्यते सुखी ॥
तस्य पीतेन शीतेन लाला च स्यन्दते शनैः ॥ १५० ॥
अञ्जनं च प्रदेहश्च तथा चाप्यनुषेचनम् ॥
आदालीनां प्रवाल्यानि तथा कटुकमत्स्यकम् ॥ १५१ ॥
सहदेवीं च तन्मात्रां दद्यात्सहचरं तथा ॥
यवां क्षुद्रसहां चैव *समांसा तुलपा धृतम् ॥ १५२ ॥
धूपः स्यात्खदिराङ्गारैर्गुडेन च घृतेन च ॥
घृतेन धूपयेन्नागं विषं तेनोपशाम्यति ॥ १५३ ॥
लोहं विषेण संसृष्टं वारणो यदि जिघ्रति ॥
विषघ्राणकृतं विद्यात्तस्य लिङ्गानि मे शृणु ॥ १५४ ॥

---

* 'समांशां तुलया धृताम्' इति कदाचिद्भवेत् ॥

---

१ क. एतेन ।

शिरस्तालु च गृह्णाति दन्ते नेत्रेऽवतिष्ठति ॥
गण्डश्चास्याग्रहस्तश्च प्रतिपा( मा )नं तथैव च ॥ १५५ ॥
विवर्णं विषसंसृष्टं शूनं चैवोपजायते ॥
शोषयत्यपि देहं च नाभिनन्दति भोजनम् ॥ १५६ ॥
करं धुनोति दुःखार्तो लाला चास्य प्रवर्तते ॥
तस्य कर्म प्रवक्ष्यामि येन संपद्यते सुखी ॥ १५७ ॥
कपित्थफलमज्जानां वार्ताकानां फलानि च ॥
संसर्गाश्चापि(?) यत्पश्च पृष्टिपर्णी हरीतकीम् ॥ १५८ ॥
सिन्दुवारितमूलं[1] च शैलुं चैव सपाटलाम् ॥
विभीतकं सखदिरं वटं सोदुम्बरं तथा ॥ १५९ ॥
लोध्रं ततः परं दद्यात्ततो देयोऽथ सारिवा[2] ॥
मधुकं च समं कृत्वा सूक्ष्मचूर्णानि कारयेत् ॥ १६० ॥
चूर्णं प्रस्थमिदं[3] कुर्याद्वारिकुम्भे समावपेत् ॥
एतत्तु पाययेन्नागं विषं तेनोपशाम्यति ॥ १६१ ॥
अञ्जनानि विषघ्नानि पाययेच्चानुषेचनम् ॥
मेहने पेचके चास्य श्वयथुर्दारुणो भृशम् ॥ १६२ ॥
अपानाच्छोणितं चास्य दृष्ट्वा तं वारिणोक्षते ॥
मुहुर्मुहुः संकुचति कृच्छ्रान्मूत्रं[4] च जायते ॥ १६३ ॥
शय्याभागे च कुड्ये च कटिं स परिघर्षति ॥
भवन्त्येतानि रूपाणि विषयुक्तेषु दन्तिषु ॥ १६४ ॥
त्रिफलां च समां कृत्वा उशीरं चोत्पलानि च ॥
मञ्जिष्ठां चैव रोध्रं च प्रियङ्गुं पद्मकं तथा ॥ १६५ ॥
सिन्दुवारितमूलं च सकरञ्जं रसाञ्जनम् ॥
कुङ्कुमं[5] चेन्द्रगोपांश्च सूक्ष्मचूर्णानि कारयेत् ॥ १६६ ॥
चूर्णान्येतानि संहृत्य घृतद्रोणे समावपेत् ॥
एतेन बस्तयो देयास्ततः संपद्यते सुखम् ॥ १६७ ॥
बस्तिदानं पुरस्ताच्च वक्ष्यते राजसत्तम ॥
प्रदेहैर्घृतसंयुक्तैर्गुदं शूनं प्रलेपयेत् ॥ १६८ ॥

---

१ क. सिन्धुवा°। २ क. °या च सा°। ३ ख. °मिमं कु°। ४ ख. °च्छ्रान्मात्रं। ५ क. कुमुदं।

अगदं पाययेच्चैनं सर्पिःक्षौद्रसमन्वितम् ॥
अनया क्रियया नागः क्षिप्रं संपद्यते सुखी ॥ १६९ ॥
यवसानि विषघ्नानि रसं दुग्धं तथैव च ॥
भोजनं च विषघ्नं स्याद्यथोक्तं तस्य दापयेत् ॥ १७० ॥
विमुक्तं विषदोषाभ्यां बललब्धं च वारणम् ॥
स्नापयेन्मन्त्रपूर्वेण औषधैश्च विषापहैः ॥ १७१ ॥
उत्तरस्या दिशो भागे धनदो यत्र देवता ॥
मण्डलं पूर्वमालिख्य चतुर्हस्तं समन्ततः ॥ १७२ ॥
नागपुष्पमतं नागं नागराजान्समालिखेत् ॥
अग्निं प्रज्वाल्य विधिना *इमान्मन्त्रमु(न्त्रानु)पाहरेत् ॥ १७३ ॥
भारद्वाजीये स्वाहा स्वाहा स्वाहेति ।
निवेदयेद्बलिं चापि यथालाभेन बुद्धिमान् ॥
मन्त्रयुक्ताश्च औषध्यो नवकुम्भे विनिक्षिपेत् ॥ १७४ ॥
+सिद्धार्थकास्त्वचं कुष्ठं विदारी शतपत्रिका ॥
कटंकटा मित्रहस्ता सरलं देवदारु च ॥ १७५ ॥
प्रियङ्गुं च समङ्गां च पतङ्गं रोचनावचाम् ॥
मर्कटीं चापि वाराहीं[1] सारिवां समनःशिलाम् ॥ १७६ ॥
एतत्संभृत्य संभारं पञ्चगव्यसमन्वितम् ॥
कुम्भैर्नवैर्न[2] कृष्णाङ्कैः सर्वबीजैरलंकृतैः ॥ १७७ ॥
लाजान्नानि विशुद्धानि सुवर्णं रजतं तथा ॥
स्नापयेत्सर्वसंभारैर्वैद्यो गत्वा जलाशयम् ॥ १७८ ॥
कुम्भैरुत्क्षिप्यमाणैश्च इमान्मन्त्रानुदाहरेत् ॥
ब्रह्मप्रोक्तान्दृषिप्रोक्तानाग्नेयानथ वार(रु)णान् ॥ १७९ ॥

नमो ब्रह्मणे, नमो रुद्राय, नमो विष्णवे, नमः स्कन्दाय, नम आदित्येभ्यः, नमोऽग्नये, नमो वरुणाय, नम इन्द्राय, नमो देववारणऋषिभ्यः, नमो देवेभ्यः, नमस्तेजःपतिभ्यः, नमो नागराजेभ्यः, नमः स्कन्देभ्यः, नमो नागमातृभ्यः ॥

एतेभ्यो हि नमस्कृत्वा† इमां विद्यां प्रयोजयेत् ॥

तां ब्रह्मानुमन्यताम् । आगच्छेश्वररूप सहस्रबाहो सहस्रशीर्षो ब्रह्मा

* 'इमं मन्त्रमुपाहरेत्' इति पाठो भवेत् ॥ + प्रथमान्तत्वेन द्वितीयान्तत्वेन वा सारूप्येणैव पाठो योग्यः । † 'नमस्कृत्य' इति भवेत् ।

[1] ख. काराहीं । [2] क. °र्नस्तैर्न ।

अक्षर पुर पुर दह दह इमं विषं हन हन लिहि मिलि मिदं भूमदेयं कम्पं करे उद्धरे हर हर चल चल वल वल चुलु चुलु स्वाहा। सिध्यन्तु मे मन्त्राः। यदा—

स्नातं हुताग्निर्नागेन्द्रं कृतमण्डल(*मुत्तमम्।
अगदैस्तं प्रलिम्पेत्तु प्रशस्तैर्विषनाशनैः॥ १८०॥
नवैर्वस्त्रैः सुसंवीतं) स्रग्दामभिरलंकृतम्॥
पूजितं स्रग्विणं नागं ब्राह्मणान्स्वस्ति वाचयेत्॥१८१॥१४९९॥

इति श्रीपालकाप्ये हस्त्यायुर्वेद(*महाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने सर्पदष्टो नाम दशमोऽध्यायः॥ १०॥

---

## अथैकादशोऽध्यायः।

---

अतः परं प्रवक्ष्यामि) स्फोटिकासंभवोद्भवः॥
आगन्तुदोषसंपोतादिदं यत्तत्प्रकीर्तितम्॥ १॥
विसर्पाः स्फोटिकाकाराः शरावाकृतयस्तथा॥
शिरास्त्वङ्मांसरक्तानि दूषयित्वा यदेव हि॥ २॥
पिटकाः श्वयथुः कुष्ठः सविसर्पविसर्पणः॥
विसर्पवत्ससंसर्पत्सर्वेष्वङ्गेषु वर्तते॥ ३॥
हस्तिनस्तद्विसर्पोऽयमुच्यतेऽग्निविशोपमः॥
कृष्णरक्तारुणा धूम्राः कठिनाः पिच्छिला व्रणाः॥ ४॥
अग्निदग्धनिभाः स्फोटा जायन्ते रूक्षदारुणाः॥
बीजपूरकसंस्थानाः शरावाकृतयस्तथा॥ ५॥
वल्मीकाकृतयश्चैव नानासंस्थानचारिणः॥
मण्डलैर्मन्दगैः कृष्णैर्दध्याकारैः सुसंस्थिताः॥ ६॥
गम्भीरमध्यश्चा( स्ता )विण्यो दाहकर्त्र्यो रुजात्मिकाः॥
जिह्वाक्षिनाभिपृष्ठान्तःकण्ठकोष्ठशिराः स्मृताः॥ ७॥
मर्मश्चो( स्थो )वस्तु धमनीबस्तिसंधिषु चैव हि॥
असाध्यानिर्दिशेत्तांस्तु सर्वाङ्गेषु विचक्षणः॥ ८॥
अन्यवर्णास्तु मर्मस्था व्रणवत्तांस्तु साधयेत्॥
पिटिका सविषा जाता कृच्छ्रेणैव प्रशाम्यति॥ ९॥

---

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके॥

---

१ क. °पाययित्वा य°। २ ख. सुसंस्थितिः।

तथा तिथिषु गुर्वीषु जाता कृच्छ्रेण सिध्यति ॥
उत्थिता सा तु सप्ताहात्रिसप्ताहान्तरेण वा ॥ १० ॥
विमथ्य सर्वगात्राणि गजं प्राणैर्विमोचयेत् ॥
सूताश्चानेन संस्थाना विसर्पस्फोटिकास्तथा ॥ ११ ॥
काश्यपस्य मतं बुद्ध्वा मम चैव मतं तथा ॥
मतिमान्कुशलो वैद्यो यथाशास्त्रमुपाचरेत् ॥ १२ ॥
सर्पदष्टविकारोऽस्मात्प्रायेण न विशिष्यते ॥
सर्पदष्टक्रियां सर्वां तस्मात्तत्रापि कारयेत् ॥ १३ ॥
भृशं विक्रियते नागो विकारैर्विषदष्टवत् ॥
हर्षहीनश्च भवति समुद्विग्नश्च वारणः ॥ १४ ॥
तथाऽक्षिभ्यां विचित्तश्च विषार्त इव गच्छति ॥
दुर्मना ध्यानभूयिष्ठः परिमूत्री भवत्यपि ॥ १५ ॥
क्षिपत्यङ्गानि च मुहुः कदाचिद्द्रुमक्षिकः ॥
स्रस्तलाङ्गूलहस्तश्च नखवैवर्ण्यमृच्छति ॥ १६ ॥
ग्रासद्वेषी च भवति स्तिमितो गुरुविक्रमः ॥
रसादयो धातवो हि दोषाश्च पवनादयः ॥ १७ ॥
पञ्चभूतात्मके देहे सर्वत्र रसपोषणाः ॥
एवं विद्याद्भिषक्तस्माद्धातुदोषाश्रयं विषम् ॥ १८ ॥
दोषधातुषु दुष्टेषु गजः प्राणैर्वियुज्यते ॥
विषोपयुक्तो दष्टश्च दिग्धविद्धोऽन्नपानतः ॥ १९ ॥
शारीरागन्तुकोपान्ता हेतवः संप्रकीर्तिताः ॥
धूपाञ्जनैस्तथा केचिद्व्यालसंस्पर्शदर्शनैः ॥ २० ॥
दशधा बहुधा केचिद्बुद्धिभेदैः पृथग्विधैः ॥
त्रिविधं शत्रुमिच्छामि तस्योत्पाताश्चतुर्विधाः ॥ २१ ॥
तस्य सामान्यतो दृष्टाः क्रियाः शास्त्रविशारदैः ॥
विषस्य कारयेत्प्राज्ञः सम्यक्शस्त्रैस्तथौषधैः ॥ २२ ॥
वशिष्ठेनाभयं दत्तं पशूनां च विषात्किल ॥
स्फोटिकासंभवात्पापश्चतुश्चरणगामिनाम् ॥ २३ ॥
तस्मात्कदाचिद्दृश्यन्ते स्फोटिका द्विरदेष्वपि ॥
विषघ्नैस्ताः प्रशमयेत्तस्माद्योगैर्भिषग्वरः ॥ २४ ॥

---

१ क. विमर्द्य । २ क. रणपो° । ३ क. °म्यक्शास्त्रै° ।

लूताविषं ज्वालिनि पारुषस्योपजायते ॥
तस्य काश्यपनिर्दिष्टां चिकित्सामथ कारयेत् ॥ २५ ॥
उत्पन्नमात्रो प्रमिथायां स्रुतिरच्छा प्रवर्तते ॥
द्वितीयायां प्रमिथायां श्रोतोरक्तं प्रवर्तते ॥ २६ ॥
पिटिका च भवेद्व्यक्ता मध्ये कृष्णं च मण्डलम् ॥
विषं च प्रबलं भूत्वा तृतीयां गच्छति त्वचम् ॥ २७ ॥
तत्र तन्दूरिवाऽऽभाति संतापश्चोपजायते ॥
मा गाम्भीर्यं( ? )भवेन्मध्ये दुष्टे नास्त्यत्र संशयः ॥ २८ ॥
चतुर्थीं तु त्वचं प्राप्य जायते तत्र कर्णिका ॥
तत्र रक्तं च मांसं च समन्ताद्द्व्यङ्गुलान्तरम् ॥ २९ ॥
उष्णं शूनमनुप्राप्तं विदूषयति वा त्वचम् ॥
पञ्चमीं तु त्वचं प्राप्य अस्थिसंस्थं विषं नृप ॥ ३० ॥
कर्णिकां कठिनां कृत्वा मेदस्तु भजते विषम् ॥
षष्ठीं त्वचमनुप्राप्य कायं संदूषयेद्विषम् ॥ ३१ ॥
सप्तमीं तु त्वचं प्राप्य लूतानामुत्तमं विषम् ॥
कायं प्रविशति क्षिप्रं वायुना समुदीरितम् ॥ ३२ ॥
व्यथाग्निर्वायुसंयुक्तः फेनो वाऽपि यथा भवेत् ॥
दर्शयत्याशु वेगेन गात्रेषु श्वयथुं यदा ॥ ३३ ॥
दृश्यते श्वयथुर्यस्य काकटिट्टिभसंनिभः ॥
श्रा( स्रा )वश्च जायते तीव्रो न स सिध्यति तादृशः ॥ ३४ ॥
भिन्नाञ्जनाभः प्रस्रावः प्रियङ्गुसदृशोऽपि वा ॥
वायसाङ्गारवर्णो वा सर्पिस्तैलनिभोऽपि वा ॥ ३५ ॥
निस्रवेद्यस्य गात्रेभ्यो नं स शक्यश्चिकित्सितुम् ॥
काकाण्डा जलजा चैव लाजा कर्णी सरोहिणी ॥ ३६ ॥
सलाकूला तीक्ष्णविषा कुमुदिनी परं तथा ॥
वैदेही चेति व्याख्याताः सर्वा ह्येता महाविषाः ॥ ३७ ॥
सर्वेषु संभवन्त्येताः प्रदेशेषु नराधिप ॥
विशेषान्मस्तकेष्टीकास्तनगण्डकटाक्षिषु ॥ ३८ ॥

---

१ क. लूतादोषं । २ ख. प्रस्तावः । ३ ख. काकाण्डी । ४ क. लाजकेणी स° । ५ क. °हीति च व्या° ।

स्तनान्तरेऽण्डकोशेषु तलेषु च प्रतिक्रिया ॥
मर्मसंधींश्च संत्यज्य दंशं छिन्द्यादसंशयः ॥ ३९ ॥
न तु दंशं भिषग्यस्तु नोद्धरेन्न च तं दहेत् ॥
अज्ञानात्स भिषग्राजन्दन्तिनो विनिपातयेत् ॥ ४० ॥
एता महाविषा लूतास्तूर्णं प्राणान्हरन्त्यपि ॥
कामं मन्दविषाश्चापि तस्माच्छीघ्रमुपाचरेत् ॥ ४१ ॥
यस्तु * मांसमतिक्रान्तदंशो नोत्कृत्यते प्रभो ॥
विशेषमाश्रिते चापि सा निहन्तीह हस्तिनः ॥ ४२ ॥ १५४१ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थान एकादशः स्फोटिकाध्यायः ॥ ११ ॥

---

अथ द्वादशोऽध्यायः ।

---

अथातोऽपवादबद्धमध्यायं व्याख्यास्यामः—

इति ह स्माऽऽह भगवान्पालकाप्यः ॥

अथ खलु भो दारुणेषु तिथिमुहूर्तेषु नक्षत्रेषु वा बद्धः 'अपवादबद्धः' इत्युच्यते ॥

स भवति नीलवर्णः संरब्धो गुरुगात्रापरो दुर्मनाः किंचिद्भक्ष्यमादत्ते । तमसाध्यं विद्यात् ॥

तस्मात्—उग्रदारुणेषु तिथिमुहूर्तनक्षत्रेषु न ग्राह्याः । प्रशस्तेष्वपि ग्रहोपसृष्टेषु पक्षच्छिद्रेषु सर्वकालं च संध्यासु हस्तिनो न ग्राह्याः । किं कारणम्—लक्षणव्यञ्जनोपपन्ना अपि प्राणवन्तो व्यापद्यन्त इति ॥

तत्र श्लोकौ—

स्तिमितो गुरुहस्तश्च संरब्धो वर्णतो भवेत् ।
नीलः श्यावो ह्यबलवानेष नागो विपद्यते ॥
मुहूर्ते तिथिनक्षत्रे प्रशस्ते ग्राहिता गजाः ।
भवन्ति कर्मणां योग्या बलवन्तो निरामयाः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थानेऽपवादबद्धो नाम द्वादशोऽध्यायः ॥ १२ ॥

---

* मासमतिक्रान्त इति पाठो भवेत् ।

---

१ ख. तल्पलेषु श्च(य)थुं प्र° । २ क. ख. °न्तिनां वि° । ३ ख. °हूर्तेन° ।

## अथ त्रयोदशोऽध्यायः ।

अथाङ्गपतिरमरपतिसदृशं कनकेन्द्रनीलवज्रवैदूर्यविविधविमलमणिरुचिरवि-
चित्रप्रभाभिरुद्योतितरुचिरगात्रोऽभिगम्यानिलबलाभिधूतरुचिरकुसुमनिकररु-
चितोपहारे बहुविधमृगविहगगणनिषेविते सर्वसत्त्वाभिगमनीये सुखोपविष्टमाश्र-
मेऽतिरमणीयेऽसितमृगाजिनवसनं तडिदनलदिनकरकिरणसदृशवपुषं भगवन्त-
मभिवाद्य पालकाप्यं विनयेन कृताञ्जलिरिदं पप्रच्छ रोमपादः—'कथमयं पूर्वाबद्धो
नाम व्याधिरुत्पद्यते, किं लक्षणम्, किं चास्य चिकित्सितम्' इति ॥

ततः—प्रोवाच भगवान्पालकाप्यः—'श्रूयतां महाराज यथा पूर्वाबद्धः,
यच्चास्य चिकित्सितम् ॥

पूर्वाबद्धो नाम 'अबद्धः पूर्वे वयसि' इति 'पूर्वाबद्धः' इत्युच्यते । अयं तु
मानसो व्याधिरूपः प्राणहरो गजस्य, ऋते मोक्षात्, अरण्यगमनाद्वाऽसाध्यः ॥

स तु मनस्वी प्राप्तैश्वर्यः प्रमाथी यदृच्छाचारी वनसुखानां रसज्ञः ॥

अथ वसन्ते—परमार्चितविविधसुरभिरुचिरकुसुमेषु सहकारबकुलतिलकवि-
दुलशालवञ्जुलतमालतालतालीसमियालाङ्कोल्लशिरीषकर्णिकारपाटलाकुरुबक-
करवीरकिंशुकाशोकनवमालिकाकुन्देन्दीवरकिंकिराततिन्दुकपुंनागनागचम्प-
कातिमुक्तशोभाञ्जनपारिजातकाम्रातकाश्मन्तकप्रियङ्गुवरुणककदम्बविविधतरु-
कुसुमनिकरसुगन्धाधिवासितेषु मत्तभ्रमन्मधुकरशुकसारिकापरिवृतबर्हिणविवि-
धविहगगणनिनादितेषु करिवरकरचरणदशनविधूतबहुविधतरुकुसुमफलेषु
विकचपुष्पमन्दमारुतोपगीतनृत्यमानलतामण्डितवनविवरभवनेषु बहुविधकुसु-
मगन्धाधिवासितेन दक्षिणपवनेनोदीर्यमाणमदना द्विरदवरा अलिकुलपटलानुना-
दितकपोलाः करेणुसहिताः स्वच्छन्दतः स्थानशय्यासनसहिता रसितप्रक्ष्वेलित-
विहृतललितालिङ्गितचुम्बितेङ्गितकुपितप्रसारितानेकरसा विविधतरुपत्रपुष्पफ-
लभङ्गकवलकुवलयपल्लवकन्दमूलपवसफलोपभोगा नानाविधानां नदीसरस्तडा-
गानां च विमलविपुलरुचिरसलिलप्रतिपूर्णानां सूर्यांशुप्रबोधितसारसानां हंसकुर-
रकारण्डवचक्रवाकसारसबकलावकामद्गुमल्लिकाख्यानुनादैरुपशोभितानां क-
मलकुमुदकुवलयालंकृतानां क्वचिद्वनानां वसन्ते सुखमनुभवन्ति । स तेषामनु-
स्मरेत् ॥

तत्र श्लोकाः—

* 'प्रसादित' इति भवेत् ॥

१ ख. °नस्यो वाऽऽभि° । २ क. °मन्दारमा° । ३ ख. °ङ्गकप° । ४ ख. °कुव° । ५ क. °नुसवेत् ।

वृक्षवल्लीलतागुल्मान्वारणैः परिघट्टितान् ।
मन्दगन्धमलोभेन नैवं मुञ्चन्ति षट्पदाः ॥
तच्च नागवनं नागाद्वनान्नागवनं च तत् ।
पुष्पैश्च मदगन्धैश्च वासयन्तीतरेतरम् ॥
काचित्करेण संवेष्ट्य दन्तं नागस्य दन्तिनी ।
आत्मनो मन्मथावस्थां शंसतीव सुविह्वलाम् ॥
आदाय करिणी काचित्करेण करिणः करम् ।
हस्तिनः क्ष्वेडितैर्भावान्कुरुते मदनातुरा ॥
कामाग्निपरितप्तानि तान्यङ्गानि च वारणः ।
प्रियासंगमतोयेन निवारयितुमिच्छति ॥
काचिन्नागस्य मातङ्गी पुरः स्थित्वा समन्मथा ।
करोति करनिक्षेपं करिणः कामदीपनम् ॥
चिरकालप्रनष्टस्य कोकिलस्य नवं रुतम् ।
श्रुत्वा करेणुभिः सार्धं स्मरन्नागो न जीवति ॥
वसन्ते चित्रपुष्पाणां सुगन्धानां नराधिप ॥
वनानां संस्मरन्नागः प्राणांस्त्यजति दुःखितः ॥
भ्रमद्भ्रमरसंघेषु कोकिलाकुलशालिषु ।
लतागृहेषु रम्येषु वनानां विवरेषु च ॥
रतं यत्प्रियया सार्धं विहितं च पृथग्विधम् ।
एतेषां संस्मरन्नागः प्राणांस्त्यजति दुःखितः ॥

अथ ( ग्रीष्मे— ) क्वचिद्दिनकरकिरणाभिसंतप्तमेदिन्यां निष्पीतरसास्वौषधिषु गुरुशपदहनपरिगतमृगतृष्णिकाप्रतिनद्धेष्वरण्येषु, अनेकभृङ्गारावोन्नादितमूलेष्वनेककोटरार्धनिःसृतभुजङ्गलेलिह्यमानशाखेषु तरुषु, धूपायमानास्विववातिरौद्ररूपं बिभ्रतीषु दिक्षु, पिपासाप्रहारहेतोर्गिरिगुहाकृतावस्थितिषु ( * तरुषु ) कुरङ्गशावकेषु,वृक्षशालावलीनेषु नैकशो घर्माभितापसंभ्रमसंतप्तश्वापदेषु तरुबर्हिणपरभृतशुकसारिकाविविधविहगगणसंघेषु शाखामृगखड्गवराहमहिषरुरुहरिणचमरवृषभशरभमवयेषु, अङ्गारचूर्णनिकरोपमैर्दिनकरकिरणैर्दह्यमानशरीरेषूदक-

* पश्चात्पतित इव भाति ॥

१ क. °रेणः सं° । २ क. °ङ्गारावनादोन्ना° । ख. °ङ्गारीनादोन्ना° । ३ ख. °मूल्येष्व° । ४ क. °निःश्रित° । ५ क. °शाखिषु । ६ ख. °लीलेषु । ७ क. °हगतगते सं° । ८ °खड्गिव° ।

मभिलषत्सु, सिंहव्याघ्रद्वीपितरक्षुऋक्षानेकश्वापदनिनादितासु सपट्टहासास्विव गिरिवरदरीषु, परिशुष्यमाणोदरासु गिरिनदीषु, प्रियविप्रयोगदुःखक्षीणास्विव कामिनीषु, तदाऽतिरौद्रे काले हस्तिनो महानदीनां हिमस्पर्शविमलसुरभिसलिलनिचयपरिपूर्णेषु महाह्रदेषु सरःस्वपि च विविधकुसुमबिसमृणालपुष्करबीजसंवर्तकोपभोगाः स्वच्छन्दतः करेणुकलभविष्कपोतकैरनेकधा परिचर्यमाणा आकर्षणविक्षोभणोन्मज्जनपरिप्लवनतरणसलिलपङ्कहरि(र)णवप्राभिघातक्रीडनविमर्दनरमणीयं विविधसुखमनुभवन्ति सलिलेषु, सूर्यरश्मिप्रबोधितेषु(?)मीनजालसंघट्टितेषु मारुतेन कल्पितेषु षट्पदोपगुञ्जितेषु रुचिरकनकचूर्णसदृशरजोविकीर्णेषु हरितमणिवर्णकर्कशनालेषु बालसूर्यवर्णपर्णेषु पद्मषण्डेषु करेणुकलभपोतिकाभिः सह विहरणक्रीडनपांशुहरणाहारशयनानां(?) चन्द्रप्रभदीपिकासु च शर्वरीषु सुरभिकुसुमगन्धवहैर्मृदुशिशिरपवनैरनुवीज्यमानाः प्रत्यूषप्रदोषार्धरात्रिषु विचरन्ति । स तेषामनुस्मरन् ॥

तत्र श्लोकाः—

क्षोभयन्ति नदीमन्ये वप्रान्भिन्दन्ति चापरे ।
प्रियाभिः सहिताश्चान्ये चरन्ति कलभैः सह ॥
पङ्कचन्दनदिग्धाङ्गाः शाखाव्यजनवीजिताः ।
सरःसु शीततोयेषु चरन्ति सह धेनुभिः ॥
धौतमुक्तफलोद्गारैः करैः शीकरवारिभिः ।
धेनुभिस्तेऽभिषिच्यन्ते कामार्तास्तु मतङ्गजाः ॥
सूर्यरश्मिप्रतीकारं तेषां कुर्वन्ति धेनुकाः ।
उद्दण्डैः सहसोद्धृतविशालोत्फुल्लपङ्कजैः ॥
एवं निदाघकालेषु क्रीडितानामनुस्मरन् ।
ग्रामे बद्धो महाराज न जीवति मतङ्गजः ॥

प्रावृषि च परमसुरभिसलिलुलितपृषतधरणितलगन्धानां कदम्बकेतकसर्जार्जुननीपबकुलशिलंध्राजकर्णाभीरुकन्दलाधिवासितानां कुटजकुसुमप्रहसितप्रदीपितवनषण्डानाम्, असितघनपटलसंछन्ने गगनतले चातकदर्दुरपरभृतशिखिगणानुनादिते, *हरितशिष्ये(?)न्द्रगोपकालंकृतायां वसुमत्यां कन्यायामिव शुकपत्रसदृशवसनायाम्, उद्योतिततर्पणीयभूषणायाम्, खद्योतप्रदीपि-

* हरितशष्पेन्द्रगोप—इति पाठो भवेत् ।

१ क. ख. °झलक्कडे° । २ क. °मुक्तं फ° । ३ क. °छन्नग° । ४ क. °पनाय° ।

तासु रात्रिषु तेषां करेणुभिः सह रतोननुस्मरन् । अपि च वर्षासु च वर्षति देवराजेऽहोरात्रं नदीषु कलुषफेनमुद्वमन्तीषु बहुयष्टिप्रमाभिर्वर्तिताभिर्वारिधाराभिर्द्रवीभूते जीवलोके बहलजलतुमुलपवनविविधविसृतघननिचयपटुपटहभीषणनिनादिते गते दिवानिशं प्रनष्टदिनकररजनीकरनक्षत्रग्रहतारागणे गगनतले भिन्नाञ्जनशिलाश्यामघनपटलपटावगुण्ठितासु निशासु, अनेकविद्युज्ज्वालावभासितासु, अनेकविनिर्घाताशनिनिपातावभग्नसंचूर्णितविध्वस्ततरुशाखासु दिक्षु विमलरजतमण्डलसदृशीभिर्वारिधाराभिरभिषिच्यमानेऽस्मिञ्जीवलोके, तदा हस्तिनो मृदुपवनेरितपतितकेतकरजोनुरञ्जितासु शिखिकुल†कलापावशिष्टशिलातलासु विविधकुसुमगन्धावासितासु व्यपगतदंशमशकमक्षिकाश्वापदसरीसृपासु, अनुवर्षासु प्रवरगिरिगुहासु यत्सुखमनुभूतम्, तदनुस्मरन् । एवमेतेषामनुसुखानां करेणुभिः सह रतानामनुस्मरन् । मध्यमवर्षासु स्तिमितजलधरशब्दे प्रश्नु-(स्नु)तवारिविद्युत्स्फोटितगर्जितशब्दैः प्रतिगजशङ्कया प्रहृष्टकरकर्णलाङ्गूलः प्रतिगर्जति मेघान्प्रहृष्टो महानदीनां फेनजलप्रवाहिणीनां परिप्लुतकक्षेषु परिवाहुप्रलम्बतृणाग्रेषु गर्जमानाकर्षणोन्मज्जनावकर्षणविक्षोभणावतरणान्सलिलेषु सह कान्ताभिरनुस्मरन् ॥

तत्र श्लोकाः—

विकीर्णवदनाः केचित्स्फुरन्तः क्रोधमूर्छिताः ।
वप्रेषु करिणः शक्तास्तुलपन्तीव मेदिनीम् ॥
घनौघजालव्यसनरजोध्वस्तदिवाकरे ।
प्रनष्टग्रहनक्षत्रे तदागम(ग)नमण्डले ॥
दूर्वाङ्कुरप्रतिच्छन्नां शक्रगोपकमण्डिताम् ।
विविधैर्यवसैः कीर्णां सेवन्ते वारणाः स्थलीम् ॥
बर्हिणोद्घुष्टकुञ्जेषु नागानां विवरेषु च ।
वृक्षभङ्गान्सकुवलान्खादन्ति विचरन्ति च ॥
न तथा विविधैर्भक्ष्यैरन्नपानैर्न भोजनैः ।
यथा तुष्टिर्भवत्येषां वने तु तृणभोजनैः ॥
पीडितोऽत्यर्थमाक्लिशैस्तोत्रहस्तैर्नरैर्भृशम् ।
स्मृत्वा वनसुखान्याशु प्राणांस्त्यजति कुञ्जरः ॥

† 'कलापावश्रितशिला' इति पाठो भवेत् ।

१ ख. °तान्स्मर° । २ ख. °तिच्छिन्नां । ३ ख. °तो व्यर्थ° ।

मेघोदकैः पूरितकन्दरस्य शैलस्य गम्भीरवनान्तरस्य ।
गुहामुखेष्वग्निशिखाप्रकाशाः सुवर्णपुष्पा इव भान्ति दीपाः ॥
वनेषु वर्षासु मनोहरेषु क्रीडन्ति नागाः सह धेनुकाभिः ।
बद्धानतस्तान्स्मरतो वनानां मुखानि *खिन्नं समुपैति नाशम् ॥

शरदि च निर्मलगगनतलतारागणपरिवृतशिशिरशशिकिरणप्रकाशितासु निशासु मुनिजलविमलहृदयसदृशीषु दिवसकरकिरणविगतघनपटलकपाटोद्घाटितासु दिक्षु, वनराजिषु प्रफुल्लबाणासनसप्तपर्णकोविदारभण्डीरकुब्जकबन्धुजीवकरुचिराधिवासितासु पर्वतवरकन्दरोदरदरीषु तमालमालामालितासु नानाविधवृक्षचन्दनलतोपगूढवल्लीकरपल्लवैर्निरन्तरीकृतनिचुलपुष्पोपहार( ........ ) †शरेदिपरस्परगहनानां प्रमुदितहरिणशार्दूलकुञ्जरवराहमहिषपृषतगवयखड्गचमरसिंहशरभजम्बुकनिषेवितानां शरत्काले वनानां प्रबुद्धवननलिनीकुमुदसौगन्धिकोत्पलकह्लारविभूषितेषु प्रवरवैदूर्यमणिसदृशेषु जलाशयेषु मुनिसदृशेषु कलुषवर्जितेषु, तस्मिंश्चातिमनोज्ञे काले हस्तिनो दिनकरकिरणप्रबोधितकमलमधुकरविमर्दावधूतपतितकिंजल्ककेसररजोनुरञ्जितसलिलेषु मधुमदमुदितमधुकरकुटुम्बिनीझांकारितमनोहरेषु मधुमदोपयुक्तामरकामिनीकपोलच्छदेन मण्डितेषु नवनलिनीदलसंवीज्यमानजलचरपक्षिगणेषु क्रौञ्चचक्रवाककलहंसमृणालग्रीवकधार्तराष्ट्रमहाहंसब्रह्मपुत्रजीवंजीवचकोरकोपष्टिमहाक्रौञ्चपरिप्लुतदात्यूहसारसकुररकारण्डवकादम्बमद्गवाडिकुक्कुरमल्लिकाक्षि(ख्य)नीलग्रीवकरोहिणीककुटभेदकप्रवालपादकबकबलाकानिषेवितेषु निरन्तरकुसुमसुरभिनिकरावपातरजोधिवासितेषु सूर्यरश्मिप्रबोधितेषु कमलवनेषु मीनजालघट्टिततोयान्तेषु मारुतेन तरङ्गितेषु दिव्यगन्धाधिवासितेषु पक्षिसंघसेवितेषु षट्पदोपचित्रितेषु विविधसुखमनुभवन्ति निवृत्ति(त्त)जलकलहासु च विविधविहगनखमुखावलिखितपुलिनतलासु निर्दयोपभुक्तास्विव कामिनीषु काशकुसुमाट्टहासासु महानदीषु मदजलविहारसंसिच्यमानकपोला(ल)वप्राभिघातपांशुपङ्कहरणजलविक्षोभणसुखान्यासेवन्ते । स तेषामनुस्मरन् ॥

तत्र श्लोकाः—

तेषां कपोलजीमूतप्रनष्टमदकारिभिः ।
विविधद्रुमपुष्पाढ्या वास्यन्ते वनभूमयः ॥

---

* 'खिन्नान्समुपैति नाशः' इति भवेत् ॥ † 'शरादि' इति पाठो भवेत् ।

---

१ क. दायुः' । २ क. °रदप° । ३ ख. °खानासे° । ४ क. °पोतजी° ।

कमलामलकिंजल्कपाण्डुरा वारणा नृप ।
सरःस्वमलतोयेषु क्रीडन्ति सह धेनुभिः ॥
कुमुदोत्पलसंछन्नां चक्रवाकनिकूजिताम् ।
दिवाकरकरामर्षसंबुद्धामलपङ्कजाम् ॥
शुभतीर्थां शुभजलां हंसांसपरिवीजिताम् ।
भजन्ते दीर्घिकां नागास्तत्कालसेवनक्षमाम् ॥
निशाकरकरोद्योतभूषितासु समन्ततः ।
उत्फुल्लको( क )मलोद्गन्धिगन्धवाहसुखासु च ॥
शर्वरीष्वतिरम्यासु रमयन्ति वने प्रियाम् ।
पांशुना ह्यपदिग्धाङ्गाः केचिद्वनगजा नृप ॥
एतेषां वनसौख्यानामन्येषां चानुचिन्तयन् ।
ग्रामबद्धो महाराज न जीवति मतङ्गजः ॥

हेमन्ते वा तुषारनिपीडिताक्रान्तविटपपादपनिवासितानां गिरिदरीणां लोध्रलवलीप्रियङ्गुकुसुमसिन्दुवाराधिवासितानां पांशुप्रथ(?)वृक्षनदीतटहरणानां च हर्षोदेवमादीनामुपवसि(?)जातपूर्णं बलसत्त्ववर्णमदजच(?)हर्षामर्षागर्जित-शुद्धशरीरावदेन्निन(?)विधावितपरिकीर्णानां प्रभिन्नोद्धतप्रगलितकपोलदानौघपतितधाराभिलाषिमधुकरीषट्पदकर्णसुष्टोपगीतानां हेमन्तकाले वनानां स्मरन् ॥

तत्र श्लोकाः—

अस्मिन्नृतौ सापि(?) तुषारवर्षै( र्षैः ) तृणाग्रलग्नैरुप(†शोभितानि) ।
वनानि देवोपवनोपमानि काशेक्षुकूलैरिव संभृतानि ॥ १ ॥
विभान्ति राजन्विविधैः सरांसि सिध्मैस्तुषारैरिव विप्रकीर्णैः ॥
क्वचिच्च बाष्पाकुलसंभृतानि मित्राणि पद्मैः परिकीर्णयन्ते ॥ २ ॥
तृणानि हृद्यानि मनोरमाणि चरन्ति नागाः सहिताः प्रियाभिः ॥
क्वचित्सरःक्रीडविहङ्गसंघैः क्रीडन्ति नागा ह्यपनीयमानाः ॥
करेणुकाभिः सह पोतकैश्च वने द्विरेफाकुलनादितेव ॥ ३ ॥

---

* 'शुद्धशरीरवेदनेन' इति कदाचिद्भवेत् ॥

† 'शोभितानि' इति द्वयोरपि पुस्तकयोस्त्रुटितम्, तथाऽपि कपुस्तके पार्श्वावकाशे त्रुटिपूरणाय लिखितमत्र लिखितम् ॥

---

१ क. °वाकाभिकू° । २ क. °सिन्धुवा° । ३ क. °शुपृथ° । ४ क. °पूर्णत्र° । ५ ख. °दन्नेन° । ६ ख. °र्णमुष्टो° ।

निवाततरुसंस्थाने रमणीयेऽद्रिपार्श्वके ॥
रमन्ते जघनद्वारसक्तहस्ता करेणुषु ॥
हिमसंस्पर्शपक्कानां क्रीडनाहरणानि च ।
हस्तिनीभिश्च संहिता रम्येषु गिरिसानुषु ॥
नागा गिरौ क्वचिच्चापि निर्जिताः परयूथपैः ।
भ्रमन्ति देशान्देशेभ्यो यूथाद्यूथं वने गजाः ॥
मदार्द्रगण्डाः कोपेन केचिद्राजन्मतङ्गजाः ।
अभिप्रहारैर्विविधैरन्योन्यबलदर्पिताः ॥
पांशुना ह्युपदिग्धाङ्गाः केचिद्वनगजा नृप ।
करेणुभिः परिवृताः क्रीडन्ति वनसानुषु ॥
एतद्वने सुखं राजन्प्राप्तैश्वर्यो वनद्विपः ।
स्मरंश्च बद्धः सहसा क्षिप्रं त्यजति जीवितम् ॥

अथ शिशिरे हिमवृषितं सुखस्पर्शविमलसलिलकरेणुकलभविक्कपोतजं-ववनुकल्याणपोत(?)परिसरणसेवितेषु सरःसु लोध्रातिमुक्तकलहाप्रियङ्गुमालतीकु-मुदवारि(सितानि) तानि बकबलाकापारिप्लवमल्लिकाक्षो(रूप)कुररहंसचक्रवा-कोपेतानि जलान्यवगाहमानाः करेणुभिः परिवृताः स्वच्छन्दतस्तृणकवलकुवल-पल्लवोपयोगानां ह्रदेषु चाधिकशिशिरसलिले प्राकर्षणविक्षोभणोन्मज्जनपरिप्लु-वनतरणानां स्मरन् ॥

तत्र श्लोकाः—

मदेन च जलं तेषां शीतलेन सुगन्धिना ।
भान्ति मार्गाः सुकुसुमा द्विरेफैरनुनादिताः ॥
केचिल्लतां कुसुमितां कूजद्भ्रमरसंकुलाम् ।
करेणुभ्यः प्रयच्छन्ति कामार्तास्तु मतङ्गजाः ॥
यूथात्प्रवासिताः केचिन्नागाना(ना)गान्तरैर्वने ।
यूथान्ते धेनुकाः प्राप्य प्लवन्ति तु यदृच्छया ॥
मदार्द्रगण्डाः करिणः किंचित्कोपेन मूर्छिताः ।
प्रतिद्विपानपश्यन्तो घ्नन्ति वृक्षान्मुहुस्तरान् ॥

---

* 'वासितानि' इति, 'वारितानि' इति वा पाठो भवेत् ॥

---

१ ख. रहिता । २ क. °ना ह्युप° । ३ क. °द्वनसु° । ४ क. °शिराहि° । ५ ख. °जवनु° । ६ ख. °रिसता° । ७ क. °काक्षाकु° ।

[१]केचिन्नागानां स्य केचित्( ? ) मदार्द्रगण्डाः करिणो वनेषु ।
विषाणगात्रापरहस्तवालैर्मिशङ्किताः संप्रति हन्ति वृक्षान् ॥
फुल्लान(नु)शाखाकृतकर्णपूराः केचिद्वनान्तेषु मनोरमेषु ।
हृष्टद्विरेफाकुलनादितेषु क्रीडन्ति नागाः सह धेनुकाभिः ॥

प्रतिगजविमर्दविजयप्राप्तैश्वर्या वने क्रमसुखानां विविधानां च विविधगजगार्जे-ततांडनविकृतमुखानां स्मरणान्न निर्वाणमिह विन्दते । स जयति । स ग्रामानीतो वधबन्धनतर्जनानि हठात्प्राप्नुवन् । अनु च कण्ठेनोन्नतमानो ध्यायति संमीलितनयनः करेण भूमितलमाहन्ति निषिद्धकरलाङ्गूलश्रवणमदः परिवीजयति विमना न व्यतिचिकित्साय(?)[२]भक्ष्यं ग्राम्यं वाऽऽरणं(ण्यं) वा नात्ति क्षुधितः, पिपासितोऽपि न पिबति सलिलम्, मनस्वितयाऽऽत्तस्य तत्प्राप्त्यर्थं न विद्यते प्रतीकारः । सामादयोऽप्युपायास्तस्मिन्न क्रमन्ते । पूर्वबद्धो नामैष व्याधिः । न हि स व्यसनस्य( ? )मनः प्रसादयितु[३]मारण्यकस्य नागस्य वाचमत्र प्राप्तस्य । तस्मात्प्राप्तैश्वर्यं न ग्राहयेत् । द्विरदपतिमतिक्रान्तचत्वारिंशद्वर्षमस्वार्थिव्यपायाश्च(? ) न भवन्तीति । तस्मिन्विद्यमाने मातङ्गे पक्ष[४]प्रपतनादोषभयाच्चेति । पक्षप्रपतनं शुभमप्यशुभमेव भवति । किं पुनः शुभं विद्यमाने मातङ्गे पूर्वबद्धे च । किं पुनः पक्षप्रपतनम् ॥

दृष्टमप्यशुभं तस्मात्पक्षप्रपतनं मया ।
[५]दृष्टं फलेन त्रिगुणं पक्षप्रपतनं पुनः ॥
तस्माद्द्वयोरपि तयोरशुभाशुभयोर्मया ।
विसर्जनं किं तदिति [६]मेयेहो यदि तच्छृणु ॥
सुभगाभिः सुरूपाभिर्हस्तिनीभिः समन्ततः ।
पूर्वबद्धं परिवृतं वारणेन्द्रं विवर्जयेत् ॥
अरण्ये शुभदं यावद्विषक्कालेषु त्रिष्वपि ।
मोक्षाद्धन्यस्य नागस्य पूर्वबद्धस्य किं पुनः ॥
हस्तिनीभिर्वनान्ते च कर्तव्यमिति मे मतिः ।

तत्र श्लोकाः—

तृतीयायां चतुर्थ्यां चेद्दशायां ग्राहयेद्द्विपम्[७] । *
बाल्पाद्वियुक्तान्[८]कार्मण्यामप्राप्तं पञ्चमीं दशाम् ॥

---

† द्वयोरपि पुस्तकयोः समान एव पाठः । * द्वितीयाबहुवचनान्तत्वमेव युक्तम् ॥

---

१ क. °नोन्नीत° । २ क. लक्ष्यं । ३ क. °मारुण्यप्रकाश्यना° । ४ क. ख. °प्रपंतादोष° । ५ क. ख. दृष्टफ° । ६ ख. मयेहो । ७ क. ख. °म् । वालाद्वि° । ८ क. °क्तात्कार्म° ।

ते कर्म च प्रयोगांश्च परिक्लेशं च वारणाः ।
सहन्ते न च दुष्यन्ति न स्मरन्ति वनानि च ॥
प्राप्तैश्वर्यो हि पञ्चम्यां दशायां परियुज्यते ।
मनस्विभावात्स क्षिप्रं प्राणांस्त्यजति वारणः ॥
यथा राज्यात्समुदिताद्भ्रष्टः सीदति पार्थिवः ।
वनैश्वर्यात्तथा भ्रष्टः सोऽपि नागो विपद्यते ॥
हिमसंस्पर्शशीतानां पक्कानां हरणानि च ।
हस्तिनीभिश्च सहितो रम्येषु गिरिसानुषु ॥
क्रीडनं पद्म सलिलाद्वर्तते च वनेषु च ।
नदीनां च निकुञ्जेषु रतानि समनुस्मरन् ॥
मृणालं वा बिशं वाऽपि तृणं कुवलपल्लवम् ।
मूलं वा पिप्पलं वाऽपि कान्तकाक्षुण्णकात्तथा(?) ॥
स्वमुखाश्वो(स्वा)दितं प्रीत्या स्वादुक्षारं च भक्षितम् ।
करे गृहीत्वा यद्दत्तं मुखे च तदनुस्मरन् ॥
सविलासैः करेर्यच्च रंहैः संन्याहितं शनैः ।
न विश्रान्तस्य नागस्य वशाभिर्गिरिसानुषु ॥
तनुपल्लवनालेन पुष्पोद्गारसुगन्धिना ।
वनान्ते वाजितामात्रं शाखाभङ्गप्रवायुना ॥
पीतैः सुरभिनिःश्वासैः शीतशीकरवारिभिः ।
( *क्रीडितं करिणीभिर्वा ) करेर्यच्च वनान्तरे ॥
† मत्ताद्विपोजगीतेषु पद्मोत्पलसुगन्धिषु ।
बहुदोषैस्तु भवने तेषु वो शीतलेषु च ॥
आसध्यमानं कान्ताभिर्दै(*वीभिर्दै)वभक्तिभिः ।
नानाधातुविचित्राभिरनुलिप्तं करेणुभिः ॥
पद्मकेसरकिंजल्कैः पुष्पाद्यैर्बहुभिः शुभैः ।
+
सत्यचूर्णैरवाङ्गे यत्योद्गभिजपिञ्जरकृतम् (?) ॥

* धनुराकारमध्यस्थो नास्ति पाठः खपुस्तके । † 'मत्तद्विजोपगीतेषु' इति भवेत् । + पुस्तकद्वयेऽपीदृगेव पाठः ।

१ क. मुद्दे । २ क. °नैः । सवि° । ३ क. °युवा ॥ पी° । ४ क. °वायुभिः । ५ क. ख. वा सुशी° ।

आसेव्यमानास्तस्याकुसेवार्थमनुकर्षितम् ।
करिण्योच्च पुनः क्रीडां नरेन्द्रस्येव कुर्वते ॥
सर्वत्र सुखरम्येषु यच्च पर्वतसानुषु ।
निषेवितं च पश्चार्थं वनकुक्षिषु ताण्डवम् ॥
सुस्नातो वनयूथानां करोत्क्षेपहतैर्जलैः ।
मनोरमैः शब्दवद्भिः समन्तामलपुष्करैः ॥
यच्च बर्हिण(न्त्र)त्येन† ........................ ।
.................... स्तैर्मुखाडम्बरगर्जितम् ॥
स्मृत्वा वनद्विपो बद्धः पूर्ववद्धो न जीवति ।
अनुकूलाच्च या सेवा गजयूथैः कृता वने ॥
अनुयुक्तैर्वारणस्य भृत्यैरिव वशानुगैः ।
कलभैर्धेनुकाभिश्च पोतैश्च प्रियदर्शनैः ॥
संकीर्णमृगदं(?) मन्दैर्नरं नरपतिर्यथा ।
यच्च युद्धेष्वनेकेषु निर्जित्य प्रतिवारणान् ॥
गजयूथाधिपत्यं च स्पर्शस्त्वास्वादितो महान् ।
करेण सुकुमारेण स्पर्शातिशयभाजिना ॥
कामाग्रेर्वित्तमयैर्विक्षोभ्य जघनार्णवम् ॥
वस्त्राणां भटमृतरससंस्पर्शाकृत्वार्द्रमहारसम् (?) ॥
कान्त्वये(ये)प्सितसर्वात्मा हृदि मन्मथताडितः ।
कामैकहानिहृदयो ध्यानहर्षपरायणः ॥
मन्दमन्मथलीलाभिर्गतिभिः क्रमते सदा ।
कर्कशोद्दाममदनः किंचित्कार्कश्यमागतः ॥
यूथमध्यात्परित्यज्य नागकन्यां सुकेशिनीम् ।
मनोरमवनोद्देशमागत्य मदनातुराम् ॥
अनङ्कृतप्रान्यङ्गानि भिया द्वेषु कुतोभयम् (?) ।
निर्वाप्यं यद्यनुकुरुते तच्च सर्वमफुल्लकं कपम् (?) ॥

---

* 'करिण्योऽत्र' इति भवेत् ॥ † पुस्तकद्वयेऽपि—'कोकौभितौसौ पार्थिवमिव चित्या' इति लिखितमुपलभ्यते ॥

---

१ क. संपूर्ण° । २ क. ख. °रेणुसु° । ३ ख. °स्पर्शा कृत्वा म° । ४ ख. 'प्रतिक्रातनः.........' ।

(?)संछन्नं सरःसु विमलं जलं करेणुकरदत्तं हि ।
(?)पीतं यत्सुरभितोत्तरे विस्मरञ्जलमादत्ते ॥
काममोहाभिसंतप्तः कृतान्तविधिनोचितम् ।
स्वयूथमिव मातङ्गो दृष्ट्वा ग्राम्या नु धेनुकाः ॥
सहसा ग्राममानीतो वारणः पदवासिकैः । (?)
प्रतिबद्धस्तु पाशेन नष्टचित्तोपलक्ष्यते ॥
एवं वनेषु बहुधा क्रीडितानामनुस्मरन् ।
रोमपाद महाराज न जीवति मतङ्गजः ॥
क्षुधितोऽप्यधिकं दृष्टः पूर्वाबद्धो मतङ्गजः ।
न चात्ति किंचिदाहारं मनः सीदन्स्मरन्वनम् ।
*शोचते मनसस्तापान्कोष्ठे व्यापद्यतेऽनिलः ॥
ततो व्यापन्नमदनः पूर्वाबद्धो न जीवति ।
ऋते मोक्षान्न तस्यास्ति मनसः संप्रसादनम् ॥
प्रत्याख्येयो गजस्तस्मात्पूर्वाबद्धश्चिकित्सकैः ।
अधर्मश्चातिहा†निं च वृथा चापि परिश्रमः ॥
प्राप्तैश्वर्यस्य नागस्य ग्रहणं न प्रशस्यते ।
प्रकूपपतने चापि तस्य दोषो महान्भवेत् ॥
प्राजापत्येषु सर्वेषु ब्राह्मणैः पठ्यते गजः ।
($प्राणा)बाधं गजानां तु रक्षेत्सर्वात्मना नृपः ॥
इह चान्यत्र च श्रेयो गजानां परिपालनात् ।
तथा सात्म्यं गजो बद्धो यत्नेन परिपालयेत् ॥
(?)कर्माद्या यो न लक्षण्योपेताच्चग्राह्यान्नपरिवर्जयेत् ॥

तत्र श्लोकौ भवतः—

पूर्वाबद्धो मानसो व्याधिरेष प्रत्याख्येयः साधनं तस्य नास्ति ।
आगन्तुर्वा दोषजो वाऽपि रोगः *साध्वीरोयः सह्यते सोपहर्ता ॥
वाग्भिश्चत्राभिर्गीतवादित्रशब्दैः(?) †सह्यते तु मानं स मानुषाणाम् ।

* 'शोचतो मनसस्तापात्' इति भवेत् । † 'हानिश्च' इति भवेत् । $ खपुस्तके नास्ति । * 'शारीरो यः साध्यते सोपहर्त्रा' इति भवेत् । * 'श्चित्रैर्गीत' इति भवेत् । † 'साध्यं तद्वै मानसं मानुषाणाम्' इति भवेत् ।

१ क. साध्यं । २ ख. °र्माद्यापोनलक्षणोपेता° ।

आरण्यानां शङ्किनां वारणानां संतप्तानां नास्ति चित्तप्रसादः ॥
इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने पूर्वाबद्धो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## अथ चतुर्दशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां विनीतात्मा महायशाः ।
उपागम्याऽऽश्रमं रम्यं पालकाप्यं स्म पृच्छति ॥
ये त्वया संग्रहाध्याये विसर्पाः पञ्च कीर्तिताः ।
तेषां हेतुं यतो भूतं भगवन्वक्तुमर्हसि ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ।
प्रोवाच भगवान्प्रीतो हस्तिचारी महायशाः ॥
तस्मै शुश्रूषमाणाय रोमपादाय धीमते ।
श्वयथुः सर्पनियतः प्रस्थितो येन सर्वशः ॥
स्फोटितोर्युतत्वाच्च‡ ..... ..... ..... ..... ..... ..... ..... ।
विसर्पमेतैर्जानीयाद्द्रजं तं परमातुरम् ।
मारुताद्याः प्रकुपिता विशन्ति धमनीं ततः ॥
मांसशोणितमागम्य शोकं कुर्वन्ति भैरवम् ।
स चाङ्गानि यथा गच्छेच्चलशोथोऽनवस्थितः ॥
तदा भवेद्विसर्पश्च तस्य स्थानानि मे शृणु ।
संदानभा(*गे कूर्मे च प्रायो विष्के गले तथा ॥
अष्टाङ्गं वक्रसंस्थश्च तत्पले,जनये तथा ।
भागेष्वेतेषु नागानां श्वयथुः सर्वतोऽपि वा ॥
आशीविषस्येव गतिर्लक्ष्यते पावकस्य च ।
तद्वच्च समुदीर्णस्य विसर्पस्य समन्ततः ॥
†संसव्यं प्रतिसहर्तुं मन्दिरोत्थो यथाऽनलः ।

---

‡ पुस्तकद्वयेऽपि त्रुटितम् ॥ *धनुकारामध्यस्थः पाठो भ्रष्टः कपुस्तकात् । 'संशक्यः प्रतिसंहर्तुं' इति भवेत् ।

---

१ क. विनतात्मा । २ क. द्रुनं । ३ क. अश्वथुः । ४ ख. परमदातुरम् । ५ क. चमना । ६ ख. °चलः शो° ।

(?)सोऽन्या इवत्यथवस्तद्वा द्विसर्पे इति क्रमः ।
आदानं च निदानं च तस्यार्थान्विनिबोध मे ॥
(?)रूक्षच्छाया कटुकान्नं पानवायो निषेवते ।
प्रकृतिर्वातिकी यस्य तस्य वायुः प्रकुप्यति ॥
शिराभिः कुपितश्चापि शरीरं विप्रधावति ।
गात्रमन्यतमं प्राप्य विसर्पं कुरुते ततः ॥
मृदुश्लक्ष्णः शिरानद्धो$ ........................................ ।
प्रकुर्वन्वृद्धिमाप्नोति पिटकाभिः समन्वितः ॥
आ(स्रा)वमत्यर्थमल्पं च स्फोटाः स्फटिकसंनिभाः ।
तेऽकस्मात्पुरुषभावि स्वरन्तो भेदमागताः ।
उष्णानि सविदाहानि साम्लानि च निषेवते ।
प्रकृतिः पैत्तिकी यस्य तस्य पित्तं प्रकुप्यति ॥
शिराभिः कुपितं चापि शरीरे विप्रधावति ।
गात्रमन्यतमं प्राप्य विसर्पायोपकल्पते ॥
अग्निदग्धोपमः स्फोटैः श्वयथुः श्रीयते ततः ॥
सदाहैः† .... .... ....समहातीव्रवेदनैः ।
माञ्जिष्ठापद्मसंकाशैः शिखिकण्ठनिभोऽपि च ।
भिन्नाञ्जननिभः सा च प्रियङ्गुसदृशोऽपि वा ॥
निःस्रवेद्यस्य गात्रेषु न स शक्यश्चिकित्सितुम् ।
अग्नेः समानकर्मत्वात्पित्तदोषसमन्वितम् ।
केचिदाग्निविसर्पं तु पृथगाचक्षते जनाः ॥
यः स्निग्धमधुरं भोज्यं शीतमिक्षुं च सेवते ।
प्रकृतिः कफजा यस्य श्लेष्मा यस्य प्रकुप्यति ॥
शिराभिः कुपितं चापि शरीरं विप्रधावति ।
गात्रमन्यतमं प्राप्य शोफं कुर्वन्ति दन्तिनः ॥
मन्दस्वेदप्रस्रवणः कण्डूमानथ शीतलम् ।)
स्वल्परोगो घनस्पर्शः शीतकाले विवर्धते ॥
चिरात्प्रच्यवते चापि चिराच्चैव प्रसिच्यते ।
महास्फोटसमायुक्तो विसर्पः श्लैष्मिकः स्मृतः ॥

---

$ अत्रापि पाठस्त्रुटितः । †इतोऽग्रे पाठो भ्रष्टः ॥

स्वैः स्वैस्तु कारणैर्दोषा युगपत्कुपिता यप ।
दर्शयन्ति स्वलिङ्गानि तस्य शेषाणि लक्षयेत् ॥
विसर्पो मर्मजः सर्वो ह्यसाध्यः कीर्तितो बुधैः ।
संनिपातहृतो भूतसाध्याचेसततौ(?) स्मृतौ ॥

तत्र श्लोकः—

संसर्गलिङ्गानि कफस्य वायोः पित्तस्य रक्तस्य च संनिपातम् ।
दोषोत्थितं चापि तथा विदित्वा क्रियां यथावद्विहितां हि कुर्यात् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने चतुर्दशो विसर्पाध्यायः ॥ १४ ॥

---

## अथ पञ्चदशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ।
कीदृशो हृदयस्फा(*ली भगवन्वक्तुमर्हसि ॥ १ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
अल्पसत्त्वस्य नागस्य भयादुद्विग्नचेतसः ॥ २ ॥
हृदयस्फाल)नो व्याधिर्हृदयस्थान उच्यते ॥
अपूर्वाणां च रूपाणां गत्वा न त्वमदीयते(?) ॥ ३ ॥
द्विविधानां च घोषाणां भयात्सद्यः प्रणश्यति ॥
अरण्याद्ग्राममानीतो दृष्ट्वा रूपाणि वारणः ॥ ४ ॥
सहसा वधबन्धाभ्यामकामाशनभोजनात् ॥
भीतो भवति मातङ्गो विदीर्णहृदयस्ततः ॥ ५ ॥
सान्त्वमानोऽपि बहुधा संवीजत्येव राजिता ॥
उद्विग्नचित्तो विमना हन्ति हस्तेन मेदिनीम् ॥ ६ ॥
अधि धावति संतापः सर्वाङ्गे चास्य जायते ॥
नखेभ्यश्चैव सर्वेभ्यो भयाद्रक्तं प्रवर्तते ॥ ७ ॥
(?) ग्रहन्मन(?) इवाकारं प्रव्या(रूया)ति गुरुमक्षिकः ॥
न वेत्ति द्विरदः संज्ञां दीनदृष्टिरवाङ्मुखः ॥ ८ ॥

---

* धनुराकारमध्यस्थो भ्रष्टः पाठः कपुस्तकात् । † 'सान्त्व्यमानोऽपि' इति भवेत् ।

---

१ क. स्वैः स्वका° । २ ख. °च वपवो स्मृ° । ३ क. °ते ॥ दुःखे° । ४ क. °कारप्र° ।

पेवसं नाभिलषति न तोयं नष्टचेतनः ॥
पतमाना नग† ........ प्रत्याख्यायाऽऽचरेत्क्रियाम् ॥९॥१५१०॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने हृदयस्फाली नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

## अथ षोडशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
वालक्षाणीं सभेषज्यं सनिदानं प्रचक्ष्व मे ॥ १ ॥
स पृष्टस्त्वङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
वालक्षाणी यदाऽऽगन्तुर्दोषजो वाऽपि जायते ॥ २ ॥
स वालक्षपणाद्व्याधिर्वालक्षाणी निरुच्यते ॥
गुलिकास्थिसमूहश्च बहुशः सर्वतश्चलन् ॥ ३ ॥
यतस्त्रिणतो बालधिस्तस्मात्संधिर्विधीयते ॥
छिन्नं वा कटुपुक्कं वा (*भक्षितं वा )पि दन्तिना ॥ ४ ॥
तैलपात्रे सुतप्ते तं सद्य एव निमज्जयेत् ॥
संपिष्टं मथितं वाऽपि बैलसंघृष्टमेव वा ॥ ५ ॥
यष्टिमधुकं चूर्णाक्तं म्रक्षयेन्मधुसर्पिषा ॥
गाढबन्धाद्व्रणो यस्तु दण्डाघातेन वा भवेत् ॥ ६ ॥
अश्मलोष्टप्रहारेण तस्य शीता क्रिया हिता ॥
क्षतो वाऽप्यवलम्बी वा यदि च्छेदनमर्हति ॥ ७ ॥
तं छित्त्वा तु भृशोष्णे तु तैलपात्रे तु मज्जयेत् ॥
कृमयो यदि वाले स्युर्जाता भल्लातकैः सह ॥ ८ ॥
विपाच्य सार्षपं तैलं क्षणाष्टं क्षपयेद्व्रणे ॥
पारापतमयूराणां कुक्कुटानां सकृद्रसम् ॥ ९ ॥
समभागं सलवणं साधनीयं प्रलेपनम् ॥
विडङ्गं चित्रकं किण्वं गोमूत्रं रजनीद्वयम् ॥ १० ॥
लवणं शृङ्गवेरं च शोधनीयं प्रलेपनम् ॥
(*सुरसाङ्कोल्लजातीनां पत्राण्यारग्वधस्य च ॥ ११ ॥

---

† पुस्तकद्वयेऽपि त्रुटितम् । * धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ।

---

१ वयसं । २ ख. प्रचक्ष्महे । ३ क. °तस्तृण° । ४ क. बले सं° ।

(?)र्पा कां सलिलेन पिष्टाश मूर्धा वै वेत्रवारुणी ॥)
एतल्लवणसंयुक्तं शोधनीयं प्रलेपनम् ॥ १२ ॥
इदमन्यत्प्रवक्ष्यामि पिप्पली कटुरोहिणी ॥
दन्ती कृष्णा विडङ्गानि श्वेतार्कक्षीरपोषिताम् ॥ १३ ॥
कृमिघ्नं साधनीयं च कुर्याद्वाले प्रलेपनम् ॥
(?)साक्षामाशशृङ्गी च हरिवेरं सचन्दनम् ॥ १४ ॥
प्रलेपनमिदं कुर्याद्वालोपचयकारकम् ॥
अतस्तृणोदनं सर्पी राजन्कुर्यात्सभेषजम् ॥ १५ ॥
प्रपुन्नाङ्गं विडङ्गं च कासीसं समनःशिलम् ॥
ततस्तैलमिदं कार्यं व्रणाभ्यञ्जनमुत्तमम् ॥ १६ ॥
पुनर्नवां पयस्यां च सहदेवीं शतावरीम् ॥
जीवन्तिकां वाजमाणां जीवकं चवकुं(कं) समा ॥ १७ ॥
सवहूं च विशल्यां च सहदेवीं तथैव च ॥
सहां चैव हिणामूत्रे समभागानि कारयेत् ॥ १८ ॥
सद्यो व्रणे यथोक्ताभिः क्रियाभिः समुपाचरेत् ॥
कुर्यात्संवरणं चास्य मृदितेनातिचर्मणा ॥ १९ ॥ १५६९ ॥

तत्र श्लोकौ—

उद्दिष्टाश्चोपदिष्टाश्च क्रियाः सम्यक्प्रकीर्तिताः ।
ऊहापोही च मेधावी वालक्षाणीं [1]प्रसाधयेत् ॥
कालातीतः क्रियाभिर्वाऽतिक्रियाभिरतोऽपि वा ।
अत्यन्तमक्रियाभिर्वा याति साध्योऽप्यसाध्यताम् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने वालक्षाणी नाम षोडशोऽध्यायः॥१६॥

---

## अथ सप्तदशोऽध्यायः ।

---

पालकाप्यमुवाचेदं कृतजप्यं कृताञ्जलिः ॥
व्याचक्ष्व भगवन्व्याधिं मेढ्रक्षाणीं सभेषजम् ॥ १ ॥
स कथं मेढ्रक्षाणीति संज्ञया व्याधिरुच्यते ॥
तेन ससंभवं ब्रह्मन्सनिरुक्तं प्रचक्ष्व मे ॥ २ ॥

---

१ प्रसादयेत् ।

एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
मेढ्रक्षाणीं शृणु मया प्रोच्यमानं नृपोत्तम ॥ ३ ॥
आगन्तुर्दोषजो वाऽपि मेढ्रक्षाणी प्रजायते ॥
मेढ्रक्षाणीति तत्राऽऽहुः क्षपणात्क्षरणात्कृतम् ॥ ४ ॥
एष प्राणहरो व्याधिर्भवत्येवमुपेक्षणात् ॥
तस्माद्यत्नेन संजातं चिकित्सितुमुपक्रमेत् ॥ ५ ॥
प्रहृष्टमेढ्रो हर्षेण धेनुकासमभिप्लुतः ॥
(?)अमुक्ते वा(*प्रवापी तु) वार्यते यदि रेतसि ॥ ६ ॥
अथवा मेढ्रमुद्यम्य धेनुकामभिधावतः ॥
स्थाण्वश्मलोष्टवल्लीषु निर्वातोदपरासु च ॥ ७ ॥
समानंपति ........ वालुकाजलपांशुभिः ॥
राजदण्डेन वा मेढ्रं तृणैर्वाऽप्यपचारकात् ॥ ८ ॥
मत्तस्य वा प्रस्रवतः क्लिन्नमूत्रेण पच्यते ॥
रक्तपित्तकफैर्वाऽपि दुष्टैर्वाऽपि समन्वितः ॥ ९ ॥
अभिघाताद्व्रणे वाऽस्य नीलं वा रक्तमेव वा ॥
शूनं सवेदनं सोष्णं संहर्तुं न च शक्यते ॥ १० ॥
सर्वं वाऽप्येकदेशं वा शून्यं भवति नाहितम् ॥
( †स्फुटिता)स्फुटितं वाऽपि व्रणे वा तत्र दृश्यते ॥ ११ ॥
रेतसो निग्रहान्मेढ्रेऽपिटकाग्रन्थयोरपि ॥
बाध्यते पीड्यते वाऽपि मूत्रं वा न प्रवर्तते ॥ १२ ॥
मुक्तं वा प्रस्रवेन्नित्यं श्याववर्णं च दृश्यते ॥
दोषधातुप्रकोपेन निदानं ब्रुवतः शृणु ॥ १३ ॥
विवर्णमुष्णनीलं च पीतं पित्तेन जायते ॥
(*ताम्रं सवेदनं सोष्णं कोपाद्रक्तस्य जायते ॥ १४ ॥ )
शूनं वाऽप्यरुणं वाऽपि कफेन कठिनं भवेत् ॥
शीतस्निग्धं च शूनं च विस्रं वाऽत्यर्थवेदनम् ॥ १५ ॥

---

* खपुस्तके नास्ति पाठोऽयम् ॥

† खपुस्तके नास्ति । * कपुस्तके नास्ति पाठो धनुश्चिह्नीयमध्यगः ।

---

१ ख. °र्वातदेयप° । २ ख. वा । ३ क. °नजल....' । ४ क. °भियातव्रणे । ५ क. विस्राव्यास्य° ।

म्लानं वातेन परुषं श्यावं चात्यर्थवेदनम् ॥
संनिपातात्तु दोषाणां सर्वलिङ्गानि लक्षयेत् ॥ १६ ॥
व्यक्तानि सर्वलिङ्गानि मेढ्रस्थानगतानि च ॥
निष्क्रष्टुं तत्प्रवेष्टुं वा वेदनार्तो मतङ्गजः ॥ १७ ॥
*............................................ ।
न शक्नोति प्रवेष्टुं वा निष्क्रष्टुं शूनमेहनम् ॥
अथ कोशस्थमेढ्रो वा मूत्रं कृच्छ्रेण मेहति ।
निष्क्रष्टमिव शूनं हि प्रलम्बं चास्य दृश्यते ॥
वेदनार्तश्च मातङ्गो वालुकापांशुकर्दमैः ।
जलेन चाप्यवकिरेत्सततं बहुशो गजः[1] ॥
क्रिमयो वाऽस्य जायन्ते शीर्यन्ते वारि सर्वशः ।
काला—वर्तनान्[2]मेढ्रसंवादव्याधिना नृप ॥
एतैर्निदानैर्जानीयान्मेढ्रक्षाणीं गजस्य च ।
चिकित्सितमतस्त्वं च शृणु कीतर्यतो मम ॥
उत्पन्नमात्रसंबन्धे नुतकां (?) प्लावयेद्गजम् ।
अमुक्ते[3]ष्वनुमुक्तेषु लिङ्गं शूनं भवेद्यदि ॥
विमुक्तशुक्रो मातङ्गः सद्यः संपद्यते सुखी ।
अत्यङ्गं यदि शूनं स्याच्छतधौतेन सर्पिषा ॥
सर्पिर्मण्डेन वा मेढ्रं बहुशः परिषेचयेत् ।
प्रकृतेः सह्यते नास्य सर्वमेको विधीयते ॥
क्षारवृक्षत्वचोभिर्वा सिद्धं मधुरकैर्घृतम् ।
शतावर्या च निष्क्वाथे बलाभ्यां मधुकेन च ॥
सम्यक्सिद्धं सदुग्धं च तदभ्यञ्जनमिष्यते ।
उदुम्बरत्वक्कल्केन घृतमिश्रेण लेपनम् ॥
त्वग्भिर्वा क्षीरवृक्षाणां सघृताभिः प्रलेपयेत् ।
सर्जार्जुनेन्द्रवृक्षाणां सल्लकीसोमवल्कयोः ॥
धवाश्वकर्णतिनिशत्वग्भिर्वा क्वाथयेज्जलम् ।
पादावशिष्टं संश्रा(स्ना)प्य मेढ्रक्षाणी विलीयते+ ॥

---

*त्रुटितमिवाऽऽभाति ॥ + इतः परं मेढ्रक्षाण्यध्याये कियान्पाठस्त्रुटितः पुस्तकद्वयेऽपीति ज्ञायते ।

---

१ क. °जः ॥ तत्र रेखाश्च जा° । २ क. °तनना° । ३ ख. °क्ते वाऽनु° ।

(?)[†]चणणिमूलं तृणपञ्चकं ससल्लकीवर्द्धं च बिल्वमूलम् ।
आदित्यमल्लीमशिरोहिणीं च चूर्णं तिलानां च स प्रगुच्य..... ॥
लोह्यां दृढायामथवाऽप्युखायां तस्याक्षिणी संप्रतिवार्य सर्वतः ।
स्वेदं च दद्याद्द्विरदस्य हस्ते स्वेदे हृते तस्य ततश्च नेत्रे ॥
सिञ्चेदजायाः पयसा च वैद्यः प्रत्यञ्जनं चेक्षुरकस्य मूलम् ।
घृतस्य मण्डेन मधुप्रयुक्तं तर्कारिवंशा..... .....पत्रभङ्गम् ॥
दुःखं सशोभाञ्जनपत्रभङ्गं पिष्टं तिलानां च विपाच्य कार्यम् ।
स्वेदा यथापूर्वमुदाहृतास्ते गोधूमसिद्धार्थककोरदूषाः ॥
व्रीहिस्तिलाः स्युर्बदरीफलानि*..... .... ..... ..... ..... .... .... ।
अक्षस्य भङ्गं च विपाच्य दुःखे स्वेदोऽस्य नाड्या प्रविचार्य नेत्रे ।
धवस्तिलाः पाटलिपत्रभङ्गैस्तेनैव कल्पेन तथैव कार्यः ॥
स्वेदो गजस्य प्रविचार्य नेत्रमेरण्डबिल्वार्कमथाग्निरब्दैः ।
माषास्त्वदग्वस्तिलपिष्टमिष्टं स्वेदस्तथैवाक्षिनिमीलितस्य ॥
कार्यो यथा[†] ..... .... ..... .... ..... .....विहितः ..... .... ।
अभ्यक्तदेहस्य तु सर्वतोऽपि स्वेदो यथावत्प्रतिवार्य नेत्रे ॥
स्वेदेषु सर्वेषु तथैव कार्यं नेत्राञ्जनं स्यात्परिषेचनं च ।
(※कटुत्रयं स्यात्कटुरोहिणी च सव्याग्निकासैन्धवमित्यनेन ।
चूर्णीकृतेनाऽऽशु गजस्य कुर्यात्प्रधमापनं सम्यगतीव पथ्यम् ॥
सर्वौषधीभिः ) कटुकैश्च सर्वैर्हृद्यैश्च गन्धैरथ सर्पिषा च ।
पुनः पुनस्तस्य करं गजस्य संधूपयेत्संप्रतिवी(वा)र्य नेत्रे ॥
घृतं पुराणं कवलैश्च(?) सैन्धवं नस्यं प्रदद्याद्द्विरदस्य वैद्यः ।
तथा सुरां वाऽपि चिरस्थितां तु चिरस्थितं तु वामेववाच(?) ॥
मृदूनि चित्राणि तृणानि कस्मै मुद्गौदनं चापि घृतप्रगाढम् ।
दद्यान्न कर्माणि च कारयेत स्थानं च शय्या च यथासुखं भवेत्॥१६१०॥

तत्र श्लोकः—

---

[†] इतः पूर्वं पुस्तकद्वयेऽपि हस्तग्रहणाध्याये कियान्पाठस्त्रुटित इति ज्ञायते ॥
* पुस्तकद्वयेऽपि त्रुटितम् । [†] पुस्तकद्वयेऽपि त्रुटितम् ॥ ※ धनुराकारमध्यस्थो नास्ति पाठः खपुस्तके ।

---

१ क. °रोहणं च । २ ख. प्रतिवार्यं । ३ क. प्रदेयं द्विर° ।

एवं क्रियाभिर्विधिवत्कृताभिर्हस्ति(स्त)ग्रहः क्षिप्रमुपैति शान्तिम् ।
तेजो वपुश्चैव च वीर्यपुष्टो रोगप्रणाशात्क्रमशो भवन्ति ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने सप्तदशो हस्तग्रहणाध्यायः ॥ १७ ॥

---

## अथाष्टादशोऽध्यायः ।

---

पालकाप्य उवाच—

संचितैर्बहुभिर्दोषैः कोष्ठे वायुः समीरितः ।
उन्मत्तानि कष्टपनि(?) हस्तोन्मथितसंज्ञकः ॥
स ह्यसाध्यो महाराज प्रयाणं चेत्तुणद्धि वै ।
निदानानि षडेव स्युर्यैर्न जीवति वारणः ॥
आध्मापर्यत्येष मन्यास्थश्लेष्मा हस्तात्प्रसिच्यते ।
संरक्तो मधुरस्तीव्रो मुखाद्गच्छति हस्तिनः ॥
प्रतप्तरूपो विमनाः करेणाऽऽहन्ति मेदिनीम् ।
विलङ्घनं च बहुशः करोति च विघर्षणम् ॥
एवमेतैर्विजानीयात्सप्तरात्राद्यथा गजः ।
(?) सज्योस्वोव्यथयत्यर्थं नमन्ते शङ्कुविद्धवत् ॥
(?) हस्तवालविस्तस्य † ........................ कूजति तिष्ठति ।
अष्टरात्रात्परं तस्य जीवितं नास्ति हस्तिनः ।
श्यावस्तब्धकरो रक्तं मिश्रं वमथुना स्रवेत् ॥
प्रमेहति च यः शुक्रं नवाहात्स विनश्यति ।
श्लेष्मा घुरुघुरान्कुर्वन्करात्स्रवति दन्तिनः ।
ऊर्ध्वं समुत्क्षिपेद्धस्तं मेहतीन्द्रियमेव च ॥
दशरात्रात्तु प्राणांस्तु चतुर्थस्त्यजति द्विपः ।
मञ्जिष्ठाभो गजो यस्तु तथोष्ठः पिटकाश्चितः ॥
स्थानरक्ताभनयनो व्यथते च कुतश्च यः ।
एकादशे स दिवसे पञ्चमो म्रियते गजः ॥

---

† पुस्तकद्वयेऽपि त्रुटितम् ।

---

१ ख. कोष्ठवा° । २ क. °य दोषमन्ये तु श्ले° । ३ ख. सुरक्तो । ४ क. °ञ्जिष्ठभागजय° । ख. °ञ्जिष्ठं भागजय° । ५ ख. °स्थाभर° ।

नीलः श्यावः सितो रक्तस्तथा हस्तः सवेदनः ।
एकेन पश्यतक्षणः(?) स षष्ठो द्वादशाहिकः ॥

तत्र श्लोकः—

षडेते सनिदानाः स्युरसाध्याः कीर्तिता गजाः ।
हस्तोन्मथितसंज्ञस्य विकारस्य समासतः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने हस्तोन्मथितो नामाष्टादशोऽध्यायः ॥ १८ ॥

---

## अथैकोनविंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
त्वया यः संग्रहाध्याय उदावर्तः प्रकीर्तितः ॥
तस्य लक्षणमुत्पत्तिं चिकित्सां च प्रचक्ष्व मे ।
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
रौक्ष्याच्च विविधायासाद्विषमाच्चैव भोजनात् ।
अभोजनान्मनस्तापादुत्थानाच्छयनादपि ॥
वायुः प्रकुपितः स्थानाद्धृदयं संप्रहापयेत् ।
(?)हृदयस्थलः क्रपात्तमत्रगे+.........तथा ॥
(?)गात्राद्यां लघूनवैव*.........नेत्रेविष्टेनमदम् ।
कृच्छ्रं मूत्रं पुरीषं तु वैषम्यं जठरस्य च ॥
स संकुचितपक्षेण उरो विजयते[1] स्फुटम् ।
कदाचित्स्वस्थदेहः स्यादस्वस्थश्च भवेत्पुनः ॥
तस्याभ्यङ्गे तथा पाने तैलं†......स्वरूकस्य वा ।
एरण्डनक्तमालस्य तैलं तच्छान्तये हितम् ॥
विष्किरैर्जाङ्गलैर्मांसै*...... .... ......... .... ।
बस्तयो विहितास्तस्य सनिरूहानुवासनाम् ॥
पञ्चमूलं शृतं क्षोद्रमाविकं वा पयः पिबेत् ।
ग्रहणीदीपनीयानि बृंहणीयानि यानि च ॥

---

+ पुस्तकद्वयेऽपि समाना त्रुटिः। * पुस्तकद्वयेऽपि समानं त्रुटितम्। † पुस्तकद्वयेऽपि त्रुटिः समाना । * द्वयोरपि पुस्तकयोः समानमेव त्रुटितम् ।

---

१ क. ख. विजयन्ति ।

तानि कार्याणि सर्वाणि रोगशान्तौ क्रमादिति ।

इति श्रीपालकाप्ये गजायुर्वेदमहाप्रवचने वृद्धोपदेशे द्वितीये क्षुद्ररोगस्थान *उदावर्तो नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथ विंशोऽध्यायः ।

---

अथ भगवन्तं पालकाप्यं रोमपादोऽङ्गाधिपतिरपृच्छत्—'भगवन् य एष उत्कर्णको नाम व्याधिः कथं भवति, किं चास्य विज्ञानं चिकित्सितं च भवेत्' इति ॥

अथ स उवाच पालकाप्यः पृष्टोऽङ्गराजेन—इह खलु भो वारणानां वातपित्तकफैः सर्वव्याधयः संभवन्ति । अत एव शरीरं धारयन्ति स्वेषु स्थिताः स्थानेषु† कुपिताः, समधातुप्रविभक्ताः, कुपिताः स्वेषु स्थानेषु धाता(तून्)न्यूनातिरिक्तान्व्याधींश्च जनयन्ति ॥

तत्र रूक्षताल्पलघुकटुकविषमतिक्तकषायभोजनादभिवातान्मध्याप्रयोगाद्धृतश्वस्वरि(?)क्लेशादव्याधिविभागज्ञैः क्रूरैश्चोपकारैर्मनसश्चोपतापाद्दुःस्थानशयनाद्रात्रिजागरणात्कुप्यति पवनः । स कुपितः कष्टं †वर्तलाङ्गूलमन्याः स्तम्भयति । तं कोष्ठमपानि च स्वास्यनिश्चेष्टान्यङ्गान्यभिसमीक्ष्य द्रया(?)दुत्कर्णकं नाम व्याधिं वातजं विकारं प्राणहरं नागस्य ॥

तस्य घृतवसातैलैः सुखोष्णैः सर्वसेकः । वातहरगणसंयुक्तं स्वेदं कारयेदभ्यङ्गपरिमर्दनं च । तीक्ष्णोष्णाम्ललवणस्निग्धं हितं मितं भोजनं व्यायामस्य मपथ्य(?)सुखशय्यास्थानानि मनोनुकूलानि पवसानि च विदध्यात् । अथास्य श्योनाकाग्निमन्थचिरबिल्वपाटलाश्रीपर्णीवर्षाभूपत्रभङ्गान्समानीय पयसा क्वाथयित्वा घृतमण्डेन कृताभ्यङ्गस्य नाडीस्वेदं विदध्यात् । खड्गमहिषक्रौञ्चमयूराणामन्यतमस्य मांसेन दधिमस्तुसंयुक्तामुष्णां यवागूं सुस्निग्धां सुव्यक्तलवणां प्रातः पाययेत् । व्याधिरुत्कर्णकः पीतेन तेन विनश्यति । स्तूपस्वा(?)हिंस्रागुडूचीचिरबिल्वेषु तैलं विपाच्याभ्यङ्गं कारयेत् । $नक्तक्रौञ्चकुक्कुटप्लवमुद्गम¶-

---

* सर्वेष्वपि पुस्तकेष्वत्र 'उदावर्तनाम पञ्चत्रिंशत्तमोऽध्यायः' इति वर्तते तर्हि तत्पञ्चत्रिंशत्तमत्वं ग्रन्थारम्भतः, न तु द्वितीयस्थानारम्भतः । † 'स्थानेष्वकुपिताः' इति भवेत् । † 'वक्त्र' इति भवेत् । $ 'नक्तं' इति स्यात् । ¶ 'मद्गु' इति भवेत् ।

---

१ क. उदात्क° । २ क. °गाद्धत° । ३ क. कृतश्चो° ।

गुराणामन्यतमस्य द्वयोः सर्वेषां वा यथोपपत्त्या यवागूदधिपिप्पलीमरिचसुरभीकृतान्स्नेहसस्वाता(?)पाययेद्वारणम् । ततश्चैनं वाराहं वा रसं भूतैलैंपयेत् । मात्रया जीर्णविशुद्धकोष्ठं भोजयेत् । अथास्य प्रवृत्तमूत्रस्य पुरीषयोर्हनुस्तम्भी च भवति । मत्याख्येयः स्यादुत्पन्नारिष्टश्च वारणः । तस्मादग्निमिव वेश्मन्युत्थितं सर्वयत्नैश्च शमयेत व्याधिमुत्कर्णकम् ॥

तत्र श्लोकाः—

मेदःस्थाने स्थितः प्राणोऽपानो······स्थिसंस्थितः ।
समानो मांसमध्यस्थो व्यानो रेतसि संस्थितः ॥
उदानश्च भगवतु(?)मज्जस्थाने व्यवस्थितः ।
प्राणविप्रतिपत्तौ तु दुःखोच्छ्वासो भवेद्द्विपः ॥
चित्तविभ्रममूर्छा च शीतोच्छ्वासस्तथैव च ।
लाला प्रवर्ततेऽत्यर्थं क्षयश्चैव तथा भवेत् ॥
वेदनार्तश्च······जरे तथा श्वसिति वारणः ।
अवगण्डाश्च जायन्ते मूत्रसङ्गस्तथा परे ॥
शर्कराश्चैव जायन्ते तथा शुक्रनिरोधनम् ।
अप्रसृष्टस्य त्वस······स्य तथा मूत्रपुरीषयोः ॥
समानस्यातिकोपेन भोजनं नाभिनन्दति ।
अग्निदुर्बलपार्श्वैव वेदनार्तश्च वारणः ॥
आनाहाश्चापि जायन्ते हृद्रोगाश्च महीपते ।
गुल्माश्चैव तु विज्ञेया देहवार्पि(?) तथाऽपरः ॥
क्रुराश्चैव तु विज्ञेया घोरा प्राणविनाशनः ।
व्यानविप्रतिपत्तौ तु धातुवैषम्यसंभवः ।
तस्याधिकं—राश्चैव संभवन्ति क्षये तथा ॥
छवीदोषाश्च जायन्ते शोफा अपि तथा परे ।
एकाङ्गभङ्गस्तम्भश्च संकोचो भङ्ग एव वा ॥
समकं नयनं भेदः स्वेदो वमथुरेव च ।
अक्षिरोगाश्च जायन्ते ते तथोक्ता य एव च ॥
अपानश्चापि······ ······ ······ ······ससंभवस्तथा घनः ।
शूलं च गलगण्डं च······ ······ ······ ······ ······ ······ ······ ॥

कद्वयेऽपि क.. स्तर° । २ क. °द्विसंस्थितः । ३ क. °क्रविरो° । ४ क. यथोक्ता ।
१ ... करणाश्चै° । ५ क.

इन्द्रियाणां निरोधात्स्यादुदावर्तश्च दारुणः ।
शर्करावस्तिशूलं च सङ्गोमूत्रपुरीषयोः ।
इत्येष व्याधिनिर्देशो भेदाश्च बहवः स्मृताः ॥
अथ श्लेष्मप्रकोपेण गौरवं स्तम्भ एव च ।
श्वेताभासो भवेन्नागः कण्ठश्लेष्मस्य जायते ॥
हृदयं पीड्यते वाऽस्य यवसं नाभिनन्दति ।
भोजनस्य विपाकश्च क्षयश्चैव तथा भवेत् ॥
अथ पित्तप्रकोपेण पीतगात्रो भवेद्द्विपः ।
मृदुशीताभिलाषश्च मूर्छा शोकश्च जायते ॥
शोणितस्य प्रकोपेण पाण्डुरोगश्च जायते ॥
दद्रवः क्रुमिकोष्ठश्च वपुर्वैवर्ण्यमेव च ।
एतान्येव तु सर्वाणि वातपित्तकफासृजाम् ।
दोषाणां संनिपातेन प्राणार्दाश्चात्र लक्षयेत् ॥
एवमेतदधिष्ठानं चेतनाधातुसंज्ञितम् ।
अव्यक्ताश्चैव राजेन्द्र देवब्रह्मगुणार्जनम् ॥
अधिष्ठानस्य गोप्ता तु *विज्ञतां चेन्द्रियेण तु ।
जीव एष महाराज स्वगुणासंज्ञितो भवेत् ॥
एते दात्वग्गणसंयुक्तौ(?)देहिने विप्रभोजने ।
प्राणापानौ च पश्चा वा(?)भूत्वा वायुः शरीरिणाम् ॥
.... .... .... .... .... .... .... .... बिभर्ति भगवान्प्रभुः ।
सर्ववातात्मकं विद्याज्जगत्स्थावरजङ्गमम् ॥
मनोवाक्कायचेष्टासु विश्वरूपो हि मारुतः ॥
तस्मात्सदाविहारैः——स्नेहनैर्बृंहणैर्हितैः ।
प्राणानां रक्षणार्थं च वीते पत्नं समाचरेत् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने माहपाठ उत्कर्णको नाम विंशोऽध्यायः ॥ २० ॥

---

* 'श्लेष्माऽपि' इति भवेत् । * 'विज्ञाता' इति स्यात् ।

---

१ क. °ष्मश्च जा° । २ क. °गार्चन° । ३ क. एव ।

## अथैकविंशोऽध्यायः ।

अयमन्यो महाराज व्याधिर्वातगतिस्तु यः ॥
प्रोच्यसे वारणेन्द्राणां कष्टः संज्ञाप्रणाशयः ॥
रूक्षैः कषायरूक्षैर्वा वातलैरुपसेवितैः ॥
रसैर्वातगतिर्विद्याव्यायमेन क्षणेन च ॥
(?)मस्तुवाच्यकस्माद्वानं घनेनोपवनेन वा ॥

तत्र खलु भो वातगतिव्याध्युपसृष्टस्य निदानानीमानि भवन्ति । तद्यथा— भ्रमति पतति विह्वलति *गुह्यति स्तनति न विजानाति संज्ञाम्, प्रत्यर्थं वेदयति +प्रहीत्युक्तेनापि सर्पति निषीदत्युत्तिष्ठति क्षम्यमाणः क्रुध्यति स्तम्भं पर्यैति स्थूलोच्छ्वासश्वान क्षमेन(?)ते सर्वमिच्छति हन्तुमुन्मत्त इव भवति ॥

तस्यैवं वातगतिव्याध्युपसृष्टस्य प्रातरनाशितस्य *सुरा प्रसन्ना वात्यहिवातया(?)मनुद्गरीसनयुक्तां दद्यात् । अथैनं *पयसा नकुलस्य माषसरिषपखङ्गकटुकमत्स्यैः सघृतैर्धूपयेत् । भूयश्च सर्जरसमरिचहिङ्गुमनःशिलाभिः सघृताभिर्धूपयेत् । ततश्च कर्कटककटुकालाबूनदीमत्स्यशकलैः सघृतैर्धूपयेत् । अथवा ह्रीवेरोशीरबिल्वस्योनाकमांसीमञ्जिष्ठाकुष्ठहिङ्गुलाक्षातगरतरुणबिल्वैः सघृतैर्धूपयेत् ॥ मरिचमनःशिलासूक्ष्मैलाभिः पयसा श्लक्ष्णं पिष्ट्वाऽञ्जनं कुर्यात् । हिङ्गुमरिचशिखिपित्तैराञ्जतस्य प्रत्यञ्जनं कुर्यात् । तक्षाया(?)ग्निमन्थनक्तमालपाटलीपत्रभङ्गाञ्जले क्वाथयेत् । दद्याद्वा त्रिरण्डतर्कारीमांसीमूलानि । ततश्च च तुषं भवता(?)परिसाध्य तेन निक्वाथेन विधिवद्घृतं विपाच्य कुलत्थरसेन सह पाययेन्नागम् । उभयोः पञ्चमूलयोर्निक्वाथेन मुद्गयूषं सुखोष्णं सघृतं पाययेत् । भोजयेच्च । ततश्चैनं पयसानि यथोक्तानि वातप्रशमनानि दद्यात् ॥

तत्र श्लोकः—

विविधैरुपक्रमैः शेषैर्वातगतिं समीक्ष्य मेधावी ।
प्रयत्नेनाशु चिकित्सितुमुपेक्षिहेति(?)मानर्हामति ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने वातगतिर्नामैकविंशोऽध्यायः ॥ २१ ॥

---

+ 'न्यामयेन' इति स्यात् । * 'मुह्यति' इति स्यात् । + 'एहीत्युक्तोऽपि न' इति स्यात् । * द्वितीयान्ते स्याताम् । * 'वसया' इति स्यात् ।

---

१ क. कष्टं संज्ञाप्रणाशनम् । २ ख. वातैलै° । ३ क. °स्माद्धनघ° ।

## अथ द्वाविंशोऽध्यायः ।

अङ्गाधिपतिरव्यग्रं पालकाप्यं द्विजर्षभम् ।
विनयेनोपसंगम्य पप्रच्छ स कृताञ्जलिः ॥
यथा मन्याग्रहो व्याधिः प्रादुर्भवति हस्तिनाम् ।
साध्यः स च यथा वैद्यैस्तन्मे व्याचक्ष्व पृच्छतः ॥
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ।
शृणु सर्वं विशेषेण व्याधिं मन्याग्रहं नृप ॥
सादानं च निदानं च तथैव सचिकित्सितम् ।
सहसा वा प्रसक्तं वा वर्णादानेन वाह्यते ॥
धावतः प्लवतो वाऽपि सहसाऽङ्कुशनिग्रहात् ।
वने प्रतिगजस्तम्भकलादिभिरथापि वा ॥
असम्यक्कार्यतो वाऽपि वारणस्य च वा वधम् ॥
प्रतिहस्त्यभिघाताद्वा प्रकोपादनिलस्य च ।
एवमादिभिरन्यैश्च सेचितैर्मन्ययोर्गतः ॥
संतापाः श्वयथुस्तस्य वेदना चोपजायते ।
मन्ययोः करिणः स्कन्धे ग्रीवायां चैव दन्तिनः ।
तदाश्रयेण चेष्टन्तां निवृत्तिश्चास्य जायते ॥
परिम्लानाक्षिवदनोऽपरगुह्यं च लक्ष्यते ।
कृच्छ्राल्लालामहा— —रनुयुङ्क्ते शनैः शनैः ॥
तं सुखोष्णैस्त्रिभिः स्नेहैः प्रक्काथ्य परिषेचयेत् ।
कर्तव्यं मर्दनं चापि मन्यादिष्वञ्जनादिभिः ॥
कदुष्णैश्चापि निक्काथैः कार्यं तस्याभिषेचनम् ।
तथा धूपोदकैर्वा— —वसाभिः कारयेद्भिषक् ॥
कार्यो मत्स्यादिभिः स्वेदो यथा दोषमुपक्रमे ।
व्रीहीन्कङ्गून्यवान्माषान्गोधूमान्विपुलांस्तिलान् ।
अतस्येरण्डयोर्बीजान्याढकीशणयोरपि ।
मन्यास्तम्भे तु संगृह्य पञ्चमूलं च पेषयेत् ॥
तं कल्कं तिलसंयुक्तं पी(पे)षयेत्कां च मारयेत् ॥

---

१ ख. कदूष्णै° । २ क. ख. वसोभिः ।

पूर्वकाये ततस्तस्य तेन कल्केन लेपयेत् ।
वेदना श्वयथुः स्तम्भस्तेन शाम्यति मन्ययोः ॥
शाल्योदनं ससर्पिष्कं भोजयेद्यूसंयुतम् ।
मृदूनि हरितान्यस्मै यवसानि प्रदापयेत् ॥
तैलं नस्ये घृतं पाने व्याधिमुक्ताय दन्तिने ।
दद्यादथो क्रमात्तस्मै बलं मांसं विवर्धयेत् ॥

*इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने वृद्धोपदेशे महापाठे द्वितीये क्षुद्ररोगस्थाने मन्याग्रहो नाम द्वाविंशोऽध्यायः ॥ २२ ॥*

---

अथ त्रयोविंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ।
मदक्षीणं हि मातङ्गं मह्यमाचक्ष्व पृच्छते ॥
स पृष्टस्त्वङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ।
मदान्मनुजशार्दूल मातङ्गो नाभियोज्यते ॥
प्रहर्षादतिमात्रं च व्यायामं कुरुते गजम् ।
नदीतटनगानां च विहारात्परिधावनात् ॥
श्रमादनशनाच्चापि क्षीयन्ते सर्वधातवः ।
करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च परिश्रु(स्रु)तेः ॥
मनसो विभ्रमाद्धर्षादत्यन्तं कुरुते क्षयम् ।
स क्षीणधातुर्विमनाः शोषमृच्छति वारणः ॥
मदेन क्षीणधातुत्वान्मदक्षीणः स उच्यते ।
तस्य दुग्धं शृतं गव्यं सघृतं पानमिष्यते ॥
जीवकर्षभकाभ्यां च शृतं शर्करया सह ।
द्वाभ्यां वा पञ्चमूलाभ्यां शृतं सघृतशर्करम् ॥
पयो वा मधुकद्राक्षाबिल्वैश्च सह साधितम् ।
सफाणितं पिबेद्वाऽपि धारोष्णं वाऽपि संस्कृतम् ॥
कृशरां सुशृतां भोज्यो दध्ना शाल्यन्नमेव च ।
रसेन कृष्णमत्स्यस्य रोहितस्यापि वा गजः ॥

---

१ क. विहरणात्प° ।

*पञ्चर्तुसुखसक्षं च सुखस्थानं च वारणः ।
भवेत्सुखावलानश्च यथासुखपरिक्रमः ॥
पेशलैर्मधुरैः स्निग्धैर्बृंहणीयैरुपाचरेत् ।
मदक्षीणं गजं सम्यग्यवसैः पानभोजनैः ॥
वक्ष्यते समदोषश्च मदोत्पत्तिविनिश्चयम् ॥
मनीषिभिर्मदो दृष्टः स्वस्थवृत्ते तु हस्तिनाम् ॥
सोपद्रवचिकित्सा च प्रभिन्नेषु प्रपद्यते ।
मदे व्यय(प)गते क्षीणं तं सम्यग्बृंहयेद्गजम् ॥
इक्षुभिः शालिपादेन दूर्वया हरितैस्तृणैः ।
पल्लवैः कुवलैश्चैनं तर्पयेद्विधिवद्भिषक् ॥
एवं यस्तर्पयेत्सम्यग्बृंहणीयैरुपक्रमैः ।
समुद्रवसनां कृत्वा स राजा वसुधां जयेत् ॥
आरोग्या बलवन्तश्च वारणास्तस्य भूमिप ।
भवन्ति संधेयमदाः संग्रामे च जयावहाः ॥
योगेनैतेन राजेन्द्र यस्तु प्रक्रमते द्विपान् ।
कालाः कालेषु माद्यन्ति वयोतीता अपि द्विपाः ॥
ये च नष्टर्तुका नागा ये चर्तुसुनियोजिताः ।
सुपुष्टाश्चापि ते राजन्मदं गृह्णन्ति वारणाः ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ।

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने महापाठे मदक्षीणो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## अथ चतुर्विंशोऽध्यायः ।

---

बभूव राजा प्रथितः पृथिव्यां महाधिपः शक्रसमप्रभावः ।
हुताग्निहोत्रं परमं मुनीनां सत्सत्यवेदव्रतधर्मयुक्तम् ॥
राजा द्विपानां हितकाममूचे तं पालकाप्यं शिरसा प्रणम्य ।
यः पोष्यमाणो विविधैः प्रयोगैर्नाऽऽप्यायते क्षीयत एव नागः ॥

---

* 'पञ्चर्तु सुखशय्यं' इति भवेत् ॥

---

१ ख. मद्ये वय° । २ क. स च राजा वसुंधराम् । आ° । ३ ख. ये चात्र सु° । ४ क. ख. राज्ञा । ५ क. प्रोष्यमाणो ।

तस्य क्रमाप्यायनकारणं तु यथागमं मे भगवान्ब्रवीतु ।
स एवमुक्तस्तु नराधिपेन भृशं सुनिश्चित्य मुनिर्बभाषे ॥
महाभयाद्वायुशिराः कोपयति वृद्धा……………… ।
तस्य प्रकोपाद्यवसान्नपानैर्नाऽऽप्यायते क्षीयत एव नागः ॥
यत्क्षीयते तेन कृशः स नागस्तस्यापि कार्यं कुशलेन शीघ्रम् ।
वक्ष्याम्यहं तेन तु राजसिंह कृष्णं बलं क्षीणविधिर्यथावत्* ॥
विरेचनं तस्य तु सर्पिषैव शुद्धे च कोष्ठे त्वथ बृंहणं स्यात् ।
मनःप्रसादं जनयेत्तदाऽस्य प्रीतिर्बलं चैव विवर्धतेऽस्य ॥
मेहांश्च दद्यात्कवलानथास्मै*…………………… ।
काकोलितर्कार्यमृतात्मगुप्ताविदार्यपामार्गयुताश्वगन्धा ॥
एरण्डमूलं त्वथ मुद्गपर्णी प्रतिस्वभावं नपति स्वमांसम् ॥
समाषपर्णी सहिरण्य*…………………… ।
…………………कारा सपारिभद्रा त्वथ शाल्मली च ॥
आवर्तसीन्वा(?) सहितोऽग्निमन्थस्तथाऽऽटरूषं सह कच्छुराभिः ।
एवंप्रकाराणि च बृंहणानि सांकर्ययुक्तानि यथाक्रमेण ॥
दद्याददाहीनि समीक्ष्य काले यथाग्निमात्रं कवलांस्तु मुख्यान् ।
सधन्वनं शेलुशिरीषकाश्मर्यां समोरटां क्षीरविदारिकां च ॥
प्राग्भोजने चोत्तरभोजने वा त्रीन्द्वौ तथैकं कवलं तु मुख्ये ।
पलानि विंशत्यल(?)संख्ययाऽस्मै तथोत्तमे मध्यजघन्ययोश्च ॥
नो क्षीरपानं सघृतं च देयं प्रागुत्थितस्थानगताय दद्यात् ।
शाल्योदनं चैव घृतौदनं च तृतीयभागेऽहनि सत्त्वभोज्यम् ॥
भूपस्तथा सात्म्यविशुद्धिहेतु परीक्ष्य नागं च दशैव काले ।
मृद्वः सुसिद्धं विशदं च भोज्यं शाल्योदनं सस्फुरितं च घासम् ॥
कुलेचराणां जलचारिणां च सर्वाणि मांसानि हितानि राजन् ।
स्थाल्यां सुसिद्धानि घृतोत्तराणि भोज्यस्तथा दाडिमसाधितानि ॥
कल्पे तु दत्ते द्विरदो*…………………… ।
…………………दभोज्यः तदन्नशेषं च रसानुपानम् ॥
आनूपसत्त्वोदकजाङ्गलानां मज्जावसाभिः खलु तस्य देया ॥

* एतदग्रे खपुस्तके त्रुटिचिह्नं वर्तते ॥ *पुस्तकद्वयेऽपि त्रुटिचिह्नं दृश्यते ।

१ क. °सीत्वा । २ ख. °नि सापुर्य° ।

ज्ञात्वा त्ववस्थासदृशं च काले कृशं विदित्वा भ्रमपीडितं च ।
सदाहमूर्छाभ्रमयुक्तमेनं पादेषु गाढं परिगाढयेत ।
शेषं विधानं तु कृशेषु पश्चात्क्षयेषु तद्वक्ष्यति विस्तरेण ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने चतुर्विंशः कृशाध्यायः ॥ २४ ॥

---

अथ पञ्चविंशोऽध्यायः ।

---

अथ बलक्षीणमध्यायं व्याख्यास्यामः ॥

इति ह स्माऽऽह भगवान्पालकाप्यः । विराट्पृच्छति मयेज्ञयेन्नित्यम्[1] (?)
न चापि तैलं न घृतं न दुग्धं न चापि मांसं न रसं त्वमन्य(?)
मद्येन शुध्येत्सकणैस्तृणैश्च .... .... .... .... .... .... .... .... .... .... .... ।

अबद्धमांसो वठरोऽतिमात्रं न च स्थिरः कर्मसु संप्रगत्तम्[2] ।
स हीयते यो द्विरदो बलेन तस्माद्बलक्षीण इति प्रदिष्टः ॥
उत्साहतेजोबलविप्रयोगाद्व्याधिः स्पृशत्येवमतीव कष्टः ।
तैलं घृतं वा स तु सप्तरात्रं शुद्धं पिबेत्स्नेहविधौ यथोक्तम् ॥
मायूरवाराहरसैर्यथावदैणैश्च लावैरथ कौकुटैश्च ।
स्निग्धैः रसैर्जाङ्गलजैश्च भोज्यः शाल्योदनं तांश्च रसान्पिबेत्सः ॥
सफाणितां वाऽपि पिबेत्प्रसन्नां चिरस्थितां चापि तथाऽऽसवं तु ।
शृङ्गाटकीनीक्षुविशानि दूर्वा सफाणितं स्याद्यवसं विधेयम् ॥
स्निग्धैश्च पथ्यैश्च रसैर्यथावत्संवर्धयेत्तस्य बलं द्विपस्य ।
संजातवीर्यं बलसंप्रयुक्तं क्रमेण कर्माण्यपि कारयेत ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने बलक्षीणो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

अथ षड्विंशोऽध्यायः ।

---

अथातः श्लेष्माभिषन्ननामाध्यायं व्याख्यास्यामः ॥

(इति ह स्माऽऽह भगवान्पालकाप्यः ।)श्लेष्माभिवर्णः संभवति स्निग्धमधुरगुरुघनशिशिरपेशलाहारस्य दधितिलपललगुडविविधजलचरानूपमांसरसनक-

---

१ क. °हशानि का° । २ ख. °येज्ञायन्नि° । ३ क. °र्म च सं° ।

मकरशिशुमारकुंकुटकोरङ्गमहिषवराहमांसरसभोजनाबिस्यं सुविहितान्वययवसकवलकुवलपल्लवोपयोगादव्यायामादभ्यपरिसरणीं क्षीरवसामेदःसर्पिषामतिसेवनाद्वा श्लेष्मा प्रवृद्धः सर्वशरीरमभिव्याप्य जनयति कुष्ठकिटिभ(?)दद्रुपटलकण्डूकिलासानि । तस्योष्णक्षीरकटुकलवणतिक्तकषायाणि भक्ष्यभोज्यपेयलेह्यानि दद्यात् । अस्नेहलवणान्यवान्कोद्रवान्मुद्गकुलत्थपोरन्यत मस्य यूषेणाभोज्ययवसानि चोष्णवीर्याणि यवसाध्यायोक्तानि दापयेत् । वद्ध्वासवकषायपानानि यथायोगं दद्यात् । त्वग्दोषाणां प्रवृद्धानां प्रच्छनच्छेदनलेखनदहनाहरणानि यथायोगं कुर्यात् । द्विव्रणीयोक्तेन विधिना यथाशास्त्रमुपाचरेत् । ( *सर्षपहरितालकीसीसराष्ट्रिकारसाञ्जनमनःशिलाभिर्लवणगोमूत्रयुक्ताभिस्तिलतैलं पक्कं सर्वाभ्यङ्गं कारयेत् । ) व्रणविधिनाऽथोपक्रमेद्विधिवदिति ॥

तत्र श्लोकः—

व्यायामैः परिसरणैः क्रमेण धीमांस्तीक्ष्णोष्णैः कटुकषायतिक्तरूक्षैः ।
श्लेष्मघ्नैर्नृप रसभोजनैश्च हन्यादुद्वृत्तं कथनमेव वायुरन्तः परीक्ष्येत्(?) ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने श्लेष्माभिपन्नो नाम षड्विंशोऽध्यायः ॥ २६ ॥

---

## अथ सप्तविंशोऽध्यायः ।

---

अथ भगवन्तं पालकाप्यं रोमपादः पप्रच्छ—भगवन्वारणानां मुखद्वारविशुद्धानां चिकित्सितं व्याख्यातम् । नवग्रहाणां (†मुख)द्वारणामनःसंतापदानामरण्याद्ग्रामममानीतानां चिकित्सा नोक्ता । तेषां कथं चिकित्सा भगवन्मनो मे मुह्यति यथा नु तेषां सात्म्यानुलोमं भवति । तथा मे वक्तुमर्हसि ॥

ततः प्रोवाच—भगवान्पालकाप्यः—इह खलु भो नवग्रहाणां नागानां ग्रामेषु भोजनस्थानशयनेषु च विविधदुःखप्रपन्नानां भूयिष्ठं व्याधयः संभवन्ति। मूत्रसङ्गो मूर्छा गात्रस्तम्भयवगण्डगलग्रहवातगुल्माश्चान्ये च बहवः ॥

तेषां चिकित्सितम्—कंन्दलीकन्दनालिकेरशृङ्गाटककसेरुबिशमृणालशालूकानि वनसात्म्यानुलोमिकं भक्ष्यं दद्यात् । शल्लकीचारमयूकानां मूलान्यभिघातसमुत्पन्नप्रसङ्गप्रशमनार्थं वनसात्म्यानुलोमिकं च भक्ष्यं दद्यात् । मोदक-

---

* धनुराकारमध्यस्थपाठः कपुस्तके नास्ति । †कपुस्तके नास्ति ।

---

१ क. °कुर्कुट° । २ क. द्वाराणां म° । ३ क. कदली° । ४ क. मोचकन्दलीरुच° ।

न्दभीरुं च पनसफलशतावरीशृङ्गाटककसेरुकपद्मबीजानि वनसात्म्यानुलोमिकं भक्ष्यं दद्यात् । यवसान्योदकानि विचित्राणि मृदूनि हरितानि वनसात्म्यानुलोमिकं भक्ष्यं दद्यात् । भल्लातकमधुक्षीरकोमलकल्कं सकपोतनाद्युतं काञ्चनवग्रहणां मनःसंतापदं वा वनसात्म्यानुलोमिकं भक्ष्यं दद्यात् । कदलीभल्लातकपारामधूकारिवदनामूलानि नवग्रहाणां वातगुल्मप्रशमनार्थं वनसात्म्यानुलोमिकं भक्ष्यं दद्यात् । अश्मन्तकप्लक्षपनसशल्लकीचन्दनशिरीषिकाभल्लातकमधूकप्रियालानां मूलानि यवगण्डासारगलग्रहवमथुवातश्लेष्मविकारप्रशमनार्थं वनसात्म्यानुलोमिकं भक्ष्यं दद्यात् ॥

तत्र श्लोकः—

उत्सृज्य सर्वकर्माणि मुखद्वाराणि शोधयेत् ।
अन्नायत्तं हि नागानामारोग्यं जीवितं बलम् ॥
मुखद्वारविशुद्धस्य वारणस्य महीपते ।
रोगाः सम्यक्प्रशाम्यन्ति बलं मांसं च वर्धते ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने वनसात्म्यानुलोमिकनामा सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अथाष्टाविंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ।
तलकाशीं सभेषज्यं सनिदानं प्रचक्ष्व मे ॥
तस्मै प्रोवाच भगवानङ्गाय परिपृच्छते ।
तलकाशीं सभैषज्यं सनिरुक्तं ससंभवम् ॥
रक्तपित्तकफाः कोष्ठे सवाताः कुपिता यदा ।
तले यतः प्रकाशन्ते तलकाशी ततस्तु सः ॥
स दुर्बलस्ततो नागः शरधानाश्मलोष्ठसु ॥
स्थाणुनाऽभिहि(ह)तो वाऽपि घृष्टो वा परिधावनात् ।
मूर्खप्रयुक्तो मुक्तो वा तथाऽतिगमनादपि ॥
नदीतटगिरीणां वा विषमाणां परिक्रमात् ।
शर्करादग्धभूमीनामूषराणां च सेवनात् ॥

---

१ क. काञ्चनं नवग्रहाणां । २ क. °मिकं ना° ।

क्षतो वाऽप्यतिघृष्टो वा पच्यते च ततस्तलः ।
स्फुटिताश्चोद्धता वाऽपि विशीर्यन्तेऽपि वा नखाः ॥
*········न्ते वाऽथ भक्ष्यन्ते विपद्यन्तेऽपि वा नखाः ।
स विपन्नतलस्त्वेवं व्रणैरागन्तुदोषजैः ॥
न शक्नोति द्विपो गन्तुं वेदनार्तो महीपते ।
स कर्कटकवत्कृच्छ्राद्व्रजेच्च तलरक्षणात् ॥
गात्राणामुरसश्चापि विक्षोभो जायते व्यथा ।
श्वयथुर्वेपथुश्चास्य व्यायामात्तलरक्षणात् ॥
एवं स तलकाशीति तलरोगो निरुच्यते ।
स्थाने तिष्ठेत्सुविदितो स्नेहाभ्यक्ततलो गजः ॥
(*अदूरपरिसर्पंश्च गच्छत्यच्छन्दतो गजः ।)
सर्पिषा सर्वसेकश्च प्रभूतेन प्रशस्यते ॥
चतुर्थीं तु दशां प्राप्ते तलकर्म विधीयते ।
यौवनस्थस्य बलिनः सत्त्वयुक्तस्य दन्तिनः ॥
क्षीणदुर्बलबालानां कृशानां पादरोगिणाम् ।
ऊर्ध्वसप्ततिकानां च तलकर्म न कारयेत् ॥
प्रशस्ते तिथिनक्षत्रे तलकर्म समाचरेत् ।
स च सर्वो विधिः कार्यः केशेषु विहितो यथा ॥
शस्त्रेण शोधयेद्वैद्यो यदि च्छेद्यतलो भवेत् ।
मांसं चाप्युद्धतं धूतं स्फुटितं पूति विज्वलम् ॥
न तलं क्षणुयात्तस्य न च रक्तं प्रवर्तयेत् ।
शस्त्रेण शोध्यं बलिनस्कृत्तं स्फुटितमेव च ॥
सशोणितं सपूयं च क्षणुयात्तस्य तत्तलम् ।
शस्त्रकर्म क्षते कुर्यात्तलानां दहनं हितम् ॥
मधूच्छिष्टं गुडं तैलं मज्ज मेदश्च पाचयेत् ।
योगेनैतेन तप्तेन दाहयेत्कुशलो भिषक् ॥
अर्जुनस्याश्वकर्णस्य निम्बस्य खदिरस्य च ।
अङ्गारैरसनस्यापि तापयेत्कुशलः शिलाम् ॥

* भज्यन्ते इति भवेत् ॥ * धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ।

१ क. ख. लङ्घेभ्यते ।

अपनीय ततोऽङ्गारानग्निवर्णान्यथा शिलाम् ।
तस्यां शिलायां मेदांसि पालिं कृत्वा प्रदापयेत् ॥
वराहमहिषाजानामेकैकं स्थापयेत्तलम् ।
क्रव्यान्मेदांसि संगृह्य पादं नागस्य लेपयेत् ॥
श्वाविच्छल्यकगोधानां शूकरस्य च मेदसा ।
सफाणितं घृतं पक्कं तलनिर्वापणं हितम् ॥
कूर्मकर्कटमत्स्यानां मेदो नक्रस्य वा हितम् ।
तले निर्वापणं कार्यं पक्वमग्नौ कृते घृतम् ॥
गुडेन सह कासीसं कांस्यनीलं विपाचयेत् ।
प्रलिप्तं तलमेतेन चर्मणा छादयेत्ततः ॥
समङ्गां धातकीपुष्पामश्वकर्णप्रियङ्गवः ॥
तलानां शमनं कार्यं कल्कं पिष्ट्वा प्रलेपनम् ।
रोचना रोहिणीलोध्रकुष्ठं सर्जरसं तथा ॥
त्रिफलां चैव नागानां तलानां स्तम्भनं भवेत् ।
कुटजस्योदुम्बराणां किणिह्याः प्रियकस्य च ॥
ककुभां सोमवल्कस्य त्वचं संक्वाथयेज्जले ।
एतत्प्रक्षालनं कार्यं श्वयथुक्रिमिनाशनम् ॥
स्फुटितं नखरोमं च कण्डूशोणितनाशनम् ।
केशानां——प्रशान्त्यर्थमेतदेव प्रशस्यते ॥
(*दत्त्वैवं गजस्य) ततो घृतस्निग्धं प्रदापयेत् ।
प्रसन्नां प्रतिपानार्थे पिबेत्फाणितसंयुताम् ॥
विचित्रैर्यवसैर्नित्यं तस्य प्राणं च विद्यते ।
एवमेतैः क्रियायोगैर्यत्नेन तलकाशिनाम् ॥
साधयेन्मतिमान्वैद्यः पादप्राणा हि वारणाः ।
लक्ष्यन्ते नखमध्ये तु कृमीणां संभवस्ततः ॥
प्रायेणानूपनिरता ये तेषां स्युर्नखेषु च ।
ग्राम्याणां स्थानदोषाच्च शकृन्मूत्रादिकर्दमैः ॥
न तेषां तत्र वै स्थानं कर्तव्यं तलकाशिनाम् ।
कृमयो यदि जायन्ते ततस्तान्बिडिशैर्हरेत् ॥
पुनः कषायकल्कैश्च सर्पिर्मधुसमायुतैः ।

---

* धनुराकारमध्यस्थो नास्ति पाठः खपुस्तके ।

लेपयेच्चात्र क्रमशो रक्तमांसेषु ये [1]स्थिताः ॥
तत्समीक्ष्याऽऽहरेद्वैद्यः शनैर्बडिशसूचिभिः ।
क्रमशस्ते च लक्ष्यन्ते स्थूला ह्रस्वाश्च पार्थिव ॥
कृष्णाश्च श्वेतशिरसो विपरीतास्तथाऽपरे ।
उद्धृतेषु च कर्तव्यो विधिर्व्रणविधानजैः ॥
असाध्यमपि चावेक्ष्य कुर्यात्क्षारादिभिः क्रमात् ।
न *बद्धा नयकर्माणि कारयेत मतङ्गजम् ॥
स्थाने पानाशनं दद्यात्सिद्धे व्रणचिकित्सिते ।
शनैस्त्वाक्रामयेन्नागमहन्यहनि पार्थिव ।
यावन्न बलवान्नागस्तावन्न व्रणरोपणम् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने तलकाशी नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

अथैकोनत्रिंशोऽध्यायः ।

---

अथाङ्गपतिरपृच्छद्भगवन्तं पालकाप्यम्—भगवं(†श्चलनादिगुणविशेषा हस्तिनश्चरणतलाश्रयाः, अतस्तलकाशिनं ससंभवचिकित्सितं व्याख्यातुमर्हति ॥

अथोवाच भगवा)न्पालकाप्यः—इह खलु भो रक्तपित्तकफमारुता नखरतलाश्रितास्तलकाशिनमापादयन्ति ॥ अथवा—कष्टकरशर्करोपेलवतां यथा मर्दनाद्वनग्रहणप्रचारपर्वतनदीतटविषदग्धभूम्यूषरप्रदेशानां सहसा सेवनैरसद्दलायाक्षः(?)प्रयोगात्, अथ प्रहर्षेण स्कन्नपङ्कमार्गसेवनैर्घृष्टवाराहत(?)स्थाणुनाऽभिहता वा हस्तिनस्तला विपद्यन्ते । ततस्तलतोऽप्रबलदूष्यर्थगा स्फटानामभिभवन्ति । विक्षोभयोस्तव्यपन(?)स्तमाहुस्तलकाशीति ॥

चिकित्सितमतोऽस्य—चतुर्थी दशामनुप्राप्तस्तलकर्मणोपचरेत् । वयोतीतबलक्षीणांश्च तलकर्मणा नोपचरेत् । तेजोजवबलसंपन्नमपि क्षततलमध्वनि न योजयेत् । तलानां रक्षणार्थं हस्तिनं स्थानान्तरे रक्षयेत् । तस्य च गात्राभ्यङ्गं भोजनं च स्नेहसंयुक्तं दद्यात् । पूर्वोक्तेषु तिथिनक्षत्रेषु तलकर्म कारयेत् । उद्धूतावधूतप्रतिमांसं च तलकाशिनं शस्त्रेणापहरेत् । गुडमधूच्छिष्टाजमेदःसंयुक्तेन तैलेन सम्यग्विपक्वेन मुहुस्तलतापनं कुर्यात् । खदिरककुभनिम्बाश्वक-

---

* 'बद्ध्वा' इति स्यात् ॥ † धनुराकारमध्यस्थः पाठो न कपुस्तके ।

---

१ क. स्थिताः । २ क. °पलानां य° । ३ क. °षमद° । ४ क. °न्तरं नये° ।

र्णारग्वधवःसनानामङ्गारैः शिलां तापयित्वा महिषवराहाजमेदोभिरवसेचयेत् । ततो वारणानामेकैकेन तलेन तत्र क्रमान्कारयेत् । वाराहगोधाश्वाविच्छल्यकमेषमेदःफाणितविपक्केन घृतेन निर्वापणं कुर्यात् । अथवा—नक्रकुलीरकच्छपमेदोभिः सह घृतं पक्कमग्निकर्मण्युपरते निर्वापणं स्यात् । कासीसं कांस्यनीलं च गुडेन सह निपाच्यते । तेन प्रलिप्यास्योपानहतल(र)क्षणार्थं कुर्यात् । अवसेचयेद्धस्तिनं मूलत्वात्(?) । तत्र धातकीपुष्पसमङ्गाश्वकर्णत्वक्प्रियङ्गुभिः कल्कपिष्टाभिस्तलानां स्तम्भनार्थं प्रलेपं दद्यात् । रोहिणीलोध्रसर्जरसत्रिफलासोमवल्कैः कल्कपिष्टैस्तलस्तम्भनार्थं प्रलेपं दद्यात् । त्वक्कषायेण सर्जार्जुनेन्द्रवृक्षप्लक्षप्रियङ्गुधवाश्वकर्णसोमवल्कशालचतुरङ्गुलोदुम्बरकिणिहीनां शृतेन तलकान्प्रक्षालयेत् । अनेन स्फटितनखकण्डूश्वयथुपूयशोणितश्रा(स्रा)वा कृमयस्तेन शाम्यन्ति हस्तिनां प्रायेणानूपदेशचराणां स्थानदोषान्नखमध्येषु कृमयः संभवन्ति । तैर्भक्ष्यमाणा दुर्बलगतयो वारणाः पार्ष्णिभिर्गच्छन्ति । न च नखैर्गन्तुमुत्सहन्ते । नखांश्च कृमिभिर्भक्ष्यमाणान्मुहुर्मुहुर्विघर्षति । ततस्तेषां नखशोधनमेवाऽऽदितः कुर्यात् । अथ पूयरुधिरसंश्रिताः, तेषां सूचीबिडिशेनोद्धरणं कुर्यात् । व्रणान्व्रणविहितेन मधुघृतेन पूरयेत् । क्रिमयश्चात्र कृष्णाः श्वेतशिरसः, श्वेता वा रक्तशिरसः, ह्रस्वाः स्थूलाश्च संस्थानतः संभवन्ति । (*बिडिशेन सूच्या चोद्धरणमशक्यम्) । तत्र येषां हि श्वेतत्वं व्यावन्नश्चात्र द्धरणमसक्षम(?) तान्क्षारेणोपचरेत् । गुहाश्वकर्णसोमवल्कसर्जार्जुनेन्द्रयवकुटजत्वक्कामलकीमुष्कक्रमधुकसप्तपर्णमेषशृङ्गीबिल्वकजम्बुकशल्लकीवटाश्वत्थप्लक्षोदुम्बरारुष्करखदिरामलकीगोपीहरीतकीनां त्वचः संगृह्योदूखले क्षुणुयात् । पञ्चद्रोणप्रमाणां[1] विंशतिद्रोणेऽम्भसि तस्मिन्महति कटाहे चाधिश्रपेच्चतुर्भागावशिष्टं नखविद्धस्थापितं संवर्तत(?)शरीरं कृत्वा निष्क्वाथमवतारयेत् । ततस्तं च परिस्रुतं पुनरधि*श्रयित्वा मन्देन वह्निना विपाचयेत् । यावत्फाणितभावमापन्न इति । तत्राऽऽवापः—त्रिफलानिशाघोण्टाफललोध्रार्जुनमधुककासीससौराष्ट्रिकाचूर्णानि सकांस्यनीलानि । ततस्तं खजेन[2] प्रथितमेकीभावमुपागतं सुपक्कमवतार्य सुन्यस्तं कारयेत् । तत्सर्वं पादरोगेषु प्रशस्तं रोपणं स्थिरीकरणं स्तम्भनं चेति । ततः सुरामस्मै फाणितसंयुक्तां प्रतिपानं दद्यात् । भोजनं च सघृतं मुद्गमिश्रं दापयेत् । तेषु तु प्रकृतिमापन्नेषु प्राणसंजननार्थं केशप्रोक्तेन विधिनोपचरेत् ॥

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके । * 'रधिश्रित्य' इति भवेत् ॥

१ क. व्रणांश्च व्रण° । २ क. °णे त° ।

तत्र श्लोकाः—

ततः कुर्युः क्रियाः सर्वाः पादरोगे प्रकीर्तिताः ।
यदिदं सेवते नैव तैलं कुर्यान्नराधिप ॥
न स्रवन्ति न पच्यन्ते न क्षीयन्ते स्फुटन्ति न ।
स्पृष्टास्तैलकषायेण प्रयोगेण स्थिरास्तलाः ॥
सुखमाक्रमते भूमिं समेषु विषमेषु च ।
अध्वनो गमने नित्यं जवश्चास्य न पीडयेत् ॥
अनेन विधिना राजन्यो वैद्यस्तलकाशिनम् ।
साधयेच्च महाराज स पूज्यः सततं नृपैः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने तलकाशीचिकित्सितनामाऽध्याय एकोनत्रिंशत्तमः ॥ २९ ॥

---

## अथ त्रिंशत्तमोऽध्यायः ।

---

अथाङ्गपतिरमरपतिसदृशवपुरुडुपतिसदृशवदनः कमलसदृशनयनः, परिपूर्णगोवृषस्कन्धः पृथुविपुलरुचिरवक्षा आजानुदीर्घबाहुरुग्रवाञ्छितचारुगामी जनकान्तं भगवन्तं पालकाप्यं हुतभाजमिव तपसो दास्यमानमृषिवरमभिवाद्य कृताञ्जलिरुवाच रोमपादः—'कथं भगवन्पा(*लकाप्य वारणानां गलग्रहः संभवति, कथं वा साध्यासाध्यः, तन्मे व्याख्यातुमर्हति। शुश्रूषुरस्मि'—इति ॥

स एवमुक्तः प्रोवाच भगवान्पा)लकाप्यः—इह खलु भो महाराज प्रायेण हि नवगृहीतानां नागानां यूथवियोगाद्धेनुकास्मरणात्पवनोभितापमापादयन्कण्ठगलकपोलप्रदेशान्विष्टम्य गलग्रहं जनयति ग्राम्याणामपि । यदा तु वारणः स्निग्धमधुरशिशिरानूपजलजयवसकमलशैवलगुरुरूक्षभोजनः कफपवनजननभूमिष्टाहारचेष्टशीतकलुषगुरुसलिलपानप्रायो रूक्षाभिष्यन्दिसेवी तस्य सहसा पवनसंसृष्टः प्राणापानसमानोदानव्यानाक्षिप्तः कण्ठमासाद्य तिष्ठति कफः । स जनयति गलग्रहम् । ततः स तेनाभ्यवहर्तुमाहारं यवसकवलकुवलपल्लवानामन्यतमं न शक्नोति। प्रस्यन्दमानतलवहली तक्षितक इव भवति। यस्तु स्वनयनगलहनुकपोलस्कन्धोष्ठमन्यासगदो गुरुकरगुरुमक्षिकाश्च नीलं श्यावं लोहितं विवर्णं वमथुं पूतिमुद्गिरति, कम्पते पूर्वकायमुदस्यति, लाला चास्य जिह्वामू-

---

* धनुराकारमध्यास्थो नास्ति पाठः कपुस्तके ।

---

१ ख. हुतं भज° ।

लास्रवति सरुधिरा वा केवला वा। स चोर्ध्वशिरोभरो जलद इव बृंहते च। प्रमेहति च बहुशः परिहृष्यति घुरुघुरायमाण(कर)कण्ठः करकण्ठोपरोधात्तु स दुर्मनाः सूक्ष्ममपि न चाऽऽदत्ते किंचिदाहारजातम्। तामवस्थामसाध्यां विद्यात्। साध्यस्तु लालाश्रा(स्रा)वः प्रकृतिस्थगलकपोलमन्यानयनसगदः सुसूक्ष्ममप्याहारमादत्ते। तं चिकित्सितुमुपक्रमेत्। तस्य पूर्वापरपरिक्षिप्तस्यालानितस्य कुमुदानी(?)ग्रहीतस्य प्राजनहस्तैः परिचारकैः परिवृतस्य विश्वामित्रस्य विकाशं मुखप्रमाणं कारयेत्। वृक्षस्य बलवतः सारं दृढमशुषिरं निरुपद्रवं ग्राहयित्वा यवसंस्थानं तस्य मध्ये हस्तप्रवेशमात्रं छिद्रं कारयित्वा वारणस्य मुखं तिरश्चीनं प्रसार्य सृक्कप्रदेशनिबद्धास्याभ्यधिकांसग्रीवाद्वावद्धा(?) बलवद्दृढीकृत्य सत्रिकटुकमधुसर्पिषाऽभ्यज्य कुसुमवर्तितनखं वैद्यस्तस्मिन्विकाशे हस्तं प्रवेशयित्वा तालुगलहनुकपोलजिह्वापरिमिथ्यासंभ्रान्तं शनैरूर्ध्वं जत्रुणः कुवलकवलपल्लवानां यत्किंचित्तत्र स्थितं तत्सर्वं शोधयेत्। अथ कण्ठे यदिष्टवमथु स्यात्। तदा त्रिकटुकयुक्तेन हस्तेन श्लेष्माणं निर्गत्य विलापयेत्। अकठिनभावा न विद्येत(रन्) लीनीकृतलती(?) श्लेष्माणं कण्ठं वा स्वेदयेत्। विगतलाश्रा(स्रा)वं स्वगलं सुखमापादयेत्। संस्कृतं कृतमेनं पाययेत्। (*ततश्चोभयोः पञ्चमूलयोः कुलत्थकाकमाच्योश्च निक्वाथं कारयित्वा पिप्पलीमरिचसंस्कृतं घृततैलाभ्यां स्नेहितमिभं पाययेत्। अर्कोरुबूकतर्कारीश्रीपर्णीशोभाञ्जनकीटानां पत्रभङ्गान्पयसि पाचयित्वा नाडीस्वेदं विदध्यात्॥

तत्रास्विन्नस्विन्नानां विज्ञानं भवति॥

तत्रास्विन्ने—छव्या गौरवं वंशाप्रस्तब्धमाशीतलत्वं काठिन्यं हृष्टरोमत्व नयनपरिश्र(स्र)वश्च भवति। भूयस्तु स्वेदं विषहते। अतिस्विन्नस्य मृदुत्वग्भवति, वातश्च प्रशममुपगच्छति। श्लेष्मा च ततः स्थानात्प्रच्यवते। अतिस्विन्नस्य विदाहाद्विक्रियामुपगच्छन्ति च कफपित्तरुधिरमेदांसि। ततः स्नायुशिरतासा (?) चात्र लीयान्, छर्दिमूर्छा प्रवर्तते स्फोटाश्च जायन्ते। ततो विधिवत्स्विन्नमिति विज्ञाय शीतलेनाम्बुना लोचने परिषिच्य कर्णमन्ये पुनर्विशोधयेत्। ततः शोभाञ्जनबूक (?) कर्कारीणां बीजानि तिलसर्षपातसीश्च संक्षुद्य कपाले दग्धोमिषं कृत्वा किण्वतन्दुललवणतिलचूर्णितं सर्पिषा च संयोज्य कण्ठानुसरणमस्य कुर्यात्। तैलघृतवसाभिरभ्यज्य पायसेन पिण्डस्वेदं

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके॥

१ क. °हस्तैरपि परिचा°। २ क. °वसस्था°। ३ क. °र्तिते न°। ४ क. ततस्तु स्ना°। ५ ख. °ग्धामपि कु°।

कारयेत् । मधुकसरलभद्रदारुश्रेयसीचूर्णयुक्तेन तैलेन वक्षः सेचयित्वा तेनास्य कण्ठश्वपथोरुपशमो भवति । तालीसपत्रं तगरं मांसी हिङ्गुदेवदारुविडङ्गानां स्वा(श्वाविट्)गोधानराजलोमभिश्चैतं(?) गोमयाग्नौ सर्षपतैलेनेमं धूपं दद्यात् । चक्षुषी चास्य क्षुरकमूलं श्लक्ष्णपिष्टं घृतमण्डेन नेत्रयोर्मधुना चाञ्जनं कुर्यात् । तेनास्य धूमस्वेदेन यश्च दोषः, कफपवनविकासश्च प्रशममुपगच्छन्ति । यवसान्यार्तवानि विविधहरितमृदुकषायाणि यवसाध्यायोक्तानि यत्रानुकूलानि भोजयेत्, घृततैलोपपन्नानि विधिना । प्रणुदति गलग्रहरोगनिरुपद्रवो मुदितमनाः सुप्रसन्नः प्रसन्नवक्त्रः प्रकृतिस्थः स्तनति वारणः ॥

तत्र श्लोकः—

कफपवनसमुद्भवं गजानां शमयति वस्तुगलग्रहं विकारम् ।
स भवति परियस्वि(?)पूजनीयो नियतमुनिः कुशलश्च परीक्ष्यकारी ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने गलग्रहनामा त्रिंशत्तमोऽध्यायः ॥ ३० ॥

---

अथैकत्रिंशत्तमोऽध्यायः ।

---

अङ्गस्तु राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
कथं तृष्णार्दितं नागं परीक्षेत महामुने ॥ १ ॥
तृष्णार्दितस्य भगवान्किं वा लक्षणमिष्यते ॥
के वा—वारिणः प्रोक्ताः सम्यग्ग्रस्तस्य दन्तिनः ॥ २ ॥
एवं पृष्टस्तु भगवन्सर्वमाख्याहि तत्त्वतः ॥
अङ्गराजवचः श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥ ३ ॥
जलच्छेदानु(त्तु)मातङ्गः क्षिप्रं प्राणैर्वियुज्यते ॥
त्वङ्मूलपांशुहरणैर्जलैश्चापि सुखोचितैः ॥ ४ ॥
वारणैश्च समाश्वस्तः शीतसाम्यो विशेषतः ॥
तस्मात्तृष्णार्दितं नागं.................... ।
......................यस्य पितुर्मूर्छा भवेत्ततः ॥
अन्ये च बहवो रोगास्तस्मात्प्रादुर्भवन्ति हि ।
एवं सर्वास्ववस्थासु तस्मात्तोयं न वारयेत् ॥

---

१ क. इरकमूलकं । ख. इक्षुरकमूलकं । २ ख. दोषैः । ३ क. तृष्णार्जितं ।

तोयमूलमिदं सर्वं जगत्स्थावरजङ्गमम् ।
असंख्येया गुणाः प्रोक्तास्तोयदाने नराधिप ।
सद्यः प्राणकरं तोयं मूर्छितेभ्यः प्रदापयेत् ॥
व्यतिक्रान्तायां तृष्णायां नागः प्राणैर्विमुच्यते ।
तस्मात्तृष्णार्दिते नागे तोयं क्षिप्रं प्रदापयेत् ॥
बलाद्रोगांश्च जयति वारणो नात्र संशयः ।
यदा रोगार्दितो ना(*गस्तृष्णाया व्यथते भृशम् ॥
परिगृह्य तदा तोयं विषजारोग्यकाङ्क्षिणा ।
योगतस्तु प्रदातव्यं प्राणभ्रंशोऽन्यथा भवेत् ॥
लक्षणं तस्य वक्ष्यामि कात्स्न्र्येन मनुजाधिप ।
तृष्णया चाभिभूतस्य प्रभेदः संप्रवर्तते ॥
धातूनां च क्षयाच्चैव मूढस्तु भवति द्विपः ।
आलानं छेदयेन्ना)गः स्थाने न लभते सुखम् ॥
शालां भिनत्ति चात्यर्थं तथैव कपिशीर्षकम् ॥
शय्यायामुपनीतस्तु निद्रां न लभते गजः ॥
दह्यते मुख............................................ ॥
........................ तेनैव वारणस्तोयवर्जितः ॥
वाचनं वातिगृह्णाति निर्वाणं यत्र नीयते ॥
योक्त्रे क्रुध्यति सोऽत्यर्थं तथैव परिकर्मणा ॥
सर्वतोऽभिद्रवेगम्नास्तृष्णया परिपीडितः ॥
मर्मस्थानानि पीड्यन्ते तालुमध्यं च दीर्यते ॥
गलकण्ठकपोलाश्च संयुक्ताः कुण्टकैस्तथा ॥
श्वेतसर्षपसंकाशैर्जिह्वा बिन्दुभिरा१चिता ॥
व्याधिः सिद्धार्थको नाम वारणप्राणनाशनः ॥
भोजनं यवसं चैव तृष्णार्तो नाभिनन्दति ॥
प्राजनाङ्कुशदण्डानां पातस्य च महीपते ॥
संज्ञां न प्रतिपद्येत तृष्णया मोहितो गजः ॥
श्वसिति कम्पते चैव भूयसा विह्वलत्यपि ॥
लिङ्गान्येतानि कुरुते तृष्णार्तो वारणो नृपः ॥

* धनुराकारमध्यस्थः पाठो नास्ति कपुस्तके ।

१ ख. °राजिता ।

तस्माद्भिषग्यो मतिमान्बलाबलविभागवित् ॥
दापयेद्धस्तिने वारि तेन कालवमिन्द्रयेत्(?) ॥
पीततोये ततो राजन्केर्माधर्मविधातवः ॥
एवमेतेन योगेन लब्धप्राणो यदा भवेत् ॥
तदा तस्य पुनः कार्या चिकित्सा प्राणवर्धनी ॥
मृद्वीका दाडिमं चैव शर्करा दधिमस्तुना ॥
पूर्वोद्दिष्टप्रमाणेन पानं कृत्वा सुसंस्कृतम् ॥
यवतर्पणसंसृष्टं क्षीरं पिबति ........... ॥
..........दद्यात्......तृष्णापहा......... ॥
सर्वश्रो(स्रो)तसि नागस्य स्नेहाभ्यङ्गः प्रशस्यते ॥
तं च स्नेहं प्रवक्ष्यामि येन संपद्यते सुखम् ॥
यवकोलकुलत्थानां पञ्चमूलद्वयस्य च ।
चतुर्भागावशिष्टं तु निक्वाथं कारयेद्बुधः ॥
क्वाथ(थ्य)मानं पुनर्दद्यात्प्रतिपानं यथाविधि ।
माषपर्णी पयस्या च हरिद्रे द्वे कसेरुकम् ।
जीवकर्षभकौ चैव यष्टीमधुकमेव च ।
कल्कपिष्टं तु तं कृत्वा क्षीरेण सह पाचयेत् ।
अर्धावशिष्टं विज्ञाय ततस्तमवतारयेत् ।
(*परिश्रु(स्रु)तं तु तं कृत्वा घृततैलवसादिभिः ।
एकं संपाचयेद्यस्तु पुनः स्नेहं यथाक्रमम् ।
यदा सिद्धं तु विज्ञाय ततस्तमवतारयेत्) ।
पानं भोजनमभ्यङ्गमनुवासनमेव च ॥
स्नेहमेतत्प्रशंसन्ति तृष्णाप्रशमनं हि तत् ।
गलकण्ठकपोलाश्च जिह्वा तालु च सर्वतः ।
अभ्यक्ता मार्दवं यान्ति योगेनानेन दन्तिनः ।
मुखरोगेषु सर्वेषु स्नेह एव प्रशस्यते ।
लावतित्तिरिमांसैश्च रसं नागस्य कारयेत् ।
शालीनामोदनं चैव रसयुक्तं प्रदापयेत् ।
यवसानि प्रदेयानि मृदूनि हरितानि च ।

* धनुराकारमध्यस्थः पाठो नैव कपुस्तके ।

१ क. °मिन्द्रिये° । २ क. °न्कर्मी धर्मनिधा° । ३ क. °प्राणैर्यदा ।

अनेन क्रमयोगेन मुखरोगात्प्रमुच्यते ।

तत्र श्लोकः—

एवं सिद्धार्थकं व्याधिं यस्तु हन्याच्चिकित्सकः ।
तं वैद्यं पूजयेद्राजा दानमानपरिग्रहैः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने
सिद्धार्थकनामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥

---

## अथ द्वात्रिंशत्तमोऽध्यायः ।

---

अथाऽऽश्रमे महर्षिरथर्युगण्डा(?)तपःस्वाध्यायसेविते स्वर्गसोपाने प्रफुल्लकाननोद्देशे विविधकुसुमरसास्वादमत्तरक्तभ्रमरगणोपगीतिसेविते गजमृगमहिषवराहमयूरशुकवानरसिद्धगन्धर्वव्यालसेविते वंसनसुरपि(?)तत्राऽऽश्रमे हुताग्निहोत्रं कृताह्निकबलिवैश्वदेवं कृष्णाजिनवर्षा(?)वनद्धमासीनमासनस्थं वायुभूतं मास्थिभूतं(?)भगवन्तं पालकाप्यं(?)तत्र कदाचिदङ्गाधिपो रोमपादस्त्वागम्य विनयादवनतशिरा महर्षिपादानभिवाद्य(..............................)गजा भूतग्रहोपसृष्टा दृश्यन्ते कथं च ग्रहैर्ब्रह्मविद्भिः परमदारुणैर्घोरैः पीड्यन्ते, कथं च ग्रहाः प्रविशन्ति, किं वा तेषां ग्रहोपसृष्टानां लक्षणम्, के च तत्र ग्रहाः साध्याः केऽसाध्याः, कति च ग्रहा निर्दिष्टाः, कानि च नामानि, किं वा रक्षाकर्म बलिविधानमग्निकार्यं चिकित्सितप्रचारुच्छविमर्दनश्चेति ॥

*.................................................................इत्येते वस्तग्रहा निर्दिष्टाः । ते तु यथा गृह्णन्ति तद्वक्ष्यामः ॥

यदा वारणं शरशक्तियष्टितोमरपरशुभिण्डिपालैरन्यैश्च शस्त्रैर्जर्जरीकृतसर्वदेहं शोणितश्रा(स्रा)विणं संग्रामादागतं क्ष्यबन्धतश्च परिखिन्नदेहमिति कृत्वा तं हस्तिजीविनश्चैत्यश्मशानदेवागारसमीपेषु नागानां वातसलिलाग्निसमीपे वालानयन्ति तं निद्रावशमुपगतं ग्रहा गृह्णन्ति ॥

अथ यदा वारणस्योपस्थितमदस्य मत्तस्य वा भूतपूजां पूर्वप्रवृत्तां बलिमुपहारं विनोपहरन्ति । यदाऽस्मै क्षितिमाक्षिप(?)भूतरक्षार्थं नागानां न प्रयच्छन्ति हस्तिजीविनः, तदाऽस्य मनतीक्ष्ये(?)नागस्य यथेष्टं ग्रहाः प्रविशन्ति ॥

तत्र भावबाहुकगृहीतस्य लक्षणं वक्ष्यामः, स्वं बाहुमेकं परिगृह्य परिमर्द-

---

* अत्र त्रुटितमिव भाति ॥

---

१ ख. °रति । य° । २ क. °पितभू° । ३ क. °दा म° ।

यति करेण मुष्टिं कुर्यात्, स्तब्धनयनः शब्दस्पर्शौ न विन्दति तं भावबाहुकगृहीतं वारणं विद्यात् ॥

मृगवत्प्रेक्षते मृगग्रहमोहितश्च भूमौ निपतति भृशमत्यर्थं वेगेन कृशो भवति तं मृगग्रहपीडितं वारणं विद्यात् ॥

अरतिकेन गृहीतः स्खलति पतति नाभिनन्दति किंचिद्विहाराहारजातमिति तमरतिग्रहपीडितं वारणं विद्यात् ॥

जलमवगाह्य प्रतरति यः, प्रतारग्रहपीडितं वारणं विद्यात् ।
यः स्वपिति काम्यति च, तं स्वपितिग्रहपीडितं वारणं विद्यात् ॥

यः स्वानि सर्वगात्राणि भ्रमन्गृह्णाति तथा चैनं प्रमर्दनाग्रह(नक्षत्र)पीडितं वारणं विद्यात् ॥

तत्र कामाक्ष(ख्य)ग्रहगृहीतस्य लक्षणम्—यः कामीव मदनातुरः सर्वैरिन्द्रियार्थैः प्रहृष्टो हस्तिनीं हस्तिनं वा समपृष्ठमधिकं सर्वमेव वा दृष्ट्वाऽभिप्लवते। कामपरावस्थाप्राप्ततया च निवृत्तविहाराहारव्यापारो ध्यायच्छन्नेवावतिष्ठते वारणः, तं कामाक्ष(ख्य)ग्रहगृहीतं वारणं विद्यात् ॥

वाणिज्जकस्यापि लिङ्गानि—तत्र यो हस्ती, आत्मद्रव्योपकरणतृणकवलकुवलकडंगराहारजातमद्धा प्राञ्जनाङ्कुशरज्ज्वाद्यन्यहस्तिस्थानेषु निक्षिप्यान्यदीयानि यानि, तान्यात्मसात्कृत्वा तथा पुनस्तान्यपि निवर्तेतेत्येवं निवृत्त्याऽऽत्मव्यापारसंज्ञोऽवतिष्ठते, तं वाणिज्जकगृहीतं वारणं विद्यात् ॥

विन्प(स्तव्पथ)विर(ग्र)हगृहीतस्यापि लक्षणम्—भ्रष्टग्रीवः स्रस्तहस्तश्रवणकर्णलाङ्गूलगात्रापरो मन्दचेष्टो निश्चेष्टो वा कदाचित्क्वचिन्मूढचित्त इव विपरीतसंज्ञो निःसंज्ञो वा कदाचिदन्यदेव कर्तुमारब्धोऽन्यत्तु कर्तुमुत्सहतेऽनवस्थितचित्तो वृद्धविषाच्च स्वभावतो योऽस्वस्थो हस्ती स विन्पस्तव्पथविरग्रहगृहीत इति ॥

तत्र कामाख्योऽरतिको वाणिज्जश्चेति साध्याः । असाध्याः (.... .... .... ॥) लालास्रावहनुस्तम्भजिह्वाक्षेपणानि विचित्राणि लक्षणानि भवन्त्येतानि । भूप(सम)स्तव्पस्तानि सामान्यानि यानि चेगानि वक्ष्यामः ॥

तत्र कश्चिद्गजः सहसा पादप इव च्छिन्नमूलतः पतति । रौद्रनिष्टब्धनयनो नष्टचित्तः सविभ्रमः....नोदशनाकुठकटा(?)पतति जिह्वां स्तम्भयति वक्रग्रीवोऽप्यनिरीक्षणं कुरुते। कफव्यामिश्रलालां रक्तसंसृष्टां सफेनां छर्दयति, सिंहव्याघ्रभीतवच्छ्वसिति पिच्छिलार्दित इव क्रुध्यति बिभेति सर्वस्मात्सर्वेषामपि कुप्यति,

१ ख. °रेणमु°। २ ख. °हारजा° । ३ क. विन्यतिरह°। ४ क. °निस्तब्ध° ।

एकपक्षेण पतति भ्रमति मुह्यति वेपते कूजति मात्यर्थं यवसकवलकुवलपल्लव-भोजनान्यभिनन्दति । न स्थानशय्यां वेदयते न यन्तारमभिगणयति । तमेनं ग्रहपीडितं वारणमसाध्यं विद्यात् । वर्षस्थितमुन्मादमपस्मारं सात्मीभूतं दूरतः परिवर्जयेत् । तौ वर्षपर्युषितौ न सिध्येते । ये चान्ये वर्षग्रहागतास्ते याप्या भवन्त्यसाध्या वा स्थिरमूलतया पर्युषिता ग्रहाः । अस्थिमज्जानुगताः शरीरस्था जलमध्ये तैलबिन्दुरिव विस्तीर्यन्ते । तत्राऽऽदौ दुःखसाध्या ग्रहा भवन्ति । तस्माद्ग्रहेण गृहीतमात्र एव यः स तु कदाचित्सिध्यतीति कृत्वा चिकित्सितं व्याख्यास्यामः । तस्य बलिकर्मविधानमग्निकार्यं ततः सामान्ययज्ञेन वा शान्तिं कुर्यात् । तत्र शालां पुष्पोपकीर्णां कृतोपलेपनां बलिहोमधूपगन्धप्रायश्चित्तैर्निष्कल्मषीकृतां सुरभिमनोज्ञसुसंवृतोपरां(?)द्रव्यौषधिसंयुक्तां ब्राह्मणस्वस्तिवाचनं कृत्वा वैद्यः शालां वारणं प्रवेशयेत् । ततो नागं ग्रहाविष्टं भिषग्यथोक्तैः शास्त्रमेभिर्गुणैः संपन्नैर्वत्सलैर्जितक्रोधैः शुचिभिः प्रनतै(णते)ष्टैरुपेतं विज्ञाय भोक्तैः स्वगजपरिचारकैः परिगृह्य शालामानीय दक्षिणपक्षेणाऽऽलानयेत् । सुयन्त्रितं कृत्वा बलिहोमप्रायश्चित्तैः कर्मप्रवचनं कुर्यात् । ब्राह्मणं तर्पयेत् । गजं पुरस्ताद्रक्षोभिघ्नानि च सामानि गापयेत् । ततस्तं भोजनस्नातस्नेहदेशा(हा)भ्यक्तविरेचनं येषां यूषरसाद्यैर्बृंहयेत् । ततस्तस्य प्रध्यापना(?)ञ्जनस्य कर्म धूपयेत्, गोघृततैलवसाभिः संयोज्य नागाय ग्रहविनाशनं दद्यात् । तिलसिद्धार्थपिचु-(मन्द) नक्तमालपूतीकरञ्जैरण्डविभावकानां फलं तैलेषु संयोज्याभ्यञ्जनं दद्यात् । एतेषां बीजैः कल्कपिष्टैर्वारणं सशिरस्थमानसेभ्यो बह(ल)मत्रानुलेपयेत् । तं त्रिकटुकदेवदारुवचाकटुकरोहिणीहैमवतीचव्यपाठाहस्तिपिप्पलीचित्रकतुलसीपत्राणि यवलशुनफणिज्जकापामार्गफलैर्दन्तीसैन्धवभागात्वचं विडङ्गं बृहतीफलानि समभागानि श्लक्ष्णचूर्णानि कृत्वा नस्यं प्रधमनं दद्यात् । एतान्यौषधानि कल्कपिष्टानि कृत्वा नक्रमालमयूरोलूकनकुलगोजाविमहिषीणां पित्तं संयोज्य नस्याभ्यञ्जनालेपनादि ग्रहविनाशनार्थं कुर्यात् । सर्वबीजानि सुपिष्टानि कृत्वा यानि चान्यानि पेष्याणि तानि वैद्यः स्वेदावर्तनार्थं नागस्य ग्रहविनाशनार्थं दद्यात् । पिचुमन्दमार्धतर्कारीशोभाञ्जनकोत्तक्षककरञ्जश्लेष्मान्तकानां पल्लवैर्ग्रहविनाशनार्थं स्वेदयेत् । द्विपञ्चमूलपलाशशतानि चत्वार्युदूखले क्षोदयित्वा पानीये चतुर्गुणे क्वाथयेत् । ततः क्वाथं चतुर्भागावशेषमवतार्य परिश्रा(स्रा)व्य तेन क्वाथेन घृताढकं शतवार्षिकं पाचयेत् । तस्यालाभे द्वादशवा-

१ क. °ते । तं गाढं ग्र° । २ क. कृत्वा तां

षिकं पाचयेत् । तत्सर्वग्रहनिवारणार्थं पञ्चगव्यसंयुक्तं वारणं पाययेत् । अथ तीव्ररसविपक्कं वचासिद्धं लशुनसिद्धं सिद्धार्थकसर्षपसिद्धं घृतमेनं पाययेत् ॥

अतः परं बलिविधानं वक्ष्यामः—चन्दनोशीरपद्मकोत्पलमनःशिलासुवर्णमणिमुक्ताफलानि सीधुमैरेयभूतान्नकुल्माषपक्कामर्मांससुरामण्डमत्स्यकृशराजाजिसर्वगन्धाहरिद्राकृष्णमृत्तिकाश्चेति तत्सर्वमाहृत्य स्नातः शुचिर्भूत्वा ब्राह्मणान्स्वस्ति वाच्य तीर्थमातॄणामापतानसुबलिनिवेदनं कुर्यात् । अथ सव्यमुक्तशिखो वैद्यः सर्जरसेन सघृतेन धूपनं कुर्यात् । यच्च रात्रिक्षिप्ते विधानं बलिहोमकर्मादिप्रयुक्तं सर्वमिहापि कुर्यात् । शालीनामोदनं मांसरसेन भोजयेत् । रसमन्नपानं दद्यात् । बस्तयश्च बृंहणीयाः । यथोक्तेन बस्तिसिद्धिविधानेन च[1] स्नानं दद्यात् । यवसानि च मृदुमधुरविपाकानि मत्स्यपिण्डिकामर्माणि भोजयेत् ॥

तत्र श्लोकाः—

कुलीनः शास्त्रतत्त्वज्ञो दृष्टि(ष्ट)कर्मा विचक्षणः ।
ब्राह्मणो वृत्तसंपन्नः साधुस्तद्वैद्यपूजितः ॥
ब्रह्मचर्ये स्थितश्चैव तथा देवपरायणः ।
अमत्सरी तथा नित्यं तथा द्रव्यविशारदः ॥
ईदृग्लक्षणयुक्तश्च तथा गजहितश्च यः ।
स्वामिभक्तश्च नित्यं स वैद्यो ग्रहचिकित्सकः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने
भूतग्रहो नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## अथ त्रयस्त्रिंशोऽध्यायः ।

अङ्गो हि राजा चम्पायां पालकाप्यं द्विजर्षभम् ।
विनयेनोपसंगम्य रोमपादः स्म पृच्छति ॥
यच्चोन्मदनकं प्राहुः कुञ्जराणां ब्रवीहि मे ।
स पृष्टस्त्वङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
तन्मे शृणु महाराज.................................. ।
अविक्षेत(?)तेजसाऽयं लिहितं(?)सर्वं व्याख्यास्यामः ॥
मुहुर्दुःखग्रहश्च स्यान्मुहुश्चापि सुखग्रहः ।

---

१ ख. च बस्तान्दद्या° ।

मुहुः कुप्यति संज्ञां च न वेत्ति च मुहुर्मुहुः ।
आरोहकं तर्जयति वेपते च मुहुर्मुहुः ॥
भूमिं स्पृशति दन्ताभ्यां तावत्पच्छिन्नंमस्तुते(?) ।
पशून्मनुष्यानश्वांश्च हस्तिनः शकटांस्तथा ॥
सजीवं निर्जीवं सर्वं मार्थयते द्विपः ।
तथा शब्दान्मार्थयते अग्निं दृष्ट्वा प्रधावति ॥
प्राजनान्यङ्कुशान्दण्डान्दुःखेनोत्क्षेप्तुमिच्छति ।
परिघं वा कपाटं वा हन्तुं वृक्षांश्च काङ्क्षते ॥
कोपं कृत्वा चिरं कालमेकस्माच्च प्रसीदति ॥
एतद्धि तस्य विज्ञानमत ऊर्ध्वं चिकित्सितम् ।
ऋक्षपित्तं काकपित्तं मुद्रा वै सर्षपास्तथा ।
एतेन चाञ्जितो नागेस्तून्मादात्परिमुच्यते ॥
तण्डूलीयकमूलं च हिङ्गु च लशुनं तथा ।
एतेन चाञ्जितो नागस्तून्मादात्परिमुच्यते ।
मूलानि करवीरस्य त्वक्फलानि करञ्जयोः ।
उक्षपित्तं च हिङ्गु च लशुनं मूत्रपेषितम् ।
अविमूत्रमजामूत्रं गोमूत्रं माहिषं तथा ।
एतेन चाञ्जितो नागस्तून्मादात्परिमुच्यते ।
अश्वसूकरयोरस्थि शुनश्चापि समाहरेत् ।
कुक्कुटस्योत्तमाङ्गस्य उलूकनकुलादपि ।
क्रौञ्चस्य कुररस्याथ उत्तमाङ्गं च संहरेत् ॥
लशुनानि वचा चैव तथा कटुकरोहिणी ।
एष धूपो ग्रहान्सर्वान्साधयेत्संप्रयोजितः ।
अस्थि चर्म च मांसं च रोमाण्युष्ट्रस्य वा तथा ।
पुराणघृतसंयुक्तो ह्येष धूपो विधीयते ।
( *मनःशिलां च हिङ्गु च वचां कालानुसारिवाम् ॥
मरिचानि च श्वेतानि अञ्जनार्थे प्रदापयेत् ।
काकपित्तं मत्स्यपित्तं मरिचानि मनःशिला । )
एतानि समभागानि अञ्जनार्थे प्रदापयेत् ।

---

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ।

---

१ ख. °न्नमस्तुते । २ क. °गस्तन्मदा° ।

गोलिण्डमश्वलिण्डं च हस्तिलिण्डं तथैव च ।
पुराणघृतसंयुक्तो ह्येष धूपः प्रशस्यते ॥
तिलान्कृष्णान्समाहृत्य श्वेतानि मरिचानि च ।
ते शुद्धनिस्तुषे कृत्वा सकृदुष्णोदके पचेत् ।
यत्तत्र निश्रयेत्तैलं भेषजैस्तं विपाचयेत् ।
(*हिङ्गुं चातिविषां चैव वचां च कटुरोहिणीम् ॥
बस्तमूत्रं मेषमूत्रं गोमूत्रं चापि संहरेत् । )
तान्यौषधानि संयोज्य तैलं धीरो विपाचयेत् ॥
तेनास्मै दापयेन्नस्यमुन्मादात्परिमुच्यते ।
प्रकृतिं लभते क्षिप्रं प्राणश्चाप्युपचीयते ॥
एतद्वै सर्वमाख्यातमुन्मादस्य चिकित्सितम् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थान उन्मादो नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

अथ चतुस्त्रिंशोऽध्यायः ।

---

वक्ष्यतेऽतः परं यत्नादपस्मारग्रहस्ततः ।
अपस्मारग्रहाक्रान्तो वेपमानो विचेतनः ॥
पक्षेण क्षितिमागम्य तिष्ठत्याविललोचनः ।
क्षणेन लभते संज्ञां भवेत्स्वस्थ इव द्विपः ॥
एतान्येव च लिङ्गानि कालवेलान्तरेष्वपि ।
करोति तस्याऽऽगमने हीयमानो बलादिभिः ॥
नवग्रहविधानेन वर्षस्यान्तः प्रसाधयेत् ।
उन्मादग्रहवच्चापि परतो निष्फलक्रियः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थानेऽपस्मारो नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

अथ पञ्चत्रिंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ।
वातकुण्डलिकाख्यस्य कथं रोगस्य संभवः ॥

---

* धनुराकारमध्यस्थो भ्रष्टः पाठः कपुस्तकात् ॥

कथं विज्ञायते ब्रह्मन्कथं वा साध्यते हि सः ।
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
शृणु राजन्यथा ठ्याधिर्जायते वातकुण्डली ।
अभिघातात्प्रवेगाद्वा रात्रौ जागरणेन च ॥
मनोभितापाद्रौक्ष्याच्च तथा चानुचितासनात् ।
वारणस्य नृपश्रेष्ठ सहसा कुप्यतेऽनिलः ॥
ततः प्रकोपात्कुप्येत रक्तं पित्ताश्रितं तु यत् ।
ततोऽल्पाल्पं गजो मूत्रमसृक्पीतमथापि वा ॥
[१]वाह्यमाणः कुरुते वालमूर्ध्वमुदस्यति ॥
लिण्डं च पीडितः[२] कृच्छ्रादेकैकं कुरुते गजः ।
(* सलोहितं कदाचिच्च कदाचिच्छ्लेष्मसंयुतम् ॥
वेदनार्तस्तु मातङ्गः संकुच्याङ्गानि वेपते ।
स्थूलं श्वसिति हस्तेन वक्त्रेण स भृशं गजः ।)
[३]एभिस्तु लक्षणैर्विद्याद्वातकुण्डलिकां भिषक् ॥
तमसाध्यं वदन्त्यन्ये याप्यमन्ये विनिश्चयः ॥
अतः परं प्रवक्ष्यामि साधनं तस्य हस्तिनः ।
वातकुण्डलिकोपेतं तथाऽन्यच्च प्रदापयेत् ॥
स्थानं निवातमभ्यङ्गः सुखं च शयनं तथा ।
शाल्यन्नं सर्पिषा तस्य प्रशंसन्ति चिकित्सकाः ॥
क्वाथाश्चास्य प्रदातव्या गुल्मोक्तास्त्वनुपूर्वशः ।
प्रसन्नां पिप्पलीयुक्तां पञ्चभिर्लवणैः सह ॥
यथाप्रमाणविहितां प्रतिपानं[४] प्रदापयेत् ।
प्रतिपानविशुद्धस्य मुखतः स्नेहनं हितम् ॥
मुखतः स्नेहितस्याथ बस्तिकर्म प्रशस्यते ।
बस्तिकर्मणि संयुक्तं······ ···· ···· ········ ······ ॥
···· ···· ···· ···· ···· ····क्षीरं मधुरकैः शृतम् ।
प्रागुत्थितस्य सघृतं प्रशस्तं पानमुत्तमम् ॥

---

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ।

---

१ क. ख. प्रवाहमाणः । २ ख. पीडितं । ३ क. एतैस्तु । ४ क. °नं च दा° ।

यद्येवं विविधैर्योगैर्न सुखं स्यान्मतङ्गजः ।
ततोऽस्मै दापयेद्वैद्यः क्षारतैलं यथाविधि ॥
इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने
वातकुण्डली नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

अथ षट्त्रिंशोऽध्यायः ।

अधिकं तु यदा भारं गजस्याऽऽरोपयन्ति हि ।
गच्छन्वै दक्षते क्षिप्रं सोऽतिमात्रं प्रयोजितम् ॥
नागं वा पथि संतप्तं निर्देशैश्च भिषग्वरः ।
कृशपादस्तथा स्कन्धो भिन्नरोमत्वचा वृतः ॥
नदीं गत्वा जलेनाङ्गान्यभीक्ष्णं परिषिञ्चति ।
वमथुं हरतेऽभीक्ष्णं बहुशश्चापि वीजति ॥
स्थाने न लभते सौख्यं यवसं नाभिकाङ्क्षति ।
मूत्रसङ्गश्च भवति श्वा(स्रा)वश्चास्य प्रवर्तते ।
प्रकीर्यते यथाऽङ्गारः स खिन्दन्योऽवनम्यते[1] ॥
विशीर्यन्ते तथा यस्य मांसानि द्विरदस्य च ।
कर्मारकुण्डवत्तस्य शब्दः काये निशाम्यति ॥
भूतोपसृष्टवच्चास्य विदित्वा कुशलो भिषक् ।
निदानमात्रं विज्ञाय कुर्यात्तस्य चिकित्सितम् ॥
गव्यं तु क्षीरमाहृत्य माषचूर्णेन योजयेत् ।
ततस्तं पाययेद्योगं प्रातस्तु मतिमान्भिषक् ॥
तेन मूत्रग्रहोच्छ्वासौ दाहस्त्वस्य प्रशाम्यति ।
कुल्माषान्क्षीरसंसृष्टान्दापयेद्भिषजां वरः ॥
पिप्पली शृङ्गवेरं च सूक्ष्मचूर्णानि कारयेत् ।
चूर्णान्येतानि संसृज्य मधुना सर्पिषा तथा ॥
ततस्तं भोजयेन्नागमतिभारेण पीडितम् ।
पिप्पली मधुकं रोध्रं तथा कालानुसारिवाम् ॥
उत्पलानि तथोशीरं यवांश्चात्र प्रदापयेत् ।
एतैर्विपाचयेत्क्षीरं मांसैश्च श्लक्ष्णपीषितैः[2] ॥

---

१ क. खिपन्योवनस्यते । २ क. °पीधितैः ।

वस्त्रेण परिसंश्रा(स्रा)व्य क्षीरं स्यात्सुखशीतलम् ।
ततो द्राक्षारसं दद्यान्माषचूर्णेन योजयेत् ॥
प्रत्यूषे पाययेन्नागं ततः संपद्यते सुखी ।
तेन मूत्रोपरोधस्तु श्वासो दाहश्च शाम्यति ॥
शृगालविन्नाचूर्णं स्यात्पिप्पलीद्वयमेव च ।
श्वेतं च लशुनं दद्याद्यथायोगं विचक्षणः ॥
एतत्संभृत्य संभारं स्थाल्यां प्रक्षिप्य साधयेत् ।
चतुर्भागावशिष्टं च क्वाथं वस्त्रपरिस्रुतम् ॥
तैलद्रोणे समावाप्य मर्दयेन्मौद्गमोदनम् ।
भोजनं यवसं पानं शीतलं संप्रदापयेत् ॥
एवं श्रेष्ठो भवेन्नागो भारोन्मथितपीडितः ।
प्रवातस्थाने शयनं वारणस्य प्रशस्यते ॥
सेचयेद्बहुशः स्थानं सुखशीतेन वारिणा ।
भोजने दापयेत्क्षीरमन्नयुक्तं नराधिप ॥
सर्पिर्दद्यात्समायुक्तं योगेनानेन शास्त्रवित् ।
प्राणो भवति तेनास्य वीर्यं तेजश्च वर्धते ॥
स्थाननिर्वाणशयने प्रमाथे पांशुघातने ।
सदा सुखोचितं कुर्याच्छय्या वाऽपि यथासुखम् ॥
न योजयेच्च तं नागं हस्तियुद्धे महीपते ।
तथा कर्मपथे वाऽपि निषावे(?)वर्तनेऽपि च ॥
एतैरुन्मथितो नागः पुनर्व्यापदमृच्छति ।
तस्मान्न योजयेद्राजा *भारेणोन्मथितं गजम् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने भारोन्मथितो नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

अथ सप्तत्रिंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ।
लुप्तः कथं संभवति कथं वा साध्यते हि सः ॥

---

* पुस्तकद्वयेपि 'भाषणो' इति पाठ उपलभ्यते ।

---

१ क. दाहः प्रशा° । २ क. °विष्टाचू° । ३ क. °स्थानशं° ।

एतन्मे पृच्छतो ब्रूहि निर्मलेनान्तरात्मना ।
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
औष्ण्याद्वेगाभिघाताद्वा क्षाराम्ललवणाशनात् ।
श्रमाद्भयाद्वा तापाद्वा यथा वा रूक्षभोजनात् ॥
वायुः प्रकुपितोऽत्यर्थं बलासं(?)पित्तमेव च ।
प्रेरयन्कोपयेस्वाक्तंकृततन्तुः (?) समन्ततः ॥
पच्यन्ते तेन मांसानि तेन लुप्त इति स्मृतम् ।
वाद्यते ताड्यमानोऽसौ मृदङ्ग इव ताडितः ॥
लुप्ताभिभूतं मातङ्गं विज्ञायाऽऽशु प्रसाधयेत् ।
चतुर्णां क्षीरिणां क्वाथं मधुयुक्तं निषेवितम् ॥
पोत(थ)येद्वा पचेद्वाऽस्य सक्षीरं लाजतर्पणम् ।
पथ्यं स्निग्धं च तत्सर्वं तमस्मै संप्रदापयेत् ॥
मयूरमृगमत्स्यानां वेसवारेण भोजयेत् ।
हरितं यवसंपन्नं सल्लकीं चसयारेपि(?) ॥
मनः प्रसादयेत्तस्य तोमं(?)सुखं न पाययेत् ।
(† न चास्य मनसः किंचिद्व्याघातमुपकल्पयेत् ॥
शाल्योदनं ससर्पिष्कं भोजयेद्रससंयुतम् ।
मत्स्याण्डकाभिसंयुक्तं क्षीरं चास्मै प्रदापयेत् ॥ )
लुप्तादेवं विमुक्तस्य बलं तेजश्च वर्धयेत् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने
लुप्तचिकित्सितं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## अथाष्टात्रिंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
भगवन्संग्रहे पूर्वं पत्रकमिरुदाहृतः ॥ १ ॥
तस्योत्पत्तिं निदानं च भेषजं च ब्रवीहि मे ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥ २ ॥

---

† धनुराकारस्थो नास्ति पाठः कंपुस्तके ॥

---

१ क. °पवस्या° । २ क. तामं ।

प्रावृट्काले महाराजे जरत्पत्राकुले वने ॥
सदंशमशकाकीर्णे शाद्वलोदकभूमिषु ॥ ३ ॥
चरन्ति करिणो हृष्टा यथाकालं यथासुखम् ॥
पत्रच्छन्नासु शाखासु कदाचित्पत्रजो नृप ॥ ४ ॥
रोमशस्ताम्रवर्णाभिः पत्रमाश्रित्य लीयते ॥
पत्रालयः पत्रभक्षी स पत्रकृमिसंस्थि(ज्ञि)तः ॥ ५ ॥
गजं स्पृशत्यसौ जन्तुर्गजो वा स्पृशते तु तम् ॥
अत्यन्तगुरुदेहस्तु गजो भित्त्वा च मेदिनीम् ॥ ६ ॥
हस्तेन जृम्भमाणस्तु शिरो धुन्वन्सुदुःखितः ॥
वेपते परिमूत्री च यूथाद्वा प्रपलायते ॥ ७ ॥
एतद्वै तस्य विज्ञानमत ऊर्ध्वं चिकित्सितम् ॥
*सर्पिषा सर्वशेषं तु शतधौतेन कारयेत् ॥ ८ ॥
कर्णाधानसमे तोये निर्वपेत्तमनेकपम् ॥
उत्तीर्य सलिलात्पश्चादिमं लेपं प्रदापयेत् ॥ ९ ॥
दूर्वाबिशकुशोशीरं सारिवोत्पलचन्दनम् ॥
नलवञ्जुलमूलानि सूक्ष्मचूर्णानि कारयेत् ॥ १० ॥
सर्पिषा सह संयोज्य लेपयेद्वारणं भिषक् ॥
यद्येतेन प्रयोगेण नोपशाम्यति वेदना ॥ ११ ॥
आरभेत क्रियामन्यां शास्त्रयोगेन योगवित् ॥
उभे हरिद्रे मञ्जिष्ठा नलदं मुस्तसारिवा ॥ १२ ॥
सर्पिषा सह संयुक्तं काले लेपनमुत्तमम् ॥
मुद्गौदनं प्रभूतेन सर्पिषा भोजयेद्गजम् ॥ १३ ॥
विचित्रैर्यवसैश्चैव यवसाध्यायकीर्तितैः ॥
दापयेन्मतिमान्वैद्यस्ततः संपद्यते सुखम् ॥ १४ ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने पत्रकृमिनामाऽष्टात्रिंशोऽध्यायः ॥ ३८ ॥

---

* 'सर्पिषा स्पर्शदेशं तु शतधौतेन भावयेत्' इत्यभिप्रायः प्रतिभाति ॥

---

१ क. °ज्ञ रम्ये पत्रा° । २ क. तौ । ३ क. भीत्वा । ४ क. तु ।

## अथैकोनचत्वारिंशोऽध्यायः ।

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ।
उरःक्षतः कथं नागो जायते शास्त्रकोविद[1] ॥
स पृष्टस्त्वङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ।
अतिभाराध्वगमनाल्लङ्घनात्प्लवते(ने) न वा ॥
नियोगाद्वाऽपि सहसा वृक्षाणां चापि भञ्जनात् ।
कपालाट्टतटादीनां प्राकाराणां च भञ्जनात् ॥
प्रतिहस्त्यभिघाताद्वा जलक्रीडात्ययेन वा ।
उरःस्तम्भोऽस्य भवति स निषीदति वेपते ॥
गजः स्तनति वोच्छिष्टन्गात्राभ्यां न च तिष्ठति ।
एतद्रोगसमुत्थानं चिकित्सितमतः शृणु ॥
सम्यक्स्थानोपपन्नस्य भेषजानि समाचरेत् ।
फालस्वेदं च विधिवन्नाडीस्वेदं समाचरेत् ॥
सुस्विन्नमेव मातङ्गं गोमयेन प्रलेपयेत् ।
तर्कारी बिल्वमेरण्डं वेणुपत्रं यवास्तिलान् ॥
आटरूषकपत्राणि अर्कं मेषविषाणिनाम्[2] ।
अजशृङ्ग्यग्निमन्थे च जले प्रक्षिप्य पाचयेत् ॥
ततस्तं संपगासेन[3] (?) स्वभ्यक्तं परिषेचयेत् ।
नाडीस्वेदं विदध्याच्च त्रिवृतां चैव पाययेत् ॥
यवकोलकुलत्थैश्च काश्मर्योदुम्बरैस्तथा ।
द्वाभ्यां वा पञ्चमूलाभ्यां तैलं धीरो विपाचयेत् ॥
तेनास्याभ्यञ्जनं कुर्यान्नस्यकर्मानुवासनम् ।
समवस्थापयेत्स्थाने[4] सुखशय्यां च कारयेत् ॥
स तेन लभते सौख्यमारोग्यं च नियच्छति ।
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थान उरःक्षतो नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

१ ख. °ते शास्त्र°। २ क. °णिजाम् । ३ क. समगासेन । ४ क. समे च स्था°।

## अथ चत्वारिंशोऽध्यायः ।

अङ्गो हि राजा चम्पायां रोमपादो महायशाः ।
विनयेनोपसंगम्य पालकाप्यं स्म पृच्छति ॥
शोणिताण्डस्य भगवल्लँक्षणं वक्तुमर्हसि ।
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥
अभिघातेन नागस्य यदा मूत्रं विमुच्यते ।
कोशो विवर्णो भवति परिमूत्री च जायते ॥
ततः कोशगतो वायुरभिघातेन कोपितः ।
ततः कोपयते रक्तं मूत्रं बस्तौ गतोऽनिलः ॥
उद्गमो जायते तेन वक्ष्यमाणः परो नृप ।
मृदू भवेतां वृषणौ स्तनौ पाण्डुत्वचूचुकौ ॥
पिण्डिकाभिः परिवृतौ भवेतां.... .... .... .... ।
.... .... .... .... .... .... .... ....डि न शूयते ॥
वर्धते पेचक.... .... ....ण्डकोशौ च दन्तिनः ।
शुक्रमूत्रनिरोधाच्च विधुनोति स वालधिम् ॥
एतद्धि तस्य विज्ञानमत ऊर्ध्वं चिकित्सितम् ।
अण्डकोशौ च यत्नेन शस्त्रेणास्योपवेधयेत् ॥
शोणितं मोक्षयित्वा तु सर्पिषाऽभ्यञ्जयेत्तु तम् ।
प्रतिपानं त्र्यहं दद्यात्सुरामधुसमन्वितम् ॥
उभे हरिद्रे मञ्जिष्ठा मधुकोशीरदारु च ।
आसवेनाभिसंयोज्य प्रतिपानं प्रदापयेत् ॥
उशीरं पद्मकं चैव हरितालं मनःशिलाम् ।
तण्डुलीयकमप्यत्र समायोज्य प्रदापयेत् ॥
कदुष्णं मधु कृत्वा तु वृषणौ तस्य लेपयेत् ।
सुखी भवेन्न चेत्तेन ततः स्वेदं समाचरेत् ॥
अग्निकर्म ततः कार्यमुभयोरण्डकोशयोः ।
जम्ब्वोष्ठेनाग्निवर्णेन समन्तात्परिदाहयेत् ॥
पिप्पलीशृङ्गवेरेण गुडतैलेन चैव हि ।
सुरां नागाय संयुक्तां प्रतिपानं प्रदापयेत् ॥

---

१ क. मूत्रयन्तो ग°। २ क. जह्वोष्ठे°।

लवणं तिलकल्कं च शोधनार्थं प्रदापयेत् ।
गैरिकं घृतसंयुक्तं दापयेद्व्रणरोपणम् ॥
तिलकल्कसमायुक्तं प्रलेपं तस्य कारयेत् ।
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥
इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने
शोणिताण्डी नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

---

अथैकचत्वारिंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
पादरोगास्त्वया सम्यक्त्रिंशत्तु समुदाहृताः ।
यस्त्वया क्षुद्ररोगेषु पुनरन्यः[1] प्रकीर्तितः ॥
यवगण्डशिरो[2] नामा पादरोगः सुदारुणः ।
तस्य लक्षणमुत्पत्तिं चिकित्सां च ब्रवीहि मे ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ।
यदाऽत्यर्थं गजैस्तां तु(?)[3]सा—सान्ववगाह्यते ॥
भुक्तो वा निशि जागर्ति व्यानो वायुर्यदा भवेत् ।
कषायतिक्तकटुकैराहारैर्वाऽप्यभिद्रुतः[4] ॥
तदाऽनिलः प्रकुपितो वारणस्य महीपते ।
शूनान्पादान्करोत्यस्य नखवृद्धिं च हस्तिनः ॥
तेषामाकृतयो बह्व्यस्तिर्यगूर्ध्वमधस्तथा ।
जायन्ते वर्धमानास्ते नैकवर्णाः कदाचन ॥
केचा[5] वला विवर्णा.... दलिताः स्फुटितास्तथा ।
वक्राः शोणितपूर्णाश्च भवन्ति चरणा नृप ॥
ज(य)वगण्डशिराख्येन पादरोगेण पीडिताः ।
सर्वेभ्यः पादरोगेभ्यः कष्टोऽयमिति कीर्तितः ॥
तमाहुर्नृपशार्दूल नृवैद्या वातशोणितम् ।
उत्पन्नमात्रः साध्योऽयमसाध्यः कालपर्ययात् ॥
साधनं विधिवत्तस्य कीर्त्यमानं निबोध मे ।

---

१ क. ख. °रन्यत्प्रकी° । २ ख. °ण्डसरो । ३ क. °जस्तोतु । ४ क. °भिश्रुतः । ५ क. कचाचला ।

पूर्वं विश्रा(स्रा)वणं कार्यं ततोऽस्य नखशोधनम् ॥
प्रलेपो बहुशश्चास्य वातघ्नैः संप्रलेपयेत् ।
एवं पूर्वक्रमं कृत्वा महास्नेहेन स्नेहयेत् ।
बस्त्यभ्यङ्गाच्छयानाति(?) त्रिवृत्तेन भिषग्वरः ॥
इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने यवगण्डशिरो नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

अथ द्वाचत्वारिंशोऽध्यायः ।

ज्वलनादित्यसंकाशं मुनिमुग्रतपोधनम् ।
पृच्छति स्म रोमपादः सहस्राक्षसमद्युतिः ॥
चर्मकीलाः संभवन्ति साध्यन्ते वा कथं पुनः ।
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
यदा प्रकुपितं पित्तं त्वचमाश्रित्य तिष्ठति ।
तच्छोष्यमाणं वातेन कदम्बमुकुलीकृतान् ॥
चर्मकीलान्संजनयेत्तेषां वक्ष्यामि साधनम् ।
क्षारशस्त्राग्निकर्माणि यथायोगं तु कारयेत् ॥
कषायतिक्तलवणैर्धावनालेपनानि च ।
तैरेव पक्वस्नेहस्तु म्रक्षणे सततं हितः ॥
लशुनानि हरिद्रे द्वे पिप्पल्यौ मरिचानि च ।
सर्षपान्ग्र(न्गृ)हधूमं च गवां मूत्रेण पी(पे)षयेत् ॥
एतदालेपनं श्रेष्ठं चर्मकीलविनाशनम् ।
द्विव्रणीयोपचारेण व्रणाञ्जातांश्च साधयेत् ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ।
इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने चर्मकीलो नाम द्वाचत्वारिंशोऽध्यायः ॥ ४२ ॥

अथ त्रयश्चत्वारिंशोऽध्यायः ।

अतः परं प्रवक्ष्यामि वृद्धस्य परिरक्षणम् ।
वयोमध्यं व्यतिक्रान्ते वायुः श्लेष्मा प्रकुप्यति ॥

---

१ क. °पनैः । ए° । २ क. वा ।

शोणितं चास्य पित्तं च तस्मादल्पतरं भवेत् ।
शोणितस्याल्पभावाच्च विवर्णपरुषच्छविः ॥
सर्वाङ्गशिथिलो भूय उत्साहश्चास्य हीयते ।
.... ..... ....हीनभावस्य चिरेणास्य विपच्यते ॥
वातश्लेष्मविवृद्धौ तु न शक्तो भोजितुं द्विपम् ।
दारुणं लभते व्याधिं जरामाहुर्मनीषिणः ॥
तस्योपयोगान्कुर्वन्ति स्थानं यवसभोजनम् ।
शय्याभागे मृदुं कुर्याद्गृहत्तु सुसमाहितम् ॥
तत्र संस्थापयेच्चोक्ता यथाकालविभागशः ।
निर्वाणगमनाद्येतं कारयेत समं तथा ॥
(*पांशुप्रमध्वरणं(?)सममेव निषेधयेत् ।
शिरोभ्यङ्गं च नागस्य गात्राभ्यङ्गं च कारयेत् ॥
मृदुगात्रापरो राजञ्शिरोदाहात्प्रमुच्यते । )
दापयेत्प्रतिपानं तु द्राक्षाद्रोणेन संयुतम् ॥
यथायोगप्रमाणेन दीप्यते ह्यनलस्तथा ।
यवसानि विचित्राणि रसं दुग्धं तथैव च ।
भोजनं च भिषग्दद्याद्यथोक्तं समुपाचरेत् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने वृद्धचिकित्सा नाम त्रयश्चत्वारिंशोऽध्यायः ॥ ४३ ॥

---

## अथ चतुश्चत्वारिंशोऽध्यायः ।

अथाङ्गराजो रोमपादो भगवन्तं पालकाप्यमनलमिव दीप्यमानं पप्रच्छ— भगवन्कथं मतङ्गजोऽवसन्नो भवति ॥

पालकाप्यो महाराजं.... .... .... .... .... ..... .... ।
हेतुभिर्विविधैर्यस्मादवसीदति जीवितम् ॥
अवसन्नस्ततः साध्यो क्षणा(?) वाच्या व्यतिक्रमात् ॥

इह खलु भो ग्रामेऽरण्ये वा संनिहिताच्च(च)लविविधविध्वंसमहिमपतनशिशिरपवनपरिजीवनाद्वा म्रियते । अत्यर्थकर्मणाऽतिव्यायामात्, अध्वगमनात्,

---

* धनुराकारमध्यस्थो नैव पाठः कपुस्तके ॥

---

१ क °तरो भ° । २ क. मृदू ।

प्रतिहस्त्यभिघातात्, ग्रामेऽत्यर्थबन्धनात्, विषमविरुद्धातिमात्राल्पभोजनात्, अनशनात्, अत्यशनात्, अत्यर्थस्नेहात्, रौक्ष्यात्, अभिघातात्, उपेक्षणाच्च व्याधीनाम्, मूर्खवैद्यक्रियाभिश्चावसीदति, ग्राहेण वा स म्रियते। कफपवनरुधिरपित्तसंनिपातसंभवैर्व्याधिभिः, संग्रामे वा शरशक्तितोमरपरश्वधभिन्दिपालकणयकम्पणखर्परखड्गमुशलमुखण्डिपरिघदीर्घासिशूलशस्त्राभिघाताद्वाऽवसीदति, जरया च, इति ॥

अवसन्नानां च नागानां चिकित्सां संप्रयोजयेत् ।
सहसा व्याध्यभिहतः स्वयं वा परिणामितः ॥
अज्ञानान्निपतेन्नागो कूपे सुविषमेऽपि वा ।
अवसन्नमेतं विज्ञाय समन्तात्परिषेचयेत् ॥
द्वारशालां तृणं काष्ठं तुलां चैवास्य कारयेत् ।
उत्थापयेत्तु तं नागं सर्वयत्नेन बुद्धिमान् ॥
जलाशये यदि पतेत्पाययेयु(?)रुदकं ततः ।
कूपे यदा पतेन्नागस्तत्र क्षिप्रं प्रपूरयेत् ॥
ततः शालां च पांशुं च तृणानि च समाक्षिपेत् ।
सर्पिः क्षीरं च पानार्थं सर्पिषा वाऽपि सेचनम् ॥
यवसानि विचित्राणि हरितानि मृदूनि च ।
फाणितेनातिसंयोज्य के(क)वलांस्तु प्रदापयेत् ॥
असंविभागादेतानि अवसन्नः पतेद्गजः ।
भारोन्मथितकायो वा निमग्नो वाऽपि सर्वशः ॥
अवसीदेद्गजो राजन्नृपाणाम*नवेक्षयेत् ॥

तत्र श्लोकौ भवतः—

नागान्गृहीत्वा स्वयमेव सजा पश्येत्सदा पुत्रवदप्रमत्तः ॥
वैद्यं पुरस्कृत्य च कारयेत यद्यस्ति कार्यं प्रतिकारयुक्तम् ॥ १ ॥
एते बलानां प्रबलाश्चतुर्णां महाबलोद्ब्रह्मकरात्प्रसूताः ॥
इहैव चामुत्र च पूज्यमाना नागाः प्रयच्छन्ति नृपाय तुष्टिम् ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥

इति श्रीपालकाप्ये गजायुर्वेदे महाप्रवचने वृद्धपाठे द्वितीये क्षुद्ररोगस्थानेऽवसन्नो नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

* 'मनवेक्षणात्' इति भवेत् ॥

---

१ क. स्तः । २ ख. °ला ब्रह्म° ।

## अथ पञ्चचत्वारिंशोऽध्यायः ।

अङ्गराजो महाप्राज्ञः पालकाप्यं स्म पृच्छति ।
व्याधिर्जठरको नाम जायते साध्यते कथम् ॥
लक्षणैर्लक्ष्यते वाऽपि कीदृशैर्द्विजसत्तम ।
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
व्यायामादतिरौक्ष्याच्च मारुतो जठराश्रितः ।
तस्माज्जठरको नाम व्याधिर्भवति हस्तिनः ॥
तमष्ठीलमिति प्राहुर्नरवैद्या नराधिप ।
विकारान्गच्छति बहून्विष्करूपो हि मारुतः ॥
कदाचिन्मूत्रबस्तिस्थः कदाचित्पायुसंस्थितः ।
पक्वाशयस्थः कुक्षिस्थो दोषस्थानगतः क्वचित् ॥
क्षोभणं ग्रासविद्वेषी जठरस्य च गर्जनम् ।
तथा संकोचनं शूलमाध्मानं संनिषादनम् ॥
जठरस्थोऽनिलः कुर्याद्दौर्मनस्यं च दारुणम् ।
प्रवरोम्वजनस्थस्तु कुर्यान्मूत्रपुरीषयोः ॥
आमाशयस्थो रोधं च कुर्याद्वह्नेश्च मन्दनम् ।
दोषा ह्यजघने कुर्यात्पीडां च महतीं तदा ॥
तस्मै स्निग्धाम्ललवणमधुरं चापि भेषजम् ।
हितं युक्तं यवान्नं च सर्पिषां पिशितैरपि ॥
स्वस्तिकं वा ससर्पिष्कं गजशास्त्रविदो जनाः ।
देयाः कार्यवशाच्चापि बस्तयो देहशोधनाः ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ।

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने जठरको नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## अथ षट्चत्वारिंशोऽध्यायः ॥

अथ भगवन्तं पालकाप्यं रोमपादोऽङ्गाधिपतिरपृच्छत्—'भगवन्ये स्विमे

१ ख. °वाऽपि शतै° ।

द्विरदपतयो बाला ग्रहणमुपगच्छन्ति । तेषां किं विधानम्, कथं च संरक्ष कार्या, भगवन्मनोमोहोऽत्र समागच्छत्येव बालेषु ॥

एवं पृष्टः पालकाप्यस्ततोऽब्रवीत्—'इह खलु भोः स्वयूथवनवाससुखसंवृद्ध (द्धा) गिरिशिखरविवरकन्दरकाननेषु बहुविधकुसुमवनेषु तृणकवलकुवलपल्लव न्भक्षयन्ति पितृमातृसंबद्धाः । तथा—चक्रवाकसारसानुगीतेषु सुरभिसलिलशी तलेषु सुखसंवृद्धाः, त इह चोद्योने वनेषु वस्त्राभरणसुवर्णरत्नविविधकुसुमविभू षणार्थं कदाचिद्ग्रहणमुपगच्छन्ति । तेषां पितृमातृवियुक्तानां बालानां पोषण माभरणसुवर्णमनुग्रहार्थं भोजनयवसकवलकुवलविधानं वक्ष्यामः ॥

तेषां व्याधिनिग्रहार्थं बलिहोमप्रायश्चित्तकर्माणि बहुविधपौष्टिकरक्षोघ्नानि सामान्यवस्तूक्तानि नित्यं बालानां कारयेत् । सर्पिःक्षीरमधुफाणितसंसृष्टपा दद्यात् । औदकानि यवसानि हरितानि मृदुविचित्राणि समृणालोत्पलशृङ्ग टककसेरुकमलोदकानि मत्स्यण्डिकागर्भाणि भोजयेत् । गव्यं च घृतं क्षी नवनीतं मत्स्यण्डिकाशर्करापिप्पलीचूर्णसंसृष्टं सर्पिःस्निग्धं भोजयेत् । रसल वणसुरातैलानि वर्जयेत् । ततस्तेषामादशा(शमा)द्वर्षात्प्रभृति प्रभूतमनूकपि ष्पा(?)षीकाविदुवितानतिपानावग्रहकरगात्रापरनाभिमेढ्रोत्कृष्टपादकण्ठगलकपो लानामभ्यङ्गं सर्पिषा कारयेत् । दन्तवेष्टौ च तैलेनाभ्यञ्जयेत् । चतुराह्निकं सर्पिःसंघसेकं कारयेत् । तेषां भारादानाध्वगमनवधबन्धनानि न कारयेत् करतलसंस्पर्शनं च तेषां सुकुमारेण कर्मणा गमनविधिं बलमासां(?)प्रकारयेत् शय्याभागं च बालानां करिष्येवा(?)मिश्रेण पांशुविरचितेन सुखशयनं कार येत् । एवं संरक्षितशरीरा बालाः सर्ववातातपसहाः फलदा भवन्ति । तृती यायां चतुर्थ्यां वा दशायां गमनविधिं विशेषेण कारयेत् । तत्र श्लोकाः—

एवं बालेषु कर्तव्यो दयापूर्वमनुग्रहः ।
आयुर्वर्णबलोपेता नीरोगाश्च भवन्ति हि ॥
अतोऽन्यथा न वर्धन्ते बालास्तु मनुजाधिप ।
तेषामपि न वर्धन्ते कुलेषु कुलवर्धनाः ॥
बालांस्तु रक्षयेद्यस्तु स्वपुत्रानिव नित्यशः ।
स राजा विजयी नित्यं मृतः स्वर्गे प्रमोदते ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने बालचिकित्सा नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

१ क. °च्छति बा° । २ क. °द्यानेपु वस्त्रा° । ३ क. भोजयेत् । ४ क. दन्तौष्ठौ । ५ क. °ष्यमामि° ।

अथ सप्तचत्वारिंशोऽध्यायः ।

---

हस्तिशालां समासीनं गजशास्त्रार्थकोविदम् ।
दिव्यप्रभावं तपसा ब्रह्मचर्याग्नितेजसम् ॥
हुताग्निहोत्रमासीनं कृतपूर्वाह्णिकक्रियम् ।
पालकाप्यं मुनिवरमङ्गराजः स्म पृच्छति ॥
रात्रौ संप्रतिपन्नो हि रूपं कुर्यादनेकपः ।
त्रसन्तो विप्रधावन्ति हस्तेनाऽऽघ्राय सर्वशः ॥
वृक्षप्राकारभित्तीश्च दन्ताभ्यां घ्नन्ति सर्वशः ।
उद्धूतनेत्रा मातङ्गा वेपमानाः सहस्तकाः ।
वियुज्यन्ते तथाकल्पाः प्राणैर्विमनसो गजाः ॥
न दोषलिङ्गं भगवन्पश्याम्यन्तं पराभवम् ।
अत्र मुह्यति मे बुद्धिः कथमेतत्प्रचक्ष्यते ( क्ष्व मे ) ॥
एवमुक्तस्ततोऽङ्गेन पालकाप्यस्ततोऽब्रवीत् ।
व्याधिर्घोरो हि नागानां रात्रिक्षिप्त इति स्मृतः ॥
तस्य दोषं च सिद्धिं च रूपं चापि शृणुष्व मे ।
भाराध्वगमनश्रान्तं क्षुधार्तं व्याधिपीडितम् ॥
समापयन्त्येवमेते ग्रहाः संमूढचेतसम् ।
श्मशाने च वने ग्रामे पांसुखण्डावसथाश्रमे ॥
रोगाभिभूतः संक्लिष्टो··· ···· ········ ···· ···· ।
यदा च भगवान्देवालये स्थाने चतुष्पथे ॥
अमनोज्ञाश्च ये देशास्तत्राऽऽश्रयणमेव च ।
अशास्त्रोक्तेन विधिना स्थानं वा यत्र निर्मितम् ॥
सूत्रासरोह(?)वादित्रघोषाश्च विहिता मया ।
अलंकाराश्च विविधाः स्नानमाल्यानुलेपनम् ॥
तथा वैशेषिका शान्तिर्यत्र पर्वसु पर्वसु ।
यत्प्रोक्तास्र समस्ताश्च परिहीणा यथा क्रिया ॥
एभिर्बहुभिरन्यैर्वा व्यभिचारपरिक्रमैः ।
छिद्रान्वेषीणि रक्षांसि संस्पृशन्त्यप्यवग्रहाः ॥

---

१ ख. °शालास° । २ ख. °भित्ताश्च । ३ क. °चक्षते । ४ ख. पाषण्डावसथा° । ५ क. स्तशशरोह । ६ क. °मस्तांश्च ।

जन्मनक्षत्रपीडायां स्वामिनो वा विशेषतः ।
आविशन्ति ग्रहा रात्रौ यदा राजन्मतङ्गजान् ॥
यैरेषां क्षीयते मृत्युः सहसाऽग्निविषोपमैः ।
स्वस्थानां दृष्टरूपाणामकस्मादपि दन्तिनाम् ॥
रूपं यद्दृश्यते व्याधेर्यस्य तत्सदृशं भवेत् ।
चिन्त्यमानोऽपि यत्नेन विकारो नोपलभ्यते ॥
एवं रक्षोगृहीतानां प्रायो भवति लक्षणम् ।
पर्वते वा वने वाऽपि पशुर्वा यत्र वध्यते ॥
अमनोज्ञे स्थितं देशे स्थानेष्वायतनेषु च ।
करेण्वा वेष्टितं वाऽपि तथा भीतं क्षतं भृशम् ॥
(सं)ग्रामाद्वाऽप्यपावृत्तं तथैव रुधिरोक्षितम् ।
अधूपितमनाचान्तमप्रदीपे स्थितं गजम् ॥
रसभोजनसंयुक्तमस्नातं चाप्यनग्निकम् ।
चैत्यायतनमूलेषु स्थापयत्यालयं विना ॥
समुद्विग्नं परित्रस्तमूढात्मानं हृतौजसम् ।
अप्रमत्तं प्रमत्तं वा तं रक्षांसि पतन्ति नु ॥
जाग्रतं वाऽथ सुप्तं वा ग्रहो नागं समृच्छति ।
यथाऽप्सु सुप्रसन्नासु विमले वाऽपि दर्पणे ॥
प्रविष्टा दृश्यते छाया न च भित्त्वा विशेच्च सा ।
एवं ग्रहा हस्तिकाये देहेन्द्रियविबाधकाः ॥
प्रत्यभिसत्त्या संप्राप्ताः शरीरं ते शरीरिणाम् ।
छायाग्रस्तस्य भीतस्य रूपं वित्रासितस्य वा ॥
अङ्कुशैस्ताडितस्याथ वेणुवित्रासितस्य वा ।
उल्कापटहसंख्यान्नं शब्देनोद्वेजितस्य वा ॥
प्रतिहस्त्यभिघाताद्वा उत्कृष्टेन हतेन वा ।
संज्ञाप्रणाशो भवति चेतसाऽप्यवमुह्यति ॥
रात्रौ मुह्यति मातङ्गो दिवा स्वस्थश्च जायते ।
मूत्रश्रो(स्रो)तांसि मर्माणि धमन्यो योगवाहिताः ॥
रात्रिक्षिप्तस्य वातेन हृदयं च न मुह्यति ।
स भूतग्रहसंरब्धो भीतः संज्ञाविमोहितः ॥

---

१ क. नानं । २ ख. सपृच्छति । ३ क. ख. योगवादिवा ।

रात्रिक्षिप्तो भवेदेवं तस्येदं लक्षणं शृणु ।
सर्वाहारनिवृत्तश्च बलाद्गच्छति वेगतः ॥
रात्रौ मूढः संवसति दिवा स्वपिति वारणः ।
लाला मुखात्प्रस्रवति हस्तं च परिखादति ॥
तर्जयेत्सर्वभूतानि संरब्धो रक्तलोचनः ।
गृहं वृक्षं मनुष्यं वा अश्वमश्वतरं तथा ॥
वित्रासयति वेगेन घटयत्यङ्कुशग्रहम् ।
उद्विग्ननेत्रः सततं वेपते चातिमात्रतः ॥
असृग्वल्लिवसागन्धिश्चर्मगन्धिश्च लभ्यते ।
मूर्छति व्यथते रात्रौ निमीलति निषीदति ॥
सत्यसाहक्षयोति (?) स्यात्स्त्यानगात्रश्च जायते ।
एवं स दारुणो व्याधी रात्रिक्षिप्तेस्तु कीर्त्यते ॥
क्रियां तस्य प्रवक्ष्यामि तन्मे निगदतः शृणु ।
सर्पिषा स्नेहनं तस्य केवलेन समाचरेत् ॥
समालभनधूपं च भौतिकं तस्य कारयेत् ।
वारुणं गुग्गुलुं कुष्ठं हरितालं मनःशिलाम् ॥
जटिलां भूतकेशीं च सर्पिषा साधयेत्समम् ।
तदस्य पानेऽभ्यङ्गे च हितमक्ष्णोस्तु तर्पणम् ॥
त्रायमाणां जयां नीलां लाङ्गलीं नागबलां बलाम् ।
कपित्थं च वयस्थां च वोरकं सरलं कुशम् ॥
शूकरीं जटिलां छत्रामतिच्छत्रां सकर्कटीम् ।
चारटीं भूतकेशीं च स्थिरां कटुकरोहिणीम् ॥
सद्योपुरुषदन्तां च वृश्चिकालीं कदम्बिकाम् ।
एतत्सर्वं समाहृत्य प्रदेहं तस्य कारयेत् ॥
कुष्ठं वचां तथा हिङ्गुं जटिलां चव्यचित्रकम् ।
अलक्तं वासकोशीरमुपयुक्तं ससर्षपम् ॥
गोलोमीभिश्च सघृतैः संध्याकालेषु धूपयेत् ।
करञ्जबीजं पिप्पलीं सहिङ्गु रोचको वचा ॥
बस्तमूत्रेण पिष्टैतन्नस्ये तस्य तु सेचयेत् ।
छत्रां वराहदन्त.... .... .... .... .... .... .... .... ॥

---

१ क. संचलति । २ क. °स्तस्य की° । ३ क. चोरकं ।

..... .....हस्तिदन्तेन्द्रगोपकं मरिचानि च ।
संकल्कानि..... ..... .....घृतपिष्टं तदञ्जनम् ॥
गुडो द्राक्षा च मरिचं दूर्वा श्वेताश्च सर्षपाः ।
..... .....वचाजगन्धाभिः..... ..... ..... ..... ..... ..... ॥
..... ..... ..... ..... .....स्तैलं सिद्धमभ्यञ्जनं हितम् ।
येतस्य बृहती हिङ्गु भार्गी कटुकरोहिणी ॥
कम्पिल्लकं निर्दयनीलपास(?)कण्टकारिकाम् ।
ज्योतिष्मतीमतिविषां तुम्बरूणि पुनर्नवा ॥
नालिकेरं वचा कुष्ठं श्रीवेष्टकपलंकषम् ।
उभे च लशुने दद्यात्तथा पोटगलामपि ॥
विकङ्कतां *बेस्तगस्त्वं(?)गोलोमीं कर्कटीं शुभाम् ।
मर्कटीं सुस्क्रलोमं(?)च रक्षोघ्नं च प्रदापयेत् ॥
पिष्टैर्मूत्रैरजादीनां सर्पिरेतैर्विपाचयेत् ।
तदस्य पानेऽभ्यङ्गे च हितमक्ष्णोश्च तर्पणम् ॥
भूतग्रहमपस्मारमुन्मादं चापकर्षयेत् ।
अथ सर्षपतैलेन प्रलिप्याऽऽतपसंस्थितम् ॥
अथ मातङ्गमूत्रेण परिषिच्याथ मर्दयेत् ।
अथवा बस्तमूत्रेण खरमूत्रेण वा पुनः ॥
गोधामूत्रेण वा गाढं यथालाभं प्रमर्दयेत् ।
रात्रिलिप्तस्य नागस्य समन्ताच्च परिश्रयेत् ॥
पुष्पैस्तन्दुलस्त्वैस्व(?)उशीरैः पललौदनैः ।
मत्ताय कुर्वीत बलिं ततः स लभते सुखम् ॥
(?)मनःप्रसादं यथा स्याद्रवद्विंसां(?)समाचरेत् ।
वचां हिङ्गुं वयस्थां च चण्डालीं सपलंकषम् ॥
बस्तरोमाणि सर्पिश्च त्रिफलां च महौषधम् ।
सह सर्जरसैरेतैर्बहुशो धूपयेद्गजम् ॥
हस्तिरोमाणि सर्पिश्च रोमाणि कपिबस्तयोः ।
गोश्च रोमसमायुक्तो रक्षोघ्नो धूप इष्यते ॥

---

* 'बस्तगलं' इति भवेत् ।

---

१ क. यवस्य । २ ख. वांस्तगस्त्वं । ३ मत्तोपकु°

गन्धमाल्यौदनैर्विप्रानभ्यर्च्य स्वस्ति वाच्य च ।
पुण्याहं वाचयेद्वैद्यः शालायां तस्य हस्तिनः ॥
हुत्वाऽग्निमाज्यशेषेण वारणं समुपस्पृशेत् ।
सर्पिषा भोजयेन्नागं तैलेन च रसेन वा ॥

तत्र श्लोकः—

*रात्रिक्षिप्तं गजं सम्यग्यश्चिकित्सेत्स शास्त्रवित् ।*
*स वैद्यो मानसान्कोशाद्रोगांश्चार्हति पार्थिवात् ॥*

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने रात्रिक्षिप्तो नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

## अथाष्टाचत्वारिंशोऽध्यायः ।

---

भगवन्तं महात्मानं पञ्चेन्द्रियसमाहितम् ।
हस्तिशास्त्रविशेषज्ञमृषीणां संज्ञितं[1] मुनिम् ॥
कृत्वाऽग्निहोत्रं प्रवरं पालकाप्यं कृताञ्जलिः ।
पप्रच्छ सुखमासीनं रोमपादो महामतिः ॥
भगवन्केन जायन्ते मूत्रसङ्गाः सुदारुणाः ॥
निदानं च कथं तेषां भैषज्यं च महामुने ॥
एवं पृष्टस्तु भगवान्पालकाप्यस्ततोऽब्रवीत् ॥
मूत्रसङ्गान्विशेषेण शृणु राजन्पृथक्पृथक् ॥
मूत्रसङ्गा मया प्रोक्ताः संग्रहे तु समासतः ॥
समासेन यथाशास्त्रं नाम चैषां प्रकीर्तितम् ॥
तेषां निदानमुत्पत्तिं चिकित्सां च महीपते ॥
साध्यासाध्यं च नागानां यथावत्संप्रवक्ष्यते[2] ॥
यदा तु वारणोऽत्यर्थं द्रुतमध्वनि युज्यते ॥
त्वरयाऽतिप्रवृत्तस्य न मूत्रमतिवर्तते ॥
तस्य बस्तिर्विपच्येत मूत्रवर्णस्तथैव च ॥
इमानि चापि लिङ्गानि भिन्नबस्तेर्भवन्ति तु ॥
अभीक्ष्णं कुरुते मूत्रमप्रसृष्टं मतङ्गजः ॥
आध्मातकुक्षिर्विमना ध्यानप्रस्तुतलोचनः ॥

---

१ क. संजितं । २ क. °प्रचक्षते ।

नाऽऽदत्ते विविधान्भोगान्यवसं नाभिनन्दति ॥
भिन्नं पुरीषं बहुशो बहुवर्णं च मेहति ॥
भिन्नबस्तिमसाध्यं तु प्रवदन्ति चिकित्सकाः ॥

इति भिन्नबस्तिः ।

चिकित्सां लक्षणं चैव साध्यानां संप्रवक्ष्यते ॥
गिरिजैर्यवसैर्यस्तु प्रतिच्छन्नो यदि द्विपः ॥
अत्यर्थं भोजयेद्रूक्षमयोगाद्वातकोपनम् ॥
प्र(अ)शक्तं वा प्रयुज्येत भृशं वा त्रस्यते यदा ।
मनसश्चोपतापेन वायुः कुप्यति दन्तिनः ॥
स बस्तिदेशमाश्रित्य जनयेद्गाढमूत्रताम् ।
शिरा मूत्रवहा याश्च बस्तिस्रोतःसमाश्रिताः ॥
ता वायुरभिसंरुध्य स्रोतस्तिष्ठति पीडयन् ।
स तेनाऽऽर्तो हि मातङ्गो वेपते संनिषीदति ॥
संकुच्य सर्वगात्राणि कृच्छ्रान्मेहति वारणः ।
मूत्रसङ्गार्दितो नागस्तस्य वक्ष्यामि लक्षणम् ॥
तं स्पष्टलवणां नागं प्रसन्नां प्रति पाययेत् ।
सर्पिषा वाऽपि सुस्निग्धां कृशरां भोजयेद्गजम् ॥
द्विपश्चमूलकाश्मर्यमधुकं बदराणि च ।
यवान्मुद्गान्कुलत्थांश्च सलिलेन विपाचयेत् ॥
स्निग्धं तु कारयेद्यूषं पिप्पलीमरिचैर्युतम् ।
भोजनं दन्तिने स्नेहि प्रतिपानं च कारयेत् ॥
जाङ्गलानां रसैश्चैनं शालीनामोदनं मृदु ।
माषान्नसैन्धवोन्मिश्रं वारणं प्रतिभोजयेत् ॥
यवसानि च देयानि मधुराणि मृदूनि च ।
निवाते शयनं चास्य स्थानं चैव प्रशस्यते ॥
उष्णाम्ललवणप्रायैः स्निग्धैश्चाऽऽहारभोजनैः ।
वातजो मूत्रसङ्गस्तु प्रशान्तिं तेन गच्छति ॥

(इति) गाढमूत्री ॥

स क्षारलवणाम्लानां कटुकानां च सेवनात् ॥
उष्णानामतिमात्रं वा भोजनानां निषेवणात् ॥

---

१ क. °लक्षणान्नागं । २ क. °स्तु बस्तपानं तु कारयेत् ।

यदा पित्तं प्रकुपितं बस्तिमासाद्य तिष्ठति ॥
स दह्यमानः पित्तेन मत्तवत्क्षरति द्विपः ॥
प्रवाह(ह्य)माणो विसृजेन्मूत्रमल्पं मुहुर्मुहुः ॥
विष्टभ्य गात्राण्यत्यर्थं प्रमेहत्यथ कूजति ॥
परिमूत्री स विज्ञेयो व्याधिर्नागस्य पैत्तिकः ॥
माषपर्णीं विदारीं च मुद्गपर्णीं शतावरीम् ॥
काकोलीं क्षीरकाकोलीं जीवकर्षभकावपि ॥
पञ्चमूलं च तृणजं साम्बष्ठां चापि पाययेत् ।
क्वाथं च पाययेन्नागं शीतलं शर्करायुतम् ॥
अग्निमन्थं श्वदंष्ट्रां च बलामतिबलामपि ।
वृक्षादनीं चांशुमतीं रम्यकं च विपाचयेत्[1] ॥
चतुर्भागावशेषं तु शीतलं च परिस्रुतम् ।
शर्कराचूर्णसंयुक्तं वारणं प्रतिपाययेत् ॥
(?) मधुराण्यन्नपानानि *घृतेन युतं निपाययेत् ।
(?) स्नावयेच्चास्य †सिक्कस्थाश्चत्वारि कुम्भान्समन्ततः ॥
रसांश्च पाययेन्नागं सततं चैव भोजने ।
पाययेद्गुडसंयुक्तां प्रसन्नां सीधुमेव च ॥

इति परिमूत्री........ ।

अव्यायामाद्दिवास्वप्नात्क्षीरेक्षुगुडसेवनात् ॥
शीतसंसेवनाच्चापि श्लेष्मा कुप्यति दन्तिनः ।
तत्प्रकोपाच्च मातङ्गः पिष्टमेहत्वमृच्छति ॥
स प्रमेहति चात्यर्थं यवपिष्टोदकप्रभम् ।
(?) सशुक्रं वा प्रमेहं तु तनुर्विवरान्तरास्थितः ॥
प्रमेहं चास्य लक्ष्येत वेदनाबहलान्वितम् ।
सपञ्चलवणं चास्मै शार्करं मधुमेव च ॥
प्रतिपानं प्रसन्नां वा तैलयुक्तां प्रदापयेत् ।
सिद्धां यवागूं शालीनां त्रिफलाचूर्णसंयुताम् ॥
सुखोष्णां भोजयेन्नागं सर्षपस्नेहधूपनम् ।
सैन्धवं नलदं कुष्ठं पिप्पलीं विश्वभेषजम् ॥

---

* 'घृतयुक्तानि' इति स्यात् । † 'विकस्थांश्चतुःकुम्भा' इति भवेत् ॥

---

१ क. पाचयेत् ।

समभागानि सर्वाणि सूक्ष्मचूर्णानि कारयेत् ।
क्रौञ्चास्थिचूर्णं तत्रैव भद्रदारु च दापयेत् ॥
संयोज्योष्णोदकेनाथ वारणं प्रतिपाययेत् ।
पत्रैर्निम्बपटोलाभ्यां मुद्गयूषं विपाचयेत् ॥
सुखोष्णं योजयेच्चापि पिप्पलीचूर्णसंयुतम् ।
यवक्षारसमायुक्तं तैलं चैव प्रदापयेत् ॥
माषांश्च भोजयेत्स्विन्नान्व्याधि.................. ।
...........................तस्मात्तु बलं तेजश्च वर्धते ॥

इति पिष्टमेही ।

........................................................................... ।
*अर्थानेतत्प्रयोगेण...........................................वा ॥
कट्वम्ललवणादीनां रसानां चातिसेवनात् ।
उष्णानामतिमात्रं तु भोजनानां निषेवणात् ॥
शोणितं कुपितं स्थानान्मूत्रबस्तिं प्रबोधयेत् ।
वारणा रुधिरप्रख्यं तत्प्रकोपात्प्रमेहति ॥
तथा स हन्यते शीघ्रं न तस्यास्ति चिकित्सितम् ।
रक्ताभासमदुर्गन्धमगन्धसमवेदनम् ॥
मूत्रसङ्गे प्रमेहन्ति तस्य वक्ष्यामि भेषजम् ।
शुण्ठीचूर्णं सबदरं सक्तवः फाणितं तथा ॥
रात्रिपर्युषितं शीतं यवोदकसमायुतम् ।
श्लेक्ष्णं वस्त्रस्रुतं सम्यक्प्रातस्तं पाययेद्द्विपम् ॥
प्रमेहस्तेन नागस्य वेदना च प्रशाम्यति ।
बीजं कदल्याः पर्जन्या मृद्वीका पनसानि च ॥
श्रीपर्णी च मधूकानि विशालामलकानि च ।
समभागानि सलिले मुद्गांश्चापि विपाचयेत् ॥
पिप्पलीशुण्ठिसंयुक्तं तं यूषं पाययेद्द्विपम् ।
शालीनामोदनं स्विन्नं यूषेणातिविवर्धितम् ॥
मध्याह्ने भोजयेन्नागं शीतं शर्करया युतम् ।
निम्बतण्डुलचूर्णस्य............................पाचयेत् ॥

---

* 'अर्धा' इति स्यात् ॥

---

१ क. °ष्णं भोज° । २ क. श्लक्ष्णव° ।

यवागूं सह दुग्धेन पाययेत्सर्पिषा युताम् ।
निस्तुषांश्च यवान्स्विन्नान्प्रदिग्धान्फाणितेन च ॥
मृदुभिर्यवसैर्युक्तान्वारणाय प्रदापयेत् ।
यवसान्योदकान्यस्मै कुमुदानि बिसानि च ॥
शर्करोपहतान्यस्मै वारणाय प्रदापयेत् ।
.... .... .... .... .... .... ....सह सर्पिषा ।
एतेन क्रमयोगेन ततः संपद्यते सुखी ॥

इति शोणितमेही ।

इन्द्रियाणां प्रतीघाताद्धेनुकाक्रमणात्तथा ।
वातमूत्रपुरीषाणां नित्यं संचारणादपि ॥
गुरु.... .... .... .... ....गमनात्सहसाऽध्वनि ।
अत्यध्वसेवनाच्चापि सातत्यगमनात्तथा ।
कर्मणा च प्रयोगाच्च लोभादपि च कर्मसु ॥
प्रतिहस्त्यभिघाताच्च कुप्यन्ति धातवस्तथा ।
स्वस्थानात्कुपितास्त्वस्य दोषा वातसमीरिताः ॥
समन्ताद्बस्तिमाश्रित्य जनयन्त्यश्मशर्करम् ।
सुवर्णरजताद्यानि यथा लोहानि पार्थिव ॥
( ? )*विनिक्षिप्ताः प्रतिमुखो जात्वस्यमानानि वाऽग्निना ।
योगतो धम्यमानानि संयुक्तानि विभागतः ॥
एकत्वमुपगच्छन्ति स्थिरीभावं भजन्ति च ।
तथा वायुश्च पित्तं च श्लेष्मा शोणितमेव च ॥
विपद्यमाना वातेन अश्मानं जनयन्ति ते ।
अश्मना संनिरुद्धे तु स्रोतोमार्गे मतङ्गजः ॥
प्रमेहति ततः कृच्छ्राद्विष्टभ्य चरणौ महीम् ।
तुद्यते स भृशं हस्ती सूचीभिरिव सर्वशः ॥
स्वस्थः कदाचिद्भवति कदाचिद्दुर्मनाः पुनः ।
नाभिनन्दति शय्यां तु ग्रासद्वेषी च जायते ॥
सर्वे मूत्रविकाराश्च दृश्यन्ते तस्य हस्तिनः ।
दुश्चिकित्सितमप्येनं मूत्रसङ्गं सशर्करम् ॥

---

* प्रतिमूषं विनिक्षिप्तान्यस्यमानानि' इति युक्तम् ।

---

१ क. °तवः समाः । स्व° ।

संनिपातसमुत्थानं वदन्त्यन्ये मनीषिणः ।
वक्ष्यते साधनं तस्य यथायोगं महीपते ॥
पाषाणभेदकं पाठां कुलत्थान्नागरं तथा ।
पञ्चमूलं च तृणजं पाटली बिल्वमेव च ॥
वसुकं गोक्षुरं चैव विडं स्फूर्जकमेव च ।
सर्वाण्येतानि संहृत्य सलिलेन विपाचयेत् ॥
निष्क्काथेन सहानेन भोजयेदथ वारणम् ।
अष्टाभिर्लवणैः पिष्टैः सुरां चात्र प्रदापयेत् ॥
यदि चानेन योगेन सुखी न भवति द्विपः ।
तस्य प्रशमनार्थं च प्रदेयो बस्तिरुत्तरः ॥
बस्तिसिद्धौ यथोक्तेन विधानेन तु शास्त्रवित् ।
वाहिन्यो याश्च मूत्रस्य शिराः स्रोतोवहाश्च याः ॥
मार्दवं संनिगच्छन्ति दत्तेनोत्तरबस्तिना ।
शतावरी भद्रमुस्ता तथा पाषाणभेदकम्[२] ॥
एरण्डो द्वे बृहत्यौ च पृष्टिपर्णी तथैव च ।
यवकोलकुलत्थाश्च काश्मर्यामलकानि च ॥
एतत्संभृत्य संभारं जलेनाऽऽप्लुत्य पाचयेत् ।
पादावशिष्टं च पुनर्घृतेन सह पाचयेत् ॥
ततः स्नेहावशेषेण[३] दद्याच्चोत्तरबस्तिकम् ।
( *वाहिन्यो याश्च मूत्रस्य शिरागलिवतां(?) सुखम् ॥
मृदुतां संनिगच्छन्ति दत्तेनोत्तरबस्तिना ।
शीतमारुतसंस्पर्शाद्वाराक्रान्तस्य हस्तिनः ॥
बस्तिस्थः कुपितो वायुर्वातकुण्डलमावहेत् ।
मूत्रसङ्गस्ततस्तस्य †भवति स्मावृतो ध्रुवम् ॥
प्रमेहति ततो (*मूत्रं तण्डुलोदकसप्रभम् ।
य····श्मना प्रतिहते लिङ्गान्येतानि संवदेत् ॥
श्वदंष्ट्रा मधुकं चैव किण्वं देवश्रुकं तथा ।
द्वे बृहत्यौ पयस्याऽथ) एरण्डं सपुनर्नवा ॥

---

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके । † 'भवत्यश्मावृतो' इति भवेत् ।

---

१ क. °क्षुरविडं कुडं स्फू°। २ क. °भेषजम् । ३ ख. °वशेषयेत्········ण द°।

माडकी चात्र सर्वाणि क्राथयेद्वारिणा सह ।
तं क्राथं तैलसंयुक्तं सुव्यक्तलवणं पिबेत् ॥
द्विपस्यापानमैरेयं मांसं मायूरमेव च ।
यवकोलकुलत्थैश्च पूर्ववत्कारयेद्रसम् ॥
क्रौञ्चस्य च शिरोमांसं सुस्निग्धं कारयेत्ततः ।
क्षीरेण माषजेनापि कारयेत्तेन भोजनम् ॥
भोजनं चापि सुस्निग्धं निरूहाश्चैव बस्तयः ।
हिताः प्रतिहते मूत्रे स्नेहपानं च योगतः ॥
यदा प्रकुपितो वायुः पित्तमादाय वर्तते ।
तदा जठरके व्याधौ बस्तिः शीर्षं प्रधावति ॥
प्रमेहति ततो नागः कपोद(?) कुसुमप्रभम् ।
कृच्छ्रेण स्तब्धनयनो वेपमानः सुदुर्मनाः ॥
स्योनाकं पाटलीं बिल्वं तथा पाषाणभेदिकाम् ।
श्रीपर्णीं शृङ्गवेरं च क्रोष्ट्री वा(?) शारदा यवाः ॥
गव्यक्षीरं पचेद्वैद्यस्तत्क्षीरं सुपरिस्रुतम् ।
मूत्रसङ्गप्रशान्त्यर्थं पाययेत्सह सर्पिषा ॥
घृतपानमथाभ्यङ्गं तेन चैवावपीडकम् ।
मूत्रसङ्गे जठरके बस्तिकर्म प्रशस्यते ॥
इत्येते मूत्रसङ्गाश्च सनिदानचिकित्सिताः ।
रोमपादाय विधिवत्पालकाप्येन कीर्तिताः ॥

तत्र श्लोकः—

यथा हि लोकप्रवरा मनुष्यास्तथैव सेनासु गजा विशिष्टाः ।
तेषां तु शास्त्रार्थमिहानुगत्य आरोग्यमेवं प्रयतेत कर्तुः(र्तुम्) ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने
मूत्रसङ्गो नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

## अथैकोनपञ्चाशत्तमोऽध्यायः ।

---

पालकाप्यमुवाचाङ्गो गर्भिण्या गर्भनिग्रहः ।
सूतिकावातसङ्गस्य[1] व्याधेः कुर्यात्प्रतिक्रियाम् ॥

---

१ क. °तसंज्ञस्य ।

चोदितस्त्वेवमङ्गेन पालकाप्यस्ततोऽब्रवीत् ।
शृणु त्वं मूढिकावाते चिकित्सां ब्रुवतो मम ॥

इह खलु भो हस्तिनी ग्राममानीता प्रसूयते यदा स्यात्, तदा भवति गर्भव्यापत् । अप्राप्तकाले दौर्बल्ये वा विषमपतनपरिसरणसततगमनसलिलतरणजवगमनविषमलङ्घनभाराणामन्यतमेन वा भवति शब्दस्पर्शरसरूपगन्धेभ्यस्त्रासनात्, वधबन्धपरिक्लेशात्, विषमविरुद्धातिमात्राल्पभोजनाद्वा मनसोऽभितापादभिघाताद्वा हस्तिना हस्तिन्या वाऽभिहतायां व्यापद्यते । न वर्धते वा गर्भः, तस्याः कारणैरेवमादिभिः कृच्छ्रेण प्रसूतायाः पवनः कुप्यति । स कुपितः स्रोतांसि निरुणद्धि । निरुद्धेषु[1] स्रोतःसु मत्तमातङ्गस्त्वगन्धं मूत्रं सृजत्यल्पाल्पं विच्छिन्नं चावष्टभ्य तिष्ठति परिवर्तते चास्या(:) योनिरनिष्टगन्धा-(द्वा) परिक्लिद्यमाना परिम्लानमुखी परिम्लानशरीरा दुःखेन परिक्रामति संवीजति । न शीतं द्वेष्टि, न चाऽऽहाराभिनन्दिनी भवति । अथवा हीनगर्भपरिविवृद्धयोर्यदा यन्मासे प्रतिदानम्, तदा[2] नाम(?)दर्शनं भवति । वर्षाणि वातगर्भा (?)स एव गर्भसंप्रसूतिप्रतिक्रियाविप्रयोगे वा वातविकाराद्गर्भव्यापदं समीक्ष्य चिकित्सितुमुपक्रमेत् । तदाप्रभृत्याहाराचारैः प्रतिक्रियां निश्चित्य प्रतिविबोधयेत् । विपन्नगर्भायास्तस्याः सुखोष्णेन तैलेन सर्पिषा वा सर्वसेको बहुशः कार्यः । सुखोष्णोदकोपचारश्च । सर्वकालं च निवातशयनम् । वंशाग्निमन्थोरुबूकविश्वातकारीणां पाटलीकार्पासीनां च पत्रभङ्गेन च कार्यः स्वेदः । सुरातैलघृतानि संप्रकथितानि समभागानि सुखोष्णानि परितापयेत् । नपुंक(?)यवकोलकुलत्थश्रीपर्णीपत्रपञ्चमूलभङ्गं क्वथितमुदकं विधिवत्पादावशिष्टमवतार्य सर्पिषा सह सुखोष्णं पाययेत् । ततोऽस्या मूत्रसृष्टिर्योनिः समाधिमुपगच्छति । तरुणोदुम्बराणां प्रश्रोथितानां धवधन्वनलोध्रप्रियङ्गूनां चूर्णानि क्षौमवस्त्रेण[3] प्रतिबद्धानि योनौ विदध्यात् । एतेन च प्रतिविधानेन शाम्यत्यस्या योनिदोषः । कुशमूलमलतिलचूर्णयवसर्पिर्भिर्योन्या धूपः कार्यः । पञ्चमूलद्वयश्रीपर्णीभिर्जलं क्वाथयित्वा पादावशिष्टमवतार्य परिस्राव्य दुग्धं समांशं समानीय वसातैलघृतैः सह विधिवद्विपाच्य तेन स्नेहेन हस्तिन्या अभ्यङ्गानुवासनान्नपानानि कुर्यात् । त्रिकटुकसंयुक्तं तैलं चिरस्थितं च सीधुं[4] पाययेत् । कृशरां च सैन्धवलवणान्वितां तैलस्निग्धं मत्स्यरसोन्मिश्रितं भोजयेत् । या च भक्ष्यभोज्यविद्वेषिणी विमना विकीर्णहस्ता निक्षिप्तप्रकारा परिमूत्रणी व्यापादयति

---

१ क. °षु तेषु स्रो° । २ क. °दा ताम° । ३ ख. °मशस्त्रे° । ४ क. साधु ।

(*निमीलयति संतप्तशरीरोष्णद्वेषिणी शीताभिनन्दिनी सलिलावगाहच्छायाविकाङ्क्षणी, तस्या भेषज्यम्—शिशिरलघुस्निग्ध)शर्करामधुरगणमृद्वीकाभिः शृतं पयः प्रतिपाययेत् । यवसाध्यायविहितैर्यवसैर्मृदुभिस्तर्पयेत्, जाङ्गलरसैश्च भोजयेत् । इति······ ॥

(तत्र श्लोकाः),—

अथ प्रजातां यत्नेन हस्तिनीं सूतिकां भिषक् ॥
क्रियाभिः शास्त्रेषूक्ताभिश्चिकित्सितुमुपक्रमेत् ॥
असम्यक्क्रियया प्राणान्सद्यस्त्यजति सूतिकाम् ॥
गजं न मिथ्याप्रयोगे(?) स गर्भेण वि(धि)योजिताः ॥
एवं यः साधयेद्वैद्यः सूतिकां वातसंज्ञिताम् ॥
वैद्यो मानांश्च भागांश्च सोऽत्यर्थं मानमर्हति ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने वृद्धपाठे द्वितीये क्षुद्ररोगस्थाने सूतिका नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

---

## अथ पञ्चाशत्तमोऽध्यायः ।

---

देवराजप्रतीकाशं सूर्याग्निसमवर्चसम् ॥
रोमपादो महाप्राज्ञः पालकाप्यं स्म पृच्छति ॥
दन्तरोगाः कतिविधा नागानां संप्रकीर्तिताः ॥
समुत्थानं च किं तेषां विज्ञायन्ते कथं च ते ॥
कीदृशस्तु भवेत्साध्यस्त्वसाध्यश्चापि कीदृशः ॥
एतन्मे ब्रूहि पृष्टस्तु पालकाप्यस्ततोऽब्रवीत् ॥
प्राप्नुयाद्रदयोर्दोषांश्चतुर्भिः कारणैर्नृप ॥
दोषतो जरयोत्पातादागन्तुश्चेति कीर्त्यते ॥
एवं चतुर्विधो दोषो दन्तानां परिकीर्तितः ।
तत्र तावत्प्रवक्ष्यामि सर्वसामान्यलक्षणम् ॥
श्यावत्वं शूनता चैव लक्ष्यते दन्तवेष्टयोः ।
दन्तयोश्चैव वैवर्ण्यमत्यर्थमुपलक्षयेत् ॥

---

* धनुराकारमध्यस्थो नैव पाठः कपुस्तके ॥

---

१ क. प्रतीये पा° । ख. प्रतीये पाचये° ।

बहुशो यो विधमति दन्तवेष्टौ मतङ्गजः ।
मक्षिकाभिः परिवृतो मध्वक्तमिव भाजनम् ॥
परिवर्षति चात्यर्थं पांशुना विकिरत्यपि ।
अङ्गुल्या घट्टयेच्चापि तं विद्याद्दन्तरोगिणम् ॥

यदा कषायतिक्तानि भोजनानि निषेवते ।
शुष्कं वा यवसं भुङ्क्ते रूक्षं वा भोजनं तथा ॥
एभिर्निमित्तैर्नागस्य वायुः कोष्ठे प्रकुप्यति ।
† न ताः प्रकुपितो वायुर्धमनीः प्रतिपद्यते ॥
धमनीप्रतिपन्नस्तु दन्तमूले निषेवते ।
तस्य तेन प्रकोपेण दन्तरोगः प्रजायते ॥
संप्रदुष्टः खरं वेष्टे श्वयथुं जनयेत्ततः ।
बस्तमूत्रप्रसङ्गश्च कृष्णस्रावः सफेनिलः ॥
इत्येतद्वातदुष्टस्य लक्षणं समुदाहृतम् ।

अथ पित्तेन दुष्टस्य लक्षणं संप्रवक्ष्यते ॥
योऽत्यर्थं कटुकाम्लानि लवणानि निषेवते ।
तैलप्रायाणि सततमुष्णानि च महीपते ॥
यवसाशनया(पा)नानां विरुद्धानां च सेवनात् ।
एभिर्निमित्तैर्नागस्य प्रायः पित्तं प्रकुप्यति ॥
तच्च प्रकुपितं पित्तं धमनीः प्रतिपद्यते ।
धमनीप्रतिपन्नं च दन्तमूले निषेवते ॥
तस्य तेन प्रकोपेण दन्तरोगः प्रजायते ।
( *वेष्टौ च परिदह्येते श्वयथुश्चात्र जायते ॥
अथ कुणपगन्धं च स्रावमाशु विमुञ्चति ।
हरितः पीतो रक्तो वा वर्णतश्चोपलक्ष्यते नृप ॥
न सेवन्ति च तं क्लेदमत्यर्थं मक्षिका नृप ।
इति पित्तप्रदुष्टस्य लक्षणं समुदाहृतम् ॥

अत ऊर्ध्वं प्रवक्ष्यामि कफदुष्टस्य लक्षणम् ।
यदा मधुरभूयिष्ठमाहारमुपसेवते ॥

† 'ततः' इति भवेत् ।

* धनुराकारमध्यस्थो नैव पाठः कपुस्तके ।

१ क. °मूलप्रसङ्गश्च कृष्णश्रावः कफोऽनि° । २ क. संप्रचक्षते । ३ क. °नानि वि° ।

शीतलं च विशेषेण तथा च लवणं नृप ।
तस्य श्लेष्मा प्रकुपितो धमनीः प्रतिपद्यते ॥
धमनीः प्रतिपन्नस्तु दन्तमूले निषेवते ।
तस्य तेन प्रकोपेण दन्तरोगः प्रजायते ॥
दन्तवेष्टौ च लक्ष्येते) (*श्लेष्मणो लक्षणान्तरम् ।)
श्लेष्मणश्च प्रदुष्टस्य दन्तरोगस्य लक्षणम् ॥
सर्वैरेव प्रकुपितैर्दोषैः सामान्यलक्षणैः ।
श्वयथुस्रावगन्धादि संनिपातस्य लक्षणम् ॥
यदा रोगान्वितं रक्तं दन्तमूलेन† (?) विद्यते ।
विदह्यमानं तद्रक्तं ततो दोषाय कल्पते ॥
दन्तरोगाः प्रजायन्ते नानादोषसमुद्भवाः ।
दन्तिनां दन्तमूलेषु बहुव्याकुललक्षणाः ॥
इत्येते दोषजाः प्रोक्ता दन्तरोगाः पृथग्विधाः ।

---

जरया दन्तरोगस्तु वयोज्ञाने प्रवक्ष्यते ॥
न दोषान्नाभिघाताद्वा यदा दन्तो विनिःसृतः ।
निःसृते लक्ष्यते सद्यः पूयं शोणितमेव वा ॥
कुणपं विस्रगन्धं च दुर्गन्धं वा यदा तदा ।
तमौत्पातिकमित्याहुराचार्याः शास्त्रकोविदाः ॥
दक्षिणे त्वथ दन्ते च प्रथमं दृश्यते यदा ।
तदा व्याधिकरो राज्ञः स्रावो पोक्तुर्भयावहः ॥
स्रवणं पतनं चापि दन्तस्य सहसा यदि ।
दैवोत्पातकृतं त्वेतदसाध्यमिति कीर्त्यते ॥
स नागस्याशुभमिच्छद्भिः स्वदेशस्य नृपस्य च ।
स्वराष्ट्रात्परराष्ट्रं प्रस्थाप्यः स्याद्विचक्षणैः ॥
इत्युत्पातकृतस्योक्तं दन्तरोगस्य लक्षणम् ।

---

अत ऊर्ध्वं प्रवक्ष्यामि आगन्तोरपि लक्षणम् ॥
पतनाच्चलनाद्वाऽपि समरे प्रहतस्य च ॥

* धनुराकारमध्यस्थो नास्ति पाठः खपुस्तके । † 'विदह्यते, विपद्यते' इति वा भवेत् । † शिव इति भवेत् ।

१ ख. °न्धादेः सं° । २ क. प्रचक्षते ।

वृक्षवेश्माभिघाताद्वा वसुधां निघ्नतस्तथा ।
नियुध्यमानस्य करैर्बन्धैर्वा विविधैस्तथा ॥
नागस्य कारणैरेभिर्विषाणमुपहन्यते ।
जर्जरत्वमवाप्नोति भज्यते वा पतत्यपि ॥
कल्पान्ते मथ्यते वाऽपि दाल्यते पाट्यतेऽपि वा ।
नास्त्युत्पातकृतो दोषो यद्दन्तपतनं भवेत् ॥
इत्यागन्तोः समाख्यातं दन्तरोगस्य लक्षणम् ।

---

अत ऊर्ध्वं प्रवक्ष्यामि साध्यासाध्यस्य लक्षणम् ॥
भग्नशेषस्थितं याप्यं दन्तवेष्टव्यपाश्रयम् ।
वेष्टोपरिष्टाद्यद्भग्नमसाध्यमपि निर्दिशेत् ॥
करिण्या सह निस्तीर्णे व्रणकर्मविधिः स्मृतः ।
संवत्सरोषितो व्याधिः स याप्यो यो न सिध्यति ॥
स यदा वर्धते दन्तो विवर्णस्य च दृश्यते ।
एवं साध्यमिति ब्रूयादसाध्यः संप्रवक्ष्यते ॥
यस्यां तु कृमयो वेष्टौ भक्षयन्ति तदुद्भवाः ।
वेष्टः संम्लायते चैव विवर्णश्चोपलक्ष्यते ॥
†करीर्याश्चोपघातेन स्रावः पूतिः प्रवर्तते ।
न च सिद्धिमवाप्नोति तदसाध्यस्य लक्षणम् ॥
याप्यं च यापयेद्दन्तमसाध्यं च विवर्जयेत् ।
साध्यं च साधयेद्वैद्यः शास्त्रोद्दिष्टेन कर्मणा ॥
दशाङ्गुला गतिर्या तु भैषज्यं तत्र कारयेत् ।
ऊर्ध्वं दशभ्योऽङ्गुलेभ्यो भैषज्यं न प्रशस्यते ॥
सर्पिःप्रक्षालनं कार्यं दन्ते सद्यःक्षते नृपः ।
दन्तरोगस्य शान्त्यर्थमारोग्यायैव दन्तिनाम् ॥
कटुकानि कषायाणि तिक्तानि च समाहरेत् ।
त्वक्पत्रफलमूलानि क्षोदयित्वा विपाचयेत् ॥
तेन प्रक्षालयेद्वेष्टौ क्षारैर्वा विविधैस्तथा ।

---

†'कारिण्या' इति भवेत् ।

---

१ क. युध्यमानस्य । २ क. करिभिर्बन्धै° । ३ क. °धैरपि ॥ ना° । ४ क. न चास्य । ५ ख. करीर्या । ६ क. °प्रचक्षते ।

प्रसन्नया वा प्रक्षाल्यौ हस्तिमूत्रेण वा पुनः ॥
तिलसर्षपकल्केन वातकेऽभ्यञ्जनं हितम् ।
नस्त(स्य)कर्म च कर्तव्यं त्रिवृतेन भिषग्जिता ।
पटोलं चन्दनं मूर्वा गोलोमी कटुरोहिणी ॥
पाठया सह तुल्यानि गवां मूत्रेण [1]पेषयेत् ।
एतैस्तैलं विपक्वं तु नस्याभ्यञ्जनयोर्हितम् ॥
पैत्तिके दन्तरोगे तु...................... ।
.................................................. ॥

कफकृतदन्तरोगचिकित्सा (?)

श्वेता कुष्ठं हरिद्रा च विभीतकफलानि च ॥
तथा दारुहरिद्रां च हरीतक्याः फलानि च ।
साम्बष्ठा च मही धात्री भल्लातकफलानि च ॥
रोहिण्यतिविषा चैव वचा हैमवती तथा ।
अजामूत्रेण पिष्टैस्तु तैलमेभिर्विपाचयेत् ॥
नस्याभ्यञ्जनयोगेन प्रशस्तं सुकृतं भवेत् ॥
नक्तमाल्यास्तु तैलं तु हितं वै सांनिपातिके ।
अथवा कुष्ठसंयुक्तं तगरेण हरिद्रया ॥
सुवहाकटुरोहिण्या तेजोवत्यास्तथैव च ।
मुस्तया हिङ्गुना चैव तैलं सम्यग्विपाचयेत् ॥
दन्तरोगेषु सर्वेषु तैलमेतत्प्रशस्यते ।
वेष्टयोर्म्रक्षणे[2] नित्यं नागस्य मनुजाधिप ।
पिप्पलीशृङ्गवेरेण मरिचैर्मुस्तकेन च ॥
आढकीबीजसंयुक्तं वृश्चिकाल्यास्तथैव[3] च ।
तथा कटुकरोहिण्या तेजोवत्यां तथैव च ॥
तैलं सहातिविषया भिषक्सम्यग्विपाचयेत् ।
एतदभ्यञ्जने नस्ये प्रशस्तं दन्तरोगिणाम् ॥
पारापतं च भव्यं च वोरं च सपरूषकम् ।
तथा पटोलं सक्षौद्रं तैलेन सह पाचयेत् ॥
ज्ञात्वा दग्धमनामं च ततस्तदवतारयेत् ।
तैलेन तेन श्रवणस्रोतसोरनुषेव(च)नम् ॥

---

१ ख. पीषयेत् । २ क. °योरीक्ष° । ३ क. °ल्यास्तये° ।

तेनास्य स्रोतसोः शुद्धिः संधानं दन्तयोस्तथा ।
रोचना त्रिफला रोध्रं तथा सर्जरसो नृप ॥
समङ्गा गैरिकं पद्मं धातकीपुष्पमेव च ।
सूक्ष्मचूर्णीकृतैरेतैर्भवेद्वेष्टानुसारणम् ॥
सर्वेषां दन्तरोगाणामिदं शोधनरोपणम् ।
प्रपौण्डरीकमञ्जिष्ठाप्रियङ्गुमधुकं तथा ॥
क्षौद्रं सलोध्रं सर्पिश्च हितं वेष्टप्रलेपनम् ।
वचासर्षपलोध्रं च लशुनं च फणिज्जकम् ।
विडङ्गं निम्बपत्राणि हरिद्राद्वयमेव च ॥
करञ्जबीजेन्द्रयवाः पिप्पली मरिचानि च ।
गोविषाणी वले पञ्च (?)……… …… ….. …. ॥
….. ….. ….. स्क ….. …..शेनि(?)समानि तु ।
हिङ्गुना सह युक्तानि धूपोऽयं दन्तरोगिणाम् ॥
समस्तैरसमस्तैर्वा द्रव्यैरेतैर्हितो भवेत् ।
व्रणावस्था विशेषेण व्रणनेत्राणि कारयेत् ॥
सूक्ष्माणि ताम्रलोहेन तथैषणीं च पार्थिव ।
जरद्गवकृतो बस्तिः प्रशस्तो व्रणशोधने ॥
वप्राच्च परिरक्षेत्तं करिणां ये तथाऽध्वनि ।
दन्तानां रक्षणार्थाय प्रतिमोकांश्च कारयेत् ॥
बद्ध्वा वायसपक्षैर्वा स्फटिताञ्जर्जरांस्तथा ।
शिरोविरेचनैर्धूपैर्नस्यकर्मभिरेव च ॥
प्रक्षालनैश्च सततं दन्तरोगं प्रशाम्यति ।
अतः परं प्रवक्ष्यामि दन्तपातविधिं नृप ॥
पातयोग्यं विदित्वा तु गजदन्तं प्रपातयेत् ।
कृष्णलोहेन शुद्धेन शलाकां कारयेत्ततः ॥
अपूर्वा खदिरादीनां शलाका च विधीयते ।
तां शलाकां ततस्तस्य निक्षिपेदनुकूलयेत् ॥
सहसा पात्यमाने तु दोषाः स्युर्बहवो नृप ।
तावद्धि निक्षिपेद्धीमान्यावच्छ्लथत्वमागतः ॥
सर्वश्च क्षुभिते दन्ते ततो लग्नां विचक्षणः ।
दन्तमये च विद्यात्तु शलाकां सुदृढां ततः ॥

गुर्वी समासक्तां ...... समालभ्यं(?) ममपेक्षुतम् ॥
यदि वा तेन योगेन न पतेद्वै तदा नृप ।
प्रतिवेष्टमवाकृष्य नलेनमवगाहयेत्(?) ।
द्विव्रणीयक्रियाभिस्तु ततो व्रणमुपाचरेत् ॥

इति श्रीपालकाप्ये गजायुर्वेदमहाप्रवचने वृद्धपाठे द्वितीये क्षुद्ररोगस्थाने दन्तरोगो नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

अथैकपञ्चाशत्तमोऽध्यायः ।

---

पालकाप्योऽङ्गराजेन पृष्टः प्रोवाच हस्तिनाम् ।
चेतोभ्रंशसमुत्थानं लिङ्गभैषज्यसंयुतम् ॥ १ ॥
मत्तमातङ्गगन्धात्तु स्वप्ने वा रौद्रदर्शनात् ॥
मन्त्रश्रोत्राहिभयतः सर्वस्मादेव शङ्कते ॥ २ ॥
महाध्वगमनात्स्नेहपानात्संक्लेशतस्तथा ॥
आहारतिक्तकटुकैस्तदा कुप्यति मारुतः ॥ ३ ॥
दोषश्चेद्रूपवायुश्च सहसा त्रासयेद्गजम् ॥
पतेच्च छिन्नशाखा च कम्पते च मुहुर्मुहुः ॥ ४ ॥
पुरीषं बहुभीतस्तु मुञ्चते संनिषीदति ॥
लाला प्रस्पन्दते चास्य बस्तगन्धश्च जायते ॥ ५ ॥
गुरुगात्रस्तथा स्तब्धः स्रस्तकर्णशिरोधरः ॥
कुरुते संततश्चापि मूत्रमस्तसविज्जलम्(?) ॥ ६ ॥
समस्तलिङ्गो यो नागो दशाहान्न निवर्तते ॥
न्यूनलिङ्गास्तु ये नागास्तेषां कार्यं चिकित्सितम् ॥ ७ ॥
चेतसो भ्रंशनाच्चापि चेतोभ्रंशं ततः परम् ॥
सर्वसेकोऽत्र कर्तव्यः पुराणेनैव सर्पिषा ॥ ८ ॥
अञ्जनस्वेदधूपांश्च रात्रिक्षिप्तवदाचरेत् ॥
वामदेवं(व्यं) ततः साम स्वहस्तपरिवार्तिनम् ॥ ९ ॥
कारयेत यथान्यायं ततः संपद्यते सुखी ॥
मनोरमं प्रदातव्यं भोजनं सार्वकामिकम् ॥ १० ॥

---

१ क. °र्शने ॥ म° ।

नृत्यवादित्रगीतानि कारयेच्च गजाग्रतः ॥
सनसस्त्वविरोधेन यथेष्टं यवसोदकम् ॥ ११ ॥
शाल्योदनं ससर्पिष्कं मधुना सह संयुतम् ॥
दद्यात्कुक्कुटबर्हिभ्यां संस्तुतं पानभोजनम् ॥
एवं स सुखी भवति निराबाधश्च जायते ॥ १२ ॥ १६३६ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने चेतोभ्रंशो नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

## अथ द्विपञ्चाशत्तमोऽध्यायः ।

---

पालकाप्यं मुनिश्रेष्ठमङ्गराजोऽब्रवीदिदम् ।
संग्रहे यस्त्वया लुप्तो भगवन्संप्रकीर्तितः ॥
एवमुक्तोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ।
भाराक्रान्ताध्वगमनादत्यर्थमुरसाऽपि च ॥
प्राकारस्तम्भपरिघप्रतिनागादिमर्दनात् ।
अधिकस्तम्भहार्यैश्च महापङ्काश्रयेण च ॥
लुप्यते सर्वगात्रेषु तेन लुप्तः प्रकीर्तितः ।
लुप्तः सर्वेषु चाङ्गेषु स्तम्भः सोऽप्यस्य जायते ॥
सप्तत्वक्शूनसर्वाङ्गोऽक्षिरुषि(?)नातिजीवति ।
शोणितं च तथा खेभ्यः प्रस्रवेच्चास्य भेषजम् ॥
अभ्यज्य सर्पिषा कल्कैः क्षारिणां संप्रलेपयेत् ।
सर्पिः क्षीरप्रपानं च सर्पिषैव च भोजनम् ॥
कुवल्लं पल्लवं हृद्यमिक्षुर्यवसमोदनम् ।
शस्तमेतेन विधिना तैष्वेव च पचेत्ततः ॥
त्रैवृतेन सुसिद्धेन तस्याभ्यङ्गं च वातहृत् ।
अच्छपानं च तेनैव बस्तिकर्म च कारयेत् ॥
ततः स्नेहावसाने तु यथोक्तं बृंहणं तथा ।

तत्र श्लोकः—

लुप्तो राजन्यथा पक्षी तथा नागः प्रणश्यति ॥

---

१ क. वा । २ ख. °गः प्राणान्यथा° ।

.... .... .... .... ....घात्पित्तस्त्यजेदसून् ।
.... .... .... .... .... .... .... .... .... .... ॥
.... .... .... .... .... .... *वारणानां महामुने ।
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
अनङ्गनाशाय हरस्त्रिशूलं मुमोच कोपान्मकरध्वजस्य ।
तमापतन्तं सहसा निरीक्ष्य भयार्दितो विष्णुतनुं प्रविष्टः ॥
स विष्णुहुंकारविमोहितात्मा पपात भूमौ मथितः स शूलः ।
स पञ्चभूतानुगतं शरीरं प्रदूषयेद्दोषरसादिधातून् ॥
विण्मूत्रशुक्रानिलनिग्रहेण अत्यम्बुपानाशनसेवनाच्च ।
श्रमाभिघातादुपतापनाच्च वायुः प्रकुप्याऽऽशु करोति शूलम् ॥
हृत्पार्श्वपृष्ठोदरकट्युपस्थे करोति पीडां विविधां सुगुर्वीम् ।
यदा सपित्तः कुपितो वायुः स प्रतिपद्यते ।
तदा मूर्छा भ्रमस्तृष्णा ग्रासद्वेषो विवर्णता ॥
दाहकम्पौ प्रपतनं क्रोधस्तस्याधिको भवेत् ।
सकफः कुपितो वायुः करोत्युन्मार्गगस्तथा ॥
आमाशयस्थः कुरुतेऽतः शूलं गाढवेदनः ।
मुहुर्निषादनं स्तम्भमक्ष्णोः साश्रु विचेष्टितम् ॥
क्रोधं यवसविद्वेषमिति लिङ्गान्यतः क्रियाः ।
घृताभ्यङ्गः सपित्ते स्याद्याश्च पित्तानिलक्रियाः ॥
सकफेऽपि निवातस्थं कोष्णतैलनिषेचनम् ।
स्वेदयेत्स्नानपाने च युञ्ज्यादुष्णोदकं तथा ॥
अविरुद्धां च कुर्वीत सर्वां वातकफक्रियाम् ।
धूपयेत्सर्वगन्धाद्यैराज्यगोशकृताऽपि वा ॥
इङ्गुदैर्घृतसंपुक्तैर्वातकैर्वा घृतप्लुतैः ।
शूलद्वये च सामान्यो वक्ष्यतेऽतः परं विधिः ॥
हरिद्रे हिङ्गुबृहती विडङ्गं पारिभद्रकम् ।
देवदार्वश्वगन्धां च सरलेन्द्रयवानपि ॥

* इतः पूर्वं कपुस्तके '^' इति त्रुटिचिह्नम्, खपुस्तके 'अत्र किंचिच्त्यक्तमस्ति' इति दृश्यते । तथाचास्मिञ्शूलाध्याये प्रारम्भश्लोकहीनता, पूर्वस्मिंल्लुप्ताध्याये समाप्तिश्लोकादिहीनताऽवसीयते ॥ † 'स्वेदने' इति स्यात् ।

१ ख. शूलम् । २ क. °पेवितम् । ३ क. °न्धाद्यैः साज्य° ।

क्षुन्नः(ण्णः) प्रीतः प्रदातव्यः पिण्डशूलद्वये हितः ।
पिण्डोऽन्यो गुडशुण्ठीभ्यां शुण्ठीकल्कस्तथाऽञ्जनम् ॥

तत्र श्लोकः—

एवं हि प्रवरभिषक्प्रयुक्तयोगैर्निःशेषं व्यपनय मृत्युकल्पशूलम् ।
आनाहेषु······विहितप्रतिपान····:·····पानादिक्रमविहितश्च भक्तयोगः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने शूलद्वयं नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

## अथ त्रिपञ्चाशत्तमोऽध्यायः ।

---

अथाङ्गाधिपतिः श्रीमान्पालकाप्यं स्म पृच्छति ।
संग्रहे ये त्वयोद्दिष्टाश्चत्वारः शारदा विभो ॥
तेषां तत्त्वेन निर्देशं भगवन्वक्तुमर्हसि ।
ततोऽङ्गचोदितः प्राह पालकाप्यो महातपाः ॥
अव्यामे पानमार्गादिष्वसामर्थ्यं क्रियासु यत् ।
बले सत्यप्यसति वा तद्योगाच्छारदाः स्मृताः ॥
चत्वारस्ते च तत्राऽऽदौ वक्ष्यते स्थूलशारदः ।
विहाराहारसंपत्त्या पुष्टो वर्षं स्थितः सुखी ॥
अव्यायामोऽलसोऽत्यर्थमक्षमः सर्वकर्मणाम् ।
महानिद्रः समुच्छ्वासी हृद्यजठरमूत्रता (?) ॥
मेदुरः समिरुजघात्तामा (?) रोगास्पदं भवेत् ।
····· ····· ·····श्लेष्मा····· ·····द्विट्किंचिदुष्णप्रियोऽपि च ॥
ग्रासेष(ष्व)रोचकः प्रायस्तस्येयं वक्ष्यते क्रिया ।
प्रातर्वीथ्यां विषाद्योऽसौ पूर्वनीचैर्गतेन तु ॥
दिने दिने क्रमं लब्ध्वा ततो युञ्ज्याद्गतान्तरे ।
जवनैः पञ्चभिरथो सप्त चाहानि पाययेत् ॥
सुरां सपञ्चलवणां षडङ्गां तदनन्तरम् ।
सिद्धं वृषाग्निकैरण्डैः सर्पिषा षष्टिकोदनम् ॥
मुद्गयूषेण संभोज्यस्तमेवानुपिबेत्ततः ।
कषायतिक्तकटुकान्दद्याच्च कवलानपि ॥

---

१ ख. प्रीतः । २ ख. सत्येष स° ।

तेजोवतीं त्रिकटुकं हरिद्रे लशुनं वचा ।
क्षुण्णाः सक्षौद्रकवला देया स्थैर्याभिवर्धनाः ।
तैलपानप्रयोगाद्वा गजः प्रकृतिमाप्नुयात् ॥

इति स्थूलशारदः ।

अतः परं प्रवक्ष्यामि पैत्तिकं कृशशारदम् ।
यस्य संवत्सरोत्सृष्टकर्मणः पित्तवर्धनैः ॥
बलक्षयकृताहारैर्विषमे रूक्षसेवितैः ।
शालीभूतस्य चाभाव्यदाहार (?) वातवस्तुषु ॥
एभिः प्रकुपितं पित्तं जनयेत्कृशशारदम् ।
ततः कृशोऽलसश्छायाकाङ्क्षी प्रद्वेष्टि चाऽऽतपम् ।
इच्छेद्यः स्निग्धमधुरमनुपानं तृणाशनम् ॥
पूर्ववत्कर्म चास्यापि कार्यं व्यायामिकं शनैः ।
भोजनं चैव शालीनां प्रातः सघृतशर्करम् ॥
तस्यानुपाने(नं) मृद्वीकाशर्करामधुकैः स्मृतम् ।
सर्पिः क्षीरं प्रयुञ्जीत पानं चाप्यथ शक्तितः ॥
पित्तघ्ना बृंहणीयास्तु क्रियाः सर्वाश्च कारयेत् ।

इति कृशशारदः ॥

वक्ष्यते[१] वातिकस्त्वेकः प्राकृतो नाम शारदः ।
अव्यायामस्य षण्मासान्विधास्नेहविवर्जितम् ॥
तृणमेवाश्नतः शुद्धं विरोधाच्चापि सात्म्यतः ।
कुर्याद्विमर्तिपन्नः सन्वायुः प्राकृतशारदम् ॥
ततस्तु कृच्छ्रविण्मूत्रो मन्दग्रासोऽलसो गजः ।
अवसीदन्ति वीर्येण क्रिया तस्यापि पूर्ववत् ॥
भोजनं स्निग्धमधुरमम्लं सलवणं हितम् ।
सुरां सपञ्चलवणां षडङ्गं चापि पाययेत् ॥
तैलमांससमायुक्तैर्लशुनैर्बृंहयेच्च तम् ।
यद्येवं सुस्थिरो न स्याद्धस्तिकर्म च संस्मृतम् ॥

( इति ) प्राकृतशारदः ।

चतुर्थोऽतः परं राजञ्ज्ञेयो लोहितशारदः ।
आहाराचारसुखिनः षण्मासोत्सृष्टकर्मणः ॥

---

१ क. °व्यय श°। २ क. °ते प्राकृतस्त्वेको वातिको ना°। ३ ख. पाचय°।

कटुकाम्ललवणभोजनाद्रूक्षशारदः ।
मन्दग्रासोऽलसोत्सृष्टभ्रमश्वासातुरो भवेत् ॥
शतधौतघृताभ्यक्ते पैत्तिकस्य विधिः स्मृतः ।
खर्जूरबदरद्राक्षाशर्करालाजसक्तुकैः ॥
स्वच्छावतोये मथितैः सुछागं पानमुत्तमम् ।
( इति ) लोहितशारदः ॥
शारदान्तवयसे विशारदः कुञ्जरान(?)चतुरश्चतुरोऽपि ।
कर्मसु क्रमविवर्धितयोगात्स भिषग्वरं एव...... ...... ॥
इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने
शारदो नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

अथ चतुष्पञ्चाशत्तमोऽध्यायः ।

---

*भगवान्रोमपादेन राज्ञा संचोदितः पुनः ।
नागा नाश्नन्ति ग्रासि(?) ज्वरश्चास्योपजायते ॥
एवं दष्टस्य विज्ञानं चिकित्सितमतः परम् ।
ह्रदे निर्वाप्य मातङ्गं सर्पिषा परिषेचयेत् ॥
क्षीरवृक्षत्वचश्चैव पयसा सह पेषयेत् ।
† सशर्करां समृद्वीकां क्षीरपानं प्रशस्यते ॥
हरिद्रे वेणुपत्राणि कुष्ठं नलदसारिवे ।
कल्कपिष्टानि सर्वाणि सर्पिषा सह संसृजेत् ॥
ततः स्तम्भगतं नागं समन्तादनुलेपयेत् ।
तेन सौख्यमवाप्नोति वेदना चोपशाम्यति ॥
आहारं मधुरप्रायं सर्वमस्मै प्रदापयेत् ।
तेनासौ सुखमाप्नोति वेदना चोपशाम्यति ।
तथा मत्स्यण्डिकायुक्तं यवसं च प्रदीयते ॥
इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने
मधुमक्षिकादष्टो नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

* इतः प्राक्तनः प्रश्नग्रन्थो नोपलभ्यतेऽतस्त्रुटित इति प्रतिभाति । † 'सशर्करं समृद्वीकम्' इति पाठे न दोषः ॥

---

१ ख. स्वच्छाव° । २ क. °रपूज्यः । ३ क. भवांश्च रोम° । ४ क. प्रदापयेत् ।

## अथ पञ्चपञ्चाशत्तमोऽध्यायः ।

अथ खलु रोमपादोऽङ्गाधिपतिरपृच्छत्—'भगवन्पालकाप्य, कथमिदानीमपि नागानां छवीदोषा नानाविधसंस्थाना भवन्ति । तत्र साध्याः के, किं च तेषां चिकित्सितं निदानं वा भवति, एतत्सर्वं विस्तरेण ममाऽऽख्यातुमर्हसि' इति॥

एवं पृष्टः पालकाप्य उवाच—इह खलु भो हस्तिनामेकादश च्छवीदोषा भवन्ति । तद्यथा—विसर्पिकी, मण्डली, दद्रुकी, महादद्रुकी, जातसूका, पिटका, फुल्लिका, उद्दण्डिका, विचर्चिका, तृणपुष्पी, किलासी च; इत्येवमेकादश च्छवीदोषा एकादशनामानो नानाविधलिङ्गसंस्थाना भवन्ति । अतः परमुत्पत्तिमनुव्याख्यास्यामः । तद्यथा—अनिलपित्तकफशोणितान्येकैकशो युगपद्वा कोपादुदीर्णानि च्छवीमनुसृत्य रोगाननेकलिङ्गानुत्पादयन्ति ॥

तत्राऽऽदौ विसर्पिकी नाम वातशोणितात्मको व्याधिर्यस्माद्विसर्पति तस्माद्विसर्पिकी । अस्योपक्रमः पुण्डरीकपाकले व्याख्यातोऽस्माभिः ॥

अथ द्वितीयश्छवीदोषा(षो) मण्डली पृथक्पृथङ्मण्डलानि श्वेतानि रक्ताभासानि कपिलानि भस्माभासानि लक्ष्यन्ते । एतानि कफशोणितसंसर्गतश्छविमाश्रित्य जातानि साध्यानि भवन्ति । तस्योपक्रमः—क्षारलेपनाभ्यञ्जनैर्द्विव्रणीयोपचारश्चेति ॥

*पिटकाभिर्वृतायां छवौ प्रस्तब्धाः († सर्वतः पिटिकाश्छवीमाश्रित्य भवन्ति ।) एष श्लेष्मपित्तसंसर्गाद्विकारः । तस्योपक्रमः—द्विव्रणीयोक्त एवानुष्ठेयो भवति ॥

अतः परं फुल्लिका नाम । तेन सर्वतश्छविः पुष्पिता""पाण्डुरा पु(प)रुषा भवन्ति । स वातपैत्तिकश्छवीदोषः श्लेष्मशोणितक्षयाद्भवति । तस्योपक्रमः—स्निग्धैर्बृंहणीयैर्भक्ष्यभोज्यस्नेहपानादिभिरनुष्ठेय इति ॥

अथोद्दण्डिकाख्यः स्याच्छवीदोषो यत्र सर्वतश्छवी दद्रुभिर्व्याप्ता भवति । स कफकोपाद्विकारः संभवति । तस्योपक्रमः—तैलेनैवाभ्यङ्गस्वेदसूक्ष्मद्रव्यकषायैस्तूर्णदिश्यते, इति ॥

विचर्चिकाछवीदोषेऽप्यथ शूनाल्पवेदना विवर्णा प्रस्तब्धा च च्छविर्भवति । कफपित्तरुधिराद्विकारोऽयं भवति । तस्योपक्रमः—यथाव्याधि समानैरभ्यङ्गैरो-

* इतः प्राक्तनाः 'दद्रुकी, महादद्रुकी, जातसूका' इत्येते त्रयश्छवीदोषास्त्रुटिताः पुस्तकद्वयेऽपि नोपलभ्यन्ते । + धनुराकारमध्यस्थः पाठो भ्रष्टः कपुस्तकात् ॥

१ क. °ण समा°। २ क. जातस्तकी । ३ क. °मासृज्य जा°। ख. °मासृत्य ।

षधैः शीतैः सौम्यैश्च लेपनैरनुष्ठेयो भवति । तथाविधं च पानं भोजनं परिकल्पयेत् ॥

तृणपुष्पी नाम यथा—तृणमस्ति श्वेतशिरा नाम । तस्याग्रे श्वेतमुपलभ्यते पुष्पम् । तत्पुष्पाकृतिसमस्थानैर्मण्डलैः सर्वतश्छविः पुष्पिता भवति । स 'तृणपुष्पी' इत्यभिधीयते । स वातकफरुधिर ... ... ... ... ... ... ... ... । तस्योपक्रमः—तिक्तौषधैस्तैलमनुपक्रमभ्यङ्गपानान्यम(न्युप)हरेत् ॥

किलासी नाम पित्तकफसमानि कैलासानि श्वेतानि कपिलानि कृष्णावभासानि वा लक्ष्यन्ते । तानि संनिपातेन पृथक्पृथङ्मण्डलानि संभवन्त्यसाध्यानि । पुनः कस्यचिद्गर्भदोषैर्गर्भस्थस्यैवोपजायन्ते । एष च विवर्जनीयः । तत्र श्लोकौ—

कुशलो मतिमान्वैद्यो दृष्टकर्मा विशारदः ॥
ऊहापोहविधिज्ञस्तु शस्त्रकर्मविचक्षणः ॥
यथोक्तान्येवमेतानि कुष्ठानि विविधान्यपि ॥
यः साधयति पूजां स पार्थिवात्प्राप्तुमर्हति ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने छवीदोषो नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

अथ षट्पञ्चाशत्तमोऽध्यायः ।

---

ज्वलनादित्यसंकाशं मुनिमुग्रतपोधनम् ।
पालकाप्यं तु नृपतिः पप्रच्छासौ महायशाः ॥ १ ॥
मृत्यवः पञ्चदश च गजानां चरतां वने ॥
न ते भगवता प्रोक्ता ग्राम्याणां बहुरोगता ॥ २ ॥
अत्र मे संशयस्तीव्रो भगवन्समुपस्थितः ॥
तदशेषेण भगवन्व्याख्यातुं मे त्वमर्हसि ॥ ३ ॥
किमर्थं भक्षयित्वा तु मृत्तिकास्तु बह्वीरपि ॥
वारणा वह्निसंपन्ना राजन्वनविचारिणः ॥ ४ ॥
भवन्ति बलसंपन्नास्तेजोबलसमन्विताः ॥
दृढसर्वेन्द्रिया हृष्टाः कामवन्तो मनस्विनः ॥ ५ ॥

---

१ ख. °पक्रम° ।

न च *रोगा नियच्छन्ति विधा लवणवर्जिताः ॥
त एव ग्राममानीता भक्षयन्ति यदा मृदम् ॥ ६ ॥
तदा रोगान्नियच्छन्ति किमर्थमिह दारुणान् ॥
ग्रासद्वेषं तथा गुल्मं वेपथुं सगलग्रहम् ॥ ७ ॥
आनाहमथ हृद्रोगं सरणस्तम्भमेव च ॥
तथाऽतीसारमध्यन्मे(?) लभन्ते पूतिगन्धिताम् ॥ ८ ॥
मूर्छादींश्चापरान्रोगाँल्लभन्ते विविधात्मकान् ॥
भक्तं च यवसं चैव तेन चैषां विकारवत् ॥ ९ ॥
एतदिच्छामि निखिलं वेदितुं भिषजां वर ॥
सनिदानं समुत्थानं तथैव सचिकित्सितम् ॥ १० ॥
ततोऽब्रवीत्तत्त्वदृष्टिः पालकाप्यो महायशाः ॥
प्रश्नविज्ञानसंपन्नो रोमपादाय पृच्छते ॥ ११ ॥
कषायकटुतिक्ताम्ला मधुरो लवणस्तथा ॥
यथा देशविभागेन यद्रसानुगता मही ॥ १२ ॥
कृष्णा वाऽप्यथवा श्वेता पाण्डुराऽप्यथवोषरा ॥
क्षितेरेत्राभिनिर्दिष्टाः शाश्वतो वर्णजातयः ॥ १३ ॥
कृष्णा कषायमधुरा सा वै स्निग्धा च मेदिनी ॥
पाण्डुः कषायकटुका रूक्षानिलविवर्धिनी ॥ १४ ॥
श्वेताम्ला च सतिक्ता च किंचिच्चैव विदह्यते ॥
तथोषरा सलवणा न गजानां च सा हिता ॥ १५ ॥
इत्येता वर्णतश्चैव रसतश्चैव भूमिप ॥
कीर्तिता वक्ष्यते तत्र त्वन्ययोगेन लक्षणम् ॥ १६ ॥
गुर्वी भिन्नपुरीषा च दुर्जरान्नविपादिनी ॥
मृत्तिका वारणगता पच्यतेऽनिलवर्धिनी ॥ १७ ॥
...नं स्तम्भस्त्वतीसारो दौर्बल्यं परिकर्तिका(?) ॥
मन्दश्रमस्तथाऽऽलस्यं मृत्तिकाजीर्णलक्षणम् ॥ १८ ॥
अत ऊर्ध्वं तु वक्ष्यामि हेतुं तु मनुजाधिप ॥
वन्या येन क्षितिं भुक्त्वा न भवन्ति विकारिणः ॥ १९ ॥

---

* 'रोगान्' इति स्यात् ॥

---

१ क. °क्ताम्लम° । २ ख. °रत्ना विनि° । ३ क. °रा च विषादि° । ४ क. °तेऽनल° । ५ क. वरिकार्लिकः ।

रूक्षैः कषायैः कटुकैस्तृणद्रुमसमुद्भवैः ॥
रसैर्नानाविधैर्नागाः पुष्यन्ति सततं वने ॥ २० ॥
तेषां तेनोपयोगेन ग्रहणी दारुणा भवेत् ॥
जरयन्ति महीं भुक्त्वा वारणा भृशदारुणम् ॥ २१ ॥
इत्येष हेतुः प्रथमो वारणानां प्रकीर्तितः ॥
इत्यन्येऽपि तु दृश्यन्ते हेतवो मनुजाधिप ॥ २२ ॥
वन्या येन क्षितिं भुक्त्वा न भवन्ति विकारिणः ॥
बलं नास्ति* सर्वगात्रः प्रहृष्टेन्द्रियमानसः ॥ २३ ॥
यदा संयुज्यते नागो मुदितो जातकामया ॥
संप्रयोगगतं तत्र गर्भं गृह्णाति धेनुका ॥ २४ ॥
तस्यां संजातगर्भायां दौर्हृदं नाम जायते ॥
स द्वितीये तृतीये वा मासे संजायते भृशम् ॥ २५ ॥
तेन चाऽऽर्ता गजवशा मृत्तिकामुपसेवते ॥
तस्या हृदयसंबद्धा नाभ्यां नाडी प्रतिष्ठिता ॥ २६ ॥
सिरा रसवहा राजन्स गर्भः पुष्यते यया ॥
प्रसूते धेनुका काले हस्तिनीं यदि वा गजम् ॥ २७ ॥
मातुर्दौर्हृदजातं तु मृदंशमनुवर्तते ॥
स पयोमृत्तिकाहारो मृदुपल्लवभोजनम् ॥ २८ ॥
वने चरति संहृष्टः समाः पञ्च मतङ्गजः ॥
स गजः पञ्चमे वर्षे क्षीरादेव निवर्तते ॥ २९ ॥
सुव्यक्तदन्तः स भवे (?) भवत्यतिविचेष्टितः ॥
ततः क्षीरादपावृत्तो वृक्षभङ्गं निषेवते ॥ ३० ॥
विविधं पल्लवं चैव चित्राणि यवसानि च ॥
ते पुनः पांशुवातेन तथा वप्रादिमर्दनैः ॥ ३१ ॥
क्षुधिता वारणा राजन्भक्षयन्ति मृदं सदा ॥
पक्वसस्ये तथा काले गर्भात्प्रभृति मृत्तिका ॥ ३२ ॥
वियोगाच्चान्नपानस्य विकाराय प्रकल्पते ॥
इत्येते हेतवः प्रोक्ता बहवो वनचारिणाम् ॥ ३३ ॥

---

* अत्र कदाचित्किंचित्त्रुटितमिव प्रतिभाति ।

---

१ ख. जरजन्ती ।

क्षितिमाहारयन्तोऽपि ये भवन्ति निरामयाः ॥
ग्राम्याणामिह वक्ष्यामि हेतून्यैस्तु महीपते ॥ ३४ ॥
लभते यान्गजो राजन्विकारान्मृत्तिकाशनात् ॥
दावाग्निदग्धां पृथिवीं वारणा जलदागमे ॥ ३५ ॥
अभिवृष्टां जलधरैः सुगन्धां भक्षयन्ति वै ॥
पथ्यापथ्यैश्च बहुभिराहारैः संचितैर्नृप ॥ ३६ ॥
मधुराभ्यवहारैश्च तथाऽन्यैरपि भोजनैः ॥
( †कृमयो जठरोत्थास्तु हृल्लासं जनयन्ति ते ॥ ३७ ॥
........ ........ ........राजन्मृदु ह्यस्य बहुद्रजाः (?) ॥)
ग्राम्याः स्नेहामयैर्धान्यैस्तथैव रसभोजनैः ॥ ३८ ॥
पुष्यन्ति लवणैस्त्वेव ततस्तेषां महीपते ॥
ग्रहणी मार्दवं याति मृदुभिः स्निग्धपेशलैः ॥ ३९ ॥
ततस्तेषां विकाराय कल्पते भक्षिता मही ॥
मधुरैश्च तथाऽऽहारैः स्नेहपानैश्च नित्यशः ॥ ४० ॥
स्विन्नास्तु हेतुना तेन कुर्वन्त्यवनिभक्षणम् ॥
बलं च वर्धयत्येवमुपयुक्ता वसुंधरा ॥ ४१ ॥
आमाशयगता राजन्मृत्तिका बाधते गजम् ॥
उन्मादयन्ति रामास्वविधातुः (?) प्राणनाशनात् ॥ ४२ ॥
एतस्मात्कारणाद्राजन्रक्षितव्या मतङ्गजाः ॥
सततं मृत्तिकादानादारक्षैः पुरुषैर्नृप ॥ ४३ ॥
ग्राम्याणां मृदुकोष्ठानां दुर्जरा भवति क्षितिः ॥
आहारपरिणामे तो (?) *नागं स्वादति मृत्तिकाम् ॥ ४४ ॥
मृत्तिकापरिणामे वा यदाऽऽहारं निषेवते ॥
दोषं न लभते तेन मृत्तिकाभक्षणेन वै ॥ ४५ ॥
इत्येतत्कारणं प्रोक्तं ग्रामारण्यनिवासिनाम् ॥
(† गजानां मृत्तिकादाने हेतुर्दृष्टः पृथग्विधः ॥ ४६ ॥
अथ चिह्नानि वक्ष्यन्ते) गजानां मनुजाधिप ॥
मृत्तिकाभक्षणोत्थानि विधिवच्छास्त्रनिश्चयात् ॥ ४७ ॥

---

* 'नागः' इति स्यात् ॥

† धनुराकारमध्यस्थः पाठो नास्ति कपुस्तके ॥

---

१ क. ख. °विविधा° ।

स्तब्धाध्मातोऽतिवेगेन सघोषश्च सशीकरः ॥
कृष्णोपयोगान्मातङ्गो मन्दग्रासोऽतिसार्यते ॥ ४८ ॥
शूलार्तो विमनाश्चापि परिशुष्कमुखो भृशम् ॥
श्वेतोपयोगान्मातङ्गो मन्दग्रासोऽनिसार्यते ॥ ४९ ॥
दह्यमान इवावस्थो म्लानगात्रोऽतिसार्यते ॥
जनयन्त्यूषराः श्वेतं पुरीषमिह दन्तिनः ॥ ५० ॥
विवर्णविवरावक्रर्णपङ्को करीषवत् (?) ॥
नातिस्तम्बो न वा बद्धो न चैव विमना भृशम् ॥ ५१ ॥
भवेदूषरया नागो मन्दग्रासो मृदाऽर्दितः ॥
पाण्डूपयोगान्मातङ्गः क्रिमिदुष्टं निरूहति ॥ ५२ ॥
द्रवत्यत्यर्थदुर्गन्धं पुरीषं जलपत्रवत् ॥
विनमत्यथ कायेन प्रस्तब्धकरणो गजः ॥ ५३ ॥
शूलार्तश्च भवेन्नागः परिशुष्कमुखो भृशम् ॥
मन्दग्रासस्तु विमनाः परिमूत्री च वारणः ॥ ५४ ॥
भवेत्पाण्डूपयोगेन विवर्णपरुषच्छविः ॥
नागोत्थं विह्वलो''''नाभिपुत्रेन्द्रिय''''सः ॥ ५५ ॥
न चात्याध्मानकुक्षिर्यः स गजः साध्यलक्षणः ॥
कर्णलाङ्गूलविष्टब्धस्तथाऽऽध्मातो मुहुर्मुहुः ॥ ५६ ॥
लक्ष्यते यत्र(श्च) मातङ्गो न स जीवति दुर्मनाः ॥
साध्यरूपं गजं दृष्ट्वा लक्षणैः संप्रकीर्तितैः ॥ ५७ ॥
ततस्तं मतिमान्वैद्य आरभेत चिकित्सितुम् ॥
आनद्धकुक्षिं विज्ञाय चोदयेत्स्थूलविक्रमैः ॥ ५८ ॥
ततस्तमालितं स्तंभे सर्वतैलेन सेचयेत् ॥
अथैनं कथिते देशे पक्षपक्षं निषादयेत् ॥ ५९ ॥
वार्तितस्य च निष्कोशौ पाणिभ्यां मर्दयेद्भृशम् ॥
*उत्थितोपरिषन्नस्य व्यायामः परिवर्तते ॥ ६० ॥
तेन कोष्ठगतो वायुः क्षिप्रमेव प्रशाम्यति ॥
चतुरस्रं खनेत्कूपं यावच्छ्रोणीप्रमाणतः ॥ ६१ ॥

---

* उत्थितोपनिषन्न(ण्ण)स्य इति भवेत् ।

---

१ ख. °तो विवे°। २ क. कालेन। ३ क. स्तम्भैः। ४ ख. पार्ष्णिभ्यां। ५ क. उच्छ्रितो°।

ततस्तं वारिणा कूपं सुखोष्णेनावपूरयेत् ॥
तस्मिन्कूपे ततः सम्यङ्नागं तमवगाहयेत् ॥ ६२ ॥
निवातायां च शालायां धूपयेदौषधैस्ततः ॥
हिङ्गुसर्जरसोशीरैः सर्वगन्धैश्च तेन च ॥ ६३ ॥
धूपेनानेन नागस्य वायुः शाम्यति कोष्ठजः ॥
अथास्मै कवलान्दद्यान्मृत्तिकाया निरूहणे ॥ ६४ ॥
पिप्पलीपिप्पलीमूले चित्रकं हस्तिपिप्पलीम् ॥
वचामतिविषां पासं तथा कटुकरोहिणीम् ॥ ६५ ॥
हरिद्रे द्वे विडङ्गानि मरिचानि महौषधः(म्) ॥
एलां मधुरसां चैव तथा तेजस्विनीमपि ॥ ६६ ॥
देवदारुं तथा हिङ्गुं त्रिवृतां गौरसर्षपम् ॥
त्रिफलां चाजमोदां च तथैवेन्द्रयवानपि ॥ ६७ ॥
लवणैः पञ्चभिर्युक्तं क्षोदयित्वा ह्युदूखले ॥
गोमयेन च मृद्गीतां पिण्डं नागाय दापयेत् ॥ ६८ ॥
एतेन मृत्तिकां सन्नां सपुरीषां निरूहति ॥
(† यद्येतेन प्रयोगेण विशेषो नोपलभ्यते ॥ ६९ ॥
अथान्यदस्मै दातव्यं मृत्तिकाया निरूहणम् ॥
दन्ती कटुकतुम्बी च पान''''क्षजीरकम् ॥ ७० ॥
शिरीषपत्रं लशुनं सर्षपमक्षीपीहकम् (?) ॥
गोमयेनाथ मृदितं पिण्डमस्मै प्रदापयेत् ॥ ७१ ॥
एतेन मृत्तिकां सन्नां सपुरीषां निरूहति । )
वार्ताकानि विडङ्गानि फलमारग्वधस्य च ॥ ७२ ॥
स्नुह्याः पत्रं च मूलं च हरीतक्याः फलानि च ॥
श्यामां च शृङ्गवेरं च गण्डीरं चाऽऽटरूषकम् ॥ ७३ ॥
उदूखले क्षोदयित्वा पञ्चभिर्लवणैः सह ॥
पिण्डं प्रदापयेद्वैद्यो गोमयेनैव मर्दितम् ॥ ७४ ॥
यद्येतेन प्रयोगेण विशेषो नोपलभ्यते ॥
अथास्मै कवलान्दद्यान्मृत्तिकाया निरूहणे ॥ ७५ ॥

† धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ।

१ क. मण्डरी ।

विडङ्गानि त्रिकटुकां पञ्चैव लवणानि च ॥
मर्दितं गोमयेनाथ पिण्डमस्मै प्रदापयेत् ॥ ७६ ॥
एतेन मृत्तिकां सन्नां सपुरीषां निरूहति ॥
यद्येतेन प्रयोगेण विशेषो नोपलभ्यते ॥ ७७ ॥
अथान्यदस्मै दातव्यं मृत्तिकाया निरूहणे ॥
पाठामतिविषां हिङ्गुं वचां तेजस्विनीमपि ॥ ७८ ॥
रोहिणीं कटुकां मुस्तां फणिज्जकफलानि च ॥
इन्द्रदारु पयस्यां च द्वे हरिद्रे तथैव च ॥ ७९ ॥
पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ॥
शङ्खिनीं त्रिवृतां चैव विडङ्गान्मरिचानि च ॥ ८० ॥
पञ्चभिर्लवणैः सार्धं क्षोदयित्वा ह्युदूखले ॥
गोमयेनाथ संमृद्य पिण्डमस्मै प्रदापयेत् ॥ ८१ ॥
एतेन मृत्तिकां सन्नां सपुरीषां निरूहति ॥
आनाहे च यथाप्रोक्तं बस्तिमस्मै प्रदापयेत् ॥ ८२ ॥
आनद्धं बद्धचिह्नं च कृमिकोष्ठं तथैव च ॥
उपक्रमे निरूहैस्तानवसन्नमृदुस्तये(?) ॥ ८३ ॥
बलिसिद्धौ यथाप्रोक्तं निरूहं दापयेद्भिषक् ॥
उपक्रमे तथा नागं शास्त्रमाश्रित्य बुद्धिमान् ॥ ८४ ॥
शुद्धकोष्ठं विदित्वाऽथ बद्धलिण्डं च वारणम् ॥
ग्रहणीदीपनार्थाय वातप्रशमनाय च ॥ ८५ ॥
पञ्चभिर्लवणैः सार्धं पिप्पलीं मरिचानि च ॥
मैरेयं वा प्रसन्नां वा प्रतिपानं प्रदापयेत् ॥ ८६ ॥
भक्तार्धमेवानुगजं मुद्गयूषेण भोजयेत् ॥
ततः कुलत्थयूषेण भागोनं तु प्रदापयेत् ॥ ८७ ॥
समस्तभक्तं च ततो भोजयेद्रसभोजनम् ॥
इत्येवं मृत्तिकाध्यायः पृच्छतेऽङ्गाय कीर्तितम्(:) ॥
पालकाप्येन ऋषिणा वारणानां हितैषिणा ॥ ८८ ॥

इति श्रीपालकाप्ये गजायुर्वेदे महाप्रवचने वृद्धपाठे द्वितीये क्षुद्ररोगस्थाने मृत्तिका नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

## अथ सप्तपञ्चाशत्तमोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
ग्रहणीदोषनामानि तत्समाचक्ष्व पृच्छतः ॥ १ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
व्यापत्सु प्रथमे स्थाने सूचिता ग्रहणीगदाः ॥ २ ॥
तुभ्यमहं नरश्रेष्ठ तेषां वक्ष्यामि विस्तरम् ॥
दोषैः पृथक्समस्तैर्वा ते भवन्त्यनिलादिभिः ॥ ३ ॥
अत्याहारादनाहारात्तथैव विषमाशनात् ॥
कुपिते मारुते कोष्ठे व्यापादयति पावकम् ॥ ४ ॥
तत्र भिन्नं पक्वं वाऽपि शकृद्यस्य प्रवर्तते ॥
सविम्बं च सशूलं च साध्मानं फेनिलं बहु ॥ ५ ॥
इत्येतैर्लक्षणैर्विद्याद्वातजं ग्रहणीगदम् ॥
हस्तिनस्तु विशेषेण[1] करोति महतीं व्यथाम् ॥ ६ ॥
(*पञ्चमूलद्वयं क्वाथं बालबिल्वं वचा पुनः ॥
समुस्ताऽतिविषा हिङ्गु लवणं च प्रदापयेत् ॥ ७ ॥
† शकृदाद्यं सलवणं[2] सहिङ्ग्वतिविषा वचा ॥
तन्मूत्रेण युतं पिण्डं दद्यादस्मै यथाबलम् ॥ ८ ॥
क्वाथान्वा वातगुल्मोक्तान्दापयेदनुपूर्वशः ॥
निरामं च शकृज्ज्ञात्वा स्नेहयेद्वाऽपि युक्तितः ॥ ९ ॥
दीपनीयगुणक्वाथैस्तत्कल्कैश्च प्रसाधितैः ॥
स्नेहैरुपचरेत्सम्यग्भोजनादिषु योजितैः ॥ १० ॥
पिबेदेरण्डतैलं वा दशमूलगणे सृ(शृ)तः ॥
विरिक्तगात्रविड्वा (?) च क्रमेणैवानुवासयेत् ॥ ११ ॥
सुस्निग्धं मनुजां[3] घासैस्ततो नागं निरूहयेत् ॥
वातिकेन विधानेन स निरूढः क्रमात्ततः ॥ १२ ॥

---

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके । † 'शकृदाज्यं, शकृदाढ्यं' वा स्यात् ।

---

१ ख. °ण प्रभिन्नं करोति महपीडा उद्वदेतरावपि ॥ ६ ॥ प° । २ ख. °णं च वा पु° । ३ क. ख. °जा घासैस्त° ।

भूयोऽनुवासयेदेनं स्नेहैरनिलनाशनैः ॥
दीपनीयेन यावत्स्यात्स्निग्धं लिङ्गत्वदर्शनम् ॥ १३ ॥
प्रतिपानादिषु अन्यो विधिः शास्त्रे तदा न तत् ॥
इत्येषा वातिकी प्रोक्ता चिकित्सा ग्रहणीगदे ॥ १४ ॥

( इति ) वातिकः ॥

अत ऊर्ध्वं प्रवक्ष्यामि पैत्तिकस्यापि लक्षणम् ॥
पित्तं प्रकुपितं कोष्ठे कटुकोष्णादिभोजनैः ॥ १५ ॥
दूषयित्वाऽनलं कुर्याच्छकृद्वर्णैः स्वकैर्युतम् ॥
सदाहवेदनं भिन्नमल्प† ···· ···· ···· ········ ॥ १६ ॥
···· ········कथितं शृणु पैत्तिकसाधनम् ॥
मुस्तामलककाश्मर्यपृष्टिपर्णीमधूलिकाः ॥ १७ ॥
मूर्वा च बालबिल्वानि मधुकं माषपर्ण्यपि ॥
लोध्रं प्रपौण्डरीकं च पक्त्वा पादावशेषितम् ॥ १८ ॥
शर्करामधुसंयुक्तं पानं पित्तात्मके स्मृतम् ॥
विमुक्तमस्ति(?)···· ···· ····सर्पिरेवं प्रयोजयेत् ॥ १९ ॥
पाने वा भोजने वाऽपि विधिं तस्य प्रवर्तयेत् ॥
किराततिक्तं भूनिम्बं पटोलं बृहतीद्वयम् ॥ २० ॥
अमृतां वत्सकं मुस्तं पाठां तेजोवतीमपि ॥
तथा पर्पटकोशीरवासाकटुकरोहिणी ॥ २१ ॥
पक्त्वाऽप्यतिविषां चैव तस्मिन्क्वाथे घृतं पचेत् ॥
तद्रूप्यं कल्प(ल्क)संयुक्तं पैत्तिके ग्रहणीगदे ॥ २२ ॥
तद्दोषप्रत्यनीकं च (*सर्वशान्तिक) पैत्तिकम् ॥

(इति पैत्तिकः ॥ )

कफे प्रकुपिते कोष्ठे ससमानरसादिभिः ॥ २३ ॥
अजीर्णाद्यशमाद्वाऽपि लिङ्गादोषा* विनिर्दिशेत् ॥
समूलकफपित्तं च शकृदामं विमुञ्चति ॥ २४ ॥

* 'लिङ्गं स्निग्धत्वदर्शनम्' इति स्यात् । † एतदग्रे पुस्तकद्वयेऽपि 'सन्निविलगं ...इत्येतावानेव पाठः ॥ * धनुराकारमध्यः पाठो नास्ति खपुस्तके । * 'दोषान्' ... स्यात् ।

१ क. च । २ क. °वासो क° । ३ ख. °ङ्गा दोषा ।

प्रवाह्यमाननिर्भिन्ने* ······ ······ ······ ॥
······ ······ ······ ······ ······ मालेपयेद्भिषक् ॥ २५ ॥
जम्बूदुम्बरवेत्राणां कुष्ठस्य च धवस्य च ॥
कषायैः क्षालयेद्भाण्डं लेपयेन्मधुना सह ॥ २६ ॥
एलात्वक्कर्पूरपद्मकागुरुचन्दनैः ॥
सूक्ष्मचूर्णीकृतैरेव पिप्पलीमरिचानि च ॥ २७ ॥
मासादूर्ध्वं ततः पानं पाययेदुत्तमासवम् ॥
सर्ववातविकारेषु ग्रहणीं दा(दी)पयेद्भिषक् ॥ २८ ॥
तद्दोषहरणैश्चान्यैरेवमेव······ ······ ······भिषक् ॥
······ ······ ······ ······ ······ज्ञेयो विस्तारिको विधिः ॥ २९ ॥
लवणं स्यादूर्ध्वनेत(?)······ ······ ······क्षमते विधिः ॥
आरोग्यं कामयेद्यस्तु गजानां रोगसिद्धये ॥ ३० ॥
पञ्चमूलद्वयं पाठामपामार्गं सगोक्षुरम् ॥
पाषाणभेदकं लोध्रं द्वे हरिद्रे विभीतकम् ॥ ३१ ॥
अभया सल्लकी मुस्ता स्नुही चातिविषा चवी ॥
एलां तेजोवतीं व्योषं तथा कटुकरोहिणीम् ॥ ३२ ॥
वचां कुष्ठं वरीं श्वेतां विडङ्गं मूर्वया[2] सह ॥
तथा कटुकतुम्बी च तथा निम्बकरञ्जकौ ॥ ३३ ॥
अहिंस्रां काकमाचीं च चित्रकं जीरकद्वयम् ॥
अजमोदां च कालां च पिप्पलीमूलमेव च ॥ ३४ ॥
द्वौ करञ्जौ तथाऽर्कं च शिग्रुकं सारिवामपि ॥
दाडिमं तिन्तिडीकं च मातुलुङ्गाम्लवेतसम् ॥ ३५ ॥
लवणानि च सर्वाणि सूक्ष्मचूर्णानि कारयेत् ॥
श्लक्ष्णचूर्णीकृतैरेतैः समं तत्र प्रसाध्यते ॥ ३६ ॥
सैन्धवं च समायुक्तं रोमको वा चिकित्सितम् ॥
अतोऽर्धस्वापमानीय वीक्ष्य दोषबलाबलम् ॥ ३७ ॥
चतुःषष्टिः पञ्च चैषां हिङ्गुभागं समावपेत् ॥
सीधुं काञ्जिकयुक्तेन गोमूत्रेण द्रवीकृतम् ॥ ३८ ॥

---

* एतदग्रे पुस्तकद्वयेऽपि 'च तेष्वदग्निसमापेतु' इत्येवोपलभ्यते ॥

---

१ क. °न्मधुना । २ क. दूर्वया ।

दध्ना च मधुना सार्धं सममेतद्विपाचयेत् ॥
पुण्ययोगे द्विजातीयान्स्वस्ति वाच्य····दक्षिणाम् ॥ ३९ ॥
सर्वमेतद्विजानीयात्पिण्डीभूतं विचक्षणः ॥
तद्योगं सम(प्त)रात्रं तु वैद्यशास्त्रविशारदैः ॥ ४० ॥
दातव्यं कृमिकोष्ठेन क्षीणाय वारणाय च ॥
मदक्षीणाय तथा भिन्नवर्चाय ताम···· ···· ॥ ४१ ॥
येभ्यश्च मूलजं दन्तविषं येभ्यश्च कृत्रिमम् ॥
अजीर्णमांसमद्युक्तं मातङ्गं न हि नाशयेत् ॥ ४२ ॥
गजानामथवाऽश्वानां महिषीणां गवामपि ॥
प्राणिनामपि सर्वेषां (+सर्वेषा)मति सर्वदा ॥ ४३ ॥
अल्पमल्पं प्रदातव्यमेवमेतैः कृमिगैः क्रमात्(?) ॥
दाग्निप(?)स्ततो ग्रीष्मे गतजने †वस्तु प्रदापयेत् ॥ ४४ ॥
द्व्यहं त्र्यहं वा विश्रम्य पुरुषेणाऽऽग्नेये*···· ···· ॥
···· ···· ···· ···· ····पिण्डकल्कं समाहृतम् ॥ ४५ ॥
···· ···· ···· ····परयुतं···· ···· ···· ···· ···· ···· ···· ॥
दापयेत्सर्पिषा सार्धं···· ···· ···· ···· ···· ···· ॥ ४६ ॥
पस्थाकेतचिकित्सेषु (?)···· ···· ···· ···· ···· ···· ···· ॥
नानाविधं पयः प्रोक्तो (?) यद्यपि (?) श्चैव सूरिभिः ॥ ४७ ॥
गव्येषु तेषु तिस्तेषु (?) प्रधानेन तदुच्यते ॥
तेष्वमूत्रपुरीषत्वाद्योऽतिश्रेष्ठतया तथा ॥ ४८ ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने ग्रहणीदोषचिकित्सा नाम सप्तपञ्चाशत्तमोऽध्यायः ॥५७॥

## अथाष्टपञ्चाशत्तमोऽध्यायः ।

अनूपयवसाहाराद्गुरुस्निग्धानि भोजयेत् ।
अल्पप्राणस्य मन्दाग्नेः सदा जागरणान्निशि ॥

+ धनुराकारमध्यस्थः पाठो नास्ति खपुस्तके । † 'वस्तपप्रदापयेत्' इति द्वयोरपि पुस्तकयोरुपलभ्यते । * इत उत्तरं द्वयोरपि पुस्तकयोः 'कृमिघ्नः' इत्युपलभ्यते ॥

१ ख. °ण्यगे द्विजातीन्प्रति स्वस्ति वाच्य दक्षिणात् । २ क. ख. °र्णसमां° । ३ क. प्रोक्तं । ४ क. तिस्रेषु । ५ क. °द्योनिश्रे° ।

तदा न पच्यते भक्तमग्निसादश्च जायते ।
अग्निसादादनुस्निग्धः कृष्णः शुक्लोऽरुणो भृशः ॥
रक्तः पीतोऽथ हरितः सर्ववर्णयुतस्तथा ।
चरेकेणेति धातुः स आम इत्यभिसंज्ञितः ॥
उदकुम्भे यथापूर्वं पाचयित्वा च जायते ।
क्षीरं क्षीरस्य पात्रे वा एवमामाशयस्थिता ॥
आमो लक्षणसंयुक्तः स आम इति कीर्तितः ।
सुशीतं पिच्छिलं चैव दुर्गन्धं कृमिभिर्युतम् ॥
स योनिः सर्वरोगाणां प्रोच्यते नृपसत्तम ।
अपोक्षतो यदा वैद्ये रक्षणात्परिकर्मभिः ॥
कृच्छ्रसाध्यो भवत्येष विनाशयति वा गजम् ।
लक्षणं च चिकित्सां च तस्य वक्ष्याम्यहं शृणु ॥
यस्तु लालापरिस्रावी परितप्तमना भृशम् ।
शूनपर्यन्तनयनस्तताम्रध्यानलोचनम् ॥
मन्दग्रासोऽल्पचेष्टश्च मन्दं च परिवीजति ।
पीताभासं सशूलं च मूत्रं प्रकुरुते मुहुः ॥
पुरीषं फेनिलं यस्य प्रदाध्मातः प्रमुञ्चति ।
रसस्थानगते चाऽऽमे लिङ्गान्येतानि निर्दिशेत् ॥
परिघर्षति योऽत्यर्थं तटे वृक्षे मतङ्गजः ।
देहे कण्डूयमानस्तु कोशमूलं सवेदनम् ॥
रक्तराजीवनेत्रस्तु शोणितश्वेत (?) संशयः ।
योऽतिसंकुचिताङ्गस्तु शूलार्तः संनिषीदति ॥
रूक्षः कृशो भिन्नवर्चा मांसस्थानगते भवेत् ।
हरितैः पिच्छिलैः स्निग्धैर्भक्तैः संवेष्टितं गजः ॥
लिण्डं प्रमुच्यते यस्मात्स्नानान्ते मेढ्रसंस्थिते ।
गुरुहस्तो निमील्यैकं चक्षुर्यो विधमत्यपि ॥
अतसीकुसुमाभं च मूत्रं यो बहु मुञ्चति ।
अस्थिधातुगते राजँल्लिङ्गान्येतानि निर्दिशेत् ॥

१ क. °ग्निमान्याद° । २ ख. °रक्केणे धा° । ३ क. आपोक्षतो । ४ क. ख. °म् । स्तन° । ५ क. ख. °श्वेन सं° । ६ क. योऽस्ति सं° । ७ क. °ष्टितो ग° । ८ ख. °भसत्य° ।

रक्तं शकृच्छब्दवदल्पनित्यदुर्गन्धियुक्तं विसृजेच्च नागः ।
सर्वैश्च गात्रैर्गुरुभिर्युतश्चे(?)····मपानस्य····भेषजस्य ॥
मज्जागते जीवति वा यदि स्याच्छुक्रस्थितेऽतः कथयामि चिह्नम् ।
पूर्वोदितैर्यो बहुभिस्तु चिह्नै रूपैरनिष्टैः सह *जाति जीवम् ॥
दोषाश्रितोऽयं प्रकरोति चेष्टां वाग्दारितः प्राग्गुदितो नरेन्द्रः(न्द्र) ।
प्रस्तम्भनं साकुलकं मनीत्वं(?) संमीलनं प्राक्पचनं नृपातः(?) ॥
कण्डूप्रदोऽयं हृदयप्रदाहशीताभिलाषं च स पित्तसंस्थः ।
स्तम्भं महच्छेषमतीवनिद्रां लालास्रुतिं वा कफदोषसंस्थः ॥
दोषाश्रितोऽयं खलु सिद्धिमेति धातुश्रितः पञ्च तु कृच्छ्रसाध्यः(ध्याः) ।
धातुद्वयेनैव नरेन्द्र साध्यं चिकित्सितं ते कथयामि राजन् ॥
निरूप्य सम्यक्खलु कालदेशौ व्याधीन्वयः सत्त्वशरीरसात्म्यम् ।
ततः प्रयुञ्जीत भिषग्गजे क्रियां यथा हि नागः स सुखी भवेच्च ।
स्वेदैर्यथोक्तैः खलु स्वेदयेत्तं प्रवेशयेद्वाऽपि निवातदेशे ॥
उष्णोदकं नागरदर्भमूलं प्रयोजयन्त्यामविशुद्धिहेतोः ।
सिद्धां गुडूचीं त्रिफलां सकृष्णां द्वे जीरके निम्बपटोलपत्रम् ॥
द्वौ वा करञ्जौ सह निम्बमूलं तेजोवती वा लवणैश्च युक्तम् ।
पिण्डं गजस्य संदद्यात्ततः संपद्यते सुखी ।
चूर्णारिष्टप्रयोगैश्च मृत्तिकागात्रभाषितैः ॥
साधयेत्तं यथायोगं सुसमीक्ष्य भिषग्वरः ।

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थानेऽष्टपञ्चाशत्तम आमाध्यायः ॥ ५८ ॥

---

## अथैकोनषष्टितमोऽध्यायः ।

श्रीमानङ्गाधिपो राजा रोमपादो महाद्युतिः ॥
अग्निकल्पमृषिश्रेष्ठं पालकाप्यं स्म पृच्छति ॥ १ ॥
कथं द्विपानां क्रमयः कोष्ठे गच्छन्ति संचयम् ॥
निदानं च कथं तेषां किंच तेषां चिकित्सितम् ॥ २ ॥

---

* 'याति' इति स्यात् ॥

---

१ क. °तेऽन्तः क° ।

स एवमुक्तो भगवान्प्रोवाच मुनिसत्तमः ॥
कृमिकोष्ठं यथान्यायं सनिदानं सभेषजम् ॥ ३ ॥
आनूपैर्यवसैर्नित्यमिक्षुभिः सेक्षुवालुकैः ॥
भक्ष्यैर्भोज्यैश्च मधुरैः पेशलैः श्लेष्मवर्धनैः ॥ ४ ॥
गोरसैश्च वसाभिश्च मत्स्यगुडघृतैस्तथा ॥
आमपक्वविपर्यासादजीर्णाच्चैव[1] भोजनात् ॥ ५ ॥
अव्यायामाच्च सौख्याच्च कफं तस्य प्रवर्धते ॥
स प्रवृद्धः कफः कोष्ठे संचितः पिण्डितो[2] घनः ॥ ६ ॥
कृमयस्तत्र जायन्ते विविधाः श्लेष्मसंभवाः ॥

ते तु खलु महाराज कृमयस्ताम्रपीतकाः कपिलारुणहरितनीलाः सितकुमुदपत्रनलिनदलसवर्णाभा नीलमुखाः संकुचितत्वचो विपुलमुखाः सूचीमुखा वाऽरोमशा[3] रोमशा वा स्निग्धा रूक्षाः स्थूलाः कृशा दीर्घा ह्रस्वा भवन्ति । वातरुधिरकफपित्तसंसृष्टा राजीव(म)न्तो भवन्ति । पाण्डुरारुणाश्च कफवातसंसर्गात् । श्लेष्मणा शुद्धवर्णाः । ते तस्याऽऽमाशयात्पक्वाशयमनुप्रपन्ना हृदयप्लीहयकृद्वक्षःस्थलान्त्रनाभिवङ्क्षणशकृत्स्थानमूत्रबस्त्यण्डकोशगुदप्रदेशान्भक्षयन्ति ॥

तस्य कृमिभिरुपसंसृष्टदेहस्य[4] भोज्येष्वभ्यवहारेष्वश्रद्धाऽरोचकश्चास्य भवति । न चास्य श्रद्धापरिसरणविहरणलङ्घनप्रमाथपानात्सुतटवल्मीकवृक्षहरणावगाहसलिलक्रीडास्थानशयनेषु च प्रजागरादरोचको[5] वाऽस्य भवति । स खल्वाध्मातोदरो विमना विकीर्णहस्तः परिहीयमानो(णो)त्साहशरीरबलः कृमिभिरुपसंसृष्टः शकृद्भिन्नमपि शीर्यते । कृच्छ्रमूत्री च भवति । न चास्य मूत्रं प्रवर्तते ॥

तस्यैवं निदानं समीक्ष्य कृमिभिरुपसंसृष्टकोष्ठत्वात्कृमिकोष्ठीति विज्ञाय तं चिकित्सितुमुपक्रमेत—कुटजफलपत्रकभल्लातकं द्वे हरिद्रे करञ्जौ चेति । एतानि सर्वाणि समभागानि यथालाभं निष्क्वाथ्य तं क्षारेण सह योजयित्वा पाययेत् । भल्लातकेकुटजकचोद्रं[6] हरिद्रास्फूर्जकाश्चेति संक्षुद्य लवणसंयुक्ताभिस्ताभिः काले कवलं दद्यात् । काकादनाकाकजङ्घाकुटजाङ्कोल्लसुमनसं संक्षुद्य सुवर्चिकालवणाक्तं हस्तिमूत्रे रात्रिं वासयित्वा कवलान्दद्यात् । मण्डूकपर्ण्युन्दुरुकर्णीबृहतीकण्टकारिकागृहधूमपिप्पलीबर्बराढक्यर्जकफणिज्जकांश्च गोमूत्रे साधयित्वा कवलान्दद्यात् । भयकालात् ..... ..... ..... ..... ..... । अथवा सप्तप-

---

१ क. ख. °र्णाश्चैव । २ क. °चितो पण्डितो । ख. संचितो पिण्डितो । ३ क. वाऽरोमशो रोमशो वा । ४ क. °स्य भक्ष्यभो° । ५ क. °प्रसाद्ययाना° । ६ क. ख. °कटुजकवाद्रं ।

र्णत्वक्कटुरोहिणीवचापिप्पलीकुटजहरेणुकालथनानि द्वे हरिद्रे तेजोवतीं संक्षुद्य यथालवणगोमूत्रसंयुक्तान्कवलान्दद्यात् । अथवाऽटरूषकपत्राणि श्यामातृवृत्पूतीकरञ्जामलकबिल्वमूलदन्तीं च गोमूत्रे विपाच्य तेन क्काथेन तैलसंयुक्तेन निरूहं दद्यात् । यथाबस्तिसिद्धिप्रोक्तेन विधिना । अथवा कटुकालाबुबीजानि त्रिकटुकरसानि विडङ्गचित्रकैः श्लक्ष्णपिष्टैस्तैलं[2] विपाच्य विधिवदनुवासनं दद्यात् । भूपश्च त्रिकटुकपटोलपादलापिचुमन्दार्शोघ्नकाञ्जिमुद्ग[3]………………साधयित्वा लवणान्वितं सतैलमेवं पाययेत् । वचासनिम्बकाटरूषककपालस्पन्दनानां त्वक्पत्रभङ्गनिर्यूहदधिमस्तुना च साधयित्वौदनं व्रीहीणां मधुना संयोज्य भोजयेत् । माघस्विन्ना विद्यात्(?) । त्रिकटुकचूर्णयुक्तान्प्रभूततैलान्भोजयेत् । यवसाध्यायविहितैर्म[4]ञ्जुभिर्यवसैरुपचरेदिति ॥

तत्र श्लोकाः—

कषायैः कवलैः पानैर्भोजनैर्बस्तिकर्मभिः ॥
कृमिघ्नैः कटुकैस्तीक्ष्णैश्चिकित्सेत्कृमिकोष्ठिनम् ॥ ७ ॥
उपेक्षिताः प्राणहरा गजानां भवन्ति कोष्ठे कृमयः प्रवृद्धाः ॥
तान्भेषजैः शास्त्रविधिप्रदिष्टैः प्रणाशयेदद्भिरिवाग्निरेषाम् ॥ ८ ॥
(*एवंविधाः से[5]कृमयस्तत)स्ते प्रोक्ता मया पार्थिवसिंह सम्यक् ॥
एवं तु यः साधयतीह सम्यक्पूज्यो यथाऽहं भवता तथा सः॥९॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने कृमिकोष्ठी नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

## अथ षष्टितमोऽध्यायः ।

---

विद्याविनयसंपन्नं तपसा नष्टकल्मषम् ॥
पालकाप्यमृषिश्रेष्ठं रोमपादो नृपोत्तमः ॥ १ ॥
प्रब्रूयाद्द्विपदां श्रेष्ठः पुनः प्रश्नमनुत्तमम् ॥
भगवन्पोष्यमाणा हि केचित्कैश्चिन्मतङ्गजाः ॥ २ ॥
न पुष्टिमुपगच्छन्ति बलतो मांसतस्तथा ॥
कथं केन च क्षीयन्ते क्षयाः कतिविधाश्च ते ॥ ३ ॥

---

* धनुराकारान्तर्गतपाठः खपुस्तके त्रुटितः ।

---

१ क. यवा ल° । २ ख. °स्तैलं विधि° । ३ ख. °काभि मु° । ४ क. ख. °हिते मञ्जु° । ५ क. सत्कृम° ।

कश्च तेषां प्रतीकारः कर्तव्यो भगवन्मया ॥
ततः प्रोवाच भगवान्प्रश्नमाक्कुनिवेदितम् ॥ ४ ॥
पालकाप्यो महाबुद्धिः पृच्छन्तं च नृपोत्तमम् ॥
रसशोणितमांसानां मेदोमज्जास्थिरेतसाम् ॥ ५ ॥
*गुणान्सम्यक्प्रवृत्तानां दोषाणां चैव पार्थिव ॥*
पुष्टिः सम्यक्प्रवृत्तेषु बलतो मांसतोऽपि च ॥ ६ ॥
एतेषां च वि† .... .... .... .... .... .... .... .... ॥
तेषां शृणु पृथक्त्वेन लक्षणं ब्रुवतो मम ॥ ७ ॥
तत्र क्षीणश्च विज्ञेयो दुर्बलश्चापि वारणः ॥
चतुष्प्रकारं दौर्बल्यं क्षयश्च दशधा नृप ॥ ८ ॥
दुर्बलः (‡क्षीणधातुत्वा)द्दोषधातुक्षयात्क्षयी ॥
तत्र तावत्प्रवक्ष्यामि दौर्बल्यस्याऽऽगमं नृप ॥ ९ ॥
वयःक्षयाद्व्याधिना वा प्रकृत्या चौषधैस्तथा ॥
पृथक्त्वेनैव वक्ष्यामि एतेषां वाऽपि लक्षणम् ॥ १० ॥
वयसो विक्रमान्नागो धातुदोषगुणक्षयः ॥
वातश्लेष्मोपसर्गेण दुर्बलः संप्रकीर्तितः ॥ ११ ॥
( †व्याधिना वक्ष्यते त्वन्यद्दौर्बल्यं वारणे नृप ॥
दीर्घकालं भवेत्कष्टो व्याधिना यो मतङ्गजः ॥ १२ ॥
असम्यक्प्रधनाद्वाऽपि दुर्बलो वारणो नृप ॥
वक्ष्यते तूपधानेन दौर्बल्यं वारणो नृप) ॥ १३ ॥
उपधानेऽतिमात्रेण पिण्डेन कवलेन च ॥
व्यत्यासेनापि दत्तेन क्लिष्टो यदि मतङ्गजः ॥ १४ ॥
सोऽपि दौर्बल्यमाप्नोति वारणः पृथिवीपते ॥
यः प्रकृत्या भवेद्राजन्दुर्बलश्चापि वक्ष्यते ॥ १५ ॥
दुर्बलायांस्तु संजातो दुर्बलादेव धारणात् ॥
स क्लिष्टो देवशयने भवेत्प्रकृतिदुर्बलः ॥ १६ ॥

---

† आदर्शद्वयेऽपीतः परं 'यासान्समुपलाक्ष्ये' इत्येवोपलभ्यते । ‡धनु० खपुस्तके त्रुटितः । † धनुराकारमध्यस्थपाठो नास्ति कपुस्तके ।

---

१ क. °याश्च सं° ।

इति (*प्रकृति)दौर्बल्यं हेतुभिः सह कीर्तितम् ॥
अतः परं प्रवक्ष्यामि धातूनां हेतु.... .... .... ॥ १७ ॥
....करेण्वनियोगाद्वा वधबन्धाच्च दारुणात् ॥
अध्वनोऽतिप्रयोगाद्वा गमनाच्छोणितस्य वा ॥ १८ ॥
रौक्ष्यादुष्णाभिघाताद्वा विरोधाद्भोजनस्य वा ॥
मनस्तापैस्तु विविधैरनेकैरपि वारणैः ॥ १९ ॥
कलुषोदकपानाद्वा अनिष्टेन तृणेन वा ॥
भवन्ति धातवः क्षीणाः क्रमस्यातिक्रमेण वा ॥ २० ॥
इमानि चापि लिङ्गानि दृश्यन्ते क्षीणधातुषु ॥
तृष्णालुर्विरसास्यश्च स हि शून्यः सवेदनः ॥ २१ ॥
मन्दाग्निर्दुर्बलश्चैव वारणो रससंक्षयात् ॥
हृदयं यस्य....सदोम्ल.... ....व यो भवेत् ॥ २२ ॥
शीताभिलाषी पुरुषस्तृष्णालुश्चैव यो भवेत् ॥
अत्यर्थं पीतवर्णश्च प्रस्तब्धः परुषच्छविः ॥ २३ ॥
रक्तक्षीणश्च विज्ञेयो लिङ्गैरेतैर्मतङ्गजः ॥
कम्पते च शरीरेण विवृतश्चासिसंधिषु ॥ २४ ॥
अपराभ्यां व्रजेच्चापि कर्षन्निव महीतलम् ॥
वं.... .... ....कासनाङ्गेषु च्छिद्रस्रस्ताङ्ग एव च ॥ २५ ॥
.... .... .... .... .... ....शनैर्गच्छति धावति ॥
.... .... .... .... .... ....प्रस्तब्धनयनो द्विपः ॥ २६ ॥
स क्षीणमांसो विज्ञेयः मव्यक्तकटपार्श्वकः ॥
जघनं म्लायते यस्य दुर्बलश्चैव यो भवेत् ॥ २७ ॥
न च वेदयते स्पर्शं स्रस्तगात्रस्तथैव च ॥
अनवस्थितचित्तश्च तथा स्निग्धप्रियस्तु यः ॥ २८ ॥
वितविल (?) भिन्नतनुर्निर्योणैर्विवृतोऽपि च ॥
स क्षीणमेदो विज्ञेयो गजशास्त्रविशारदैः ॥ २९ ॥
दन्तरोमनखास्थीनि वृद्धिर्देहे न जायते ॥
दन्ताश्च परिहार्यन्ते सगदा यस्य दन्तिनः ॥ ३० ॥

---

* धनुराकारमध्यस्थस्य खपुस्तकेऽभावः ॥

---

१ क. °धा....भोजनात् ॥ म° । २ क. सदि स्तन्यः । ३ क. वर्णमुक्ताङ्ग एवाङ्के° । ४ क. ख. °त्तस्य त° । ५ क. ख. °यस्त्वयः ।

निषीदति न शक्नोति तथोत्थातुं च वारणः ॥
बोध्यमानः शनैर्गच्छेन्मन्दं च परिवीजति ॥ ३१ ॥
मन्दं भोजनमश्नाति तथैवास्य न जीवति ॥
भ्रष्टग्रीवस्त्वनि············ध्यानशीलश्च वारणः ॥ ३२ ॥
अस्थिक्षीणस्य नागस्य लिङ्गमेतत्प्रकीर्तितम् ॥
मज्जोपा अपि नागानां वक्ष्यते लक्षणं क्षये ॥ ३३ ॥
आध्मातकुक्षिर्योऽत्यर्थं व्रजन्गात्राणि कर्षति ॥
शूयन्ते यस्य गात्राणि नेत्राणि च विशेषतः ॥ ३४ ॥
आलानवाही विमनाः शय्याकामो जलप्रियः ॥
शुषिराणि विवर्णानि यस्य चास्थीनि दन्तिनः ॥ ३५ ॥
अभीक्ष्णं वातरोगो यस्तस्य मज्जक्षयो भवेत् ॥
शुक्रहीनस्य नागस्य लक्षणं संप्रवक्ष्यते ॥ ३६ ॥
पीड्यते वृषणं म्लानं शूयते चाऽऽशु मेहनम् ॥
न च व्यवायं प्राप्नोति चिरोत्सेकस्य जायते ॥ ३७ ॥
गात्राणि चास्य सीदन्ति मुखशोषी भवेद्भृशम् ॥
अप्रहर्षश्च मेण्ढ्रस्य रेतसः संक्षयो भवेत् ॥ ३८ ॥
धातूनामिति निर्दिष्टं लक्षणं संक्षये मया ॥
दोषाणां संक्षये तस्य लक्षणं संप्रवक्ष्यते ॥ ३९ ॥
कफसंक्षीणपित्तस्य लिङ्गमेतत्प्रकीर्तितम् ॥
मारुतः पित्तसहितः कफहीनस्य दन्तिनः ॥ ४० ॥
करोत्यङ्गविमर्दं च बाढमुद्वेष्टनं भ्रमम् ॥
वेपनं परिवेषं च नोदनं स्फोठनं तथा ॥ ४१ ॥
दूयनं शीतसेवित्वं पुनश्चोष्णाभिनन्दनम् ॥
शिरःप्रकम्पनं चापि संधयः शिथिला भृता ॥ ४२ ॥
हृदि पीडा च भवति श्लेष्मक्षीणस्य दन्तिनः ॥
कफपित्ते बहुपित्ते क्षीणे नागस्य मारुते ॥ ४३ ॥
शीताभिलाषो भवति पुनरुष्णाभिनन्दनम् ॥
सादनं मुखशोषश्च शिरसो गौरवं तथा ॥ ४४ ॥

---

१ क. ख. °रिजीवति । २ क. °ज्जानामपि । ३ क. आलीन° । ४ क. संप्रपक्षते । ५ क. ख. कफः सं° । ६ ख. °स्य नागस्य लि° । ७ क. मोदनं ।

सशब्दा मरुतश्चास्य कुक्षौ विपरिवर्तनम् ॥
छर्दिश्चाङ्गे व च वे(?)…………हनं मोहनं तथा ॥ ४५ ॥
अल्पहर्षोऽल्पचेष्टश्च वातक्षीणो भवेद्गजः ॥
दोषाणामपि निर्दिष्टं क्षयलिङ्गं नराधिप ॥ ४६ ॥
संज्ञा प्रणश्यते राजन्कस्माद्धेतोश्च दन्तिनः ॥
धातुक्षये महीपाल यदा वायुः प्रकुप्यति ॥ ४७ ॥
वैकल्यं प्रणयेन्नागं प्राणैर्वाऽपि वियोजयेत् ॥
राज्ञश्चन्द्रमसो यस्मादभूदेष किलाऽऽमयः ॥ ४८ ॥
तस्मात्तं राजयक्ष्मेति प्राहुर्वेदविदो जनाः ॥
शोषणात्तु रसादीनां शोष इत्यभिधीयते ॥ ४९ ॥
क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते यतः ॥
यस्माद्दक्षस्य वचनादुत्पन्नो दारुणः क्षयः ॥ ५० ॥
तस्मात्क्षीणगजा राजन्रक्षितव्या विशेषतः ॥
राजेति सोमो भगवान्व्यपधायि व्यर्थवादिभिः ॥ ५१ ॥
स दक्षेण पुरा शंभौ दुराचारो निरास्तिकः ॥
भार्यां सम्यक्प्रवृत्तस्तु रोहिण्यां तद्वशे स्थितः ॥ ५२ ॥
सेवमानस्ततः शप्तो राजा दक्षेण धीमता ॥
अहन्यहनि ते* …… …… …… …… …… …… …… ॥ ५३ ॥
…… …… …… …… …… …… …… …… …… …… …… ॥
स्थानं यथर्तु कर्तव्यं मृदुशय्यां च नित्यशः ॥
व्याघातं मनसश्चास्य कदाचिन्नैव कारयेत् ॥ ५४ ॥
अवग्राहप्रचारेषु कूलाघातेषु चैव हि ॥
शब्दयेत्सततं नागं कर्दमस्य च सेवने ॥ ५५ ॥
शय्याभागे ततः स्थाने वीथीनां गमनेषु च ॥
विसर्गं कारयेत्तस्य न च हन्यादकारणम् ॥ ५६ ॥
न वाचं कटुकां ब्रूयात्सान्त्वयेच्च पुनः पुनः ॥
निर्याणे शयने चैव भोजने च न दूषयेत् ॥ ५७ ॥
भोजयेत सदा नागं चित्रैश्च मधुरैः फलैः ॥
श्रीपर्णी च मधूकानि यष्टीमधुकमेव च ॥ ५८ ॥

---

* इतः परं कपुस्तके तु द्वित्राक्षरलिखनावकाशस्त्यक्तः । खपुस्तके तु चतुर्दशपङ्क्तिस्थानमलिखितमेव रक्षितमस्ति ।

शृङ्गवेरं पयस्यां च बिल्वं द्वे कण्टकारिके ॥
पृष्टिपर्ण्यंशुमत्यौ च तथा गन्धर्वहस्तकम् ॥ ५९ ॥
क्राथयेत्सलिले सर्वं निष्क्राथं कारयेत्ततः ॥
निष्क्राथसमभागं च क्षीरं तत्र प्रदापयेत् ॥ ६० ॥
एकस्थं कारयित्वा तु शीतलं पाययेद्विपम् ॥
प्रातस्तथाऽपराह्णेषु शालीनामोदनं मृदुम् ॥ ६१ ॥
रसैस्तैस्तैस्तु पूर्वोक्तैर्दाडिमाम्लैश्च भोजयेत् ॥
इक्षून्वृक्षसमूलानि शृङ्गाटककसेरुकान् ॥ ६२ ॥
खर्जूरं मुस्तकं चैव दापये(*त्पायसै)र्युतम् ॥
उदकानि विचित्राणि यवसानि मृदूनि च ॥ ६३ ॥
फाणितेनैव संयोज्य वारणाय प्रदापयेत् ॥
संजातप्राणमांसस्तु यदा भवति वारणः ॥ ६४ ॥
क्षीरं मधुरकैः पक्वं ससर्पिष्कं प्रदापयेत् ॥
चक्रवाकैर्बकैर्हंसै राटिभिः प्लवमद्गुभिः ॥ ६५ ॥
कदम्बैर्बर्हिणैश्चापि तित्तिरैस्तु कपिञ्जलैः ॥
श्वाविच्छल्यकगोधाभिः शूकरैर्महिषैस्तथा ॥ ६६ ॥
अजाविकुक्कुटैश्चैव तथैवैणादिभिर्मृगैः ॥
भोजनार्थं रसं चास्य वेसवारं च कारयेत् ॥ ६७ ॥
ततः शाल्योदनं तेन भोजयेत्सततं गजम् ॥
सहां च माषपर्णीं च पयसा सह पाययेत् ॥ ६८ ॥
एतत्सुरया युक्तं च घृतेन सह पाचितम् ॥
प्रातरुत्थाय दातव्यं प्राणस्तेनास्य वर्धते ॥ ६९ ॥
शक्रत्फाणितसंयुक्तं क्षीरेण सह पाचितम् ॥
दापयेद्भोजनं तेन बलशुक्रविवर्धनम् ॥ ७० ॥
करीरं शल्लिपादं च तथैव च विभञ्जिकम् ॥
श्यामार्ककुरुविन्दं च हस्तिश्यामाकमेव च ॥ ७१ ॥
महाहस्तितृणं चैव प्रमोदो वेणुपत्रिका ॥
गवेधुकं मृणालानि लवलीकं बिशानि च ॥ ७२ ॥

---

* धनुराकारमध्यस्थः पाठो नैव खपुस्तके ॥

---

१ ख. °र्जूरमस्त° । २ क. क्षारं । ३ क. मदां । ख. सदां । ४ क. वैणपत्रिका । ख. वेणुपत्रिकाम् ।

दापयेत्सततं नागे पवसानि विचक्षणः ॥
मधुफाणितसंयुक्तं तीक्ष्णगण्डानि दापयेत् ॥ ७३ ॥
धेनुकाभिःस्रुतं नागं गात्ररोगेण चाऽऽतुरम् ॥
वयःक्षीणकृशं चैव मदवेगाश्च निःसृतम् ॥ ७४ ॥
धातुक्षीणश्च यो नागो व्रणदोषेण वाऽन्वितः ॥
प्रभग्नस्त्वध्वगमने यश्च क्षीणबलो गजः ॥ ७५ ॥
येषां चाऽऽगन्तुजा राजन्रोगाः समुद्भवन्ति हि ॥
तेषामाहारयोगेण सर्वानेतान्प्रसाधयेत् ॥ ७६ ॥
सास्रयाश्रित्य मतिमान्यथाऽग्निः सततोत्थितः ॥
माषाणां कूलनिद्रोणं तण्डुलद्रोणमेव च ॥ ७७ ॥
प्रतिपानं च देयं स्यात्सपञ्चलवणां सुराम् ॥
विडङ्गैश्च समायुक्तां तथा त्रिकटुकेन च ॥ ७८ ॥
मोदकास्त्वपि ये देयाः शृणु तेषां विधिं स्तताम् ॥
दद्यात्सैवाक्षकं द्रोणमाढकं बिल्वमेव च ॥ ७९ ॥
उदूखले क्षोदयित्वा पञ्चाहं सुरया स्थितम् ॥
देयस्तैलेन संयुक्तः श्लेष्मकृमिविनाशनम् ॥ ८० ॥
अष्टकं तन्दुलानां च माषद्रोणयुतं स्थितम् ॥
किण्वस्य वाऽऽढके स्थाप्यं सर्वमेतत्सुसंयुतम् ॥ ८१ ॥
चतुर्थेऽहनि दातव्यो मोदकः किण्वसंज्ञितः ॥
ग्रहणीदीपको ह्येष स्थूलानां कर्षणो हितः ॥ ८२ ॥
देयस्तैलेन संयुक्तो मोदकोऽक्षिकसंयुतः ॥
प्रदेयः सारदानां च सूक्ष्मवातार्दितास्तु ये ॥ ८३ ॥
करीषाणां प्रयोगं तु शृणु कीर्तयतो मम ॥
गवां कटुक(*मूत्री(क)मुष्णवीर्यमजाशकृत् ॥ ८४ ॥
ग्रहणीं दीपयत्याशु श्लेष्मकृमिविनाशनम् ॥
लवणेन समायुक्तं वातप्रशमनं हितम् ॥ ८५ ॥
ये च क्षीणबला नागा ये चैव दुर्बलाग्नयः ॥
त्वग्दोषैरभिभूताश्च पाण्डुरोगार्दिताश्च ये ॥ ८६ ॥

---

* धनुराकारमध्यस्थः पाठो नास्ति खपुस्तके ।

---

१ क. °काभिः शृतं । २ क. °भग्नेष्वध्व° । ३ क. चाङ्गे रुजा । ४ क. । ५ ख. कर्षणे । ६ ख. °तास्त्रये । ७ क. °ग्दोहैर° ।

विषोपयुक्तदेहाश्च हृद्रोगा गुल्मिनश्च ये ॥
एवंप्रकारा ये चान्ये तेषां पेय्यवरं स्मृतम् ॥ ८७ ॥
अजाकरीषस्यैवैते गुणाः सम्यक्प्रकीर्तिताः ॥
वाजिनामपि वक्ष्यामि करीषस्य गुणानिमान् ॥ ८८ ॥
कटुकं चोष्णवीर्यं च रूक्षमुष्णाम्लपाचिकम् ॥
वातानुलोमनं चैव तथा पित्तप्रकोपनम् ॥ ८९ ॥
क्षारतुल्यतरं ज्ञेयं लवणोदकशोधनम् ॥
गुणान्कीर्तयतश्चापि मूत्राणामपि मे शृणु ॥ ९० ॥
एतेषामेव मूत्राणि सर्वाण्येव च बुद्धिमान् ॥
उष्णवीर्याणि जानीयात्कटुकानि विशेषतः ॥ ९१ ॥
निरूहेषु प्रशंसन्ति कृमिकोष्ठे च दन्तिनाम् ॥
त्वग्दोषेषु प्रशस्यापि पानोष्वेतेषु (?) भूपते ॥ ९२ ॥
आस्फोता वैजयन्ती च स्फूर्जको निम्ब एव च ॥
अङ्कोल्लसहिता ह्येते भङ्गा वै साटरूषकाः ॥ ९३ ॥
आसवेषु प्रशस्यन्ते शृणु चान्येऽपि ये हिताः ॥
कुटजो मधुशिग्रुश्च पूतिका दीर्घवृन्तका ॥ ९४ ॥
सप्तपर्णश्च निम्बश्च षडेते प्रतिकीर्तिताः ॥
यथालाभं यथासात्म्यं यथाकालं च बुद्धिमान् ॥ ९५ ॥
एषामन्यतमं योगमासवेष्वथ दापयेत् ॥
त्वग्दोषशमना ह्येते कृमिकोष्ठप्रणाशनाः ॥ ९६ ॥
अत्रैव हि प्रशंसन्ति ये च— स्युर्बलाग्नयः ॥
सरक्तानां तु दातव्याः स्निग्धानां चैव दन्तिनाम् ॥ ९७ ॥
रूक्षाणां न प्रदातव्या ये च पित्तविकारिणः ॥
त्रिंशत्पलस्तु (प्रथमो मध्यमः पञ्चविंशकः ॥ ९८ ॥
जघन्यो विंशकश्चैव कवलस्तु सदा हितः ॥
ग्रहणीदीपना ह्येते बलवर्णप्रसादनाः ॥ ९९ ॥
सिद्धानौषधयोगांश्च प्रवक्ष्याम्यत उत्तरम् ॥ १०० ॥
स्वयंगुप्ता गुडूची च मुद्गपर्णी हरेणुकम् ॥
विदारी माषपर्णी च काकोलीद्वयमेव च ॥ १०१ ॥

---

† धनुराकारमध्यस्थो भ्रष्टः पाठः कपुस्तके ।

---

१ क. पुष्पतरं । २ क. त्रिंशतश्चैव ।

शाल्मली पारिभद्रं च वैजयन्ती करञ्जिका ॥
अश्वगन्धासमायुक्तान्कवलान्संप्रदापयेत् ॥ १०२ ॥
ग्रहणीदीपनाञ्श्रेष्ठांश्छवीवर्णप्रसादनान् ॥
एतान्संभृत्य संभारान्दीपयेत्क्षीणधातुषु ॥ १०३ ॥
एरण्डा वैजयन्ती च आढकीमूलमेव च ॥
श्रीपर्णी दधिपर्णी च त्वचमेषामुपाहरेत् ॥ १०४ ॥
अश्वगन्धासमायुक्तान्कवलान्संप्रदापयेत् ॥
ग्रहणी दीप्यते चास्य यवसं चाभिनन्दति ॥ १०५ ॥
श्रीपर्णीदधिपर्णीनां त्वचो मूलं नलस्य च ॥
आढक्यास्त्वेव मूलानि दद्याच्चैव करञ्जकम् ॥ १०६ ॥
एतेन वर्धते मांसं सौमनस्योप(स्यं च) जायते ॥
द्वे कण्टकारिके दद्यान्मूलं मधु च शिग्रुजम् ॥ १०७ ॥
दीप्यते ग्रहणी यस्य यवसं चाभिनन्दति ॥
गण्डीरं कन्दकं चैव शिग्रुरपवनाजिका ॥ १०८ ॥
पिप्पलीशृङ्गवेराभ्यां नलिकानालिका पृथक् ॥
घटी विडाख्यलवणं नलिकानालिका भवेत् ॥ १०९ ॥
एतान्संभृत्य) संभारान्क्षोदयित्वा लुदूखले ॥
मर्दितान्गोमयेनास्य कवलान्दापयेद्बुधः ॥ ११० ॥
क्रमिकोष्ठी विशुध्येत्तु मृत्तिकां च न खादति ॥
द्वे कण्टकारिके दद्यात्किणिह्या मूलमेव च ॥ १११ ॥
आवर्ता मधुशिग्रोश्च कवलो मांसवर्धनः ॥
येवन्ती मधुमाण्डूकी हरिपिण्डीतकानि च ॥ ११२ ॥
बिल्वं करीरगण्डीरकवलो मांसवर्धनः ॥
दाडिमं चमनीं भङ्गामुत्तमां गिरिकर्णिकाम् ॥ ११३ ॥
वेतसामृतवल्ल्यौ च दीपयेत्क्षीणधातुषु ॥
शिरीष—त्वचपलं च मोरटं सिन्दुवारितम् ॥ ११४ ॥
सदाभद्रामपामार्गं कवलांस्तु प्रदापयेत् ॥
कच्छुरा यूथिकामूलमुत्पलं नवमालिकाम् ॥ ११५ ॥

---

१ ख. °प्रदीप° । २ क. पाचन्तीं । ३ क. °ण्डीरीक° । ४ क. °मारिकम् ।

करञ्जश्चाग्निमन्थश्च कवलो ह्यग्निवर्धनः ॥
(*शल्लकी दाडिमं गुञ्जां बलां पाषाणभेदकम् ॥ ११६ ॥
शशबिन्दु शेलुं(?)····· ····· ····· ·····दीर्घवृन्तकम् ॥ ११७ ॥
····· ····· ····· ····· ·····कं चैव कवलो मांसवर्धनः ॥ )
अरलुत्वचमाहृत्य पूतिकं बृहतीं तथा ॥ ११८ ॥
अमृतां च पयस्यां च मदक्षीणाय दापयेत् ॥
पूतीकत्वगरलुत्वक्कृमीन्निघ्नन्ति दन्तिनः ॥ ११९ ॥
पयस्या च गुडूची च प्रदेया क्षीणधातुके ॥
कदम्बमेषशृङ्गीणां पुंनागं त्वचमेव च ॥ १२० ॥
भागानेतान्समान्कृत्वा निशि मूत्रेण वासयेत् ॥
पुरीषं गोश्च नागस्य कवलान्संप्रदापयेत् ॥ १२१ ॥
इत्येते कीर्तिता राजन्कवलाः क्षीणधातुषु ॥
चूर्णारिष्टं प्रवक्ष्यामि यथावदनुपूर्वशः ॥ १२२ ॥
शृङ्गवेरं विडं बिल्वं पिप्पली मधुशिग्रु च ॥
एतेषामेव चूर्णानां प्रस्थः प्रस्थः समो भवेत् ॥ १२३ ॥
समुद्रलवणप्रस्थो गोमयप्रस्थयोजितः ॥
† ····· ····· ····· ····· ····· ····· ····· ····· ····· ॥ १२४ ॥
१····· ····· ····· ····· ····· ·····सद्यो नागो निरूहति ॥
दधित्थनक्तमालानां····· ·····द्योरिष्टकश्च कान् (?) ॥ १२५ ॥
भिल्लोट····· ·····मेषीणां····· ·····विलाडोदरकस्य च ॥
अर्जुनस्य ( च ) निचुलस्य ( च )····· ·····वञ्जुलस्य ( च ) ॥
त्वचो मूलं च पत्रं च शिग्रोश्चोदुम्बरस्य च ॥ १२६ ॥
जपासर्जाम्रकर्पासीतुवरी-च(श्च) समाहरेत् ॥
एष संवर्तनो वर्गो ह्यतीसारातिवर्तकः ॥ १२७ ॥
विरूक्षणीयान्कवलानतिस्निग्धाय दापयेत् ॥
मूलं शिग्रोस्त्वचं ज····· ·····पाटल्या स्तथा ॥ १२८ ॥

---

* धनुराका⁀मध्यस्थः पाठो नास्ति कपुस्तके । † खपुस्तके 'इतः पङ्क्तित्रयमितं त्यक्तमस्ति' इति लिखितमुपलभ्यते ॥

---

१ क. स तस्मात्सम्यक्चैव स०। ख. सत·····म्यका चैव स०। २ ख. ०डोक०। ३ क. पाटल्यास्तथा तथा ।

विल्वाम्रमेषशृङ्गीणां त्वचस्तथाऽर्जुनस्य च ॥
विरूक्षयेद्गजं क्षिप्रं न च दोषमवाप्नुयात् ॥ १२९ ॥
पालाशनक्तमालानां त्वचमिङ्गुदवृक्षयोः ॥
(*त्वच)मर्जुनजम्ब्वोश्च विदुलारिष्टमेव च ॥ १३० ॥
कुटजत्वग्विडङ्गानि क्षोदयित्वा ह्युदूखले ॥
कवलो दीपनीयः स्यात्प्रसादयति तं छविम् ॥ १३१ ॥
महौषधं वातशूले त्वञ्जनं दन्तिनां हितम् ॥
पूयः प्रदेयः श्रोत्रेषु........................ ॥ १३२ ॥
वाताध्मातस्य नागस्य बन्धाय कवलो हितः ॥
अङ्गामु(?)..........कं च तर्कारी क्षीरिणी तथा ॥ १३३ ॥
दद्याद्वातहरं त्वेतच्छोभाञ्जनकमेव च ॥
वाताध्माते कुलिङ्गाक्षीं वारणस्य महीपते ॥ १३४ ॥
उरुबूकोऽथ तर्कारी काकोली क्षीरमेव च ॥
भिल्लोटश्च प्रदातव्यो वाताध्मातस्य दन्तिनः ॥ १३५ ॥
अथ क्षारं प्रवक्ष्यामि पानकायाग्निदीपनम् ॥
कुम्भीकस्याऽऽढकं दद्यात्पलानां तु स्नुही(हीं) तथा ॥ १३६ ॥
विल्वार्कनक्तमालानां त्वचं पत्राणि पेषयेत् ॥
अर्कस्य दाहयेन्नालं कौपे तोये विनिस्नुतम् ॥ १३७ ॥
द्रोणं द्रोणे प्रदातव्यं त्रिपक्षस्य नराधिपम् ॥
चूतवृक्षाम्रकुम्भानां त्वचः संयोजिताः समाः ॥ १३८ ॥
फणिज्जकस्य मूलानि तथैवार्ककरञ्जयोः ॥
श्वेचरेतैश्च(?)..........क्षारे कूपोदके कृतः ॥ १३९ ॥
पूर्वमुक्तेन विधिना क्षारमेवं प्रदापयेत् ॥
कुम्भीकपानसंस्कारः सुमनाभङ्ग एव च ॥ २४० ॥
इत्येते पानयोगाः स्युर्व्याख्याता द्विपदां वर ॥
चूर्णारिष्टानि वक्ष्यामि गजानामग्निदीपनात् ॥ १४१ ॥

---

* खपुस्तके नोपलभ्यते ॥

---

१ क. °श्च विदु° । २ क. °तः ॥ तथा अ° । ३ क. वाताध्मातो । ४ क. °र । ५ क. कौपतो° । ६ क. शूचेद्यरेतैश्च क्षारः कूपोदके समीक्ष्° । ७ क. °ना र° । ८ क. °पनम् ॥

द्वे बृहत्यौ करञ्जौ च पारिभद्रकमेव च ॥
हरिद्रे द्वे विडङ्गानि दद्यादिन्द्रयवानपि ॥ १४२ ॥
शतावरीं च शोणं च त्वचो निचुलबिल्वयोः ॥
गोमूत्रे वासयेद्रात्रौ दिवा सूर्ये च शोषयेत् ॥ १४३ ॥
त्रिरात्रमेवं कृत्वा तु सुसूक्ष्मं क्षोदयेत्ततः ॥
त्रिफलां हिङ्गुसंयुक्तां पञ्चभिर्लवणैर्युताम् ॥ १४४ ॥
लवणस्य च योगेन चूर्णारिष्टस्य षट्पलम् ॥
द्वे बृहत्यौ करञ्जौ द्वौ अश्वगन्धा सुवर्चला ॥ १४५ ॥
उभे हरिद्रे पाठी च करीषे गजवाजिनोः ॥
एतत्सर्वं समाहृत्य समं कृत्वा ह्युदूखले ॥ १४६ ॥
नित्यं लवणयोगेन षट्पलं वाऽस्य दापयेत् ॥
द्वौ कालौ दन्तिनां दद्याच्चूर्णयोगमतन्द्रितः ॥ १४७ ॥
मनःप्रसादं जनयेद्वर्णं च नृपदन्तिनाम् ॥
निम्बस्याथ करञ्जस्य त्वचो वरुणकस्य च ॥ १४८ ॥
मेषशृङ्ग्याश्च पाटल्या विदुलस्य च संहरेत् ॥
क्रिया उग्रास्ततः सर्वाः समभागाः प्रकल्पयेत् ॥ १४९ ॥
उत्तमं त्वै(त्वे)व ताः क्षुण्णा गोमूत्रे वासयेत्त्र्यहम् ॥
मन्दाग्निशमनार्थं च द्विपस्य तु प्रदापयेत् ॥ १५० ॥
एरण्डपूतिकारिष्टैः समांशैः कवलं भिषक् ॥
निवृत्तस्य च पूर्वाह्ले दापयेद्रोगनाशनम् ॥ १५१ ॥
सुवर्चलां गुडूचीं च अपामार्ग..................कम् ॥
वैजयन्तीं च भूनिम्बं तथा वै साटरूषकम् ॥ १५२ ॥
एतान्भुक्त्वा गजः कल्पो रोगात्क्षिप्रं प्रमुच्यते ॥
बलं मांसं च वृद्धिं च प्राप्नोति सुमनाः सदा ॥ १५३ ॥
इत्येवं तु महीपाल विधानं क्षीणधातुषु ॥
य एवं योजयेद्वैद्यः स शोभां जनयिष्यति* ॥ १५४ ॥
(†पालकाप्योऽब्रवी)दित्थं राज्ञाऽङ्गेन प्रचोदितः ॥
। श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने षष्टितमः क्षयाध्यायः ॥ ६० ॥

*पुस्तके तु, इतः परं '~' त्रुटिचिह्नं दृश्यते। † धनुश्चिह्नान्तर्गतस्तु पाठो भ्रष्टः खपुस्तकात् ॥

१ क. °जिनौ ॥ ए° । २ क. °र्गद्विभाकरम् । ३ ख. दानं राज्ञा° ।

अथैकषष्टितमोऽध्यायः ।

---

अङ्गो हि राजा चम्पायामृषिं धर्मविदां वरम् ॥
विनयेनोपसंगम्य पालकाप्यं स्म पृच्छति ॥ १ ॥
कथं मदः संभवति हेतवोऽस्य कति स्मृताः ॥
कथं च सुरभि दानं कंकटाहं संपरिवर्तते(?) ॥ २ ॥
एवमुक्तोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
वातात्प्रपद्यते कश्चित्कश्चित्पित्तात्प्रपद्यते ॥ ३ ॥
श्लेष्मणा भिद्यते चान्यः शोणितादपि चापरः ॥
संनिपातात्तथा चान्यो मदः क्षरति वारणे ॥ ४ ॥
एवं पञ्चप्रकार[1]श्च मदो वै संप्रकीर्तितः ।
शौर्यात्प्रभिद्यते कश्चित्तथैवाभिजनेन च ॥
हर्षादन्यः प्रभिद्येत परिणामात्तथाऽपरः ।
नैसर्गिकस्तथा चान्यः संपातादपि चापरः ॥
पुष्ट्या प्रभिद्यते चापि व्याधिदोषकृतोऽपरः ।
उपधानात्तथा चान्यः प्रभिद्येत मतङ्गजः ॥
चतुर्दशैते नागानां कीर्तिता मदहेतवः ।
समासान्नरशार्दूल शृणु विस्तरतो हि मे ॥
तत्र तावत्प्रवक्ष्यामि लक्षणं वातिके मदे ।
परिधावति चात्यर्थं जायते चानवस्थितः ॥
न चाभिलषति ग्रासं शय्याद्वेषश्च जायते ।
(*जृम्भते बहुशश्चापि वेपते स्तनयत्यपि ॥
प्रतिनम्याभिनमति विनमत्युन्नमत्यपि ।
प्रभिद्यते त्रिधा चैवं तथाऽङ्कस्यापि जायते ॥ )
यवोदकनिकाशं च कषायं कुरुते मदम् ।
चन्दनोशीरपद्मानां सुगन्ध(†रसानि च) ।
कटुकानि कषायाणि तिक्तानि च निषेवते ॥
प्रावृट्काले च नितरां मदस्तस्य प्रवर्तते ।

---

* धनुराकारमध्यस्थो भ्रष्टः पाठः कपुस्तकात् । † धनुराकारमध्यस्थो नास्ति पाठः खपुस्तके ।

---

[1] क. °काराश्च ।

इति वातात्मकं प्रोक्तं गजानां मदलक्षणम् ॥
पैत्तिकस्यापि नृपते विज्ञानमुपदेक्ष्यते ।
तेजस्वी कोपनश्चैव संतापी च भवेद्द्विपः ॥
प्रायेण शीतलां छायां सलिलं चाभिकाङ्क्षति ।
विजृम्भते नमति च तथा प्रतिनमत्यपि ॥
कपोलौ चाण्डकोशश्च पच्यन्ते च नराधिप ।
पीताभमथ रक्तं वा कटाद्दानं प्रसिच्यते ॥
सुगन्धं चूतपुष्पाणामेलामुस्तसुगन्धिकाम् ।
शारदे[1] पैत्तिकः काले मदः क्षरति वारणे ॥
कटुकाम्लान्सलवणान्रसानति[2] निषेवते ।
इत्येतल्लक्षणं प्रोक्तं पित्तात्मकुपिते मदे ॥
प्रकृत्या श्लैष्मिकं राजन्मदं वक्ष्यामि तत्त्वतः ।
बलवाञ्शीलसंपन्नस्तेजस्वी[3] धेनुकामतः ॥
स्वप्नशीलश्च भवति मन्दक्रमविचेष्टितः ।
प्रसेनं कुरुते कामं गम्भीरं वेदयत्यपि ॥
पिष्टोदकप्रतीकाशं(शः) पाण्डुरः क्षरते मदः ।
सगन्धमालापुष्पाणां सिन्दुवारतरोरपि ॥
तथा मुक्तकपुंनागबकुलानां च गन्धतः ।
शीतलं सुरभि हृद्यं हेमन्ते संश्रयेन्मदम् ॥
मधुराम्लानि सर्वाणि लवणानि च सेवयेत् ।
त्वग्दोषाश्चापि जायन्ते मेहत्यपि च सौद्रयम् (?) ॥
इत्येवं श्लैष्मिकं राजल्लँक्षणं समुदाहृतम् ।
शोणितात्संप्रवृद्धे तु मदे वक्ष्यामि लक्षणम् ॥
मध्याह्ने संश्र(?)मासृत्य(?)रक्तनि ···· लोचनम् ।
न चैवोद्विजते हस्ती हस्तिन्यै नापि कुप्यति ॥
विमुक्तैरिति[4] सर्वाङ्गैर्गजः संधिषु कृच्छ्रगः ।
शीतलानि च सर्वाणि च्छायां चैवाभिनन्दति ॥
शय्यायां सुखमाप्नोति (*न चैव कवलं भजेत् )।
पाण्डुता सर्वगात्राणां स्निग्धमाहारमिच्छति ॥

* धनुराकारमध्यस्थो नास्ति पाठः खपुस्तके ।

१ ख. शरदि । २ ख.°ति न सेव°। ३ ख.°ञ्शीतसंपन्नास्ते°। ४ क.°रिव स°।

पुरीषं वमथुर्धानं रक्तमेवोपजायते ।
कटाभ्यां भिद्यते पूर्वं निदाघे चापि माद्यति ॥
पैत्तिकस्य तु लिङ्गानि सर्वाणि कुरुते गजः ।
इत्येतल्लक्षणं प्रोक्तं मदे वै शोणितात्मके ॥
अत ऊर्ध्वं प्रवक्ष्यामि संनिपातात्मकं नृप ।
पूर्वोक्तानां मदानां तु लक्षणं सांनिपातिकम् ॥
क्षुत्पिपासोष्णशीतानां सहिष्णुर्भवति द्विपः ।
दुःस्थानमथ दुःशय्यां सततं सहते गजः ॥
प्रतिनम्याभिनमति विनमत्युन्नमत्यपि ।
नाभिनन्दति चाऽऽहार(†मिष्टं च) स्वादुमेव च ॥
व्यामिश्रमेतं जानीयान्मिश्रगन्धं मदं नृप ।
इत्येतत्संनिपातेन प्रभिन्नस्य तु लक्षणम् ॥
मत्तेन जनितायां तु यस्तु मत्तेन जायते ।
पौर्णमास्यां प्रपद्येत मन्दमन्दगुणैर्युतः ॥
जानीयात्तं तु राजेन्द्र मदं ह्यभिजनाभिधम् ॥
बहुपुष्पसमृद्धानि कोकिलाभिरुतानि च ।
मत्तबर्हिणपुष्टानि वनानि समवेक्ष्य च ॥
हंससारसगीतानि चक्रवाकरुतानि च ।
सतामरसकह्लारसुगन्धिपवनानि च ॥
मनोहराणि रम्याणि पल्लवानि सरांसि च ।
पद्मोत्पलविचित्राणि भ्रमरैः कूजितानि च ॥
क्षोभयित्वा च पीत्वा च करेणुगणमध्यगः ।
एष नागो महाराज हर्षादेव प्रभिद्यते ॥
क्षीणधातुशरीरश्च व्रयोतीतो मतङ्गजः ।
हीनवीर्यो विमांसोऽपि सर्वाशाशिथिलीकृतः ॥
एतैस्तु लक्षणैर्विद्यान्मदं तं पारिणामिकम् ।
दुःस्थानमथ दुःशय्यां लब्ध्वा लब्ध्वा च मोहनम् ॥
निर्भर्त्सितं वधं बन्धं.... .... ....नितंजनवम् ।
यदा मदं स्रवति तु तं.... ....विद्यान्निसर्गजम् ॥

---

† खपुस्तके नास्ति ।

---

१ क. ख. °पासाच्च शी° । २ क. °णघुष्टा° ।

उष्णेत्पथो(?)त्वगमनाद्गुरुभारेण वा पुनः ।
कर्मणामतिप्रयोगाद्वा हरतो वा बृहद्द्रुमान् ॥
एतैर्निदानैर्नागस्य शरीरमुपतप्यते ।
ततः प्रसिच्यते दानं दुर्गन्धिवमर्मु(र्थं) नृप ॥
तं तु संतापजं विद्यान्मदं वारणविक्रमम् ।
विविधैस्तु शिरोरोगैर्मूत्ररोगेण वा यदि ॥
शुद्धपाकलहेतुत्वाद्व्याधिना वारणे मदः ।
विविधाभिर्विधाभिर्यः पुष्टो माद्यति वारणः ॥
स मदः पैत्तिको राजन्निर्दिष्टः परिपाटितः ।
प्राणिता विधया नागा न वश्या बलशालिनः ॥
मदस्य जनने सम्यग्भेषजैः संप्रयोजितैः ।
उपधानात्प्रभिद्यन्ते वारणाः पृथिवीपते ॥
शौर्यजोऽपि ....................................... ।
रूपं प्रार्थयमानस्य युध्यमानस्य वा युधि ॥
पश्यन्तस्तस्य सैन्यस्य विजयं दिव्यचक्षुषः ।
मदं गृह्णाति मातङ्गः स हेतुर्विजये क्षणम् ॥
इत्येते बहुधा प्रोक्ता गजानां मदहेतवः ।
कार्त्स्न्येन तु महाराज यथोक्तं ब्रह्मवादिभिः ॥
अतः परं प्रवक्ष्यामि चतुर्णामपि भेषजम् ।
वातप्रभिन्नं विज्ञाय चिकित्सां संप्रयोजयेत् ॥
पञ्चभिर्लवणैः सार्धं पाययेत्तं सुखोदकम् ।
तीक्ष्णांश्च कवलान्दद्याद्वारणाय महीपते ॥
वातिकात्स मदाद्राजन्मुच्यते वै न संशयः ।
दध्यम्लमथ वातानैः (?) क्रमाच्चूर्णं च पाययेत् ॥
एतेनापि च योगेन मुच्यते वातिकान्मदात् ।
शुद्धकोष्ठाय दातव्यं जलपानं महीपते ॥
यवसानि विचित्राणि मृदूनि हरितानि च ।
फाणितेनोपदिग्धानि (?) कवलान्संप्रदापयेत् ॥
इति वातप्रभिन्नस्य चिकित्सा संप्रकीर्तिता ।
अथ पित्तप्रभिन्नस्य चिकित्सा संप्रवक्ष्यते ॥

---

१ क. °प्रचक्षते ।

प्रत्यूषकाले मातङ्गं ह्रदे निर्वापयेद्भिषक् ।
शालायां मण्डलिप्रायां शीतस्थानासितस्य तु ॥
स्रावयेद्वारिपूर्णांश्च तस्योपरि नवान्घटान् ।
बिशं मृणालान्शालूकमुत्पलं नलिनान्यपि ॥
इक्षुं चेक्षुरसं चैव शृङ्गाटककसेरुकम् ।
दापयेत्कवलांस्तस्मै शर्कराचूर्णसंयुतान् ॥
परूषकाणि मृद्वीका शर्कराफाणितं मधु ।
सारिवा मधुकं चैव समांशं चोत्तरोदकम् ॥
ततः·········ये प्रति ये(?) शीतं कल्पश्रुत्यापयेत्(?) ।
प्रभेदे पैत्तिके तस्य यवसानि प्रदापयेत् ॥
तृणाख्यं पर्पटान्दद्याच्छर्कराघृतसंयुतम् ।
षष्टिकानां पुराणानां शालीनामोदनं मृदु ॥
सर्पिषा भोजयेन्नागमेवं भेदाद्विमुच्यते ।
अम्लमुष्णं च तीक्ष्णं च लवणं च न दापयेत् ॥
पानानि सर्पिषा श्रेष्ठान्यभ्यङ्गं चैव सर्पिषा ।
नश्यत्यनेन योगेन प्रभेदः पैत्तिको नृप ॥
इति पित्तात्प्रभिन्नस्य चिकित्सा संप्रकीर्तिता ।
(*अथ श्लेष्मप्रभिन्नस्य चिकित्सां संप्रयोजयेत् ॥ )
कटुकेन तु तैलेन सर्वसेको विधीयते ।
तीक्ष्णान्कटुकषायान्कवलानस्य दापयेत् ।
अजामूत्रेण संयोज्य श्लैष्मिकस्तेन शाम्यति ॥
द्राक्षाहरिद्रामञ्जिष्ठाः सूक्ष्मचूर्णांश्च कारयेत् ।
अजामूत्रेण संयोज्य पिण्डमस्मै प्रदापयेत् ॥
अनेन क्रमयोगेन(ण) प्रभेदात्परिमुच्यते ।
आरग्वधं सोमवल्कं पटोलं काकतिन्दुकम् ॥
पयोऽपि मधुसंयुक्तं पिण्डः श्लेष्महरः स्मृतः ।
यवौदनं च तैलेन मात्रया भोजयेद्गजम् ॥

---

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ॥

---

१ क. °लायामञ्जलिप्रायां । २ क. ततः प्रति ये शीतं कल्पयेत् । ३ ख. °टाद्द्या° ।

पाययेन्मुद्गयूषं च योपालः(?)सह संस्कृताम् ।
काशं कुशं पोटगलं यवसार्थे प्रदापयेत् ॥
इति श्लेष्मप्रभिन्नस्य चिकित्सा संप्रकीर्तिता ।
प्रभेदे रक्तजे राजन्प्रतीकारः प्रवक्ष्यते ॥
यदुक्तं पैत्तिके स्रावे तत्सर्वं संप्रयोजयेत् ।
श्लैष्मिकस्य तु योगं हि कल्ये नागस्य कारयेत् ॥
पैत्तिकस्य तु यत्कर्म मध्याह्ने तत्समाहरेत् ।
वातिकस्य तु यत्प्रोक्तं सापाह्ने तत्प्रयोजयेत् ॥
लवणानि च सर्वाणि पिप्पल्यो मरिचानि च ।
शृङ्गवेरं च संहृत्य सूक्ष्मचूर्णानि कारयेत् ॥
संनिपातसमुत्थाने श्रेष्ठमेतच्चिकित्सितम् ।
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने प्रभिन्नो नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## अथ द्विषष्टितमोऽध्यायः ।

---

'अथातः कर्णवालजानां कृमीणां निदानं चिकित्सितं च व्याख्यास्यामः' इति ह स्माऽऽह भगवान्पालकाप्यः—

इह खलु भो हस्तिनां केशाग्रसूक्ष्माः कण्टकेमुखा ...... ण्णान्पूर्वाः(?) त्वङ्मांसशोणितं भक्षयन्ति । श्यामा रूक्षाः श्वेता रक्ता राजीव(म)न्तश्चित्राः शबलाः कर्णजा वालजाश्च कृमयः संभवन्ति ।

तेषां कृमिभिरुपसृष्टानां लक्षणम्—परिशीर्यन्ते कर्णाग्राणि । *तैः परिमूलाग्रेषु चला भक्षयन्ति । परिशीर्यन्ते वालाः । तत्र साध्या ये परिस्रवन्ति[†] । शेषास्त्वसाध्याः ॥

अथैषां चिकित्सितमुपदेक्ष्यामः—अङ्गराजोत्तम ....[¶]कर्णीविडङ्गकिण्ववचा[§]भार्गीमार्द्रं कुष्ठनिम्बसुरसकाकादनीकाकतिन्दुकीकाकमाचीकरवीरसर्षपवर्णाजि-

---

* 'ते' इति स्यात् । † अत्र '⌣' इति त्रुटिचिह्नं खपुस्तके । ¶ 'अङ्गराजोत्तमक⌣र्णी' इत्थं त्रुटिचिह्नं खपुस्तके । § खपुस्तके किण्व ⌣ वच इत्थं त्रुटिचिह्नं दृश्यते ।

---

१ क. ख. श्रावे । २ क. °कमुखाष्णान्पू° । ३ क. ख. वल्ला । ४ क. ख. भक्ष्यन्ति ।

कासैन्धवलवणयवक्षारतिन्तिडीकशिरीषकर्णिकारबर्बरफणिज्झकशङ्खिनीदारुह-रिद्राश्चैकतः कृत्वा समभागैरुपक्रमेत । एतेषां कषायैः प्रक्षाल्य कल्कैः प्रलेपनं कुर्यात् । चूर्णैस्तु प्रतिसारयेत् । एतेषामेव विकेशिकावर्ती च यथायोगं विदध्यात् । ततश्चाभ्यन्तरं रुधिरं विसर्पवत्परिस्रावयेत् । (* ग्रन्थिं चेत्कुरुते कृमिः पशूनामिव कुकुटकं सस्त्रे(शस्त्रे)ण विद्ध्वा निष्कृष्य कृमिघ्नैश्च कषायैः प्रक्षाल्य प्रलेपयेत् । ) † कृमिकोष्ठप्रयुक्तं सकवलान्दद्यात् ॥

तत्र श्लोकाः—

कषायैः कटुकैस्तिक्तैर्लवणैः पानभोजनैः ।
कर्णजान्वालजांश्चैव चिकित्सेत्तु कृमीन्भिषक् ॥
प्रायेण श्लेष्मप्रभवा गजानां ज्ञेयास्तु रोमक्रिमयः शरीरे ।
कार्यः प्रयत्नः प्रशमार्थमेषामुपेक्षिताः प्राणहरा भवन्ति ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने
कर्णवालकृमिर्नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

## अथ त्रिषष्टितमोऽध्यायः ।

---

अङ्गेन पृष्टो भगवान्कर्णरोगमुवाच ह ।
अस्य रोगस्य विज्ञानं चिकित्सां च यथाक्रमात् ।
ने सूतः सहसाऽऽदत्ते तथा शीर्षविरेचने ॥
कर्णौ वा मृद्यतेऽत्यर्थं श्रोतसोः कीटवेशनात् ॥
जलं वा(त्र)प्रविशति हन्यते चातिमात्रतः ॥
अभिघातेन शिरसः कर्णरोगः प्रवर्तते ॥
ऊर्ध्वं प्रकुपितो वायुः श्रोतसि प्रतिपद्यते ॥
श्लेष्मशोणितमादाय कर्णौ नागस्य पीडयेत् ॥
शरैरागन्तुजैर्दोषैर्यदा कर्णोऽस्य दुष्यति ॥
तेनास्य तुमुलो व्याधिः कर्णजः संप्रवर्तते ॥
तस्येमानि तु रूपाणि वारणस्य निबोध मे ॥
संजिघ्रति प्रवमति कर्णस्रोतःस्वभीक्ष्णशः ॥

---

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके । † 'कृमिकोष्ठोपयुक्तान्' इति स्यात् ।

---

१ क. ख. °मक्रम° । २ क. ख. नस्ततः । ३ क. वामृते° । ४ क. अतिघा° ।

अङ्गुल्या वाऽल्पकाष्ठेन कवलेन च घर्षति ॥
पूयं स्रवति कर्णाभ्यां दुर्गन्धिः फेनिलं भृशम् ॥
श्लेष्ममारुतसंसर्गात्कृमयः संभवन्ति हि ॥
रुधिरं कृमिसंसृष्टं दृश्यते यस्य हस्तिनः ॥
कर्णरोगः स विज्ञेयः कफशोणितवातजः ॥
इत्येवं कर्णयोर्व्याधीन्दृष्ट्वा भेषज्यमाचरेत् ॥
शृङ्गवेरं च भार्गीं च विडङ्गानि च पेषयेत् ॥
देवदारु च कुष्ठं च सूक्ष्मं पिष्ट्वा विचक्षणः ।
रसेनानेन नागस्य कर्णयोश्च निषेचयेत् ॥
ततोऽस्य वेदनाशान्तिरेतन्न स्यान्महीपते ।
काली मधुकनिर्गुण्डी हरिद्रे देवदारु च ॥
सर्वमेतद्विडङ्गैस्तु कुष्ठेन च समं भवेत् ।
एतत्संभारमग्नौ च सूक्ष्मकल्कं प्रदापयेत् ॥
ततो रसं परिस्राव्य क्षौद्रेण सह संयुतम् ।
ततोऽस्य कर्णयोर्दद्यात्कर्णरोगात्प्रमुच्यते ॥
मधुशिग्रुं च बिल्वं च सरलं देवदारु च ॥
अङ्कोठफलसारं च मांसीं कुष्ठमर्वल्गुजम् ॥
मयूरपित्तं मज्जां च बिल्वानि वर्तुलानि च ॥
विडङ्गतुम्बीबीजं च तथा निम्बफलानि च ॥
देवदारु तथोशीरं पिष्ट्वा तानि समानि च ॥
सर्वमेतत्समालोड्य तैलं धीरो विपाचयेत् ॥
ततोऽस्य सेचयेत्कर्णावेतेन लभते सुखम् ॥
गण्डीरमूलं समधुयष्टिकं च सकुङ्कुमम् ॥
क्षौद्रेण सह संयोज्य कर्णयोः पूरणं हितम् ॥
प्रपौण्डरीकं मञ्जिष्ठां कुष्ठं मधुकमेव च ॥
उशीरं पद्मकं चैव देवदारु च पेषयेत् ॥
कल्केनैतेन संयुक्तं तैलं धीरो विपाचयेत् ॥
ततोऽस्य कर्णयोर्दद्यान्नस्यकर्म च कारयेत् ॥
शैलेयं सर्जकरसं देवदारुं तथाऽगुरुम् ॥

---

१ क. °र्णशो व्याधी° । २ ख. पीपयेत् । ३ क. काष्ठं । ४ क. ख. °वल्गुज° । ५ क. °स्य कर्णयोः सेकस्तेन वै लभते सुखम् । ६ ख. पीपयेत् ।

घृतमण्डेन संयुक्तं धूपयेत ततः पिबेत् ॥
भार्गीमूलं च मधुकं षष्टिकान्नं कुटन्नटम् ॥
श्रुद्धाभ्रामलकैः सिद्धान्मधुसर्पिःसमन्वितम् ॥
पिप्पलीशृङ्गवेराभ्यां भुक्त्वा संपद्यते सुखी ॥
अङ्कोलचिरबिल्वाभ्यां रसो वैशेषिको भवेत् ॥
अवगाहविषेकं च वर्जयेच्च विशेषतः ॥
इत्येतत्कर्णरोगस्य सनिदानं चिकित्सितम् ॥
(*पृच्छते रोमपादाय पालकाप्येन कीर्तितम् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने कर्णरोगो नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

अथ चतुःषष्टितमोऽध्यायः ।

---

अभक्तच्छन्दिनो राजन्सनिदानं चिकित्सितम्) ॥
नागस्य संप्रवक्ष्यामि तन्मे निगदतः शृणु ॥
वातेन सहितः श्लेष्मा हृदये संप्रधावति ॥
आमाशयं †च मन्यन्ते पूरयित्वाऽवतिष्ठते ॥
कफेन बद्धहृदयः कुवलं पल्लवं तृणम् ॥
अरोचमानं कृच्छ्रेण किंचिदश्नाति वारणः ॥
तस्य तेनाभिभूतस्य चिकित्सा संप्रवक्ष्यते ॥
तस्याऽऽसवं प्रसन्नां वा मैरेयं चापि पाययेत् ॥
हिङ्गुना पञ्चलवणैर्युक्तं त्रिकटुकेन वा ॥
वचां हरिद्रे लशुनं पिप्पल्यौ मरिचानि च ॥
सपञ्चलवणास्तस्मै कवलान्संप्रदापयेत् ॥
तेजोवतीं त्रिकटुकं तथैव कटुरोहिणीम् ॥
मधुना सह संयोज्य कवलान्प्रतिभोजयेत् ॥
चित्रकं सर्षपं हिङ्गु त्रिफला बदराणि च ॥
हरिद्रे शिग्रुबीजं च करञ्जबीजमेव च ॥

---

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ॥ † 'धमन्यन्तं' इति स्यात् ।

---

१ क. धूमयेत । २ क. ख. °गाहाविसेकं । ३ क. °प्रचक्षते ।

पञ्चभिर्लवणैः सार्धं क्षोदयित्वा ह्युदूखले ॥
सक्तुभिः सह संयोज्य कवलान्प्रति भोजयेत् ॥
कटुका रोहिणी पाठा †सयवा(?)क्षारसैन्धवाः ॥
पिप्पल्यः कटुका मत्स्या मरिचान्याटरूषकम् ॥
सर्वाणि समभागानि क्षोदयित्वा उदूखले ॥
गोमयेन समायुक्तान्कवलांस्तस्य दापयेत् ॥
मुद्गयूषौदनं चास्मै दद्यात्त्रिकटुना युतम् ॥
यथा हि मथनादग्निः स्वल्पोऽरणिसमन्वितः ॥
पूर्वं गोमयचूर्णेन ततस्तृणेन वै नृप ॥
क्रमशस्तनुभिः काष्ठैः स्थूलैश्च तदनन्तरम् ॥
विवृद्धः स दहेद्दीप्तः काष्ठभारशतान्यपि ॥
एवं गजानां विधिवच्छनैरग्निरुदीरितः ॥
भुक्तं सर्वमशेषेण दहत्यग्निरिवेन्धनम् ॥
भक्तच्छन्दो भवत्येवमग्निर्दीप्तश्च जायते ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थानेऽभक्तच्छन्दो नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

अथ पञ्चषष्टितमोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ।
भक्तग्रासोपरुद्धस्य लक्षणं ब्रूहि तत्त्वतः ॥
रसं च शोणितं चैव मेदो मांसमथापि वा ।
सह घोनसनै(?)कस्मात्सर्वाण्येतानि खादयेत् ॥
विशेषयति दोषी च कथं मात्राणि खादति ।
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
अनादिमध्यनिधनः कायाग्निः परिमध्यते (?) ।
प्रसूलक्षणसंयुक्तो बीजसहितमातेन (?) ॥
नाभिमध्ये शरीरस्य विज्ञेयं सोममण्डलम् ।
सोममण्डलमध्यस्थं विद्यात्सूर्यस्य मण्डलम् ॥

---

† 'सयवक्षार' इति स्यात् ॥

---

१ क. °थाऽग्निमदना° । २ क. °यपूर्णेन ततस्तेन तृणे° ।

प्रदीपयेत्तु नागस्य तस्य मध्ये हुताशनः ।
इन्दुराकाशमास्थाय यथा दीपस्तथाऽम्भसः ॥
तिष्ठतिष्ठमितो(?)दीप्तांस्तथा बलिनमम्भसि ।
गजानां नाभिमध्ये तु यवमात्रोऽवतिष्ठते ॥
ह्रस्वकायेषु चान्येषु तिष्ठेत्त्रुटिप्रमाणतः ।
कृमिकीटपतङ्गेषु वल्लमात्रोऽवतिष्ठते ॥
सूर्यो दिवि यथा तिष्ठंस्तेजोयुक्तैर्गभस्तिभिः ।
विशोषयति सर्वाणि पल्वलानि सरांसि च ॥
तद्वद्गजानां संभुक्तं जठरो नाभिमाश्रितः ।
मेघुश्चै(?)क्षिप्रमादत्ते सूर्यकान्तो मणिर्यथा ॥
दन्तिनां भोजनं दत्तं नानाद्रव्यसमायुतम् ।
क्षिप्रं सम्यक्प्रदहति तेजोधातुसमायुतः ॥
जाठरो जलसंभूतस्तद्गतिस्तत्परायणः ।
दीप्तेश्च करणा(त्)कोष्ठे सलिलेन च पूरयेत् ॥
अग्निसोमात्मकं सर्वं जगत्स्थावरजङ्गमम् ।
अग्निसोमात्मको राजन्दन्तिनां च चतुर्विधः ॥
सूर्यात्मकानि यात्रीणि(?)यस्मात्सोमात्मकानि च ।
(?)संहत्यान्सनै तस्मात्साण्डाणि न खादति ॥
चिकित्सेद्यस्तु सीदन्तं विषमं चापि दन्तिनाम् ।
आयुर्वेदाभियोगेन स वै राज्ञां चिकित्सकः ॥
उक्तग्रासोपरुद्धस्य लक्षणं संप्रवक्ष्यते ।
वारणानां पुरा राजन्यथावदनुपूर्वशः ॥
मधुराभोजना नित्यमव्यायामास्तथैव च ।
मृत्तिकाभक्षणाद्वाऽपि जलदोषेण वा पुनः ॥
विदग्धभोजनाद्वाऽपि रात्रौ जागरणेन वा ।
जीर्णाजीर्णाशनाद्वाऽपि सततं पृथिवीपते ॥
हृदये श्लेष्मणा दिग्धे नाभिनन्दति भोजनम् ।
पित्तं च तनुतां याति ग्रहणी चास्य हीयते ॥

---

१ क. °दीपं तत्र ना° । २ क. संयुक्तं । ३ क. जील्मुजिल्मश° ।

उष्णालुर्वातशीलश्च दुर्मना गुरुमस्तकः ।
भक्तद्वेषं च तं रोगं विद्याच्छ्लेष्मोपसर्जनात् ॥
विज्ञानमेतद्व्याख्यातं चिकित्सितमतः शृणु ।
द्वे पञ्चमूले संहृत्य पिप्पलीमूलमेव च ॥
हस्तिपिप्पली(लीं) च चिरबिल्वैः सह विपाचयेत् ।
विपक्वमनुपूर्वेण सुखोष्णमनुपाययेत् ॥
एतत्पीत्वा तु राजेन्द्र ततः संपद्यते सुखी ।
पिप्पलीं शृङ्गवेरं च सूक्ष्मचूर्णानि कारयेत् ॥
हस्तिमूत्रेण संयोज्य तैलेन च नराधिप ।
सपञ्चलवणां शुण्ठीं पिप्पलीमूलसंयुताम् ॥
ग्रहणीदीपनं देयमेतत्पानमनेकपे ।
नागपिप्पलिमाहृत्य हस्तिमूत्रेण पेषयेत् ॥
एवं प्रतिनये दद्यात्केवलं युक्तितो भिषक् ।
दीप्यते ग्रहणी तेन यवसं वाऽभिनन्दति ॥
हृष्टपुष्टमनाश्चैव न भवत्येव वारणः ।
यवसान्युष्णवीर्याणि कफघ्नानि च दापयेत् ॥
अग्नेर्विवर्धमानस्य पानं भोजनमिष्यते ।
यथा हि मथनादग्निः स्वल्पोऽरणिसमुत्थितः ॥
पूर्वं गोमयचूर्णेन ततस्तृणेन वै नृप ।
क्रमशस्तनुभिः काष्ठैः स्थूलैश्च तदनन्तरम् ॥
विवृद्धः स दहेद्दीप्तः काष्ठभारशतान्यपि ।
एवं गजानां विधिवच्छनैरग्निरुदीरितः ॥
भुक्तं सर्वमशेषेण दहत्यग्निरिवेन्धनम् ।
इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने
भक्तग्रासोपरुद्धो नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

अथ षट्षष्टितमोऽध्यायः ।

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ।
द्रोणाक इति यः पूर्वं संग्रहे समुदाहृतः ॥

---

१ क. °ष्णानुर्वीनुशी° । २ क. °लीमरिचवि° । ३ क. °पाचये° । ४ ख. पीषयेत् । ५ क. ख. हिमवना° ।

तस्य व्याधेश्चिकित्सां च लक्षणं संप्रचक्ष्व मे ।
ततः प्रोवाच भगवान्पालकाप्यो महामुनिः ॥
वातात्पित्तात्कफाद्रक्तात्संनिपातात्तथैव च ।
द्रोणीकशोफो विज्ञेयो जठरे पञ्चधा नृप ॥
निदानानि पृथक्तस्य चिकित्सां च प्रचक्ष्यते ।
तत्राऽऽदौ वातिकस्तावच्छ्वयथुः संप्रवर्तते ॥
व्यायामाच्च व्यवायाच्च रूक्षादपि च भोजनात् ।
तथा बन्धाच्च विविधादतिशीतेन वा तथा ॥
शकृन्मूत्रोपरोधाच्च दुःस्थानाद्वा तथा पुनः ।
उदरे मारुतः शोफं जनयेत्तस्य हस्तिनः ॥
शोफाभिभूतश्च भृशं भ्रममाप्नोति वारणः ।
चञ्चलो मृदुभूतश्च चिरात्पाकं न गच्छति ॥
विविधं स्वभावाद्वातात्*.... .... ........ ।
श्वयथुः स्यात्स विषमस्त्वग्रतो ह्यनवस्थितः ॥
मालतीं सुरसां वंशं (*पाटलां) काटरूषकम् ।
अर्कं मधूकं तर्कारीं तिलपिष्टं च पाययेत् ॥
नाडीस्वेदो घृताक्तस्य.... .... .... .... .... .... ।
.... .... .... ....(†वसाया) नाडीस्वेदो विधीयते ॥
तण्डुलानतसीं किण्वं दध्यम्लेन विपाचयेत् ।
रात्रिपर्युषितं शीतं प्रदेहं तस्य कारयेत् ॥
साकपर्णी....स्वरां....वसां तैलं घृतं दधि ।
जलजानां च सत्त्वानां मेदो मांसं च पाययेत् ॥
स्वभ्यक्तं सर्पिषा शोफं सुखोष्णं तं प्रलेपयेत् ।
स्योनाकं पाटलीं बिल्वं काश्मर्यं वेणुपत्रिकाम् ॥
आरग्वधं कुबेराक्षीं मेषशृङ्गीं ससैन्धवीम् ।
सुवहां तालपत्रीं च सूक्ष्मपिष्टानि कारयेत् ॥
(*सुखोष्णं सघृतं चैव प्रदेहस्तस्य युज्यते ।

---

* खपुस्तके त्रुटितम् । †कपुस्तके नास्ति । * धनुराकारमध्यस्थाः श्लोकार्धा न कपुस्तके ।

---

१ क. तस व्याधिचिकि° । २ क. घृताभ्यक्त । ३ क. सस्वरां ।

स्नेहपानं च नागस्य गात्राभ्यङ्गं च दापयेत् ।
औदकानां च सत्त्वानां रसैस्तं प्रति भोजयेत् ॥ )
अशान्तो सर्वथा शोफे क्षिप्रं रक्तं प्रमोक्षयेत् ।
निर्दोषं शोणितं दृष्ट्वा शोफं तं प्रतिचूर्णयेत् ॥
गृहधूमहरिद्राभ्यां साकुष्ठां सैन्धवेन च ।
इत्येष वातिकः प्रोक्तो वक्ष्यते पित्तसंभवः ॥
अम्लोष्णभोजनान्नित्यं कटुकात्यशनादपि ।
लवणस्यातियोगाच्च पित्तवातं प्रकुप्यति ॥
उरोद्रोणीं समाश्रित्य श्वयथुस्तस्य जायते ।
श्वयथुस्तस्य पीताभो रक्ताभश्चापि लक्ष्यते ॥
पित्ताद्दाहस्तु नागस्य क्षिप्रं पाकं स गच्छति ।
हस्तिकर्णपलाशानि श्लक्ष्णचूर्णानि कारयेत् ॥
सर्पिषा सह संयोज्य प्रदेहं तस्य कारयेत् ।
श्यामामंशुमतीं चैव एरण्डं लशुनानि च ॥
दद्यात्प्रपौण्डरीकं च विषामतिविषां तथा ।
मकरस्य च मांसानि गोमांसं चैव पाचयेत् ॥
दार्वीप्रलेपं विज्ञाय ततस्तमवतारयेत् ।
तेन प्रदेहं नागस्य बहलं तस्य दापयेत् ॥
समूलमिह संहृत्य धत्तूरं सारिवां तथा ।
पयसा सह पिष्टानि प्रदेहः सघृतो भवेत् ॥
अतिप्रवृद्धे श्वयथौ प्रच्छन्नं तस्य कारयेत् ।
निर्दोषं शोणितं दृष्ट्वा कषायैः प्रति चूर्णयेत् ॥
अश्वत्थस्य कषायेण सर्जस्य ककुभस्य च ।
हरिद्रागृहधूमाभ्यां लशुनैः सैन्धवेन च ॥
इत्येष पित्तजः प्रोक्तो वक्ष्यते कफसंभवः ।
नागस्याल्पप्रचाराच्च वसन्ते संचितः कफः ॥
उदरे श्वयथुस्तस्य जायते श्लेष्मसंभवः ।
दारुणः कठिनश्चैव शीतो वै मन्दवेदनः ॥
एतद्वै तस्य विज्ञानं व्याख्यास्यामश्चिकित्सितम् ।
गोमयं वेणुपत्राणि स्वेदार्थे पाचयेद्भिषक् ॥

---

१ ख. पाययेत् ।

घृतेन पूर्वमभ्यक्ते दद्यात्संस्वेदनं गजे ।
(*द्रोणीं विषा)मतिविषां सुवहां तालपत्रिकाम् ॥
कोशातकीं लोङ्गलकीं चित्रकं हस्तिकर्णिकम् ।
शृङ्गवेरं हरिद्रां च कल्कपिष्टानि कारयेत् ॥
हस्तिमूत्रेण संसृष्टं सुखोष्णं स्यात्प्रलेपनम् ।
कुष्ठं चातिविषां चैव तगरं देवदारु च ॥
स्वर्जितांशुमतीं चैव हरिद्रां चित्रकं तथा ।
.... .... .... .... ....बीजां सैन्धवं तु समाहरेत् ॥
हस्तिमूत्रेण पिष्टानि प्रदेहं तस्य कारयेत् ।
पुनर्नवे त्रिकटुकं विडङ्गान्यथ सैन्धवम् ॥
तीक्ष्णगन्धां हरिद्रे द्वे करवीरं सचित्रकम् ।
पीषपेद्धस्तमूत्रेण मूलं वरुणकस्य च ॥
सुखोष्णं घृतसंयुक्तं प्रदेहं तस्य कारयेत् ।
पत्रैर्निम्बपटोलाभ्यां मुद्गयूषं विपाचयेत् ॥
ततः शाल्योदनं तेन भोजयेद्वारणं भिषक् ।
विवृद्धिश्च यदा तस्य कार्यं शोणितमोक्षणम् ॥
निर्दोषं शोणितं दृष्ट्वा शोफं तं प्रति चूर्णयेत् ।
कटुरोहिणीपिप्पल्या कुशसैन्धवसर्षपैः ॥
स एव भूयो मांसेन मेदसा वा यदा भवेत् ।
यदाऽतिकठिनो राजन्कृच्छ्रसाध्यश्च जायते ॥
ततस्तं स्वेदनाभ्यङ्गैस्तैलपानैः प्रमर्दनैः ।
पानलेपनयोगैश्च यथोक्तैः समुपाचरेत् ॥
तीक्ष्णैः कषायैः कटुकैस्तैलस्य च निषेवणैः ।
व्यायामैर्दोषहरणैः शोफमेवं जयेत्कफात् ॥
द्रोणीकायां तु भिन्नायां शोधनानि प्रदापयेत् ।
द्विव्रणीये यथोक्तानि तैलानि च विपाचयेत् ॥
इत्येष कफजः प्रोक्तो वक्ष्यते शोणितात्मकः ।
क्षीरतीक्ष्णाम्ललवणैराहारैर्भोज्यते यदा ॥

---

* धनुराकारमध्यस्थो नास्ति पाठः खपुस्तके ।

---

१ क. पूर्णम° । २ क. तुगलकीं । ३ क. °येद्वत्सम्° । ४ ख. °स्तैलं पा° । ५ क. ख. °याम्बुभि° । ६ क. द्विव्रणीयो । ७ क. क्षारं ती° ।

उष्णेऽतिकर्मण्यपायामाच्छ्रमाद्रक्तं प्रकुप्यति ।
उरोद्रोण्याश्रितं शोफं जनयेद्रक्तसंभवम् ॥
ततोऽतिरक्तः स भवेद्विदहेत्पैत्तिको यथा ।
स महाव्योष्णरुदनैः पाकमाशु नियच्छति ॥
तस्यास्निग्धं मृदु लघु शीतं मधुरमेव च ।
भोजनं पूज्यते नित्यं न चोष्णाम्लनिषेवणम् ॥
तिन्दुकैर्वारुसर्जानां पलाशोदुम्बरस्य च ।
त्वचः क्षीरेण पिष्टाश्च(?) नाभिस्तस्य प्रलेपनम् ॥
एषामेव त्वचः सम्यक्क्षणं तोये विपाचयेत् ।
द्वात्रिंशद्गुणमादाय क्वथितार्धं च संहरेत् ॥
निक्वाथेन ततस्तेन घृतं धीरो विपाचयेत् ।
ततः स्नेहावशेषं तु पानं म्रक्षणमेव च ॥
श्वयथोर्वर्धमानस्य कार्यं शोणितमोक्षणम् ।
निर्दोषं शोणितं दृष्ट्वा पूर्वोक्तं प्रतिचूर्णना ॥
पूर्वोक्तैश्च गुणैश्चास्य प्रच्छितस्यातिलेपनम् ।
अधिष्ठानं भवेद्रक्तं श्वयथूनां नराधिप ॥
रक्तस्योपद्रवा ज्ञेया वातपित्तकफास्त्रयः ।
तस्मात्सर्वेषु शोथेषु शस्तं शोणितमोक्षणम् ॥
एष वै रक्तजः प्रोक्तो वारणानां नराधिप ।

इत्येष राजेन्द्र चतुर्विधस्ते द्रोणीकसंज्ञः श्वयथुर्मयोक्तः ॥
अतः परं संशृणु संनिपातप्रकोपजं कष्टतरं यथावत् ॥
वातः कफः पित्तमथापि रक्तं दोषाः क्रमेणोपचिता गजस्य ॥
वातेन कोष्ठादुरसि प्रपन्ना द्रोणीकसंज्ञं जनयन्ति शोफम् ॥
त्वचं समाश्रित्य विवर्धमानः करोति पीडां महतीं गजस्य ॥
सोऽश्माभकण्डूपिटकाचितश्च पाकं कदाचित्समुपैति मोहात् ॥
उत्पन्नमात्रं किल तं चिकित्सेदुपेक्षितः प्राणहरः स कालात् ॥
शोफेषु सर्वेषु च या मयोक्ता क्रिया तया साधयितुं यतेत ॥
कफानिलाभ्यामुरसि स्तने वा ........................................ ॥
.................................यदि जायते वै द्रोणीकसंज्ञः श्वयथुर्गजस्य ॥

---

१ क. ख. °द्विदहेत्पैत्ति° । २ क. °णैरस्य । ३ क. °पातात्प्रको° । ४ क. °मानाः कुर्वन्ति पी° ।

तस्यास्थिभिः स्वेदमिमं विदध्यान्मूत्रैश्च वक्ष्यामि निबोध तन्मे ॥
वराहमेषाविखराश्वगोजान्यस्थीनि युक्तानि तु माहिषेण ॥
चूर्णं तिलानामपि चात्र दद्यात्स्वेदं यथावद्विदधीत वैद्यः ॥
स पञ्चमूलैरपि संविदध्यात्स्वेदं तु नाड्या विधिवद्यथोक्तम् ॥
तं प्रच्छयेद्वा यदि शस्त्रसाध्यं संप्रच्छ्य चापि प्रतिचूर्णयेच्च ॥
गृहस्य धूमो लवणानि पञ्च तथा हरिद्रे कटुरोहिणी च ॥
........ ....नागस्य च चूर्णनं हि भूयः प्रलिप्ते शृणु भेषजानि ।
पत्राणि चार्कस्य सुवर्चिका च तिला वचाः स्युः कटुरोहिणी च ॥
कुष्ठं घृतं चित्रकसैन्धवं च यवाश्च लेपो गजमूत्रमिश्रः ।
शिग्रोश्च मूलं लशुनानि कुष्ठं........................ ॥
..........................क्षारा गर्मन्तिकाक्षारमथापि माषान् ।
विपाच्य मूत्रे करिणः प्रलिम्पेद्घृतेन पूर्वं श्वयथुं प्रलिप्तम् ॥
काकादनां चातिविषां हरिद्रे शतावरीं नागबलां सकुष्ठाम् ।
करञ्जबीजानि सुवर्चिकां च भद्राच (?) दारु प्रपुनाडबीजम् ॥
किरातकन्दं गजकर्णपर्णमूलानि मूत्रेण गजस्य पिष्ट्वा ।
घृतेन पूर्वं श्वयथुं प्रलिप्य ततः प्रलेपः कफनाशनोऽयम् ॥
निम्बं सकुष्ठं लशुनं वचां च गण्डीरमूलं गजकर्णमूलम् ।
बीजानि शिग्रोः सुवहां हरिद्रे पूतीकमूलं कटुरोहिणीं च ॥
तेजोवतीतां(?) लवणानि पञ्च मूत्रेण सर्वं विधिवच्च तत्पचेत् ।
आवापमन्नं दधिमस्तु दद्यान्मुस्तां वचां लाङ्गलिकीं विशालाम् ॥
किलासिमूलान्यथ मोरटं च पिप्पल्य.................पलां च ।
क्षीरं च किण्वं च वसां घृतं च मत्स्यांश्च तैलं च समं विपाच्य ॥
दर्वीप्रलेपं विधिवद्विपाच्य प्रलिप्य वस्त्रैरुपनाहयेच्च ।
अर्कस्य पत्रैः करिकर्णपर्णैः संग्राहयेच्चाऽऽविकचर्मणा च ॥
द्रोणीक एतेन कृतप्रदेहः क्षिप्रं प्रणाशं द्विरदस्य याति ।
अन्योऽपि यः स्याच्छ्वयथुः शरीरे नागस्य शीघ्रं विजयं प्रयाति ॥
ज्योतिष्मती चातिविषा विडङ्गपाठाश्वगन्धा मधुकं वचा च ।
मुस्तं वयःस्थामथ देवदारु लोमुं (?) सतेजोवति चित्रकं च ।
गवेधुकां चापि तथा विदध्यात्कुष्ठं हरिद्रां सरलं शुकास्यम् ॥
रोहिण्यशोकौ च जलेन कृत्वा क्वाथं यथावत्परिमूत्रणं तत् ।

१ ख. यथा च । २ क. °पर्णीमू° । ३ क. °आपिमू° । ४ क. तत्परिस्रै°।

क्षौद्रेण युक्तं द्विरदाय पानमानाहगुल्मापहरं प्रदिष्टम् ॥
द्रोणीकशोफं कृमिकोष्ठकासमसंशयं हन्ति च वारणानाम् ।
पटोलपत्रैः सह निम्बपत्रैः शुद्धेषु शुद्धं प्रपिबेच्च यूषम् ॥
शाल्योदनं चापि मृदुः(दुं) सुसिद्धं दद्याद्यथोक्तं यवसं विचित्रम् ।

तत्र श्लोकः—

द्रोणीको यदि भवति द्विपस्य भिन्नः स क्षिप्रं प्रणुदति जीवितं विवृद्धः ।
एतं यः शमयति वारणस्य वैद्यः स प्राप्यो भवति परां नृपेण पूजाम् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने द्रोणीकशोफो नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

## अथ सप्तषष्टितमोऽध्यायः ।

---

आतयातो गजो राजन्यथा भवति तच्छृणु ।
अयोगेनानभिज्ञेन यो गजो वाहितो भृशः ॥
( †स्नेहैर्विधाभिर्यवसैस्तथैव सरसार्जुनैः ।
पोष्यते यस्तु मातङ्गो योज्यते न च कर्मणा ॥
लभते चाग्निदौर्बल्यमानाहे चैव वारणः ॥ )
तृष्णामथ च वैवर्ण्यं शारदत्वं तथैव च ।
स यदाऽल्पस्रुतो नागो युक्तः कर्मविशारदैः ॥
अकर्मगे(?) प्रयुज्येत गजः संयानकर्मणि ।
वातास्तथाऽपि च ... ... ... ... ... ॥
हस्तियुद्धेऽपि चात्यर्थमथ सांग्रामिकेऽपि वा ।
त्वरया कर्मलोभाद्वा प्रयोगस्यातिमात्रया ॥
बलाबलमविज्ञाय योक्ता नागं प्रपीडयेत् ।
अत्यर्थं कर्मयोगेन तदा गात्राणि मारुतः ।
पित्तेन संहितस्तस्य व्यापादयति हस्तिनः ॥
प्रत्यङ्गं सौमतीकाशौ (?) मोहापस्कारमेव च ।
... ... ... ... सकुटिके ... ... ... ... ॥

---

† 'धनुराकारमध्यस्थो भ्रष्टः पाठः कपुस्तकात् ॥

---

१ क. योगज्ञो वा° । २ क. °ल्पश्रुतो । ख. °ल्पश्रुतौ मा° । ३ ख. नाङ्गं ।

जघनभ्रंशनं चापि भ्रंशनं च तथोरसः
भञ्जनं गात्र.............रोगं चापि बलक्षयम् ॥
अत्यर्थं कर्मयोगेन शोषं वा घोरमृच्छति ।
क्लाम्यमानस्तु दौर्बल्यं कर्मातिनयनोद्भवात् ॥
आहारैः पेशलैश्चापि न वृद्धिमुपगच्छति ।
कर्मातिनीतो मातङ्गस्त्वतियातो निरुच्यते ॥
दारुणेभ्यो लघुभ्यश्च कर्मभ्यस्तं निवर्तयेत् ।
करेणुसहितं चैनं यथाकालं विचारयेत् ॥
रम्येषु वनखण्डेषु पुष्पाढ्येषु सुगन्धिषु ।
फुल्लपुष्करषण्डेषु जलेषु च विगाहयेत् ॥
वृक्षेभ्यश्च लताः फुल्लाः सुगन्धाः षट्पदाकुलाः ।
ऽपकृष्य सुमार्गेण भक्षयन्तं विचारयेत् ॥
चन्दनस्पर्शशीतं वा कर्दमं हारयेद्गजम् ।
पांशूंश्चाऽऽहारयेदेनं कूलेष्वपि सृजेदपि ॥
यवसानि विचित्राणि हरितानि मृदूनि च ।
विशालानि मृणालानि पल्लवानि मृदूनि च ॥
इक्षूनपि च शालींश्च कवलानि प्रदापयेत् ।
मनःप्रसादश्च तथा बलं चैवोपजायते ॥
ततः संजातमांसाय वारणाय महीपते ।
प्रसन्नां प्रतिपानार्थे गुडयुक्तां प्रदापयेत् ॥
भृष्टैरष्टाभिरथवा प्रसन्नां लवणैर्युतांम् ।
ततोऽस्मै षष्टिकानां च शालीनां चाऽऽशुसंस्कृतम् ॥
ओदनं दापयेद्वैद्यः शर्कराघृतसंयुतम् ।
बृंहणीयानि वृक्षाणि मांसान्यस्मै ततः परम् ॥
वेसवारं रसं वाऽपि कारयित्वा प्रदापयेत् ।
मांसैः क्षीरैस्तथा स्नेहैर्विचित्रैर्यवसैरपि ॥
बस्तिभिर्बृंहणीयैश्च शीतेन विविधैरपि ।
अतियातस्य नागस्य बलं शीघ्रं प्रवर्तते ॥

---

१ क. ख. °तोऽतिरु° । २ क. ख. °रखण्डे° । ३ ख. °तान् । त° ।
४ ख. °नां वा सुसं° ।

व्याधिश्च प्रशमं याति योगैरेभिर्नरेश्वर ।
इत्येवमतियातस्तु योक्तुर्दोषेण जायते ॥
तस्मात्सुग्राय(?) मातङ्गो तदेव ( न देयः ) पृथिवीपते ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थानेऽतियातो नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

अथाष्टषष्टितमोऽध्यायः ।

---

रोमपादो महातेजाः प्रणम्य शिरसा शुचिः ।
पालकाप्यं मुनिवरं विनयात्परिपृच्छति ॥
गुल्माः पञ्च मुनिश्रेष्ठ ध्यारयो(?)···· ···· ···· ।
पूर्वं प्रोक्ता भगवता नामतो रोगसंग्रहे ॥
समुत्थानं च रूपं च तेषां विस्तरतो मम ।
चिकित्सां चानुपूर्वेण भगवन्वक्तुमर्हसि ॥
एवं पृष्टः स भगवान्पालकाप्यस्ततोऽब्रवीत् ।
शृणुष्वैवं महाराज प्रसन्नेनान्तरात्मना ॥
गुल्माः पञ्च महाराज ये प्रोक्ताः संग्रहे मया ।
तेषां निदानमुत्पत्तिं चिकित्सां च प्रचक्षते ॥
वातात्कफात्पित्ताच्चैव शोणितादपि केवलात् ।
जायन्ते दन्तिनां गुल्माः संनिपाताच्च पञ्चमः ॥
स्निग्धभक्तैश्च मांसैर्वा यदा नागो निराकृतः ।
बस्तिभागाच्छयात्राभे रसन्नानि(?) लभेत्पुनः ॥
कटुतिक्तकषायाणां रसानां चातिसेवनात् ।
शुष्काणि च यदा नागो यवसानि च भोजयेत् ॥
विद्यात्तदा तदुत्पत्तिं···· ···· ···· ···· ···· ···· ।
अल्पतेजोप्रदानाद्रा(द्वा) सहसा कुप्यतेऽनिलः ।
स तस्य जनयेद्गुल्मं समन्ताद्धृदयोश्रितः ॥

---

१ क. भवान्वै वक्तु° । २ क. प्रचक्ष्वते । ख. प्रचक्ष्यते । ३ क. मांसैश्च । ४ ख. °भेत् ॥ क° । ५ क. ख. °यास्रुतः ।

पुरीषमुत्सृजेच्चैनं सा पश्चादपि लक्ष्यते ।
तस्याऽऽनाहं सृजेत्…………कोष्ठवायुर्भ्रमत्यपि ॥
गर्जेत्यपि मन्दमन्दं वृष्टिकाले यथा घनः ।
प्रमेहति प्रसक्तं च विमनाः संकुचत्यपि ॥
स्तम्भमाश्रित्य विष्टब्धः स्थूलं च श्वसिति द्विपः ।
प्रमेहे चापि विच्छिन्नं गलमूर्ध्वमुदस्यति ॥
इत्येतैर्लक्षणैर्जुष्टो वातगुल्मातुरो द्विपः ।
पूतीकं चित्रकं दन्तीं गण्डीरं सुवहां वचाम् ॥
पिप्पलीं सैंधवं पाठां बृहत्कुष्ठं महौषधम् ।
कुलत्थांश्च यवांश्चैव समभागान्प्रपेषयेत् ॥
तैलं नै (लेन) सुरया वाऽपि सक्तायां पाययेद्द्विपम् ।
गण्डीरं चविकं श्यामां द्रवन्तीं सुरसां वचाम् ॥
पिप्पलीं मरिचं चैव सलिलेन विपाचयेत् ।
वस्त्रपूतं तु तं क्वाथं सकुष्ठं लवणान्वितम् ॥
तत्प्रातः पाययेन्नागं मैरेयेणाभिमूर्छितम् ।
रोहिषं पञ्चमूले द्वे वर्षाभूर्वृश्चिकालिका ॥
वसुको वशिरश्चैव क्षमुन (?) क्वाथयेज्जले ।
सकृष्णलवणं क्वाथं तथा वस्त्रपरिस्रुतम् ॥
सुरया मूर्छितं नागं यातँरुण्या(?)प्रपाययेत् ।
मधुशिग्रु च गण्डीरं चित्रकं बदराणि च ॥
यवान्नवान्कुलत्थांश्च पञ्चमूलानि पाचयेत् ।
क्वाथेन सहितं तस्य अवगाहं च कारयेत् ॥
दशोत्तरं सलवणं( स्निग्धं )वारणं प्रतिपाययेत् ।
मृदुशाल्योदनं चैव रसेन सह भोजयेत् ॥
क्रियाः सर्वाश्च नागस्य स्निग्धाभ्यक्तस्य कारयेत् ।
विधिनाऽनेन नागस्य वातगुल्मः प्रशाम्यति ॥
सक्रियः सनिदानश्च पित्तगुल्मः प्रवक्ष्यते ।
अम्लोष्णकटुतीक्ष्णानि क्षाराणि च यदा द्विपः ॥

---

१ ख. सानोपश्चापि । २ क. कोष्ठे वा° । ३ क. °त्यपि ॥ ग° । ४ क. दन्तो । ५ क. च । ६ क. ख. °रिश्रुतम् । ७ क. °तरूण्याप्रप्रपा° । ८ क. ख. °ते । आम्लो° ।

भोजनानि निषेवेत रूक्षाण्यजरुजानि च ।
सततं सेवमानस्य द्विपस्यानियतात्मनः ॥
अतिमात्रं यदा वाऽपि सेवितास्ते तनुं नृपः ।
घर्माध्वनः प्रयोगाच्च गुल्मो भवति पित्तजः ॥
स पाण्डुर्विमना दत्ते शिरोरु (?) भोजनं द्विपः ।
भृशं संतप्तदेहश्च शीतमेवाभिनन्दति ॥
तृष्णातिमात्रं मूर्छा च विदाहश्चास्य जायते ।
भुक्तस्य परिणामे च वेदना बाधते गजम् ॥
विमुक्तं भोजयेद्वेगैः शीतमस्य सुखायते ।
पित्तगुल्मान्तरं विद्याल्लिङ्गैरेतैर्मतङ्गजम् ॥
उदारं वक्ष्यते कर्म पित्तगुल्मनिबर्हणम् ।
उशीरं पद्मकं लोध्रं मञ्जिष्ठां रोहिणीं तथा ॥
हरीतकीं हरिद्रे द्वे सहदेवां ससारिवाम् ।
समान्येतानि सर्वाणि जर्जरीकृत्य पाचयेत् ॥
मत्स्यण्डिकासमायुक्तं वारणं प्रति पाययेत् ।
प्रियालानि मधूकानि सारिवां कदलीफलम् ॥
पाटलीं पृष्णिपर्णीं च भूनिम्बं च हरीतकीम् ।
त्रिवृन्मूलं मधूकं च तिन्दूकानि शतावरीम् ॥
खर्जूरं जीरकं लोध्रं तथैवाऽऽमलकानि च ।
सर्वाण्येतानि सलिले समभागानि पाचयेत् ।
सुप्रसन्नं ततः क्वाथं पाययेच्छर्करान्वितम् ॥
पयोगर्भं मधुरकैः सर्वैः सर्पिर्विपाचयेत् ।
पित्तगुल्मप्रशान्त्यर्थं वारणं प्रति पाययेत् ॥
कपिञ्जलैर्मयूरैश्च लावैश्चापि सतित्तिरैः ।
सुसंस्कृतं रसं कृत्वा भोजयेद्वारणं ततः ॥
*सामाकमल्लिपादं च मृणालेक्षुबिसानि च ।
आर्तवानि तु सर्वाणि यवसानि प्रदापयेत् ॥
एषां शर्करया युक्तस्तस्य ग्रासः प्रशस्यते ।
द्विपानां विधिरेष स्यात्पित्तगुल्मप्रणाशनः ॥

* 'श्यामाक' इति भवेत् ।

१ क. ख. °ताते त° । २ क. ख. धर्माधनः । ३ क. ख. भक्तस्य ।

सक्रियः सनिदानश्च श्लेष्मगुल्मः प्रवक्ष्यते ।
यदा तु स्निग्धमधुरा वारणा भोज्यते विधा ॥
पललं दधि मत्स्याश्च क्षारमिक्षु गुडं वसा ।
औदकानां च सत्त्वानां मांसानामतिसेवनात् ॥
अव्यायामाच्च नागस्य गुल्मो भवति श्लेष्मजः ।
स विवर्णच्छविर्नागः सर्पिः शीतं न चेच्छति ॥
दुर्मना गुरुदृष्टिश्च रोमहर्षश्च जायते ।
शय्याभिनन्दी प्रध्याता भुक्तं चास्य न पच्यते ॥
निरूहत्यल्पमल्पं च पुरीषं श्लेष्मणा वृतम् ।
हरिद्रां सुरसां निम्बं पाठां तेजोवतीं वचाम् ॥
राजवृष्यं च सरसमेरण्डं च शतावरीम् ।
तर्कारीपत्रभङ्गांश्च समभागानि कारयेत् ॥
(*कटूष्णतैलसंयुक्तं तं क्वाथं प्रतिपाययेत् ।
व्याघ्री च नक्तमालं च मम्लकं बदराणि च ॥
शिग्रुबीजं कुलत्थं च चित्रकं हस्तिपिप्पलीम् ।
यवानी पञ्चमूले द्वे स्थाल्यामादाय पाचयेत् ॥ )
स्निग्धक्षारसमायुक्तं तं क्वाथं पाययेद्द्विपम् ।
पत्रैर्वा चिरबिल्वस्य तैलं धीरो विपाचयेत् ॥
तत्तैलं गुल्मशान्त्यर्थं वारणं प्रतिपाययेत् ।
रसं तस्मै सैन्धवेन पिप्पलीमरिचानि च ॥
भोजनार्थेन पानेन वारणाय प्रदापयेत् ।
वेणुपत्रं कुशं क्षारं तथा पाठां गलं तृणम् ॥
कुलीरपादं यवसं करीरं च विपाचयेत् ।
उष्णाम्ललवणान्नित्यं कटुतीक्ष्णातिभोजनात् ॥
एतैस्तु लक्षणैर्विद्याद्रक्तगुल्मं चिकित्सकः ।
(*सर्जं प्रियालमश्वत्थं मधुकं चन्दनं तथा ॥
वृवृतं च सुकर्णं च सहामौदुम्बरं तथा ।
तिन्दुकीमजशृङ्गीं च शतावरीं हरीतकीम् ॥ )

---

* 'धनुराकारमध्यस्थः पाठो भ्रष्टः कपुस्तकात् ॥

---

१ क. °मपादह° । २ क. भक्तं । ३ क. तु । ४ क. °क्तं तत्क्वाथं ।

समभागानि पयसा पाचयेदेतियुक्तितः ।
पेरिस्राव्य च तत्क्वाथं शर्कराचूर्णसंयुतम् ॥
पाययेद्वारणं राजन्संयुक्तं मधुकेन च ।
श्रीपर्णीमूलमधुकं तथा गन्धर्वहस्तकम् ॥
आरग्वधं मधूकानि काश्मर्यं च शतावरीम् ।
पयस्यां पृश्णिपर्णीं च मूलमिक्षुरकस्य च ॥
गर्भातिक( मुंतं च ) समञ्जिष्ठं भव्यं पारावतानि च ।
काण्डशः कल्पयित्वा तु समान्येतानि पाचयेत् ॥
सुशीतं योजयेत्क्वाथं शर्कराचूर्णसंयुतम् ।
चतुर्णामथ गुल्मानां पूर्वोक्तानां महीपते ॥
व्यामिश्रलक्षणो ज्ञेयो गुल्मः स्यात्सांनिपातिकः ।
उत्कटत्वं तु दोषाणां यत्र यस्य प्रदृश्यते ॥
स्वकं चिकित्सितं तस्य यथायोगं विधीयते ।
रोगाणामथ तुल्यत्वात्कर्मै कार्यं तु भेषजे ॥
संनिपातसमुत्थेऽपि शिरोरोगस्तथैव च ।

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने गुल्मो नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

अथैकोनसप्ततितमोऽध्यायः ।

---

'अथातो हृद्रोगचिकित्सितं व्याख्यास्यामः' इति ह स्माऽऽह भगवान्पालकाप्यः ॥

इह खलु भो हृद्रोगास्त्रिभिर्दोषैः संभवन्ति वातपित्तकफैः । तत्राऽऽदौ वातिकं हृद्रोगं वक्ष्यामः—तत्र व्यायामाद्व्यवायरूक्षकटुकषायभोजनादत्यशनाच्च वातः प्रकुपितः प्राप्य हृदयमनुपीड्य तिष्ठति हृद्रोगं जनयति ॥

ततो विजृम्भति भूमौ परिवर्तते परिषीदति भूमिस्थश्च । दत्तो(?) भोजनाहारमभिलषति ॥

तस्यैवं निदानं दृष्ट्वा वातोपसृष्टहृदयस्य चिकित्सितमुपक्रमेत—सामुद्रविडसुवर्चिकायवक्षारोद्भिजरोमकसैन्धवघटीलवणसौवर्चलानि च प्रसन्नया सह संयोज्य

---

१ क. °दनियु° । २ क. ख. परिश्राव्य । ३ क. पृष्टिप° । ४ क. ख. कर्मकार्यस्तु ।

पाययेत् । अथवा—त्रिकटुरसोनवचासर्षपक्षुद्रमत्स्यांश्च संक्षुद्य प्रसन्नया सह संयोज्य पाययेत् । पायितो विमुक्तहृदयो भवति । अथवा—त्रिकटुरसोनरजनीतिलचूर्णदधिमस्तुसंयुक्तमाजं पयः पाययेत् । कर्कटकरसं वा पाययेत् । सुखी भवति ॥

इति वातिकहृद्रोगः ॥

अथ पैत्तिकः—कटुतीक्ष्णोष्णाम्ललवणक्षारभोजनैः पित्तमुदीर्णं हृद्रोगं जनयति ॥

स भवति भक्ष्यभोज्यद्वेषी विमना विकीर्णहस्तः परिमूत्री, वितमति ध्यायति । संतप्तशरीरः शीताभिलाषी सलिलावगाहच्छायाभिकाङ्क्षी ॥

तस्य भेषज्यम्—शिशिरमधुरस्निग्धक्रिया । शर्करया घृतमण्डेन वा गात्रयोः परिषेकं कुर्यात्* । ........................................................ । ........................................................................................................ ॥ आर्हिंस्रामधुशिग्रुकरवीरकरीरतर्कारीभद्रदारुलवणकिण्वातसीसर्षपांस्तिलांश्च समभागान्सूक्ष्मचूर्णीकृत्य क्षीरेण पाचयेत् । घृततैलवसाभिः सिद्धमह्य(माहृ)त्य सुखोष्णेन गात्राणि प्रलेपयेत् । द्विपञ्चमूलानि माषान्संकुट्य यमकस्नेहे साधयित्वा सीधुं दधि च, तेनापि सुखोष्णेन गात्राणि प्रलेपयेत् । आढकीमधुशिग्रुशणमूलकैरण्डानां बीजानि विश्वभेषजपृथ्वीकाबलातसीतिलसर्षपयवतण्डुलकुलत्थबदरबिल्वचूर्णानि समभागानि पाचयित्वा घृततैलवसाभिर्दध्ना सौवीरसुरामण्डैः सह संयोज्य तत्राऽऽवापं रोहितपाठीनादीन्मत्स्यांश्छित्वा संकुट्य स्थापयेत् । पञ्चरात्रमासुतं महास्थाल्यां ततस्तमासवं पाचयित्वाऽवतार्य तस्योष्णेन गात्राणि प्रलेपयेत् । रालारास्नागोक्षुरकवासाकण्टकाकर्चूरोरुबूकाग्निमन्थपृष्ठपर्ण्यंशुमती पाषाणभेदिकाबिल्वपाटलीयवातसीमधुकक्कोलकुलत्थान्पाचयित्वा ततस्तं निष्क्वाथं द्विगुणेन तैलेन पाचयित्वा यष्टीमधुकगर्भं पाययेद्वारणम् । सर्पिस्तैलदधीनि सुखोष्णानि पृथक्समस्तानि वा पाययेत् । द्विपञ्चमूलं गृहीतं चैनं स्निग्धेन मातुलुङ्गरसयुक्तेन रसेन भोजयेत् । स्नेहदानोक्तेनान्यतमेन वातप्रशमनेन स्नेहोपक्रमेणोपचरेत् । शशतिकेन(?) चास्य विधिना बस्तिकर्म कुर्यात् । यथोक्तबस्तिसिद्धिविधानेन वा बस्तिं दद्यात् । अथोदकपरिषेकोभ्यक्तप्रदित्य(?)लेपन-

* इतः परं द्वयोरप्यादर्शयोः केनचिन्मध्य एव "पित्तकफहृद्रोगचिकित्सा त्यक्ता(त्रुटिता) । ततो गात्ररोगेषु वाति(क)गात्रस्य निदानं त्यक्तम्(त्रुटितम्)" इति लिखितं दृश्यते ॥

१ ख. °वा—र° ।

संकरभागपिण्डोत्करिकोपनाहफालपाषाणकारीषाग्निमांसस्वेदादिभिर्विधिवन्मर्दनोपेतस्य स्नेहपानभोजनबस्तिनस्यकर्मप्रयोगरसभोजनलशुनगुग्गुलुविधानोपयोमादिभिश्च न शान्तिरस्ति। श्वयथुर्वेदना लिङ्गविशेषाणां प्रोतसंभजान्वङ्गुवेकल्पमस्करांसगदेशादीनां च सततमुपलभ्यते। ततश्चास्य कर्म विधेयं भवति। तस्य सुयन्त्रितस्य(स्तर)रक्षारक्षितस्य. संनिहितस्थानशयनपानाशनोपपन्नस्य यथाविधि गजस्य रणजयतोपेतस्य सर्वसंभूतसंस्कारस्य कुलपरिकरपरिवारितस्य सदृशपत्रविधानेन विज्ञातशरीरविधयेन(धानेन) दृष्टाऽग्निप्रणिधानेनासंमूढहस्त्यायुर्वेदविदा ज्ञातेन विपश्चिता भिषजाऽग्निप्रणिधानं क्रियमाणं यथातुरकालमप्रदोषं भवति। अग्निर्हि दुष्प्रयुक्तो महता तापेन प्राणभिदा हस्तिनमाप्रसादं प्रतियुनक्ति। स चैवं प्रज्ञावता तेन परीक्ष्यकारिणा प्रणिहितवता प्रयुक्तान्तरावगाहपङ्कपटलादापूरयति। शोकस्तम्भकम्पपरिसर्वास्फुरणस्नायुक्षेपणसंकोचननप्रसोषणसूयेन स्थिरकठिनत्वादीनि वा परिद्यति। तत्राग्निदाहोपकरणान्येवंविधानि भवन्ति—अर्धचन्द्राकृतीनि जन्ताभिमण्डलानि(?) वृत्तानि सूक्ष्माङ्गुष्ठपरिणाहानि। हस्तिनः समीपे *कर्णारावेसनं कुर्यात्। अस्य पूजां कृत्वा निरग्निं च साग्निप्रणिधानं कुर्यात्। सर्पिषाऽभ्यज्य गात्रं श्वेतवर्णैरभिलाञ्छितैः सम्यग्दहति। भवन्ति चात्र श्लोकाः—

पत्निपादे(?) पत्निहस्ते(?) नन्द्यावर्ताकृतिं दहेत्।
वर्धमानं च संदाने स्वस्तिकं वा निवेशयेत्॥
प्रोहे पत्राकृतिं कुर्याद्रसं(?)रोधजमालिम्पेत (दिशेत्)।
प्रतीकासांसफलकबाहुदेशेषु शक्तयः॥
उत्कृष्टाष्ठीव्यापस्कारभागे चक्राकृतिर्भवेत्।
अग्निमार्गे भिषक्कुर्यात्पराष्ठु…… ……गात्रवत्॥
पञ्चाङ्गुलप्रमाणात्तु कार्यमेवातिसंभवात्॥
अथैवं……मुरोरोधरेषादूर्ध्वंव्यवस्थितम् (?)।
करणीयानि रायाजानुगो पञ्चाङ्गुलान्तरा।
निःसंशयां निराबाधा भवन्ति निरुपद्रवाः।
शिरास्नाय्वस्थिधमनीसंधीनां नयने अपि।
सम्यग्दहेन्न पिशितात्परतोऽग्निं न कारयेत्॥

* 'कर्मारावेशनं' इति भवेत्॥

१ क. °स्य सं°। २ क. विज्ञातेन। ३ क. न। ४ क. ख. °या निराशया नि°। ५ क. °हेन्मयि पि°।

कालमत्वरवैदेहवर्णप्रकृतिकारणम् ।
वेदनादोषाद्भूतस्राव्याख्यचतुराणि च ॥
विपश्चिद्दृष्टाङ्कं क·········· ····· ····· ····· ।
····· ····· ····· ····· ····· ····· ····· ····· ····· ····· ॥
····· ····· ····· ····· ····· ····· ····· ····· ····· ····· ।
····· ····· ····· ····· ····· ····· ····· ····· ····· ····· ॥
····· ·····ग्निकर्म ज्ञात्वाऽग्निं प्रतिचारयेत् ।
सम्यग्गामातिदग्धानामपलिङ्गान्यतः परम् ॥
ततः मोपोरवतुश्चैत्र(?)कपोतागरुडप्रमम् ।
समं रूक्षं संकुचितं निष्परिस्राववेदनम् ॥
विलीनश्वयथुप्रायं सम्यग्दग्धं विनिर्दिशेत् ।
स्फोटोद्गमपरिस्रावं तथा प्रक्लेदमार्दवम् ॥
तथैव वेदना शोफमामदग्धस्य लक्षणम् ।
स्रस्तगात्रापरकरकर्णमेहनवालधिः ॥
दुर्मना ध्यायति परा····· ·····नाभिनन्दति ।
वृज····· ·····मूर्छा वातरक्तमूत्री भवत्यपि ॥
भ्रमीनिदानं लभते शीकरी जातप्रतिप्रणाम् (?) ।
मुखे शोषो ज्वरो ग्लानिः सीदनं जृम्भणान्वितम् ॥
छायाभिलाषी सततमत्यर्थमुदकप्रियः ।
स्थाने न लभते शर्म सर्वतः प्रतिदुःखितः ॥
अतिरिष्टेव कुतभू (?) व्रणपाकश्च दारुणः ।
उपद्रवाश्च बहवो भवन्तीति यतस्ततः ॥
निवर्ता(वृत्ता) ये वा सुशीतैः प्रदेहैरवगाहनैः ।
सशर्करैः पयःपानैर्दधिमस्तुसुरासवैः ॥
शतधौतघृतालेपैर्दाहवेगस्याऽऽर्तिं हरेत् ।

अथ शीतप्रवातावस्थितं चैनं कुशकाशरक्तोत्पलकह्लारनलनलिनबिशमृणालकुमुदकुन्दपद्मकोशीरनलमूलमञ्जिष्ठासारिवारक्तचन्दनप्रपौण्डरीकमधुकमधुरक्षीरत्वग्रजनीसुनिषण्णकवञ्जुलादिभिः प्रकाममालिम्पेत् । इक्षुक्षीवनीलिकापोटगलदूर्वामृणालेन्दीवराम्बष्ठकादेर्यवसामोदकं मत्स्यपिण्डकागर्भमुपाहरेत् । मन्ददग्धं पुनर्दहेत् । सम्यग्दग्धं पयसा परिषेचयेत् । सुरया वा शालितन्दुलपि-

१ क. ख. °म्यग्वामा° । २ क. प्रायाव° । ३ क. ख. °रिश्रावं ।

ष्टेन दुग्धालोडितेन पुनः पुनः प्रदेहयेत् । नित्यसंदेहवेदनार्थमधुं त्र्यहं पञ्चाहं वा सिद्धार्थकासीसविकंहन्त(?)नागरमधुयष्टिकालोमचूर्णेन प्रधानवचूर्णयेत् । ऊर्ध्वं वा सप्तरात्रं तु सततं तैलेन सार्पिषा वा परिषेचयेत् । त्रिसप्तरात्रादूर्ध्वं द्विव्रणीयोक्तेन विधानेनोपचरेत् । तैलसेकश्चात्राव्रणारोहणात्सर्वममिदग्ध......... षिच्यमानं स्नेहेन प्रवे(वृ)शो कोऽप्यप्रलेपविमाननात् । अङ्गोद्वेष्टनप्रसुप्तिः स्फुरणतोदार्तिभेदादीन्विशेषाञ्जनयतीत्येनशनशूलत्रयरूढव्रणमपि परिषेचयेत् । सूपचण्डव्रणव(त्)वातघ्नोत्कारिकायाक्षाहाज्य (?) च पूर्वं पाणिना मर्दयेत् । ततो लगुष्ठानविधानैर्यथायोगं परिमर्दनं मृदूकरणार्थं क्रमशः कुर्यात् । स्नायुशिरासन्निजीलकत्वरामांसमेदसा प्रसुप्तगुरुकाठिन्यां जानुसंकोचनचक्रस्फुरणोद्वेष्टनोत्कम्पतोदभेदनसुप्तत्वं कृपतोपनाहस्वेदस्य विविधैर्मर्दनैर्जयेत् ॥

तत्र श्लोकौ भवतः—

यः स्वेदैः क्रमविहितै.......... रभ्यङ्गैरनिलहरैश्च पानभोज्यैः ।
कुर्यात्स प्रणुदति गात्ररोगमुग्रं नागानामनिलसमुत्थितं क्रमेण ॥
एतांश्च क्रमविहितान.......... शास्त्रोक्तं विधिमनुसृत्य यस्तु कुर्यात् ।
सत्कार्यः स भवति पार्थिवैर्महात्मा.........वेदहरिहवनेषु वज्रहस्तः ॥

( इति ) वातिकगात्ररोगः ॥

उष्णकर्मणोऽत्यर्थयोगादत्यशनास्व(श्व)गमनात्कटुकोष्णाम्ललवणसेवनादत्यर्थयोगात्पित्तं प्रकुपितं भवति । तस्यातिमात्रं गात्राणि दह्यन्ते । तेनातीव वेदनार्तश्च जिघ्रति वेपथुश्चास्योष्णत्वमतिमात्रं गात्राणां लक्षणम् । रक्तपित्तयोः स्ववर्णयोरन्यतमवर्णं शरीरं भजति प्रभेदश्चास्य क्षिप्रमुपलभ्यते गात्राणाम् ।

तस्य सुरासंप्रयुक्तेन घृतेनाभ्यङ्गं कुर्यात् । तैलेन च सर्जरसयुक्तेन कवलेन वा सर्पिषा दूर्वामृणालमुस्तमधुकमाञ्जिष्ठापद्मकभद्रदारुक्रमात्(?)न तप्तैर्वधिमे(?) कुवृतैः संयोज्य लेपयेद्गात्राणि । अथवा—पद्मोत्पलकुमुदशृङ्गाटकशैवलबिशानि वेतसेक्षुमानीनां मूलानि सकह्लारसुनिषण्णकानि पेषयेत् । तैरपि कल्कैर्दधिसर्पिः संयुक्तैः प्रलेपयेत् । अथवा—पद्मकोशीरपत्रचन्दनमाञ्जिष्ठाहरिवेराणि समभागानि दधियुक्तघृतैः संयोज्य लेपयेत् । दात्रा.........वा मधुकचन्दनसहाद्राक्षाक्षौद्रोशीरकुमुदोत्पलपृथ्वीकासारिवापिष्टहरिवेरतृणशूल्पकालाशीतशिवातिलविषमृणालपद्मकुमतांश्च सर्वाणि समभागानि दुग्धे पेषयित्वा तेन सघृतेन कल्केन प्रादग्धगात्ररोगः पैत्तिकः प्रशान्तिमुपगच्छति । जीवकर्षभशर्कराश्व-

---

१ क. °तदाह° । २ क. °त्यशन° । ३ क. °योश्च व° । ४ क. °नतींश्च ।

कनासामधुकविदारीतुषसारिवाभिः पयसा च घृतं मध्यमपाकं कारयित्वा पाययेत् । सर्पिषा सुस्निग्धं मुद्गौदनं भोजनमुपहरेदिति ॥

तत्र श्लोकः—

प्रदेहैः शीतलैः स्निग्धैर्मधुरैः पानभोजनैः ।
पैत्तिको गात्ररोगस्तु प्रशान्तिमुपगच्छति ॥

( इति ) पैत्तिकगात्ररोगः ॥

असाम्ये त्वन्ते मिथ्योपचारान्मधुरस्निग्धभोजनाद्व्यायामाध्वनोरप्रयोगाच्छ्लेष्मा प्रकोपमुपगच्छति । स वारणस्योपसृत्य गात्राणि विष्टभ्य तिष्ठति । ततोऽतत्व(?) गात्राणां कारयेत् ॥

अतसीतिलसर्षपमाषविडङ्गानां चूर्णानि सक्तुभिः संयोज्य तैलदधिसुरालवणघृतसौवीरकयुक्तेन सुखोष्णेन गणेन प्रलिप्य गात्राणि, अजगोमहिषाश्वाश्वतरकरिकरभाणां मूत्रपुरीषाणि प्रभूतलवणेन सुस्निग्धानि पाचयेत् । तेनास्य सुखोष्णेन संकरेण बहलेन गात्राणि प्रलेपयेत् । श्लेष्मोप्साध्यय( ? ) जाङ्गलं पौष्णवीर्यं च संप्रदापयेत् । यवान्नं चैव पिप्पलीशृङ्गवेरं सतैलं चूर्णं पाचयेत् । समरिचं भोजयेद्व्याधिप्रशमनं च सपञ्चलवणां मधुमिश्रां पाययेत् ॥

तत्र श्लोकः—

तिक्तं च कटुकं चास्मै भक्ष्यं लघु तथैव च ।
भोजनं दापयेद्वैद्यः श्लेष्मरोगं(गः) प्रशाम्यति ॥

( इति ) श्लेष्मजो गात्ररोगः ॥

अथ विषमापरगात्रनासामाकर्षणात्सहसातिस्नेहातिरौक्ष्याति ..... ..... .....सर्वधातुप्रकोपो भवति। प्रकृत्या चास्य धातवो दोषाश्चान्योन्यमभिवर्धयन्ति। (त)-तः सांनिपातिकश्च जायते गात्ररोगः । ततः श्वयथुरत्यर्थं ग्रथितेषु स्थानेषु प्रभिद्यते। असृक्स्रवति प्रभिन्नश्च पुनराध्मायते । पुनश्च सहसैव प्रभिद्यते। सर्वधातुलिङ्गानां चात्र संप्लवो दृश्यते। तेनाभिभूतो वारणो दैन्यमत्यर्थं प्राणमांसक्षयं च लभते ततः सांनिपातिकेनाभिभूतस्य चिकित्सितुमुपदेक्ष्यामः। यावदसृक्प्रस्रवति तावत्पित्तशोफोक्तैः प्रदेहैरुपक्रमेत । उपक्रमो नेक्कतय(?) योगवसातैलघृतैः सदा गात्रसेकः प्रशस्यते । खदिरकदम्बाश्वकर्णश्लेष्मातककन्द(द)रनलवंशवञ्जुलशिशुविल्वपित्तगर्दभल्लातकानां पत्रभङ्गान्समानीय महास्थाल्यामावाप्य सलिले पाचयेत् । सहासविषातकोरीगमूतिकापत्रभङ्गान्गोमूत्रेण निष्काथ्य ततोऽस्य गात्राणां नाडीस्वेदं कुर्यात्। तेनास्य श्वे(स्वे)-

१ क. °रीकुशसा° । २ क. °पोऽतिप्र° । ३ क. प्रतिभि° ।

दसेको गात्राणां कुर्यात् पाठातिविषाहिंस्रावचामधुकलाङ्गलीमूलानि लोध्रल- शुनप्रपौण्डरीकशुकनासामञ्जिष्ठाहरीतकीद्विहरिद्राप्रियङ्गुतण्डुललवणकिण्वातसी *..........त्यर्थं क्षीरं चास्य सर्पिस्तैलाभ्यां संयुक्तं नित्यमेव पानम्। प्रणश्य- तोऽनेनास्य गात्रस्तम्भवेपथू( †नश्यति ) भोजनं चास्मै रक्तशालीनां जाङ्गल- रसविदधां दापयेदिति ॥

तत्र श्लोकौ भवतः—

इति दोषसमुत्थानां कीर्तिता भेषजक्रिया ।<br>
चतुर्णां गात्ररोगाणामुत्पत्तिश्च सलक्षणा ॥<br>
स (य) एतान्साधयेद्वैद्यो गात्ररोगान्यथाविधि ।<br>
स पूज्यः सततं राज्ञा दानमानपरिग्रहैः ॥

इति सांनिपातिकः ॥

इति श्रीपालकाप्ये गजायुर्वेदमहाप्रवचने महापाठे द्वितीये क्षुद्ररोगस्थाने गात्ररोगो नाम सप्ततितमोऽध्यायः ॥ ७० ॥

---

## अथैकसप्ततितमोऽध्यायः ।

---

अथाङ्गपतिरवहितमनाः समासीनमग्निकल्पमुवाच पालकाप्यम्—"भगवन्, वनेष्वधिकबलसत्त्वगुणयुक्ता दन्तिनः" इत्येवमवन(ग)तोऽस्मि। तत्र तेषां विह- सान्रणगमने रोगमुपलक्षयेद्गात्राणाम् । स कथमुत्पद्यते व्याधिः । कतिविधा- बाधः, कति सञ्ज्ञाः, कतिविधं चिकित्सितम्, कथं च भग्नव्या(?)वेवति विच्यु- तिविश्लिष्टपरिस्रस्तानि जानीयात् । इति । कश्चित्सद्युत उत्पद्यते, कश्चित्तलेन, कश्चित्मोहे, कश्चिदपस्कारेण, कश्चिदुरसा, कश्चिदंसे, कश्चित्सर्वदुःखिता,(?) इति । तेषां तत्त्वतो ज्ञानं साध्ययाप्यप्रत्याख्येयोष्णशीतोपक्रमोपक्रमणीयांश्च व्याधीन्[2]यदि सतपत्तिंठो(?)हिमकरचरणनयनाविष्ठाता(?)इत्युक्तं भगवता (?)। [3]अथ विनयादवनतशिरसमङ्गराजमवेक्ष्य पालकाप्योऽब्रवीत्—दन्तिनां खलु महाराज द्विविधो गात्ररोगो भवति—आगन्तुर्देहजश्चेति* । षडाबाधो

---

* अत्र किंचित्त्रुटितमिव प्रतिभाति । † प्रक्षिप्तमिह प्रतीयते । * अत्रैव 'द्वादशविधोत्पत्तिः' इति त्रुटितं प्रतिभाति 'स द्वादशविधोत्पत्तिरिति यदुक्तम्' इत्य- ग्रिमग्रन्थानुरोधात् ।

---

१ क. भग्नव्यावेवतिविश्लि° । २ क. °धीन्स यदि । ३ क. °त्तिवो हि° ।

प्रतिक्रियश्च । कफपवनपित्तसंनिपातात्मको देहजः पूर्वमेवोक्तः । तत्राऽऽगन्तोर्लक्षणमुपदेक्ष्यामः । स द्वादशविधोत्प(*त्तिरिति य)दुक्तम्, तद्वक्ष्यामः । पतनभ्रंशनस्खलनविनिखातवधबन्धनाभिघातप्ररोषप्लवनलङ्घनगुरुहरणभारोद्वहनदुःस्थानशयनानीति । तत्र गिरिकूलोच्चपातो विषमगमनात्पतनम् । पिच्छिलशिथिलपातनाद्भ्रंशनम् । स्थाण्वश्मलोष्टाविषयान्धकपानास्त्वेवम्(?) । विनिखातनं विभ्रान्तगमनात् । गुर्वतिमात्रचिरप्रापवस्वनाद्वधबन्धनापत्तिः । प्रतिगजविषाणास्यध्वनमस्खलम्(?)मधुध्वा शरशक्त्यृष्टितोमरप्राजनादभिघातापत्तिः । प्ररोषो द्विविधः—कर्माध्वगमनं चेति । तत्राभि(*गमनप्रति)गमनादपकर्षणयोगान्नाम साधूपक्रमाङ्को मूत्रमण्डलानुकारवीथीनां चातिमात्रगमनादखिलचरणदेशेष्ववसी(सा)दनाच्च कर्मप्ररोधापत्तिर्भवति । ....शतिमात्रादध्वगमनापत्तिः । दानाध्वप्ररोषापत्तिः । गात्राणां युगपदुत्पतनं प्लवनम् । प्रमिल(?)विज्ञेयमेकैकशो लङ्घनम् । वारिपरिखासंक्रमणादिभिर्वृक्षप्राकारकपाटस्तम्भाभिघातादेवादाम्लरिनागमर्दनाद्भित्तिप्रभृतीनां मर्दनम् । †गुरुहरणानाम्.... ....अतिप्रमाण(*भारवतेव संविहता) भारोद्वहनम् । विषमेऽश्मस्थाणुसंबाधाद्दुःस्थानशयनम् । आपत्तिर्हेतुरुत्पत्तिरित्यनर्थान्तरम् ॥

षडाबाध इति यदुक्तं, तदनुव्याख्यास्यामः—आधावनमेतद्व्याविधविच्युतपरिम्लान*विशेषसङ्गाः (?) ॥

गात्रसङ्गो द्विविधोऽभिविज्ञेयः संधावसंधौ वा । तत्र संधिगो द्विधा—निर्भुग्नः सवृत्तश्चेति । एवमन्यत्रापि । तत्र निर्भुग्ने +मत्तियेर्वसश्चासपर्वतेसद्वे(?)संहरणगमननिर्व*न्तिर्मरणं च । मपि(?)रक्तपवनसंध्यावेधो द्विविधो †वाभ्यङ्गोत्तरश्च । व्यवपि (?) रक्तपर्वसंभवं द्विविधमभिज्ञेयम् । तत्र रक्तमत्रस्खलनात्मकं भवति । पतनप्रभ्रंशनप्लवनविहरणानामेकम् । तस्य खलु लक्षणानि श्वयथुवेदनादाहपरिशोषदौर्मनस्यानि । रक्तजे स्तम्भगतिवेदनाविकल्पानि । यच्चोपरिम्लानं नाम प्रवृद्धे वा शस्त्रकर्मणि वा सिरा यदा विच्छिन्ना स्यादोपतं मा(?)शोणितमावहति गात्रेषु, तदा शोणितक्षयाद्वायुर्गात्राणि शोषयतीति तं गात्रम्लानं विद्यात् । विश्लेषणं नाम विशिष्टं नामास्यामसंवरणसंधावोत्पद्यते ॥

---

* धनुश्चिह्नत्रयगता वर्णा भ्रष्टाः कपुस्तकात् । † 'गुरुहरणं नाम' इति भवेत् ॥ * 'विश्लेषण' इति भवेदुत्तरग्रन्थानुरोधात् । + 'मत्तैर्यैर्व' इति स्यात् । * 'निवृत्ति' इति स्यात् । † 'बाह्योऽन्तरङ्गश्च' इति स्यात् ।

---

१ क. पूर्वोक्तः । २ क. पवन° । ३ क. °मनोत्प° । ४ ख. °धिष्ठगो । ५ ख. पवन° । ६ ख. °नाविकल्पानि ।

सङ्गा इति यदुक्तम्, तद्वक्ष्यामः—संभवति सर्वगात्रेण चेति । पाषाणशर्करोपमर्दनवप्राक्रमणवंशादिस्फोटनशैथिल्यशूलसङ्गो भवति । तत्रोद्घृष्टदग्धस्फुटितशिथिलतलविप्रकीर्णप्रविरलगतिरलसः कर्कट यद्गतिं भजते । प्राप्य चाश्मलोष्ठशरधानवर्ती महीं मन्दगतिरगतिर्वा भवति । शर्करोन्मथितेनतविनतसंधिपार्ष्णिपुरोनखान्तर्नखतलपर्यन्तगतिर्भवतीति तलसङ्गः । प्रस्तब्धप्रोहहरणं कृच्छ्रादवनमनं वा तस्य प्रोहस्येति प्रोहसङ्गः । अपस्कारकक्षविक्षोभस्तम्भः कृच्छ्रादुपवेशनमनुपवेशनं वा निहरणगमनमित्यपस्कारसङ्गः । उरोन्तर्मणिविक्षोभावशेषोत्सङ्गगुहाभागप्रत्यङ्गानामंसदेशानामुद्धरणं गमनप्रवेशनं च स्यादित्युरःसङ्गलक्षणम् । प्रत्यङ्गसांकर्यमुखशिरःशिरोधराणां कृच्छ्रादुद्वहनमित्यंससङ्गः । सर्वलिङ्गं दर्शयन्तो(तः) सर्वसङ्ग इति । सर्वसङ्गे सर्वश्वयथुर्वेदनस्तम्भगतिवैकल्यानि नियतानि भवन्ति । स च त्रिविधः—साध्यो याप्यः प्रत्याख्येयश्चेति । तत्र निर्भुग्नजः सर्व ...... सर्वापर्वभङ्गस्वमध्यव्याधेर्वद्धनपरिग्ला ........ .........†संवत्सरोपलक्षणाद्याप्यानि भवन्ति । शेषाश्च भिषक्सात्म्यौषधकालसंपदा सिध्यन्ति । सीष्टाव(?)द्विविधा प्रतिक्रिया तस्य च ॥

तत्र श्लोकः—

इत्युद्दिष्टः समुद्देशः षडाबाधे यथाक्रमः ।
चिकित्सितमप(त)स्तस्य विस्तरेण प्रवक्ष्यते ॥

अथाऽऽसनस्थं महर्षिमभिवाद्याङ्ग उवाच रोमपादो भगवान्—'यदुक्तं भगवता आगन्तोर्गात्ररोगस्य महाबाधस्य लक्षणम्, तच्छ्रुत्वा महन्मे विकल्पं मनसः । संवृत्तस्य चिकित्सितमुपदेष्टुमर्हसि भगवन्' इति ॥

अथोवाच पालकाप्यः—उक्तं मया स्वादेहसमु(त्थ)स्योत्पत्तिर्लक्षणं चिकित्सितं च प्राणवर्तोर्लक्षणं च । आगन्तोरिदानीं चिकित्सितं वक्ष्यामः । तस्याङ्गानि बहुशः पानीयेन शीतेन सेचयेत् । कुड्यां च रक्तमृत्तिकया लिप्यते । ततः सुरसार्जुने कदम्बकेसरकेतकसप्तच्छदबाणासननीपकुटजपुंनागतिलकाम्रातकपाटलकुवर(रुव)काङ्कोल्लधवधन्वनरक्तोत्पलकह्लारसौगन्धिककुमुदैर्विप्रकीर्णभूमिभागरथैश्च (?) पुष्पजातिभिरार्तवैर्यथोपपथ्याशोभितसाध्या गावः (?)

* 'कशा' इति स्यात् । + स्तलसङ्ग' इति स्यात् । † 'संवत्सरोपेक्षणात्' इति स्यात् ।

१ क. °त्रोष्टदग्धस्य स्फु° । २ ख. °तविन° । ३ क. ख. °पार्ष्णिपु° । ४ क. ख. वातवातस्य । ५ क. °धेववृद्धद्ध° । ६ ख. °ट्यां श्वरक्त° । ७ क. °वलध° । ८ क. °थैकपु° ।

त्वा परिषेकमस्य शीतलेन वारिणा(ह्नि)पस्यावकारयेत् । ततो गुन्द्रामूलको-रुक्षीरेण पेषयेत् ।[1]....... त्वाघृतैरवैश्च पुष्पन्मथ्य(?) कारयेत् । प्रलेपं प्लक्ष-न्यग्रोधाश्वत्थोदुम्बरमधूकरजोहनार्जुनकदम्बत्वग्भिः क्षीरपिष्टाभिः प्रलेपयेद्गा-त्राणि । नलवञ्जुलवेतसेक्षुमालिनां मूलानि यवतिलकसेरुककल्कमिश्राणि सर्पिः-क्षीरेण संयोज्य गात्राणां लेपनं कुर्यात् । कुमुदोत्पलपद्मबिशमृणालशृङ्गाटक-कसेरुकाकल्कपिष्टाः क्षीरघृतसंयुक्ताः प्रलेपः । यवतिलचूर्णानि पद्मककसे-रुककल्कमिश्राणि घृतेन पयसा वाऽऽलोड्य गात्रलेपं कुर्यात् । यवगोधूमतिल-चूर्णानि पद्मककसेरुकमिश्राणि श्लक्ष्णपिष्टानि घृतसंयुक्तप्रलेपः । पोटगलगु-न्द्राणां मूलानि, इक्षुवालिकानां(?) बस्तमूत्रयुतानि पिष्ट्वा क्षीरेण घृतेन च लेपं गात्राणां कुर्यात् । ततश्च प्रदेहान्यथाक्रमं युञ्जीत । अनेन प्रयोगेणाऽऽगन्तुगा-त्ररोगः प्रशान्तिमुपगच्छति । अथ बलातिबलयोः पलशतं तोयविंशतिप्रस्थे जर्जरीकृत्य प्रक्षालितं तच्च पादावशिष्टमवस्थापितं समवर्तितनिष्क्वाथं कृत्वाऽवतारयेत् । पयसश्चत्वारः प्रस्था यष्टिमधुकदेवदारूणां द्विपलं पेष्यम-धिश्रयेत् । तत्र तैः पञ्चतैलप्रस्थान्समालोड्य साधयेत् । सिद्धमप्रतिस्राव्याव-तार्याभ्यङ्गपाननस्तकर्मसु प्रयोजयेत् । तथैनं यवबदरसंयुक्तं सशर्करं शीतलं सपानं पाययेत् । ततश्चैनं शतधौतेन घृतेनाभ्यज्य चन्दनोशीरसारिवाहरिवेर-पद्मकमधूकप्रपौण्डरीकफलैः सघृतैरेभिः प्रलेपयेद्गात्राणि । अजावराहमहिषगो-मेदांसि कुक्कुटीशिशुमारांद्यैः सह विपाचयेत् । गात्राणि चास्याभ्यञ्जयेत् । एतद्भग्नविच्युतचलितं विशिष्टानां चलिसंधानं भवति । काकोलीक्षीरकाकोली-जीवकर्षभर्धिमुद्गपर्णीसारिवानन्तामेदामहामेदायष्टीमधुकससादनत्वग्भिः क्षीरं विपाच्य शीतीभूतं शर्करायुक्तं पाययेत् । सर्पिषा वाऽस्याभ्यञ्जयेद्गात्राणि । अहिंस्राजम्बूत्वचं चूर्णीकृत्य यवकुल्माषनि(मि)श्रेण येनेमे.... साऽप्यपाचयित्वा शीतलेन गात्राणि लेपयेत् । बिसमृणालशृङ्गाटककसेरुकाभिः कल्कपिष्टाभिर्घृ-तसंयुक्ताभिर्गात्राणि प्रलेपयेत् । शाकोदुम्बराणां त्वचं मतवेतस(?)मूले पयसा च सिद्धामवतारयेत् । एतदभ्यङ्गपानबस्तिनस्यकर्मसूपयोजयेत् । तथाऽऽसां गोमहिषाजोवीनां मूत्रपुरीषाणि दधिघृतदुग्धैः संयोज्य क्राथयेत् । तत्र वापे वाल्ली(ह्ली)कंमानीय पत्राणि यवतिलपिष्टलवणानि पाचयित्वा(*तेनास्य सुखो-

* धनुराकारमध्यस्थो भ्रष्टः पाठः कपुस्तके ॥

१ ख. पीषयेत् । २ क. °तैरेवैश्चपु° । ३ ख. °त्वाद्भिः क्षी° । ४ क. °नव° । ५ क. °क्षुमीलि° । ६ क. °वतारितं । ७ क. °रादेः स° । ८ क. °ष्टानि घृतसं-युक्तानि गात्रा° । ९ क. °जातीनां । १० क. °कमपनी° ।

ष्णेन संकरेण गात्राणि प्रस्वेदयेत् । ततोऽस्य गात्राणां मार्दवमुपजायते । व्याधिश्च नश्यति । पुवका दशवारेण घृतेन भोजयित्वा) रसमधुपानं दद्यात् । एतदेव तु दानस्रुतवयःक्षीणनिर्यातव्रणशोषिणां गात्ररोमाविस्रुतानां मोदय(?) मेतेनैव सर्वं शाम्यन्ति । बलवीर्याणि ···· ····वतिप्रमुच्यते ॥

तत्र श्लोकः—

इत्यागन्तोः क्रियाः प्रोक्ता मया पार्थिवसत्तम ।
गात्ररोगस्य नागानां यथावदनुपूर्वशः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने, आगन्तुगात्ररोगो नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

## अथ द्वासप्ततितमोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ।
गात्ररोगाः कतिविधा दन्तिनां संप्रकीर्तिताः ॥
विज्ञानं च कथं तेषां किंच तेषां चिकित्सितम् ।
तन्मे त्वं पृच्छतो ब्रूहि गात्ररोगान्पृथग्विधान् ।
स पृष्टस्त्वङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
रूपतः षोडशविधा गात्ररोगा हि दन्तिनाम् ।
स्तब्धं *निपातं †निष्पिष्टं ‡विहि[1]तमाहतं तथा ॥
शूनं संकुचितं भग्नं *ग्लानमा+वे[2]क्षितं च यत् ।
निर्वेष्टितं च विज्ञेयं मोटितं मथितं तथा ॥
*एकाङ्गशोफमपृष्टच्छिन्नं$ *विच्युतमेव च ।
इति षोडश संस्थाना दन्तिनां गात्रसंश्रयाः ॥
व्याधयस्ते समुद्दिष्टाः शृणु विस्तरलक्षणम् ।
तत्राऽऽदौ स्तब्धगात्रस्य लक्षणं संप्रवक्ष्यते ॥

---

* 'निघातम्' इति पाठो भवेत्, अग्रे 'संनिहन्यते' इति वक्ष्यमाणत्वात् । † 'निपिष्टं' इति त्वग्रिमग्रन्थानुरोधात् । ‡ 'विनतम्' इति युक्तम् 'विनतस्य चिकित्सितम्' इत्यग्रिमग्रन्थानुरोधात् । * 'म्लानम्' इति त्वग्रिमग्रन्थानुरोधात् । + 'आवेष्टितम्' इति त्वग्रे वक्ष्यते । * 'एकाङ्गशोष' इति त्वग्रिमग्रन्थानुरोधात् । $ अपृष्टच्छिन्नस्य निदानलक्षणानि त्वग्रे नोपलभ्यन्ते पुस्तकद्वये । * भ्रष्टशब्देनाग्रे वक्ष्यते ।

---

१ क. °हितं मोहितं । २ क. °क्षितं तथा ॥ नि° । ख. °क्षिते च ।

यतो निमित्तं मातङ्गश्चरणस्तम्भमृच्छति ।
विषमस्थानशयनादजीर्णपथ्यसनादपि ॥
गुरुबन्धप्रयोगाद्वा लङ्घनप्लवनादपि ।
स्तब्धो भवति गात्रेषु ततस्तिष्ठति वारणः ॥
गात्रेणापरया वाऽपि तेनात्यतीव च दुर्मनाः ।
तिष्ठत्यालानमाश्रित्य न च पादेन तिष्ठति ॥
इति स्तब्धं समुद्दिष्टं चिकित्सा तस्य वक्ष्यते ।
सेचनं सर्वगात्राणां तस्य तैलेन कारयेत् ॥
ततः कुर्यादिमं सम्यग्विधिं शास्त्रविनिश्चितम् ।
तस्यायोगुडतप्तेन जलेन परिषेचनम् ॥
कम्बलावृतगात्रस्य कारयेत्सततं भिषक् ।
अथवा शिग्रुवेणूनामुरुबूकार्कयोरपि ॥
वासन्त्याः शीतकल्पस्य तर्कार्याः सुरसस्य च ।
भङ्गानादाय विधिवत्स्थाल्यामाधाय पाचयेत् ॥
अथास्याः कारयेन्नाडीं यथा संप्रति सिद्धये ।
मध्ये वितस्तिविस्तीर्णा मूले चारत्निनिर्मिता ॥
मुखे षडङ्गुला कार्या नाडी तस्या महीपते ।
.... .... ....नाहतसंस्थानवृत्ता गोपुच्छसंस्थिता ॥
तथा स्वभ्यक्तगात्रस्य निवातस्थस्य दन्तिनः ।
हस्तैश्चापि भवेत्कार्यं सर्वतः परिमर्दनम् ।
कुटजस्याग्निमन्थस्य मेषशृङ्गीकपित्थयोः ॥
वरुणभूधककस्य पत्राण्यारग्वधस्य च ।
आनु(ढ)कीं सप्तपर्णं च तथा सैरेयकावुभौ ॥
स्थाल्यामाधाय कर्तव्यो नाडीश्वे(स्वे)दः पुनः पुनः ।
श्वि(स्वि)न्नस्य च भवेत्कार्यं मर्दनं लगुडाद्यनैः (?) ॥
अयमन्यो विधिः कार्यो राजन्मार्दवकारणम् ।
महिषस्य वराहस्य मार्जाराणां गवामपि ॥
खरोष्ट्राणां च मांसानि ग्राह्याण्यस्थीनि चाप्यथ ।
छेदयित्वा ततस्तानि नाडीस्वेदं प्रकल्पयेत् ॥

---

१ ख. °जीर्णपथ्य° ।

यथोक्तेनैव विधिना मर्दनं तस्य कारयेत् ।
कुलत्थानाढकीबीजं बदराणि यवांस्तिलान् ॥
पयसा पञ्चमूलं च स्थाल्यामाधाय पाचयेत् ।
ततोऽस्य कारयेत्स्वेदं नाड्यैव सततं भिषक् ॥
स्विन्नस्य च पुनः कार्यं मर्दनं पूर्वकीर्तितम् ।
न चेदनेन विधिना गात्रं गच्छति मार्दवम् ॥
ततोऽस्य विधिवत्कार्यः फालस्वेदो ह्यनन्तरः ।
समीपे तस्य नागस्य कर्म(र्मो)रावेस(श)नं भवेत् ॥
( *ततोऽस्य पातयेत्फालानग्निवर्णान्भिषक्तथा ।
पटावनद्धगात्रस्य तथा स्निग्धस्य दन्तिनः ॥
तिलसर्षपचूर्णैश्च यवैश्चाऽऽलेपनं भवेत् ) ।
ततः संचारयेत्फालं यथायोगं विचक्षणः ॥
स्विन्ने च विधिवत्कार्यं मर्दनं तस्य हस्तिनः ।
भवेन्न चेत्प्रकृतिमान्पुनस्तस्य समाचरेत् ॥
विधिव्यस्तस्य गात्राणां स्तनानां च निवर्तनम् ।
स(श)णवीर्या(जा)कयोर्मूलमतसीसर्षपानपि ॥
तिलानि बीजनिचये यवान्कृष्णा च मृत्तिका ।
सम्यक्क्षीरेण सिद्धेन सुखोष्णेनाथ सर्वशः ।
कल्केनैतेन नागस्य पिण्डस्वेदं प्रकल्पयेत् ॥
स्विन्नस्य च पुनः कार्यं मुहूर्तमवगाहनम् ।
सलिलेनैव नागानां पुनश्चोत्तार्य कारयेत् ॥
एष एव विधिः कार्यः पिण्डस्वेदे यथाक्रमम् ।
मर्दनं चास्य पूर्वोक्तं नाडीस्वेदं च कारयेत् ॥
अयमन्यो विधिः कार्यः स्तब्धगात्रेषु हस्तिनः ।
प्रसुप्ते येन गात्राणां सर्वतो[२]ऽप्युपशाम्यति ॥
देवदारु हरिद्रां च सह दारुहरिद्रया ।
कुष्ठं रास्नां च कालां च सरलं च पुनर्नवा ॥
एवं संभृत्य संभारं पिण्डस्वेदं[३] प्रकल्पयेत् ।
पूर्वोक्तेन विधानेन मर्दनं च विचक्षणः ॥

---

* धनुश्चिह्नान्तरगतो नास्ति पाठः कपुस्तके ।

---

१ क. °मूलानि स्था° । २ क. °तो यः प्रशा° । ३ क. प्रकल्पयेत् ।

निवातस्थस्य चाभ्यङ्गं मर्दनं तत्र कारयेत् ।
सर्वस्वेदेन नागस्य स्विन्नस्यैव विगाहनम् ॥
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा ।
स्नेहाभ्यङ्गः प्रयोक्तव्यः पृथक्स्विन्नेषु दन्तिनाम् ॥
अथवैतेन कल्पेन विशेषो नोपलभ्यते ।
अथैनं स्नेहयेत्सम्यगेतेन विधिना भिषक् ॥
यवकोलकुलत्थानां निक्वाथं साधु कारयेत् ।
प्रक्षिपेदुच्चकैस्तेन निक्वाथे पञ्चमूलयोः ॥
तत्र तैलं समाश्रित्य ततो मृद्वग्निना पचेत् ।
पच्यमाने ततस्तस्मिन्निमं गर्भं प्रदापयेत् ॥
अनन्ताचन्दनोशीरमशोकं सारिवा घृतम् ।
तथाच क्षीरकाकोली जीवकर्षभकावुभौ ॥
काकोली मधुकं रास्नां सरलं देवदारु च ।
हरेणुकं छिन्नरुहां बलां चात्र प्रदापयेत् ॥
तं स्नेहं पाययेन्नागं भक्तं वा स्नेहसंमितम् ।
एतेन स्निग्धकोष्ठस्य भवेन्मार्दवलाघवम् ॥
गात्राणामुरसश्चास्य प्रमा(सा)दश्चोपलभ्यते ।

---

विभ्रान्तगमनं गात्रं हस्तिनः संनिहन्यते ॥
वेदना शूनभावश्च तस्य संधिषु लभ्यते ।
न च तिष्ठति गात्राणां न च वेल्लयति द्विपः ।
एवं तस्य तु लिङ्गानि अत ऊर्ध्वं चिकित्सितम् ॥
सेचनं घृतमिश्रेण पानमस्य महीपते ।

---

अथो निपिष्टगात्रस्य लक्षणं संप्रचक्षते ।
यतो निमित्तं गात्रेषु गजः स्तम्भमवाप्नुयात् ॥
सहसाऽतिप्रसक्तं च योऽध्वानं नीयते गजः ।
रूपाण्यभिद्रवति वा योऽतिक्रुद्धो मतङ्गजः ॥
संनिपिनष्टि सहसा भूमौ गात्राणि वारणः ॥

---

१ क. °नं च विचक्षणः । स° । २ क. शून्यभा° । ३ क. °थोऽतिपि° । ४ क. °पिष्टति स° ।

तस्य निषेवणाद्गात्रे रुधिरं संप्रदुष्यति ।
श्वयथुस्तस्य गात्रेषु वेदना चोपजायते ॥
प्रोहयोः पादपार्श्वेषु पश्चात्पादतलेषु च ।
प्राहुस्तं विनिपिष्टं तु गात्ररोगं चिकित्सकाः ॥
सेचनं पूर्वगात्राणां सर्पिषा तस्य कारयेत् ।
(*गम्भीरसलीले चैनं नागं तमवगाहयेत् ।
उत्तीर्य च ततस्तस्य घृतमिश्रैश्च सक्तुभिः ।
प्रलेपं सर्वगात्राणां तलानां चैव कारयेत्) ॥
एवं मृत्तिका(क)या चास्य कार्यं शीतलया नृप ।
कुक्कुटीशिशुमाराणामण्डान्याहृत्य शास्त्रवित् ॥
सुरां चिरस्थितां चास्मै दद्यात्फाणितसंयुताम् ।
अपरेद्युः पर्युषितां वारुणीं च महीपते ॥
अतः प्रलेपः शीतोऽयं गात्राणां पूजितो भवेत् ।
कुक्कुटीशिशुमाराणामण्डान्याहृत्य शास्त्रवित् ॥
मञ्जिष्ठां चैव मृद्वीकां पेषयेत्सह सर्पिषा ।
तेनास्य लेपं गात्राणां बहलेन समाचरेत् ॥
पानं चैव यथायोगं पाययेत विचक्षणः ।
विनिपिष्टस्य विज्ञानं चिकित्सा च प्रकीर्तिता ॥

---

अथ त(य)स्य भवेद्गात्रं †चिन्तितं वारणस्य च ।
तस्योत्पत्तिं निदानं च चिकित्सा च प्रवक्ष्यते ॥
स्खलनैर्भ्रंशनैर्वध्यैः(र्वेधैः)पतनैर्लङ्घनैरपि ।
प्रास्तं प्रत्यस्तमत्यस्तं सहसा निघ्नतोऽपि च ॥
क्रौञ्चर्यश्चापि(?) सहसा परिणीतस्य दन्तिनः ।
व्यस्तं वा सहसा वध्यं गात्रेणाभिघ्नतस्तथा ॥
तरणाद्वाऽपि सलिले शिरास्नाय्वभिघाततः ।
प्रस्तम्भितं ततो गात्रं सरुजं दन्तिनो भवेत् ॥

---

* धनुश्चिह्नान्तरगतो नास्ति पाठः कपुस्तके । † 'विनतां' इति युक्तम् 'विनतस्य' इत्यग्रिमग्रन्थानुरोधात् । 'विहितं' इति तु प्रागुपलभ्यते ।

१ ख. °टीसिसुमा° । २ क. विंनितं । ३ क. प्रचक्ष्यते ।

प्रस्तब्धं श्वयथुश्चास्य वारणस्याऽऽशु जायते ।
कुल्माषतिलकिण्वानि क्षीरेण सह [2]पेषयेत् ॥
कृतस्वेदे च कर्तव्यः प्रलेपो घृतसंयुतः ।
पाचयेद्घृतसंसृष्टं चक्रतैलं मतङ्गजः ॥
हस्तेन तस्य गात्राणां मर्द्दनं चापि कारयेत् ।
क्रमव्यायामवृद्धिं च विनतस्य चिकित्सितम् ॥

---

आहतस्यापि वक्ष्यामि चिकित्सां लक्षणानि च ।
यथानिमित्तं मातङ्गश्चरणस्तम्भमृच्छति ॥
मिथ्या च सहसा चैव यो गजः परिणीयते ।
ततस्तस्य भवेद्गात्रं भ्रमणात्सरुजं भृशम् ॥
स गच्छति समुत्लुत्य गात्रमुद्भ्राम्य वा नृप ।
सहसा जायते चास्य श्वयथुर्गात्रसंधिषु ॥
सेचनं सर्वगात्राणां तस्य तैलेन कारयेत् ।
सुखोष्णेन भवेच्चास्य निवृत्तिस्तस्य कर्मणाम् ॥
तर्कार्या उरुबूकाणां शिग्रो रक्तस्य कारयेत् ।
कण्टकारिकयोश्चैव कपित्थस्य तथैव च ॥
पत्रभङ्गान्समादाय निक्काथ्य पञ्चमूलयोः ।
नाडीस्वेदं यथाप्रोक्तं सस्नेहं चैव मर्दनम् ॥
यवचूर्णं च किण्वं च तथा कृष्णां च मृत्तिकाम् ।
अजाकरीषं क्षीरेण सर्पिषा च प्रयोजयेत् ॥
तेन स्विन्नानि गात्राणि बहलेन प्रलेपयेत् ।
तैलयुक्तमजाक्षीरं पानार्थं च प्रदापयेत् ॥
मूत्रं वेणिकया चास्य गात्रयोर्वेष्ट्य बन्धयेत् ।
विसृष्टे च ततः कार्यं सेचनं मर्दनानि च ॥

---

(*गात्रं यस्य भवेच्छूनमपरा वाऽपि दन्तिनः ॥
तस्य लिङ्गानि वक्ष्यामि चिकित्सां च यथाक्रमम् ॥
बलाबलमविज्ञाय सहसा यः प्रमुञ्चति ॥ )

---

* धनुश्चिह्नान्तरगतो नास्तिपाठः कपुस्तके ।

---

१ ख. °ल्मालति° । २ ख. पीषयेत् ।

प्ररोधात्तस्य गात्रेषु कफो वा तस्य कुप्यति ॥
तत्र कोपाच्च शुष्यन्ति सिरा गात्रसमाश्रिताः ॥
ततः प्रस्तब्धचरणस्तेन गात्रोऽवतिष्ठते ॥
न च स्थाने न शय्यायां वारणो लभते सुखम् ॥
सुखोष्णेनाथ तैलेन सेचनं तस्य कारयेत् ॥
नाडीस्वेदं यथाप्रोक्तं सुस्विन्नस्यापि मर्दनम् ॥
जलयुक्तमथो तैलं पानार्थे तस्य युज्यते ॥
शिग्रुं वंशपलाशं च निम्बस्य कुटजस्य च ॥
हस्तिकर्णपलाशानि किणिहीं[1] चैव पाययेत् ॥
नाडीस्वेदो यथा[2] प्रोक्तः[3] स्विन्नस्य च विमर्दनम् ॥
त्वग्भिश्चापि तथा कार्यः प्रलेपो घृतसंयुतः ॥
प्रक्षीणबलमांसो वा मदक्षीणो मतङ्गजः ॥
जायते स यदा भूयः स गजो नैव कार्यते ॥
तूर्णमध्वप्रयोगं वा लङ्घनप्लवनानि च ॥
†आयुर्वध्या मँत्तकासी[4] गोमूत्रं[5] मण्डलानि च ॥
वंशोत्थापनकल्पं च तोयाद्याहरणानि च ॥

—

त(य)स्य कुप्यति भूयिष्ठं पवनो गात्रसंधिषु ॥
संकुच्यते तथा गात्रं वातेनाभ्युक्ष्यतेऽपि वा ॥
प्रोहापस्कारदेहेषु पुनरष्ठीव्ययोरपि ॥
कुचित्य(त)मुग्रमाहुस्तं गात्ररोगं तु दन्तिनाम् ॥
सेचयेत्तस्य गात्राणि तैलेन वसया तथा ॥
कारयेत सुखोष्णेन सप्तरात्रमतन्द्रितः ॥
आरग्वधं सप्तपर्णमाढकीदीर्घवृन्तकौ ॥
कर्णिकारोत्तरू†...... ..... ..... ..... ..... ..... ॥

—

...... ..... ..... ..... .....सं स्थाल्यामाधाय पाचयेत् ॥

---

† आकारः खपुस्तके त्रुटितः । † संकुचितग्रन्थस्यान्तिमो ग्रन्थः, भग्नग्रन्थस्याऽऽदिमो ग्रन्थश्चाऽऽदर्शद्वयेऽपि त्रुटित इव प्रतिभाति ।

---

१ क. ख. किणिह्यां । २ क. यथा । ३ क. प्रोक्तः । ४ क. मत्तकासं । ५ क. गोमूलं ।

नाडीस्वेदं ततः कुर्याद्यथावच्च विमर्दनम् ॥
तिलसर्षपचूर्णेन लेपनं तस्य कारयेत् ॥
अजावराहवसया सह तैलेन घृतेन च ॥
वेसवारकृतं मांसं *दद्यात्सद्यः सुदाहृतम् ॥
न संहरति गात्राणि न च वेल्लयति द्विपः ॥
प्रलेपं तस्य गात्राणां बहलेन समाचरेत् ॥
अथैनं पाययेत्पानं यथायोगं भिषग्वरः ॥
ततो विरिक्तं विज्ञाय बृंहणीयैरुपाचरेत् ॥
संजातमांसं मातङ्गं क्रमात्कर्माणि कारयेत् ॥
सन्ने गात्रेऽपरायां वा कुर्याद्भग्नचिकित्सितम् ॥

---

अथ त(य)स्य भवेन्म्लानं गात्रं वा यदि वा परम् ।
तस्योत्पत्तिं प्रवक्ष्यामि सनिदानं चिकित्सितम् ॥
संग्रामे वा प्रहारैस्तु शस्त्रकर्मणि वा तथा ॥
शिरा रक्तवहा भिन्ना बहु मुञ्चति शोणितम् ॥
ततः कुप्यति गात्रेषु पवनः शोणितक्षयात् ॥
स शोषयति गात्राणि सङ्गं चास्य नियच्छति ॥
तस्य कुर्यादिदं कल्पं निखिलं गात्रशोषिणाम् ॥
सेचयेत्तस्य गात्राणि सर्पिषोष्णेन दन्तिनः ॥
निचुलं फलकल्कं च जलजम्बूस्तथैव च ॥
सघृतं पयसा मिश्रं प्रलेपं तस्य कारयेत् ॥
विधिना च यथोक्तेन स्वेदनं तस्य हस्तिनः ॥
अस्थिस्वेदं च निखिलं फालस्वेदं च कारयेत् ॥
मांसनिर्यूहपक्वं च तैलं चास्मै प्रदापयेत् ॥
सर्पिः क्षीरं वसां चैव विधिना संप्रदापयेत् ॥
म्लानं संवत्सरोत्सृष्टं व्यावेधश्च न सिध्यति ॥
इत्यब्रवीत्पालकाप्यो †म्लानं गात्रं चिकित्सितम् ॥
यस्तु निर्वेष्टितं कुर्यादावेष्टितमथापि वा ॥

---

* 'दद्यात्सद्यस्तदाऽऽहृतम्' इति भवेत् । † 'म्लानगात्राचिकित्सितम्' इति भवेत् ॥

१ क. सुदाऽऽहृतम् । २ क. °शोणितम् । ३ क. निचेष्टितं ।

गात्रं तस्य समुत्पत्तिर्निदानं च प्रवक्ष्यते ।
कर्दमं वालुकां चापि सेवते यदि वारणः ॥
गात्रान्तरश्च सहसा यदा तु परिणीयते ।
भौमकर्मणि वा राजन्गुरुवंछादिसंयुतम् ॥
यदाऽपनीतः सहसा वारणः परिणीयते ।
अतिमात्रं निबद्धं वा यातारः कर्मणे यदि ॥
नियोजयन्ति सहसा मिथ्यायोगादयं(?) हितम् ।
तस्य कुप्यति गात्रेषु मारुतः संनिरोधनात् ॥
आवेष्ट्यते ततो गात्रं ततो निर्वेष्ट्यतेऽपि वा ।
सेचनं घृततैलाभ्यां सततं तस्य कारयेत् ॥
(*नाडीस्वेदश्च कर्तव्यः कल्पेनैतेन दन्तिनः ।
तुलसीं सुरसां बिल्वमर्कमारग्वधं तथा ॥
श्योनाकं चाग्निमन्थं च स्थाल्यामाधाय पाचयेत् । )
नाडीस्वेदं ततः कुर्यात्तैलाभ्यक्तस्य दन्तिनः ॥
निर्भुग्नस्य च कर्तव्यं(:)प्रलेपं(:)तस्य हस्तिनः ।
निर्वेष्टितस्य कर्तव्यं सम्यगावेष्टनं भवेत् ॥
निर्वेष्टयेत्तथाऽप्येनमनेन विधिना भिषक् ।
अभ्यक्तं स्वेदयेत्स्विन्नं सम्यगालेपयेद्भिषक् ॥
प्रलिप्तं वेष्टये····यदु(द्वे)ष्टितवेष्टितम् ।
···· ···· ···· ···· ···· ···· ···· ····लोन्नयेत् ॥
न चेत्प्रकृतिमाप्नोति तथोत्तरमथाऽऽचरेत् ।
इमं कृत्स्नं विधिं कुर्याद्येन लाघवमाप्नुयात् ॥
यथा च स्विन्नगात्रस्य स्नेहपीतस्य दन्तिनः ।
यन्त्रेऽवस्थाप्य कुर्याच्च तस्य गात्रोपवेष्टनम् ॥
ततस्तं परिहस्तस्य मध्ये यन्त्रेन वेष्टयेत् ।
यथायोगं ततः कुर्यात्तेन यन्त्रेण वारणम् ॥
सर्पिस्तैलं वसां चैव तं द्विपं प्रति पाययेत् ।

* धनुश्चिह्नान्तरगतो नास्ति पाठः कपुस्तके ॥

१ क. मिथ्योयोगादयं हि सः । त° । २ ख. अभक्तं । ३ क. न चात्रपेत् । ४ ख. इदं ।

स्निग्धं विर(रि)क्तं विज्ञाय बृंहणीगैरुपाचरेत् ॥

सहसा वाऽपि पतनाद्व्यथनात्प्रतिहस्तिनाम् ।
यदा संभिद्यते गात्रं भिद्यते मर्मवतिपि (?) ।
वामाङ्कु(?)मोंटेना ...... ...... ......व्याधिर्नराधिप ॥
वेदना श्वपथुः स्तम्भो गात्रे तीव्रा च वेदना ।
तस्य वक्ष्याम्यशेषेण निखिलं भेषजं विधिम् ॥
भग्नमात्रस्य यत्प्रोक्तं साधनं भक्तसंविधौ ।
तत्कार्यं मोटनस्यापि व्रणवच्च तमाचरेत् ॥

अथ वोन्मथितं गात्रमपरा वाऽपि लक्ष्यते ।
तस्योत्पत्तिर्निदानं च चिकित्सा च प्रवक्ष्यते ॥
सहसा वा प्रसक्तौ वा यदा वाँह्येत वारणः ।
गात्रापरं भ्रामयति सहसा विषमस्थितः ॥
कर्दमे वालुकायां वा संरब्धो वा न सीदति ।
तरतो वा प्रसङ्गेन सलिलेऽत्यर्थयोगतः ॥
अथवा गुरुसंरब्धः सहसा परिधावति ।
वृक्षप्राकारपरिघान्सहसा वा प्रमर्दतः ॥
ततोऽस्य कुपितो वायू रक्तमादाय तिष्ठति ।
करोति गतिवैकल्यं चरणस्तम्भमेव च ॥
श्वयथुं तस्य गात्रेषु मनस्तापं च दन्तिनः ।
इत्येतद्द्विविधं प्रोक्तं लिङ्गमुन्मथितस्य च ॥
सर्पिषा सेचनं तस्य सततं कारयेद्भिषक् ।
प्रलेपं शीतलं तस्य क्षीरवृक्षैः समाचरेत् ॥
वेतसस्य च मूलानि वटस्याथ नलस्य च ।
कसेरुकं समञ्जिष्ठं नलदं तर्पणं तथा ॥
श्लक्ष्णपिष्टैः समैरेभिः प्रलेपं तस्य कारयेत् ।
त्रिरात्रं पञ्चरात्रं वा ततः संपद्यते सुखी ॥

—:०:—

१ क. °वत्यिपि । २ क. °टनां व्याधियदा वाऽपि नरा° । ३ क. प्रसक्तो । ४ क. वाह्येन । ५ क. °रिवान्स° ।

अजाक्षीरं वसां मज्जां घृतेन सह संसृजेत् ।
ततोऽस्य सेचयेद्गात्रमनेन विधिना भिषक् ॥
मूलान्युत्पलजम्बूनां करवीरोत्पलानि च ।
सघृतं मृत्तिकामिश्रं प्रलेपं तस्य कारयेत् ॥
शीतेनानेन कल्केन विहितं चानुलेपनम् ।
यावदूष्मप्रशमनं श्वयथोश्च निवर्तनम् ।
स्वेदनं मर्दनं चैव प्रथमं यत्तु कीर्तितम् ॥
स्तब्धगात्रे हि तदपि निरूष्मण्युपपादयेत् ।
विविक्तं सततं स्थानं व्यायामं च विसर्जयेत् ॥
सर्पिः क्षीरं च पानार्थे यथोक्तं च प्रलेपने[1] ।

—:○:—

सहसा दन्तिनोऽङ्गेषु यदा कुप्यति मारुतः ॥
ततः पित्तादयो दोषा दुष्यन्ति पवनाहताः ।
स्वस्थस्यास्य तु गात्रेषु श्वयथुं जनयन्ति ते ॥
समागच्छति चैतेन विषमं वाऽपि वर्धते ।
न सुखं लभते स्थाने न शय्यामभिनन्दति ॥
तमाहुर्वारणं वैद्याः शूनमेकाङ्गशोषिणम्[2] ।
ग्रासद्वेषो दौर्मनस्यं सस्त(?)श्रवणवालयोः ॥
दन्तिनो मक्षिकाश्चैव पूर्वलिङ्गानि मृत्यवे ।
विपर्यये तु लिङ्गानां भवेत्साध्यस्य लक्षणम्[3] ॥
श्लीपदान्यपि जायन्ते घोररूपाणि दन्तिनाम् ।
तस्य दोषविशेषं तु परीक्ष्य मतिमान्भिषक् ॥
यथोक्तमेव कुर्वीत पूर्वप्रोक्तमुपक्रमम् ।

—:○:—

*भ्रष्टगात्रस्य विज्ञानं चिकित्सा च प्रवक्ष्यते ॥
यदा क्षितोपविद्धो[4] वा पाशबद्धोऽपि वा गजः ।
शुषिरे कूपपङ्के वा सहसा च प्रधावति ॥
हस्तिना वाऽप्यभिहतस्तोत्रवित्रासितोऽपि वा ।
आक्षेपाज्जायते तस्य श्वयथुर्वातरक्तजः ॥

---

* इतः प्रागपृष्टच्छिन्नस्य लक्षणादि त्रुटितमिति प्रतिभाति ।

---

१ क. प्रलेपनम् । २ ख. °शोकिण° । ३ ख. °म् ॥ श्रीप° । ४ ख. क्षिताप° ।

वेदना गतिवैकल्यं दौर्बल्यं परिमूत्रता ।
गात्रविक्षोभणाद्वाऽपि स्तम्भस्तस्योपजायते ॥
तस्य सर्वाणि गात्राणि सर्पिषा परिषेचयेत् ।
स्निग्धगात्रस्य च †भवेत्सुखं सर्वार्थदेहजम् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने द्वितीये क्षुद्ररोगस्थाने गात्ररोगो नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

इति द्वितीयं क्षुद्ररोगस्थानं समाप्तम् ॥

---

† खपुस्तके तु 'भवे' इत्युत्तरमेव 'इतिश्री'–इति स्थानसमाप्तिलेख उपलभ्यते। कपुस्तके तु 'सुखं सर्वार्थदेहजम्' इत्युत्तरम् । पुस्तकद्वयेऽप्यध्यायसमाप्तिलेखो नोपलभ्यते । अतः प्रतिभाति—'कियान्ग्रन्थभागस्त्रुटितः' इति ॥

## अथातस्तृतीयं शल्यस्थानमारभ्यते ।

'अथातो द्विव्रणीयमध्यायं व्याख्यास्यामः' इति ह स्माऽऽह भगवान्पालकाप्यः ॥

तपोभिर्विपुलैः पूतमृषिं वारणबान्धवम् ॥
बान्धवो विदुषामङ्ग इमं प्रश्नमचोदयत् ॥ १ ॥
योनिर्वस्तून्यधिष्ठानं मर्म शल्यसमुद्भवम् ॥
आ(स्रा)वास्त्वाकृतयश्चैव व्रणानां कतिलक्षणाः ॥ २ ॥
व्रणानां सिद्धिजननाः कति चैषामुपक्रमाः ॥
शास्त्रतः कति बोध्यन्ते व्रणोपक्रमयोनयः ॥ ३ ॥
विसर्पन्ति च केनैषां प्रायसो(शो) दन्तिनां व्रणाः ॥
बद्धकोशाश्च जायन्ते स्वल्पमप्यनि(न)धिष्ठिताः ॥ ४ ॥
ये चैषां दुरधिष्ठाना व्रणास्ते केन हेतुना ॥
अचिराच्चोपरोहन्ति दुष्यन्ति च पुनः पुनः ॥ ५ ॥
केन चैषां न जायन्ते वने दोषोद्भवा व्रणाः ॥
रोहन्ति च विना वैद्यैः केन वै हेतुना द्विज ॥ ६ ॥
ततः प्रोवाच भगवान्पालकाप्यो महामुनिः ॥
अङ्गराजाय निखिलं विधिं व्रणविधानजम् ॥ ७ ॥
व्रणस्य त्रिविधा योनिरात्मा च त्रिविधः स्मृतः ॥
वस्तून्यष्टावधिष्ठानं द्विविधं शास्त्रनिश्चयात् ॥ ८ ॥
द्विविधा चाऽऽकृतिर्योनिः आ(स्रा)वश्च द्विविधः स्मृतः ॥
शल्यं च द्विविधं ज्ञेयं त्रिविधश्चाप्युपक्रमः ॥ ९ ॥
तस्य च त्रिविधा ज्ञेया योनिः शास्त्रविनिश्चयात् ॥
पञ्चैव पठिता राजन्व्रणोपक्रमयोनयः ॥ १० ॥
दुःखाधिष्ठान्तरा राजन्संख्यया न(*व हस्तिनः ॥
इत्युद्दिष्टः समुद्देशस्तत्प्रविस्तरलक्षणम् ॥ ११ ॥

---

* धनुश्चिह्नान्तरगतो भ्रष्टः पाठः कपुस्तके ।

---

१ ख. °यं स्था°। २ क. °पुष्टैरमृत°। ३ क. °मवोचय°। ४ क. सिद्धजनकाः। ५ क. रुहन्ति । ६ क. त्रिविधं ।

व्रणस्य त्रिविधा योनिर्यस्यां वै जायते व्रणः ॥
उद्गमो †वैकृतं दाहस्तस्यापि त्रिविधः स्मृतः ॥ १२ ॥
तत्रास्य उद्गमो ज्ञेयो द्विविधः शास्त्रनिश्चयात् ॥
देहे दोषसमुत्थश्च यश्च याहच्छिको भवेत् ॥ १३ ॥
तत्र वातात्कफात्पित्तान्मेदसः शोणितादपि ॥
उद्गमः संनिपाताच्च जायते दोषसंभवः ॥ १४ ॥
याहच्छिकोऽपि विज्ञेयः स्व(श्व)यथुर्विविधात्मकः ॥
विषाणां चापि संसर्गाद्द्रव्यैश्चैवाभिघाततः ॥ १५ ॥
श्वयथोर्वेदना वातात्पित्तात्पाकः कफाद्गतिः ॥
यस्तत्र बलवान्दोषस्तेन तस्य तदात्मता ॥ १६ ॥
अल्पो वृत्तस्तु कठिनो ग्रन्थिरित्यभिधीयते ॥
पृथुर्यो दीर्घः शोफः स्याद्विद्रधिर्गजकुम्भवत् ॥ १७ ॥
*विकृतानामियं योनिस्तद्विधानं प्रच(व)क्ष्यते ॥
घृष्टं दष्टं क्षतं चैव तस्या भवति लक्षणम् ॥ १८ ॥
तत्र रज्ज्वादिभिर्घृष्टं दष्टं चाऽऽशीविषादिभिः ॥
गजव्रणकरैर्भावैस्तीक्ष्णैर्वैक्षतमुच्यते ॥ १९ ॥
छेदनं व्यधनं चैव द्रव्यैर्नानाविधात्मकैः ॥
अवकृत्तावसृष्टे च पृथगेतच्चतुर्विधम् ॥ २० ॥
ततस्तस्य भवेच्छिन्नं विभागात्पञ्चलक्षणम् ॥
छिन्नं विच्छिन्नमुत्सृष्टमवकृष्टं स (च) दारितम् ॥ २१ ॥
तत्र च्छिन्नमिति ज्ञेयं सर्वशोऽङ्गापवर्तनम् ॥
प्रहारसंनिपातस्तु विच्छिन्नमिति कीर्त्यते ॥ २२ ॥
कर्णलाङ्गूलहस्तानां द्विधाभावस्तु दारितम् ॥
अवकृष्टं तु विज्ञेयमधः †स्यात्वस्थिमांसगम् ॥ २३ ॥
एतदेव विपर्यस्तमुत्कृष्टमिति कीर्त्यते ॥
इति पञ्चविधं छिन्नं विभागात्संप्रकीर्तितम् ॥ २४ ॥
विद्धस्यापि तु विज्ञेयः प्रविभागश्चतुर्विधः ॥
निविद्धमनिविद्धं च विद्धमुत्तुण्डितं च यत् ॥ २५ ॥

---

† 'वैक्षतं, विक्षतं वा स्यादग्रिमग्रन्थानुसारात्। * 'विक्षतानाम्' इति भवेत्, अग्रिमपाठानुसारात्। † 'स्नाय्वस्थिमांसगम्' इति स्यात्।

तत्र मांसार्पितशरं विद्धमित्युपदिश्यते ॥
छिन्द्यात्तु परतो देशे शरेणोत्तुण्डितं भवेत् ॥ २६ ॥
सर्वतो निःसृतशरं निर्विद्धमिति कीर्त्यते ॥
अनिर्विद्धं तु विज्ञेयं किंचिन्निःसृतसायकम् ॥ २७ ॥
†अविकृत्तं तु विज्ञेयं त्रिविधं शास्त्रनिश्चयात् ॥
विरक्तमविरूढं च तथा स्यादवपाटितम् ॥ २८ ॥
तत्र त्वचि विरक्तं स्यात्समांसमवपाटितम् ॥
अवगाढं तु विज्ञेयं भृशमस्थि पदाश्रितम् ॥ २९ ॥
क्लिष्टान्त्रमवच्छिन्नान्त्रमवसृष्टं द्विधा भवेत् ॥
तस्य वक्ष्यामि राजेन्द्र शास्त्रज्ञानेन लक्षणम् ॥ ३० ॥
दौर्मनस्योदराटोपौ सशोणितपुरीषता ॥
मन्दग्रासाभिलाषश्च शोणितस्य च मेहनम् ॥ ३१ ॥
एतद्भवति विज्ञानं छिन्नान्त्रस्येह दन्तिनः ॥
तदेवंलक्षणं नागं प्रत्याचक्षीत शास्त्रवित् ॥ ३२ ॥
अपाटिते त(तान्त्र)मेव स्याच्छ्रमश्चैव सवेपथुः ॥
छिन्नावपाटिताभ्यां तु यत्तद्भिन्ने.............. ॥ ३३ ॥
भवेज्ज्वरस्त्रि(स्तृ)षा मूर्छा हिक्का श्वासश्च दारुणः ॥
नाभ्याटोपो दौर्मनस्यं सशोणितपुरीषता ॥ ३४ ॥
नातिवातानुलोम्यं च क्लिष्टान्त्रस्येह लक्षणम् ॥
कृच्छ्रसाध्यो भवत्येष बलवान्ग्रासवांश्च यः ॥ ३५ ॥
अन्त्रघातो भवत्येष साध्यासाध्यश्चतुर्विधः ॥
इति विक्षतजा योनिर्व्रणानां संप्रकीर्तिता ॥ ३६ ॥
इयं दाहात्मिका योनिस्तृतीया संप्रच(व)क्ष्यते ॥
तत्राग्न्यादित्यकुविषैरौषधैर्विच्युताऽपि वा ॥ ३७ ॥
उत्पत्तिर्या व्रणस्य स्यात्सा योनिर्दाहसंभवा ॥
अज्वाल(लो) ज्वालसंयुक्तस्तत्राग्नि(ग्ने)र्द्विविधो व्रणः ॥ ३८ ॥
विद्युद्वारिहतश्चोक्तः सूर्यदाहकृतो व्रणः ॥
शेषैर्यथास्वं जायन्ते दाहैर्व्रणकरैर्व्रणाः ॥ ३९ ॥

† 'अवकृत्तम्' इति तु प्राक्स्थितम् ।

१ क. °ष्टान्तस्ये° । २ क. °च्युतोऽपि ।

इति दाहात्मिका योनिरशेषेण प्रकीर्तिता ॥
इति व्रणानां निर्दिष्टा योनिस्त्रिविधलक्षणा ॥ ४० ॥

—:○:—

अत ऊर्ध्वमधिष्ठानं प्रवक्ष्याम्यष्टलक्षणम् ॥
त्वङ्मांसस्नायुधमनीशिरामज्जास्थिसंधयः ॥ ४१ ॥
अधिष्ठानानि जानीयाद्व्रणानां शास्त्रनिश्चयात् ॥
एतेषां व्रणवस्तूनामष्टानामपि लक्षणम् ॥ ४२ ॥
यैः श्रा(स्रा)वैर्व्यज्यते ज्ञानं तान्वक्ष्याम्यनुपूर्वशः ॥
स्रावस्तु द्विविधो ज्ञेयः शुद्धो दुष्टश्च भूमिप ॥ ४३ ॥
तत्र दोषान्वितो दुष्टः शुद्धो दोषविवर्जितः ॥
स तु वस्तुविशेषेण चतुर्विंशतिलक्षणः ॥ ४४ ॥
पैत्यते तस्य वक्ष्यामि विज्ञानं शास्त्रनिश्चयात् ॥
शुक्लः कृष्णोऽथ हारिद्रः श्यामो माञ्जिष्ठ एव च ॥ ४५ ॥
कषायस्तैलसंकाशो घृताभः फेनसंनिभः ॥
पूयविण्मूत्रमस्तिष्कक्षारशुक्रवसाजलैः ॥ ४६ ॥
मांसधावनमूषाभो यवनिष्क्वाथसंनिभः ॥
तिलकल्कसुरामज्जमेदोवर्णोऽथ पिच्छिलः ॥ ४७ ॥
चतुर्विंशतिरित्युक्ताः स्रावा विविधलक्षणाः ॥
पिच्छिलो विशदो वाऽपि स्रावः स्वच्छः प्रवर्तते ॥ ४८ ॥
व्रणाद्यस्मात्स विज्ञेयो दन्तिनां त्वग्गतो व्रणः ॥
मांसधावनयूषाभः स्रावो मांसगतो भवेत् ॥ ४९ ॥
मञ्जिष्ठासृक्कषायाणां स्रावस्तुल्यः सिराश्रयात् ॥
यवनिष्क्वाथसदृशः स्रावः स्नाय्वाश्रिताद्व्रणात् ॥ ५० ॥
शुक्लाभः पिच्छिलोऽल्पश्च भवेत्संधिगताद्व्रणात् ॥
धमनीभ्यः प्रस्रवति जलफेनसमप्रभः ॥ ५१ ॥
तुषारहारिद्रनिभः स्रावः स्यादस्थिजाद्व्रणात् ॥
तिलकल्कप्रसन्नाभस्तैलाभो वा सचन्द्रकः ॥ ५२ ॥
मज्जामिश्रः स्रवेच्चापि व्रणान्मज्जसमाश्रयात् ॥
मर्मणो यस्य यत्स्थानं स्रावस्तत्र तदात्मकः ॥ ५३ ॥

---

१ क. तु दोषवि°। २ क. पच्यते । ३ क. °ष्कक्षीर° । ४ क. °मज्जामे° । ५ ख. °द्यस्य स वि° । ६ क. °य्वाश्रयाद्व° । ७ क. °रिद्रानलः स्रा° ।

स्यात्तु वेदनया युक्तो विशेषान्मर्मजो व्रणः ॥
स्रोतांसि यानि यान्भावान्प्रस्रवन्तीह दन्तिनाम् ॥ ५४ ॥
तेषु व्रणविभिन्नेषु स एव स्रवति स्रवः ॥
द्विविधं स्यादधिष्ठानं व्रणानां प्रविभागतः ॥ ५५ ॥
विज्ञेयं दुरधिष्ठानं स्वा(स्व)धिष्ठानं तथैव च ॥
तत्र तावत्प्रवक्ष्यामि दुःस्वाधिष्ठानमादितः ॥ ५६ ॥
हस्ते मर्मसु कोष्ठे च धमनीष्वथ संधिषु ॥
सिरास्नाय्वस्थिषु तथा दुरधिष्ठानजा व्रणाः ॥ ५७ ॥
स्वधिष्ठानास्तु शेषेषु विज्ञेया वस्तुषु व्रणाः ॥
दुःस्वाधिष्ठानहेतूंश्च प्रवक्ष्याम्यत उत्तरम् ॥ ५८ ॥
तत्रोपद्रवबाहुल्याद्दुःखो मर्माश्रितो व्रणः ॥
सतताभ्यवहारेण दुःखः स्याद्धमनीव्रणः ॥ ५९ ॥
असृक्स्रुतेः शिराजस्तु चलनात्संधिदेशजः ॥
स्वकर्मविक्रियाभावाद्दुःखः स्याद्धस्तजो व्रणः ॥ ६० ॥
स्नायुजालाकुलभयाद्दुःखः स्नाय्वाश्रयो व्रणः ॥
कोष्ठजो दुश्चिकित्स्यः स्यात्समानानिलदूषणात् ॥ ६१ ॥
अस्थिजः स्नेहमांसाभ्यां रहितो नोपरोहति ॥
मज्जातिस्रवणाद्दुःखो भवेन्मज्जाश्रयो व्रणः ॥ ६२ ॥
व्रणस्य त्रिविधस्त्वात्मा शास्त्रतः संप्रवक्ष्यते ॥
सुचिकित्स्योऽचिकित्स्यश्च दुश्चिकित्स्यश्च लक्षणैः ॥ ६३ ॥
तत्र पद्मपलाशाभः स्वाकृतिर्लाजगन्धिकः ॥
सुचिकित्स्यः स्वधिष्ठानो व्रणोपद्रववर्जितः ॥ ६४ ॥
यस्तु वातादिभिर्दोषैर्दूषितः कठिनो महान् ॥
स शल्यविषकोशाग्निसंस्थानः स्थानदोषवान् ॥ ६५ ॥
अतिस्थूलं कृशं वाऽपि यो गजं समुपाश्रितः ॥
परुषः कठिनः कृष्णो दुश्चिकित्स्यः स उच्यते ॥ ६६ ॥
दुश्चिकित्सितरूपस्य यो लिङ्गैरन्वितो व्रणः ॥
अनिष्टैश्चाप्रशस्तैश्च गन्धैर्यश्च समन्वितः ॥ ६७ ॥

---

१ क. °सि योनिजान्भा° । २ ख. हस्तम° । ३ क. °ष्ठेषु ध° । ४ क. भवेत् । ५ क. °जः स्नायुमां° । ६ क. °प्रचक्षते । ७ क. °तिर्वाज° । ८ क. °न् । शल्यविषमको° ।

बालार्केन्द्रधनुर्वर्णः शिखिकण्ठनिभोऽपि वा ॥
व्रणो यः सोऽचिकित्स्यः स्यात्क्षमेद्यत्र न च क्रिया ॥ ६८ ॥
व्रणे शल्यं तु विज्ञेयं द्विविधं शास्त्रनिश्चयात् ॥
शारीरं चैव बाह्यं च तस्य वक्ष्यामि लक्षणम् ॥ ६९ ॥
तृणकाष्ठायसादीनि बाह्यं शल्यं व्रणाश्रयम् ॥
शारीरं त्वस्थिपूयासृङ्मांसस्नायुशिराश्रयम् ॥ ७० ॥
दोषो यांता भिषक्चैव यदृच्छा च मतङ्गजः ॥
पञ्चैव पठिता राजन्व्रणोपद्रवयोनयः ॥ ७१ ॥
तत्र तावत्प्रवक्ष्यामि प्रथमं क्रमयुक्तितः ॥
गन्धवर्णस्रवाकारैर्वातादिभिरुपद्रुतान् ॥ ७२ ॥
तत्र विण्मूत्रबस्तीनां सगन्धः परुषः कृशः ॥
प्रभूतकृष्णश्रा(स्रा)वश्च स्याद्व्रणः पवनातुरः ॥ ७३ ॥
शुकहारिद्रकाचाभः शिखिकण्ठप्रभोऽपि वा ॥
व्रणस्तद्वर्णनिस्रावः सदोष्णश्चैव यो भवेत् ॥ ७४ ॥
कषायो गैरिकनिभः प्रस्रावो यः सवेदनः ॥
तिक्ताम्लकुणपैर्गन्धैर्युक्तः पित्तातुरो भवेत् ॥ ७५ ॥
सू(शू)नः स्तब्धो गुरुः शीतः सुप्तोऽन्तःपिटकाश्चितः ॥
यश्चाम्बुपिच्छिलस्रावी पूयं वा यः परिस्रवेत् ॥ ७६ ॥
दूयते बहलोष्णश्च कण्डूमान्सपरिग्रहः ॥
कपोतपाण्डुवर्णाभो यश्च स्यात्तुल्यगन्धिकः ॥ ७७ ॥
विपन्नमत्स्यमांसानां स कफेनाऽऽतुरो व्रणः ॥
कुलत्थवर्णं रक्तं वा यः स्रवेद्बहुवेदनः ॥ ७८ ॥
दूयते दह्यते चैव प्रस्रवेद्गैरिकोपमम् ॥
रक्ताभं संस्रवेद्विस्रं स्याद्व्रणः शोणितातुरः ॥ ७९ ॥
दोषाणां दोषयोर्वाऽपि यथास्वं दोषलक्षणैः ॥
विज्ञेयः संनिपातेन दन्तिनां दूषितो व्रणः ॥ ८० ॥
शुक्लः शीतो मृदुश्चैव वसामज्जापरिस्रवः ॥
पक्षिनीडसुगन्धिश्च स्याद्व्रणो मेदसाऽऽतुरः ॥ ८१ ॥

---

१ क. °स्यात्क्रमेद्यत्र च विक्रियाम् ॥ व्र° । २ क. याति । ३ ख. °पन्नः ॥ । ४ क. शान्तो ।

इति वातादिभिर्दुष्टः षड्विधः कीर्तितो व्रणः ॥
व्रणदोषान्प्रवक्ष्यामि यातृदोषकृतान्नृप ॥ ८२ ॥
यदा युनक्ति मातङ्गं याता कर्मण्यमात्रया ॥
तस्य यातुरविज्ञानाद्व्यायामाद्दीर्यते व्रणः ॥ ८३ ॥
व्रणदोषास्तु वक्ष्यन्ते हस्तिवैद्यापराधजाः ॥
¹अयथावत्प्रयुक्तैश्च शस्त्राग्निक्षारभेषजैः ॥ ८४ ॥
अज्ञानाद्वा प्रमादाद्वा व्रणे वैद्योऽपराध्यति ॥
कामक्रोधभयाद्वाऽपि वारणोऽप्यपराध्यति ॥ ८५ ॥
ततः प्रकुरुते दोषान्व्रणेष्वात्मापराधजान् ॥
अथ दोषान्प्रवक्ष्यामि यातृदोषकृतांस्तथा ॥ ८६ ॥
यदा तुहिम(न)या ²नागं पाता कर्मण्यमात्रया ॥
यस्य यातुरविज्ञानाद्व्यायामाद्दीर्यते ³व्रणम् ॥ ८७ ॥
दोषवैद्यमहामात्रैरातुरेण च वर्जितः ॥
यदृच्छयोपपन्नैस्तु दोषैर्यादृच्छिको व्रणः ॥ ८८ ॥
वृत्ता च चतुरस्रा च द्विविधा योनिराकृतेः ॥
व्रणानां शास्त्रनिर्दिष्टा विज्ञेया स्यात्समासतः ॥ ८९ ॥
सा च गात्रप्रदेशानां शस्त्राणां च विभक्तितः ॥
प्रहर्तॄणां च वैशेष्याद्विशेषाल्लँभते बहून् ॥ ९० ॥
यथा रोगा न जायन्ते वनेषु वनचारिणाम् ॥
वनानुचरिताध्याये तदस्माभिः प्रकीर्तितम् ॥ ९१ ॥
निसर्गात्⁴सात्म्यतः पीते जले पांशुप्रमा⁵थतः ॥
विना वैद्यैः प्ररोहन्ति द्विरदानां वने व्रणाः ॥ ९२ ॥
शुषिरं मृदु चैतेषां मांसं मेदःसमन्वितम् ॥
तेनैषामीषदुन्मृष्टा व्रणाः सर्पन्ति ⁶सर्वतः ॥ ९३ ॥
कोशवन्तश्च जायन्ते प्रायसो(शो)दन्तिनां व्रणाः ॥
स पुनर्वक्ष्यते हेतुर्दन्तनाडीचिकित्सिते ॥ ९४ ॥

—:०:—

शुद्धश्चैवाऽप्यशुद्धश्च संरूढश्चैव सर्वतः ॥
त्रिविधस्तु व्रणो ज्ञेयो विकृतोद्गमदाहजः ॥ ९५ ॥

---

१ क. अथ याव° । २ क. नागमापातात्कर्ममा° । ३ ख. व्रणः । ४ क. °र्गात्सितः पीतज° । ५ क. °मादतः । ६ क. सर्वशः

तत्र जिह्वातलसमः पद्माभो लाजगन्धिकः ॥
व्रणः शुद्धोऽभिविज्ञेयो व्रणोपद्रववर्जितः ॥ ९६ ॥
व्रणस्त्वशुद्धो विज्ञेयो यः शुद्धस्य गुणोदयैः ॥
गन्धवर्णश्र(स्र)वाकारैर्विपरीतैः समन्वितः ॥ ९७ ॥
व्यायामं चातिमांसं च यः सर्वं सहते व्रणः ॥
रोहमाणं भिषग्विद्यान्नीरुजं निरुपद्रवम् ॥ ९८ ॥
ईषत्संजातरोमाञ्चत्वक्सवर्णश्च यो भवेत् ॥
एतच्छास्त्रविनिर्दिष्टं संरूढस्य हि लक्षणम् ॥ ९९ ॥

—:○:—

व्रणस्योपक्रमो ज्ञेयस्त्रिविधस्त्रिविधात्मनः ॥
शोधनं रोपणं चैव सवर्णकरणं तथा ॥ १०० ॥
तत्राशुद्धो भवे[2]त्साध्यः शुद्धे रोपणमिष्यते ॥
संरूढस्याथ कर्तव्या सवर्णकरणक्रिया ॥ १ ॥

—:○:—

उपक्रमस्यापि भवेद्योनिस्त्रिविधलक्षणा ॥
आयसी चौषधी चैव या च निर्वापणाश्रया ॥ २ ॥
आयसी त्विह या योनिः प्रथमा संप्रकीर्त्यते ॥
शस्त्रपत्रैषणीसूच्यस्तस्या भेदश्चतुर्विधः ॥ ३ ॥
तत्र च्छेद्यं च भेद्यं च लेख्यं विस्राव्यमेव च ॥
दालनं चैव विज्ञेयं कर्म शस्त्रस्य पञ्चधा ॥ ४ ॥
एषण्याऽन्वेषणं कर्म व्रणावस्थाविकल्पितम् ॥
याः सूच्यस्त्रिविधाः प्रोक्ताः शस्त्राध्याये तु संस्थिताः ॥ १०५ ॥
नागदन्ताकृतिर्वृत्ता त्रिकोणा चेति निश्चयात् ॥
अस्थ्याश्रितं नागदन्त्या मांसजं च त्रिकोणया ॥ ६ ॥
त्वक्स्नायुधमनीस्थं[3] च शिराजं चैव वृत्तया ॥
आहार्यं सर्वयन्त्राणां सूच्या सीवनमिष्यते ॥ ७ ॥
सूत्रस्नायुशणद्रव्यैरेभिः संसीवनं भवेत् ॥
वृद्धिपत्रेण नागानां कुर्याच्छेदनभेदने ॥ ८ ॥
लेखनं मण्डलाग्रेण कर्तव्यं दन्तिनां भवेत् ॥
श्र(स्र)वणं पाटनं चैव कुर्याद्व्रीहिमुखेन तु ॥ ९ ॥

---

१ क. ॰षच्छमाजा॰ । २ क. ॰वेच्छोध्यः । ३ क. तु ॥ अस्थिमृ॰

स्थिरा मृद्वी च कर्तव्या व्रणानामेषणी भवेत् ॥
वृत्ता गण्डूपदमुखी प्रमाणे त्रिंशदङ्गुली ॥ ११० ॥
सुवर्णरूप्यताम्राणामायसी शृङ्गजाऽपि वा ॥
दन्तास्थिवेणुदारूणामेषणी दारुणा भवेत् ॥ ११ ॥
एते त्वष्टाविह ज्ञेया व्रणस्योपक्रमाः पृथक् ॥
आयसीं संस्र(श्रि)ता योनिं शृणु चैषामुपक्रमम् ॥ १२ ॥
यो न गच्छेत्प्रशमनं स्व(श्व)यथुः प्रविलापनैः ॥
तस्य विश्रा(स्रा)वणं कार्यं भवेत्पक्कस्य भेदनम् ॥ १३ ॥
दालनं विषमे पाके बहुलौष्टस्य लेखनम् ॥
उद्गमस्य कठस्थस्य सर्वत्राऽऽच्छेदनं हितम् ॥ १४ ॥
यथायोगं तु कर्तव्यं गतेरन्वेषणं व्रणे ॥
द्विविधस्य तु शल्यस्य यन्त्रैराहरणं भवेत् ॥ ११५ ॥
सूच्या संसीवनं कार्यं तत्र भागेषु दन्तिनाम् ॥
दारितानां व्रणकरैः सद्यः सरुधिरे व्रणे ॥ १६ ॥
शस्त्रं सुतिर्यगूर्ध्वं वा भिषगस्थिगतं तथा ॥
सिरामर्माभिघाताद्वा प्रमादान्न निपातयेत् ॥ १७ ॥
यस्तु यन्त्रशरैर्वाऽपि दन्तैर्वा प्रतिहस्तिनाम् ॥
स्याद्व्रणश्छिद्रपिशितो मर्म वा किंचिदाश्रितः ॥ १८ ॥
तस्मात्प्रच्छन्नपिशिते कार्यं कार्यवशाद्भवेत् ॥
उन्मार्गच्छेदनं वैद्यैर्मर्मसंरक्षणाद्व्रणे ॥ १९ ॥
इत्येते शास्त्रनिर्दिष्टा व्रणसिद्धावुपक्रमाः ॥

—:○:—

आयसीप्रभवा राजन्कार्या नानाविधात्मकाः ॥ १२० ॥
शस्त्रकर्मणि निर्युक्ते बलिहोममयी क्रिया ॥
व्रणशान्तिर्भवेत्कार्या यथोक्ता यन्त्रकर्मणि ॥ २१ ॥
औषधीसंश्रिता योनिः पृथक्शोधनरोपणे ॥
इमे विशेषा विज्ञेयास्त्वष्टौ शास्त्रविनिश्चयात् ॥ २२ ॥
वर्तिः कषायः कल्कश्च घृतं तैलं रसक्रिया ॥
चूर्णं धूपनमित्याहुर्विभागादष्टमं पदम् ॥ २३ ॥

---

१ क. मता । २ क. °वैशश्छेद° । ३ क. °च्छिन्नपि° । ४ ख. निर्दिष्टे । ५ क. °षायकल्कस्य घृ° । ६ क. रसक्रिये ।

उपक्रमविधिस्त्वन्यः शास्त्रयोगात्प्रवक्ष्यते ॥

—:०:—

ओषधीसंश्रिता योनिस्त्रयोविंशतिलक्षणा ॥ २४ ॥
विलायनं पाचनं च भेदनं पीडनं तथा ॥
सादनोत्सादने चैव कृमिघ्नमथ चापरम् ॥ १२५ ॥
लेपः स्वेदोऽगदः क्षारो मृदुदारणयोः क्रिया ॥
बृंहणं चापकर्षश्च संधानं शिशिरक्रिया ॥ २६ ॥
शोणितस्थापनं चैव कण्डूघ्नं धावनं तथा ॥
प्रसादनं च वर्णश्च सवर्णकरणं तथा ॥ २७ ॥
बन्धकल्पश्च विज्ञेयस्त्रयोविंशतिमं पदम् ॥
व्रणावस्थान्तराच्चैषां प्रयोगः संप्रवक्ष्यते ॥ २८ ॥
श्वयथोरविदग्धस्य कार्यं स्यात्प्रविलायनम् ॥
विदह्यमाने कर्तव्यं श्वयथोः पाचनं भवेत् ॥ २९ ॥
पक्वस्य तु भवेद्भेदस्तथा शोधनरोपणम् ॥
छवीसवर्णकठिनं परुषं वाऽपि वर्णतः ॥ १३० ॥
मन्दोष्माणं तथा स्तब्धमाममित्यभिलक्षयेत् ॥
विवर्णं नातिकठिनं सोष्माणं वेदनार्दितम् ॥ ३१ ॥
विदह्यमानं जानीयाच्छ्वयथुं कुशलो भिषक् ॥
सर्वतो मार्दवं शैत्यं पाण्डुता शीर्णरोमता ॥ ३२ ॥
वेदनोपशमश्चैव श्वयथोः पक्वलक्षणम् ॥
दुष्टकृशातिभीरूणां व्रणान्संवृतदेशजान् ॥ ३३ ॥
सूक्ष्मांश्चानतिपक्वांश्च भेदनीयैरुपाचरेत् ॥
वेदनाबहुले दृष्टे शिरामर्मसमाश्रिते ॥ ३४ ॥
संधिजे वाऽपि कर्तव्यं दन्तिनां पीडनं व्रणे ॥
केवलं यस्तु संधानमल्पदोषो न गच्छति ॥ १३५ ॥
संधानं तस्य कर्तव्यं संधानीयैरुपक्रमैः ॥
अस्थिस्नायुगतं दुष्टं तनु स्वल्पमुखं व्रणम् ॥ ३६ ॥
गतिमन्तमजिह्मं च शोधयेद्वर्तिशोधनैः ॥
पिच्छिलं विस्तृतं क्लिन्नं दुर्गन्धं पूतिवद्व्रणम् ॥ ३७ ॥

---

१ क. °त्प्रचक्षते । २ क. प्रमादनं । ३ क. °मिधीयते ॥ वि° । ४ ख. °ल्पसुखं । ५ क. °न्धं स्रोतव° ।

प्रचलं पूतिमांसं च कषायैः शोधयेद्भिषक् ॥
आवृतं पूतिभिर्मांसैः स्नायुजालसमाकुलम् ॥ ३८ ॥
सप्लोतमवदीर्णं च शोधयेत्कल्कशोधनैः ॥
एवमेवातिसंरब्धं गम्भीरमतिवेदनम् ॥ ३९ ॥
संवृतं रुधिराश्रा(स्रा)वं शोधयेद्घृतशोधनैः ॥
सहसा न प्ररोहन्तं तनुदोषमवेदनम् ॥१४०॥
व्रणं मार्दवसंपन्नं शोधयेत्तैलशोधनैः ॥
स्नायुर्वा यत्र मांसं वा प्राग्दुष्टं नापनीयते ॥ ४१ ॥
कषायशोधनैस्तत्र कर्तव्यं चूर्णशोधनम् ॥
सपूतिमांसः सास्रावो यो व्रणो नोपरोहति ॥ ४२ ॥
उत्तांना तत्र कर्तव्या शोधनार्थं रसक्रिया ॥
बहुदुष्टपरिश्रा(स्रा)वे कुर्यात्प्रक्षालनक्रियाम् ॥ ४३ ॥
कण्डूमत्यपि कर्तव्यः कण्डूघ्नः स्यादुपक्रमः ॥
गतिमत्कठिनौष्ठं च कण्डूमन्तं प्रभेदिनम् ॥ ४४ ॥
दुष्टमांसाङ्कुरयुतं क्षारेणोपचरेद्व्रणम् ॥
अतिप्रवृत्ते रुधिरे शोणितस्थापनं भवेत् ॥ १४५ ॥
क्रिमिभिर्भक्ष्यमाणस्य क्रिमिघ्नः स्यादुपक्रमः ॥
उत्सन्नस्य भवेत्सादः सन्नस्योत्सादनक्रिया ॥ ४६ ॥
स्थिरत्वं मृदुनः कार्यं मार्दवं कठिनस्य च ॥
उष्णदोषातुरे शैत्यं स्वेदः शीतानिलातुरे ॥ ४७ ॥
नाभिरोहति वातार्ते व्रणे धूपनमिष्यते ॥
मेदसा युतमांसानां पवनः परिकुप्यति ॥ ४८ ॥
स्थूलानां व्रणमांसेषु ततस्तानपकर्षयेत् ॥
क्षीणानां न प्ररोहन्ति व्रणा मांसविवर्जिताः ॥ ४९॥
तस्मात्तेषां भवेत्कार्यं बृंहणं क्रमयुक्तितः ॥
वातादीनां तु ये लिङ्गा दोषैः षड्भिर्विवर्जिताः ॥ १५० ॥
जिह्वातलसमः शुद्धस्तं व्रणं रोपयेद्भिषक् ॥
तत्राल्पदोषप्रस्रावं गतिमन्तमवेदनम् ॥ ५१ ॥

---

१ क. °वेदिन° । २ क. °म्दुष्टमप° । ३ क. °तिनामा संश्रावो । ४ ख. °त्तानस्तत्र । ५ ख. उष्णो दो° । ६ क. °तुरैः शै° । ७ ख. तु यो लिङ्गं दो° ।

वर्त्या संरोपयेद्वैद्यो हस्तिनां व्रणमुत्थितम् ॥
ईषत्तु विषमं निम्नं मृदुमांसमवेदनम् ॥ ५२ ॥
अशीघ्ररोहिणं चैव कषायेणोपरोहयेत् ॥
व्रणं पाकात्प्रसर्पन्तमतिस्नेहादरोहणम् ॥ ५३ ॥
मांसे वा त्वचि वा जातं रोपयेत्कल्करोपणैः ॥
निम्नमीषद्विश्र(स्र)वेण किंचित्पित्तसमन्वितम् ॥ ५४ ॥
स्थैर्यादनुपरोहन्तं रोपयेत्सर्पिषा व्रणम् ॥
ईषद्वातातुरं सिद्धं भिषग्व्रणमवेदनम् ॥ ५५ ॥
रोपणीयेन तैलेन शास्त्रदृष्टेन साधयेत् ॥
प्रशान्तोपद्रवं स्निग्धमतिस्नेहाद्विसर्पिणम् ॥ ५६ ॥
रोपयेत्स्थिरमांसं च व्रणं चूर्णेन दन्तिनाम् ॥
मृदुमांसस्त्वतिस्नेहाद्यो व्रणो नोपरोहति ॥ ५७ ॥
स रसक्रियया साध्यो मृदुमांसश्च संधिजः ॥
वातश्लेष्मोच्चयात्क्लिन्नं रोपयेद्भूप योगतः ॥ ५८ ॥
शुद्धाशुद्धे भवेद्देयो दन्तिनामगदो व्रणे ॥
यथा स्वमष्टवर्गेण सम्यग्वर्त्यादिना भवेत् ॥ ५९ ॥
सिरास्नाय्वस्थिकोष्ठेषु तथा संधिषु च व्रणाः ॥
गम्भीरा विषमस्थूलास्त्ववगाढा गुरुक्रमाः ॥ १६० ॥
साध्या बन्धादिना त्वेते बन्धस्तु व्रणशोधनः ॥
समो गाढोऽथ शिथिलो व्रणबन्धः प्रकीर्तितः ॥ ६१ ॥
कण्ठे मेण्ढ्रे तथा नाभ्यां पार्ष्णिग्रीवासु पार्श्वयोः ॥
बस्तिशीर्षे च राजेन्द्र समो बन्धस्तथोदरे ॥ ६२ ॥
गाढः शिरसि कर्तव्यः स्फिक्कक्षे च सपिण्डके ॥
हन्वोः पृष्ठे गुदे कण्ठे बाह्वोः स्कन्धे तथा त्रिके ॥ ६३ ॥
व्रणबन्धस्तु कर्तव्यः शिथिलः सर्वसंधिषु ॥
सोष्माणो रक्तपित्ताभ्यां संरब्धाः सविषाश्च ये ॥ ६४ ॥
व्रणा विसर्पिणो ये च बन्धस्तेषां न शस्यते ॥
यो बन्धमवबन्धं च विद्यात्सम्यग्विचक्षणः ॥ १६५ ॥

---

१ क. संगोप° । २ क. °गदे व्र° । ३ क. °णाः । यथा । गम्भीरवि° । ४ क. गुरुक्रमैः । ५ क. बध्यादि° । ६ क. सपिण्डकौ ।

स बध्नीयाच्च शिथिलो बन्धः स्तब्धो न वामतः ॥
अपीडया सुखं रोहेच्चापि पित्तहतो भवेत् ॥ ६६ ॥
निवसेदौषधं बन्धाद्वायुः श्लेष्मा च शाम्यति ॥
नाबन्धनाय बन्धं च वातिबन्धं च सारिकम् ॥ ६७ ॥
बद्धाबद्धं न शिथिलं भ्रग्नी(?) जानाति मापतिम्(?) ॥
न रोपयेच्च पीडेत[1] वस्त्रेण बाध्यते च तत् ॥ ६८ ॥
सायाह्ने चौषधेनैन[2] सम्यक्शुद्धस्य वै गुणाः ॥
अशुद्धं साधयेच्चास्य शुद्धं तु रोपयत्यपि ॥ ६९ ॥
संगृह्णात्यौषधं वाऽपि सम्यग्बद्धस्य लक्षणम् ॥
हेमन्ते शिशिरे चैव वसन्ते च विमोक्षयेत् ॥ १७० ॥
द्व्यहाद्व्यहाच्छरद्ग्रीष्मे वर्षास्वपि च बुद्धिमान् ॥
प्लोतैः कार्पासकैः क्षौमैः कौशेयैश्च विचक्षणः ॥ ७१ ॥
पत्रैर्वल्कैश्च ताम्रैश्च तथा स्याल्लोहपट्टकैः ॥
व्रणा बन्ध्या यथालाभमुपनाहैश्च तत्त्वतः ॥ ७२ ॥
येन येन च बन्धेन यो व्रणः सुखबन्धनः ॥
स तेन तेन बन्धेन बन्धितव्यो विजानता ॥ ७३ ॥
इत्येवं बन्धकल्पस्तु व्याख्यातस्ते यथाक्रमम् ॥

---

व्रणाः शिशिरसात्म्यानां नागानां बन्धनोष्मणा ॥ ७४ ॥[3]
प्रायः शुषिरमांसत्वाद्विसर्पन्ति समन्ततः ॥
तस्माद्ये स्वेदनैः साध्यास्तान्व्रणान्बन्धयेद्भिषक् ॥ १७५ ॥
बन्धयोगवहां बुद्धिं कृत्वैषां प्रविचक्षणः ॥
उपरूढस्तु वैवर्ण्यं यदि वातादिभिर्भवेत् ॥ ७६ ॥
व्रणस्तस्य भवेत्कार्यं वैद्यैर्वर्णप्रसादनम् ॥
सवर्णकरणं कार्यमुपरूढे व्रणे भवेत् ॥ ७७ ॥
इत्येते शास्त्रतः प्रोक्ता व्रणसिद्धावुपक्रमाः ॥

---

उपक्रमाणामेषां तु यथोक्तानां विभागशः ॥ ७८ ॥

---

१ क. च। २ क. पिण्डेत। ३ क. °धे चैव स°। ४ क. ख. °यः सुखिर°। ५ क. °दनेऽसा°।

योगान्वक्ष्यामि यो येन सुप्रयुक्तेन सिध्यति ॥
काकादनी शुकनासा तथाऽपामार्गतण्डुलाः ॥ ७९ ॥
रोहिषाहिंस्रवरणं बिल्वं कुष्ठं पुनर्नवा ॥
शार्ङ्गेष्ठारग्वधः[1] कालाबृहत्यौ देवदारु च ॥ १८० ॥
कपित्थबाणटिण्डूक[2]तगराश्मन्तकाक्षिका ॥
मेदा च कृष्णगन्धा च हरिद्रा तालपत्रिका ॥ ८१ ॥
त्रिफला नीलपुष्पी च शतपुष्पा त्रिकण्टकम् ॥
कदरः सोमवल्कश्च कुबेराक्ष्यस्थिरोहिणी ॥ ८२ ॥
तालपत्री च कुष्ठं च फलानि निचुलस्य च ॥
एभिः कार्यं यथालाभं श्वयथोः प्रविलायनम् ॥ ८३ ॥

—:○:—

सुपिष्टैश्च सुखोष्णैश्च निरूषैर्वाऽपि कारयेत् ॥
कुलत्थयवगोधूममाषकिण्वातसीतिलाः ॥ ८४ ॥
बीजान्येरण्डशणयोः कर्पास्या मूलकस्य च ॥
सर्षपाश्चेति पिष्टानि प्रलेपः पाचनो भवेत् ॥ १८५ ॥
श्वयथोरुष्णलवणस्निग्धश्चाम्लश्च दन्तिनाम् ॥
किणिही चित्रकश्चैव निकुम्भः सुरदारु च ॥ ८६ ॥
तगरं मातुलुङ्गं[3] च त्रिवृता च समांशतः[4] ॥
गोमूत्रपिष्टैर्योगोऽयं स्व(श्व)यथूनां प्रपाचनः[5] ॥ ८७ ॥
करवीरोष्ट्रटामूलं मूलं धत्तूरकस्य च ॥
लाङ्गली हरितालं च शुक्तगोमूत्रपेषितम् ॥ ८८ ॥
श्वयथोर्विषयुक्तस्य भवेत्पाचनमुत्तमम् ॥

—:○:—

चित्रकश्चिरबिल्वं च कोशातक्याः फलानि च ॥ ८९ ॥
मुष्ककः शृङ्गवेरं च लाङ्गलक्यक्षपीलुकौ[6] ॥
सुवर्णक्षीरिणी चैव स्नुह्यर्कक्षीरमेव च ॥ १९० ॥
सुधा सुवर्चिका चैव तुरङ्गी कटंशर्करा[7] ॥
कपोतोन्दुरगृध्राणां[8] विष्ठा पारापतस्य च ॥ ९१ ॥

---

१ क. °धः सारिवाबृ° । २ क. °टिण्टूक° । ३ ख. मातुलिङ्गं । ४ क. समांसतः । ५ क. प्रपाचनम् । ६ क. °ङ्गलीकक्षपी° । ७ क. °टकर्क° । ८ क. कपातोद्रूर° ।

अग्निको गृहधूमश्च भवेद्भेदनमेकशः ॥
काकनासाक्षिविट्क्षारैर्भेदयेच्छस्त्रवर्जितम् ॥ ९२ ॥

—:○:—

शाल्मली शल्लकी गोजी कर्णिकारोषधन्वनः ॥ ९३ ॥
मधूकोऽश्मन्तकाकोलरोहिषं धातकी तथा ॥
मधुकं मधुपर्णी च जीवकर्षभकावुभौ ॥ ९४ ॥
बला विदारी मञ्जिष्ठा यथालाभं प्रपीडनम् ॥

———

सूच्या चैवौषधैश्चैव संधानं द्विविधं स्मृतम् ॥ १९५ ॥
तत्र वक्ष्यामि संधानमौषधैर्यत्प्रकीर्तितम् ॥
प्रपौण्डरीकं मधुकं मञ्जिष्ठा रोध्रमञ्जनम् ॥ ९६ ॥
प्रियङ्ग्वोषपत्तङ्गं व्रणसंधानमिष्यते ॥

———

दन्ती श्यामा यवक्षारः स्वर्जिका चित्रकः सुधा ॥ ९७ ॥
क्षवकः शङ्खिका[1] किण्वं महावृक्षार्कयोः पयः ॥
लाङ्गलिक्याक्षिकौ चैव पिप्पलीमूलमेव च ॥ ९८ ॥
एतन्मधुसमायुक्तं व्रणशोधनमुत्तमम् ॥
कृष्णमुष्ककपत्राणि महावृक्षत्वगेव च ॥ ९९ ॥
दन्त्यर्कमूले लवणं प्रकच्छमूत्रपेषितम्[2] ॥
हरितस्मर्कयैर्युक्तं व्रणशोधनमुत्तमम् ॥ २०० ॥
शोभाञ्जनकमूलं च तिलक्षारं तथैव च ॥
भल्लातकं यवक्षारं क्षारमिक्षुरकस्य च ॥ १ ॥
कुष्ठं चातिविषां चैव दन्ती कटुकरोहिणी ॥
तेजोवती हरिद्रे द्वे श्लक्ष्णकल्कं प्रदापयेत् ॥ २ ॥
सैन्धवेन समायुक्तो नाड्याच(?) व्रणशोधनम् ॥
विदारी करवीरश्च नक्तमालेऽथ मार्कवः ॥ ३ ॥
सुरसाखदिरौ निम्बौ भांण्डी[3] जाती वटस्तथा ॥
तर्कार्यङ्कोल्लशाङ्खिन्यः सप्तपर्णो हरीतकी ॥ ४ ॥
हरिद्रा चाश्वगन्धा च कषायः शोधनं भवेत् ॥
चित्रकस्त्रिवृता दन्ती श्यामा लाङ्गलकी तथा ॥ २०५ ॥

---

१ क. शङ्खिनी । २ क. °कचूर्णं च । ३ क. भाङ्गी ।

पटोली काकजङ्घी च द्रवन्ती कृतवेधना ॥
हरिद्रा निम्बपत्राणि तथा कटुकरोहिणी ॥ ६ ॥
अजेशृङ्ग्यश्वपत्राणि घृताक्तं कल्कशोधनम् ॥
तृ(त्रि)वृता शृङ्गवेरं च स्नुह्यर्कक्षीरमेव च ॥ ७ ॥
तेजोवती लाङ्गलकी कुष्ठं हिंस्रा च चित्रकः ॥
रजनी सैन्धवं चैव तथा कटुकरोहिणी ॥ ८ ॥
पिप्पलीमूलनिर्यूहैः शुद्धं सार्वविशोधनम् ॥
बृहती कटुका रोध्रं कोशातक्याः फलानि च ॥ ९ ॥
मदनं त्रपुसी काला सर्षपा रजनी तथा ॥
पिप्पल्यश्चाश्वगन्धा च मूर्वा पोताऽथ चित्रकः ॥ २१० ॥
दुष्टानामरुजामेतत्तैलं शोधनमिष्यते ॥
त्रिफलातगरोशीरं हरिद्रा तालपत्रिका ॥ ११ ॥
मुस्ता दारुहरिद्रा च (*कर्पासीपत्रमेव च ) ॥
तथैव दन्त्याः पत्राणि सुमनःकरवीरयोः ॥ १२ ॥
एतत्कालायसे पात्रे सम्यक्क्वाथमधिश्रयेत् ॥
कासीसं मधु गोमूत्रं मरिचं चात्र दापयेत् ॥ १३ ॥
सुसिद्धा तु भवेत्कार्या शोधनीया रसक्रिया ॥
एरण्डपत्रं लवणं तिलास्तृ(स्त्रि)वृतया सह ॥ १४ ॥
(*शोधनं वातदुष्टेषु व्रणेष्वेतद्विधीयते ॥
हरिद्रा मधुकं चैव तिलास्तृ(स्त्रि)वृतया सह) ॥ २१५
शोधनं पित्तदुष्टेषु रक्तजेषु प्रशस्यते ॥
सैन्धवं च हरिद्रे द्वे तिलास्तृ(स्त्रि)वृतया सह ॥ १६ ॥
मधुकं निम्बपत्राणि श्लेष्मदुष्टेषु शोधनम् ॥
हरितालं च किण्वं च स्वर्जिकाऽथ मनःशिला ॥ १७ ॥
रसाञ्जनं च दन्ती च निकुम्भाऽतिविषा तथा ॥
तथैरावणिकामूलं लाङ्गलिक्याश्च चूर्णयेत् ॥ १८ ॥

---

* कपुस्तके त्रुटितम् ॥

---

१ क. काकजङ्घ्या । २ क. °जमृग्यश्व° । ३ क. °ता च चि° । ४ क. °मवश्र° । ५ क. काशीसं । ६ क. च सर्जि° ।

एतद्व्रणानां विज्ञेयं समासं(शं) चूर्णशोधनम् ॥

सैन्धवक्षौमशस्त्राणि लेखनं त्रिविधं स्मृतम् ॥ १९ ॥
तत्र वक्ष्यामि यो येन व्रणो लेखनमर्हति ॥
उत्सन्नं कठिनौष्ठं च व्रणं शस्त्रेण लेखयेत् ॥ २२० ॥
श्यावं नीलावभासं च सैन्धवेनावलेखयेत् ॥
व्रणं क्षौमेण मृदुना सरुजं लेखयेन्मृदु ॥ २१ ॥
इत्येतदभिनिर्दिष्टं त्रिविधं व्रणलेखनम् ॥

सर्षपा लशुनं चैव वार्ताकी सौरसो रसः ॥ २२ ॥
नागरं गृहधूमश्च फणिज्जकरसस्तथा ॥
एतद्गोमूत्रसंयुक्तं सुव्यक्तलवणीकृतम् ॥ २३ ॥
कण्डूविलयनं श्रेष्ठं दन्तिनामरुजां भवेत् ॥
मरिचान्यजगृङ्गी च सर्षपाः सफणिज्जकाः ॥ २४ ॥
सैन्धवं लशुनं चैव कृमिघ्नः स्यादुपक्रमः ॥

—:():—

कषायैर्विधिना लेपैश्चूर्णयोगैश्च कारयेत् ॥ २२५ ॥
व्रणानां मृदुमांसानां निपुणां दारणक्रियाम् ॥
कषायवृक्षचूर्णेन भस्मना गोमयस्य च ॥ २६ ॥

—:():—

भस्मना तु नवानां वा शोणितस्थापनं भवेत् ॥
तत्रासिद्धौ भवेत्कार्यमसृक्स्थापनमग्निना ॥ २७ ॥

—:():—

तोपिकाफालजाम्ब्वोष्टैस्तप्ततैलेन वा पुनः ॥
तालपत्री विडङ्गानि मञ्जिष्ठा मधुकस्तथा ॥ २८ ॥
रजनी मधुपर्णी च तथाऽपामार्गतण्डुलाः ॥
उत्सादनं भवेदेतद्व्रणानां घृतसंयुतम् ॥ २९ ॥
इमामन्यां प्रवक्ष्यामि पुनरुत्सादनक्रियाम् ॥
काकादनी शुकनासा सुवहा तालपत्रिका ॥ २३० ॥

१ ख. °मवस्त्रा° । २ क. लेषये° । ३ क. °लेषनम् । ४ ख. कखायै° । ५ क. गोपयितस्य । ६ क. तालिका° ।

काकोली क्षीरकाकोली जीवकर्षभकावुभौ ॥
मांषपर्ण्यश्वगन्धा च मुद्गपर्णी तथैव च ॥ ३१ ॥
एतदप्यभिजानीयाद्घृतमिश्रं प्रलेपनम् ॥

—:○:—

सर्पिर्मांसरसः सर्वे(?)क्षीरं वाऽपि तथौदनः ॥ ३२ ॥
सुखोष्णं कालयोगेन मृदूकरणमिष्यते ॥

—:○:—

एष एव भवेदुष्णः स्वेदः शीतातुरे व्रणे ॥ ३३ ॥
अजाक्षीरेण वा सिद्धः पायसः स्वेदनो भवेत् ॥

—:○:—

वचा विषघ्ना कुष्ठं च तिलकल्कः ससैन्धवः ॥ ३४ ॥
व्रणे तच्छोधनं ज्ञेयं दन्तिनां विषदूषिते ॥
नलवेतसमूलानि चन्दनोशीरसारिवा(ः) ॥ २३५ ॥
मृणालोत्पलपत्रं च पद्मिन्याश्चैव कर्दमः ॥
यानि धान्यानि शीतानि तैर्घृताक्तैः प्रलेपयेत् ॥ ३६ ॥

—:():—

गतोष्मणामत ऊर्ध्वं क्षारयोगः प्रवक्ष्यते ॥
पाटला चारिमेदश्च स्फूर्जको धवमुष्ककौ ॥ ३७ ॥
करवीरं कदम्बश्च मधूकः सर्ज एव च ॥
एतेषां भस्मना क्षारः कर्तव्यस्तत्र चाऽऽवपेत् ॥ ३८ ॥
सैन्धवं च विडं चैव क्षारोऽयं व्रणशोधनः ॥

—:():—

खदिरः शिंशपासारो निर्मूलाऽथ प्रियङ्गवः ॥ ३९ ॥
भद्रमुस्ता विडङ्गानि तगरं चन्दनागुरू ॥
अलक्तकं नागपुष्पं तथा चाशोकरोहिणी ॥ २४० ॥
शतपुष्पा शिलापुष्पं पटोलं निम्बमेव च ॥
श्रीवेष्टकः सर्जरसः स्थौणेयं नलदं तथा ॥ ४१ ॥
एष कार्यो यथायोगं धूपः स्याद्व्रणरोपणः ॥
(*विदारमूलचूर्णानि क्षौमं च घृतसंयुतः ॥ ४२ ॥

* खपुस्तके त्रुटितः ॥

१ क. माखप° । २ क. °प्यवजा° । ३ क. °तारुणे व्र° । ४ क. स्फूर्जवेधचशुष्ककौ । ५ क. वाजयेत् ।

एषोऽपि विहितो धूपो गजानां व्रणरोपणः) ॥

—:०:—

बला चातिबला चैव कुशमूलं तथोषटा ॥ ४३ ॥
मधुगन्धाऽश्वगन्धा च वर्तिः स्याहुष्टिरोहिणी ॥
जीवन्ती चाश्वकर्णश्च कुम्भी काक्षीव एव च ॥ ४४ ॥
विदारी चारिमेदश्च पलाशः किणिही धवः ॥
आरग्वधोऽथ टिण्टूको मञ्जिष्ठा मधुकं तथा ॥ ४५ ॥
अश्वगन्धा च गोजी च क्षीरवृक्षत्वचस्तथा ॥
एष कल्को भवेद्देयो रोपणो घृतसंयुतः ॥ ४६ ॥

—:०:—

स(श)ल्लकी क्षीरवृक्षश्च मधूकाश्मन्तकासनाः ॥
जीवन्ती चारिमेदश्च कुम्भी काक्षीव एव च ॥ ४७ ॥
आदारी चाश्वकर्णश्च पलाशः कुटजस्तथा ॥
व्रणानां रोपणं चैव कषायं कथितं भवेत् ॥ ४८ ॥

—:०:—

भार्गी सर्षपगन्धा च मञ्जिष्ठा रजनीद्वयम् ॥
स्वयंगुप्ता च पाठा च घृतं रोपणमिष्यते ॥ ४९ ॥
एतैस्तु कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥
जलाढके समावाप्य शनैर्मन्दाग्निना पचेत् ॥ २५० ॥
छिन्नभिन्नेषु विद्धेषु नाडीदुष्टव्रणेषु च ॥
*दिग्धविद्धेषु वाऽप्येतद्घृतं शोधनरोपणम् ॥ ५१ ॥
चन्दनागुरुमञ्जिष्ठाशतपुष्पाप्रियङ्गवः ॥
बला कालानुसारी च शतपुष्पाः हरेणवः ॥ ५२ ॥
तालीपत्रं च तगरं रोध्रं व्याघ्रनखं († तथा ॥
भद्रदारु ) तथैला च द्वे हरिद्रे पुनर्नवा ॥ ५३ ॥
कुष्ठं प्रपौण्डरीकं च अञ्जनं मधुकं मधु ॥
मधूच्छिष्टेन संयुक्तं तैलं रोपणमिष्यते ॥ ५४ ॥

---

* 'दग्ध' इति प्रतिभाति । † कपुस्तके त्रुटितम् ॥

---

१ क. स्यात्कुष्ठरो° । २ क. °श्वगन्धा च कु° । ३ ख. °चाश्वकर्णश्च । ४ ख. चारिमेदश्च । ५ क. चैतत्कषा° । ६ क. हरीतकी । ७ क. तालीसपत्रं त° । ८ क. °थैचले द्वे ।

निम्बार्करजनीपत्रैर्मृगाक्ष्या मूलसंयुतैः ॥
पचेत्तैलं भिषग्धीरो व्रणरोपणमुत्तमम् ॥ २५५ ॥
एतैरेवौषधैः सर्वैः शिंशपासारमिश्रितैः ॥
दुष्टव्रणेषु राजेन्द्र तैलं रोपणमुत्तमम् ॥ ५६ ॥

—:०:—

प्रियङ्गुका सर्जरसः पुष्पकासीसमञ्जनम् ॥
रोचना मधुकं रोध्रं चूर्णं रोपणमिष्यते ॥ ५७ ॥

—:०:—

तिनिसार्जुनसर्जानां शिंशपासोमवल्कयोः ॥
खदिरस्य च निष्क्काथो निम्बस्य च समावपेत् ॥ ५८ ॥
रसाञ्जनं रोहिणीं च मातुलुङ्गरसस्तथा ॥[1]
कासीसं हरितालं च रोपणी स्याद्रसक्रिया ॥ ५९ ॥
(†व्रणदोषाविरोधेन यथासात्म्यं यथावयः ॥
यथाग्नि चेति कर्तव्या क्षीणानां बृंहणक्रिया ॥ २६० ॥)
गौरी हरिद्रे मधुकं मञ्जिष्ठा नीलमुत्पलम् ॥
पटोलारिष्टपत्राणि मालतीनक्तमालयोः ॥ ६१ ॥
घोण्टाफलत्वङ्मञ्जिष्ठा फलिनी रोध्रमेव च ॥
एतेनैव विधानेन क्रमयुक्तेन दन्तिनाम् ॥ ६२ ॥
स्थूलानां ह्रासनं कार्यं व्रणिनां भिषजा भवेत् ॥
सोमवल्कप्रवालानि मदयन्ती मनःशिला ॥
मधुकं चेति जानीयाद्व्रणवर्णप्रसादनम् ॥ ६३ ॥
मधुकं मधु मञ्जिष्ठा क्षुद्रैला गोशकृद्घृतम् ॥
सवर्णकरणं ज्ञेयं दूर्वा सकटशर्करा ॥ ६४ ॥
इतीदं पालकाप्येन द्विव्रणीयस्य लक्षणम् ॥
कृत्स्नं भगवता प्रोक्तमङ्गराजाय धीमते ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥ २६५ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने श्रीपाठे वृद्धोपदेशे तृतीये शल्यस्थाने द्विव्रणीयो नाम प्रथमोऽध्यायः ॥ १ ॥

---

† कपुस्तके त्रुटितम् ।

---

१ ख. °तुलिङ्ग° ।

## अथ द्वितीयोऽध्यायः ।

प्रतपन्निव भास्वन्तं मयूरकवचं दिवि ।
ऋषिं ब्रह्मविदां श्रेष्ठमादित्यसमतेजसम् ॥
अङ्गराजो महाबुद्धिः पालकाप्यं स्म पृच्छति ।
द्विविधस्य व्रणस्येह निदानं सचिकित्सितम् ॥
गजानां ब्रूहि तत्त्वेन तत्त्वार्थकुशलो ह्यसि ।
इत्येवमुक्तः शिष्येण ब्रह्मर्षिरखिलं ततः ॥
व्याजहारोत्तरं श्रीमान्वाक्यं वाक्यविदां वरः ॥

अथातः सद्यःक्षतं नामाध्यायं व्याख्यास्यामः । इति ह स्माऽऽह भगवान्पालकाप्यः ।

इह खलु भो(ः) सद्यःक्षतमखिलमादावेव शृणु भद्रमुख, शरशक्त्यृष्टितोमरपरश्वधविषाणाद्यभिहतशरीरा रुधिरैमुद्वमन्त इह गजा दृश्यन्ते व्रणेभ्यः, व्याघ्रसिंहनखदंष्ट्रावलुप्ताश्च । तेषां व्रणाभिघातलक्षणमशेषेण स्थानगतिसंस्थानप्रमाणविशेषांश्च वक्ष्यामः ।

तत्र द्विविधो ह्यात्मा व्रणानाम्—आगन्तुः शरीरसमुत्थश्च । तत्राऽऽगन्तुरेकः । स तु नानाशस्त्राभिघातविशेषादनेकाकृतिविशेषान्पुष्णाति । तत्राऽऽकृष्टशरासनविप्रमुक्तस्येषोश्चतुर्विधो गतिविकारः प्रादुर्भवति—विद्धस्तुण्डितोऽतिविद्धो निर्विद्ध इति । तत्र पञ्चविधसंस्थानगतिविचारमाचष्टे तं कर्णिकानालिकानाराचार्धचन्द्रवत्सदन्तैर्गम्भीरगतिविषयमेकतो गतिभेदमुपगतं विद्धं विद्यात् । (*तुल्यवेगमतिसंस्थानप्रचारमीषत्पतनत्त्वचो विशेषगतिनिर्भिन्नान्तरत्वचमुत्तुण्डितं विद्यात् । उभयतो निर्भिन्नसायकं त्वङ्मांसशिरास्नायू......द्धमभिविद्धं विद्यात् । एवमेव विद्धोत्तुण्डिताभिविद्धगतिमतीत्य शरीरमपास्य यत्सायको व्रजति तं निर्विद्धम् ।

प्रायस(श)स्तु महाकायत्वाद्वारणानाम्, अल्पप्राणत्वाद्व्यधकानामुत्तुण्डिताभिविद्धनिर्विद्धानि मन्दमुपलभ्यन्ते ॥

उद्भ्रान्तविप्लुतातिविद्धनिसृतां गतिमुपगच्छतां व्रणानां छिन्नविच्छिन्नदारितावनष्टोन्नष्टानामित्यत्र पञ्चविधो व्रणविच्छेदविशेषोऽभिवर्तते । तत्र यदङ्गं

* कपुस्तकत्रुटितोऽयं पाठः ॥

१ क. °र्षिस्तं ततः पुनः ॥ व्या° । २ क. °रमन्तर्देहा ग° । ३ क. °तोऽभिवि° । ४ क. °नालीकाकारावर्ध° ।

परशुपट्टिशकरपत्रैरशेषं निवर्त्यते तच्छिन्नमिति विद्यात् । तत्र तत्रैवानेकशोऽङ्गे तिर्यगुपगतः प्रहारसंनिपातो यत्र दृश्यते तद्विच्छिन्नमिति विद्यात्। अङ्गुल्यग्राभ्यन्तरे हस्ते लाङ्गूले नखे शिरसि कर्णयोर्वा यत्र द्विधा भेदमभिवर्तते तं दारितं विद्यात् । यदनुलोमं यावदस्थि कृत्यते मांसमेदःशिरास्नायूपगतं तदवनष्टं विद्यात् । अवनष्टादविशेषेण केवलं प्रतिलोममुन्नष्टं विद्यात्।) तत्र तदवच्छिन्नं विच्छिन्नं दारितमवनष्टमुन्नष्टमतिविद्धावकृत्तसंभवानि (?)।

अवमृष्टं द्विविधम्—गम्भीरान्तरगतत्वाद्विपुलमुखत्वाच्च । व्रणस्यावकृन्तनात्सहसाऽन्त्राण्यवसरन्ति तदा छिन्नान्त्रं क्लिष्टान्त्रं वा विद्यात् । छिन्नान्त्रस्य रुधिरं मेहनात्प्रवर्तते, सर्वशस्त्रादभीक्ष्णमुद्विजति, अस्रं चोष्णमुद्वमति, उन्नद्धकुक्षिः क्षितितलमभिगम्य पतति भूमाविति, मुहुर्मुहुर्हस्तं गृह्णाति । अस्य विपर्यये क्लिष्टान्त्रम्। क्लिष्टान्त्रे तु क्रियां प्रयुञ्जीत।

तत्र तावदवकृत्तमाचार्यास्त्रिविधमुपदिशन्ति—विरक्तावपाटितावगाढम् । तत्रान्तर्लोहितमुपगतमांसश्वेतमीषत्संचयोपगतं विरक्तं विद्यात् । अण्डकोशबस्त्युदरगुदेषु पार्श्वयोर्मूर्ध्नि गात्रापरे हस्ते वा यावदामांसमवगतमवपाटितं विद्यात् । परशुपट्टिशकरपत्रादिघातैरङ्गप्रत्यङ्गेषु यावदस्थ्न्युपगतमवगाढं विद्यात्।

गात्रापरग्रैवेयरज्जुभिर्गाढबन्धननिमित्तैः……………रास्या भागोपगतैश्चातिकर्कशैर्निघृष्टं भवति ।

तत्राशनिपतनजतुमधूच्छिष्टगुडामेध्यपाचकाकाशीर्वि(वि)षाङ्गारैर्दग्धमुत्पद्यते। तत्र ज्वालाङ्गारपरंपराबाष्पसंतापात्मकं पञ्चविधं दग्धं ब्रुवन्त्याचार्याः। तत्र पञ्चविधस्याग्नि(पि)दग्धस्य पिपासा त्वक्शोषो वेपथुः श्वयथुरिति सामान्यवेदनात्मकानि लिङ्गानि भवन्ति ।

अथ त्वग्गतोष्मण्यभ्यन्तरगतेऽग्नौ नात्यर्थदाहस्फोटाः संभवन्ति त्वग्गताः।

मांसगते त्वनले प्रकुथितमांसेजाऽसृग्गतिगमनं च भवति ।

यदा त्वङ्मांसमभिभूय शिरास्नायूपगतो भवत्यनलः, तदा मूर्छति, अत्यर्थं कालपर्ययाच्च व्रणेषु संरोहत्सु सिरास्नायूनां संकुचनं भवति ॥

त्वङ्मांसशिरास्नायुमार्गमतीत्य यदा हुतभुगभिभवत्यनेकपम्, तदा दाहमूर्छाभ्रमकम्पप्रमोहा यथोक्तानि च त्वङ्मांसशिरास्नायुलिङ्गानि भवन्ति ।

---

१ क. °न्त्रेषु क्रि° । २ क. °तमिषक्संच°। ३ °ररागैरेयं र°। ख. °रग्रैवेयं र° । ४ क. रास्योप° । ५ क.° त्यर्क कालपर्याया° । ६ क. संहरत्सु ।

मर्मगते यथोक्तानां मर्मणां लिङ्गानि भवन्ति । प्राणवियोगश्चात्यर्थद-ग्धस्य वारणस्य ॥

यदा तु गोपुराट्टालकाद्यभिभर्वतो वारणस्योल्काज्वालावलीढं भवति शरीरम्, तदा रोमत्वंग्ज्वलनं भवति । अङ्गारामेघ्यगुडमधूच्छिष्टस्य जतुभिरवलीढगात्रस्य भूयो भूयः श्यावता भवति । तत्र द्विविधमेव परंपरादाहमिच्छन्ति—द्रवेण वा स्थिरेण वा । तयोस्तु लिङ्गसामान्य·······भिहतदेहानां विद्युद्विस्फोटनाद्वैरवं स्वरमभिशृण्वतां हृदयमवदीर्यते द्विरदानां केषांचित् । घोरघोषत्वात्केचिद्धाधिर्यमेवाऽऽप्नुवन्ति । केचित्त्वभिहतदेहा गतासवो भवन्ति । अत्यर्थाध्वगमनाद्दिवसकरकराभिहतदेहस्य संतापाद्रुक्षेभ्यो रुधिरागमः, पिपासात्वक्संकोचोरुस्तम्भाः, श्र(स्र)स्तकरचरणकर्णवालमेहनत्वं च भवति । स दिवसकरकरदग्धतनुर्यदा ग्रहणमुपगतो भवति द्विरदपतिः, ततोऽस्य मनस्तापः, यवसकवलकुवलानामुपयुक्तानां स विदाहमुपजनयति । स विदग्धो धातुत्वङ्मांसधमनीसिरास्नायूनां भूयो भूयो विदाहमभिनिवर्तयति । तस्य संतापदग्धोत्पन्नास्तीक्ष्णवेदनाः शरीरे कृष्णपर्यन्ताः सिताः स्फोटाः शोषरुग्दाहप्राया भवन्ति । इत्येतत्संतापदग्धस्य लक्षणम् ॥

अभ्यांसादाशीर्वि(वि)षाणां निःश्वासघ्राणनयनैः संमूर्छितकोपानां संनिपाताद्विरदपतिगात्रेषु रक्तमण्डलानि प्रादुर्भवन्ति । प्रियङ्गुतण्डुलवर्णैः स्फोटैरुपचयोऽप्रतिकारोऽस्य मांससादः पिपासा वेपथुर्वमथुरभीक्ष्णं संभवति । इत्येतदाशीर्वि(वि)षदग्धलक्षणं भवति । इति सद्यःक्षतदग्धमशेषेणोक्तमस्माभिः ॥

व्रणस्तु सर्व एव किंचित्कालमागन्तुर्भूत्वा दोषाणामन्यतमसंसर्गमुपगम्य सदोषो भवति । तस्याऽऽकृतिविशेषाद्व्रणकरणविशेषाणामन्यतमेनाऽऽहतस्य तच्चिकित्सितमुपदेक्ष्यामः—

अथ सद्यःक्षतं मधुघृताभ्यक्तं कृत्वा विमलशिशिरसलिलं द्विरदमवगाहयेत्रिरात्रम् । एवं क्रमेणानुबध्नीयात् । ततः क्लिन्नोत्थितव्रणमपि विज्ञेयपूतिमांसावनद्धमुत्सङ्गयुक्तं गत्या वा ततः शस्त्रेण पूतिमांसं विशोध्यैषण्याऽन्वेषणमसंमूढः कृत्वा, यत्रैषण्या गतिर्नावरुध्यते ततो व्रणं निरुत्सङ्गं सलिलानवस्थायिनं कुर्यात् । सलिलं हि रक्तमूर्छितं वायुनोच्छ्रितत्वं पूयत्वं च व्रजति । पूयः स दोषमूर्छितो गतिमापादयति । तं घृतेनावसिच्य गजशकृतेन किण्वलवण-

---

१ क. °त्वक्चल° । २ क. °र्यमुपलभन्ते । के° । ३ क. °टाश्चोषशोष° । ४ क. °भ्यासन्नैर्दाशी° । ५ क. °रास्पद° । ६ क. °कित्साम्° । ७ क °स्त्रेणात्यमां° ।

संयुक्तेन पूरयेत् । उपचरति मासार्धवया(?) येष्वपि पूरणं दद्यात् । तृतीये चाहनि यथोक्तेन प्रक्षालनेन प्रक्षाल्य व्रणं घृतेन परिषेचयेत् । अनेनैव विधिना व्रणमुपाचरेदाक्लेदात् । ततः शोधनादिकल्कैरुपक्रमेत्, घृतपानं च दद्यात् । घृतसंयुक्तं शाल्योदनं मुद्गयूषेण संसृष्टं दद्यात् ॥

अथ सिंहव्याघ्रनखदंष्ट्रावलुप्तमभिविज्ञाय शतधौतेन घृतेनाभ्यज्य पञ्चकषायेण विमलशिशिरसलिलेन परिषेचयेत् । शीतैस्तु प्रदेहैर्घृतसंयुक्तैश्च प्रदेहयेत् । व्रणांश्च व्रणोपक्रमैरुपक्रमेत् ॥

अग्निदग्धं तु शतधौतेन घृतेनाभ्यज्य निर्वापयेत्पयःसुराभ्योऽन्यतरेण वा शीतैश्च प्रदेहैः, मञ्जिष्ठायष्टीमधुकचन्दनोशीरपद्मकनलवञ्जुलशालिमूलसारिवार्जुनोदुम्बरप्लक्षैः, वटनालिकाजलजबिशमृणालोत्पलपद्मिनीकर्दमभद्रमुस्तातृणशूल्यैश्च सुरादधिघृतयुक्तैः प्रदेहं कुर्यात् । कषायोदकपिष्टैः परिषेकांश्च कुर्यात् । व्यपगताग्निमभिज्ञाय विमलशिशिरसलिलेऽवगाहयेत् । निवृत्तमवगाहाद्घृतेन परिषेचयेत् । व्रणं च पूर्वोक्तैरुपक्रमैरुपक्रमेत् । गुडजतुमधूच्छिष्टामेध्यदग्ध(*नलदग्धसमानक्रियं तस्योपक्रमं कुर्यात् ।) घृतेनाभ्यज्य शीतैः प्रदेहैरुपक्रमेत् ॥

अर्कविद्युत्संतापदग्धस्य ............... समानमुपक्रमं कुर्यात् । संतापदग्धं तु विशेषेणाऽऽहारैः सात्म्यकालाविरुद्धैरुपाचरेत् । घृतयुक्तं च शालीनामोदनं मुद्गयूषरसयुक्तं दद्यात् ॥

क्षारदग्धं च द्विव्रणीयेन क्षारकर्मण्युपदिष्टेनोपक्रमेत । घृष्टमधुघृतेनाभ्यज्य शीतैः प्रदेहैरुपक्रमेत ॥

विषदग्धं च शस्त्रकर्मादिभिरुपक्रमेत् । दग्धं चाऽऽशीविषनिःश्वासैः शतधौतेन घृतेनाभ्यज्य विषजग्धोदिष्टैः प्रदेहैरुपक्रमेत् । घृतपानं च दद्यात्, शीतपरिषेकं च कुर्यात् । भोजनं विषजग्धोदिष्टं दद्यात् ॥

तत्र श्लोकः—

क्षतं दग्धं च यो नागे(गं) विधिना समुपाचरेत् ।
पूज्यः स नियतं राज्ञा दानमानपरिग्रहैः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यरोगस्थाने सद्यःक्षतलव(क्ष)णं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

* खपुस्तके त्रुटितः ।

१ क. °दिमिः क° । २ क. °गाहये° । ३ क. °दग्धं ।

## अथ तृतीयोऽध्यायः ।

नन्दनोपवने पुण्ये नानाद्विजसमाकुले ॥
आश्रमे स्वर्गसोपाने महर्षिगणसेविते ॥ १ ॥
हुताग्निहोत्रमासीनं ज्वलन्तमिव पावकम् ॥
पालकाप्यं महातेजा अङ्गराजो महायशाः ॥ २ ॥
प्रणम्य शिरसा तस्मै संशयं परिपृष्टवान् ॥
सद्यःक्षतविधानं तु भगवन्वक्तुमर्हसि ॥ ३ ॥
छिन्नविच्छिन्ननिर्विद्धं सावनष्टाविदारिते ॥
उत्तुण्डितेऽतिविद्धे च तथा विद्धावमृष्टयोः ॥ ४ ॥
दग्धे दूषीविषे चैव क्षतेषु विविधेषु च ॥
विध्यं(धिं) सद्यःक्षते नागे कृपया वक्तुमर्हसि ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥
शृणु भद्रमुख स्वस्थो यत्त्वं पृच्छसि संशयम् ॥ ६ ॥
अतिदीर्णव्रणानां तु विधिरन्यः प्रवक्ष्यते ॥
पतङ्गं मधुसर्पिभ्यां संयुक्तं मनुजाधिप ॥ ७ ॥
सद्यःक्षतेषु नागानां संधानं हितमुत्तमम् ॥
गम्भीराणां तु सर्वेषामेषण्या निर्दहेदसृक् ॥ ८ ॥
श्वेताभासो व्रणो यस्तु तस्मिन्नक्तं न निःस्रवेत् ॥
वृक्षोत्तङ्गी व्रणो यस्तु तस्मिन्नक्तमतिश्रु(स्रु)तम् ॥ ९ ॥
दूषयेत्तु प्रदुष्टं तत्स्व(च्छ्र)यथुं च नियच्छति ॥
संतापयति तिष्ठन्तं पाकं चाऽऽशु नियच्छति ॥ १० ॥
तस्माद्व्रणं शोधयित्वा घृतेन परिषेचयेत् ॥
संसृष्टां मधुसर्पिभ्यां वर्तिं चात्र प्रवेशयेत् ॥ ११ ॥
अथ निष्कृष्य तां वर्तिमिमं विधिमुपाचरेत् ॥
कुमुदोत्पलपत्राणि ह्रीवेरं च कुटंनटम् ॥ १२ ॥
करवीरस्य पत्राणि क्षीरवृक्षत्वचस्तिलान् ॥
कृष्णमृत्तिकया सार्धं दृषदि प्रतिपेषयेत् ॥ १३ ॥
घृतेन शतधौतेन संयोज्याथ प्रलेपनम् ॥
शीतक्रियामिमां वाऽन्यां यथावत्समुपाचरेत् ॥ १४ ॥

---

१ क. वृत्तोत्सङ्गी । २ क. प्रदिष्टं । ३ क. संसृष्टं ।

कन्दैर्बिशमृणालानां क्षीरवृक्षत्वचाऽन्वितैः ॥
छायायां परिषेकं हि कारयेद्विधिवद्भिषक् ॥ १५ ॥
अभ्यङ्गैः परिषेकैश्च शीतैः पानैर्घृतस्य च ॥
सुखमस्य भवेत्तेन न च दोषः प्रबाधते ॥ १६ ॥
अभिघाताद्विषाद्वाऽपि द्विपस्य श्वयथुर्यदा ॥
उत्पद्यते भिषग्वीरस्तदेनं कारयेद्विधिम् ॥ १७ ॥
चन्दनं पद्मकं पत्रं शैवलं सुनिषण्णकम् ॥
क्षीरपिष्टानि सर्वाणि घृतेनैतत्प्रलेपनम् ॥ १८ ॥
सर्पिषाऽभ्यञ्जनं कार्यं प्रदेहो वा न संशयः ॥
अथवैतेन कल्पेन विशेषो नोपलभ्यते ॥ १९ ॥
कुठाराकृतिशस्त्रेण ततस्तं प्रच्छयेद्भिषक् ॥
नातिगाढं न च लघुं न घनं विरलं न च ॥ २० ॥
पदे पदं न दद्याच्च शिरासंधींश्च वर्जयेत् ॥
जम्बूशीरपलाशैश्च पद्मिन्याश्चैव कर्दमैः ॥ २१ ॥
लेपयेद्घृतसंयुक्तैस्ततः संपद्यते सुखी ॥
ईषत्कषायमधुराः कषायास्तु रसास्तिलाः ॥ २२ ॥
रक्तपित्तानिलहरास्तेषां कल्कः प्रशस्यते ॥
कषायात्तु रसाच्छ्लेष्मा माधुर्यात्पित्तमेव च ॥ २३ ॥
स्नेहाच्च शमयेद्वातं तस्मात्कल्कोऽपमिष्यते ॥
घृष्टदष्टविदग्धानां क्षीरवृक्षत्वचाऽन्वितः ॥ २४ ॥
हितो गजानामत्यर्थं लेपः सद्यःक्षतेषु च ॥
उद्गमो द्विविधो राजन्यदि मर्माश्रितो भवेत् ॥ २५ ॥
सुपक्वं छेदयेदाशु नापक्वं तु कदाचन ॥
मर्मसंरक्षणार्थं च यत्नं कृत्वा तु दन्तिनाम् ॥ २६ ॥
दोषमन्तरतः कृत्वा ततः शस्त्रं निपातयेत् ॥
मर्मण्यभिहतो यस्माद्द्विपो मरणमृच्छति ॥ २७ ॥
मर्मेति मारणादुक्तं नैरुक्तेनैव हेतुना ॥
निमित्तैर्विविधैर्देहं गजानां विवृणोति यत् ॥ २८ ॥
तस्माद्धि वारणेन्द्राणां व्रण इत्यभिधीयते ॥
रूढेऽपि हि व्रणे यस्माद्व्रणवस्तु न नश्यति ॥ २९ ॥

---

१ क. शैलेयं । २ क. °स्तं पृच्छ° । ३ क °घृष्ट° ।

आ देहधारणादेव व्रण इत्यभिशब्दितः ॥
अर्बुदा गलगण्डाश्च ये च संधिगता व्रणाः ॥ ३० ॥
एतान्क्षारैरुपक्रामेन्नैताञ्शस्त्रैरुपाचरेत् ॥
संनिपातैस्तु दन्तानां ( *दारितानां ) द्विपादिभिः ॥ ३१ ॥
भिण्डिमालैः[1] सकणयैरसिशक्त्यृष्टितोमरैः ॥
भिन्नमर्मशिरा गाढं वहन्ति यदि शोणितम् ॥ ३२ ॥
अतिप्रवृत्ते रुधिरे लभेयुरपतानकाम् ॥
मूर्छां वा दारुणां नागाः क्षयं मरणमेव वा ॥ ३३ ॥
तेष्वसृक्स्थापनं कार्यमेभिः सर्वैरुपक्रमैः ॥
कषायवृक्षचूर्णैर्वा भस्मना गोमयस्य च ॥ ३४ ॥
भस्मना तान्तवानां वा शोणितस्थापनं भवेत् ॥
(† शीतैः पानैश्च सेकैश्च शोणितस्थापनं भवेत्) ॥ ३५ ॥
अथवैतेन[2] कल्पेन शोणितं नैव तिष्ठति ॥
अग्निकर्म ततः कुर्यात्क्षारं चात्र प्रदापयेत् ॥ ३६ ॥
न चातिक्रामयेद्वेलां समुद्रः समये स्थितः ॥
न चातिक्रमितुं शक्यमग्निक्षारादसृग्बलात् ॥ ३७ ॥
अत्यम्ललवणादुष्णादत्याशात्यम्बुसेवनात् ॥
असृक्स्थितं चिरमपि वारणस्य प्रवर्तते ॥ ३८ ॥
नात्यम्लं नातिलवणं नात्युष्णं नातिभोजनम् ॥
नात्यर्थमम्बुपानं च तस्मान्नागाय दापयेत् ॥ ३९ ॥
अभिघातात्प्रकुप्येत वायुः पित्तं च दन्तिनः ॥
तस्मात्सद्यःक्षते नागे घृतमेव हितं भवेत् ॥ ४० ॥
पञ्चाहं सप्तरात्रं वा व्रणं स्नेहेन सेचयेत् ॥
दोषातिरिक्तं विज्ञाय व्रणं प्रकृतिसात्म्यतः ॥ ४१ ॥
क्रियापथं प्रयुञ्जीत पयश्चास्मै[3] प्रदापयेत् ॥
ततोऽङ्गराजः पप्रच्छ विनयात्पुनरुत्थितः ॥ ४२ ॥
किमर्थं दीयते क्षीरं व्रणितेभ्यो महामुने ॥
इत्येवमुक्तः शिष्येण[4] पालकाप्यस्ततोऽब्रवीत् ॥ ४३ ॥

* कपुस्तके त्रुटितः । † खपुस्तके नोपलभ्यते ।

१ क. भिण्डिपालैः । २ क. अथास्यैते° । ३ क. पथ्यं चास्मै । ४ क. ख. शेषेण ।

शृणुष्व मे महाराज यदर्थं दीयते पयः ॥
(* इमे च सर्वे ऋषयः) सहितास्तु त्वयाऽनघ ॥ ४४ ॥
अत्यर्थं शोणितं यस्य निःसृतं वारणस्य वै ॥
तस्मै क्षीरं प्रदेयं स्याद्घृतयुक्तं महीपते ॥ ४५ ॥
जातिसात्म्यात्तु नागानां श्रेष्ठं कायाग्निदीपनम् ॥
क्षीरं सर्वत्र मधुरं बल्यं रक्तप्रसादनम् ॥ ४६ ॥
जीवनं वातरोगघ्नं बलवृद्धिकरं च तत् ॥
रसायनं च पथ्यं च हृद्यं वृष्यं गदापहम् ॥ ४७ ॥
अतिप्रवृत्ते रुधिरे धातूनां जायते क्षयः ॥
† तन्मूला धातवः सर्वे क्षयाच्च मरणं ध्रुवम् ॥ ४८ ॥
तस्मात्क्षीरं भवेद्देयं सर्वैर्मधुरकैः स्र(शृ)तम् ॥
एतदर्थं महाराज क्षीरपानं विधीयते ॥ ४९ ॥

—:():—

अतः परं प्रवक्ष्यन्ते व्रणोपक्रमहेतवः ॥
प्रहारविगतोष्माणं स्थितं च रुधिरं यदा ॥ ५० ॥
द्विव्रणीयोपचारेण साधयेच्छोधनादिना ॥
यवसैः प्रतिपानैश्च स्नेहयुक्तैश्च भोजनैः ॥ ५१ ॥
संजातप्राणमांसस्य प्रतिपूर्णेषु धातुषु ॥
स्नेहपानोपचारेण स्नेहमच्छं प्रयोजयेत् ॥ ५२ ॥
स्नेहेन च विर(रि)क्तस्य बस्तिकर्म प्रशस्यते ॥
सुविरिक्तं च विज्ञाय स्नेहपानं प्रवर्तयेत् ॥ ५३ ॥
अविरिक्तस्य तैलेन शृणु दोषं नराधिप ॥
आक्षेपं वा विलभते अतीसारमरोचकम् ॥ ५४ ॥
अथवा पाकलं घोरं मरणं वा नियच्छति ॥
एते चान्ये च बहवो दोषाः स्युर्दुर्विरिक्ततः ॥ ५५ ॥
सुविरिक्तस्य वै राजन् बलं तेजश्च वर्धते ॥
स्नेहपानविधिश्चैव बस्तिदानविधिस्तथा ॥ ५६ ॥
तस्मिंस्तस्मिन्प्रकरणे पुरस्तादेव कीर्त्यते ॥
एतत्ते सर्वमाख्यातं यन्मां पृच्छसि पार्थिव ॥ ५७ ॥

---

*कपुस्तके नोपलभ्यते । †धातूनां क्षये हेतुप्रदर्शनपरोऽयं पादः ॥

---

१ क. तस्य । २ ख. यत् । ३ ख. निवर्तयेत् । ४ क. °न्प्रकारेण पु° ।

भूयः किमन्यदिच्छेत्त्वं(स्त्वं) वरदोऽस्मि तवानघ ॥

—:o:—

ततोऽङ्गपतिरक्षुद्रो विनयात्पुनरुत्थितः ॥ ५८ ॥
अकल्पानां च नागानां कल्पानां च तपोधन ॥
अरिष्टं ज्ञातुमिच्छामि दूतानां चैव लक्षणम् ॥ ५९ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
शृणु मे सर्वमेवैतदविक्षिप्तेन चेतसा ॥ ६० ॥
अत्यर्थं दुर्मना यस्तु स्तब्धकर्णशिरोधरः ॥
न च वेदयते संज्ञां यथा प्रेतस्तथैव सः ॥ ६१ ॥
अत्यर्थं तु यदा नागो मक्षिकाभिरुपास्यते ॥
अकस्मादेव राजेन्द्र नायमस्तीति निर्दिशेत् ॥ ६२ ॥
(* छायायां गच्छतो यस्य शिरो यस्य न दृश्यते ॥
वारणस्य नरव्याघ्र तं प्रेतमभिनिर्दिशेत् ॥ ) ६३ ॥
क्रिया सम्यक्प्रयुक्ताऽपि यदा नागस्य हीयते ॥
रोगेषु साध्यमानेषु तदरिष्टस्य लक्षणम् ॥ ६४ ॥

—:o:—

अतः परं प्रवक्ष्यामि दूतानामपि लक्षणम् ॥
चित्रमाल्याम्बरधरान्स्पृशतश्च नखांस्तथा ॥ ६५ ॥
मुक्तकेशैकवस्त्रांश्च दीनां व्याहरतो गिरम् ॥
पृच्छकांस्तादृशो दृष्ट्वा न गन्तव्यं भिषग्वरैः ॥ ६६ ॥
आमं मांसं सवत्सां गां ब्राह्मणाञ्शुक्लवाससः ॥
उद्धृतां च महीं दृष्ट्वा वाराहं चक्रमुत्थितम् ॥ ६७ ॥
श्वेतं छत्रं पताकां च श्वेतं च वृषभं तथा ॥
दधि प्रभिन्नं च गजं पूर्णं च कलशं तथा ॥ ६८ ॥
एतानि च निमित्तानि शुभानि च शिवानि तु ॥
प्रस्थितैर्यदि दृश्यन्ते सद्यः सिद्धिर्ध्रुवा भवेत् ॥ ६९ ॥
शुभशब्दे च गन्धे च सानुलोमे च मारुते ॥
प्रस्थिते सर्वकार्याणां सद्यःसिद्धिर्ध्रुवा भवेत् ॥
क्रिया सम्यक्प्रयुक्ताऽपि भिषग्भिः कालसंभृतैः ॥ ७० ॥

---

* धनुश्चिह्नमध्यगतो नोपलभ्यते कपुस्तके ॥

या न सिध्यति विप्रेन्द्र तन्मे शंसितुमर्हसि ॥
इत्यङ्गपतिना पृष्टः पालकाप्यस्ततोऽब्रवीत् ॥ ७१ ॥
तिथिष्वशस्तपूर्वेषु पक्षच्छिद्रेषु हस्तिनाम् ॥
आर्द्रासु त्रिषु पूर्वासु भरणीषु मघासु च ॥ ७२ ॥
रोगस्याऽऽगमनेऽन्यां वा क्रियां सर्वां विवर्जयेत् ॥
कृत्तिकाश्लेषयोश्चैव मूले वरुणदैवते ॥ ७३ ॥
वारणास्त्वभिभूयेरन्हतास्त्वेतेषु राक्षसैः ॥
तस्मात्सर्वप्रयत्नेन तिथीनेतान्विवर्जयेत् ॥ ७४ ॥
क्रिया सम्यक्प्रयुक्ताऽपि गजानां शास्त्रकोविदैः ॥
न सिध्यति महाराज तस्मादेतान्विवर्जयेत् ॥ ७५ ॥

—:():—

आमच्छेदे तु ये दोषास्तान्सर्वाञ्शृणु पार्थिव ॥
आमच्छेदे तु रुधिरं दावाग्निरिव कुप्यति ॥ ७६ ॥
कुपितं कोपयेत्पित्तं त्वङ्मांसं चापि दूषयेत् ॥
वायुना सह संगम्य श्वयथुं जनयेद्भृशम् ॥ ७७ ॥
ततोऽस्य वेदना घोरा दाहश्चैव प्रवर्तते ॥
अतिप्रवृत्ते[2] दाहे च विसर्पस्तस्य जायते ॥ ७८ ॥
नीलपीतारुणनिभैः स्फोटैः समुपचीयते ॥
न तिष्ठत्यथवा रक्तं स्नायुच्छेदोऽपि वा भवेत् ॥ ७९ ॥
स्नायुच्छेदेन खञ्जत्वं गद्गदत्वं च जायते ॥
स्कन्दरोगं च लभते शोणितस्य प्रवर्तनात् ॥ ८० ॥
एतदर्थं न कुर्वीत आमच्छेदं तु कुञ्जरे ॥
तस्मात्सुपक्वं श्वयथुं छेदयेत्क्रमशो भिषक् ॥ ८१ ॥
चतुर्दंष्ट्राहिदष्टस्य यथा नास्ति चिकित्सितम् ॥
एवं तु कुपिते रक्ते नेर्त्तेम्रे(?)रस्ति भेषजम् ॥ ८२ ॥

—:():—

अत ऊर्ध्वं प्रवक्ष्यामि वह्निर्यत्रावतिष्ठति ॥
जाठरः पृथिवीपाल नाभावग्निः प्रतिष्ठितः ॥ ८३ ॥
सम्यक्पचति तत्रस्थमाहारं तु चतुर्विधम् ॥
यथाऽग्निर्विपचेद्धाम्रो जलं स्थालीमदूषयन् ॥ ८४ ॥

---

१ क. °गमागतमन्यां । २ क. °त्ते रुधिरे वि° ।

दीप्तः सम्यक्परिक्लिन्नांस्तण्डुलानेवमेव तु ॥
आमाशयविभागार्थं नाभ्यामग्निः प्रतिष्ठितः ॥८५ ॥
कायेऽन्नं प्रपचेत्सर्वं सम्यग्वातसमीरितः ॥
यथा संप्रतिपूर्णस्य शुद्धकोष्ठस्य हस्तिनः ॥ ८६ ॥
सम्यग्विपच्येताऽऽहारो बलवर्णकरस्तथा ॥
दोषधातुसमत्वं च करोतीति विनिश्चयः ॥ ८७ ॥
असम्यक्पच्यमानश्च व्यापन्नस्तु यदा भवेत् ॥
एतदेव विपर्यस्तं करोतीति विनिश्चयः ॥ ८८ ॥
यवसं परिपूर्णाय पीतायाम्बु सचेतसे ॥
या विधा दीयते राजन्सा विधाऽर्थाय कल्पते ॥ ८९ ॥
यवसानि विचित्राणि कुवलं पल्लवानि च ॥
यवसार्थे प्रदेयानि निग्रहाच्च निवारयेत् ॥ ९० ॥
व्याप्य तिष्ठति यावत्तु शरीरं शुक्रमेव तु ॥
आप्यो धातुर्द्रवो रक्ततेजसा स तु रज्यते ॥ ९१ ॥
मूर्तिमच्चैव भूस्तत्र स्वधातुर्विवरं स्मृतम् ॥
स्पर्शनं चैव वायव्यमेवं पञ्च गुणाः स्मृताः ॥ ९२ ॥
ईषत्क्षारस्य यः क्षारः स क्षारः क्षार एव तु ॥
स निर्दहति भूतानि स्थावराणि चराणि च ॥ ९३ ॥
शीतलस्तीक्ष्णवीर्यश्च तेजो दहति द्विपान् ॥
ये व्रणाः संधिदेशस्था येषां चासृङ्न तिष्ठति ॥ ९४ ॥
उष्णताकृतभीरूणां दाहो येषु प्रयुज्यते ॥
ये व्रणा दूषिता नित्यं येषां चासृङ्न तिष्ठति ॥ ९५ ॥
तेषां प्रयोजयेत्क्षारं ये च दाहेऽतिशङ्किताः ॥
अत एव विनिश्चित्य ऋषिभिः ससुरैर्नृप ॥ ९६ ॥
तुषारक्षारयोगोऽयं निर्मितो ब्रह्मणा स्वयम् ॥ ९७ ॥
क्षारोऽग्निकर्म कुरुते न च त्रासयते द्विपम् ॥
मृगा ह्येते प्रकृत्या च वनवासाध्वभीरवः ॥ ९८ ॥
इत्यर्थं कल्प्यते क्षारो गजानां मनुजाधिप ॥
शीतलोऽग्निर्भगवता कृतो लोकहितेप्सया ॥ ९९ ॥

---

१ ख. °क्लिद्यंस्त° । २ क. °विधानार्थं । ३ क. °ये न प्र° । ४ क. °श्च मामान्न° । ५ क. °क्ष्णवायुश्च तेजसा तुदति । ६ क. °गोऽपि नि° । ७ क. गजा ।

भस्म कृत्वा रसान्षट्‌च क्षरणात्क्षारसंज्ञितः ॥
संयोगात्तु रसस्त्वेष रसः प्रकृतिसंभवः ॥ १०० ॥
तुषाराग्निर्यथा नागान्निर्दहेच्छिरसः पुनः ॥
विद्युन्मालिविनिर्दिष्टा तथा तस्य प्र...क्रिया ॥ १ ॥
वर्जयित्वाऽवगाहं च परिषेकं च शीतलम् ॥
पलाशशय्या नागस्य निर्वाते पूजिता भवेत् ॥ २ ॥
आमये पूर्वमुत्पन्ने पश्च मिथ्योपचारतः ॥
उपद्रवति यत्पश्चात्तेन स स्यादुपद्रवः ॥ ३ ॥
कायसंरक्षणार्थं च वर्णज्ञानार्थमेव च ॥
एकामेव च्छविं विद्याद्यत्र रोम प्रतिष्ठितम् ॥ १०४ ॥
एतत्ते सर्वमाख्यातं यन्मां पृच्छसि पार्थिव ॥
सद्यःक्षतविधानं तु कृत्स्नकल्पमरिंदम ॥ १०५ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने
सद्यःक्षतचिकित्सितं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## अथ चतुर्थोऽध्यायः ।

---

अथाङ्गराजो मतिमानभिवाद्य मुनिं स्थितम् ॥
पालकाप्यमृषिश्रेष्ठं पुनरेवेदमब्रवीत् ॥ १ ॥
शिरास्नाय्वस्थिसंध्यानां छेदे तिर्यक्तथैव च ॥
(*पक्वस्यापाटने चैव) तन्मे ब्रूहि षेडत्ययान् ॥ २ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
हीनं तत्रातिरिक्तं च द्विविधं शास्त्रनिश्चयात् ॥ ३ ॥
वैद्योपचारान्नागानां शस्त्रकर्म विगर्हितम् ॥
गम्भीरानुगतं दोषं शस्त्रेणाप्राप्य वारणे ॥ ४ ॥
अदृष्टकर्मा तु भिषक्पाटयित्वाऽवसीदति ॥
रुजाः शस्त्रकृतास्तस्य यथा पूयसमुद्भवाः ॥ ५ ॥
दन्तिनो दाहबहुलाः हीने स्याच्छ(स्युः श)स्त्रकर्मणि ॥
व्रणे त्वल्पाश्रये शस्त्रमवगाढं यदा बलात् ॥ ६ ॥

---

* कपुस्तके त्रुटितः पाठः ।

१ क. गडत्परान् ।

पातयेत्सहसा वैद्यस्तदा हिंस्यादनेकपम् ॥
वेपथुं श्वयथुं चैव शोषं सहृदयामयम् ॥ ७ ॥
एषामन्यतमं ह्याशु व्याधिमाप्नोत्यनेकपः ॥
स्नायुच्छेदेन खञ्जत्वं गद्गदत्वं च जायते ॥ ८ ॥
मृणालमुखसंस्थानो व्रणश्चास्योपजायते ॥
चिरकालश्रु(स्रु)तश्चापि संधानं नैव गच्छति ॥ ९ ॥
तिर्यक्प्रणिहिते शस्त्रे शृणु दोषानतः परम् ॥
दाहदोषान्वितः स्तब्धः सरागः सपरिश्र(स्र)वः ॥ १० ॥
न रोहति व्रणश्चास्य क्रियमाणेऽपि भेषजे ॥
आमच्छेदे तु रुधिरं दावाग्निरिव कुप्यति ॥ ११ ॥
कुपितं कोपयेत्पित्तं त्वङ्मांसं चापि दूषयेत् ॥
वायुना सह संगम्य श्वयथुं जनयेद्भृशम् ॥ १२ ॥
ततोऽस्य वेदना घोरा वायुश्चैव प्रवर्तते ॥
अतिप्रवृत्ते दाहे तु विसर्पस्तस्य जायते ॥ १३ ॥
पीतनीलारुणनिभैः स्फोटैः समुपचीयते ॥
न तिष्ठत्यथवा रक्तं स्नायुच्छेदो यथा भवेत् ॥ १४ ॥
संधिच्छेदे त्वसंख्येया दोषा दृष्टा नराधिप ॥
निर्हरेत्संधिदेशे तु जलौकोभिस्तु शोणितम् ॥ १५ ॥
दुष्टं न मुक्तं रुधिरं घनी भवति वायुना ॥
तेजसा पित्तवातौ च पाकं चैव नियच्छतः ॥ १६ ॥
एते दोषाः प्रदुष्टस्य रुधिरस्याप्रवर्तनात् ॥
अप्रदुष्टस्य निश्रा(स्रा)वे दोषान्वक्ष्याम्यतः परम् ॥ १७ ॥
केवलं दृष्टकर्माणो ह्यशास्त्रज्ञाश्चिकित्सकाः ॥
भागाभागमजानन्तः शिरा हिंसन्त्यबुद्धयः ॥ १८ ॥
ततः श्र(स्र)वति नागस्य शोणितं जलयन्त्रवत् ॥
न च तिष्ठति दाहेन यदुर्वर्णमथो क्षतः ॥ १९ ॥
गजानां मांसशोषैर्यद्धृयिष्ठं संप्रवर्तते ॥
ततो रक्तक्षयान्नागे वायुर्मर्माणि कृन्तति ॥ २० ॥

---

१ क. °हवेपा° । २ क. °षादपि न° । ३ क. °शेषु ज° । ४ क. °वाते मामान्न° । ५ क. °क्षणवा° । ६ ख. °वर्धते ।

वाताभिभूता नीरक्ताः स्फुटन्त्यस्य शिरास्ततः ॥
हृदयं पीड्यते चास्य तृष्णा चैवोपजायते ॥ २१ ॥
स पाण्डुवर्णो विमना म्रियते शोणितक्षयात् ॥
तस्माच्छिराव्यधो नित्यं वारणानां न्विगर्हितः ॥ २२ ॥
अपाटने च पंक्कस्य प्रवृद्धो[1] दोषसंचयः ॥
दहत्यग्निरिवोदीर्णः सदोषोऽन्तर्गतो[2] गजम् ॥ २३ ॥
तस्य मांसानि मेदश्च सिरा स्नाय(यू)नवाप्यथ ॥
*शतार्यत्यतिवृद्धस्तु[3] चिरकालमुपेक्षितः ॥ २४ ॥ †
इत्येते प्राप्तकालस्य दोषा दृष्टास्त्वपाटनम् ॥
इत्येष पालकाप्येन शस्त्रकर्मणि हस्तिनाम् ॥ २५ ॥
षडत्ययोपचारस्तु यथावत्समुदाहृतः ॥
न तिर्यक्पातयेच्छस्त्रं सर्वेष्वङ्गेषु पार्थिव ॥ २६ ॥
शिरास्थिमर्मसंधीनामन्तरेषु निपातयेत् ॥
यथां[4] शिरास्तथा शस्त्रं सर्वगात्रेषु वो हरेत् ॥ २७ ॥
एषण्याऽन्वेष्य विधिवदनुलोमं प्रपाटयेत् ॥
आसनेऽथ कलाभागे क्षपे वंशे कटे तथा ॥ २८ ॥
भागेष्वेतेषु नागानां वृत्तच्छेद्यानि कारयेत् ॥
शेषेष्वेतेषु भोगेषु[6] वृत्तच्छेद्यं न कारयेत्[5] ॥ २९ ॥
न काकपदकं कुर्यान्न चातिबहुपादकम् ॥
तत्र शस्त्रपदं कुर्याद्व्यङ्गुलत्र्यङ्गुलान्तरे ॥ ३० ॥
पञ्चाङ्गुलान्तरे वा स्यादथवा चतुरङ्गुलम् ॥
नवाङ्गुलं वा नागस्य शस्त्रकर्म विधीयते ॥ ३१ ॥
यदृच्छया सिद्धिरपि पण्डितानामसंगता ॥
नयेन क्रियमाणेन विपत्तिरपि शोभना ॥ ३२ ॥
नैवातिशीतो नात्युष्णः शीर्णरोमाऽथ पिण्डितः ॥
पक्वोदुम्बरसंकाशः श्वयथुः पाकमागतः ॥ ३३ ॥
शस्त्रेण वृद्धिपत्रेण वाऽस(शि)तेन सि(शि)तेन वा ॥
शस्त्रकर्मणि निष्णातः सुपक्वं पाटयेद्भिषक् ॥ ३४ ॥

* 'स तावत्प्रति' इति भवेत् । † इतः परं कियत्त्रुटितं प्रतिभाति ।

१ ख. पक्कश्च । २ क. °षोऽवगतो । ३ क. °यत्प्रति° । ४ ख. °था शरास्तथा शस्त्रं स° । ५ ख. वारयेत् । ६ क. भोगेषु ।

स्नेहपानं च सेकं च सर्पिः स्निग्धं च भोजनम् ॥
नित्यमेव हितं तस्य कारयेत्स सुखी भवेत् ॥ ३५ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने षडत्ययोपचारो नाम चतुर्थोऽध्यायः ॥ ४ ॥

## अथ पञ्चमोऽध्यायः ।

अथ भगवन्तं पालकाप्यं रोमपादः पुनरेवापृच्छत्—' भगवन्निरवशेषाणामामन्तुकानां लक्षणमभिहितम्, ये त्विमे व्रणा आसन्नप्रत्ययाः, तेषां प्रयोगसामर्थ्यं योनिदोषं पृथक्त्वेनाऽऽकृतिविशेषानुपक्रमविशेषांश्च (?) कति च व्रणोपक्रमाः, किं साध्यासाध्यलक्षणम्, अन्वयप्रकृतिसात्म्यम्, इत्येतद्यथोपदिश्यमानमिच्छामि वेदितुम् ' इति ॥

एवं महर्षिभिरभिहितः, शुश्रूषा च (?) रोमपादाय संस्कृतपदविचित्रं हेतूपनयननिगमयुक्तमुवाच वाक्यम्—'वत्स, एतेषु चतुर्षु कर्मस्कन्धेषु द्विरदपतयो व्याख्याताः । तेषां यथास्थानोपगतानां व्रणानां लक्षणविशेषमनुव्याख्यास्यामः । तद्यथा—अल्पवयसः कवलकुवलभोजना महान्तमध्वानं च यदा वाह्यन्ते ( *दिवसकरकराभिसंतप्तशरीरा बह्वपगूढैरिव च पवनबलप्रवेगैरभिहन्यमानाः क्षितितलमभिपतन्ति पांशुप्रमाथान्निषेवमाणाश्च न सलिलमवगाहन्ते । ) शुष्कौष्ठकण्ठवदनाः केचित्, केचित्सुदूराध्वानमुपगताः पांशुकर्दमशेवालपर्णकर्मिजुष्टं सलिलमुपसेवन्ते । तेषां वायुरतिबलः खरपरुषः शीतो ध्मानात्मकः संघातवियोगकारी प्रकोपमुपगच्छति द्विरदपतीनां देहेषु । तेषां त्वक्चरणहस्तकुक्षिवदननखकर्णेष्ववमादिषु चाङ्गप्रदेशेषु व्रणाः संभवन्ति खराः स्फोटवन्तः पुरुषाः फेनानुविद्धाः पिच्छिलाः स्राविणः प्रायशश्च गम्भीरानुगतभावा भवन्ति, अस्थिविवरभागाश्रयाश्च मांसमभि विगाह्यन्ते, तद्वातव्रणलक्षणं भवति ॥

अथ सलिलधरविसर्गकाले वीरुद्वनस्पतिवानस्पत्यानामौषधीनांमुपयोगतवीर्यत्वादम्लरसभूयिष्ठत्वम(मु)पगतानां सेवनात्पित्तसंजननं भवति ।

भूयश्च शरदि दिवसकरकराभिहतदेहानां सुजातैर्यवसकवलकुवलानां वीर्य-

* धनुश्चिह्नान्तरगतो नास्ति पाठः खपुस्तके ।

१ ख. रोमपादीयं । २ क. °मिदुष्टं । ३ ख. °नामप° । ४ क. °त्वमग° । ५ क. °तवयसः क° ।

घतां भक्षणादतिप्रचुरसलिलपानादिभिः पित्तसंजननैराहारप्रचारैः पित्तं प्रकोपमुपगच्छति तेनैषां देहेष्वरूंषि प्रादुर्भवन्ति क्षिप्रपाकक्लेदीन्यतीव कुणपगन्धिबहुपरिश्रा(स्रा)वीणि हारिद्रवत्कपोतवर्णानि प्रकोपमुपगतानि त्वङ्मांसशिरास्नायूनां शान्तेनातिमात्रं प्रवर्तन्ते। दाहदोषाश्च व्रणानां परिव्यापनं(णं) कुर्वन्ति पित्तसमुत्थेष्विति ॥

अथ शिशिरकालमुपगतानामसात्म्यरससेवनात्प्रचुरपानभक्षणादल्पपादसंचारणादतिव्यायामानुपसेवनाद्विशेषतो दिवा निद्रोपसेवनाच्च श्लेष्मा संचयमुपगच्छति ।

नित्यमेकरसोपसेवनाद्वसन्तकालेऽपि शीतः पिच्छिलो घनः स्वयोनित्वान्माधुर्यभूयिष्ठत्वाच्च कफः प्रकोपमुपगच्छति करचरणगुल्फसंधिपर्वस्वतिमात्रम् ।

अथ श्लेष्मणा महामूलपर्यन्तानि कण्डूभूयिष्ठमध्यभागानि निरुजस्कतयाऽग्रगात्राणामरूंष्यभिनिवर्तयन्ति ॥

ततः क्षितिरुहोपलक्षिततलेषु कण्डूयनाद्रतिमुपगच्छन्ति । यावाञ्शोणितपरिश्रा(स्रा)वः, तन्निमित्तं च भूयः कण्डूयते । एष श्लैष्मिको व्रणः ॥

इत्येवमेतैरेव त्रिभिर्दोषैः समन्वितं त्रिदोषसमुत्थं व्रणं विद्यात् ॥

एषां दोषान्वयानामाकृतिविशेषान्वक्ष्यामः । तद्यथा—ऋजूर्ध्वमधस्त्रिपुटश्चतुरस्रः कुटिलो मण्डलो दीर्घोऽर्धचन्द्ररूपस्त्रस्तिरश्चीनगतिरेखागतो बाणाकृतिर्वल्मीकशरावाकृतिर्निम्न उन्नतमण्डलः पिपीलिकागृहसंस्थानः पणवमध्यो भगसंस्थान आडम्बरमुखश्चेत्येता एकोनविंशतिर्व्रणाकृतयो भवन्ति । तासां व्रणाकृतीनां व्रणवस्तुविशेषास्त्रयो भवन्ति—त्वक्, संधिः, मर्म चेति ।

त्वगाश्रयो द्विविधः—तनुः, स्थूलश्च ॥

मर्मभागाश्रितस्त्रिविधः—मर्मजः, मर्मसंधिजः, मर्मातिगश्चेति । तत्र मर्मभागाश्रितौ द्वौ व्रणौ ॥

मर्मनिर्देशभागान्व्याख्यास्यामः—अथाऽऽहाराचारव्यवायव्यायामसंभवानामपक्वपच्यमानपक्वानां त्रैकाल्योपगतानां च प्रत्येकशो लक्षणमुपदेक्ष्यामः ॥

एवमेतेषां वातपित्तश्लेष्मणां युगपत्संनिपतितानां दोषसमुच्छ्रायो ग्रन्थिः पाकमुपगच्छति । श्लेष्मशोणितयोर्यत्तु(?) स्वैराहारप्रचारैः संघातो भवति । करचरणसंधिवङ्क्षणबालगात्रपृष्ठवंशाक्षिकूटकुम्भासनकर्णाण्डकोशमेण्ढ्रबस्तिगुदरन्ध्रकोष्ठानामन्यतमे प्रदेशे शुषिरमार्गप्रचारो वायुरतिबलत्वाद्ग्रन्थिभागमाध्मा-

---

१ क. श्लेष्मांशमु° । २ क. °तो वीणा° । ३ क. °भावान्व्या° । ४ क. °निपाता° ।

पयति । स परिणाहविवृद्धेर्भवत्युपल इव घनच्छविः, सवर्णः परुषोऽल्पवेदनः । इत्येवमपक्वस्य ग्रन्थेर्लक्षणम् ॥

तस्यैव विदह्यमानस्य तोददाहभेदाङ्कताडनादयो वेदनाविशेषाः प्रादुर्भवन्ति । स तैर्वेदनाविशेषैरभिद्रुतः सन्विशेषेण करं पिनष्टि । तदङ्गं प्रत्यङ्गं वाऽवमृश्यो-द्विजते पर्यश्रुः परिम्लानमुखः, तथाऽभीक्ष्णं क्रौञ्चवन्नदति, तुदति । इत्येतद्विद-ह्यमानस्य (*ग्रन्थेर्लक्षणं भवति ॥

श्वयथुवद्ग्रन्थेः पक्वलिङ्गानि लक्षयेत् । अथ लक्षणम्—विदह्यमानस्य पूर्वो-क्तैर्वेदनादिभिः, तथैवानुबद्धः श्यावतां रक्ततां वा पुष्णाति । स कतिपयाहाद्वै-वर्ण्येन महताऽभिभूयते, स विवर्णतनुः स्पर्शमात्रं न सहते, तथा वा लेपप्रदेहै-रनुव्यधमानः परिशुष्यति, घृतेनाभ्यक्तस्य शीतोष्णाभिभूतत्वाद्घृतं विस्य-न्दते । न च यवसकवलकुवलानुपसेवते । तथा व्याददाति विष्टम्भते विनमति पिपासुरतिमात्रं भवति, परिवमति वमथुना, हस्तिजीविभिः स्प्रष्टुं नेच्छति, स्पन्दनं घट्टनं वा । तस्मिन्नस्पृश्यमाने स्तम्भं पर्येति, नदत्यूर्ध्वशिरा भूत्वा, न स्तम्भस्थानशय्यासनेषु शर्म लभते । इत्येतत्पच्यमानस्य श्वयथोर्लक्षणं भवति ॥

पक्वे तु श्वयथौ वेदनोपशमः, परिपद्यते चास्य च्छविः, मन्दमन्दं चास्य श्वयथुरुपशाम्यति । शीर्यन्ते चास्य रोमाणि, गतोष्मा नाति शैत्यमुपगच्छति, श्वेतः पाण्डुश्च पू(†यसंचाराद्भवति, पीड्यमानश्च विनमति । इत्येतत्पक्वस्य श्वय-थोर्लक्षणं भवति ॥

त्वङ्मांसमेदोमर्मशिरास्नाय्वस्थिसंधय इति व्रणवस्तूनि भवन्ति । ) निर्देश-मेतेषां पुरस्ताद्वक्ष्यामः ॥

अथ विम्लापनावसाधनरक्तापकर्षणपाचनभेदनसंधानपीडनसीवनशोषणैषणर-क्षणक्षाराग्निकर्मकृमिहरणोत्सादनशीतीकरणासृक्स्थापनक्षीरपानमृदुकरणच्छेद-नधूपनरोपणवेधनापकर्षणक्रियाबृंहणास्थिरीकरणस्वेदनलेखनकण्डूष्मास्थापन-बन्धविधिवर्तितैलचूर्णकषायलेपनस्नेहपानानुवासनरसक्रियासवर्णकरणवर्णप्रसा-दनपत्रविधिरित्येते चतुश्चत्वारिंशद्व्रणोपक्रमा भवन्ति ॥

तत्र श्लोकौ—

*धनुश्चिह्नान्तरगतो नास्ति पाठः कपुस्तके । †धनुराकारमध्यस्थो नास्ति पाठः खपुस्तके ॥

१ क. ख. °शिरो भू° । २ ख. °यथोर्वेद° । ३ क. °णरक्षाग्नि° ।

वारणानां यथाशास्त्रं क्रियां कुर्यादतन्द्रितः ।
विज्ञाय तु यथावर्त्तां यथाकालं प्रयोजयेत् ॥
प्रयोगकुशलो यस्मादसंमूढो जितेन्द्रियः ।
स कर्मसु परां सिद्धिं प्राप्नोति भिषगुत्तमः ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचने तृतीये शल्यस्थाने व्रणोपक्रमलक्षणोपक्रमो नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ षष्ठोऽध्यायः ।

---

अथ खलु रोमपादोऽङ्गपतिरपृच्छद्भगवन्तं पालकाप्यम्—'भगवन्, किं ज्ञात्वा वैद्यो भवति । एतन्मे व्याख्यातुमर्हसि ' ॥

ततः प्रोवाच भगवान्पालकाप्यः—'इह खलु भोः पञ्च, सप्त, त्रीन्, द्वौ, चतुरो, नव, चतुर्दश, चतुरश्च ज्ञात्वा भवेद्भिषक् ' इति ॥

तत्र 'पञ्च' इति यदवोचत्, तदनुव्याख्यास्यामः ॥ तत्र 'पृथिव्यापस्तेजो वायुराकाशम् ' इति ॥

तत्र पञ्चगुणा पृथिवी । चतुर्गुणा आपः । त्रिगुणं तेजः । द्विगुणो वायुः । एकगुणमाकाशम् ॥

शब्दस्पर्शरसरूपगन्धवती पृथिवी । शब्दस्पर्शरसरूपवत्य आपः । शब्दस्पर्शरूपवत्तेजः । शब्दस्पर्शवान्वायुः । शब्दवदाकाशम् ॥

तत्र पृथिवी धारणे । आपः क्लेदने । तेजः पाचने । वायुर्व्यूहने । आकाशमवकाशदाने ॥

तस्मात्पञ्चवर्गोऽयं प्रधानः, ततोऽभिप्रणीतं सर्वं दन्तिनाम् ॥

तत्र खमित्याकाशः । आकाशाच्छब्दः शौषिर्यं च । अनिलात्स्पर्शः प्राणादयश्च । दृष्टिः पाकः प्रकाश ऊष्मा पित्तं च तेजसः । स्नेहः क्लेदः शैत्यं रसो रसनं चोदकात् । घ्राणवान्गन्धः संघातश्च भूमेरिति ॥

—:○:—

सप्तैते शरीरे धातवः—रसो रुधिरं मांसं मेदोऽस्थि मज्जा शुक्रम् । इति ॥

त्रीनिति वातपित्तश्लेष्माणः । तैर्हि शरीरं धार्यते । समैः साम्यम्, वैषम्यं

---

१ ख. °थिव्यस्तेजो । २ ख. °र्शवद्वायुः । ३ क. °भिप्राणान्तं स° । ४ क. सात्म्यम् ।

*विपरीतैः । तत्र बलतृप्त्युपचयकरः श्लेष्मा । पित्तमाहारं पचति । वायुश्चेष्टाप्रवर्तकः पञ्चधा प्रविभक्तः ॥*

—:():—

द्वावित्याहारोपचारौ । ताभ्यामिष्टदेशकालोपपन्नाभ्यां वातादयः समीभवन्ति ॥

चतुर इति चतुर्विधो भूतग्रामः स्वेदजाण्डजोद्भिजजरायुजाख्याः । तदधीना चिकित्सा । तत्रापि द्विविधा योनिः—चरा स्थावरा च । तत्र कृमिकीटपतङ्गपिपीलिकादंशमशकनागचतुष्पदाश्चराः । ओषधिर्वनस्पतिर्वानस्पत्यो वीरुधः स्थावराः । तत्र स्तम्भवत्यः फलपाकान्ता ओषध्यः । पुष्पफलवत्यो वानस्पत्यः । अपुष्पाः फलवत्यो वनस्पतयः । गुल्मलतावल्लीप्रतानवत्यो वीरुधः । इत्येष चतुर्विधो भूतग्रामोऽन्योन्यानुग्रहे प्रवर्तते । ततो रसाः प्रजायन्ते, इति ॥

—:○:—

नव इति । प्राणापानव्यानोदानसमाना मानसचेतना (*धातु)बुद्धयः । तत्रोर्ध्वः प्राणः । स ऊर्ध्वगोऽभिन्यस्तनिःश्वासक्षवथुकर्मा शरीरं श्रेयसे[2] निर्युनक्ति । अपानोऽधस्तात्पक्वं पक्वं मूत्रपरीषमुत्सृजति । समानः पुनर्मध्ये चाभ्यवहृतं पचति धारयति । व्यानोऽभिवहति शरीरं धातुष्वाहारमनुपक्वम् । उदानस्त्वाहारमनुपक्वमुपनयत्यामाशयादूर्ध्वम् । एवमेते योगवाहाः प्रविभक्ताः पञ्च धातुषु प्रतिपद्यन्ते ॥

विप्रतिपन्नास्ते मध्येऽधस्तिर्यगूर्ध्वबहिरन्तरवस्थिता भ्रमन्तो वा विविधान्रोगानुत्पादयन्ति । तत्र प्राणविप्रतिपत्तौ दुःखोच्छ्वासमहोच्छ्वासानुच्छ्वासचित्तविभ्रमक्षवथुवमथूच्छ्वासाः प्रादुर्भवन्ति।अपानविप्रतिपत्तौग्रध्रसीश्वासजघनशूलकण्डूवर्तेन्द्रियोपरोधाश्मरीबस्तिमुष्कगुददेशोपसृष्टमूत्रपुरीषविकाराः प्रादुर्भवन्ति। समानविप्रतिपत्तौ चाग्निदौर्बल्यारोचकहृदयोत्क्लेदापसरणानाहोपद्रवदाहज्वरजठरशूलगुल्महृद्रोगदर्भ(र्व)ः संभवन्ति । व्यानविप्रतिपत्तौ धातुवैषम्यव्यतिकरश्च, तेषां वैषम्यव्यतिकरेभ्यो गदास्त्वग्दोषश्वयथुरेकाङ्गलरोगनिर्भोगमन्थनतोदनभेदनवेपथुश्वासरोमहर्षग्रन्थिहृदयप्रसेकोन्मथनोदावर्ताः संभवन्ति । उदनाविप्रतिपत्तावन्तःप्रतीघाततृष्णाश्लेष्माभिषण्णशिरोरोगमन्याग्रहकण्ठस्वरश्रोतोक्षिविकारा घुरघुरावसेकोत्कर्णकाः संभवन्ति । इत्येष प्राणादिपञ्चवायुप्रकोपतो रोगसमुद्देशः ॥

---

* धातुपदं प्रक्षिप्तमग्रिमग्रन्थानुरोधात् ।

---

१ ख. °विधाभू° । २ क. श्रेयसा । ३ क. °ण्डूतावर्तेन्द्रि° । ४ क. °होयत्प्रवदा° । ५ क. °ण्ठश्रवसोतो० ।

भेदास्त्वेत एव निवृत्ताः—श्लेष्मप्रकोपाद्गुरुश्वेतस्तनकचहृदयोत्क्लेदप्रसेकाभक्तच्छन्दाभिषण्णाविपाकारोचकक्रिमिकोष्ठकण्डूवैवर्ण्यानि क्षयश्चेति । पित्तप्रकोपात्पित्तरोगमृदुशीताभिलाषाभितापदाहमदमूर्छोच्छ्वासा भवन्ति । एत एव शोणितप्रकोपेऽपि भवेयू रोगाः । वातादुदावर्तानाहशूलदन्तग्रहपार्श्वपृष्ठोदरकटीग्रीवाशिरोग्रहशिराध्मानस्नायुपीडनानि चेति । संनिपातेऽप्येतान्येव सर्वाणि वातपित्तश्लेष्मसु विप्रतिपन्नेषु प्राणादिषु स लक्ष्यन्ते । इत्येतदधिष्ठानं चेति ॥

पञ्चभूतात्मको रसः । प्रायो रसाः पुनः षट्—मधुराम्ललवणकटुतिक्तकषायाः । मूलं चैतदधिष्ठानस्य भवति । रसा ह्यस्य सात्मीभूता गुणवत्त्वेऽपि भवन्ति । अगुणवत्त्वेऽपि विपरीताः । आहारोऽप्यस्य चतुर्विधः । द्विधा विपाकः षडास्वादो भवति । तत्राग्नेयाः कट्वम्ललवणाः, ते लघु पच्यन्ते कटुविपाका इति । (*मधुरतिक्तकषायाः सौम्याः, ते गुरु पच्यन्ते मधुरविपाका इति ॥ )

तत्र श्लेष्मा सोमात्मकः स्निग्धः शीतो मृदुर्मधुरो गुरुर्लवणानुबन्धी श्वेतः पिच्छिलश्चेति ।

पित्तं पुनराग्नेयमुष्णं तीक्ष्णं रूक्षं लघु कट्वम्ललवणानुबन्धि विशदं पीतं रक्तं विदाहि कृष्णं चेति ॥

वायोः पुनरयं स्वभावः शीतो रूक्षः सूक्ष्मो व्यवाय्याशुकारी, अदृश्यो बली वेगवान्स्पर्शवांश्च लघुरनास्वाद्यः, तस्य नोपलभ्यते रसः, इति प्रतीत्यनीकेभ्योऽस्यानुमेयो रसः ॥

एवंस्वभावा वातपित्तश्लेष्माणः, तेषां वैकृत्यमन्योन्यसंसर्गात् ॥

शोणितमपि पित्तसमानमपि ग्रहणं चेति ।

रसः पुनर्मधुरः स्निग्धः शीतलो मृदुर्गुरुर्दीर्घविपाक्यविदाही पिच्छिलश्चेति ॥

कषायस्तु रसो रूक्षः शीतलो लघुर्विष्टम्भ्यविदाही चेति ॥

तिक्तस्तु रसः कषायरसस्वभावात्कषायसमगुणः, तीक्ष्णो विशेषेणेति ॥

कटुस्तु रसस्तीक्ष्णोष्णलघुरूक्षः क्षेमकारी विदाही चेति ॥

अम्लस्तूष्णोऽभ्यन्तरे विदाही बहिः शीतः श्लेष्मस्थाने च तीक्ष्णः सद्यःप्रसेकी क्षिप्रपाकी स्निग्धश्चेति ॥

लवणः पुनस्तीक्ष्णोष्णः स्निग्धो लघुर्विदाही चेति ॥

---

* धनुश्चिह्नान्तरगतो नास्ति पाठः कपुस्तके ॥

---

१ क. °दास्त्वत । २ क. °रोरोगेग्र° । ३ क. चैतेऽधि° ।

तत्र दोषरसविशेषा व्याख्याताः ॥

इदानीं येन यथा दोषो हीयते वर्धते वा, तद्वक्ष्यामः ॥

मधुरो रसः समानरसत्वाच्छ्लेष्माणं वर्धयति, शैत्याच्छैत्यम्, गौरवाद्गौरवम्, एकयोनित्वात् (योनिरिति)। अम्लः पुनः प्रसेकित्वात्प्रसिञ्चति। तत्प्रत्यक्षमुपलभामहे। यथा दाडिमाम्रातकमातुलिङ्गदर्शनादन्तोरास्यात्कफः प्रसिच्यते। तेन हि सिद्धं श्लेष्मलवणत्वं च। तेन चास्योनिबन्ध इति। लवणः पुनः संधिमर्मप्रसक्तमेकान्तमाश्रितं विस्यन्दयति श्लेष्माणम्, फेनाकुलां गङ्गामिव महामेघः। स वातपित्ते अभिभूय सर्वं शरीरमवाप्नोति, विकुरुते च विकारम्, स्नेहाच्चैनमभिवर्धयते, बलेनैवानुबलम्, स्पर्शाच्च विधीयमानः कोपाय कल्पते। इति मधुराम्ललवणास्त्रयः श्लेष्माणं वर्धयन्ति ॥

तिक्तस्तं विरोधित्वात्प्रशमयति। माधुर्यं चास्य बलाद्विनिहन्ति, लाघवेन गौरवमभिभूय शमयति। कषायोऽपि रूक्षादेनमुपशोषयति। स हि रूक्षाभिभूतोऽपि शोषमापद्यते, इति। कटुकस्त्वौष्ण्याच्छ्लेष्मणो विलयनमानयति। शोषं चोपजनयति। लाघवेन गौरवमभिभूय शमयति। इति तिक्तकटुकषाया रसास्त्रयः श्लेष्माणं शमयन्ति ॥

कटुको रसः समानरसत्वात्पित्तं वर्धयेत्। तैक्ष्ण्यात्तैक्ष्ण्यम्, औष्ण्यादौष्ण्यम्, रौक्ष्याद्रौक्ष्यम्, लाघवाल्लाघवमेकयोनिरिति। अम्लः पुनः समानगुणत्वात्पित्तं वर्धयति। विदाहित्वाद्विदाहं वर्धयेत्। तैक्ष्ण्यात्तैक्ष्ण्यं कोपयति। बलेनास्य बलमनुविधीयमानं प्रकोपाय कल्पत इति। लवणस्तैक्ष्ण्यादौष्ण्याच्चाभिवर्धयते पित्तम्, विस्यन्दित्वाद्द्रवी करोति। इति कटुकाम्ललवणास्त्रयः पित्तमभिवर्धयन्ति ॥

तिक्तः पुनः पित्तं प्रशमयति, शीतवीर्यत्वादौष्ण्यम्, मार्दवेन चास्य तैक्ष्ण्यमभिभवति। कषायस्तैक्ष्ण्यं मृदूकरोति, शैत्यादौष्ण्यम्, मधुरानुबन्धित्वाद्बलमुपहन्ति, इति। मधुरः पुनर्माधुर्यात्कटुत्वमभिभवति, शैत्यादौष्ण्यम्, स्नेहाद्रौक्ष्यम्, अविदाहित्वं गौरवेणाप्यभिभवति। इति तिक्तकषायमधुरास्त्रयः पित्तं शमयन्ति ॥

कषायः पुनर्वातं वर्धयति, रौक्ष्यात्परिशोषित्वान्माधुर्याच्छैत्यादभिस्यन्दित्वाच्च कोपयति। तिक्तस्तु रसः कषायरसस्वभावत्वात्कषायसमानगुणः समुद्दिष्टः, इति वातं वर्धयेत्। कटुकोऽप्येनमुदीरयति। रौक्ष्याल्लाघवाच्चैनम्। कषायतिक्तकटुकास्त्रयो वातं वर्धयन्ते, इति ॥

---

१ क. वर्धयते। २ क. °दाहं च व°।

अम्लो रसो वातमनुलोमयति । क्षिप्रपाकित्वात्तैक्ष्ण्यात्प्रक्लेदित्वात्स्नेहादौष्ण्याच्च शोषित्वशैत्यरौक्ष्यमार्दवान्यभिभवतीति ॥ लवणोऽप्येनमौष्ण्यात्प्रशमयति । तैक्ष्ण्यात्प्रणुदति । स्नेहाज्जयति परिशोषभग्नं चास्य विस्पन्दित्वाद्द्रवीकरोति । लवणो हि रसो वातप्रत्यनीकत्वाद्रसानामतिवीर्यत्वाद्वातमतिबलमपि दोषाणां बहुगुणत्वादतिरसबाहुल्याद्वा हन्ति ॥ मधुरोऽप्यस्य रसः स्नेहाद्रौक्ष्यमभिभवति । गौरवेण लाघवम्, अतिवीर्यत्वाद्विदाहित्वाद्बलेन चैनमभिभूय जयति, इति । अम्ललवणमधुरा रसास्त्रयो वातं शमयन्ति ।

इत्येतै रसैः प्राणादिषु विप्रतिपन्नेषूक्तो यो रोगसमुद्देशः, स शाम्यति ॥

वर्धते च यथारोगं—तदशान्तौ मनसो ( विप्रतिपत्तिः । मनसो ) विप्रतिपत्तौ मानसौ द्वौ रोगौ—पूर्वाबद्धहृदयस्फालिनौ ॥ तदशान्तौ व्यापद्यते चेतना बुद्धिः । ततो नागानामभावः ॥ एवमेते प्राणादयः पञ्च, द्वौ च मानसौ चेतना बुद्धिश्चेति नव ॥

तत्र श्लोकाः—

गजानां देहजा नित्यं वातपित्तकफास्त्रयः ।
व्याधयस्तु गुणाश्चैव तेषां रसनिमित्तजाः ॥
त्रिषु दोषेषु ये दृष्टा गुणा गुर्वादयो दश ।
रसेष्वपि त एव स्युर्विज्ञातव्या विचक्षणैः ॥
शीतोष्णौ स्निग्धरूक्षौ च तथा विशदपिच्छिलौ ।
मृदुतीक्ष्णौ गुरुलघू विज्ञेयास्तु गुणा दश ।
बुद्ध्वा सम्यग्गुणानेतान्रसदोषेषु बुद्धिमान् ॥
प्रतिहन्यादुदीर्णांस्तैः प्रत्यनीकैर्गुणैर्गुणान् ।

एतेषां प्रतीकाराभ्युत्थितेन भिषजा चतुर्दशेमानि ज्ञातव्यानि भवन्ति—निमित्तम्, आयुः, बलम्, सत्त्वम्, सात्म्यम्, प्रकृतिः, व्याधिः, शरीरम्, कालः, वयः, देशः, ग्रहणी, अभिचारः, आशास्तकम्, इत्येतानि सम्यगुपलक्षयितव्यानि । यस्मादेतेषु चिकित्साऽऽयत्ता ॥

अथैषां निर्देशमनुव्याख्यास्यामः । तत्र निमित्तं दूतागम आतुरस्य पूर्वाख्याने प्रस्थाने प्रवेशे च परिप्रश्ने परिग्रहौषधसंस्कारारम्भेषु च भिषजा परीक्ष्यम् ॥

तत्र श्लोकः—

प्रस्थाने च प्रवेशे च निमित्तान्युपधारयेत् ।
ततः क्रियां प्रयुञ्जीत यदीच्छेद्भूतिमात्मनः ॥

आयुरपि क्रियापथेषु परीक्ष्यम् । तत्राऽऽयुर्नामासमसंधिबन्धनो रोमशायत-रुच्छविर्दीर्घरोमेशाष्टो महाविडुः परिपूर्णाण्डकोशो महाकुम्भो महाश्रवणो मृदु-दीर्घकुञ्चितस्निग्धकेशो युग्मजैकरोमा पृथ्वायतमुखो महाग्रीवो धनुष्परिणत-वंशः सुनिष्कान्तविषाणो दीर्घाङ्गुलिकरो व्यूढोरस्को मृदुदीर्घवालोऽवरुद्धजघ-नापर ऋजुवृत्तगात्रः सुविमक्तशिराः सूक्ष्मबिन्दुभिर्विभक्तावग्रहो व्यूहविच्छन्तरम-स्तको महाश्रोताः सुगन्धिः सुचारुनेत्रः सस्वनो महामेण्ढ्रः सूपचितांसो नित्य-मास्फोठनादिकर्णः स्निग्धस्फटिकार्धचन्द्रपरिपूर्णविंशतिनखः सुगतिः पुर-स्तादुदग्र इत्येतान्यायुष्मतो लक्षणानि व्याख्यातानि ॥

तत्र श्लोकाः—

सहस्रेष्वपि नागानां कश्चिदेतैः समन्वितः ।
समस्तलिङ्गो न गजो भवतीति विनिश्चयः ॥
त्रीणि षट् सप्त पञ्चाष्टौ लिङ्गान्येतानि यस्य तु ।
आयुः स लभते दीर्घमिति मे निश्चिता मतिः ॥
त्रीणि यस्य तु लिङ्गानि दृश्यन्ते मनुजाधिप ।
तृतीयां वा चतुर्थीं वा दशां संप्राप्य नश्यति ।
पञ्च यस्य तु लिङ्गानि दृश्यन्ते नयकोविद ॥
स दशां पञ्चमीं प्राप्य षष्ठीं वाऽपि विनश्यति ।
षडेव यस्य लिङ्गानि दृश्यन्ते नृपसत्तम ।
सप्तमीं तु दशां प्राप्य सोऽष्टमीं वा विनश्यति ।
सप्त यस्य तु लिङ्गानि दृश्यन्ते मनुजाधिप ।
नवमीं दशमीं वाऽपि दशां प्राप्य विनश्यति ।
अष्टौ यस्य तु लिङ्गानि दृश्यन्ते शास्त्रनिश्चयात् ॥
एकादशीं दशां प्राप्य द्वादशीं वाऽपि नश्यति ।

बलमपि नागानां क्रियापथेषु विज्ञेयम् । (*क्रियया प्रविचारेषु नागानां द्विविधं बलं) धीरास्त्वाचक्षते प्रायोगिकम्, वैरपरामर्शिकं च । तत्र प्रायोगिकं नाम दशयोजनाद्यध्वगमने च तत्परीक्ष्यते । वैरपरामर्शिकमपि चतुर्हस्तनिखा-ताष्टहस्तोच्चचतुष्पारिघपारिणाहादिस्तम्भप्रमर्दनेन लक्ष्यम् । तत्र सुशरीराल्पशरी-रयोर्बलपरीक्षा पिपीलिकाभारहरणेन व्याख्याता । पिपीलिका ह्यल्पशरीराऽपि

*पद्यगन्धीदम् ।

१ क. °मसाय° । २ क. °मशेष्टो । ३ ख. °तांशो नि° । ४ क. °रिचयप° ।

सत्पात्मशरीराद्दशगुणं भारमुद्वहति । तत्पुनर्द्विविधम्–सहजम्, आहारजं च । तत्र सहजं सर्वभूतातिशयवद्धस्तिजन्मनान्तरीयकम् । तत्पुनः सत्त्वशरीरप्रमाणवीर्यमदप्रभावैरुपचीयते । आहार(ज)बलमपि चतुर्विधेनाऽऽहारेण विवर्धते शरीरोपचयमा(ना)न्तरीयकम् । शरीरोपचयोऽपि सप्तविध(ः)शोफाध्यायादवगन्तव्यः । सामर्थ्यबलमपि पुनरेकैकं त्रिविधम्—ज्येष्ठं मध्यममधमं चेति । तत्रोत्तमबलः शीतोष्णक्षुत्तृष्णातपदुर्दिनशस्त्रघातभारप्रमर्दनजलतरणवधबन्धेषु शस्त्राग्निक्षारकर्मादिषु च प्रयुज्यमानेषु नोद्विजते, स्नेहपानादींश्च विषहते । यथाऽयम्, तथा मध्यमाधमबलौ, इति । एवं बलमभिसमीक्ष्य क्रियापथं प्रयुञ्जीत । दोषोऽन्यथा भवति । तत्र यदा दुर्बलोऽयमिति मत्वा बलवत एव गजस्याल्पमौषधं दीयते, तद्धीनमात्रमसमर्थमानकं क्षपणाय भवति । यथाऽल्पोऽग्निरिन्धनावष्टब्धः पवनोदीरितोऽपि न वृद्धिमुपगच्छति, एवमल्पौषधमसम्यक्प्रयुज्यमानम् । प्रत्युत व्याधिनिमित्तमेव भवति । तथा च क्रियाप्रविचारनिमित्तभूताश्चत्वारो दुर्बलाः–प्रकृतिदुर्बलः, व्याधिदुर्बलः, वयोदुर्बलः, औषधदुर्बलश्च । ततो भैषज्यं तीक्ष्णं मृदु मध्यं च यथाबलं विभज्य प्रमाणतो दद्यादिति ॥

तत्र श्लोकः—

बलं विज्ञाय नागानां मात्रामात्रेति तत्त्वतः ।
यथास्वमौषधं दद्यादिति शास्त्रविनिश्चयः ॥

सत्त्वमपि नागानां क्रियापथेषु विज्ञेयम् । तच्च त्रिविधमेव—तामसं राजसं सात्त्विकमिति । तत्र तामससत्त्वा नित्योद्विग्नशीलत्वाच्छेदनलेखनदहनसीवनविस्रावणोद्धारणानि न विषहन्ते वारणाः, तेषां विलायनपाचनभेदनशोधनावसादनकृमिहरणान्यौषधैरेव प्रयोज्यानि, शस्त्रकर्माग्निक्षारकर्माणि च ॥ राजसास्तु द्विरदपतयो वाक्यादिभिरुदकपांशुकवलैः समाश्वासिताश्छेदनभेदनानि विषहन्ते,सुमहत्यपि चाग्निकर्मणि क्रियमाणे । सात्त्विकास्तु प्रधानकर्मस्ववक्रियमाणेषु सत्त्वबलसमुच्छ्रयान्न विक्रियामुपगच्छन्ति । इत्येवं त्रिविधं सत्त्वमनुव्याख्यातं भवति ॥

तत्र श्लोकौ—

इति सत्त्वसमुद्देशस्त्रिविधः परिकीर्तितः ।
पारंपर्येण तेषां तु विहितः समुपक्रमः ॥

---

१ क. °बलाबला भवन्ति, इ° । २ क. क्रियां प्र° । ३ क. °थाऽल्पोपचयो भ° । ४ क. °धिविवृद्धिनि° । ५ क. °साधन° । ६ क. °मेसु च क्रि° ।

पूर्वं कर्म तु कर्तव्यं तामसेषु विशेषतः ।
राजसेषु प्रलोभार्थं सात्त्विके नित्यमुत्तमे । इति ॥

सात्म्यमपि वारणानां क्रियापथेषु परीक्ष्यम् । तच्च त्रिविधम्—जातिसात्म्यम्, प्रकृतिसात्म्यम्, रससात्म्यम्, इति । तत्र जातिसात्म्यं नाम जन्मनः प्रभृति हस्ती क्षीरमुपसेवते क्षीरपानाच्च धातुविशुद्धिर्भवति । एवमेव जातिसात्म्यं विद्यात् । प्रकृतिसात्म्यं नाम त्वङ्मूलपत्रसकवलकुवलपल्लवानि सततमुपसेवमानाः पांशुप्रमाथं सलिलावगाहं स्वैराहारं च सेवमानाः शीतसात्म्या भवन्ति । इत्येतत्प्रकृतिसात्म्यं विद्यात् । रससात्म्यं नाम मधुराम्ललवणकटुतिक्तकषायाणां रसानामन्यतमो ह्युपयुक्तो रसो धातुविशुद्धिमुपजनयति । एवमेतद्रससात्म्यं विद्यात् ॥

तत्र श्लोकः—

यथासात्म्यं प्रयुञ्जीत क्रियाविधिमशेषतः ।
( †न व्यापदं समासाद्य विषादी स्याच्चिकित्सकः ॥

प्रकृतिमप्यशेषेण नागानां परीक्ष्य क्रियां प्रयुञ्जीत ) तत्र त्रिविधा प्रकृतिरिह वातपित्तश्लेष्मसंभवा । तां प्रकृत्यध्याये वक्ष्यामः ॥

तत्र श्लोकः—

तिस्रः प्रकृतयो ज्ञेया वातपित्तकफात्मिकाः ।
विज्ञाय तु यथावत्तां क्रियां सम्यक्प्रयोजयेत् ॥

व्याधिरपि वारणानां क्रियापथेषु परीक्ष्यो भवति । तत्र चतुर्विधो व्याधिः—साध्यः कृच्छ्रसाध्यः, याप्यः, प्रत्याख्येयः, इति । तत्र साध्यः सुखसाध्य इत्यर्थः । सुखसाध्यो नाम प्रत्येकदोषान्वितो विकारो दीप्ताग्नेरचिरसमुत्थितो दोषोऽक्षीणमांसरुधिराद्यपरिणतवयसाश्रितपरिचारकोपकरणः स्वेदस्नेहविरेचनस्थापनकल्ककषायचूर्णारिष्टाद्यशेषसंभारोपपन्नः साध्यः । कृच्छ्रसाध्यो नाम यो दोषसमवायोत्थितो मन्दाग्निश्चिरसमुत्थितदोषः स्थिरगूढजातमूलः प्रक्षीणमांसशोणितः सुचिरातिबलाश्रयो बहुतीक्ष्णोऽनुषक्तोपद्रवस्तु परिचारकोपकरणोऽश्रद्दधानः श्वासी स कृच्छ्रसाध्यः । याप्यो नाम यस्तु दोषो वैषम्याद्दीप्ताग्निर्बलवान्क्षीणमांसमेदा दीर्घायुर्लक्षणो व्याधिमवाप्नोति, न स तेन रोगेण मुच्यते, न म्रियते क्रियया धार्यमाणः, स रोगो याप्यः । प्रत्याख्येयो नाम—यः सर्वदोषलिङ्गान्वितो विकारः क्षोभितधात्विन्द्रियबल-

† धनुश्चिह्नान्तरगतो भ्रष्टः पाठः कपुस्तके ।

१ क. °प्ताग्निर° । २ क. °द्यवशे° । ३ क. °तः स्थाविरा°

लोऽपि विविधान्धातूनुपद्रवानुत्पादयति—अपस्मारोत्कर्णकश्वासारोचकश्वयथून-तिपिपासिनं शूनगात्रोदरमेढ्रमतिकृशं शोणितच्छर्दनमल्पमूत्रपुरीषमल्पानुपानं सर्वावस्थान्तरगतं विपन्नबलेन्द्रियमुपगतसंज्ञं वा म्रियते, इति ॥

तत्र श्लोकः—

चतुर्विधं तु यो व्याधिं तत्त्वतो लक्षयेद्भिषक् ।
स शक्नोति क्रियां कर्तुं नागानां भिषगुत्तमः ॥

शरीरमपि नागानां क्रियापथेषु परीक्ष्यम् ।

तत्रोत्सेधायामपरिणाहसंस्थानतः स्थूलकृशावनतप्रदेशा ऋजुवक्रश्लक्ष्णब-हुलकर्कशादयो गजानां बाह्याभ्यन्तराः शरीरप्रविभागा भवन्ति ॥

तत्राऽऽभ्यन्तराः—सप्त त्वचः । सप्त पेशीशतानि । सप्तैव शिराशतानि । पञ्च स्नायुसहस्राणि । पञ्चैव शतान्यशीतिः स्नायुकूर्चाः । पञ्चविंशतिर्धमन्यः । षण्णवति(तीं) रोमकूपसहस्राणि, असंख्येयानीत्यपरे । विंशोत्तराणि त्रीण्यस्थिशतानि । तेषामस्थ्नामाकृतिविशेषाः षडुद्दिष्टाः कपालरुजकप्रतरनलकवलयफल-काख्याः । शुषिरमृदुस्थिरमज्जानि शुषिरात्मविशेषाः ।

अथ शरीरावयवानां सविंशशतानि । संधीनां त्रीणि षट्षष्ट्यानि । तेषा-मष्टौ संध्याकृतयो भवन्ति । तद्यथा—प्रतरकोशमण्डलसामुद्रोलूखलवायसतुण्ड-शङ्खावर्ततूणसीवनवदिति । एते संधयो येषु शरीरावयवेषु भवन्ति, तान्यनु-व्याख्यास्यामः । तत्र कूर्मपञ्जिपादसंदानभागप्रोहापस्करेषु कोशसंधयः । अंस-फलकबाहुसकुदिकाग्रन्थ्यष्ठीव्यमण्डूकशङ्खचक्रसक्थ्यवकृष्ट इत्येवमादिषु सामु-द्रसंधयः । पृष्ठवंशककाटिकास्तेनकूर्मपर्यन्तशिरोमस्तावग्रहनिर्याणकर्णविद्रप्चि-वितानश्रवणेषीकाकुम्भान्तरकुम्भकटगण्डेषु (*तूणसीवनवत् । शङ्खहनुकपोल-सगदामृक्षण्योष्ठ इत्येतेषूभयतो वायसतुण्डसंधयः । ) कटाक्षिकूटप्रस्तावापाङ्गव-र्त्मनेत्रक्लोमहृदयनाभिषु मण्डलसंधयः । वाहित्थप्रतिमानशम्बूकदन्तवेष्टस्थानेषु शङ्खावर्तसंधयः । श्रोतःशृङ्गाटकेष्वि*त्येते संधयो व्याख्याताः ॥

अथ मर्मणां सप्तोत्तरं शतम् । पञ्चदश श्रो(स्रो)तांसि । षट्चत्वारिंशदधि-कानि चत्वारि प्रदेशशतानि । संध्यस्थिभागाश्रिताः षोडश कण्डुराः । इत्युद्देशः ॥

---

*धनुराकारमध्यस्थः पाठो भ्रष्टः कपुस्तके । *'शृङ्गाटकेषु' इत्युत्तरं किंचित्त्रुटितं भवेत् ।

---

१ क. °नतो मूल° । २ क. °पशतस° । ३ क. °कोडाम° । ४ क. °लूप्यल° । ५ ख. °स्तनाकू° ।

तत्र श्लोकः—

शरीरमेवं विज्ञाय प्रदेशैर्बहुभिर्वृतम् ।
शस्त्रकर्म प्रयुञ्जानो नाऽऽबाधां प्राप्नुयाद्भिषक् ॥

काल इति ख्यातः । यस्मात्स्नेहनस्वेदनानुवासननस्तकर्मपीडनप्रधमनधूपनाभ्यङ्गपरिषेकावगाहतर्पणाग्निशस्त्रक्षारकर्मभक्ष्यभोज्यपेयलेह्याद्याः क्रियाः प्रयुज्यन्ते । वातादीनामुपद्रवाणां प्रशमनार्थम् । तेषु प्रकृतिस्थेषु धातुवद्वर्णा भवन्ति, अप्रकृतिस्थेषु विषमाः । तस्मात्कालं परीक्ष्य क्रियां प्रयुञ्जीतेति । तदेतच्छरीरं पुनर्द्विधाऽवतिष्ठते कल्पम्, अकल्पं च । तत्र कल्पशरीरं समदोषधातुः । प्रशमनैरिन्द्रियैरिन्द्रियार्थान्य(न)वबुध्यते । समाग्निरुत्थानोपवेशनप्रचारादिषु न दीनचेष्टः, मुखोच्छ्वासनिमेषणोन्मेषानिलमूत्रपुरीषोत्सर्गादिप्रचारेषु प्रकृतिस्थः कल्पशरीरो भवति । विपरीतमकल्पशरीरं विद्यात् । काल इति व्याध्यातुरयोरप्यवस्था यस्मात्स्नेहनस्वेदनोत्थापनानुवासननस्यपीडनधूपनप्रधमनाभ्यङ्गपरिषेकावगाहतर्पणाग्निशस्त्रक्षारकर्मभक्ष्यभोज्यपेयलेह्याद्याः क्रियाः प्रयुज्यन्ते वातादीनामुपद्रवाणां प्रशमनार्थम् । तेषु प्रकृतिस्थेषु समाः । तस्मात्कालं परीक्ष्य क्रियापथं प्रयुञ्जीत ॥

स च हेमन्तशिशिरवसन्तग्रीष्मप्रावृट्शरदाख्याः षडृतवः कालः । स एव पुनस्त्रिधा विभज्यते शीतोष्णसाधारणलक्षणः ॥

तत्र हेमन्ते शिशिरे च समत्वागतवीर्या भवन्त्योषधयः । प्रायसो(शो) मधुरा मधुरविपाकाः समत्वागतवीर्यत्वात् । तेन तदा पित्तस्य वायोस्तनुत्वमभिनिर्वर्तते । श्लेष्मणः प्रबलता भवति ।

दिवास्वप्नाजीर्णादिभिश्च वसन्ते श्लेष्मा प्रकोपमापद्यते संनिरुद्धमार्गप्रचारः ॥

ग्रीष्मे त्वौषध्यो दिवसकरकराभिहतशरीरा निःसृतवीर्या भवन्ति । तदा वायुः प्रबलीभवति । श्लेष्मणः क्षयः ॥

प्रावृषि शीतवातोष्माभिहतशरीराणां मातरिश्वा भूयो भूयः प्रकोपमुपगच्छति । वर्षास्वौषध्यो भवन्त्यसमत्वागतवीर्याः, न ग्रीष्मगुणयुक्ताः, न शिशिरगुणोपगताः । ततोऽस्मिन्नृतौ विशेषेण पित्तमुपचीयते, श्लेष्मणश्च क्षयो भवति ॥

भूयश्च शरदि दिवसकरकराभिहतानां पित्तप्रबलता भवत्यजीर्णादिभिरुपार्जनैः । असमागतवीर्यत्वाद्भवत्यम्लभूयिष्ठत्वमोषधीनाम् । ततः पित्तबाहुल्याद्वातश्लेष्मणोः क्षयो भवति ॥

---

१ ख. व्याख्यातः । २ क. °वतन्त्यो° । ३ क. वायुर्बली° । ४ क. °त्वाद्यात्य° ।

तत्र श्लोकः—

विज्ञाय दोषोपचयं यथावदृतावृत्तौ कालविभक्तरूपम् ।
रोगोपशान्तिं प्रयतेत कर्तुं दोषः प्रवृद्धो हि निहन्ति नागान् ॥

वयस्त्रिविधम्—बालं मध्यं वृद्धमिति । तदशेषतः परीक्ष्य पश्चात्क्रियापथं प्रयुञ्जीत ।

तत्र ताम्रनखनयनतनुरोमा ताम्रोष्ठतालुजिह्वो मन्दगतिरव्यक्तकृष्णोष्ठोऽव्यक्तपलिहस्तः श्लक्ष्णपादतनुशिरा† ........ ........ ......बालः ।

तेजोबलजवसंपन्नो ग्रहणधारणोपपन्नः समोपचितस्थिरमांसः प्रोहसंदानाष्ठीव्यापास्त्रावापस्करपक्षक्षयभागायामकाण्डकटीबलानां के‡(?)चाविलबहलता भवति मध्यमे वयसि, नागानाम्, विवर्णपरुषत्वं च ॥

तनुकायवलीचितदेहमजवं स्तब्धपालीकमल्पपित्तत्वान्मन्दज्योतिः संभ्रश्यमानग्रीवं प्रबलवातश्लेष्माणमविदग्धपुरीषं लङ्घनापसरणगमनतरणादिष्वसमर्थं निरुत्साहतयाऽल्पवीर्यत्वाच्च नागमकामवन्तं वृद्धं विद्यात्, इति ॥

अत्र श्लोकः—

वयस्त्रिविधमालोक्य ततः कुर्यात्क्रियापथम् ।
बालमध्यमवृद्धानामिति मे निश्चिता मतिः ॥

देशोऽपि नागानां क्रियापथेष्ववश्यं परीक्ष्यः ॥

कस्मिंश्च खल्वयं देशे जातः, कतरद्वा वनमधिश्रयति, कस्मिन्वा कीदृशे देशे वारणाः संभवन्ति ॥ अत्रोच्यते त्रिविधो देशः—जाङ्गलो ह्यनूपः साधारणश्चेति ॥

तत्र जाङ्गलो देशः पर्यवकाशभूयिष्ठस्तरूपचितः खदिराश्वकर्णतिलकतिनिशधवशल्लकीसालसोमवल्कबदरीकिंशुकाश्वत्थवटामलकीवनगहनो ह्यनेकशमीशिंशपासनश्रीपर्णीककुभपीलुकरीरधन्वप्रायः, स्थिरदग्धशुष्कतरुर्बलवत्पवनविधूयमानतरुविटपोऽल्पसलिलो मृगतृष्णिकोपगुढोऽग्निदग्ध इव खरपरुषशर्करासिकताबहुलश्चकोरशतपत्रवञ्जुलारिष्टभासचाषगोमायुजीवंजीवकोलूकलावकतित्तिर्यनुगीतचरितभूमिभागः पृषततरक्षुलोहितखरकरभशार्दूलगवयजम्बुद्वीपिशशरुरुचमरीचितः ।

तस्मिन्वातपित्तशोणितात्मका विकाराः प्रादुर्भवन्ति । स्थिरकठिनतनुदी-

† अत्र किंचित्त्रुटितं प्रतिभाति । ‡ 'केषांचित्' इति भवेत् ॥

१ क. °त्र न° । २ क. °लितह° । ३ क. °ल्कलव° । ४ ख. °न्वनः प्रा° । ५ क. °रागसीक° । ६ क. °सभाष° ।

र्घविक्रमशरीराः क्षुत्पिपासासहा बलवन्तः क्रोधनाश्च द्विरदपतयो भवन्ति यत्र तं देशं जाङ्गलमिति विद्यात् ॥

अथानूपः—तालतालीनालिकेरार्जुनखर्जूरीचूताम्रातकनिम्बजम्बुकोशाम्र-पियालल्लंबुसकदम्बोदुम्बराशोकतिलकवञ्जुलशालकदलीबकुलसप्तपर्णकर्णिकार-प्रभृतितरुगणख(ष)ण्डमण्डितो देशः । कुररहंससारसक्रौञ्चचक्रवाकशुकसारि-काकदम्बपरपुष्टक(का)रण्डवप्रभृति(भिः)खगरावैरुपगतिभः(गतः), बहुकुसुमव-द्भिश्च पादपैरुपशोभिततटाभिः सिंहव्याघ्रमहिषवराहगजगवयवानरविक्षोभितस-लिलाभिर्गिरिवरविवरकंदरोदरविनिःसृताभिर्विमलशीतलशुचिसुरभिसलिलाभिः स्रवन्तीभिरुपशोभितः, सरिद्भिः समुद्रपर्यन्तोपचितभूमिभागः, कोकनदकुमुद-कुवलयकमलोत्पलतामरसकह्लारादिभिर्जलरुहैः कुसुमैरुपशोभितसलिलाशयः, पद्मवननलिनविविधशकुनिगणविक्षोभितोपशोभितसलिलोपचितः संभ्रान्तसम-न्तात्सुखशीतलसुगन्धेन मारुतेन नृत्यमानतरुवरगणशिखरः ।

तस्मिन्विपुलबलशरीरा वेर्णवन्त आचार्याः पृथ्वायतकरचरणपृष्ठाण्डकोशो-दरशिरसः सुकुमाराश्च द्विरदपतयो भवन्ति यत्र, तं देशं व्याधिप्रायं श्लेष्मल-मा(म)नूपं विद्यात् ॥

एतयोरेव च देशयोर्वीरुद्वनस्पतिगुल्मवातस्पौ(?)षधिमृगशकुनिगणयुतं, क्वचित्तडागोदकपानपल्वलसरःशोभितं च, सहजपङ्कप्रवालबहुलावनतशोभित-तीराभिः सरिद्भिरुपशोभितभूमिभागम्, स्थिरसुकुमारैर्हस्तिभिरुपेतं साधारण-मिति तं देशं विद्यात् ।

तस्मिन्व्यामिश्रविकारा व्याधयः प्रकोपं समुपगच्छन्ति ॥

तत्र श्लोकः—

एवमालोक्यदेशं तु ततः कुर्यात्क्रियापथम् ।
गजानामौषधैः सार्धं यथादेशं विभागवित् ॥

ग्रहण्यपि क्रियापथेषु परीक्ष्या विशेषतो नागानाम् ।

कस्मात्, यतस्तामविज्ञाय न क्रियापथः सम्यगनुविधातुं शक्यः । सा खलु चतुर्विधा—तीक्ष्णा मन्दा समा विषमा चेति । तत्र—तीक्ष्णा पित्तात्, मन्दा [5]श्लेष्मणः, समा त्रिभ्यो वातपित्तकफेभ्यः समेभ्यः, विषमा वायोश्च भवति । इत्येता ग्रहण्यश्चतस्रः ॥

ततस्तीक्ष्णज्योतिः—यवसकवलकुवललवणतण्डुलरसभोजनप्रायमाहारयतः

१ क. °पः—पाता° । २ क. °शाम्राजया° । ३ ख. °दरीब° । ४ ख. °तटीभिः । ५ क. वर्णयन्तः ।

समभारातीतमपि तृणमुपयुञ्जानस्य विक्रियां नाऽऽपद्यतेऽग्निः, सुसंहितस्थिरलिण्डश्च भवति, स तीक्ष्णज्योतिर्वारणो विज्ञेयः ॥

मन्दज्योतिः—यथोक्तस्याऽऽहारस्यार्धमपि नोपयुङ्क्ते श्लेष्मभूयिष्ठत्वाद्भिन्नविवर्णदुर्गन्धिपुरीषश्च भवति स मन्दज्योतिर्वारणो विज्ञेयः ॥

यस्तु यथोक्ततैललवणशृततण्डुलरसभोजनयवसकवलकुवलादीन्युपयुङ्क्ते सुमनाः स्निग्धघनलिण्डश्च भवति स समज्योतिस्त्रयाणां साम्याद्भवति ॥

विषमज्योतिः—यथोक्तानि यवसरसभोजनादीनि कदाचिदतिप्रमाणेन ग्रहणं कार्यमाणो वा यत्नेनाधिष्ठितमुपयुङ्क्ते स्वरनिर्भिन्नदुर्गन्धपुरीषश्च भवति स विषमज्योतिर्वातसंसर्जना(*द्भवति ॥

तत्र तीक्ष्णज्योतिरपरिमितगुरुस्निग्धाहारमतिभुञ्जानो न तृप्यति । बह्वभ्यवहरणा)द्विपुलमांसो भवति । तस्यात्याहारोपचितमांसस्य विवृतसुचिरत्वान्मांसपेशीमार्गगतो वायुः प्रायसः(शः) प्रकोपमुपगच्छति ॥

मन्दज्योतिस्तु यदा हस्तिजीविभिर्ग्रहणीबलमविज्ञाय मन्दबुद्धिभिरकामं भोज्यते स मन्दज्योतिरलसोऽस्थिरमांसमेदा न सुखमवाप्नोति हस्ती ॥

समज्योतिः समुदितबलजवसंपन्न उत्साहवांश्च वारणो भवति ॥

विषमज्योतिर्विषमत्वादनिलस्य नित्यं विषमं भजमानः । स कदाचित्स्वस्थः कदाचिदस्वस्थः कुञ्जरो भवति ॥

अग्निरपि चतुर्विधः—समो मन्दस्तीक्ष्णो विषमश्चेति । तत्र समपाकी समः । मन्दपाकी मन्दः । विषमपाकी विषमः । सर्वभुक्तपाकी तीक्ष्णः ॥

तत्र तीक्ष्णविषमावपरिमितविषमपाकित्वादशस्तौ । तेषां सममन्दौ प्रशस्तौ । तत्र मन्दं दीपयेत् । समं रक्षयेत । इति ॥

तत्र श्लोकः—

चतुर्विधं तु विज्ञाय ग्रहणीनां बलाबलम् ।
ततः प्रयुञ्जीत गजे यथायोगं क्रियापथम् ॥

अभिचारोऽपि नागानां क्रियापथे परीक्ष्यः ॥

अभिचारसमुत्थं दोषसमुत्थं च द्विविधं व्याधिमुपलक्षयेद्वैद्यः ॥

तत्र दोषसमुत्थो व्याधिः, यो यथोक्तक्रियोपशमो वातपित्तश्लेष्मणामसंकीर्णलिङ्गः । न चास्य नानाव्याधिलिङ्गता ॥

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ।

१ क. °संहत° । २ क. °ज्योतिः सातिसं° । ३ क. आभिचारोत्थितं

अभिचारसमुत्थश्चानेकव्याधिलिङ्गः। क्रियासु सम्यक्क्रियमाणास्वपि नोपशममुपैति ॥

एवं दोषसमुत्थम्, अभिचारसमुत्थं च व्याधिं समुपलक्ष्य प्रतिकुर्वीत। तस्माज्जपहोममङ्गलप्रायश्चित्तशान्तिनियतात्मना भिषजा भवितव्यमिति ॥

तत्र श्लोकः—

दोषाभिचारजान्व्याधीन्सम्यग्विज्ञाय तत्त्वतः ॥
यथायोगं क्रियां कुर्यान्मन्त्राणां नास्ति दुस्तरम् ॥

आशास्तकोऽपि नागानां (†क्रियापथे परीक्ष्यः।

यदा हस्तिजीविनो व्याध्यभिभूतं द्विरदमभिविज्ञाय कदाचिदाशंसन्ति देवताः। ) ताश्चाऽऽशस्ताः प्रसादमभिनिव(र्ब)र्तयन्ति, न च प्रागप्यशंस्तकं बल्यं तमुपहरन्ति हस्तिजीविनः, ततो देवानां(वाता) यथोक्तां पूजामलभमाना भूयो व्याधिमुपजनयन्ति। तस्मादाशस्तकं भिषजा परीक्ष्यम् ॥

तत्र श्लोकः—

इज्यां यथोक्तां कुर्वीत देवतानामतन्द्रितः।
अन्यथा देवतानां हि क्रोधो भवति दारुणः ॥

—:○:—

चतुर इति चतुष्पादा चिकित्सा—आतुरः, परिकर्मी, भिषक्, भेषजम्, इति ॥

तत्राऽऽतुरः—सत्त्वसंपन्नः सम्यक्शस्त्रभेषजाग्निक्षारकर्मणां सहिष्णुः, उपदिष्टकारी, दीर्घायुर्लक्षणश्चेति ॥

परिचारकः—प्रतिपत्तिमान्, अलोलुपः, यथाज्ञप्तकारी, उपकरणसंगोपनपरः, शौचाचारयुक्तः, अभिनयप्रतिनयस्थानेऽभियुक्तः, निपुणः स्वपरिकर्मणि, इति ॥

भिषक्—अवस्थितः शास्त्रार्थव्यवसायप्रयोगविज्ञानबुद्धिसंपन्नः' इति ॥

भेषज्यम्—यदनुपहतमनुपदिग्धमनुपतप्तमपुराणम्। इति विज्ञेयं प्रशस्तमित्येषां चतुर्णां पादानां समुदायात्सिद्धिर्भवति ॥

तत्र श्लोकाः—

एवं पञ्चादिकं सम्यग्यो विद्यान्मतिमान्भिषक् ॥

---

† 'धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके।

---

१ क. °शस्त्रकं। २ क. चतुष्पदा। ३ क. °दिष्टः करी।

अवसानचतुष्कं वै सोऽधिकस्तु चिकित्सकः ।
आमूढः सर्वरोगेषु योजयेद्यो भिषक्क्रियाम् ॥
प्रजासु च सदा मानं महत्त्वं च निपच्छति ।
पञ्च सप्त तथा त्रींश्च द्वावेव चतुरस्तथा ॥
नव चतुर्दश द्वौ च [1]द्विकौ ज्ञात्वा भवेद्भिषक्, इति ॥
इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने
द्वादशोपक्रमो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## अथ सप्तमोऽध्यायः ।

---

अथाङ्गराजोऽभिवाद्य पप्रच्छ पालकाप्यम्—'भगवन्कथमुत्पन्नानि पृथिव्यादीनि, के चैषां गुणाश्चोपगुणाश्च । किं च शरीरम् । कथ[3]श्चाङ्गमभिवर्तते । कश्च गर्भः । कथं चाभिवर्धते । कथं च त्रिविधा शरीराकृतिः समा विषमा समं विषमं[4] चाभिनिवर्तते, भद्रमन्दमृगसंकीर्णाश्च कथं निवर्तन्ते । कथं च कुब्जवामनहीनाधिकविकृताद्यान्यन्यानि च निवर्तन्ते, कथं वा कृष्णश्वेतरक्तरूक्षा निष्पद्यन्ते, मिश्रवर्णा वा हस्तिनः । कथं वा विषमविषाणा मोटादयः समुत्पद्यन्ते, नयनघ्राणत्वक्श्रोत्रजिह्वेन्द्रियाणां किमध्यात्मम्, किमधिदैवि(व)कम्, किमधिभूतम् । स्त्रीपुंनपुंसकविशेषाश्च केन जीवविशेषेणोत्पद्यन्ते । कथं च गर्भस्थो नोत्सृजति मूत्रपुरीषम्, न चापि बृंहति । किं मातृजम्, पितृजम्, आत्मजम् । रजस्तमःसत्त्वजानि[5] कानि । गर्भस्य वाङ्मनोबुद्धिरहंकारः सत्त्वरजस्तमसामात्मा कथमुत्पद्यते, तन्मयानि शब्दस्पर्शरसरूपगन्धाश्चेति । गर्भस्य किं वा पूर्वं संभवति । करचरणनयनमुखशिरोग्रीवागात्रापरसंधिवङ्क्षणनाभिदेशगुदमेण्ढ्राणि कथं विभज्यन्ते' इति ॥

ततः प्रोवाच भगवान्पालकाप्यः—'इह खलु भोः परं सूक्ष्मभावार्थमप्यव्यक्तमोष्ठस्पन्दनमात्रं त्रुटिः । सर्षपमात्रमोष्ठभेदो लवः । द्वे त्रुटी लघ्वक्षरः । द्वे लघ्वक्षरे अक्षिनिपातसंनिभं[6] निमेषः । निमेषास्तु दश पञ्च च काष्ठा । ता दश विंशतिः(च) कला । त्रिंशत्कलो[7] मुहूर्तः । ते त्रिंशदहःक्षपे लोके सूर्यो विभजते । तत्र कर्मणां चेष्टार्थं दिवसः, शर्वरी स्वापार्थ[8] । त्रिंशदहोरात्राणि मासः । द्वाद-

---

१ क. द्विकोशौ । २ क. °शोऽध्या° । ३ क. कथं वाऽङ्गमभिनिव° । ४ क. °मं च नि° । ५ क. °नि चाङ्गका° । ६ क. °संमितं नि° । ७ क. विंशतिकलो । ८ क. °य । यत्तु त्रि° ।

शमासो वर्षम् । लौकिके मासेन रात्राहं मै(पै)त्रमानम् । तेषु कृष्णपक्षः शर्वरी, शुक्लो दिवा । अयने द्वे यद्युक्तं दैवमानम् । तत्रोत्तरायनं(णं) दिवा, दक्षिणायनं निशा । तेन पक्षः, मासः, संवत्सरश्च ।

तेन चत्वारि वर्षसहस्राणि कृतयुगम्, तस्य चतुःशती संध्या, तावदेव संध्यांशः । ततश्चतुर्भागहीनस्त्रेता । द्वापरमर्धम् । चतुर्थोऽशः कलिः । इत्येतेषां युगानां कालेन शतानि सहस्राणि चासंख्येयानि वर्तन्ते । तानि चत्वारि युगानि परिनिवृत्तानि पुनश्चतुर्युगमित्युच्यते । द्वादशवर्षसहस्रं चतुर्युगमित्युच्यते । तान्येकसप्ततिरिन्द्रपर्यायः । चतुर्दशेन्द्रपर्याया ब्रह्मदिनम्, तावत्येव रात्रिः ।

तदादौ कृत्स्नमिदमीश्वरः संक्षिप्य कृत्वाऽध्यात्मं सुप्तो विबुध्यते । प्रतिबुद्धोऽथ ब्रह्मा व्यक्तिमचिन्त्यमध्यायमहर्मुखे बुद्धिमव्यक्तमसृजत् । बुद्धेर्मनः । मनसोऽहंकारः । अहंकारात्कालः । कालाद्दिशः । दिग्भ्य आकाशम् । आकाशाद्वायुः । वायोस्तेजः । तेजस आपः । अद्भ्यः पृथिवी ॥

ताभ्यः (?) शब्दवदाकाशम् । शब्दस्पर्शगुणो वायुः । वायो रूपगुणं तेजः । तेजसो रसगुणा आपः । अभ्द्यो गन्धगुणा पृथिवी । पूर्वानुपूर्व्यात्ते गुणानुत्तरानपि प्राप्नुवन्ति यावदिह गुणाः, यावन्तश्चोपगुणाः । सर्वे ते भूतगुणाः पृथिव्यां लक्ष्यन्ते । तत्समुत्थानि भूतानि स्थावरजङ्गमानि च । एतत्पञ्चगतिवत्सामान्येनान्योन्योपजीवीनि सपरिणामानि भूतान्युत्पद्यन्ते ॥

तत्रोद्भिजानि वृक्षगुल्मवल्लीतृणानि चतुर्विधानि स्थावराणि । अत्र भोगार्थे चतुर्दशौषधयः । तद्यथा—श्यामाकवेणुनीवारतिलमर्कटगवेधुकावरकाश्चेति सप्त वन्याः । प्रियङ्गुगोधूमयवमाषशालिषष्टिककुलत्थाः सप्त ग्राम्याः ॥

सरीसृपादिकादिक्चरैश्वराः (?) श्वापदपक्षिहस्तिवानराः सप्ताऽऽरण्याः । पुरुषाजाविगोश्वागर्दभोष्ट्राः सप्त ग्राम्याः । तेषामेव भूतानां पुरुषः श्रेष्ठः, पशूनां गजः । तयोरायुरुत्कर्षः शरीरबलाधानदोषोत्क(र्षापक)र्षेषु प्रयत्नः कर्तव्य इति । तत्र सात्म्यवयोबलप्रकृतिदेशकालाहारोपसेविनो मनुष्याः, परवशानुवर्तिनस्तु नित्यानुबन्धकर्मव्यायामबह्वनियताहारसेविनो वारणाः । तस्माद्विपानां शरीरबलाधानदोषापकर्षणेषु प्रयत्नः कर्तव्यः । तत्र वक्ष्यते ॥

---

१ क. मासोनवात्रा° । २ क. ते तु कृ° । ३ क. °वा । आयद्वौ य° । ख. °वा आयतद्वौ य° । ४ क. प्रतिबुद्ध्वाऽथ । ५ क. °णि च भो° । ६ क. °दिष्कारैश्वराः । ७ क. हस्ती ।

शरीरं खलु नामाहंकारात् । पृथिव्यापस्तेजो वायुराकाशमिति कर्णत्वग्जिह्वानयनघ्राणैः पञ्चभिरिन्द्रियैः शब्दस्पर्शरसरूपगन्धैश्च पञ्चभिरिन्द्रियार्थैः स्वभावेन चेतनया मनसा प्राणापानादिभिर्जीवितेन चेति पञ्चविंशतिभिर्गुणैर्युक्तं त्विदमव्यक्तं व्यज्यमानं शोणितरेतस्युत्पन्नं मातुर्योनिनाड्यां गत्वा विशद्देवगुणा भूतगुणा आत्मगुणाश्चैत्येतदनुपतन्ति । निवेश्यमानमनुनिवसन्ति । तद्यथा—भ्रमरमधुकरसंघाः पुष्पजं रजः प्रद्रवत्प्रद्रवन्ति, निवसमान(?)मनुनिवसन्ते। एवं खल्विदमेतत्परमाङ्गलिङ्गमात्मानमव्यक्तं वक्ष्यमाणं शोणितरेतस्युपपन्नं मातुर्याति कटिसंधौ विसन्ने(शन्तमे)व स्वगुणाः स्वात्मगुणाश्चात्यन्तं तमनुपतन्ति । तैस्तस्य षट्कोशस्थानानि भवन्ति । तत्रामगर्भदोषा वेदना व्याप्तिर्भवति ॥

पितृजमपि खल्वस्य शुक्रं मातृशोणितेन सह संप्रयुज्यमानं मारुतेन पूरितमीश्वरभावसंयुक्तं मूर्तिमापद्यते । दक्षिणं कुक्षिभागं पुमान्समाश्रयति, वामं स्त्री, मध्यमितरत् । संवृतात्पिण्डायामात्पुमान्संभवति, स्त्री पेश्याः, अर्बुदान्नपुंसकम् ॥

परिपच्यमानस्तु खलु मासेन स्थिरी भवति गर्भः । द्वितीये मास्यर्बुदं पेशी वा, तयोर्युगपदिन्द्रियाण्यभिनिव(र्व)र्तन्ते । शिरोक्षिकूटबाहुपृष्ठपार्श्वोदररोमकूपाश्च तृतीये मासि। चतुर्थे व्यक्ती भवति गर्भः । पञ्चमे मासि चेतनाऽस्योपजायते । षष्ठे मनः । सप्तमे बुद्धिः । अष्टमे मासि स्थैर्यम् । नवमदशमैकादशेषु सर्वाङ्गसंपूर्णः सप्तभिः शिराशतैः सर्वैः सान्वयसमन्वितः स्थिरीभूतो नाभिनिबद्धया नाड्या मातुराहारजं रसं भुञ्जानः संवत्सराद्वा वै जायते। सहदेवगुणैर्भूतगुणैरात्मगुणैश्च ॥

तस्येमे देवगुणा भवन्ति—विक्रान्तौ विष्णुः । गले शक्रः । कोष्ठेऽग्निः । उपस्थे प्रजापतिः । प्राणापानयोर्वायुः । कर्णयोर्दिशः । खेष्वाकाशम् । जिह्वायां सरस्वती । पदेषु मित्रावरुणौ । चक्षुष्यादित्यः । कर्मणि विश्वकर्मा । भूमिरस्य देहे । शब्दे रुद्रः । त्वचि विद्यात् ( ? ) वाच्यग्निः । क्षान्तौ ब्रह्मा । पर्जन्यो हृदये । भुजयोरश्विनौ । त्रिके मरुतः । इति देवगुणाः ॥

अथ भूतगुणाः—कर्णवदनगुदमेण्ढ्र*श्रोतः शब्द इत्याकाशयोनीनि (†रसो

---

* अत्र किंचित्त्रुटितं प्रतिभाति। † धनुराकारमध्यस्थः पाठो नास्ति कपुस्तके ।

---

१ क. विपन्नमेव। २ ख. °कोणस्था°। ३ क. °रिपाच्य°। ४ क. व्यक्तानि भवन्ति ग° । ५ क. °द्वावेव जा° । ६ क. बले ।

रसना""""। सर्वाणि च द्रव्याण्याकाशयोनिरिति। चक्षुरूष्मा कायाग्निरिति तेजोयोनीनि ) घ्राणं घ्रेयं संघात इति पृथिवीयोनीनि। स्पर्शः स्प्रष्टव्यं प्राणापानसमानव्यानोदाना वायुयोनयः ॥

अथाऽऽत्मगुणाः—सर्वेन्द्रियबुद्धिपरिद्रष्टा क्षेत्रज्ञः, संशयोत्पादनमभिमार्थनात्मकं मनः। आत्मेन्द्रियमनोर्थसंनिकर्षोत्पन्नव्यवसायात्मिका बुद्धिः, इति ॥

मनो बुद्धिरन्तरात्मा इत्यव्यक्तानि। कर्णत्वग्जिह्वाघ्राणनयनश्रोत्राणीन्द्रियाणि। शब्दस्पर्शरसरूपगन्धा इन्द्रियार्थाः ॥

समुत्पन्नै(†रिन्द्रियार्थै(?)) रिन्द्रियार्थान्गृह्णाति जितेन्द्रियेणोपक्रुष्टाम्[1]। सर्वसत्त्वानामिष्टानिष्टानामल्पमनल्पं[2] शब्दं श्रवणेन्द्रियेण गृह्णाति। शीतोष्णश्लक्ष्णखरमृदुकठिनघनविकीर्णस्निग्धविशदपिच्छिलरूक्षतीक्ष्णानां च स्पर्शविशेषाणामुपलब्धिः स्पर्शेन्द्रियेण। मधुराम्ललवणकटुतिक्तकषायाणां रसानामुपलब्धिः[3](ब्धी) रसनेन्द्रियेण गृह्णाति। त्र्यस्रचतुरस्रनिम्नोन्नतपृथुवृत्तसमविषमाकाराणि श्वेतताम्रपीतविमिश्रात्मकानि जङ्गमाजङ्गमानि द्रव्याणपक्षीन्द्रियेण गृह्णाति। इष्टानिष्टानां व्यस्तपिण्डितनिर्हारिणां गन्धानामुपलब्धिर्घ्राणेन्द्रियेण, इति ॥

तत्र ये चाऽऽत्मशरीरायत्ता वातपित्तश्लेष्माणः तेषां त्रीणि स्थानानि—पक्वाशयामाशयमलाशयाः ॥

अथ सात्त्विका भावाः—प्रहर्षः प्रीतिः सुखमानन्दकर्मासंतापश्चेति। तैक्ष्ण्यमधैर्यं धाष्टर्चं भयं संतापो रोषः सङ्गः क्षुत्पिपासेति राजसाः। अज्ञानं लोभो मोहः कामः क्रोधः स्वप्नो दैन्यमिति तामसाः ॥

अथ वायवः—प्राणापानसमानोदानव्यानाः। तेषां[4] कर्माणि। तत्र प्राणो घ्राणनयनवदनगुदमेण्ढ्रश्रोतसामानन्दकर्मात्मकः,प्रवर्तको निवर्तकश्चेष्टानाम्,नेता मनः सर्वेन्द्रियार्थस्य,विज्ञानकरः प्रकृतिस्पर्शयोः, मूलं योनिर्हृदयस्योत्साहस्य († योनिर्हर्षस्योत्साहस्य )स हि भगवान्प्रभवश्चाव्ययश्च, भूतानां भावाभावकरः सुखासुखस्य विधाता, मृत्युर्यमो नियन्ता प्रजापतिरिति। विश्वकर्मा विश्वरूपः सर्वाङ्गेषु सर्वस्य विधाता भावनो मत्तविभुर्विष्णुः क्रान्ता लोकस्य, वायुरेष भगवान्पञ्चधाऽऽत्मानं योजयित्वा शरीरं धारयति। तेषां विसर्गात्मकोऽपानः। उत्क्षेपणाकुञ्चनप्रसारणगमनकर्मात्मको व्यानः। भक्ष्यभोज्यपेयलेह्यानामशित-

† धनुश्चिह्नमध्यगतो नोपलभ्यते कपुस्तके ॥

१. क. °पक्रुष्टा°। २ क. °मल्पानल्पश°। ३ क. °लब्धर°। ४ क. एषां।

पीतलीढखादितानामभिवोढा समानः । प्राणापानसमानव्यानानामन्तकालेऽभ्युद्धर्ता चोदानः ॥

अथ तेजःस्थानानि—प्रदर्शनं चक्षुरूष्मा कायाग्निर्हृदयं त्वक्पर्यन्तमिति । तत्र चक्षुर्गतं रूपाणि गृह्णाति । कायाग्निरामाशयपक्काशययोरन्तरस्थो धातूनां चान्तरेषु प्रयोगान्पाचयति । हृदि संश्रयात्क्रोधयति । त्वक्पर्यन्तगतश्चाभ्यङ्गपरिषेकादीन्पाचयति ॥

तत्र श्लेष्मा संधीन्संश्लेषयति, मृदुकरश्च ॥

सप्त चास्य धातवो रसरुधिरमांसमेदोस्थिमज्जाशुक्रमिति ॥

दश चास्य प्राणायतनानि भवन्ति शिरोहृदयनाभिगुदवस्तिवातपित्तश्लेष्ममूत्रपुरीषाणीति ॥

प्राणयात्रार्थं चास्य षड्रसाश्च मधुराम्ललवणकटुतिक्तकषायाः । तैरुपपन्नो गर्भस्तिष्ठति ॥

तत्र त्रयाणां समवायाद्गर्भाधानं भवति मातुः पितुः, जीवस्य चेति ॥

मैथुनसंयोगात्पतिं यदाऽभिकाङ्क्षति धेनुका, तां समुत्पन्नर्तुकां (*तस्मादृतुस्नातां ) हस्तिनीं विद्यात् । आर्तवस्य द्वादशरात्रं भवति । तस्माद्दिवा रात्रौ वा हस्तिनो हस्तिन्याश्चसंयोगे प्रादुर्भावो भवति । यदा हस्तिन्यामृतुमत्यां मतङ्गजः संयोगेषु शुक्रमुत्सृजति तद्वायुः कोष्ठे प्रविभजते । मातुराहारात्संवर्धते । तस्मात्कवलरसपल्लवाहारासविना(?)क्षोभव्यायामतीक्ष्णोष्णाहाराविवर्जनात्स्यात्करेणुः । तत्र बहुशुक्रे पुमान्संभवति, स्त्री शोणितबाहुल्यात्, समे नपुंसकम्, शुक्रे तु वायुना द्विधाकृते यमलावुत्पद्येते । यद्रूपा(द्)गर्भं बिभर्ति धेनुका, तदाकारं भवति । तत्र ग्राम्यधर्मे निवृत्ते यदा योनिमुखगतं शुक्रं भवति । तच्च रुधिरसंसर्गात्कललं भवति । ततो जीवः संक्रामति गर्भम् । पृथिव्यापस्तेजो वायुराकाशं ज्ञानमिति षट्शरीरकारणानि भवन्ति । तत्समवायात्ततो योन्यां कललसंज्ञो भवति परिणामात्कललः खरत्वं भवति । स्वतेजसा विदाहे तत्खरी भवति परिणामात् । खरस्यार्बुदस्य पेशी भवति ॥

तत्र मज्जा च शुक्रं च नागानां गर्भस्थानां भवति । स्नाय्वस्थीनि *पितृ-

---

* 'केशश्मश्रुलोमास्थिनखदन्तसिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि, मांसशोणितमेदोमज्जाहृन्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि' इति सुश्रुतात् 'दृढानि पितृजानि, मृदूनि मातृजानि' इति पर्यवसितम् ॥

---

१ क. तेजसः स्था° । २ क. तस्मादनुस्थानां । ३ क. °हारः संव° । ४ ख. °णुः । ततश्च करेणुस्तत्र । ५ क. यच्च ।

जानि शुक्रान्तानि । जरायुमांसमेदोऽस्रगुदं धमन्यश्चेति मातृजम् । अन्नपातोत्पन्नः संवक्ष्यमाणः ॥

मातृपित्रोरशनविशेषात्कफपित्तानलप्रभृतीनामन्यत(म)माशुक्रनिषे(कं) प्राणिनमाश्रयति, स प्रकृतिमापद्यते ॥

वर्णाः कृष्णश्वेतरक्तरूक्षा वातपित्तकफशोणितात्मकाः, वर्णभेदाश्च तेषामन्योन्यसंयोगात्मकाः ॥

कुब्जवामनहीनाधिकवैकृत्ययमलभावाश्च वातात्मकाः ॥

विषाणानां वैषम्यं वातात्मकं भवति । संजायमानयोर्दन्तयोर्यदा समुपहरति वायुः, तदा दोषा उत्पद्यन्ते ॥

तत्र श्लोकौ—

यदा शिशुर्विचरति जीवमात्रो गर्भाशयाद्गर्भनिरोधमुक्तः ।
तदाऽङ्गचेष्टां विविधां शरीरे प्रवर्तते वायुबलेन कर्तुम् ॥
प्रवर्तते मूत्रपुरीषमस्य निमेषणोन्मेषणरोदनं च ॥
तदाऽभिलाषाङ्गविचारणं च वातादि सर्वा विविधाः क्रियाश्च ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने गर्भसंभवो नाम सप्तमोऽध्यायः ॥ ७ ॥

---

अथाष्टमोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
अजातशृङ्गं विधिवन्निर्गतं हस्तिनं भगात् ॥ १ ॥
प्रवृत्तेऽस्मिन्यथाकाले यूथानि समवेक्ष्य च ॥
यथावदनुपूर्वेण कृताञ्जलिपुटस्तथा ॥ २ ॥
इति प्रश्नं महाराजो व्याजहार यथातथम् ॥
महान्मे संशयो विद्वन्दृष्ट्वा वै कुञ्जरान्वने ॥ ३ ॥
गर्भः कथं संभवति संभूतः केन जीवति ॥
अस्थिस्नायु च मांसं च कतमे मासि जायते ॥ ४ ॥

---

१ क. °स्रयुगं ध° । २ क. °धयुक्तः । ३ क. °तशुक्रं वि° ।

छविश्च कतमे मासि त्वग्वंशः प्रविभज्यते ॥
†वृक्कौ नखानि रोमाणि यकृदन्त्राणि पुप्फसम् ॥ ५ ॥
हृदयं कतमे मासि गर्भे जायेत दन्तिनः ॥
पोतः कथं संभवति पोतकी जायते कथम् ॥ ६ ॥
पोती पोतोऽथ यमकं मिथुनं जायते कथम् ॥
उभौ वा पोतकौ केन उभे वा पोतिके कथम् ॥ ७ ॥
कथं वन्ध्या च शण्ढश्च कोशमेही च जायते ॥
कथं मृगः संभवति मन्दो वा केन जायते ॥ ८ ॥
भद्रश्चापि कथं नागः संकीर्णश्च कथं भवेत् ॥
मन्दो मृगमनाः केन मृगो मन्दमनाः कथम् ॥ ९ ॥
भवेत्तु जवनः केन जायतेऽल्पबलः कथम् ॥
कथं भीरुः प्रकृत्या च प्रकृत्या शूर एव च ॥ १० ॥
कथं भवति दुर्मेधा मेधावी च कथं भवेत् ॥
मन्दमेधश्च मातङ्गश्चैतदिच्छामि वेदितुम् ॥ ११ ॥
कालः कथं च भवति श्यामो वा केन जायते ॥
हरिद्वर्णो भवेत्केन रूक्षाभः केन वारणः ॥ १२ ॥
स्निग्धच्छविर्वा मातङ्गः कथं स्याल्लोहितच्छविः ॥
स लोहितच्छविः केन वर्णेषु भवति त्रिषु ॥ १३ ॥
गजश्चोलूकवर्णाभः कथं भवति जातितः ॥
केन वर्णेषु भवति त्रिषु चोलूकवर्णभाक् ॥ १४ ॥
बहुवर्णश्च मातङ्गः कथं भवति जातितः ॥
मुद्गवर्णश्च मातङ्गोऽप्युपदिग्धश्च तत्र यः ॥ १५ ॥
श्वेताभो जायते केन एतदिच्छामि वेदितुम् ॥
नखानि केन कालानि राजिमन्त्यपि वा कथम् ॥ १६ ॥
कथं श्यामानि जायन्ते श्वेतान्यपि च हस्तिनः ॥
केनास्य तालुकं कृष्णं केन कल्माषतालुकम् ॥ १७ ॥
केन पद्मपलाशाभं तालु नागस्य जायते ॥
कालजिह्वः कथं नागस्ताम्रजिह्वोऽथवा कथम् ॥ १८ ॥

---

† 'वुक्का' इति भवेत् ॥

---

१ क. वृप्कौ । २ क. पुष्पसम् ।

कथं कल्माषजिह्वो वा गजो भवति जातितः ॥
पिङ्गलः केन भवति मध्वक्षः केन जायते ॥ १९ ॥
हर्यक्षः केन नागः स्यात्काकाक्षः केन जायते ॥
अक्षिणी केन शुक्ले तु कालतारे पुनः कथम् ॥ २० ॥
गजः पारापताक्षो वा कथं भवति जातितः ॥
विकृताक्षो विरूपाक्षो जातान्धो वाऽपि वारणः ॥ २१ ॥
केन जायते वै नागः कालः पिङ्गललोचनः ॥
केन मुखाच्च हस्ताच्च स्वेदो भवति दन्तिनः ॥ २२ ॥
कस्मिन्देशे च वृषणावदृश्यौ केन वा पुनः ॥
म्लानशीर्षो म्लानमुखो विकटो बधिरस्तथा ॥ २३ ॥
ह्रस्ववालश्च मातङ्गो दीर्घवालः कथं भवेत् ॥
विषमाभ्यां च कर्णाभ्यां पुटकर्णश्च वारणः ॥ २४ ॥
नष्टकर्णश्च मातङ्गः कथं भवति जातितः ॥ २५ ॥
कुष्ठी किलासी विततः काणो हीनोऽथवा पुनः ॥
कुब्जः किलासमेढ्रश्च कथं भवति वारणः ॥ २६ ॥
अतिश्वेताश्च ये दन्ता ये च दन्ताः सुलोहिताः ॥
यथा भवन्ति तद्ब्रूहि मधुवर्णाश्च दन्तिनः ॥ २७ ॥
म्लानवक्त्रः कथं नागो ग्रन्थिदन्तस्तथैव च ॥
मुक्ता विषाणेषु कथं नागानां संभवन्ति च ॥ २८ ॥
म्लानगात्रो भवेत्केन स्तब्धगात्रस्तथैव च ॥
मृदुगात्रश्च मातङ्गः कथं भवति जातितः ॥ २९ ॥
सममूर्धा भवेत्केन तथा प्राप्नविदुर्गजः ॥
उदङ्मूर्धा स च कथं गजो भवति जातितः ॥ ३० ॥
मदं गृह्णाति मातङ्गः केन प्रथमयौवने ॥
अमदो वा भवेत्केन यावदायुर्मतङ्गजः ॥ ३१ ॥
मूढः कथं संभवति समदन्तश्च वारणः ॥
मत्कुणश्चैकदन्तश्च कथं स्यातां मतङ्गजौ ॥ ३२ ॥
करेणुः केन भवति त्रिविषाणः कथं भवेत् ॥
गजश्चतुर्विषाणो वा कथं भवति जातितः ॥ ३३ ॥

---

१ क. मुख्याच्च । २ क. गच्छति । ३ क. मोटः ।

वामोन्नतः कथं वा स्यात्कथं वा दक्षिणोन्नतः ॥
मूढेकदन्तो मातङ्गो जायते केन हेतुना ॥ ३४ ॥
उत्तमा हस्तिनो ये च प्रादक्षिण्या द्विजोत्तम ॥
तथैव नागा मोल्पार्हाः श्वेतच्छत्रस्य च द्विपाः ॥ ३५ ॥
गजाश्च मधुपर्कार्हा मानार्हाश्चैव हस्तिनः ॥
संभवन्ति यथा विप्र तथा मे वक्तुमर्हसि ॥३६॥
स पृष्टस्त्वङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
अदृश्यमार्तवं विद्धि हस्तिन्या हर्षकारि तत् ॥ ३७ ॥
यानाचरत्यसो भावांस्तान्मे कीर्तयतः शृणु ॥
प्रहृष्टकर्णलाङ्गूला ध्यानशीला विवर्तिका ॥ ३८ ॥
योनिश्च विवृता शुष्का मन्दं मन्दं च गच्छति ॥
यूथस्यान्ते विचरति पांशुपङ्कजलप्रिया ॥ ३९ ॥
पतितं हस्तिनीनां स्यादन्तरेणाऽऽर्तवं रजः ॥
एतैराकारसंस्थानैर्ज्ञेया ऋतुमती भवेत् ॥ ४० ॥

—:():—

अतः परं प्रवक्ष्यामि ऋतुमत्याश्च लक्षणम् ॥
प्रसन्नमुखवर्णा च योन्याश्च विवृतं मुखम् ॥ ४१ ॥
पुनः पुनः प्रस्रवति प्रहृष्यति पुनः पुनः ॥
समीपस्था न सहते हस्तिनश्चान्यहस्तिनीम् ॥ ४२ ॥
किञ्चिदुत्पुच्छकर्णी च योन्या प्रक्लिन्नपीनया ॥
समुत्थितकरग्रीवा विनता विकटस्थिता ॥४३ ॥
यतो गजश्च व्रजति ततोऽस्याग्रेऽवतिष्ठते ॥
हस्तिना च कृतं मूत्रं पुरीषं चापि हस्तिनी ॥ ४४ ॥
पुनः पुनः समाघ्राय हस्तमास्यं नयत्यसौ ॥
संप्रहृष्टाग्रवालेन मुहुराहन्ति तं द्विपम् ॥ ४५ ॥
रागान्मुहुः परिक्रम्य प्लवते वारणं वशा ॥
गुह्यदेशं समाघ्राय हस्तमास्यं नयत्यसौ ॥ ४६ ॥
इमांश्च कुरुते भूयो भावान्हर्षकरान्गजे ॥
यदा देशे मनोज्ञे तु पुरस्तिष्ठति वारणः ॥ ४७॥

---

१ क. °तः ॥ मोटैक° । २ क. मल्पार्हाः । ३ क. °र्हास्तथा ये नाम ह° । ४ क. तद्धि ।

तदा प्रहृष्टा नागस्य दन्तमालिङ्ग्य तिष्ठति ॥
करवक्त्रोष्ठमेण्ढ्राणि परिजिघ्रति सर्वतः ॥
संघ्राय चास्य गात्राणि गुह्यानि च विशेषतः ॥ ४८ ॥
वृक्षादाकृष्य शाखां च फुल्लबीजानि वारणम् ॥
कुमुदोत्पलपत्रैश्च सरःसु सलिलेन च ॥ ४९ ॥
कर्दमेन च शीतेन स्थले सिञ्चति पांशुना ॥
पक्षेण पक्षं चाऽऽहत्य मुखं जिघ्रति दन्तिनः ॥ ५० ॥
न चातिमात्रमादत्ते भक्ष्यं कुञ्जरसंनिधौ ॥
नैवाऽऽसीनं शयानं वा साऽपीष्टं निशि चाहनि ॥ ५१ ॥
हस्तिन्यृतुमती नागं न मुञ्चति कदाचन ॥
तत्तदेव करोत्यस्य येन येनै प्रहृष्यति ॥ ५२ ॥
फलमादाय रुचिरं मृणालं चापि शैवलम् ॥
गजस्य वक्त्रेऽर्पयति हस्तिनी मदनातुरा ॥ ५३ ॥
यदा देशे मनोज्ञे तु पुनस्तिष्ठति वारणः ॥
तदा विषाणमालिङ्ग्य हृष्टा नागस्य तिष्ठति ॥ ५४ ॥
एभिर्विद्यादृतुमतीं लिङ्गैर्गजवशां बुधः ॥
भुवनस्पतितोयेषु स्त्रीषु च श्रुतिरीदृशी ॥ ५५ ॥
ब्रह्महत्या महेन्द्रेण कृत्वा संक्रामिता पुरा ॥
स्त्रियस्त्रिरात्र्य(?)गम्याहुस्त्रिलोकेशं शतक्रतुम् ॥ ५६ ॥
तस्माद्धारयितुं शक्ता ब्रह्महत्या शचीपतिः ॥
प्रायश्चित्तं ततस्तासामादिदेश *कुशास्तरे ॥ ५७ ॥
वासोभिर्मलिनैर्भूमौ ब्रह्मचर्यसमन्विता ॥
स्थाने च शयने चैव रजः प्रस्रवतु त्र्यहम् ॥ ५८ ॥
मासि मासि करिष्यन्ति प्रायश्चित्तमिमं स्त्रियः ॥
ब्रह्महत्याविमुक्तास्ता गमिष्यन्ति शुभां गतिम् ॥ ५९ ॥
प्रायश्चितोपदेशाद्धि मानुषीणां रजः श्र(स्र)वेत् ॥
पुष्पं यत्र स्थितं शुद्धं हस्तिनीनां निसर्गतः ॥ ६० ॥

---

* 'कुशोत्तरे' इति स्यात् ।

---

१ क. °दावृक्षशा° । २ क. °न प्रकारेण प्र° । ३ क. मनोऽन्ये । ४ क. कुशान्तरे ।

रजो न स्रवते यासां तिर्यग्योनिस्वभावतः ॥
अदृश्यमार्तवं विद्धि हस्तिन्या हर्षसंभवम् ॥ ६१ ॥
उत्पन्नपुष्पा विज्ञेया कामलीलाविचेष्टितैः ॥
समुत्पन्नार्तवा राजन्नृतुस्नातेति तां विदुः ॥ ६२ ॥
अहानि द्वादश भवेदृतुस्तस्या नराधिप ॥
तत्र रात्रौ दिवा वाऽपि स्वभावाच्च प्रजापते ॥ ६३ ॥
ऋतुकाले तु संप्राप्ते धेनुकां प्लवते गजः ॥
कल्पः कल्पां महीपाल मुदितो मुदितामपि ॥ ६४ ॥
ततः पुरुषकारे तु निवृत्ते तस्य दन्तिनः ॥
तच्छुक्रं भजते योनिमच्युतं तस्य मेहनात् ॥ ६५ ॥
योन्या मुखं प्रविष्टं तु गर्भाशयमवाप्य च ॥
ततः संयुज्यते तत्र रक्तेन सह पार्थिव ॥ ६६ ॥
योनिं रुधिरसंसृष्टां यदा शुक्रं प्रपद्यते ॥
शुक्रशोणितसंयोगात्कललं संभवेत्ततः ॥ ६७ ॥
जीवः संक्रामति ततो गर्भमित्येष निश्चयः ॥
लब्धबीजा ततो मुक्ता प्रहर्षेण श्रमेण च ॥ ६८ ॥
हस्तिनी दन्तिनं दृष्ट्वा शनैर्विष्टभ्य गच्छति ॥
विनमत्याकम्पयति यथोक्ते कर्णचूलिके ॥ ६९ ॥
कण्डूयते तथा देहं तरुमाश्रित्य सर्वतः ॥
अवगाहं च पङ्कं च शीतां छायां च सेवते ॥ ७० ॥
गच्छन्तमुपसर्पन्तं द्वेष्टि चैव मतङ्गजम् ॥
लिङ्गैरेतैर्विजानीयाज्जातगर्भां तु हस्तिनीम् ॥ ७१ ॥

—:○:—

अतःपरं प्रवक्ष्यामि गर्भिण्या लक्षणं नृप ॥
कषायमधुराहारा द्विरदं द्वेष्टि भावतः ॥ ७२ ॥
संजातगर्भा प्रथमे मासे भवति हस्तिनी ॥
मृदुत्वग्जृम्भणपरा द्वितीये कललोद्वहात् ॥ ७३ ॥
योन्या प्रभूतोदकया तृतीये मासि वारणी ॥
करेणुरलसा च स्यान्मृदुशीताभिनन्दिनी ॥ ७४ ॥

---

१ क. °तुकालमपि शृणु ॥ अ°। २ क. संयुध्यते । ३ क. संक्रामति ततो गर्भमित्येष निश्चयः कृतः । ४ क. लब्धबीजं ततो मुक्त्वा प्र°। ५ क. सर्वशः । ६ क. °रमलास्या- स्या°।

चतुर्थे मन्दगमना मन्दमन्दोपसेविनी ॥
पञ्चमे पूर्णजठरा पांशुपङ्कजलप्रिया ॥ ७५ ॥
यूथप्रान्तं मृदुसमं देशं षष्ठे निषेवते ॥
अत्यर्थं जृम्भणपरा मन्दवेगा च सप्तमे ॥ ७६ ॥
द्विजान्दशति गम्भीरतोयप्लवनतत्परा ॥
अष्टमे नवमे मासि जलं विष्टभ्य तिष्ठति ॥ ७७ ॥
म्लानानना शीर्णकेशी दशमे क्लान्तलोचना ॥
निम्नमेकादशे द्वेष्टि संवेशोत्थानविक्लवा ॥ ७८ ॥
उन्नद्धनाभिरलसा गुरुगर्भतया च सा ॥
करिणी द्वादशे मासीत्युक्तं गर्भस्य लक्षणम् ॥ ७९ ॥

—:○:—

अतः शृणु महाराज गर्भाधानं विशेषतः ॥
मुनयो नयकारा ये शृण्वन्तु सुविचक्षणाः ॥ ८० ॥
ग्रन्थान्महार्थान्वक्ष्यामि यथावदनुपूर्वशः ॥
रसो रक्तमथो मांसं मेदोऽस्थीनि च धातवः ॥ ८१ ॥
मज्जा शुक्रं तु सप्तैते शरीरेषु शरीरिणाम् ॥
मधुरः कटुकश्चैव तथाऽम्लश्च रसा नृप ॥ ८२ ॥
तिक्तः कषायो लवणस्तेषामुपरसास्त्रयः ॥
एतेषां वीर्यनिर्वृत्तौ रसधातुर्नराधिप ॥ ८३ ॥
अव्यक्तः प्राणिनां प्राणान्प्रीणयत्यतिसौख्यतः ॥
स पूर्वं शोणितं प्राप्य मांसं भवति पार्थिव ॥ ८४ ॥
पारंपर्येण तेषां तु धातून्प्रीणाति दन्तिनाम् ॥
ततो हर्षो भवेज्जन्तोः प्रीणितेष्वथ धातुषु ॥ ८५ ॥
ततो हर्षात्प्रयत्नेन शुक्रं तस्य प्रजायते ॥
यथा ह्यरण्यां ज्वलनः सूक्ष्मो यत्नेन दृश्यते ॥ ८६ ॥
एवं मैथुनयत्नेन जन्तोः शुक्रं हि दृश्यते ॥
यस्मिन्समे हि प्रकृतिः पुंसंज्ञा क्रियते नृप ॥ ८७ ॥
प्रादुर्भावश्च तत्रैव परिणामश्च लक्ष्यते ॥
त्रयाणां समवाये तु गर्भाधानं भवेदिति ॥ ८८ ॥
मातापित्रोर्नृ(र्नर)पते जीवस्य च न संशयः ॥
पृथिव्यापश्च तेजश्च वायुराकाशमेव च ॥ ८९ ॥

१ क. °त्रोश्च नृप° ।

भूतान्येतानि कथ्यन्ते पञ्चैव खलु देहिनाम् ॥
समवायः पुनस्तेषां योन्यां कललसंज्ञितः ॥ ९० ॥
कललस्य परीणामात्खरत्वमुपजायते ॥
खरीभवति तद्राजन्विदाहेन स्वतेजसा ॥ ९१ ॥
खरस्य च परीणामादर्बुदं नाम जायते ॥
अर्बुदस्य परीणामात्पेशी स्यादिति निश्चयः ॥ ९२ ॥
ततोऽस्य शाखा जायन्ते तथा विद्धि नराधिप ॥
गर्भस्येहानुपूर्वेण सर्वभूतेषु पार्थिव ॥ ९३ ॥
यथा मधूच्छिष्टकृतं रूपमन्वेति विग्रहः ॥
स्त्रीपुंनपुंसकं तद्वज्जीवः समधिगच्छति ॥ ९४ ॥
*पर्वभिस्तु यथा सर्वैर्वेणुरुत्पद्यते नृप ॥
सर्वैरङ्गैस्तथा सूक्ष्मैर्जातैर्गर्भो विवर्धते ॥ ९५ ॥
शुक्रं रजो मलश्चैव गर्भस्थस्य न जायते ॥
चतुर्थे मासि जायन्ते स्नाय्वस्थीनि सिरास्तथा ॥ ९६ ॥
जायते तस्य निर्वृत्तिरङ्गानां तु महीपते ॥
निर्वृत्तिरनुपूर्वेण यथावच्छ्रोतुमर्हसि ॥ ९७ ॥
शिरो ग्रीवा च पृष्ठं च कर्णौ चाऽऽस्यं करस्तथा ॥
गात्रापरमथो बालस्तथा निष्कोश एव च ॥ ९८ ॥
उरस्तथाऽऽयामकाण्डमानुपूर्व्यान्नराधिप ॥
छवी च पञ्चमे मासि यथावत्प्रविभज्य च ॥ ९९ ॥
चक्षुः श्रोत्रमथो जिह्वा प्राणोऽपानस्तथैव च ॥
मुष्कौ नखानि रोमाणि यकृदन्त्राणि पुष्फसम् ॥१००॥
व्यज्यते हृदयं चैव षष्ठे मासि नराधिप ॥
संभवन्ति महीपाल गर्भस्थस्येह दन्तिनः ॥ १०१ ॥

---

* 'गर्भस्य हि संभवतः पूर्वं शिरः संभवतीत्याह शौनकः शिरोमूलत्वाद्देहेन्द्रियाणाम् । हृदयमिति कृतवीर्यो बुद्धेर्मनसश्च स्थानत्वात् । नाभिरिति पाराशर्यः, ततो हि वर्धते देहो देहिनः । पाणिपादमिति मार्कण्डेयस्तन्मूलत्वाच्चेष्टाया गर्भस्य । मध्यशरीरमिति सुभूतिर्गौतमस्तन्निबन्धनत्वात्सर्वगात्रसंभवस्य । तत्तु न सम्यक् । सर्वाङ्गप्रत्यङ्गानि संभवन्तीत्याह धन्वन्तरिः । गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवच्चूतफलवच्च । तद्यथा—चूतफले परिपक्वे केशरमांसास्थिमज्जानः पृथग्दृश्यन्ते । कालप्रकर्षात्तान्येव तरुणे नोपलभ्यन्ते सूक्ष्मत्वात् । तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति । एतेनैव वंशाङ्कुरोऽपि व्याख्यातः' इति सुश्रुते धन्वन्तरेरप्यत्रैव संवादो दर्शितः ॥

जीवोपजीवमाश्रित्य गर्भो भवति कालतः ॥
रसेन प्रीणितो जीवो गर्भस्थः किं न रोदिति ॥ २ ॥
जरायुणा मुखे च्छन्ने कण्ठे च कफवेष्टिते ॥
वायोर्गतिनिरोधाच्च गर्भस्थो न प्ररोदिति ॥ ३ ॥
मलाल्पत्वादयोगाच्च वायोः पक्वाशयस्य च ॥
वातमूत्रपुरीषाणि गर्भस्थो न करोति हि ॥ ४ ॥
सूक्ष्मत्वाद्विशदत्वाच्च नात्र किट्टं प्रशस्यते ॥
नाभ्यां प्रतिष्ठिता नाडी अन्तरे हृदयस्य च ॥ १०५ ॥
मात्रोपयुक्तान्देहस्थो गर्भो वहति वै रसान् ॥
चतुर्भागेन चांशेन गर्भं प्रीणाति हस्तिनी ॥ ६ ॥
†नाडी रसवहा ज्ञेया तया गर्भः स जीवति ॥
ततः समानसंज्ञानं व्यक्तं भवति पार्थिव ॥ ७ ॥
ज्ञानं च रसवीर्याभ्यां संभूयाऽऽशु विवर्धते ॥
बुद्धिः संजायते चास्य सप्तमे मासि पार्थिव ॥ ८ ॥
अष्टमे स्थिरसर्वाङ्गः संधिस्नायुसमन्वितः ॥
त्वगस्थिमांसमेदोभिः संयुक्तः संविवर्धते ॥ ९ ॥
नवमे दशमे चैव भवेदेकादशेऽपि वा ॥
द्वादशे वा गजो राजञ्जायते नात्र संशयः ॥ ११० ॥
नृप या द्वादशे मासि गर्भिणी न प्रसूयते ॥
इदं तु कारणं तस्या विज्ञेयं नरसत्तम ॥ ११ ॥
क्षीणशोणितमांसाया रूक्षशुष्काशनाद्भवेत् ॥
अध्वनो गमनाद्भाराद्बन्धनाच्च श्रमाद्भयात् ॥ १२ ॥
गर्भो मुह्यति हस्तिन्या वायुना परिशोषितः ॥
न स्पन्दते न स्फुरते चातुर्यं च न गच्छति ॥ १३ ॥
न गच्छति विनाशं च न च काले प्रसूयते ॥
अल्पप्राणा निरुत्साहा गर्भशय्यां न मुञ्चति ॥ १४
सा लीनगर्भा करिणी प्रसूतेऽतिचिरादपि ॥
धेनुर्वन्ध्याकनी चैव तथा नागोलिकाऽपि च ॥ ११५ ॥

---

† 'अयमर्धश्लोकः 'नाभ्यां'—इत्यर्धतः परं पाठ्यः' इति प्रतिभाति ॥

---

१ क. °भागो नवांशे° । २ क. °नं सर° । ३ क. °भ्यां स भूयाशुर्विव° । ४ क. राजसत्तम ।

एकद्वित्रिसमा गर्भं धारयन्ति यथाक्रमम् ॥ १६ ॥
हस्तिनी गर्भिणी या तु बह्वश्नात्यहितं यदा ॥
आहारं तरुणे गर्भे तेन दोषः प्रवर्तते ॥ १७ ॥
ततो दोषपरिस्पन्दो गर्भनाडीं प्रपद्यते ॥
स गर्भे जनयत्याशु व्याधीन्बहुविधान्बहून् ॥ १८ ॥
यदा त्वाहारगुणतो गर्भो भवति तर्पितः ॥
मातुर्गुणबलोत्साहसत्त्वतेजःसमन्वितः ॥
गर्भशय्यां परित्यज्य[1] विमथ्य परिवर्तते ॥ १९ ॥
योनिद्वारं समासाद्य तदा क्षिप्रं विजायते ॥
इत्येतेदभिनिर्दिष्टं[2] गर्भस्योत्पत्तिलक्षणम् ॥ १२० ॥

—:():—

अथ देवगुणानां तु विस्तरः संप्रवक्ष्यते ॥
ब्रह्मा मूर्ध्नि गले शक्रः स्कन्धे विष्णुरवस्थितः ॥ २१ ॥
नाभ्यामग्नी रविर्दंष्ट्र्योर्मित्रः[3] पादेषु दन्तिनाम् ॥
धाता विधाता कुक्ष्योस्तु मेण्ढ्रे वाऽपि प्रजापतिः ॥ २२ ॥
अन्त्रेषु[4] नागास्तिष्ठन्ति सर्वलोकधुरंधराः ॥
वारणेषु प्रधानात्मा तिष्ठति ह्यजरोऽक्षयः ॥ २३ ॥
गात्रयोरश्विनौ श्रोत्रे दिशो मनसि चन्द्रमाः ॥
पर्जन्यो हृदि नागानामिति देवगुणाः स्मृताः ॥ २४ ॥

—:():—

आकाशाच्छ्रोत्रनिर्वृत्तिः शब्दः खानि च दन्तिनाम् ॥ २५ ॥
गर्भस्तस्याथ विज्ञानं सर्वाश्चेष्टाश्च मारुतात् ॥
दृष्टिरूष्मा[5] च पित्तं च रूपज्ञानं च तैजसम् ॥ २६ ॥
सलिलात्तु रसज्ञानं स्नेहः क्लेदः कफस्तथा ॥
गन्धज्ञानं च गन्धश्च संघातश्च महीगुणाः ॥ २७ ॥
इति भूतगुणाः प्रोक्ता वक्ष्यन्ते पितृजा गुणाः ॥
भवन्ति पितृजा[6] दन्ताः शुक्रमस्थि च दन्तिनाम् ॥ २८ ॥
केशा रोमाणि मज्जा च स्नायूनि च नखानि च ॥
सत्त्वं चक्षुर्बलं बुद्धिः स्मृतिर्मेधा श्रुतिर्जवः ॥ २९ ॥
पितृजं सर्वमेवैतन्मातृजं संप्रवक्ष्यते ॥
त्वक्पेशी शोणितं चैव मेदोऽन्त्राणि गुदस्तथा ॥ १३० ॥

---

१ ख. परित्याज्य । २ क. °तदिति नि° । ३ क. °ष्ट्योरिन्द्राः पा° । ४ क. अङ्गेषु । ५ क. °ष्टिः सूक्ष्मा च । ६ क. पितृतो ।

धमन्यश्चेति नागानां विज्ञेया मातृजा गुणाः ॥
आत्मजानि निर्वृत्तिश्च स्वकर्मफललक्षणाः ॥ ३१ ॥
शरीरं बलवृद्धिस्तु गर्भस्य रसजाः स्मृताः ॥
रसस्य प्रोणनं कर्म जीवनं शोणितस्य च ॥ ३२ ॥
प्रलेपनं च मांसस्य क्लेदो वर्ष्म च मेदसः ॥
देहधारणमस्थ्नां च मज्ज्ञश्चैवास्थिपूरणम् ॥ ३३ ॥
संभूतमथ गर्भस्थं वायुर्जीवयति द्विपम् ॥
शरीरे चान्तरिक्षे च दिव्यो राजन् महाबलः ॥ ३४ ॥
भगवाञ्जीव इत्येष सर्वप्राणभृदीश्वरः ॥
शरीरस्थोऽप्यदृश्यश्च वायुरित्युच्यते बुधैः ॥ १३५ ॥
(*यदा शिशुर्विचरति जातमात्रो गर्भाशयाद्गर्भनिरोधमुक्तः ॥
तदाऽङ्गचेष्टां विविधां शरीरे प्रवर्तते वायुबलेन कर्तुम् ॥ ३६ ॥
प्रवर्तते मूत्रपुरीषमस्य निमेषणोन्मेषणरोदनं च ॥
तदाऽभिलाषाङ्गविचारणं च वातो हि सर्वस्य भवेद्धि कर्ता) ॥३७॥

—:०:—

पूर्वं तु यदि मातङ्गः शुक्रमाक्रम्य तिष्ठति ॥
जनयेत्तत्र मातङ्गमत्र मे नास्ति संशयः ॥ ३८ ॥
संगमे तु यदा राजन्रक्तं मुञ्चति धेनुका[२] ॥
जनयेद्धस्तिनीं तत्र क्षिप्रमेव महीपते ॥ ३९ ॥
ऋतौ नित्यं यदा राजन्धेनुकां प्लवते गजः ॥
ततः शुक्रं प्रथमतो वारणस्य प्रसिच्यते ॥ ४० ॥
तच्चेत्प्रणिहितं शुक्रं करोति पवनो द्विधा ॥
जायेते यमकौ पोतौ तत्र मे नास्ति संशयः ॥ ४१ ॥
ऋतौ यदि समुत्पन्ने धेनुकां प्लवते गजः ॥
धेनुकायाः प्रथमतस्तत्र रक्तं प्रसिच्यते ॥ ४२ ॥
द्विधा करोति तद्वायुर्मुंश्चेत्प्रणिहितं यदि ॥
भवतः पोतिके तत्र अत्र नास्ति विचारणा ॥ ४३ ॥

---

* धनुराकारमध्यस्थौ श्लोकौ पूर्वाध्यायस्य गर्भसंभवाख्यस्य चरमलिखितौ केवलं खपुस्तके पुनरुक्तौ। कपुस्तके तु प्रकृताध्यायप्रारम्भे कृतप्रश्नानामेतदुत्तरकानुयोगाभावेन व्यर्थत्वावगमेन न लिखितौ ॥

---

१ ख. प्रीणनं । २ ख. धेनुकम् । ३ क. °मकोपेतौ । ४ क. चात्र ।

यदा तु प्लवते नागो वशामृतुमतीं नृप ॥
ततस्तु युगपच्छुक्रं प्रसिच्येत यदृच्छया ॥ ४४ ॥
करोति मारुतस्तच्चेच्छुक्रं प्रणिहितं द्विधा ॥
यमके मिथुनं तत्र जायते नात्र संशयः ॥ १४५ ॥
रसं तीक्ष्णं यदाऽभीक्ष्णं निषेवेत मतङ्गजः ॥
कटुकं च कषायं च रूक्षं चैव महीपते ॥ ४६ ॥
मृदा[1] समुपदिग्धं[2] च प्रावृट्काले च वारणः ॥
असंजातरसं खादेदगर्भं यवसं यदा[3] ॥ ४७ ॥
यथेष्टं हस्तिनी वाऽपि रसानेतान्निषेवते[4] ॥
यदा भवति संयोगस्तस्मिन्काले यदृच्छया ॥ ४८ ॥
नागे संजायमाने तु हस्तिनी व्यतिरिच्यते ॥
शुक्ररक्तसमायोगाद्योन्यां कुप्यति मारुतः ॥ ४९ ॥
दौर्बल्याच्चापि शुक्रस्य रसहीनतयाऽथवा ॥
यदि प्रादुर्भवेद्गर्भस्तस्मिन्काले यदृच्छया ॥ १५० ॥
षण्ढः संजायते तेन वातोपहतपौरुषः ॥
षण्ढा वाऽपि महीपाल हस्तिनी नात्र संशयः[5] ॥ ५१ ॥

—:○:—

बलीसंतानभक्षाणां पित्तधातुर्विवर्धते ॥
कट्वम्ललवणप्राये काले कर्फविघातने[6] ॥ ५२ ॥
रक्तमांसक्षयकरैर्मनोदेहाभिपातनैः[7] ॥
वृष्टेरुपरमाद्वाऽपि शुक्लोदकवलाहके[8] ॥ ५३ ॥
शरत्काले निदाघे वा तत्समानगुणे ऋतौ ॥
मध्याह्ने मध्यरात्रे वा ऋतौ तुल्ये तयोर्द्वयोः ॥ ५४ ॥
वशोपनीतप्रकृतिः पित्तेनाधिककर्मणा ॥
शुद्धः संजायते जात्या मृगनामा मतङ्गजः ॥ १५५ ॥
तस्यैव संप्रवक्ष्यामि सत्त्वाकारमसंशयम् ॥
वनचर्याक्रियाणां च लक्षणं प्रविभज्यते ॥ ५६ ॥
तनुत्वक्कर्णपादो यस्तन्वास्यस्तनुमेहनः ॥
तनुवंशोदरश्चैव तनुव्यक्ततनूरुहः ॥ ५७ ॥

---

१ क. मृदु । २ ख. समुपदग्धं । ३ क. खादेद्गर्भं यवसकं य° । ४ क. ख. °सान्नेता° । ५ क. °यः ॥ बली° । ६ ख. °फनिघातनैः ॥ र° । ७ क. °नैः ॥ दृष्टेरुपरमे वाऽपि । ८ क. °दरव° ।

तनुगात्रापरनखस्तनुग्रीवस्तथैव च ॥
दीर्घजिह्वाविषाणश्च दीर्घगात्रस्तथा च यः ॥ ५८ ॥
स ह्रस्वहनुहस्तास्यवालवालधिपुष्करः ॥
ह्रस्वाल्पमस्तकश्चैव ह्रस्वरोमाऽणुमेहनः ॥ ५९ ॥
निस्सृष्टस्रक्कनिर्याणकक्षांसंसगदान्तरः ॥
प्रस्तब्धरोमकर्णत्वक्पुरस्ताच्चापि संनतः ॥ १६१ ॥
करालो वृतकर्णश्च जलौकावर्णसप्रभः ॥
स्थूलोत्कृष्टावकृष्टैश्च संयुतः सर्वसंधिभिः ॥ ६१ ॥
उन्नद्धनाभिरन्धश्च निर्मांसाष्ठीव्यपिण्डकः ॥
स्थूलो निर्मीलिताक्षश्च कुब्जवंशश्च वारणः ॥ ६२ ॥
उच्चश्चाप्येल्पपार्श्वश्च तथा चाप्यल्पपेचकः ॥
ग्रीवया चाप्यपेतोऽसावुच्चैर्वद्धापचद्वयः ॥ ६३ ॥
एतद्वनगजस्यास्य शारीरं लक्षणं भवेत् ॥
वनस्थस्यैव वक्ष्यामि तस्य सत्त्वाश्रयं पुनः ॥ ६४ ॥
निपाने गोचरस्थाने शय्यायां चाप्यनिर्वृतः ॥
रूपादिभयशङ्की च नित्यमेवानवस्थितः ॥ १६५ ॥
इत्युक्तं वनवासस्य चर्यामपि तु वक्ष्यते ॥
सत्त्वस्य लक्षणं तस्य निश्चयेन विनिश्चितम् ॥ ६६ ॥
चर्यां वनमनुचरन्निपिनष्टि करं भुवि ॥
हस्तश्रवणलाङ्गूलो दीर्घं विभ्रमते क्रमैः ॥ ६७ ॥
भिन्नमूत्रपुरीषः समुद्विग्नः संप्रधावति ॥
पुनः पुनश्च विनदन्स्थाने हस्तं विनिक्षिपेत् ॥ ६८ ॥
समुन्नम्य शिरो याति यूथान्तं चोपदेशतः ॥
चर्यां निर्गन्तुकामस्य द्वारमेप्राप्य तिष्ठति ॥ ६९ ॥
कर्मण्युत्तानवेदी तु चण्डो दुर्विनयश्च यः ॥
शोकालुश्चाप्यसोढुश्च दुर्मना गुरुमक्षिकः ॥ १७० ॥
बह्वाशी बह्वलापश्चेद्विशीलो विषमाशनः ॥
रभसो दुर्भगश्चैव दन्तपातेषु चाक्षमः ॥ ७१ ॥

---

१ क. °समगादान्तुरः । २ क. संवृतः । ३ क. स्थूलकृष्णोविकृ° । ४ क. निर्मिलि° । ५ क. °प्यवपा° । ६ क. वनसंस्थस्य । ७ क. त्वस्य । ८ ख. विक्रमते । ९ क. °मप्यवति° । १० क. दुर्विजयश्च । ११ क. नभसो ।

पुरोधिसंपराये च विपरामर्शदुर्बलः ॥
जंवे प्रकृष्टवेगश्च भारं प्राप्यावसीदति ॥ ७२ ॥
रजोवृत्तिविधेयश्च दुर्मेधश्च मृगो गजः ॥
प्रकृत्या पैत्तिको ह्येष जात्या वाऽपि मृगो मतः ॥ ७३ ॥
कृच्छ्राच्चाऽऽप्यायते नागः क्षिप्रं च परिहीयते ॥
विधाः स्नेहाश्च तद्योगास्तृणानि विविधानि च ॥ ७४ ॥
लवणं प्रतिपानं च कवलान्कुवलानि च ॥
नित्यमस्मै विचित्राणि दातव्यानि बलार्थिना ॥ १७५ ॥
विशिष्टबलयोगो हि तस्य तज्ज्ञैः प्रशस्यते ॥
तिक्तैः कषायमधुरैः स्निग्धैश्चाऽऽप्यायते हि सः ॥ ७६ ॥
कट्वम्ललवणैश्चैव रूक्षैश्चाऽऽतुरतां व्रजेत् ॥
तस्माद्योगविभागज्ञो भिषक्शास्त्रविशारदः ॥ ७७ ॥
प्रकृतेरविरोधेन बल्यमाहारमादिशेत् ॥
बलं ज्ञात्वा च तद्योग्यं भिषक्कर्म समादिशेत् ॥ ७८ ॥
नित्यं च सान्त्वयेदेनं न चैनमभितापयेत् ॥
सोढुं स हि न शक्नोति तीक्ष्णदण्डावचारणम् ॥ ७९ ॥
तस्मात्कर्मान्तरं तस्य सदा तीक्ष्णं विवर्जितम् ॥
पिण्डोदकप्रदानं तु सान्त्वपूर्वं प्रशस्यते ॥ १८० ॥
तृणकूर्चोपचारेण ततश्चैनमुपाचरेत् ॥
कर्णमध्ये तु संरक्षा मृदा संपरिलेपयेत् ॥ ८१ ॥
अङ्कुशप्राजनैश्चैनं विशुद्धमवमार्जयेत् ॥
असंतापक्षमं चैनं वाचं न कटुकां वदेत् ॥ ८२ ॥
एवं हि सान्त्वतः कर्म सुखेन प्रतिपद्यते ॥
कर्मार्थश्चायमारम्भः कर्म चैवं प्रसिध्यते ॥ ८३ ॥

—:o:—

अथ मन्दस्तु हेमन्ते मासयोः पौषमाघयोः ॥
नागानां शीतसात्म्यानां मांसं मेदश्च वर्धते ॥ ८४ ॥
तुषारवातपरुषे प्रभूतयवसोदके ॥
स्वाद्वम्ललवणानां च रसानामुद्भवात्मके ॥ १८५ ॥
इन्द्रियोद्रेकजनने मेदो मांसं विवर्धते ॥
अम्ला मधुरवीर्याश्च भवन्त्योषधयस्तदा ॥ ८६ ॥

१ क. जीवे । २ क. मृगोत्तमः । ३ क. सान्त्वितः । ४ क. °नके मे° ।

ततस्तासां विपाकेन श्लेष्मा समुपचीयते ॥
भवन्ति च विचित्राणि धान्यानि वसुधातले ॥ ८७ ॥
वर्ष्म पुष्णन्ति परमं शुक्रं चैषां विवर्धते ॥
संजातमांसा हेमन्ते भवन्ति बलिनो गजाः ॥ ८८ ॥
तदा हर्षेण संपन्नाः समर्था मैथुने नृप ॥
रात्रौ निवाते गच्छन्ति सायं ते वाऽऽतपं दिवा ॥ ८९ ॥
न च दूरं विधावन्ति ग्रासनिर्वाणकारणात् ॥
तस्मिन्काले यदा राजन्धेनुकां प्लवते गजः ॥ १९० ॥
सा चाथ लभते गर्भं हस्तिनं प्राप्य हस्तिनी ॥
संजायते महाराज यादृशं तादृशं शृणु ॥ १९१ ॥
महामुखो महाग्रीवो महाश्रोता महोदरः ॥
महोरःकुम्भसगदाप्रतिमानासनैर्युतः ॥ ९२ ॥
महापस्कारनिष्कोशो वलिमान्स्थूलपेचकः ॥
निःसृष्टकूटभागश्च दीर्घस्थूलतनूरुहः ॥ ९३ ॥
चीनानुवंशः सान्द्रत्वक्सुविभक्तमहाशिराः ॥
उत्पार्श्वः सूक्ष्मनाभिश्च दीर्घवालधिमेहनः ॥ ९४ ॥
पुरस्तादुच्छ्रितश्चापि पश्चादवनतोऽपि च ॥
अच्छिद्रदेहबन्धश्च तथा च परिमण्डलः ॥ १९५ ॥
ह्रस्वास्यः पृथुजिह्वश्च ज्ञेयो ह्रस्वशिरोधरः ॥
मृदुसंभोगभागश्च दृढपर्वा तथैव च ॥ ९६ ॥
महाण्डकोशः पेक्षाभ्यां स्तनोभ्यां चोपलक्षितः ॥
बहलैर्मृदुभिश्चैव युक्तः स्निग्धैस्तनूरुहैः ॥ ९७ ॥
स्थिरैः स्थिराकृतितलैः पादैश्च पृथुभिः समैः ॥
अल्पोत्सेधश्च विज्ञेयो गूढोत्कृष्टः समाहितः ॥ ९८ ॥
दीर्घेण दीर्घाङ्गुलिना दीर्घपुष्करशोभिना ॥
युक्तो हस्तेन हर्यक्षः प्रभूतमृदुना च यः ॥ ९९ ॥
स्थिरे स्निग्धे विशाले च पीने चापि प्रकीर्त्यते ॥
विषाणे तस्य विद्वद्भिरोष्ठो दीर्घश्च रोमशः ॥ २००॥

---

१ क. चाथ । २ क. °ष्कोऽसौ व° । ३ क. दृष्टप° । ४ क. °कोशप° । ५ ख. पक्ष्माभ्यां । ६ क. °नाभ्यामभिल° । ७ क. °शाः ॥ ससवृ° ।

स्वयंवृत्तो मृदुस्निग्धो महाकर्णस्वनश्च यः ॥
पश्चादधश्च बद्धौ च कर्णौ जात्युपलक्षणौ ॥ १ ॥
संदानभागौ मोहौ च पलिहस्तौ तथैव च ॥
पलिपादश्च पादश्च ज्ञेयस्तस्य कचाविलाः ॥ २ ॥
रन्ध्रौ कक्षौ च कुक्षी च विशेषज्ञैर्विनिश्चिते ॥
प्रलम्बौ चोपदिग्धौ च श्रवणौ तस्य तद्धि च ॥ ३ ॥
शिथिलैर्बहुलैश्चैव मांसैः संलिप्तविग्रहः ॥
गूढो नीचैः प्रबद्धश्च बलवांश्चापि वारणः ॥ ४ ॥
कूर्मसंस्थानगमनो मन्दो मन्दगतिक्रमः ॥
चिह्नैरेतैः शरीरस्थैर्विज्ञेयो वनसंस्थितः ॥ २०५ ॥
वनस्थ एव च सदा विहरन्विविधाशनः ॥
अनवेक्ष्य चरत्येव शब्दादिभयकारणम् ॥ २०६ ॥
यूथमार्गानुसारी च स्थले वाऽप्यथवा जले ॥
संमील्य लोचने नित्यं निद्रान्ध इव गच्छति ॥ २०७ ॥
हस्तिन्यां हस्तमासज्ज्य प्रायेण मदनातुरः ॥
पृष्ठे च जघने वाऽपि वीर्यामथ स तिष्ठति ॥ २०८ ॥
पार्थिवाज्ञाप्रयुक्तेषु मोहशङ्कादिहेतुषु ॥
वादित्रोद्भटशब्देषु न मुह्यति न शङ्कते ॥ २०९ ॥
*पादपाशिकविक्षिप्तैस्तथैवापरया पुनः ॥
पाशैरुद्वेजनैर्बद्धोऽप्युद्वेगं नाधिगच्छति ॥ २१० ॥
इत्युक्तं लक्षणं तस्य वनचर्या तु सात्त्विकम् ॥
अतः परमिदं कृत्स्नं सत्त्वकर्मणि कीर्त्यते ॥ २११ ॥
अल्पश्रमः क्लेशसहो मृदुकोपोऽथ निर्जवः ॥
दंशस्पर्शक्षमश्चापि गम्भीरस्य च वेदिता ॥ २१२ ॥
मन्दाशनोऽथ मन्दाग्निरल्पाशी बलवांश्च सः ॥
महाधृतिरसंवोयी स्तिमितः सुभरोऽपि वा ॥ २१३ ॥
आकूजनश्च प्रायेण मेधया चापि मध्यमः ॥
पित्तोत्सन्नं पुरीषं च मूत्रं च विसृजत्यसौ ॥ २१४ ॥

---

*'पदे' इति भवेत् ।

---

१ क. °कर्णश्च निश्च° । २ क. रन्ध्रे । ३ क. °मासाद्य प्रा° । ४ क. °प्युद्योगं । ५ ख. दंशे स्प° । ६ क. °वापि स्ति° । ७ क. °त्तोच्छन्नं ।

त्रासितो वधबन्धैश्च नातित्रासं स गच्छति ॥
प्रकृत्या श्लेष्मलस्त्वेष मन्दस्तामस एव च ॥ २१५ ॥
पूर्वोक्त एवास्याऽऽहारो विशेषोऽयं ततो भवेत् ॥
स्निग्धैः कषायकटुकैस्तिक्तैश्चाऽऽप्याप्यते हि सः ॥ २१६ ॥
त्रासदंशवदातीक्ष्णैस्तस्येष्टं प्राजनाङ्कुशैः ॥
दृष्टप्रवृद्धकर्मा स्याद्गुरुगम्भीरवेदिता ॥ २१७ ॥
मृगस्याधैर्यमाधेयं मन्दस्यापि च लाघवम् ॥
श्लेष्मप्रकृतिरेवं च मन्दो लाघवमाप्नुयात् ॥ २१८ ॥

—:○:—

समशीतोष्णसुभगे प्रकामयवसोदके ॥
ऋतौ वसन्तस्य मुखे मन्मथादेशनक्षमे ॥ २१९ ॥
तत्समानमुखे वाऽपि पूर्वाह्णे पूर्वजन्मनः ॥
ये चाप्याहारजा दोषा मातापित्रोः कफादयः ॥ २२० ॥
सात्म्यत्वाद्देहबीजत्वान्न ते दोषकराः स्मृताः ॥
विषजन्मा यथा जन्तुर्विषदोषैर्न हन्यते ॥ २२१ ॥
त्रिदोषवशगो नागो न दोषप्रकृतिर्भवेत् ॥
रसाधिक्योपयोगेण(न) दोषाः स्युः स्वगुणाधिकाः ॥ २२२ ॥
शुक्रार्तवसमायोगस्तैश्चाऽऽदावनुभाव्यते ॥
पित्तादीनां त्रयाणां च कार्यं यत्र हि च द्विपे ॥ २२३ ॥
दृश्यते तद्विशेषाग्रैः स तद्योनिरिति स्मृतः ॥
दोषसात्म्यात्त्वसौ भद्रः समधातुः प्रकीर्तितः ॥ २२४ ॥
सर्वजात्याधिकैस्त्वेदस्तस्य लक्षणसंपदः ॥
भद्रश्च राज्ञो भूत्यर्थमिति तज्ज्ञाः प्रचक्षते ॥ २२५ ॥
प्रतिमाने सुविपुलश्चारुपृष्ठायताननः ॥
मुखे सुरभिनिश्वासस्ताम्रजिह्वोष्ठतालुकः ॥ २२६ ॥
पीनाण्डकोशः सुश्रोताः सुदीर्घाङ्गुलिपुष्करः ॥
स्वायतेनानुवृत्तेन करेण च करी पुनः ॥ २२७ ॥
सुप्रभूतान्तरमणिर्व्यस्तपीनस्तनान्तरः ॥
तथा व्यूढमहोरस्को महांसो विपुलासनः ॥ २२८ ॥

---

१ क. °लश्चैष । २ क. °तीक्ष्णोस्तस्येष्टं प्रा° । ३ क. च शाब्दला° । ४ क. °जस्था न ते । ५ क. °कस्रेहस्त° । ६ क. °नः ॥ ऋजुभिश्च सुनिर्वृत्तैर्यु°।

शिराभिर्वलिभिर्मुक्तैर्युक्तो गात्रैः समाहितैः ॥
इषीके चाक्षिकूटे च कुम्भश्चावग्रहेऽपि च ॥ २२९ ॥
कटौ च सगदौ वाऽपि दन्तवेष्टौ तथैव च ॥
अनुत्सन्ना अनिम्नाश्च प्रदेशास्तस्य कीर्तिताः ॥ २३० ॥
तथैषां तुल्यसंस्थानौ दन्तौ चापि विशेषतः ॥
मधुपिङ्गलनेत्रश्च मधुदन्तश्च दन्तिनः ॥ २३१ ॥
स्निग्धौ च परिनिम्नौ च समौ चापि प्रमाणतः ॥
कर्णौ सूक्ष्माण्डरोमाणौ ज्ञेयौ तस्य विपश्चिता ॥ २३२ ॥.
समानवर्णैर्मृदुभिः सूक्ष्मैः स्निग्धैस्तनूरुहैः ॥
एकजाश्चितरोमा च स्वायतव्यायतच्छविः ॥ २३३ ॥
मांसैः स्थिरैः समग्रैश्च यथाभागैः प्रतिष्ठितैः ॥
तनुभिर्बहुभिश्चैव सर्वतः स विभूषितः ॥ २३४ ॥
मोहौ च पलिहस्तौ च पलिपादौ च यस्य तु ॥
श्लक्ष्णाश्चानुपदिग्धाश्च तथा चैककचाविलाः ॥ २३५ ॥
महाशिरोधरांसश्च संलक्ष्येत च यस्य तु ॥
अपस्कारप्रदेशौ च नाहायामसमन्वितौ ॥ ३६ ॥
ताम्रपल्लवसंकाशमेहनः स्थिरविक्षपात् ॥
दीर्घवालधिवालश्च समपार्श्वस्तथा च यः ॥ ३७ ॥
गूढोत्कृष्टोऽल्पनिष्कोशः पुरस्तादुत्स्र(च्छ्रि)तस्तथा ॥
धनुर्विनतवंशश्च समसद्बन्धनोऽपि च ॥ ३८ ॥
अविक्षिप्तान्तरैः स्निग्धैः स्थिरैरपि खरैरपि ॥
समुद्धृतार्धचन्द्रैश्च वर्णसंस्थानयोगिभिः ॥ ३९ ॥
विंशत्या च नखैर्युक्तो योऽष्टादशभिरेव वा ॥
यो नोपदिग्धो न तनुस्तनुरन्ध्रस्तनूदरः ॥ २४० ॥
समसंस्थानबन्धश्च समधातुष्ववस्थितः ॥
तं नागं वनसंस्थं हि नाम्ना जात्युपलक्षितम् ॥ ४१ ॥
भद्रमित्येव जानीयाच्चिह्नैरेतैः शरीरजैः ॥
स शीतातपवातानां सोढा संवेगकारिणाम् ॥ ४२ ॥
द्रुमाद्रिशिखराणां च कूलानां पततामपि ॥
अशनेर्वातवृष्टीनां स्तनयित्नोश्च चिन्तनम् ॥ ४३ ॥

---

१ क. °प्रदशौ च ।

आवेगमदनाविघ्नः श्रुत्वा हर्षं स गच्छति ॥
वृद्धान्हरति कामार्तः संजिघ्रति समन्ततः ॥ ४४ ॥
शब्दानप्यतिवृद्धश्च हृष्टः संपरिजीवति ॥
अथ दीप्ता दिशो घोराः प्रसृताश्च दवाग्नयः ॥ २४५ ॥
ज्वलिताश्चाभ्रिसंघाताः क्षिप्रभ्रान्तांश्च विद्युतः ॥
तथैवान्यानि रूपाणि दृष्टानि सुबहून्यपि ॥ ४६ ॥
भीषयन्तीह नैवैतं भमान्युद्वेजनानि च ॥
वनस्थ एव स गजः स्वयूथमनुपालयेत् ॥ ४७ ॥
अनेन खलु विज्ञेयो वने सत्त्वेन सात्त्विकः ॥
चर्यायां चाग्रतः स्थित्वा यूथमेकोऽभिरक्षति ॥ ४८ ॥
ईरितः कोपमादत्ते क्षिप्रं चैवोपशाम्यति ॥
आरक्ष(क्ष्य)माणः पुरुषैर्भक्ष्यं खादेदनाकुलः ॥ ४९ ॥
इति चर्यासमुद्दिष्टं तस्येदं सत्त्वलक्षणम् ॥
जातियूथावसाहार्य(?) पुनः कर्मणि कीर्त्यते ॥ २५० ॥
अन्वर्थवेदी शूरश्च क्षमावान्न च कर्कशः ॥
कल्याणमेधा ते(स्ते)जस्वी सदासंतापवर्जितः ॥ ५१ ॥
समज्योतिः समाहारः सात्त्विकः शीलवांश्च यः ॥
तथा मशकदंशस्य संतापानां च स क्षमः ॥ ५२ ॥
तोत्राङ्कुशनिमित्तानामन्येषां च पृथक् पृथक् ॥
सोढा स तीक्ष्णस्पर्शानामिति ज्ञेयः क्रियागतः ॥ ५३ ॥
एवं वने च चर्यायां क्रियायां चापि कीर्तितम् ॥
यथागमं मया सम्यक्संपूर्णं भद्रलक्षणम् ॥ ५४ ॥
समधातुशरीरस्य तस्यायमशनाश्रयः ॥
प्राप्तसामान्यभोज्यस्य विशेषोऽत्र विवक्षितः ॥ २५५ ॥
कफपित्तानिलानां हि समृद्ध्या वर्धते द्विपः ॥
एषामेव समेतानां हान्यां च परिहीयते ॥ ५६ ॥
तस्माद्रससमायोगो यस्त्रिदोषाभिवृद्धये ॥
तत्तस्मै कुशलो युक्त्या नित्यमेव प्रदापयेत् ॥ ५७ ॥
प्रवृद्धबलसत्त्वं च ततस्तं कर्मणि क्षिपेत् ॥
लघुना साधयेच्चैनं न कर्म गुरु कारयेत् ॥ ५८ ॥

---

१ क. °तिबन्धश्च । २ क. °श्चन्दनाग्र° । ३ क. °थाचसा° । ४ क. न ।

सहसैवाहितं तस्य तीक्ष्णदण्डावधारणम् ॥
क्रमेण चानुबध्नीयाचस्माधन्त्रैः पृथग्विधैः ॥ ५९ ॥
अङ्कुशैः भ्राजनैश्चापि यथार्थं प्रहरन्बुधः ॥
क्रिया साफल्यमाप्नोति योक्ता विदितवेदिता ॥ २६० ॥
ऋजुरेव तथा शीघ्रो मुक्तोऽथ लघुरेव च ॥
भद्रः प्रसिद्धिमाप्नोति क्रियया नान्यथा नृप ॥ ६१ ॥
ऋजुः समाहितमनाः शीघ्रो दक्षस्तु वर्ण्यते ॥
मुक्तो विशदचेष्टस्तु लघुपूर्वानुगः स्मृतः ॥ ६२ ॥

—:():—

यंस्मिस्तेषां त्रयाणां च सत्त्वलक्षणसंकरम् ॥
पश्येत्संकीर्ण इति तं विद्वान्वारणमादिशेत् ॥ ६३ ॥
मारुतव्यपदेशिन्याः प्रकृत्या व्यपदेशतः ॥
प्रसिद्धलक्षणश्चैवं भूयो लक्षणमुच्यते ॥ ६४ ॥
स्तब्धरोमच्छविः सत्त्वे शरीरे वाऽनवस्थितः ॥
पुरुषस्य च नागस्य सरूक्षदशनेक्षणः ॥ २६५ ॥
बहुवर्णो विरूपाक्षः स्थूलपादनखस्तथा ॥
चपलस्तीव्रकामश्च धेनुकासु विशेषतः ॥ ६६ ॥
अश्रुच्याचारयुक्तश्च तूर्णगः सततोत्थितः ॥
अल्परोमनखः सर्वैः स्थूलैश्चापि प्रभेदिभिः ॥ ६७ ॥
विद्धाङ्गः कोपनो भीरुर्विवृतैः संधिभिर्युतः ॥
स्नायुभिश्च शिराभिश्च तनुगात्रापरान्वितः ॥ ६८ ॥
नित्यमुत्थापितश्रोता विशेषाग्निर्महाशनः ॥
शकृन्मूत्रं ततो भिन्नमल्पाल्पं परिमुञ्चति ॥ ६९ ॥
विषमः कर्मसु सदा स्थाने वाऽप्यनवस्थितः ॥
नम्रस्वश्चलचित्तश्च भाराध्वगमने क्षमः ॥ २७० ॥
लघुचेष्टोऽल्पमेधश्च बले चापि विगर्हित ॥
चिरग्राही क्रियायां तु विस्मर्ता चापि वारणः ॥ ७१ ॥
मृगपादसमाः पादा मुखं भद्रमुखाकृति ॥
तथा पृष्ठोदरं चास्य मन्दपृष्ठोदरोपमम् ॥ ७२ ॥

---

१ क. °स्माद्योत्रैः पृ° । २ क. विदितवेदितौ । ३ क. यथा तेषां । ४ क. ख. सकृन्मूत्रं ।

चतुर्भिरेव लिङ्गैस्तु लिङ्गितं जातितो गजम् ॥
तं संकरज्ञः संकीर्णं याज्ञवल्क्योऽभिमन्यते ॥ ७३ ॥
स एवाभ्यवहारोऽस्य त्रिषु शुद्धेषु यः स्मृतः ॥
संकीर्णलक्षणापेक्षो विशेषस्तत्र कीर्त्यते ॥ ७४ ॥
(*स्वाद्वम्ललवणैः स्निग्धैः क्षिप्रमाप्यायते रसैः ॥
कटुतीक्ष्णकषायैस्तु रोगमाशु प्रपद्यते ॥ २७५ ॥
तस्मादेवं विभागज्ञो बलमाधाय योगवित् ॥ )
सर्वव्यञ्जनसंकीर्णं भिषक्कर्म समादिशेत् ॥ ७६ ॥
वेदनार्तमसंमूढो विविधैः प्राजनाङ्कुशैः ॥
यथाजाति प्रदेशांस्तान्कर्ता कर्मसु संस्पृशेत् ॥ ७७ ॥
येन योऽभ्यधिकः स्यात्तु तस्मिल्लँक्षणसंकरे ॥
तन्मना इति तेनासौ चिह्नेन व्यपदिश्यते ॥ ७८ ॥
एवंवादिषु चैकेषु पूर्वाचार्येषु बुद्धिमान् ॥
अष्टादशैव संकीर्णा जातीर्जानाति काश्यपः ॥ ७९ ॥
एकद्विरूपास्तस्याग्रे नवान्यमनसो द्विपाः ॥
द्वित्रिरूपाः सुमनसो नवैवेति विनिश्चयः ॥ २८० ॥
*भद्रो मन्दमनास्तत्र भद्रो मृगमनाश्च यः ॥
मन्द्रो भद्रमना नागो मृगो मन्दमनास्तथा ॥ ८१ ॥
इत्येकरूपयोगेन षडन्यमनसो गजाः ॥
द्विरूपसमवायेन वक्ष्यन्तेऽत्र त्रयः पुनः ॥ ८२ ॥
भद्रमन्दशरीरेण ज्ञेयो मृगमना गजः ॥
तथा भद्रमृगश्चापि †मन्दत्वमनसा गजः ॥ ८३ ॥
चेतसाऽभिप्रपन्नश्च मृगमन्दोऽपि भद्रताम् ॥
भद्रो मन्दमनास्तत्र भद्रो मन्दगतिस्तथा ॥ ८४ ॥

---

* धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ॥ *'मन्दो भद्रमना नागो मन्दो मृगमनास्तथा । मृगो भद्रमना नागो मृगो मन्दमनास्तथा' इत्येव पाठो भवितुमर्हति वक्ष्यमाणषट्संख्यानुरोधात्। † 'मन्दत्वम्' इति पाठो भवेत् ॥

---

१ ख. लिङ्गिनं । २ ख. °ल्क्यो विम° । ३ ख. °र्जानीहि पार्थिव ॥ ए° । °° । ५ क. °त्येष रू° । ६ क. ° न्ते तत्र यः । ७ क. गतः । ८ क. १ क. °।

मृगस्वरूपसंपन्नो मन्दश्चे(चे)ष्टश्च वारणः ॥
इत्येकरूपयोगेन त्रयोऽन्यमनसो गजाः ॥ २८५ ॥
तथा मन्दमृगश्चापि मृगत्वं मनसा गतः ॥
मृगमन्दश्च भद्रश्च मनसाऽपि गतः सदा ॥ ८६ ॥
सर्वभद्रस्तथा चैव भवेद्भद्रमना गजः ॥
एवं त्रयश्च षट् द्वौ च नवान्यमनसो गजाः ॥ ८७ ॥
वक्ष्यन्ते द्वित्रिरूपाश्च तथा स्वमनसो नव ॥
द्विरूपसंकरे यच्च नाम पूर्वं निपात्यते ॥ ८८ ॥
तस्मिन्करोति तत्सत्त्वमिति सर्वेषु निश्चयः ॥
भद्रमन्दोऽपि यस्तत्र स भद्रो मनसा भवेत् ॥ ८९ ॥
तथा भद्रमृगो यश्च सोऽपि भद्रमना गजः ॥
मन्दभद्रश्च मन्दत्वं चेतसाऽपि प्रभिद्यते ॥ २९० ॥
मृगता मृगभद्रस्य व्यतिक्रमणचेतसः ॥
मृगमन्दो मृगत्वं च मनसा संप्रकाशयेत् ॥ ९१ ॥
तथा मन्दमृगो यश्च मन्दत्वं मनसा गतः ॥
मृगतां मृगभद्रश्च संप्राप्तश्चेतसा गजः ॥ ९२ ॥
मृगमन्दो मृगस्यैव मनसा संप्रकाश्यते ॥
इति द्विरूपयोगेन षडेते परिकीर्तिताः ॥ ९३ ॥
त्रिरूपाश्च त्रयोऽन्ये तु स्वमनोभिः समन्विताः ॥
त्रिरूपसंकरे चास्मिन्समनस्त्वः स्थितिर्भवेत् ॥ ९४ ॥
इत्येष बुद्धिप्रसरश्चिन्ताविद्येन पश्यते ॥
एवं नव नवैवोक्ताः पुरस्तात्परिसंख्यया ॥ २९५ ॥
अष्टादशैव संकीर्णाः काश्यपेनोपपादिताः ॥
मृगो भद्रश्च मन्दश्च मन्दो मृगमनास्तथा ॥ ९६ ॥
मृगो मन्दमनाश्चान्ये व्यतिकीर्णश्च वारणः ॥ ९७ ॥
इति जाताः षडेवात्र जातितन्त्रोपदेशवित् ॥
निश्चित्य बुद्धो भगवान्गजानामाह गौतमः ॥ ९८ ॥
मृगो भद्रश्च मन्दश्च मन्दो मृगमनास्तथा ॥
चतस्रो जातयस्त्वेवं राजपुत्रमते स्मृताः ॥ ९९ ॥

---

१ क. °तसा । मृ° । २ क. यथा । ३ क. °गश्चैव । ४ क °नस्त्वास्थिभिर्भे° । ५ ख. जाती । ६ क. °देशिवत् ।

मृगः शुद्धोऽथ मन्दश्च मृगमन्दस्तथाऽपरः ॥
भद्रभावे मृगस्येह तन्मयत्वं कथं भवेत् ॥ १०० ॥
अधिकत्वेऽपि तस्यैवैमरिमेदिर्न मृष्यते ॥
एवं च ब्रुवतस्तस्य चतस्रो जातयो मताः ॥ १ ॥
मृगो भद्रश्च मन्दश्च संकीर्णश्चेति तन्मनाः ॥
एवं विप्रतिपन्नेषु पूर्वाचार्येषु बुद्धिमान् ॥ २ ॥
हस्तिचारी तु भगवाञ्जातीः षोडश मन्यते ॥
सर्वव्यञ्जनपूर्णास्तु शुद्धा भद्रादयस्त्रयः ॥ ३ ॥
भद्रो मन्दमनाश्चान्यो भद्रो मृगमनास्तथा ॥
संकीर्णो मनसा भद्र इत्येताः सप्त जातयः ॥ ४ ॥
मन्दो भद्रमना ज्ञेयो मन्दो मृगमनाः पुनः ॥
मन्दः संकीर्णचेताश्च देश संख्याः समर्थिताः ॥१०५ ॥
मृगो भद्रमना दृष्टो मन्दश्च मनसा मृगः ॥
मृगः संकीर्णचेताश्च संख्या एतास्त्रयोदश ॥ ६ ॥
भद्रमन्दशरीरेण मृगस्य मनसा युतः ।
तथा भद्रमृगश्चापि मन्दचेता मतङ्गजः ॥ ७ ॥
यश्च मन्दमृगो योन्या दृष्टो भद्रमतिर्गजः ॥
तेन सार्धमिमास्तस्य जाताः षोडश जातयः ॥ ८ ॥
संकीर्णाः सुलभाः शुद्धा दुर्लभास्तु मृगादयः ॥
हेतुभिर्बह्वधिष्ठानैर्यैरेता गजजातयः ॥ ९ ॥
प्राप्नुवन्ति बहून्दोषान्वक्ष्यन्ते ते मयाऽधुना ॥
प्रकृत्या हीयते कश्चित्कश्चिद्वा विनयाद्गजः ॥ ११० ॥
अप्रभावात्तथाऽन्यश्च मिथ्याविनयतोऽपरः ॥
अनानुपूर्व्या संतापात्तीक्ष्णदण्डैश्च घातनात् ॥ ११ ॥
स मिथ्याविनयाद्घोरांश्छेद्गात्रे व्यथान्तरः ॥
एवं विवर्णो विमनाः कृशः पर्यश्रुलोचनः ॥ १२ ॥
मोहादर्थविचारेण मूढो भवति वारणः ॥
गुरुणाऽतिप्रवृद्धेन बन्धेनात्यायतेन वा ॥ १३ ॥

---

१ क. गजस्येह । २ क. °व परिमर्दिनमृ° । ३ क. °यश्च ये ॥ भ° । ४ क. °श्चान्ये भ° । ५ क. देशसंख्या । ६ क. °गोऽन्यो यो दृ° । ७ क. °रान्मृच्छोमाद्वियतां गतः ॥ ए° ।

मोहादन्धप्रमादाद्वा बन्धाद्भुद्विजते द्विपः ॥
दन्तिनां तु विशेषेण तत्प्रमाणाधिको हि यः ॥ १४ ॥
संबन्धो बन्धकुशलैर्गुरुरित्यभिशब्दितः ॥
उच्छ्वासमुपरुन्ध्याद्यो गात्रसंचारमेव वा ॥ ३१५ ॥
संबन्धसंज्ञया तज्ज्ञैरत्यायत इति स्मृतः ॥
भूपश्चोपरिविक्षेपादेलकांक्षा(?) च योगतः ॥ १६ ॥
सोऽतिप्रबन्धो विक्षेपो बन्धो यो दुष्प्रमादतः ॥
एवं दोषं व्यवस्यन्ति तस्मादभ्यधिको हि यः ॥ १७ ॥
परिक्षेपातिबाहुल्याद्दन्तिनां हस्तिनां परे ॥
एवं बन्धोद्भवैर्दोषैः प्राप्नुवन्त्यत्र कुञ्जराः ॥ १८ ॥
रोगांश्च दोषैर्गात्राणां हानिं च बलतेजसाम् ॥
कर्मणाऽतिप्रवृद्धेन योक्तुरज्ञानजेन वा ॥ १९ ॥
तथा च क्रियमाणेन [3]नित्यं दुष्यन्ति वारणाः ॥ ३२० ॥
यो हि जातिविभागं तु सत्त्वानूकं च तत्त्वतः ॥
अबुद्ध्वा योजयेत्कर्म स भद्रानपि दूषयेत् ॥ २१ ॥
यस्तु लक्षणनिर्देशं विदित्वा कर्म योजयेत् ॥
असंशयं स मतिमान्संकीर्णानपि साधयेत् ॥ २२ ॥
अन्योन्यकर्मव्यत्यासात्तेषु सिद्धिर्न विद्यते ॥
यथोपदेशयोगाद्धि सर्वाः सिध्यन्ति जातयः ॥ २३ ॥

---

पित्तं गर्भे शयानस्य त्वचं चेत्प्रतिपद्यते ॥
कालो भवति मातङ्गो श्लक्ष्णस्निग्धदर्शनः ॥ २४ ॥
श्लेष्मा मारुत[4]संसृष्टस्त्वचं यद्यनुगच्छति ॥
(*श्यामो भवति मातङ्गो श्लक्ष्णः स्निग्धदर्शनः ॥ ३२५ ॥
श्लेष्मा गर्भे शयानस्य त्वचं चेत्प्रतिपद्यते ॥
हरिर्भवति मातङ्गो श्लक्ष्णः स्निग्धदर्शनः ॥ २६ ॥
पित्तं मारुतसंसृष्टं त्वचं यद्यनुगच्छति ॥)
कालः परुषवर्णाभो निःस्नेहस्तेन जायते ॥ २७ ॥

* धनुराकारमध्यस्थो नास्ति पाठः खपुस्तके ।

१ क. °कायापि यो° । २ क. ध्वनिं । ३ क. दुष्यति वारणः । ४ क. °संश्लिष्ट° ।

(*पित्तं श्लेष्मा च वातश्च मपद्यन्ते यदि त्वचम् ॥
श्यामः परुषवर्णाभो निःस्नेहस्तेन जायते ॥ २८ ॥
कफस्त्वनिलसंसृष्टस्त्वचं यद्यनुगच्छति ॥
हरितारुणवर्णाभो निःस्नेहस्तेन जायते ॥ २९ ॥)
असृग्गर्भे शयानस्य ( †त्वचं चेदनुधावति ॥
हरिः श्यामोऽथ रक्तो वा स तु रक्तच्छविर्भवेत् ॥ ३० ॥
वायुः पित्तं च रक्तं च त्वचं ह्यनुविधावति ॥
ततोलूकसवर्णाभा छविर्नागस्य जायते ॥ ३१ ॥
पित्तं गर्भे शयानस्य नखेषु यदि लीयते ॥
संभवेयुर्नखाः काला वारणस्य महीपते ॥ ३२ ॥
श्लेष्मा पित्तेन संसृष्टो नखेषु यदि लीयते ॥
श्यामान्येव नखानि स्युरत्र मे नास्ति संशयः ॥ ३३ ॥
श्लेष्मा गर्भे शयानस्य ) नखेष्वालीयते यदि ॥
श्वेतान्येवं नखानि स्युरत्र मे नास्ति संशयः ॥ ३४ ॥

पित्तं गर्भे शयानस्य तालुके यदि जायते ॥
तेनास्य तालुकं कृष्णं जायते नात्र संशयः ॥ ३३५ ॥
कफः पित्तं च वातश्च तालुके लीयते यदि ॥
कल्माषतालुर्मातङ्गः संभवेन्नात्र संशयः ॥ ३६ ॥
असृग्गर्भे शयानस्य तालुके यदि लीयते ॥
तेन पद्मपलाशाभं तालु नागस्य जायते ॥ ३७ ॥
तालुके चैव व्याख्यातं जिह्वौष्ठं दन्तिनां शृणु ॥
रक्तं नीलं तु कल्माषं वातपित्तकफादिभिः ॥ ३८ ॥

—:०:—

पित्तं रुधिरसंसृष्टं चक्षुष्याधीयते यदि ॥
पिङ्गाक्षस्तेन मातङ्गो जायते नात्र संशयः ॥ ३९ ॥
कफोऽनिलेन संसृष्टश्चक्षुश्चेत्प्रतिपद्यते ॥
हर्यक्षस्तेन मातङ्गो जायते नात्र संशयः ॥ ३४० ॥

* धनुराकारमध्यस्थौ श्लोकौ न स्तः खपुस्तके । † धनुराकारमध्यस्थाः श्लोका भ्रष्टाः खपुस्तके ॥

१ क. पिशङ्गास्तेन मातङ्गा जायन्ते ना° ।

वातः पित्तं च श्लेष्मा च चक्षुष्याधीयते यदि ॥
सत्पक्षासनमातङ्गो जायते नात्र संशयः ॥ ४१ ॥
पित्तं रुधिरसंसृष्टं चक्षुषी तु व्रजेद्यदि ॥
काकाक्षस्तेन मातङ्गो जायते नात्र संशयः ॥ ४२ ॥
संश्लिष्टं श्लेष्मणा पित्तं चक्षुषी यदि गच्छति ॥
श्वेताक्षस्तेन मातङ्गः कालवारक एव च ॥ ४३ ॥
असृग्गर्भे शयानस्य यदि चक्षुषि लीयते ॥
पारापताक्षः स गजो जायते नात्र संशयः ॥ ४४ ॥
रक्तं[1] श्लेष्मा च पित्तं च यदि चक्षुषि लीयते ॥
मध्वक्षस्तेन मातङ्गो जायते नात्र संशयः ॥ ३४५ ॥
विषमाक्षश्च वातेन विरूपाक्षश्च जायते ॥
नानानिमेषो मातङ्गः पित्तश्लेष्मगतिर्हि सः[2] ॥ ४६ ॥
विषमेष्वतिभारेण हस्तिनी यदि पीडिता ॥
मिथ्याकर्मणि आयासादूष्मा संजायते भृशम् ॥ ४७ ॥
सा चेद्यदूष्मसहिता तोयं समवगाहते ॥
नेत्रे तेनोपहन्येते गर्भस्थस्योष्मणा नृप ॥ ४८ ॥
ऊष्मणा पच्यमानस्य चक्षुर्हन्येत हस्तिनः ॥
जात्यन्धस्तेन मातङ्गो जायते नात्र संशयः ॥ ४९ ॥

---

गर्भे यदा शयानस्य जानुनी प्रतिपद्यते ॥
उभयोर्गात्रयोरन्तर्मारुतः संचरेन्नृप ॥ ३५० ॥
निर्भुज्यते स गात्रेषु[3] विकटस्तेन जायते ॥
वारणः पृथिवीपाल नास्ति तत्र विचारणा ॥ ५१ ॥

---

पृथुत्वाच्चानु नागानां रोमकूपैर्न गच्छति ॥
प्रस्वेदः पृथिवीपाल शीतसात्म्या ह्यतः स्मृता ॥ ५२ ॥
स्नायुबद्धा छविश्चैषां गाढरोमा च जायते ॥
अन्तःस्वेदा बलाधिक्यात्तस्मान्नागा नृपोत्तम[4] ॥ ५३ ॥

---

१ क. च चक्षुषी यदि ली° । २ क. सा । ३ क. °षु कीक° । ४ क. °गान्नृपो° ।

निर्वेद्धा मातृका यस्माद्धस्ते चैव मुखे तथा ॥
तस्मान्मुखाच्च हस्ताच्च स्वेदो गच्छति दन्तिनाम् ॥ ५४ ॥

—

इमे महान्तो बलिनो जातकामा मनस्विनः ॥
प्रशस्तव्यञ्जना नागा वृषणैश्चामलम्बिभिः ॥ ३५५ ॥
वोहनं तु भविष्यन्ति मनुष्याणामनेकपाः ॥
तस्मात्करीषप्रस्तावे वृषणौ संप्रवेष्टितौ ॥ ५६ ॥

—:○:—

म्लानशिरा म्लानमुखो *विषमो बधिरश्च यः ॥
पुटकर्णो वंक्रवालः पैक्षहीनस्तथैव च ॥ ५७ ॥
कुष्ठी किलासी विनतः कोणः षण्ढोऽथ वामनः ॥
कुब्जः किलासिमेण्ढ्रश्च हीनाङ्गो यश्च वारणः ॥ ५८ ॥
पश्चाद्भैर्विषमैर्नागो दृश्यते मनुजाधिप ॥
वातपित्तोपघातेन जायते नात्र संशयः ॥ ५९ ॥

—

बाह्यान्तरविषाणाभ्यामन्तरे दन्तवेष्टयोः ॥
वायुः कुप्यति नागस्य विशालस्तेन जायते ॥ ३६० ॥
दन्तयोरुपरिष्टाच्चेदधस्तादपि वेष्टयोः ॥
वायुः कुप्यति नागस्य तदा वा कालसंभवः ॥ ३६१ ॥
दन्तवेष्टान्तयोश्चैव दन्ताभ्यां बाह्यतस्तथा ॥
वायुः कुप्यति नागस्य सदन्तस्तेन जायते ॥ ६२ ॥
विषाणादन्तरे यच्च अन्तरे दन्तवेष्टयोः ॥
ऍकश्च वायुश्चरति साधुस्तेनोपजायते ॥ ६३ ॥
अन्तरे च विषाणस्य दन्तवेष्टस्य चान्तरे ॥
वायुः कुप्यति नागस्य जायतेऽतस्त्वपाहलः ॥ ६४ ॥
श्लेष्मा मारुतसंश्लिष्टो दन्तवेष्टौ निषेवते ॥
विषाणे तेन जायेते $अस्थिश्वेते तु दन्तिनाम् ॥ ३६५ ॥

---

* 'विकटो' इति प्राक्प्रश्नोद्देशे । † 'ह्रस्ववालः' इति प्राक् । $ 'अतिश्वेता' इति प्रश्नोद्देशे ।

---

१ क. °भद्रमा° । २ क. वाहनत्वं । ३ ख. वक्रवा° । ४ क. परिक्षीणस्त° । ५ क. काण° ।ऽथ । ६ क. °न्तरे वि° । ७ क. एकस ।

असृग्गर्भे शयानस्य यस्य वेष्टौ निषेवते ॥
विषाणे तस्य जायेते वारणस्य मधुप्रभे ॥ ६६ ॥
मन्दीभूतो यदा वायुर्दन्तवेष्टौ निषेवते ॥
म्लाने विषाणे तेनास्य जायेते ग्रन्थयोऽपि वा ॥ ६७ ॥
दन्तयोर्मारुतो यस्य मूलयोर्नावतिष्ठति(ते) ॥
समदन्तस्ततो नागो जायते नात्र संशयः ॥ ६८ ॥
संजातदन्तवेष्टस्य मुखे कुप्यति मारुतः ॥
विषाणावुपहन्येते मूढस्तेनोपजायते ॥ ६९ ॥
नवमे दशमे वाऽपि हस्तिनी यदि पीडिता ॥
निःस्नेहायां[2] खरीभूतो भृशं कोपमुपागतः ॥ ३७० ॥
यद्यूष्मसहितो वायुर्दन्तमूले निषेवते ॥
विषाणावुपहन्येते मत्कुणस्तेन जायते ॥ ७१ ॥
वायुर्गर्भे शयानस्य दन्तमूले निषेवते ॥
न तत्र दन्तौ जायेते यत्र कुप्यति मारुतः ॥ ७२ ॥
यस्यैकदन्तवेष्टं तु मारुतः संनिषेवते ॥
एकदन्तः स मातङ्गो जायते नात्र संशयः ॥ ७३ ॥
यस्य पोतस्य जातस्य मूर्तौ कुप्यति मारुतः ॥
संजातदन्तवेष्टस्य एकमात्रोपहन्यते ॥ ७४ ॥
(*एकभावस्तु संपूर्णं यत्र वातो न कुप्यति ॥
वामोन्नतो वा भवति त्वथवा दक्षिणोन्नतः ॥ ३७५ ॥
एकः संजायते तत्र एकश्चैवोपहन्यते ॥)

—:():—

वायुर्गर्भे शयानस्य कुप्यत्येकाङ्गसंधिषु ॥ ७६ ॥
म्लानगात्रः स मातङ्गो जायते नात्र संशयः ॥
असृग्गर्भे शयानस्य वारणस्योपहन्यते ॥ ७७ ॥
मारुतेन यदा राजन्स्तब्धस्तेन नियच्छति ॥
हस्तिन्यां तु प्रहृष्टायां प्रभिन्नेनाथ जायते ॥ ७८ ॥

---

* अयं सार्धश्लोकः 'वायुर्गर्भे'—इत्यर्धोत्तरं कपुस्तके ॥

---

१ क. जायन्ते । २ क. निस्नेहानां । ३ क. ख. °धूष्मास°। ४ क. °स्तेनोपजायते ॥ ह° ।

सम्यग्गर्भेऽपरिक्लिष्टो ह्यक्लिष्टायामदुर्लभः ॥
एष नागो महाराज यावदायुर्मदोत्कटः ॥ ७९ ॥
न च दोषाः [1]प्रधावन्ति शब्दाद्यास्तमनेकपम् ॥
भवक्षीणेन यो जातः क्षीणायां चैव मातरि ॥ ३८० ॥
जनितश्चाप्यहृष्टाभ्यां यः [2]क्लिष्टश्चोदरे भृशम् ॥
एष मत्तो न भवति यावदायुर्मतङ्गजः ॥ ८१ ॥
स च नित्यं महाराज भवेत्प्रकृतिदुर्बलः ॥
आहा[3]राचारवैगुण्यादभिघाताच्च धूमाद्भयात् ॥ ८२ ॥
गर्भिण्याः कुपिता दोषा गर्भा(र्भ)जीवितनाशनाः ॥
ऋतुमैथुनशुक्राणां वैगुण्याच्छोणितस्य च ॥ ८३ ॥
[4]इष्टासात्म्योपभोगाच्च दोहृदस्य विमाननात् ॥
अशुभात्कर्मणोऽल्पायुर्दीर्घायुश्च [5]शुभाद्भवेत् ॥ ८४ ॥
मुहूर्ततिथिनक्षत्रैः करणैः शोभनैर्गजः ॥
सुलक्षणः सुरूपेण यथावत्प्रतिपादितः ॥ ३८५ ॥
देवब्राह्मणगन्धर्वगुणैरन्यतमैर्वृतः ॥
पथ्यैः शुचिभिराहारै रसैश्च परिबृंहितः ॥ ८६ ॥
स च वीर्यविपाकेन तथा गर्भबलेन च ॥
धन्य एव भवेन्नागो विपरीतस्ततोऽन्यथा ॥ ८७ ॥
भूतानां व्यतिरेकाच्च मातृजैः पितृजात्मजैः ॥
एभिर्भावैस्तु निष्पत्तिर्यथा भूतेषु षड्रसान् ॥ ८८ ॥
तेजस्वी तेज उद्रेकात्सत्त्वाच्चैव भवेद्गजः ॥
तेजःसत्त्वक्षितीनां स्यादुद्रेकाद्बलवान्गजः ॥ ८९ ॥
अग्निर्वायु[6]प्रचुरत्वाद्गर्भे पुष्टो भवेद्बलात् ॥
शुद्धा[7]त्मा भावैः स्यात्सर्वैरुद्रिक्तैः सात्त्विको गजः ॥ ३९० ॥
तेजोधरित्रीपितृजैरुद्रिक्तै रूपवान्भवेत् ॥
तेजोनभोनिलोद्रेकाच्चक्षुष्मांश्चाऽऽहारजाद्रसात् ॥ ९१ ॥
आरोग्यमेव भवति शुद्धसत्त्वानलानिलैः ॥
पञ्चभूतसमत्वे तु समुद्रेकादभीरुता ॥ ९२ ॥

---

१ क. प्रबाधन्ते । २ क. क्लिष्टो वोद° । ३ क. °हारे चैव वै° । ४ क. इच्छासा° । ५ क. शुभो भवे° । ६ क. °प्रचार° । ७ क. °द्धात्म्यभा° ।

सत्त्ववायुबलोद्रेकाद्भवेयुर्जवसंपदः ॥
मनसस्तद्गुणानां च पित्तप्रकृतिसत्त्वयोः ॥ ९३ ॥
समुद्रेकाद्भवेन्मेधा त्वष्टाङ्गा बुद्धिरेव च ॥
अन्वर्थोत्तानगम्भीरप्रत्यर्थात्यर्थवेदिता ॥ ९४ ॥
भद्रमन्दमृगत्वं च तथा च प्रकृतित्रयम् ॥
सर्वं जातिविभागेन प्रकृतौ च प्रवक्ष्यते ॥ ३९५ ॥
भक्ष्यं भोज्यं च पेयं च तथा लेह्यं च हस्तिनी ॥
अभीक्ष्णं यत्समादत्ते सेवते चापि गर्भिणी ॥ ९६ ॥
दौहृदं तं विजानीयात्तच्चैवास्यै प्रदापयेत् ॥
अनुकूले भवेद्गर्भो मातुस्तत्रोदरे रसान् ॥ ९७ ॥
एवमेके व्यवस्यन्ति मुनयो गर्भसंभवम् ॥
इति गर्भसमुत्पत्तिर्बुद्धिभेदः प्रवक्ष्यते ॥ ९८ ॥
क्रुद्धो भीतः प्रहृष्टो वा दुर्बलो बलवानपि ॥
शब्दैश्च जलदादीनां वने वित्रासितो भृशम् ॥ ९९ ॥
यादृशं भावमाश्रित्य गजो गर्भं निषिञ्चति ॥
यादृशो धेनुकां याति जनयेत्तादृशं सुतम् ॥ ४०० ॥
प्रकृतिः प्रकृतिज्ञाने वक्ष्यते ते त्रिधात्मिका ॥
तमःसत्त्वरजोयुक्ता या च दोषसमाश्रया ॥ १ ॥
शुक्रशोणितयोर्गर्भे गर्भनाशविचेष्टितम् ॥
दन्तिनां मानुषैस्तुल्यो दोषो दूष्येन्द्रियाणि च ॥ २ ॥
व्याधयश्च भवन्त्येषां प्रायशस्तुल्यलक्षणाः ॥
मातुर्या सात्म्यतश्चैव विशेषः प्रकृतेस्तथा ॥ ३ ॥
चेतना च मनो बुद्धिराकृतिश्च स्वभावतः ॥
आरोग्यं दौहृदं चापि सात्म्यजान्यायुरेव च ॥ ४ ॥
विज्ञानमिन्द्रियस्थानं सुखदुःखे प्रियाप्रिये ॥
तमो रजश्च सत्त्वं च गर्भस्याऽऽत्मजमिष्यते ॥ ४०५ ॥
क्षुत्पिपासासहिष्णुत्वं तृप्तिश्चैव तु सत्त्वजाः ॥
श्रोत्रं शब्दाश्च मूर्तिश्च विवेकश्चैव खानि च ॥ ६ ॥

---

१ क. °गे च प्र° । २ क. °मायत्ते । ३ क. °त्पत्तिबुद्धि° । ४ क. वक्ष्येते ते त्रिधात्मिके ॥ त° । ५ क. °योर्जन्म ग° । ६ क. °स्तुल्या दोषा दू° । ७ क. विशेषाः । ८ क. सत्त्वजाः ।

अन्तरिक्षात्मकानि स्युर्गर्भस्येह महीपते ॥
स्पर्शो ज्ञानं तथा हर्षो रौक्ष्यं चेष्टा च लाघवम् ॥ ७ ॥
प्राणापानौ समानश्च व्यानोदानौ च वायवः ॥
रूपं दृष्टिः पिपासा च पित्तमूष्मा च केवलम् ॥ ८ ॥
रागः पक्तिः प्रकाशश्च तैजसानीति निश्चयः ॥
रसज्ञानं रसाश्चैव स्नेहः क्लेदः कफस्तथा ॥ ९ ॥
अब्जान्येतानि गर्भस्य वेदितव्यानि तत्त्वतः ॥
(*घ्राणो गन्धश्च मूर्तिश्च स्थैर्यं गौरवमेव च ॥ ४१० ॥
पार्थिवानाह गर्भस्य वदन्ति नयकोविदाः ॥
तस्माद्गर्भस्तु पितृजो मातृजस्तत्स्वभावतः ) ॥ ११ ॥
रससात्म्यात्मकश्चैव पञ्चभूतात्मकस्तथा ॥
जिह्वा नासाऽक्षिणी कर्णौ शिरोऽथ हृदयं गलः ॥ १२ ॥
नाभिर्बस्तिर्गुदश्चैव जीवस्याऽऽयतनानि वै ॥
परोक्षत्वादनिष्टं हि मन्यन्ते भूतसंभवम् ॥ १३ ॥
विचिन्त्य बहुशो बुद्ध्या विप्रो गौतमवाङ्वली ॥
कुमुदस्य समुत्पन्ना वामनस्याञ्जनस्य च ॥ १४ ॥
पुण्डरीकस्य च कुले सर्वव्यञ्जनपूजिताः ॥
ते(ये)षां मुक्ता विषाणेषु पुरीषेषु च रोचना ॥ ४१५ ॥
यस्य स्युस्ते च नृपतेः स राजा स्यादनिर्जितः ॥
वायुर्गर्भे शयानस्य यस्य सक्थि निषेवते ॥ १६ ॥
स नीचजघनः स्यात्तु पुरस्ताच्च समुच्छ्रितः ॥
वायुर्गर्भे शयानस्य मन्यासंधिषु कुप्यति ॥ १७ ॥
सोऽस्य नामयति ग्रीवां तेन मात्रविद्गर्गजः ॥
शरत्काले तु संप्राप्ते प्रभूतयवसोदके ॥ १८ ॥
निर्दंशमशकेऽरण्ये मृगनेत्रासु रात्रिषु ॥
दिशो गजाश्च यूथानि समवेक्षन्ति पार्थिव ॥ १९ ॥
लीलया क्रीडमाना वै वनेषूपवनेषु च ॥
जनयन्ति च ते तत्र त्रिविषाणाननेकपान् ॥ ४२० ॥

* धनुश्चिह्नद्वयान्तःस्थो नास्ति पाठः कपुस्तके ॥

१ क. रागपक्तिप्रकाशाश्च । २ क. अत्यन्येतानि । ३ क. °त्मकाश्चै° । ४ क. °त्मकास्त° । ५ क. लोचना । ६ क. °मयेत्सति पा° ।

चतुर्विषाणांश्च गजान्द्विविषाणांस्तथैव च ॥
हस्तिनीनां प्रभावेण जायन्ते ते दिशां गजैः ॥ २१ ॥
प्रदक्षिणाश्च जायन्ते वारणाः पृथिवीपते ॥
द्विविषाणास्तु ये तत्र ग्रहणं यान्ति ते नृप ॥ २२ ॥
ते भवन्त्युत्तमा नागाः पूजिताः पृथिवीपते ॥
योगार्हास्ते महाराज च्छत्रार्हाश्चैव वारणाः ॥ २३ ॥
वारणा मधुपर्कार्हा मानार्हास्ते भवन्ति च ॥
ईदृशा यस्य मातङ्गाः सेवन्ते विषयान्नृप ॥ २४ ॥
पूजिता लक्षणैरेभिः स राजा त्वभिनन्दति ॥ ४२५ ॥
समुद्रवसनां कृत्स्नां सशैलवनकाननाम् ॥
चिरं च वसुधां पा(पा)ति शत्रूंश्चाप्यधिगच्छति ॥ २६ ॥
बीजान्युप्तानि रोहन्ति सुभिक्षं चैव जायते ॥
अनावृष्टिर्न भवति मनोहानिर्न चैव हि ॥ २७ ॥
नोपद्रवाः प्रधावन्ति व्याधयश्च महीपते ॥
यस्य राज्ञः पुरे देशे वाहनेष्वात्मजेषु च ॥ २८ ॥
आप्नुयाद्विपुलां लक्ष्मीं स राजा यत्र वारणः ॥
सर्वकामसमृद्धिश्च जायते नात्र संशयः ॥ ४२९ ॥

इति श्रीपालकाप्ये गजायुर्वेदे महाप्रवचने महापाठे तृतीये शल्यस्थाने गर्भावक्रान्तिर्नामाष्टमोऽध्यायः ॥ ८ ॥

---

अथ नवमोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
गर्भः कथं संभवति संभूतः केन जीवति ॥ १ ॥
किं च प्रथमतस्त्वङ्गं गर्भस्थस्योपजायते ॥
किं मातृजं शरीरे च पितृजं वारणस्य किम् ॥ २ ॥
कति दन्ताः कति नखाः कति मर्माणि हस्तिनाम् ॥
कियन्मात्रं च रुधिरं पित्तं श्लेष्मा च मारुतः ॥ ३ ॥
वायुः कस्मिन्स्थितो देशे कस्मिन्पेशी च तिष्ठति ॥
क्व स्थितं रुधिरं चास्य पित्तं श्लेष्मा च दन्तिनः ॥ ४ ॥

---

१ क. °न्त्युपमा । २ क. ये च । ३ क. गर्भविक्रा° । ४ क. मातृकं ।

अन्त्रप्रमाणं किं चास्य किंमात्रश्चान्दुको गजे ॥
किंमात्रं क्लोम हृदये किंमात्रं फुप्फुसं मुने ॥ ५ ॥
अन्त्रं किंमात्मकं विद्यात्क स्थितश्चोदको गजे ॥
क स्थितं क्लोम हृदयं प्लीहा वृक्कौ यकृत्तथा ॥ ६ ॥
क नु वस्तिप्रवद्धश्च परिमाणं च किं भवेत् ॥
भुङ्क्ते गर्भोदरस्थो वा न वा भुङ्क्तेऽथ भोजनम् ॥ ७ ॥
संधयः कति चास्थीनि केन मोचति हेतुना ॥
केन पश्यति रूपाणि परिक्रामति तिष्ठति ॥ ८ ॥
केन स्तनति वै नागो लिण्डं सृजति मेहति ॥
उत्तिष्ठति निषीदेच्च निषण्णश्चानुवर्तते ॥ ९ ॥
विपद्यते तथा केन मैथुनं केन गच्छति ॥
के वालाः कानि रोमाणि केशाः पक्ष्म च किं भवेत् ॥ १० ॥
कियन्मात्राणि श्रो(स्रो)तांसि च्छछ्यः कति च दन्तिनाम् ॥
केन जीर्येत भुक्तं च जीर्णे केन निरूहति ॥ ११ ॥
केन निद्रामुपादत्ते केन निद्रा न जायते ॥
ग्रहणी केन दीप्ता स्यादविपाकः कथं भवेत् ॥ १२ ॥
वातपित्तवहाः काश्च शुक्रवाहाश्च काः स्मृताः ॥
मेदोवहा रसवहाः शिरा रक्तवहाश्च काः ॥ १३ ॥
मांसास्थिमेदोमज्जानां वाहिन्यश्च शिराः कति ॥
प्रसारणाकुञ्चनाद्याश्चेष्टाः काभिश्च चेष्टते ॥ १४ ॥
केन वा स्याद्विपन्नेन बस्तौ मूत्रं प्रवर्तते ॥
अजस्रं मत्तनागानां मदो वाऽपि किमात्मकः ॥ १५ ॥
गजानां रोमकूपेभ्यः कस्मात्स्वेदो न वर्तते ॥
मुखतः केवलं स्वेदः क्लान्तानां संप्रवर्तते ॥ १६ ॥
एवं मे पृच्छतो ब्रूहि सर्वमेव महामुने ॥
वारणानां च नामानि यस्तावद्वक्तुमर्हसि ॥ १७ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
सौम्याऽऽग्नेयमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ १८ ॥

---

१ क. किंमात्रकं। २ ख. °श्चोन्दुको। ३ क. वृष्कौ। ४ क. बस्तिः प्रवृद्ध°। ५ क. हेच्छति। ६ क. च यानि स्युस्ता°।

सोमजं शीतमार्द्रं च शुष्कमुष्णं च तैजसम् ॥
अपाणां स्थावराणां च संभवश्च चतुर्विधः ॥ १९ ॥
पुरुषो गौरजोऽश्वोऽव्यो गर्दभोऽश्वतरो[१]ऽपि च ॥
सप्तैते जङ्गमा ग्राम्या वन्यान्सप्त निबोध मे ॥ २० ॥
कपिर्गजो वराहश्च शार्दूलो महिषो मृगः ॥
खड्गश्चेति समाख्याताः सप्त वन्याश्च जङ्गमाः ॥ २१ ॥
वृक्षो वनस्पतिर्गुल्मो लतौषधितृणानि च ॥
प्रतानो वीरुधो गुच्छः स्थावरा नव कीर्तिताः ॥ २२ ॥
स्थावराणां च निर्देशो रसवीर्यविपाकतः ॥
कीर्तितो यवसाध्याये विस्तरेण महीपते ॥ २३ ॥
समागतो हस्तिनीं तु नागो मैथुनमाचरेत् ॥
योन्यां करेण्वाः संघर्षात्सौम्यं शुक्रं विमुञ्चति ॥ २४ ॥
निषिच्यमाने शुक्रे तु महात्मा प्रतिपद्यते ॥
जीवः सूक्ष्मपरो धातुरचिन्त्यः प्रभुरीश्वरः ॥ २५ ॥
संसृष्टं रजसा शुक्रं विष्ठयोन्यां विवर्धते ॥
सप्तरात्रोषितं तत्र कललं जायते ततः ॥ २६ ॥
दशाहादर्बुदं तत्र जायते राजसत्तम ॥
मासाच्च पेशी भवति हृदयं तदनन्तरम् ॥ २७ ॥
केचित्संभवमिच्छन्ति पूर्वं संजायते शिरः ॥
पूर्वं हृदयमित्येके युगपत्त्वपरेऽब्रुवन् ॥ २८ ॥
हृदयं मनसः स्थानं मनश्चाऽऽहुः प्रजापतिः ॥
तस्माद्गर्भेण जातस्य हृदयं जायतेऽग्रतः ॥ २९ ॥
ततः संजायते क्लोम यकृद्[२]वृक्कौ त्रयं तथा ॥
ततः शिराः संभवन्ति तिर्यगूर्ध्वमधस्तथा ॥ ३० ॥
ततः शिराभिः सहितं स्थूलान्त्रमुपजायते ॥
पृष्ठवंशोऽथ जघनं वक्षो गात्रापरोदरम् ॥ ३१ ॥
क्रमेण सर्वाण्यङ्गानि केशरोमनखानि च ॥
भवन्त्यत्र शिराभागे मातुर्गर्भोदरे वसन् ॥ ३२ ॥
ततः स दशमे मासे द्वादशे वाऽपि जायते ॥
एवं हि जायते हस्ती जातश्चापि पिबेत्पयः ॥ ३३ ॥

---

१ क. °रोऽधिकः ॥ स° । २ क. °दूवृद्धौ त्र° ।

द्विमासजातश्चपलो लिण्डवापि(?)मतङ्गजः ॥
तृतीये च चतुर्थे च पानीयं मासि सेवते ॥ ३४ ॥
ऊर्ध्वं चतुर्णां मासानां तृणं मृदु च पल्लवम् ॥
शल्लकीमरिमेदं च कर्णिकारं च खादति ॥ ३५ ॥
भुञ्जानस्य प्रवर्धन्ते दोषाः प्रायेण दन्तिनः ॥
वातपित्तकफाश्चैव तेषां कर्म पृथक् पृथक् ॥ ३६ ॥
रक्तमांसास्थिमज्जानो वर्धन्ते धातवो रसैः ॥
मेदः शुक्रं बलं तेजो जवो वर्ष्म च पार्थिव ॥ ३७ ॥
रसेन पित्तं चाम्लेन मधुरेण कफः सदा ॥
कषायकटुकाभ्यां तु वर्धते दन्तिनोऽनिलः ॥ ३८ ॥
कण्ठे श्लेष्मा विहरति भुञ्जतो विविधान्रसान् ॥
पित्तेन पच्यते भुक्तं कफान्निद्राऽस्य जायते ॥ ३९ ॥
वातात्प्राणस्य चेष्टा च जीर्णस्य च निरूहन(ण)म् ॥
समधातुस्त्वरोगः स्याद्विषमैर्व्याधितो भवेत् ॥ ४० ॥
जरायुरक्तं मांसं तु मातृजान्विद्धि हस्तिनः ॥
शुक्रं मज्जास्थिमेदांसि शिरारोमनखाः पितुः ॥ ४१ ॥
यथाविभक्तान्यस्थीनि संधयो ये च कीर्तिताः ॥
दन्ता नागस्य यावन्तो मर्माणि च निबोध मे ॥ ४२ ॥
शिरस्यस्थिद्वयं राजन्कपाले च तथाऽपरे ॥
अष्टावस्थीनि ग्रीवायां नव चैवात्र संधयः ॥ ४३ ॥
एकमेवास्थि सगदे द्वौ संधी सव्यदक्षिणौ ॥
द्वे च सृक्कास्थिनी ज्ञेये चत्वारश्चात्र संधयः ॥ ४४ ॥
अधस्तादुपरिष्टाच्च दन्ताः षोडश सागदाः ॥
प्रहारिणौ च द्वौ दन्तौ करिणोऽष्टादश स्मृताः ॥ ४५ ॥
अष्टादशानां दन्तानां संधयोऽष्टादशैव च ॥
अधस्ताच्चोपरिष्टाच्च विद्यान्नागस्य पार्थिव ॥ ४६ ॥
गलनाड्यां चतुःषष्टिस्तरुणास्थीनि दन्तिनः ॥
वलयाकृतिकल्पानि सप्तषष्टिश्च संधयः ॥ ४७ ॥

---

१ क. पिण्डद्वापि । २ क. कफस्तदा । ३ ख. शिरो रो° । ४ ख. संधयोः । ५ क. गलानां च । ६ क. °नः ॥ प्रल° ।

प्रतरास्थि तलमोहे विद्यादेकं विचक्षणः ॥
तलकर्षे च विज्ञेयं प्रतरास्थ्येकमेव तु ॥ ४८ ॥
अष्टावेव हि पादेषु प्रतरास्थीनि निर्दिशेत् ॥
चतुर्थे च महीपाल संधयश्चात्र षोडश ॥ ४९ ॥
पलिपादेषु कर्णेषु मोहयोः मोहसंधिषु ॥
एतेष्वङ्गप्रदेशेषु गुलिकास्थीनि विंशतिः ॥ ५० ॥
अशीतिरेव पादेषु चतुर्ष्वपि च पार्थिव ॥
विंशतिश्च नखानि स्युः संधीनां द्व्यधिकं शतम् ॥ ५१ ॥
विशेषास्थ्येकबाह्वस्थि वंशास्थीनि च गात्रयोः ॥
पूर्वयोस्तु षडस्थीनि ह्येवं षट्चैव संधयः ॥ ५२ ॥
अस्थीनि संधयश्च स्युः षडेवापरयोरपि ॥
कपालास्थ्येकमेवाऽऽहुः सर्वतो जघनाश्रितम् ॥ ५३ ॥
चतुर्दशाऽऽहुरस्थीनि नागस्योरसि संख्यया ॥
संधयस्त्वपि चास्थां तु दश पञ्च च निश्चिताः ॥ ५४ ॥
अस्थीनि विंशतिः पृष्टौ(ष्ठे) संधयश्चैकविंशतिः ॥
पक्षयोरुभयोर्विद्याच्चत्वारिंशच्च पार्श्वकाः ॥ ५५ ॥
द्विचत्वारिंशदेवाऽऽसां पार्श्वकानां तु संधयः ॥
ऊर्ध्वास्थीन्येकविंशत्स्युः संधयश्चैकविंशतिः ॥ ५६ ॥
लाङ्गूलवंशलाङ्गूले गुलिकास्थीनि विंशतिः ॥
त्रिंशत्तु संधयश्चात्र संख्यया विद्धि पार्थिव ॥ ५७ ॥
त्रीण्यस्थां तु शतान्येवं विंशतिश्चैव संख्यया ॥
शतानि त्रीणि संधीनां षट्षष्टिं चापि निर्दिशेत् ॥ ५८ ॥

—:○:—

हस्ते च तालुनि द्वे द्वे मुखे नेत्रे कटिद्वये ॥
द्वे कर्णयोश्च प्रत्येकमेवमेकादशैव तु ॥ ५९ ॥
स्तनयोश्चैव मेण्ढ्रे च नागस्य तु गुदे तथा ॥
विद्यात्पञ्चदशैतानि श्रो(स्रो)तांसि वदतां वर ॥ ६० ॥

—:○:—

१ क. प्रान्तरास्थि । २ क. °यं प्रान्तरा° । ३ क. प्रान्तरास्थीनि । ४ क. °तो यजना° । ५ क. °शदासां तु पा° । ६ क. तालुके ।

नेत्रयोश्चापि पक्ष्माणि केशाञ्शिरसि निर्दिशेत् ॥
देहे रोमाण्यसंख्यानि वालाः पुच्छे च दन्तिनाम् ॥ ६१ ॥

—:():—

सिराः शतानि सप्तैव सर्वपिण्डेन दन्तिनाम् ॥
पञ्च स्नायुसहस्राणि पञ्च स्नायुशतानि च ॥ ६२ ॥
एतेषां विस्तरो राजन्सिराव्यूहे प्रवक्ष्यते ॥
मर्माण्यपि प्रवक्ष्यामि भेदतो मर्मसंग्रहे ॥ ६३ ॥
गुदोऽण्डकोशो हृदयं मेण्ढ्रं नाभ्युदरं करः ॥
मत्यङ्गं सोप्रतीकाशो प्रतिमानं गुदे स्तनौ ॥ ६४ ॥
प्रोहसंदानभागौ च ग्रन्थिः सेकुठिकेतलाः ॥
पलिहस्तौ च विष्के च रन्ध्रौ द्वे चापरान्तरे ॥ ६५ ॥
कुक्षिः कटी च प्रस्तावश्रो(स्रो)तांसि दश पञ्च च ॥
कक्षाभागौ सनिष्कासौ मन्ये च मनुजाधिप ॥ ६६ ॥
अन्तर्बाहू पणवको बिम्बकः कुम्भ एव च ॥
अपस्कारौ तथाऽष्ठीव्यौ मृदुकुक्षिस्तथैव च ॥ ६७ ॥
गलपृष्ठं यवस्थाने ग्रीवामन्ये च तालुकम् ॥
वाहित्थं शम्बुकौ जिह्वा बलाङ्गे वक्षणौ तथा ॥ ६८ ॥
विक्षोभौ चूचुकौ मुष्कौ कूर्मांसतलसंधयः ॥
अस्थिक्षयौ कुलाभागावुरःसंधिरुरस्तथा ॥ ६९ ॥
उभावंसौ च विज्ञेयाविति सप्तोत्तरं शतम् ॥
मर्मणामिति व्याख्यातं वारणानां नराधिप ॥ ७० ॥

—:():—

अतश्च कथ्यमानानि दोषस्थानानि मे शृणु ॥
पर्वाण्यामाशयश्चैव उरः कण्ठं शिरस्तथा ॥ ७१ ॥
स्थानान्येतानि सर्वाणि श्लेष्मणो विद्धि दन्तिनाम् ॥
ऊर्ध्वं नाभेरधः पित्तं हृदयं समुपाश्रितम् ॥ ७२ ॥
पक्वामाशयगो वायुर्जघने सगदे तथा ॥
स सर्वदेहव्यापी तु सर्वतः कर्म चेष्टते ॥ ७३ ॥

---

१ क. °ण्डेषु द° । २ क. सकलकुन्तलाः । ३ क. रन्ध्रे द्वौ चा° । ४ क. कुक्षी । ५ ख. यतस्थाने । ६ क. °क्षोभोमौ च तुष्कौ च कू° । ७ ख. सगुदे ।

रक्तस्थाने स्थितो वायुर्व्यानो नाम्ना तु वीर्यवान् ॥
मेदःस्थाने स्थितः प्राणो वसास्थान उदीरणः ॥ ७४ ॥
समानो मांसमध्यस्थो ह्यपानश्चास्थिसंस्थितः ॥
व्यानोदानौ समानश्च प्राणापानौ च पञ्चधा ॥ ७५ ॥
भूयो वायुः शरीराणि बिभर्ति भगवान्प्रभुः ॥
व्यानाद्भवति चेष्टा च निमीलोन्मीलने नृप ॥ ७६ ॥
उदानेन बलोन्मादौ समानाद्रागमादिशेत् ॥
वागुच्छ्वासानुपानानां प्रवृत्तिः प्राणजा स्मृता ॥ ७७ ॥
वातमूत्रपुरीषाणि ह्यपाने विद्धि पार्थिव ॥
हस्तस्थं तिष्ठति सदा चक्षुर्मध्ये च दन्तिनाम् ॥ ७८ ॥
सौरं तेजश्च नेत्रे तु प्रविभक्तं शरीरिणाम् ॥
तथा प्राप्तोऽथ हर्षादींस्तेन रूपं च पश्यति ॥ ७९ ॥
श्लेष्मस्थाने स्थितं सत्त्वं रजो वाय्वनुसंस्थितम् ॥
तमः पित्तानुगं चैव तिष्ठत्येव मतङ्गजः ॥ ८० ॥
प्रहर्षानन्दभावाभ्यां सौम्यं शुक्रं प्रमुञ्चति ॥
क्रमेण रसवीर्याणां सौम्यं शुक्रं प्रवर्तते ॥ ८१ ॥
अदृश्यमार्तवं विद्धि हस्तिन्या हर्षसंभवम् ॥
गृह्णीते साऽद्भुतं गर्भं गर्भिणी द्वेष्टि चोद्धतम् ॥ ८२ ॥
सप्त पेशीशतान्याहुः सर्वेष्वङ्गेषु हस्तिनाम् ॥
अस्थ्याश्रिताश्च ताः सर्वाः स्नायुबद्धास्त्वचा वृताः ॥ ८३ ॥
अल्पं वा बहु वा ह्रस्वं दीर्घं वाऽप्यथवा पृथक् ॥
एकसंस्थं हितं मांसं यत्स्यात्पेशीति तद्विदुः ॥ ८४ ॥
तृष्णा मर्मसु सर्वेषु निद्रा कफमुपाश्रिता ॥
व्यवसायश्च नागानां स्कन्धदेशमुपाश्रितः ॥ ८५ ॥
वपुः श्रीः कीर्तिराशा च त्वचमाश्रित्य तिष्ठति ॥
अस्थीनि पर्वतो मेरुस्तेजो देहे व्यवस्थितम् ॥ ८६ ॥
बुद्धिर्मेधा च नागानां स्नायुबन्धेष्ववस्थिता ॥
वसामाश्रित्य बलवान्दर्पस्तिष्ठति नित्यशः ॥ ८७ ॥

---

१ ख. नामा तु । २ क. ख. उदीरिणः । ३ क. ततः । ४ क. साऽद्भुतम् ।

मदश्चैव महातेजाः शुक्रस्थानं समाश्रितः ॥
शिरासंधीन्समाश्रित्य क्षोभस्तिष्ठति वै सदा ॥ ८८ ॥
अन्त्रेषु कर्म नागानामालस्यं यकृति स्थितम् ॥
कालेयं मदो(?) क्रमते विषादो नृपसत्तम ॥ ८९ ॥
गजस्य पुंप्फुसे चैव भयं तिष्ठति नित्यशः ॥
वक्षसेत्रच्छु(?) हृदयं सव्यं स्तनमुपाश्रितम् ॥ ९० ॥
यकृद्धृदयपार्श्वं च क्लोम वक्षःस्थितं विदुः ॥
यकृत्प्लीहे च संबद्धे (*स्थूलान्त्रं हृदयादधः ॥ ) ९१ ॥
आमाशयं विभजते तिष्ठेत्पक्वाशयं च तत् ॥
आमाशयस्य मध्यस्था व्याधयः सर्व एव तु ॥ ९२ ॥
व्याधयो ये च संख्यातास्तेषां पक्वाशयो गतिः ॥
ईषत्तु शुषिरा वृत्ता दीर्घा बलवती सिरा ॥ ९३ ॥
स्नायुर्वल्कावनद्धा च घना पृथ्वी च कण्डुरा ॥
वातपित्तकफानां च तथैव रसशुक्रयोः ॥ ९४ ॥
मेदोसृङ्मज्जमांसानां तथा मूत्रपुरीषयोः ॥
ह्रासवृद्धी यतो ह्येषां प्रमाणेनोच्येते त्वतः ॥ ९५ ॥
मूत्रं बस्तिश्च मुष्कौ च वङ्क्षणोद्देशमाश्रितौ ॥
मांसमस्थ्याश्रितं विद्यादसृङ्मांसमुपाश्रितम् ॥ ९६ ॥
मज्जाभ्यन्तरतोऽस्थ्नां तु शुक्रं मज्जाश्रितं विदुः ॥
मेदो मांसाश्रयं प्राहुः शिरा मांससमाश्रिताः ॥ ९७ ॥
रोमाणि त्वचि जातानि मांसस्यापि त्वगावृतिः ॥
छव्यः षडेता व्याख्याता द्विपानां द्विपदां वर ॥ ९८ ॥
छवीनां विस्तरश्चापि मर्माध्याये प्रवक्ष्यते ॥
शिरास्नाय्वात्मकं विद्यान्नखानां संभवं नृप ॥ ९९ ॥
तल्लानां किणभावं च निसर्गादीश्वरं विदुः ॥

—:○:—

इमा महाप्रकृतयस्तिस्रः कीर्तयतः शृणु ॥ १०० ॥

---

*कपुस्तके त्रुटितम् ।

---

१ क. °संधिं समा° । २ क. पुप्फसे । ३ क. सबद्धः । ४ क. °वस्थम° । ५ क. °च्यतत्व° । ६ क. प्रचक्षते ।

रजस्तमश्च सत्त्वं च प्राहुरध्यात्मकोविदाः ॥
मेधावी चपलश्चण्डस्तेजस्वी लघुविक्रमः ॥ १ ॥
कौतूहलप्रेकामी च क्रीडनो हर्षणश्च यः ॥
शीघ्रं कृतं नाशयति शीघ्रं कर्माभिपद्यते ॥ २ ॥
दुर्भगश्च तथा नागः सततं धेनुकाप्रियः ॥
अैशिता दुर्भरः शूरो निःशङ्कोत्तानवेदिता ॥ ३ ॥
एवंविधस्तु यो नागः स राजभ्राजसः स्मृतः ॥
कृच्छ्रेण किंचिज्जानीते कर्म चास्य प्रणश्यति ॥ ४ ॥
निद्रालुर्गूढसंज्ञश्च तामसो नाग उच्यते ॥
अन्वर्थवेदी सुभगः स्मृतिमाञ्शुभयोगजः ॥ १०५ ॥
कर्म शीघ्रं विजानाति न च तत्तस्य नश्यति ॥
आयुष्मान्बलवाञ्शूरो नीरोगः सुप्रजो लघुः ॥ ६ ॥
धन्यो यशस्वी दीप्ताग्निः सुसत्त्वः प्रियदर्शनः ॥
स्निग्धगम्भीरघोषश्च सात्त्विको नाग उच्यते ॥ ७ ॥
इति तिस्रः समाख्याता महाप्रकृतियोनयः ॥

—:():—

एवं शरीरं व्याख्यातं प्रविभागेन(ण) मे शृणु ॥ ८ ॥
प्रसारणं च गात्राणां तथा संकुचनं च यत् ॥
चत्वारिंशत्सिरास्तस्य विनियुक्ता हि धारणे ॥ ९ ॥
उत्तिष्ठति शिराभिश्च चत्वारिंशद्भिरेव हि ॥
उपवेशं च कुरुते चत्वारिंशद्भिरीश्वरः ॥ ११० ॥
षट्शतेन विजानीयाद्गमनं परिवर्तते ॥
हस्तशीलेन कुरुते षट्शतेन तु वारणः ॥ ११ ॥
जृम्भणं कुरुते नागः स चत्वारिंशता तथा ॥
दशभिर्हन्ति हस्तेन ग्रांसं दशभिरेव च ॥ १२ ॥
दशभिश्चालयेत्स्तब्धो दशभिश्चैव खादति ॥
भक्षयित्वा निगिरति शिराभिर्दशभिस्तथा ॥ १३ ॥
दशभिर्दशभिश्चैव पच्यमाने च वारणः ॥
शिरसो धारणे दृष्टाः सिरा ह्यूर्ध्वं तु विंशतिः ॥ १४ ॥

---

१ क. °प्रतापी च । २ क. अशीता । ३ क. ग्रासं च दशभिस्तथा ।

ग्रीवायां पार्श्वयोर्दृष्टास्तिस्रस्तिस्रः पुनः शिराः ॥
शिरसश्चालने दृष्टा दश स्कन्धगताः शिराः ॥ ११५ ॥
आददाति शिराभिश्च पानीयं दशभिर्द्विपः ॥
*दशभिर्निर्वमेच्चैव शिराभिः सलिलं गजः ॥ १६ ॥
दशभिर्निमिषेन्नाग उन्मिषेद्दशभिः पुनः ॥
दशभिर्गन्धमाप्नोति शृणोति दशभिस्तथा ॥ १७ ॥
षट्त्रिंशत्तु शिरा दृष्टा दृष्टिसंचारणेऽपि च ॥
कटयोर्दश विज्ञेया शिरा मदवहा नृप ॥ १८ ॥
दशभिर्दशभिश्चैव कर्णौ चालयति द्विपः ॥
निश्वासं कुरुते याभिस्ताः शिरास्त्रिंशदेव तु ॥ १९ ॥
दशभिर्बृंहति गजो व्याहरेद्दशभिः पुनः ॥
पुच्छं चालयति श्रीमान्सिराभिर्दशभिर्गजः ॥ १२० ॥
निर्हरेद्दशभिर्मेण्ढ्रं दशभिश्चैव सं(मे)हति ॥
मैथुनं याति दशभि(र्भी)रेतो दशभिरावपेत् ॥ २१ ॥
अभितप्तस्तु मातङ्गो वमथुं याभिरुत्सृजेत् ॥
षट्त्रिंशत्तु शतं विद्यात्सिराः स्वेदवहास्तु ताः ॥ २२ ॥
शिरा गुदनिबद्धास्तु हृदयं चापि संश्रिताः ॥
धारणे तु पुरीषस्य तथैवोत्सर्जने पुनः ॥ २३ ॥
तासां दशशतं दृष्टं मूत्रस्योत्सर्जने दश ॥
ततो वातवहा दृष्टा ग्रहणीदीपनाः शिराः ॥ २४ ॥
पक्काशयनिबद्धास्तु ज्ञेयास्तांस्तु चतुर्दश ॥
शिरा दश समाख्याता यास्तु पित्तवहाः स्मृताः ॥ १२५ ॥
दशैव तु शिरा दृष्टाः श्लेष्माणं या वहन्ति वै ॥
शिरा यास्तु शरीरेऽस्मिन्सर्वसंधिसमाश्रिताः ॥ २६ ॥
नदीं तरति सर्वाभिस्ताभिश्चैव तु लङ्घयेत् ॥
ताश्च गात्रैश्चतुर्भिश्च पृथक्त्वे विंशतिः स्मृताः ॥ २७ ॥
सिरा रसवहा दृष्टा जिह्वायां हृदयाश्रिताः ॥
दशैव ताः सुसूक्ष्मास्तु याभिर्वेदयते रसान् ॥ २८ ॥

* अयमर्धश्लोकः ' शिरसश्चालने'— इत्यतः प्राक्पुस्तके ॥

१ क. °स्तासु च° ।

अपानेन यदा वायुं वारणः प्रविमुञ्चति ॥
पक्वाशयनिबद्धास्तु ज्ञेयास्तास्तु चतुर्दश ॥ २९ ॥
एकादश शतान्येवं सप्ततिश्च पुनः सिराः ॥
(*वारणस्य प्रदेशेऽस्मिन्व्याख्यातास्ताः प्रदेशगाः ॥ १३० ॥
शतानि त्रीणि शेषाणि त्रिंशदन्याः पुनः शिराः ॥ )
एता रक्तवहा दृष्टाः शरीरं सर्वमेव हि ॥ ३१ ॥
सिराभिः संवृतं याभिर्वल्लीभिरिव पादपः ॥
अत्र प्रतिविशेषं तु हस्तिन्यामुपलक्षयेत् ॥ ३२ ॥
एकैकस्मिन्स्तने दृष्टाः सिराः क्षीरवहा दश ॥
हृदयंगमाः सुसूक्ष्माश्चेति प्रोक्तः सिराविधिः ॥ ३३ ॥
शतानि पञ्च (*नागस्य सहस्रं च) विशेषतः ॥
रेतोत्सर्गकरा यास्तु वारणानां सिरा दश ॥ ३४ ॥
मैथुनार्थं च या दृष्टास्ता एव विंशतिः स्मृताः ॥
नव संधिशतान्येवं वारणेष्ववधारयेत् ॥ १३५ ॥

—:○:—

अतः परं प्रवक्ष्यन्ते संधयो वारणस्य तु ॥
द्वाविंशतिः संधयस्तु पादे पादे विनिश्चिताः ॥ ३६ ॥
प्रोहसंधानभागे च पलिहस्ते च दन्तिनः ॥
एतेष्वङ्गप्रदेशेषु संधयश्च चतुर्दश ॥ ३७ ॥
एवं भागे त्वपस्कारे पादे विक्षोभयोरपि ॥
प्रतिमाने च विज्ञेयाः संधयस्तु चतुर्दश ॥ ३८ ॥
गुच्छे सगुटिकायां च स्युस्तथाऽन्तरसक्थनि ॥
संधयोऽत्र महाराज विज्ञेयास्तु चतुर्दश ॥ ३९ ॥
मण्डूक्यन्तरसंधौ तु अक्षिकूटे तु विशेषतः ॥
संधयस्तत्र विज्ञेया वारणस्य तु विंशतिः ॥ १४० ॥
आयासकाण्डे रन्ध्रे च स्तनानुसार एव च ॥
मेण्ढ्रे चैवाण्डकोशे च नवतिः संधयः स्मृताः ॥ ४१ ॥
अंसे च प्रत्यगंशे च तथांऽसफलकेऽपि च ॥
संधयस्तत्र विज्ञेया वारणस्य तु विंशतिः ॥ ४२ ॥

* 'धनुश्चिह्नद्वयान्तःस्थो नास्ति पाठः कपुस्तके ।

१ क. प्रतिमुञ्चति । २ क. °स्तासु च° । ३ क. °नुरस एवं° ।

आयासकाण्डे रन्ध्रे च स्वनानुसार एव च ॥
मेण्ढ्रे चैवाण्डकोशे च भवन्ति संधयः स्मृताः ॥ ४३ ॥
अंसे च प्रत्यगंशे च तथाऽसफलकेऽपि च ॥
संधयस्तत्र विज्ञेया वारणस्य तु विंशतिः ॥ ४४ ॥
ग्रीवाबिन्दुवितानेषु पिण्डिकावग्रहे तथा ॥
आसने शयने स्थाने विद्यात्संधिशतानि षट् ॥ १४५ ॥
पुरस्कारावग्रहे च निर्याणे श्रवणे तथा ॥
ईषिकान्तरयोश्चैव वातकुम्भे च दन्तिनः ॥ ४६ ॥
द्वे च संधिशते प्राहुः संधींश्चापि चतुर्दश ॥
ख(क)टे च खलु नेत्रान्ते एकैके संधयः स्मृताः ॥ ४७ ॥
विषाणयोर्द्वयोश्चापि हस्ते द्वात्रिंशदीरिताः ॥
उरसि द्वादश ज्ञेया मुखे त्रिंशति(?)रेव च ॥ ४८ ॥
दशनासगदाये तु संधयस्तत्र षोडश ॥
जिह्वायां तु त्रयः प्रोक्ताः कण्ठे ज्ञेयास्त्रयोदश ॥ ४९ ॥
आसने वंशदेशे च तत्पिले पश्चिमासने ॥
तथा त्वपरवंशे च द्वात्रिंशत्संधयः स्मृताः ॥ १५० ॥
अस्थिभागे च जघन उत्कृष्टकलयोरपि ॥
भागेष्वेतेषु नागस्य द्वात्रिंशत्संधयः स्मृताः ॥ ५१ ॥
(*लाङ्गूलवंशे लाङ्गूले द्वात्रिंशत्संधयः स्मृताः ॥)
करीषभागे प्रस्रावे गुदभागे च दन्तिनः ॥ ५२ ॥
संधयो विंशतिर्ज्ञेया भागेष्वेतेषु निश्चिताः ॥
पलिहस्ते ततः कर्मप्रोहसंदानयोरपि ॥ ५३ ॥
अपस्कारे च नागस्य क्रोशसंधिं विनिर्दिशेत् ॥
बाह्वोरथांसफलके पाद्याभागे तथैव च ॥ ५४ ॥
ग्रन्थिष्वपि तथाऽष्ठीव्ये ज्ञेयास्तु कण्टिकासु च ॥
उत्कृष्टेऽप्यथ मण्डूक्यां भागेष्वेतेषु दन्तिनः ॥ १५५ ॥
समुद्गसंधिः सर्वेषु यथावदिति निश्चयः ॥
लाङ्गूलवंशे लाङ्गूले जघनत्र्यस्थिदेशयोः ॥ ५६ ॥

---

* धनुश्चिह्नद्वयान्तःस्थः पाठो नास्ति कपुस्तके ॥

---

१ क. °नुरस ए° । २ क. °स्य संधयः षोडश स्मृ° ।

उलूखलाख्यः संधिस्तु कलाभागे च दन्तिनः ॥
विताने श्रवणे चैव बिम्बोः कुम्भान्तरे तथा ॥ ५७ ॥
निर्याणे कटिसंधौ च शिरोमस्तकपिण्डयोः ॥
इषीकाग्रे च कुम्भे च वारणस्य महीपते ॥ ५८ ॥
तूणसीवनवत्संधिर्विज्ञेयस्तु कपालतः ॥
हनुसृक्ककपालेषु सगदेष्वेव दन्तिनः ॥ ५९ ॥
संधिर्वायसतुण्डः स्याद्भागेष्वेतेषु दन्तिनः ॥
नेत्रे वर्त्मन्यपाङ्गे च करीषाश्रा(स्रा)व एव च ॥ १६० ॥
हृदये चाक्षिकूटे च कण्ठे क्रोम्नि गुदे तथा ॥
ज्ञेयो मण्डलसंधिस्तु भागेष्वेतेषु दन्तिनः ॥ ६१ ॥
शम्बुके प्रतिमाने च वाहित्रे दन्तवेष्टयोः ॥
शङ्खावर्ते भवेत्संधिः शृङ्गाटः श्रो(स्रो)तसि स्थितः ॥ ६२ ॥
इत्येव संधयः प्रोक्ताः स्नायून्यपि निबोध मे ॥
अष्टौ वक्षःप्रदेशे च चतस्रो वालपुष्करे ॥ ६३ ॥
एकैकस्मिंस्तु पादे वै स्नायूनां विंशतिः स्मृता ॥
मुष्के मेण्ढ्रोदरगुदे त्वष्टौ विंशतिरेव च ॥ ६४ ॥
महास्नायूनि वै पञ्च दश चापि द्विपस्य वै ॥
ऊर्ध्वभागानि सप्तैव षडधोभागकानि च ॥ १६५ ॥
द्वे तिर्यग्भागिके दृष्टे एवं पञ्चदशैव हि ॥
एभिर्वै सर्वतो देहः प्राणोलीभिरिवाऽऽवृतः ॥ ६६ ॥
कफपित्तानिलैर्दुष्टैर्यदा कायोऽभिपूर्यते ॥
तदा व्याधिमवाप्नोति वारणो नात्र संशयः ॥ ६७ ॥
सप्तोत्तरं मर्मशतं वारणस्यावधारयेत् ॥
प्रदेशसंग्रहे तानि कीर्तितानि यथागमम् ॥ ६८ ॥
चतुर्विधानि ज्ञेयानि यथावदभिनिश्चयः ॥
येषु दष्टाश्च विद्धाश्च ताडिता वा मतङ्गजाः ॥ ६९ ॥
विनाशं प्राप्नुवन्तीह क्षिप्रं वा यदि वा चिरात् ॥
कालान्तरविनाशीनि सद्यःप्राणहराणि च ॥ १७० ॥

---

१ क. °न्तरेषु च ॥ नि°। २ क. कटसं°। ३ क. देहे । ४ क. °णालाभि°। ५ क. दृष्टाश्च । ६ क. °द्धा वा ता° ।

वैगुण्यकरणानि स्युः सशल्यानि तथैव च ॥
अस्थिस्नायुसिरासंधिधमनीप्रविभागशः ॥ ७१ ॥
विनाशः संनिपाताद्यस्तन्मर्म परिकीर्तितम् ॥
वायव्याग्नेयसौम्यत्वात्प्रविभागश्चतुर्विधः ॥ ७२ ॥
मर्मणां तुल्ययोनित्वं भूतानां चापि लक्षयेत् ॥
आशुकारी भवेदग्निरस्य येत्राभिसंप्लवः ॥ ७३ ॥
विशेषांत्तत्र विद्धस्तु क्षिप्रमेव विनश्यति ॥
सौम्याग्नेयगुणत्वात्तु कालान्तरहरं स्मृतम् ॥ ७४ ॥
सशल्यमाणघातित्वं स्मृतं वाय्वात्मकं बुधैः ॥
निरुद्धगतिमार्गत्वाद्वायोर्जीवति कुञ्जरः ॥ १७५ ॥
भिन्ने चैवोद्धृते शल्ये विगते मर्मसंश्रये ॥
अनिले म्रियते नागः स शल्यो भियते तथा ॥ ७६ ॥
सौम्याग्नेयं तु कालेन क्षीणं सौम्यगुणैर्यदा ॥
एकीभावंगतः शल्यं नश्येत्कालान्तराद्गजः ॥ ७७ ॥
तस्मात्सौम्याग्निवायूनां वैशेष्यं यत्र लक्ष्यते ॥
तद्भूतगुणयोनित्वान्मर्म तत्तादृशं स्मृतम् ॥ ७८ ॥
कुम्भकर्मतले पेश्यः मोहे चैतस्य पञ्च तु ॥
बाह्वन्तरमपस्कारमंशांशाफलकान्तरम् ॥ ७९ ॥
छादयन्त्यपरां पेश्यस्तिस्रः षट्चैकसंख्यया ॥
शतानि त्रीणि पेशीनां चतुःषष्ट्यधिकानि च ॥ १८० ॥
गात्रापरेषु नागस्य यथावदुपधारयेत् ॥
एकपृष्ठे भवेत्पेशी सीवनीमाश्रिताः पराः ॥ ८१ ॥
अण्डकोशीश्रितास्तिस्रस्त्रिषष्टिर्जङ्घमाश्रिताः ॥
पञ्चाशत्पार्श्वयोः पेश्यः स्युर्विंशत्युरसि स्मृताः ॥ ८२ ॥
एका नाभिसमापन्ना पञ्च लाङ्गूलमाश्रिताः ॥
हन्वोरष्टौ विजानीयाद्ग्रीवास्कन्धगता दश ॥ ८३ ॥
त्रिंशत्कक्षे च वंशे च पृष्ठे चैकां विनिर्दिशेत् ॥
कर्णयोरुभयोर्द्वे च गण्डयोरुभयोर्दश ॥ ८४ ॥

---

१ क. सौम्यं वा प्रवि° । २ क. यत्राभि° । ३ क. °षास्तत्र । ४ ख. °ववतः । ५ क. प्रेश्यः । ६ क. °मंशास्थिशकलान्त° । ७ क. °कोशास्थिता° ।

शिरा मस्तकनिर्याणवितानविदुसंश्रिताः ॥
†यत्तावद्ग्रहयोश्चापि चतुःषष्टिं विनिर्दिशेत् ॥ १८५ ॥
विद्याज्जिह्वाश्रितामेकां द्वे च तालुनि निर्दिशेत् ॥
तथा पाक्लके चापि पेशीमेकां विनिर्दिशेत् ॥ ८६ ॥
करेण्वामधिकास्त्रिंशत्तासां वक्ष्यामि लक्षणम् ॥
स्तनयोर्दश विज्ञेया दश विद्याद्भगाश्रिताः ॥ ८७ ॥
द्वे वृत्ते मुखमाश्रित्य प्रसृतेऽथ भगोत्तरे ॥
गर्भच्छिद्रान्तरे तिस्रस्तिस्रो गर्भोपजन्मनि ॥ ८८ ॥
तासां द्वे त्वचले विद्याद्गच्छत्येका च बाह्यतः ॥
चतुरस्रा च वृत्ता च त्परुपावपि हि दृश्यते ॥ ८९ ॥
त्रिविधा मांसपेश्यस्तु परस्परमुपाश्रिताः ॥
बहिरभ्यन्तरे काये परिमाणमिदं पुनः ॥ १९० ॥
जिह्वायां गोरनालेन गलेनैव च वारणः ॥
सर्वमेतत्तथाऽऽहारं गोरनालेन चाऽऽहरेत् ॥ ९१ ॥
आमाशयात्तु नागस्य पक्वाशयगताः पुनः ॥
स्थूलान्त्रमभिसंपूर्य पुरीषमवतिष्ठति(ते) ॥ ९२ ॥
अन्त्रमात्रपरीणामं विद्याद्व्यामानि विंशति(म्) ॥
स्थूलान्त्राण्युदकं चैव धमन्योऽन्योन्यमाश्रिताः ॥ ९३ ॥
कालेयं तु प्लिहा चैव पक्वदन्तं सफुप्फुसम् ॥
सर्वं निबद्धं हृदये वृक्कौ चैव नराधिप ॥ ९४ ॥
मेढ्रं हस्तश्च नागस्य सर्वं स्नायुसमुद्भवम् ॥
कर्णयोः कटयोर्द्वे द्वे श्रो(स्रो)तसी द्वे च तालुनि ॥ १९५ ॥
हस्ते द्वे नेत्रयोर्द्वे च द्वे चैव स्तनचूचुके ॥
मेढ्रे मुखे गुदे चैव च्छिद्राणि दश पञ्च च ॥ १९६ ॥

—:○:—

आद्या छविर्यत्र रोम द्वितीया चर्म एव च ॥
तृतीया शोणितं ज्ञेया चतुर्थी मांसमुच्यते ॥ ९७ ॥

---

† 'जत्ववग्रहयोः' इति भवेत् ।

---

१ क. शिरो म° । २ क. यत्त्वावग्रह° । ३ क. °लुविनि° । ४ क. °मपि संपूज्य पु° । ५ क. °मात्रे परिमाणं विद्यादध्यामविं° । ६ क. श्रोतसि । ७ क. शोणिते ।

मेदस्तु पञ्चमी ज्ञेया ऽस्थि षष्ठी विधीयते ॥
मज्जा च सप्तमी ज्ञेया एवं सप्तविधा छविः ॥ १९८ ॥

—:०:—

असंख्येयानि रोमाणि केचिच्छास्त्रविदो विदुः ॥
आयुर्वेदविधानज्ञाः ( †केचित्संख्यां विदुर्बुधाः ) ॥ ९९ ॥
संपूर्णं सर्वगात्रस्य प्रमाणं परिकीर्तितम् ॥
अम्बुतेजोमयी दृष्टिः सा सप्तपटला भवेत् ॥ २०० ॥
सप्तधातुसमुत्थं तु शरीरमिह पठ्यते ॥
चतुर्विधाहारमयस्त्वोषधीनां तु यो रसः ॥ १ ॥
पक्वाशयमनुप्राप्तः पूर्वमामाशये स्थितः ॥
प(पा)चितस्तेजसा कोष्ठे वायुना समुदीरितः ॥ २ ॥
अदृष्टः स रसः पृथ्वीः सिराः समनुपद्यते ॥
या वै रसवहाः काये वारणानां विशेषतः ॥ ३ ॥
स रसः शोणितीभूतो मांसत्वमुपगच्छति ॥
मांसं मेदस्त्वमागच्छेन्मेदोऽस्थित्वं च दन्तिनाम् ॥ ४ ॥
अस्थिभ्यो जायते मज्जा शुक्रं मज्जा च पुष्यति ॥ २०५ ॥
स्थानानि षडनुप्राप्तो वीर्यं समनुलभ्यते ॥
ओषधीरसवीर्यं तु शरीरे सर्वगं स्मृतम् ॥ ६ ॥
यस्तत्र किट्टनिःसारः शकृत्स उपपद्यते ॥
मूत्रं चास्य त्वधोभागे वारणस्य शरीरजः ॥ ७ ॥
कट्यां मूत्रधरो बस्तिरेकद्वारो ह्यधोमुखः ॥
अपां श्रो(स्रो)त्रैः सुसूक्ष्मैः स निर्झरैरिव पूर्यते ॥ ८ ॥
प्रतिपूर्णस्ततो बस्तिरपानं प्रतिपद्यते ॥
अपाने शिथिलीभूते वेदना तु ततो भवेत् ॥ ९ ॥
एवं विसृजते मूत्रं समानेन समीरितम् ॥
इति शारीरमुद्दिष्टं वारणानां यथाक्रमम् ॥ २१० ॥
मृत्काष्ठवल्कैर्हि यथा कुशलैः क्रियते गृहम् ॥
एवं शरीरबन्धस्तु मांसस्नाय्वस्थिभिः कृतः ॥ ११ ॥

---

† धनुर्मध्यस्थः कपुस्तके त्रुटितः ।

---

१ ख. अस्थि । २ क. सर्वजं । ३ क. श्रोत्रे । ४ क. भ्रमम् ।

शौर्यादभिज्ञनाद्धर्षात्परिणामान्निसर्गतः ॥
संतापात्पुष्टितो व्याधिरुपधानाश्च माद्यति ॥ १२ ॥
कफं पित्तमसृङ्मांसं मेदश्चान्योन्यमूर्छितम् ॥
सुगन्धे दीपनं स्याच्च कटिच्छिद्रमुपस्थितम् ॥ १३ ॥
तस्य तद्धर्षजं वीर्यं सौम्याग्नेयमुदीरितम् ॥
वायुना कण्ठमेढ्रेभ्यः खेभ्यश्चास्य प्रसिच्यते ॥ १४ ॥
अतः शिलाभ्यः संभूतं यथा शैलाच्छ्रु(स्र)वेज्जलम् ॥
एवं गजमुखं प्राप्य स्वेदः श्र(स्र)वति पार्थिव ॥ २१५ ॥
समागता गजमुखे सर्वाः स्वेदवहाः सिराः ॥
भुक्तान्त(न्न)स्य हि प्रस्वेदात्ताः श्र(स्र)वन्ति निसर्गतः ॥ १६ ॥
अन्येषां रोमकूपेभ्यः प्रविष्टमपराः सिराः ॥
वहन्ति कायजान्धातून्निर्दिशेत्सर्वदेहिनाम् ॥ २७ ॥
हस्ती दन्ती गजो नागो मतङ्गः कुञ्जरः करी ॥
इभो मतङ्गजश्चैव वारणो द्विरदो द्विपः ॥ १८ ॥
मृगोऽथ सामजश्चैव तथा चानेकपः स्मृतः ॥
इति पञ्चदशैतानि नामान्युक्तानि पण्डितैः ॥ १९ ॥
यथा गोमहिषाश्वानामुष्ट्राणां वा समा तनुः ॥
एवमभ्यन्तरस्वेदा हस्तिनस्तु निसर्गतः ॥ २२० ॥
एकपादा द्विपादाश्च बहुपादाश्च देहिनः ॥
नानाकृतिजवज्ञानानसमानान्निसर्गतः ॥ २१ ॥
एवं मतङ्गजा ज्ञेया न समानाः परैर्मृगैः ॥
अन्तःस्वेदा मूढमुष्का मुखशृङ्गमहारिणः ॥ २२ ॥
ऐश्वर्येण निसर्गेण न समाना मृगैर्गजाः ॥
ब्रह्मा तद्वेद भूतानां निसर्गे कारणं विभुः ॥ २३ ॥
(*अनन्तानां च लोकानां भूतानां च महीपते ॥
न शक्यं कारणं ज्ञातुं देवं गुह्यं प्रजापते ॥ २४ ॥
उत्पत्तिकर्म विज्ञानं शरीरं विचयो बलम् ॥
आयुरारोग्यता वर्ष्म वयो ज्ञानं च तत्त्वतः ॥ २२५ ॥

---

* धनुश्चिह्नान्तरगतत्रिचतुराध्यायात्मकपाठः कपुस्तके नास्ति ॥

---

१ क. तद्वीर्यजं । २ ख. कठमे° । ३ क. प्रसिध्यते । ४ क. शुक्लान्तस्य ५ क. एवमेव गजा । ६ क. °मुखा मु° ।

अधिकारं सदा ब्रूयादचिन्त्यं परिवर्जयेत् ॥
मतिमान्कुशलो वैद्यः शास्त्रमाश्रित्य युक्तितः ॥ २२६ ॥
इतीह पृष्टो भगवानङ्गराजेन धीमता ॥
प्राह शास्त्रविदं प्राज्ञः पालकाप्यो यथातथम् ॥ २२७ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचने महापाठे तृतीये शल्यस्थाने शरीरविचयो नाम नवमोऽध्यायः ॥ ९ ॥

---

अथ दशमोऽध्यायः ।

---

शस्त्राग्निप्रणिधानं तु पालकाप्यो महामुनिः ॥
गजानां वदतां श्रेष्ठः प्रोवाचाङ्गेन चोदितः ॥ १ ॥
प्रत्यासन्नोदके देशे समे सुखपरिक्रमे ॥
विश्वासयन्दृढे स्तम्भे यन्त्रयित्वाऽथ वारणम् ॥ २ ॥
विन्यस्योदककुम्भं च समिध्याग्निं चिकित्सकः ॥
वांशीकुठारपरशुं विमोक्षार्थमुपार्जयेत् ॥ ३ ॥
आधारांस्तापिकां दर्वीं शस्त्राणि विविधानि च ॥
शोणितस्थापनार्थं च यथोक्तान्यौषधान्यपि ॥ ४ ॥
समङ्का(ङ्गा)गदरोम्बष्ठाक्षीरिणां च त्वचः समाः ॥
आमलक्यश्वकर्णस्य मधूकस्य धवस्य च ॥ ५ ॥
त्वचः प्रियङ्गवो रोध्रं पतङ्गं गैरिकं तथा ॥
शुष्कचूर्णानि सूक्ष्माणि भूतिर्वरुणकस्य च ॥ ६ ॥
गवां च शकृतश्चूर्णं पांशूनञ्जनमेव च ॥
श्रीवेष्टकं सर्जरसं पृथ्वीकाशोकमुष्ककान् ॥ ७ ॥
अरिमेदपलाशानां निर्यासं गुग्गुलुं तथा ॥
चूर्णानि यवमुद्गानां मृदं दग्धा(ग्ध्वा) कपालिनाम् ॥ ८ ॥
जीवाङ्गारान्सह क्षौमांस्तथा निर्वापणानि च ॥
शस्त्राणि वासयित्वाऽग्निं हुत्वा वाच्य द्विजानपि ॥ ९ ॥
मोक्ष्याद्विराज्यशेषेण समालभ्य गजं ततः ॥
सम्यक्स्थानेधापयेच्छस्त्रं देशेषु मतिमान्भिषक् ॥ १० ॥
स्व(श्व)यथुस्त्वग्गतो ज्ञेयो गम्भीरो मर्मजश्च यः ॥
दोषलिङ्गैश्च विज्ञेयाः संसृष्टागन्तवश्च ये ॥ ११ ॥

तनुप्रदेशे बहुलो बहुले च तनूद्गतः ॥
तिर्यगायतगम्भीरो विसर्पोत्सङ्गवानपि ॥ १२ ॥
सर्वानेतान्विदित्वाऽथ प्रदेशा ये च मर्मजाः ॥
अविचक्षुरसंभ्रान्तः सुस्थानः सुस्थितो लघुः ॥ १३ ॥
स्नायुसंधिसिरामर्म रक्षञ्शस्त्रमथो नयेत् ॥
अङ्गुलं वा यवार्धं वा शिरा भिन्ना न दुष्यति ॥ १४ ॥
अभिन्नश्चयथोरेतद्राजन्व्यञ्जनमिष्यते ॥
अशेषतो न विश्रा(स्रा)व्येत्तिर्यगूर्ध्वमथापि वा ॥ १५ ॥
वहेच्च दोषः संस्थायी निरुत्सङ्गं ततश्च तम् ॥
सुकरालं व्रणं छिन्द्यादनुलोमं समं गतो ॥ १६ ॥
नासक्पादप्रकारं च त्रिपादं छेदयेद्व्रणम् ॥
पादप्रमाणं कुर्यात्तु व्रणस्य चतुरङ्गुलम् ॥ १७ ॥
कुर्याद्यथोद्गमं चापि सुभिषग्गुणदोषतः ॥
भैषज्योत्तरपूर्वाणि कारयेत्तु ऋजूनि च ॥ १८ ॥
आयते चतुरस्रे वा वृत्तेऽथापि परिग्रहे ॥
दोषनिर्हरणार्थाय सर्वान्कुर्यादधोमुखान् ॥ १९ ॥
यथौषधानि च वहेत्तं दोषं परिशोधयेत् ॥
अंगतिर्यत्र चाङ्गुल्यास्तनुगम्भीरमर्मसु ॥ २० ॥
एषण्या श्वयथोर्यत्र तत्र शस्त्रं न पातयेत् ॥
पित्तदुष्टं तु यत्कालं हरितं पीतकं तथा ॥ २१ ॥
उष्णं चाशु श्र(स्र)वति यत्स्कन्दयत्यपि तेजसा ॥
बहुलं पिच्छिलं पाण्डु चिराच्छ्र(त्स्र)वति स्कन्दति ॥ २२ ॥
श्लेष्मदोषान्वितं रक्तं विद्यादेतद्विचक्षणः ॥
तनुकं फेनिलं श्यावं रक्तं वातान्वितं भवेत् ॥ २३ ॥
संनिपातान्वितं रक्तं सर्वदोषैः समन्वितम् ॥
पाटने लेखने वेध्ये प्रच्छन्ने वाऽपि सीवने ॥ २४ ॥
सदोषरुधिरं यावत्तावन्न प्रतिषेधयेत् ॥
इंद्रगोपकवर्णं यत्तद्वै प्रकृतिशोणितम् ॥ २५ ॥
अदोषलिङ्गं शुद्धं यद्वहेत्तत्प्रतिषेधयेत् ॥
दुष्टं यदा कायगतं न विश्रा(स्रा)व्येत शोणितम् ॥ २६ ॥

संदूषयति तद्वायून्बहून्दोषानुदीरयेत् ॥
अतिप्रवृत्तं श्र(स्र)वति निर्दोषे शोणितेऽधिकम् ॥ २७ ॥
पूर्वोक्तैश्चूर्णयोगैस्तु स्थापनं प्रतिचूर्णनैः ॥
स्थाने प्रधाने निर्दोषे शीतले स्थापयेद्गजम् ॥ २८ ॥
न चास्मै लवणं देयं नात्युष्णं नाम्लमेव च ॥
भक्ष्यं भोज्यं तथा पेयं सर्वं च परिवर्जयेत् ॥ २९ ॥
यावद्रक्तं तु तिष्ठेत्तु स्थिते स्यादपरो विधिः ॥
आहारस्य च सौहित्यात्स्पर्शाच्छब्दाद्रसादपि ॥ ३० ॥
यस्मात्प्रसिच्यते रक्तं तस्मात्तेभ्यो निवर्तयेत् ॥
भयात्क्रोधाच्च रुधिरं स्थितं यस्मात्प्रवर्तते ॥ ३१ ॥
तस्मान्न कोपयेदेनं न चास्य भयमादिशेत् ॥
परिषेकैः प्रदेहैश्च शीतलैः समुपाचरेत् ॥ ३२ ॥
नलवञ्जुलमूलैश्च मृणालैः सबिसोत्पलैः ॥
पद्मकोशीरमञ्जिष्ठासारिवाचन्दनैरपि ॥ ३३ ॥
प्रदिह्य बहुशश्चूर्णे शीतलेऽप्यश्च वारणम् ॥
आर्द्रैर्वस्त्रैः परिच्छाद्य वीजयेद्व्यजनैः शुभैः ॥ ३४ ॥
क्रियाभिरेवं सूक्ष्माभिर्यदि रक्तं न तिष्ठति ॥
अग्निकर्म ततः कुर्याद्यथायोगं समाहितः ॥ ३५ ॥
ततोऽग्निकर्मणि कृते घृततैलवसादिभिः ॥
मधूच्छिष्टसमायुक्तैरभ्यङ्गो रक्तनिग्रहः ॥ ३६ ॥
न तु सर्वस्य कर्तव्यमग्निकर्म विजानता ॥
रोगाभिभूते क्षीणे च हतमर्मणि च द्विपे ॥ ३७ ॥
अनिर्वापितशल्ये च तृष्णार्ते मूर्छितेऽपि च ॥
बहुव्रणे च मातङ्गे संतप्ते ज्वरितेऽपि च ॥ ३८ ॥
अग्निकर्म न कर्तव्यं नागानां हितमिच्छता ॥
षडत्यया भवन्त्येते शस्त्रे मिथ्या प्रचारिते ॥ ३९ ॥
संक्षोभः पाण्डुता चैव शोणितस्यातिसेचनम् ॥
प्रवेपनं च स्तम्भं च जीवस्यापि च मोक्षणम् ॥ ४० ॥
इत्येते षट्समुद्दिष्टाः क्रमशो ह्यत्यया नृप ॥
हीनं वाऽप्यतिरिक्तं वा वक्तुं वा कर्म कस्यचित् ॥ ४१ ॥
मर्मसंधिसिराछेदो गजं प्राणैर्वियोजयेत् ॥
मूलं स्कन्धश्च शाखाश्च यथा वृक्षस्य पार्थिव ॥ ४२ ॥

सिरास्नाय्वस्थिमांसानि त्वक्चैव दन्तिनां भवेत् ॥
शरीरे मूर्तिस्तु भवेद्द्रव्यमेतच्छरीरिणाम् ॥ ४३ ॥
तत्र प्राणावृतो ह्यात्मा देहं धारयतीश्वरः ॥
प्राणान्मर्माश्रितान्विद्धि योगवाहसमायुतान् ॥ ४४ ॥
तस्मान्मर्माणि संरक्षेच्छस्त्रकर्मणि शास्त्रवित् ॥
इति शस्त्रविधौ सम्यक्प्रणिधानं प्रकीर्तितम् ॥ ४५ ॥

—:():—

अत ऊर्ध्वं प्रवक्ष्यामि व्रणेऽग्निप्रणिधौ विधिम् ॥
व्रणाः संधिगता ये स्युस्तथा मेण्ढ्रगुदाश्रिताः ॥ ४६ ॥
स्थि(शि)रास्थिमर्मधमनीकोष्ठकण्ठश्रिताश्च ये ॥
एतेष्वङ्गप्रदेशेषु नाग्निर्देयः कथंचन ॥ ४७ ॥
मोहाद्वृत्तस्तु वैकल्यं प्राणैर्वा विप्रयोजयेत् ॥
दुष्यन्ति बहुशो ये तु व्रणा दुःखप्ररोहिणः ॥ ४८ ॥
नाडीजाताः सपिटकाः कृमिदुष्टाश्च ये व्रणाः ॥
उत्सन्नमांसगम्भीराः साश्र(स्र)वाः शर्करचिताः ॥ ४९ ॥
नीलावच्छिन्नमांसाश्च वल्मीकाकृतयश्च ये ॥
व्रणो यो मांसशोषी च बहलौष्ठश्च यो व्रणः ॥ ५० ॥
एतेषु च यथायोगमग्निकर्म विधीयते ॥
शूनं विलापयत्यग्निः शुष्कमुत्सादयत्यपि ॥ ५१ ॥
व्रणसंशोधनस्त्वग्नी रोपणः परिकीर्तितः ॥
शोफापहाराचमतो वातानां चानुलोमतः ॥ ५२ ॥
न जायतेऽग्निना नाडीव्रणश्च न विसर्पति ॥
मृदुं करोति प्रस्तब्धं प्रस्तब्धं मृदुतां नयेत् ॥ ५३ ॥
उत्सन्नं सादयत्यग्निः सन्नमुत्सादयत्यपि ॥
एतेऽग्निकर्मणि गुणा यस्मात्तस्माद्विजानता ॥ ५४ ॥
कार्योऽग्निप्रणिधिः सम्यङ्नागानां हितमिच्छता ॥
कपोतवर्णं रूक्षं तु तथा संकुचितं समम् ॥ ५५ ॥
सम्यग्दग्धं विजानीयान्निराश्र(स्र)वमवेदनम् ॥
व्रणानां परिपोटाश्च स्फोटाः संश्र(स्र)वणं तथा ॥ ५६ ॥
दुर्दग्धमेतज्जानीयाद्दहेत्सम्यक्ततः पुनः ॥
ज्वरोऽत्यर्थं भ्रमो मूर्छा तृष्णा स्यान्मुखशोषणम् ॥ ५७ ॥

अतिदग्धे भवन्त्येतद्व्रणे नागस्य पार्थिव ॥
शीर्णमांसाः सुगम्भीरा व्रणा दुःखप्ररोहिणः ॥ ५८ ॥
अतिरिक्ते भवन्त्यग्नौ व्रणे दोषश्च दारुणः ॥
परिषेकैः प्रदेहैश्च शीतलैस्तमुपाचरेत् ॥ ५९ ॥
द्विव्रणीये यथा प्रोक्तं तथा व्रणमुपाचरेत् ॥
इति सम्यक्समाख्यातः शस्त्राग्निप्रणिधौ विधिः ॥ ६० ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने शस्त्राग्निप्रणिधिर्नाम दशमोऽध्यायः ॥ १० ॥

---

## अथैकादशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
कृतजप्यमृषिश्रेष्ठं विनयेन कृताञ्जलिः ॥ १ ॥
शस्त्राग्निप्रणिधाने यत्परिकर्मसु हस्तिनाम् ॥
सर्वं भगवता प्रोक्तं दृढे स्तम्भे निबन्धनम् ॥ २ ॥
तत्कथं वारणेन्द्राणां कर्तव्यमृषिसत्तम ॥
स्तम्भ एव निबद्धानामनल्पबलतेजसाम् ॥ ३ ॥
कथं न हस्तवालाभ्यां हिंस्युर्गात्रापरेण वा ॥
प्रतिकर्मक्रियाकाले बन्धेनैकेन संयताः ॥ ४ ॥
यथा येन निराबाधं निराबाधं च हस्तिनाम् ॥
भवेत्तु विधिवत्सर्वं तथा मे वक्तुमर्हसि ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥
शृणु राजन्यथा कार्यः प्रतिकर्मक्रियाविधिः ॥ ६ ॥
आलाने चैव बद्धानां कार्यस्तु पृथिवीपते ॥
शस्त्राग्निक्षारसंयुक्तः प्रतिकर्मक्रियाविधिः ॥ ७ ॥
अयन्त्रितमबद्धं वा यो नागमुपसर्पति ॥
प्रतिकर्मक्रियां कर्तुं बालिशस्त्वरयाऽपि वा ॥ ८ ॥
जीविते संशयस्तस्य वैकल्यं वा ध्रुवं भवेत् ॥
न च सम्यक्क्रियां कर्तुं स शक्नोति नराधिप ॥ ९ ॥
स्नाय्वस्थीनि सिरा वाऽपि कर्म चाप्युपहन्त्यपि ॥
तिर्यग्वा पातयेच्छस्त्रं वेपमानो ह्यशिक्षितः ॥ १० ॥

तस्मात्सुपश्रितं कृत्वा पूर्वमेव तु वारणम् ॥
स्तम्भालितं तु यत्नेन नित्यकालमुपाचरेत् ॥ ११ ॥
पूर्वापरपरिक्षेपस्त्वालानमुपयामकम् ॥
उपरिग्रहबन्धश्च हस्ते वासनमेव च ॥ १२ ॥
दन्ते सकटिके चैव अपस्कारे तथैव च ॥
दन्तोद्दानीं शिरोद्दानीं कायोद्दानीं तथैव च ॥ १३ ॥
वालं वासनमेवात्र इति बन्धास्त्रयोदश ॥
प्रतिकर्मक्रियाकाले प्रयोक्तव्यास्तु दन्तिनाम् ॥ १४ ॥
एतैः समस्तैर्बद्धस्य बन्धैर्नागस्य पार्थिव ॥
प्रतिकर्मविधिं कुर्याद्गुप्तस्याऽऽरक्षरक्षिभिः ॥ १५ ॥

—:○:—

रोमपादस्ततो राजा विनयात्पुनरुत्थितः ॥
पप्रच्छ पालकाप्यं तु पुनः प्रश्नमनन्तरम् ॥ १६ ॥
भगवञ्शिष्यभावेन किंचित्पृच्छामि संशयम् ॥
तदशेषेण विधिवत्सर्वमाख्यातुमर्हसि ॥ १७ ॥
आलिते बहवो दोषा बद्धगात्रापरस्य च ॥
रज्ज्वाद्येन सुगुप्तस्य वारणस्य महीपते ॥ १८ ॥
उद्विग्नो भयसंत्रस्तः प्रतिकर्मक्रियासु वै ॥
पतेद्वा निष्पतेद्वाऽपि ततो बाध्येत वा गजः ॥ १९ ॥
बन्धादींश्छेदयेत्सर्वानालानं वाऽपि वारणः ॥
तस्य प्रतिक्रियां काले कथं वैद्यो ह्युपाचरेत् ॥ २० ॥
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥
शृणु सर्वं महाराज यथा कार्यं भिषग्जिता ॥ २१ ॥
भूमिः पाषाणबहुला विषमा शर्करान्विता ॥
कर्दमतृणयुक्तावा प्रतिकर्मणि वर्जिता ॥ २२ ॥
या तु नात्यर्थसिकता पांशुला नष्टशर्करा ॥
निष्कर्दमा समा चैव सा भूमिः कर्मणो हिता ॥ २३ ॥
पूर्वापरपरिक्षिप्तं तत्र नागं निषादयेत् ॥
रज्जुं च निर्णयेत्पक्षे पक्षबन्धं च कारयेत् ॥ २४ ॥
पक्षबन्धविधानं च कर्तव्यं विधिना भवेत् ॥
अपस्कारे दृढं बद्ध्वा अष्ठीव्ये च नराधिप ॥ २५ ॥

बन्धयित्वा तु तं रज्जुं यूपे कायो(ये)ऽवलम्बयेत् ॥
तयोः प्रदेशयोर्मन्यायुक्त्या स्तम्भौ निखानयेत् ॥ २६ ॥
अच्छिद्रौ सुदृढौ ह्रस्वौ बन्धनार्थं विचक्षणः ॥
बालं वासनमप्यस्य निक्षिपेदपरान्तरे ॥ २७ ॥
अनुवृत्तस्य निर्दिष्टः प्रतिकर्मक्रियाविधिः ॥
वारणस्य यथान्यायमेष ते पृथिवीपते ॥ २८ ॥

—:○:—

भूयोऽङ्गराजः पप्रच्छ पालकाप्यं महामुनिम् ॥
तत्रापि बहवो दोषा दृश्यन्ते मुनिसत्तम ॥ २९ ॥
दृश्यते क्षयभागेषु अंश(स)योः कटयोरपि ॥
विक्षिपत्यपि गात्राणि कर्म चापि न विन्दति ॥ ३० ॥
यथा वै यस्य च भवेन्निराबाधं च दन्तिनः ॥
भवेत्तु विधिवत्सर्वं तथा मे वक्तुमर्हसि ॥ ३१ ॥
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥
शृणु यन्त्रविधानं मे वारणानां नराधिप ॥ ३२ ॥
प्रत्यासन्नोदके देशे समे सुखपरिक्रमे ॥
शिवे रम्येऽथ वृक्षे वा देवायतनवर्जिते ॥ ३३ ॥
अना·········श्मशानस्य नगरस्यापि दूरतः ॥
कार्यः प्रागुत्तरे देशे यन्त्र सिद्धिरभीप्सिता ॥ ३४ ॥
आवासाः पक्षिणां ये च ये वा स्युर्गर्हितद्रुमाः ॥
ये चापि दग्धास्तु भृशमशन्यभिहतास्तु ये ॥ ३५ ॥
अर्धशुष्कास्तु ये वृक्षास्तथैव देवताश्रिताः ॥
देवतायतने चैव उद्याने चाऽऽश्रमेषु च ॥ ३६ ॥
चैत्यश्मशानजा ये च न योज्या यन्त्रकर्मणि ॥
इत्यप्रशस्ता व्याख्याताः प्रशस्ताञ्शृणु मे नृप ॥ ३७ ॥
अञ्जनः खदिरः सालः कदरो वा समाहितः ॥
मधूकः सोमवल्को वा शा(ऽशो)को वा सर्ज एव च ॥ ३८ ॥
अष्टानां वृक्षजातीनां ये द्रुमा ह्युपपत्तितः ॥
अवल्मीके शुभे देशे सारवन्तः समाहिताः ॥ ३९ ॥
ज्ञाता न चाग्निना स्पृष्टा वल्लीभिः पिण्डिताश्च ये ॥
अकोटरास्तु जाताश्च योग्यास्ते यन्त्रकर्मणि ॥ ४० ॥

प्रशस्ते तिथिनक्षत्रे मुहूर्ते चापि पूजिते ॥
देवान्यष्ट्वा यथान्यायं स्वस्ति वाच्य द्विजांस्तथा ॥ ४१ ॥
वृक्षाणां ग्रहणार्थाय कुर्याच्चेमान्बलीनपि ॥
शुचिः स्नातस्ततो वैद्यो वृक्षं समुपवासयेत् ॥ ४२ ॥
तस्योपवासना कार्या सुरभिः सुमनोक्षतैः ॥
रक्तमाल्यं प्रियङ्गुं च खदिरस्योपवासने ॥ ४३ ॥
सूपोदनेन मांसेन चित्रैर्माल्यैस्तथैव च ॥
अञ्जनस्य बलिः कार्यः सुरयाऽपि विधीयते ॥ ४४ ॥
गुडौदनेन पयसा पूपसोल्लासिकासवैः ॥
कदरस्य बलिः कार्यः कर्मसिद्धिमभीप्सता ॥ ४५ ॥
एतैश्च विधिवत्कृत्वा बलिं समुपवास्य च ॥
वृक्षमूले स्थितो वैद्यस्त्रीन्वारान्वाचयेदिह ॥ ४६ ॥
स्थावरे यानि भूतानि निवसन्ति चि(च)राणि वै ॥
नमस्करोम्यहं तेभ्यः क्रियतां वा सपर्ययः ॥ ४७ ॥
वर्धापयेत्ततस्त्वेनं प्रातरुत्थाय संयतः ॥
वर्धकी वर्धयेद्वृक्षं प्राचीमभिमुखं दिशम् ॥ ४८ ॥
उत्तरां वा समाश्रित्य दिशमेनं निपातयेत् ॥
विस्वरं यदि कूजेत अन्यतो वा पतेद्यदि ॥ ४९ ॥
यन्त्रैस्तैर्निष्फलो वृक्षस्तत्र यन्त्रे नियोजयेत् ॥
सम्यङ्निपतितं दृष्ट्वा वृक्षमग्रन्थिकोटरम् ॥ ५० ॥
यन्त्रे निवेशयेद्वैद्यः समे देशे बहूदके ॥
समाहितं दृढं तत्र स्तम्भं मध्ये निवेशयेत् ॥ ५१ ॥
ततोऽष्टौ यनु(?)पादाश्च कर्तव्याः सुसमाहिताः ॥
तेषां छिद्राणि सूच्य(च्य)र्थं द्वे द्वे ह्येकस्य कारयेत् ॥ ५२ ॥
बलवत्यस्तथा सूच्यस्तत्राष्टौ कारयेद्भिषक् ॥
बहिश्च यन्त्रपादानामन्यद्दीर्घं पृथक्पृथक् ॥ ५३ ॥
ते वै निपाताः कर्तव्याश्चत्वारस्तु समाहिताः ॥
तेषु तिर्यङ्नते कार्ये द्वे तुले भारधारणे ॥ ५४ ॥
तयोरुपरि कर्तव्या स्यादेकाऽत्यायता तुला ॥
हस्ते चान्यं तुलायन्त्रं निबद्धफलकं दृढम् ॥ ५५ ॥

आयतं चतुरो हस्तान्हस्ताद्वा द्वादशाङ्गुलात् ॥
कोष्ठ्यः षडङ्गुलं चैव मधूकं शाकमेव च ॥ ५६ ॥
त्र्यङ्गुलं त्ववगाढं च चतुरस्रं समन्ततः ॥
चतुरङ्गुलविस्तीर्णाः कोष्ठ्यस्तत्र च कारयेत् ॥ ५७ ॥
असंभ्रान्तमतिर्वैद्यः सत्त्वमार्गं समाश्रितः ॥
ये त्रयोदश बन्धा वै मया पूर्वं प्रकीर्तिताः ॥ ५८ ॥
यन्त्रे प्रवेश्य वै नागो बन्धितव्यो नराधिप ॥
ततोऽस्य फलके हस्तं वासयेत विचक्षणः ॥ ५९ ॥
नस्यकर्मणि नागानामन्येषु च न वासयेत् ॥
सूचीभिरुपधेयश्च ततः स पृथिवीपते ॥ ६० ॥
उरस्येका ततो देया एकैकाऽक्षीव्ययोः पुनः ॥
अपस्कारे तथा ह्येका एका च जघने भवेत् ॥ ६१ ॥
एका मस्तकपिण्डे तु सूची देया नराधिप ॥
एकैवाथाऽऽसने देया तथैका पश्चिमासने ॥ ६२ ॥
लाङ्गूलवंशे दातव्या चैका सूची महीपते ॥
एवमष्टौ विधातव्याः पश्च सूच्यः समाहिताः ॥ ६३ ॥
ताभिः परिगृहीतस्य बन्धाः कार्यास्त्विमे पुनः ॥
उत्सङ्गी परिदामी च तथा चैवोरसी पुनः ॥ ६४ ॥
पाददानी च कर्तव्या सुदृढा यन्त्रकर्मणि ॥
उदानाश्चापि कर्तव्याश्चत्वारः साधुपूजिताः ॥ ६५ ॥
एवं यन्त्रे निबद्धस्य बन्धैः सर्वैश्च हस्तिनः ॥
प्रतिकर्म ततः कार्यं भिषजा सिद्धिमिच्छता ॥ ६६ ॥
ज्येष्ठयन्त्रविधानं तु सम्यगेतदुदाहृतम् ॥
यथाप्रमाणविहितं वारणानां महीपते ॥ ६७ ॥
यन्त्रं तु मध्यमं कार्यं प्रमाणेन समाहितम् ॥
त्रिभागपरिहीणं स्यादुत्तमात्पृथिवीपते ॥ ६८ ॥
कन्यसं मध्यमात्किंचिदूनं यन्त्रमिहोच्यते ॥
अथवा विभजेद्यन्त्रं यथाहस्तिप्रमाणतः ॥ ६९ ॥
आयामार्धेन नागस्य विस्तारः समुदाहृतः ॥
त्रयाणामपि नागानां यथावदनुपूर्वशः ॥ ७० ॥

वारणानां यथान्यायमारोग्याय भिषग्वरः ॥
कर्म कुर्यादसंभ्रान्तस्तिथ्यादौ पूजिते यदा ॥ ७१ ॥
शुचिः सुप्रयतो भूत्वा कृत्वा ब्राह्मणवाचनम् ॥
स्नापयेच्च ततः पादान्यन्त्रस्याथ तुलास्तथा ॥ ७२ ॥
अलंकृत्य कृतास्रश्च प्रादक्षिण्येन रोपयेत् ॥
सुबद्धां सग्रहां कृत्वा ततस्तमवतारयेत् ॥ ७३ ॥
आकोटयित्वा विधिवन्निष्प्रकम्पश्च कारयेत् ॥
फलकैराश्रितैर्भूमिं निश्चलैः सुसमे दृढे ॥ ७४ ॥
स्नापयित्वा ततो यन्त्रं सर्वाङ्गं विरलं कृतम् ॥
गन्धपङ्काकुलं कृत्वा पताकावस्त्रसंकुलम् ॥ ७५ ॥
ततः पूर्वं तथाऽऽहृत्य संभारांस्तत्र कारयेत् ॥
यन्त्रस्य पश्चिमे देशे जुहुयाद्धव्यवाहनम् ॥ ७६ ॥
हुत्वाऽग्निं च यथान्यायमाज्यशेषेण म्रक्षयेत् ॥
यन्त्रं यन्त्रतुलाश्चापि शोणितेन समालभेत् ॥ ७७ ॥
पक्त्वाऽऽमकेन मांसेन तथा सीधुसुरासवैः ॥
भूतो(तौ)दनेन कुल्माषैर्मत्स्यैर्मांसैः फलैस्तथा ॥ ७८ ॥
अष्टापदं जपेत्तत्र ............ ..... ..... देवताः ॥
सनत्कुमारं सेनान्यं देवं चाप्यपराजितम् ॥ ७९ ॥
उग्रानन्यान्परिषदान्देवान्सेनापतिं तथा ॥
नमस्कृत्य ततो वैद्यः शुक्लाम्बरधरः शुचिः ॥ ८० ॥
कृत्वा भूतोपहारं च स्वस्ति वाच्य द्विजांस्तथा ॥
यन्त्रं प्रदक्षिणीकृत्य तास्ता हि स्वाङ्गदेवताः ॥
ततः प्रवर्तयेत्कर्म वारणानां भिषग्वरः ॥ ८१ ॥
इति यन्त्रविधानं च बन्धाश्च परिकर्मणि ॥
हस्तिनां पालकाप्येन रोमपादाय कीर्तिताः ॥ ८२ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचने महापाठे तृतीये शल्यस्थाने यन्त्रविधिर्नामैकादशोऽध्यायः ॥ ११ ॥

---

अथ द्वादशोऽध्यायः ।

---

कृतजप्यमृषिश्रेष्ठं विनयेन कृताञ्जलिः ॥
रोमपादो महाप्राज्ञः पालकाप्यं स्म पृच्छति ॥ १ ॥

प्रनष्टशल्याहरणं यथावद्वक्तुमर्हसि ॥
यष्टितोमरशक्त्यृष्टिकिणयः सपरश्वधैः ॥ २ ॥
शरैश्च विविधैर्घोरैः परप्राणापहारिभिः ॥
नाराचैरर्धनाराचैरर्धचन्द्रनिभैस्तथा ॥ ३ ॥
भल्लैर्वराहकर्णैश्च क्षुरप्रैरिक्षुपत्रकैः ॥
पीलुशङ्कुप्रमथनैः शिखराग्रैः सकण्टकैः ॥ ४ ॥
सावरैरर्धकर्णैश्च शृङ्गशीर्षैस्तु कण्टकैः ॥
नालीकैरर्धनालीकैस्तथा वेतसपत्रकैः ॥ ५ ॥
मुकुलाग्रैर्विकीर्णैश्च मुद्गरैः कूटमुद्गरैः ॥
एतैश्चान्यैश्च विद्धानां विप्रनष्टैर्महामुने ॥ ६ ॥
दृश्यन्ते वारणेन्द्राणां गूढशल्याः सुदारुणाः ॥
व्रणा हि बहुविश्रा(स्रा)वा दुर्गन्धाः कठिनास्तथा ॥ ७ ॥
गम्भीरा वेदनाप्रायाः सशोणितपरिश्र(स्र)वाः ॥
न शोधनैः कषायैर्वा विशुध्यन्ति कदाचन ॥ ८ ॥
तेषां यथा चिकित्सा च शोधनं तु सुखं भवेत् ॥
कर्तुं यथा च विज्ञेया यत्समुत्थाश्च ये व्रणाः ॥ ९ ॥
असंशयं मे भगवंस्तत्सर्वं वक्तुमर्हसि ॥
ततः प्रोवाच भगवान्पालकाप्यो महामुनिः ॥ १० ॥
ब्रह्मा शास्त्रमिदं प्राह पूर्वमेव प्रजापतेः ॥
प्रजापतिरथेन्द्राय सोऽश्विभ्यां पाकशासनः ॥ ११ ॥
अश्विनौ चापि तौ देवावृषिभ्यः प्रत्यभाषताम् ॥
प्रनष्टशल्याहरणं पालकाप्यो महायशाः ॥ १२ ॥
सद्यःक्षतविधाने च द्विव्रणीये च तन्मया ॥
व्रणानां लक्षणं कृत्स्नं विस्तरेण प्रकीर्तितम् ॥ १३ ॥
शल्यस्य विप्रनष्टस्य लक्षणं शृणु पार्थिव ॥
स्थानान्येतानि जानीयाद्येषु शल्यं प्रणश्यति ॥ १४ ॥
तानि सर्वाणि वक्ष्यामि पृथक्त्वेन निबोध मे ॥
छविर्मांसं तथा मेदः संधिः स्नायुस्तथाऽस्थि च ॥ १५ ॥
कोष्ठश्रो(स्रो)तांसि चैवैषां स्थानान्येतानि विद्धि वै ॥
तृणं काष्ठं च विज्ञेयं तथा लोहमयं च यत् ॥ १६ ॥

बाह्यमेतद्भवेच्छल्यं प्रकारैर्बहुभिर्युतम् ॥
शोणितं त्वस्थि मांसं च शिरा स्नायूनि वाऽप्यथ ॥ १७ ॥
यूपं(पूयं) चापि भवेच्छल्यमेतत्सर्वं शरीरजम् ॥
तत्र बाह्यानि सर्वत्र सर्वमेव नराधिप ॥ १८ ॥
शरीरजेषु चास्थीनि दारुणानि विनिर्दिशेत् ॥
शोणितादीनि शेषाणि यानि शल्यानि पार्थिव ॥ १९ ॥
निर्वहन्त्यौषधीस्तानि मुखे वा विकृते कृते ॥
यानि दारुणशल्यानि तानि सर्वाणि भूपते ॥ २० ॥
गूढतां याति कालेन शरीरस्थानि दन्तिनाम् ॥
अत ऊर्ध्वं प्रवक्ष्यामि सशल्ये लक्षणं नृप ॥ २१ ॥
वेदनाऽथ परिश्रा(स्रा)वः शोफः स्तम्भः परिग्रहः ॥
व्रणं शल्यमुखस्तेषां कठिनोष्ठश्च लक्ष्यते ॥ २२ ॥
दुर्गन्धः पिच्छिलश्चापि स्रावस्तत्र प्रवर्तते ॥
स लोहितश्च विच्छिन्नः कदाचिच्चापि संहतः ॥ २३ ॥
अष्टानां व्रणवस्तूनां यच्च वस्तु समाश्रितम् ॥
साहश्यं तस्य च पुनः कदाचिच्छ्र(त्स्र)वति श्र(स्र)वम् ॥ २४ ॥
एतैर्लिङ्गैस्तु विज्ञेया व्रणाः सम्यग्भिषग्वरैः ॥
ईषदुन्नत उत्सन्नं त्वचं लक्षेत दन्तिनः ॥ २५ ॥
मांसस्था कूर्मसंस्थाने मेदःस्थे तु विसर्पति ॥
शिरास्नायुगते कुब्जस्तब्धाङ्गो वा भवेद्द्विपः ॥ २६ ॥
चेष्टानिरोधः संधौ तु महांश्च श्वयथुर्भवेत् ॥
अस्थिभेदस्त्वस्थिगते तेन न श्र(स्र)वति व्रणः ॥ २७ ॥
गुणोपरोधः श्रो(स्रो)तः स्याद्यस्मिंस्तिष्ठति श्रोतसि ॥
कोष्ठस्थे रक्तसंसृष्टं विस्रंश्र(स्र)वति च व्रणः ॥ २८ ॥
गुदः श्र(स्र)वति चात्यर्थं द्विपस्त्वानह्यते च सः ॥
संध्यस्थिधमनीस्नायौ सद्यःप्राणहरेषु च ॥ २९ ॥
वेदनालिङ्गबाहुल्यादसाध्यं तं विनिर्दिशेत् ॥
मर्मज्ञानं यथोक्तेन विधिना तु विशारदः ॥ ३० ॥
अत ऊर्ध्वं प्रवक्ष्यामि सशल्ये लक्षणं व्रणे ॥
अनिर्हृतानि तिष्ठन्ति वर्षाणि सुबहून्यपि ॥ ३१ ॥

शल्यानि नैवं दृश्यन्ते भिद्यन्ते नैव दन्तिनाम् ॥
निर्व्रणाश्चापि जायन्ते कदाचिच्चापि सव्रणाः ॥ ३२ ॥
न कदाचित्प्रदृश्यन्ते सुनिक्षिप्ततया नृप ॥
भूयस्तु संप्रवक्ष्यामि सशल्यव्रणलक्षणम् ॥ ३३ ॥
व्रणे प्रभिन्ने तस्याथ श्रा(स्रा)वगन्धं च लक्षयेत् ॥
सगदापानसंस्थानः खराणां वाजिनां तथा ॥ ३४ ॥
नृणां च गुदसंस्थानो नाभीभूतश्च जायते ॥
दुर्गन्धः पिच्छिलश्चापि श्रा(स्रा)वस्तत्र प्रवर्तते ॥ ३५ ॥
स लोहितश्च विच्छिन्नः काञ्जिकौदनगन्धवान् ॥
कण्डूयते दह्यते च शुष्यंश्च परिपोद्यते ॥ ३६ ॥
वालुकाकर्दमैश्चैनं पांशुभिश्च करेण च ॥
वीजते जिघ्रति तथा सशल्यं व्रणमादिशेत् ॥ ३७ ॥
व्रणोपचारैस्तस्येह वारणस्य महीपते ॥
यदि शल्यं न दृश्येत तस्य वक्ष्याम्युपक्रमम् ॥ ३८ ॥
स्वभ्यक्तं तिलतैलेन ससि(शि)रस्कं घृतेन वा ॥
मेदसा वा प्रलिम्पेत्तु वसया त्रिवृतेन वा ॥ ३९ ॥
निवाते स्वेदयेद्वैद्यो यथोक्तैः स्वेदनैस्तु तम् ॥
विमर्दनं विमार्गं च सर्वेष्वङ्गेषु कारयेत् ॥ ४० ॥
परिमर्दैन नागस्य शल्यं तदुपलभ्यते ॥
अपूर्वो वाऽपि संयोगः शिराणां चैव दृश्यते ॥ ४१ ॥
यत्र वा सज्जते स्पर्शस्तत्र शल्यं विनिर्दिशेत् ॥
यथै(द्ये)वं नोपलभ्येत मृदा तमुपलेपयेत् ॥ ४२ ॥
निवाते तु समावेश्य यत्र पूर्वं विशुष्यति ॥
ततो तमथ नागस्य तत्र शल्यं विनिर्दिशेत् ॥ ४३ ॥
तत्र शल्यं विदित्वा तु क्षिप्रं तदुपनाहयेत् ॥
मृदुं विवर्णं शिथिलं पक्कं शस्त्रेण पाटयेत् ॥ ४४ ॥
एषिण्या गतिमासाद्य गजानां राजसत्तम ॥
विष्कम्भेन विमाश्यै(मर्श्यै)नं पश्चाच्चैवोपानिग्रहात् ॥ ४५ ॥
सकर्णं वाऽप्यकर्णं वा प्रच्छन्नं तत्र दृश्यते ॥
उपस्थितं तु यच्छल्यं यन्त्रेण ग्राहयेद्दृढम् ॥ ४६ ॥

वामेन तु मुखाभ्यास उत्तानेनैव पाणिना ॥
दक्षिणेन तु हस्तेन दृढं यन्त्रं निपीडयेत् ॥ ४७ ॥
आहरेत्तु ततः शल्यं क्रियायोगेन दन्तिनाम् ॥
त्वग्गतं शल्यमेवं स्यादाहर्तव्यं विजानता ॥ ४८ ॥
मांसोपचितदेहस्य मांसभागमुपास(श्रि)तम् ॥
यदा न दृश्यते शल्यं तस्य वक्ष्याम्युपक्रमम् ॥ ४९ ॥
स्वभ्यक्तं स्वेदयित्वा तु पूर्ववच्छल्यमुद्धरेत् ॥
शिराजालगतं शल्यं यदा नागे न दृश्यते ॥ ५० ॥
तस्योपायं प्रवक्ष्यामि यथा शल्यं प्रदृश्यते ॥
गोमूत्रं मण्डलं चैव लङ्घनं मर्दनं तथा ॥ ५१ ॥
व्यायामं कारयेत्तस्य तथैव विषमेऽध्वनि ॥
भृशं संकुच्यमानस्य व्यायामोद्रावितं बलात् ॥ ५२ ॥
शीघ्रं प्रच्यवते स्थानात्तस्मादेनं विचारयेत् ॥
वेदनां कुरुते तीव्रां यत्र तेनोपनाहयेत् ॥ ५३ ॥
एषिण्या गतिमासाद्य पूर्ववच्छल्यमुद्धरेत् ॥
स्नायुजालगतं शल्यं वनजस्य न दृश्यते ॥ ५४ ॥
सिराजालगते शल्ये या क्रिया तां समाचरेत् ॥
यदि संधिगतं शल्यं वारणस्य न दृश्यते ॥ ५५ ॥
चर्मणा त्वथ रज्ज्वा वा वेष्टयित्वा पटेन वा ॥
बद्ध्वा चङ्क्रमयेच्छीघ्रं लङ्घयेत्प्लावयेदपि ॥ ५६ ॥
संधौ व्यायच्छमानस्य रुजा शोफश्च जायते ॥
ततस्तं पूर्ववद्बद्ध्वा यन्त्रैः शल्यं समुद्धरेत् ॥ ५७ ॥
यदा न दृश्यते शल्यमस्थिकायप्रतिष्ठितम् ॥
बहुमांसशरीरत्वाद्गजानां तु नराधिप ॥ ५८ ॥
स्वभ्यक्तं स्वेदयित्वा तु पूर्वेण विधिना भिषक् ॥
यथोक्तां मांसदेशस्थे क्रियां तद्वत्समाचरेत् ॥ ५९ ॥
अथ शल्यं न कम्पेत दृढं लग्नं यथा स्थितम् ॥
वा(?)रक्तमूले तद्बद्ध्वा दृढरज्ज्वा समाहरेत् ॥ ६० ॥
स्रोतःसु च यदा शल्यं सिराणां संगमेषु च ॥
घटयन्नेव तत्प्राज्ञो मर्मदेशे च यद्भवेत् ॥ ६१ ॥

एतेष्वेव प्रदेशेषु शस्त्रकर्म न कारयेत् ॥
न चापके न चाक्लिमे न च तिर्यङ्निपातयेत् ॥ ६२ ॥
न मुक्ताशिथिले मांसे मृदुभूते न हस्तिनः ॥
विदग्धे वाऽप्यपक्के वा निर्दोषं हरणं भवेत् ॥ ६३ ॥
एवं स्रोतोगतं शल्यमाहर्तव्यं विजानता ॥
कुम्भस्रोतोगतं शल्यं यदा नागे न दृश्यते ॥ ६४ ॥
पूर्वं शिरोभितापेषु जत्रुप्रधमनं स्मृतम् ॥
स्निग्धस्विन्नस्य नागस्य करस्रोतसि दापयेत् ॥ ६५ ॥
ततस्तं बृंहमाणस्य वनथोविन(?)मूर्छितम् ॥
क्लेदितं दोषसंसृष्टं मुखं श्रो(स्रो)तः प्रपद्यते ॥ ६६ ॥
ततस्तत्प्रच्युतं स्थानाद्भूमौ पतति हस्तिनः ॥
कोष्ठप्राप्ते तु कवलं दद्यात्तस्य विरेचनम् ॥ ६७ ॥
पुरीषदोषसंसृष्टं तस्मादेतन्निरस्यते ॥
अथवा मर्दनात्तस्य पार्ष्णिघाताद्विलीयते ॥ ६८ ॥
सहसा प्रतिपद्येत मार्गवेगसमीरितम् ॥
एवं कोष्ठगतं शल्यमाहर्तव्यं विजानता ॥ ६९ ॥
इति स्थानेषु सर्वेषु ज्ञात्वा शल्यं समुद्धरेत् ॥
ततोऽपहृतशल्यस्य घृतेन परिषेचनम् ॥ ७० ॥
कर्तव्यं हस्तिनस्तस्य सलिले चावगाहनम् ॥
अशुद्धे शोधनं चापि शुद्धे संरोपणं भवेत् ॥ ७१ ॥
सवर्णकरणं चापि द्विव्रणीये प्रकीर्तितम् ॥
एवं प्रनष्टे विज्ञानं शल्ये नागस्य कीर्तितम् ॥ ७२ ॥
शल्येनोपहृतं सम्यगेभिर्योगैरुपाचरेत् ॥
.................................र्वं यन्त्रं सिंहमुखं तथा ॥ ७३ ॥
पष्टियन्त्रं कर्कटकं दात्यूहं सर्वकापिकम् ॥
गोधामुखं मकरकं दन्तेरुभय................ ॥ ७४ ॥
...शङ्कुमेकदन्तं च मुष्टिशार्दूलमुष्टिकम् ॥
आकृतिर्यन्त्रयोनिश्च यथावदनुकीर्तिता ॥ ७५ ॥
तस्माद्युक्तं च वचनात्सारूप्यादागमादपि ॥
दर्शनाद्यान्ययन्त्राणां कारयेद्यन्त्रसंभ्रमम् ॥ ७६ ॥

अतः परं प्रवक्ष्यामि मर्माणि मनुजाधिप ॥
मूर्ध्नि चत्वारि मर्माणि सर्वाणि च समन्ततः ॥ ७७ ॥
येषु विद्धो महाराज मुहूर्तं न स जीवति ॥
अण्डकोशे बस्तिशीर्षे शिश्ने च वृषणे तथा ॥ ७८ ॥
विद्धः शरेण हि गजो न जीवेद्येन केनचित् ॥
सद्यः प्राणहरेष्वेव सद्यः प्राणैर्वियुज्यते ॥ ७९ ॥
कालान्तरविनाशेषु विद्धः कालाद्विपद्यते ॥
शोणिते च्याविते स्थानान्नागः प्राणैर्विमुच्यते ॥ ८० ॥
यानि कर्माणि राजेन्द्र मयोद्दिष्टानि दन्तिनाम् ॥
मर्माश्रितेषु सर्वेषु यो भवेत्ताडितो गजः ॥ ८१ ॥
तेषु तेष्वेव शल्येषु विप्रनष्टेषु दन्तिनाम् ॥
तेषामाहरणे पत्राण्यशेषेण निबोध मे ॥ ८२ ॥
त्र्यस्रं तथैकदंष्ट्रं च मुष्टिं शार्दूलमुष्टिकम् ॥
नन्दीमुखं शङ्कुपार्श्वं पत्रं सिंहमुखं तथा ॥ ८३ ॥
पत्रजातिभिरेताभिः शल्यं विनिर्हरेद्बुधः ॥
अङ्गुल्यैवाप्यथैषण्या परिमृश्य नखेन च ॥ ८४ ॥
सम्यक्शल्यं तु विज्ञाय प्रतिकर्म समाचरेत् ॥
वृद्धिपत्रेण शस्त्रेण निकृन्तेद्व्रणमादितः ॥ ८५ ॥
नन्दीमुखेन पत्रेण तेन तच्छल्यमानयेत् ॥
शोणितं पीडयेच्चैव व्रणं वांश्या च शोधयेत् ॥ ८६ ॥
विडङ्गचूर्णसंसृष्टघृतं स्याद्व्रणसेचनम् ॥
आयसेनाग्निवर्णेन समन्ताद्दाहयेद्व्रणम् ॥ ८७ ॥
घृतपानं च दातव्यं वारणस्य महीपते ॥
कङ्कादिकृतपत्रेण सर्वेषामनुपूर्वशः ॥ ८८ ॥
कार्यमुद्धरणं तेषां शल्यानां पृथिवीपते ॥
विकीर्णं साबरेत्कर्णं शङ्कुशीर्षं त्रिकण्टकम् ॥ ८९ ॥
भल्लेन प्रतिविद्धस्य शल्यस्याऽऽनयने हितम् ॥
पूर्वोक्तेन विधानेन सेचनं स्याद्विधीपते ॥ ९० ॥
विद्धो वराहकर्णेन क्षुरप्रेण क्षुरेण वा ॥
मुष्टिपत्रेण सर्वांस्ताः क्षिप्रमेव समानयेत् ॥ ९१ ॥

पीलुशङ्खप्रमथनैः शिखराग्रैस्त्रिकण्टकैः ॥
शल्यैरेभिस्तु विद्धस्य वारणस्य महीपते ॥ ९२ ॥
गोधामुखेन यन्त्रेण सर्वेषामनुपूर्वशः ॥
कार्यमुद्धरणं तेषां शल्यानां पृथिवीपते ॥ ९३ ॥
इति कर्णसांचारकं शृङ्गशीर्षं त्रिकण्टकम् ॥
तालीकमर्धतालीकं तथा वेतसपत्रकम् ॥ ९४ ॥
शल्यजातिभिरेताभिः प्रतिविद्धस्य हस्तिनः ॥
अन्यैस्तु कीर्तितैः शल्यैः कृत्वा चान्वेषणं तथा ॥ ९५ ॥
कर्णभङ्गेन भङ्क्त्वाऽथ कर्णतस्य(?)प्रवर्तयेत् ॥
अकरालं व्रणं कृत्वा विष्कम्भित्वा च तं व्रणम् ॥ ९६ ॥
यन्त्रयित्वा च तं सम्यक्सिद्धार्थः कुशलो भिषक् ॥
यन्त्रं सिंहमुखं नाम तेन तानुद्धरेच्छनैः ॥ ९७ ॥
पूर्वोक्तश्च क्रियायोगः पानप्रक्षणकर्मणि ॥
नाराचं चार्धनाराचं सिंहदंष्ट्रेण निर्हरेत् ॥ ९८ ॥
मुकुलाग्रं च कर्तव्यं मण्डुवक्त्रेण पार्थिव ॥
यन्त्राणां च विभागं च शल्यानां च महीपते ॥ ९९ ॥
कीर्तितास्ते मया सम्यगत ऊर्ध्वं निबोध मे ॥
मर्मकर्माणि चत्वारि पूर्वोक्तानि मयाऽनघ ॥ १०० ॥
तेषु विद्धस्य नागस्य शल्यं सद्विप्रणश्यति ॥
अनिर्गतेषु तं प्राप्य निर्गते न स जीवति ॥ १ ॥
युक्तिभिर्यापनीयाभिस्तस्मात्तमनुवर्तयेत् ॥
अभ्यङ्गालेपनाद्याभिः सिद्धाभिर्व्रणशोधनम् ॥ २ ॥
मस्तकेऽथ शरेणैव विद्धस्यान्येन केनचित् ॥
अनिर्गते निर्गते वा न स जीवति वारणः ॥ ३ ॥
आसने जघने वाऽपि श्लक्ष्णेनाथ खरेण वा ॥
अनिर्गतेषु तद्याप्यं निर्गते न स जीवति ॥ ४ ॥
उपर्यायामभिन्नस्य कोष्ठभिन्नश्च यो भवेत् ॥
शोणितानुगतो भूत्वा स्याद्वातव्याधिरन्तकः ॥ १०५ ॥
कंधरासंधिषु तथा शिरास्नायुषु पार्श्वयोः ॥
विद्धस्यापनयेच्छल्यं मर्माणि परिरक्षयेत् ॥ ६ ॥

अप्राप्तसंधिशल्ये च शल्यनिर्हरणं भवेत् ॥
विशल्यं च व्रणं कृत्वा प्रतिकर्म समाचरेत् ॥ ७ ॥
लम्बितं व्यथितं छिन्नमवकृत्तं च यद्भवेत् ॥
दुर्जातं च व्रणं दृष्ट्वा प्रतिकर्मास्य कारयेत् ॥ ८ ॥
क्षौमसूत्रेण मेधावी सीवनं चास्य कारयेत् ॥
पूर्वोक्ता च क्रिया तस्य कारयेद्व्रणशान्तये ॥ ९ ॥
विद्धः शरेण काकोला·······छिन्नरोहयोः ॥
·················चूर्णैश्च प्रतिचूर्णयेत् ॥ ११० ॥
अथास्य शोफो भवति तेनैव प्रतिलेपयेत् ॥
क्षीरवृक्षकषायेण सर्पिषा चैव धारयेत् ॥ ११ ॥
शुध्यते च व्रणं तस्य क्षिप्रं चैव प्ररोहति ॥
अथ दिग्धेन विद्धस्य वक्ष्यते भेषजक्रमः ॥ १२ ॥
स्व(श्व)पथोर्दिग्धविद्धस्य पूतिमांससमुद्भवः ॥
श्रा(स्रा)वो भवत्यशुद्धश्च भिन्नवर्णश्च जायते ॥ १३ ॥
स तप्तदेहश्च भवेच्छोफशोषश्च जायते ॥
एतानि पूर्वरूपाणि दिग्धविद्धस्य हस्तिनः ॥ १४ ॥
व्रणं तच्छोधयित्वाऽथ संस्कृतेनाथ सर्पिषा ॥
नस्यं तस्य ततो दद्यादगदं चानुपाययेत् ॥ ११५ ॥
शीतप्रदेहं कुर्याच्च तथा सिध्यति पार्थिव ॥
स्तब्धो विवर्णो विःसुप्तो(?)व्रणो यस्य तु हस्तिनः ॥ १६ ॥
स्थापयित्वा युतं स्थाने यन्त्रयित्वा यथाक्रमम् ॥
तन्तुसूत्रपटैर्वाऽपि क्षौमसूत्रेण वा भिषक् ॥ १७ ॥
सुसीवनं व्रणं कृत्वा नागस्यैवं समाचरेत् ॥
मधुव्रणविधानेन प्रतिकुर्याद्भिषग्वरः ॥ १८ ॥
इतीह पृष्टो भगवानङ्गराजेन धीमता ॥
पालकाप्यः क्रियामाह शल्यस्योद्धरणं प्रति ॥ ११९ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचने महापाठे तृतीये शल्यस्थाने शल्योद्धरणो नाम द्वादशोऽध्यायः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः ।

'अथातो विद्रधिचिकित्सितं व्याख्यास्यामः' इति ह स्माऽऽह भगवान्पालकाप्यः ॥

इह भो वातपित्तकफसंनिपातैर्विद्रधयः संभवन्ति । तत्र कटुकषायरूक्षभोजनैर्वातलैः प्रकुप्यत्यनिलः । प्रदुष्टो मांसशोणितमभिप्राप्य शृकणवक्षणप्लीहापकृद्धृदयक्लोमबस्तिमुखमेहनानामन्यतममधिष्ठाय घनीभवति गम्भीरो ग्रन्थिः, तं वातविद्रधिमाचक्ष्महे । तत्र वातविद्रधिरनिमित्तं पच्यते । लिङ्गम्पक्वमुश्रा(स्रा)वं विच्छिन्नं फेनिलमरुणवर्णं रूक्षं स्रवति ॥

यदा तु कटुकाम्लानि पित्तप्रकोपनीयानि भोज्यते नागः, तस्य पित्तं प्रकुपितं विद्रधिमापाद्यति । तत्र पित्तविद्रधिराशु प्रपच्यते । पक्वस्तीव्रो दुर्गन्धिः कुलत्थरससदृशः श्रावो दाहप्रायश्च भवति ॥

यदा तु मधुरं दिवास्वप्नं चोपसेवते, तस्य श्लेष्मा प्रकुपितो विद्रधिमापादयति । स चिरात्पच्यते बहुश्वेतो बहुलसान्द्रपिच्छिलो मेदोमज्जासदृशस्रावो भवति स कफविद्रधिः ॥

संनिपातजे विद्रधौ सर्वरूपदर्शनम् । विशेषतश्च प्लीहश्वासारोचकाश्च भवन्ति । तस्मादचिरोत्थितस्य चिकित्सितं कुर्यात् । स्नेहकल्पोक्तेश्चैनं स्नेहैश्चैवोप(क्र)मेत ॥

तत्र श्लोकौ—

पञ्चाहं सप्तरात्रं वा व्रणं स्नेहैस्तु सेचयेत् ॥
संजातघ्रा(प्रा)णमांसस्य प्रतिपूर्णेषु धातुषु ॥ १ ॥
स्नेहपानोपचारेण स्नेहं चास्मै प्रदापयेत् ॥
शोधनं रोपणं चोक्तं प्रतिव्रणचिकित्सितम् ॥ २ ॥
यथावत्कुशलैर्योज्यं श्रा(स्रा)वणं भेदनं तथा ॥

—:०:—

अथ विद्रधयः प्राह वातपित्तकफात्मकाः ॥ ३ ॥
संनिपाताश्च राजेन्द्र वक्ष्यन्ते तु यथाक्रमम् ॥
रसांस्तु तिक्तकटुकान्कषायान्विषमान्यदा ॥ ४ ॥
शीताम्भिःस्नेहलवणानाहारानपि सेवतः ॥
बृंहितेनाथ विषमं स्वपतः कठिनेन वा ॥ ५ ॥

---

१ ख. दाहश्च । २ क. कण्ठितेन ।

गजस्य कुपितो वायुर्धमनीः संसृ(श्रि)तो यदा ॥
तदाऽस्यान्यतमे देशे प्रपाचयति शोणितम् ॥ ६ ॥
अथास्य रक्तसंसृष्टो जनयत्याशु विद्रधिम् ॥
मन्यादेशे च कक्षायां तथा गात्रापरेषु च ॥ ७ ॥
जघनाभ्यन्तरे कोशे स्तनास्थाने च भूपते ॥
नाभौ *चलेषु देशेषु तथाऽन्येष्वपि दन्तिनः ॥ ८ ॥
प्रदेशेषु नरश्रेष्ठ सर्वव्यापी प्रभञ्जनः ॥
जायते स्व(श्व)यथुस्तेन सविदाहः सवेदनः ॥ ९ ॥

—:○:—

किंचिद्विवर्णो गम्भीरः संप्रलुप्तश्च भक्ष्यते ॥
अतः परं सम्यगस्य वारणस्य महीपते ॥ १० ॥
प्रदुष्टश्चैव लक्ष्येत अप्रदुष्टश्च लक्ष्यते ॥
मन्दकोपस्तथाऽऽयामकठिनो नद्ध एव च ॥ ११ ॥
मन्दं विक्षिपते देहं याति कण्डूयतः शमम् ॥
भवेत्तस्य गतिः सूक्ष्मा सदाहा सपरिस्रवा ॥ १२ ॥
उष्णे शान्तिं स लभते शीतेन च विवर्धते ॥
इति वातसमुत्थाया लक्षणं संप्रकीर्तितम् ॥ १३ ॥

—;○:—

उष्णादत्यर्थलवणात्तथाऽम्लरससेवनात् ॥
संरम्भोद्धर्मसंतापादध्वनो गमनेन वा ॥ १४ ॥
एवं प्रकुपितं पित्तं धमनीः प्रतिपद्यते ॥
आक्षिप्तं वायुमाक्षिप्तं देहे समुपलीयते ॥ १५ ॥
लीनं स्थानाच्च्युतं चास्य श्वयथुं जनयेद्भृशम् ॥
तेन ज्वरश्च तापश्च तीव्रा तृष्णा च जायते ॥ १६ ॥
दह्यते चाग्निनेवास्य स देशस्तुद्यतेऽपि च ॥
हारिद्रो हारितो वाऽथ स देशः संप्रकाशते ॥ १७ ॥
पाकं चान्वेति सहसा तदेवान्तकरं तथा ॥
सुवर्णसदृशश्चास्य ततः श्रा(स्रा)वः प्रवर्तते ॥ १८ ॥

* 'च तेषु' इति पाठो भवेत् ।

१ क. °घन्याम्य° । २ क. स्थनास्थाने । ३ ख. वलेषु । ४ क. °व्यापिप्रभञ्जनम् ॥ जा° । ५ क. लक्षेते अवदुष्टश्च लक्षते । ६ ख. °म्भावर्मसंपाताद° । ७ क. °पचीय° । ८ ख. कृष्णा ।

जानीयाल्लक्षणैरेभिर्विद्रधिं पित्तसंभवाम् ॥

—:०:—

चतुर्विधमथाऽऽहारं भोज्यते मधुरं यदा ॥ १९ ॥
अप्रदानप्रदानेन शीतलं वा निषेवते ॥
अव्यायामदिवास्वप्नाद्विज्वलादशनादिह ॥ २० ॥
तस्यैवं वर्तमानस्य श्लेष्मा चाऽऽशु प्रकुप्यति ॥
तमादाय तदा वायुरस्थीन्याविश्य दन्तिनः ॥ २१ ॥
शोफं संजनयत्याशु तस्य रूपाणि मे शृणु ॥
पृथुलः श्याववर्णाभो नीलो वा स्वल्पवेदनः ॥ २२ ॥
विकसंश्च स विज्ञेयो बहुश्लेष्माऽल्पमारुतः ॥
व्याधिमेवंविधैर्लिङ्गैर्जानीयाच्छ्लेष्मविद्रधिम् ॥ २३ ॥

—:०:—

अथ त्रयाणां दोषाणां यो विरोधीनि सेवते ॥
कुक्षी(क्षौ) तस्योपजायन्ते दोषा वातादयस्त्रयः ॥ २४ ॥
यदा विरस्यमानस्तु वायुर्वातवहाः शिराः ॥
दूषयेच्चापि श्लेष्माणं पित्तं रक्तं तथैव च ॥ २५ ॥
एकीभूतास्ततो राजन्विद्रधिं जनयन्ति ते ॥
अथास्य जायते दाहः स्रवत्यर्थं सवेदनः ॥ २६ ॥
स तस्य दोषबाहुल्याद्देहो दग्ध इवाग्निना ॥
दिवा स दृश्यते रक्तो रात्रौ रसमवाप्नुयात् ॥ २७ ॥
मञ्जिष्ठासदृशाः स्फोटाः पच्यन्ते मांसपाकतः ॥
दाहवन्तो विदीर्णास्ते जनयन्ति समन्ततः ॥ २८ ॥
दृष्टा(ष्टाः) प्रोणहरा राजन्नानावर्णोष्मणा युताः ॥
ततो नाभिलषेदन्नं तृष्णाज्वरसमन्वितः ॥ २९ ॥
अतीसारस्तथा कासः श्वासश्चैवोपजायते ॥
एवंविधाः संनिपाताद्विद्रधिः(धीः) समवाप्नुयात् ॥ ३० ॥
तासां तु प्रथमं कुर्यादनुरूपं क्रियापथम् ॥
स्नेहपानमथाभ्यङ्गं निरूहमनुवासनम् ॥ ३१ ॥
विश्रा(स्रा)वणं वेधनं च शीतलं परिषेचनम् ॥
विलापनं शोधनं च दद्याद्रोपणमेव च ॥ ३२ ॥

---

१ क. शरा । २ क. प्राणहरो । ३ क. युतः । ४ क. °द्राधिं स° ।

स चेद्यदि विदह्येत कुर्यादभ्य(भि)मुखं भिषक् ॥
अथानुपूर्वशास्त्रोक्तं कुर्याद्व्रणचिकित्सितम् ॥ ३३ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने
विद्रधिरोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## अथ चतुर्दशोऽध्यायः ।

---

अथ खलु भगवन्तं भार्गवर्ष्याश्रमपदं जपनियमशुश्रूषान्वितं शिष्यगणपरिवृतं पालकाप्यमभिवाद्याभिगम्य संमान्याब्रवीद्राजा रोमपादोऽङ्गाधिपतिः— ' भगवन्य इमे व्रणा अशनिप्रत्यया नानास्रावलिङ्गवेदनाबहुला गतिमन्तो, नाडीव्रणाः संभवन्ति । तेषां साध्यासाध्यलक्षणं साधनं च निरवशेषेण व्याख्यातुमर्हसि ' ॥

स एव भगवानङ्गेन प्रश्नमुक्तः प्रोवाच पालकाप्यः—'वत्स रोमपाद, वारणानां द्वौ व्रणौ भवतः—शारीर आगन्तुश्च । तयोः शारीरं वातपित्तकफशोणितसंनिपातात्मकं विद्यात् । आगन्तुं काष्ठपतनाश्मप्राजनवधबन्धपीडनाग्निविषनिमित्तम् ॥

तत्राऽऽगन्तोर्व्रणस्य तत्क्षणमेवोष्मणः प्रशान्त्यर्थं सद्यःकृतविहिताः शीतप्रायाः क्रिया विहिताः, व्रणस्य रोपणार्थं च यथा मधु घृतं पय इति ॥

अतः परं दोषविशेषाः शारीरा भवन्ति । तत्राऽऽहाररसवैषम्यात्सात्म्यद्विपर्ययात्कालप्रकर्षाच्चागन्तुर्व्रणो वातपित्तकफानामन्यतमेनाभिभूयते । तस्य लिङ्गप्रदर्शनं पृथक्त्वेनोपदेक्ष्यामः ॥

तत्र श्लोकाः—

रूक्षः परुषवर्णाभः शिराभिः संहतः खरः ।
गम्भीरानुगतश्चैव विज्ञेयो वातिको व्रणः ॥
पैत्तिको दाहबहुलो व्रणः कुणपगन्धिकः ।
हरिद्धारिद्रवर्णाभस्त्वङ्मांसस्नायुशातनः ॥
सान्द्रः श्वेतो मृदुश्चैव श्लैष्मिको मन्दवेदनः ।
महापर्यन्तमूलश्च कण्डूमांश्चैव यो भवेत् ॥
समस्तैर्लक्षणैरेभिर्वातपित्तकफात्मकैः ।
संनिपातात्मकं विद्याद्व्रणं व्रणविभागवित् ॥

---

१ ख. निर्विशेषेण । २ क. °गतः ॥ अ° ।

अतः परं व्रणावस्थान्तरहेतून्वक्ष्यामः—क्रियाविपर्ययादुत्तानशयमवधबन्धप्रतिहस्त्यभिघातपतनाध्वगमनाद्वैद्योपरोधाच्च ये द्विपानयो व्रणाः संभवन्ति। इह खलु भो नागानां यो व्रणो मयूरग्रीवाभश्चन्द्रकी समन्ततोऽभिकठिनः, तमसाध्यं विद्यात्। मत्स्यगन्धिः पिच्छिलः, तमसाध्यं विद्यात्। अथवा यस्य नागस्य कृष्णः परिशुष्को विगन्धो व्रणः, तमसाध्यं विद्यात्। कोष्ठान्तर्गतः परिश्रा(स्रा)वी प्रवृद्धश्चापि दुर्गन्धः, तमसाध्यं विद्यात्। आ(औ)दुम्बरमुखः शोणितपरिश्रा(स्रा)वी व्रणः कठिनः, तमसाध्यं विद्यात्। वल्मीकसंस्थानः कृमियुक्तो बहुच्छिद्रः शोणितप्रस्रावः, तमसाध्यं विद्यात्। बिम्बोष्ठ उन्नतमध्यः कृष्णपर्यन्तः कठिनो व्रणो दुर्गन्धश्चेति तमसाध्यं विद्यात्। मर्माभिघातशोणितपरिश्रा(स्रा)वी जलयन्त्रवत्, तमसाध्यं विद्यात्। पूयशोणितपरिस्रावी व्रणः पिच्छिलो दुर्गन्धश्चेति तमसाध्यं विद्यात्। मांसावगाढोऽस्थिभागाश्रित आड(औदु)म्बरमुखः, तमसाध्यं विद्यात्। सिरानुगतः परिस्रावी पिच्छिल आध्मातो व्रणः, तमसाध्यं विद्यात्। अथ कठिनोष्ठः सवेदनः सशोफः, तमसाध्यं विद्यात्॥

तत्र श्लोकः—

निर्गन्धो ह्यपरिस्रावी पद्मपत्रप्रभो व्रणः।  
निर्वेदनस्तथोत्तानो निर्दोष इति तं विदुः॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने  
व्रणचिकित्सितं नाम चतुर्दशोऽध्यायः॥ १४॥

---

## अथ पञ्चदशोऽध्यायः।

---

अत ऊर्ध्वं नाडीव्रणसमुत्थानचिकित्सितं व्याख्यास्यामः–इति ह स्माऽऽह भगवान्पालकाप्यः—अथ भोः खलु वारणानां वातपित्तकफसंनिपाताभिघातैः पञ्चविधा नाड्यो भवन्ति॥

यदा तु शल्यं प्रविशत्यन्तर्देहे वारणानां वातपित्तकफादिभिर्दोषैर्दुष्टैर्मांसशोणितं भूयः स्वभागानुगतं कालप्राप्तो न निवार्यते शस्त्रैरन्तर्देहे ततः पूयबहुत्वात्समुदीर्यते। ततः संनिरुद्धे मार्गे उन्मार्गेण गच्छति। ततो धातूनभ्यन्तराश्रितान्दूषयित्वा तद्वर्त्मगमनाद्गतिरुच्यत इति। अजस्रं यतः स्रवति पूयं पिच्छिलं विवर्णं नाडीवत्। तस्मान्नाडीमभिनिर्दिशेदिति॥

---

१ क. °दुत्थान°।

गन्धाः स्रावाश्च वर्णाश्च व्रणानां ये प्रकीर्तिताः ।
वातादिदोषप्राप्तानां नाडीष्वपि हि तान्विदुः ॥

इति नाडी पञ्चविधाऽऽख्याता ॥

तत्र श्लोकः—

नाव्रणा जायते नाडी व्रणादेवोपजायते ।
प्रमादाद्वाऽपि वृद्धा सा कृच्छ्रसाध्या ध्रुवं भवेत् ॥

अत ऊर्ध्वं येषु भागेषु व्रणा नाड्यो वा साध्याः, तान्व्याख्यास्यामः । तत्र दन्तवेष्टास्थिसंधिकक्षानुगता नखनयनमर्मतलमोहविष्कापस्कराष्ठीव्यपलि(त)हस्तनस्रान्तरप्रत्यङ्गप्रतीकाशकुक्षपङ्गुलिमण्डूकीवक्त्रसक्थिसकुटिकान्तरापरिक्षोभजवैभागोत्कृष्टावग्रहे वंशरन्ध्राण्डकोशगात्रसंदानक्षपभागस्रोतोन्तरतालुनाभिमेढ्रकर्णतलसंधितलवातकुम्भत्र्यपस्थिजघनगुह(द)भागेषु चेति ॥

तत्र श्लोकः—

भागेष्वेतेषु या नाड्यो गम्भीरानुगताश्च याः ।
तासु सम्यक्प्रयुक्ताऽपि क्रिया दुःखेन सिध्यति ॥

अथ या नाडी (?) तिर्यग्गता परंपरागता मण्डलावर्ता कुटिला अनुगता (*बहुप्रदेशानुगता दन्तवेशे(ष्टे)ऽनुगता अस्थिसंधिगता नेत्रानुगताश्च भवन्त्येता या नाड्यः, तासु सिद्धिर्न भवति । त्वचमनुगता) अधोमुखा या नाड्यः साध्या भवन्ति ताः ॥

तत्र श्लोकौ—

अनुनीय भिषक् सम्यक् परिमृश्य च भागशः ।
छिन्द्यात्तु नाडीं शस्त्रेण अनुलोमं प्रयत्नतः ॥
शस्त्रमेव तु भैषज्यं ये शस्त्रकुशला नराः ।
उत्तानो हि व्रणो राजन्क्षिप्रमेव प्ररोहति ॥

अथाङ्गराजः पुनरेव पप्रच्छ पालकाप्यम्—'भगवन्यत्र शस्त्रपथो नास्ति नास्ति क्षारपथोऽपि वा, तत्र वारणानां नाडीव्रणचिकित्सितं कथं कर्तव्यम् ॥

ततः प्रोवाच भगवान्पालकाप्यः—इह खलु यदा वैद्यः शस्त्राग्निक्षारकर्मक्रियासु विशेषं नोपलभते, तदा त्रिकटुकहरिद्रालाङ्गलकीदन्ती(†समभागानि पिष्ट्वा नाडीव्रणपूरणं दद्यात् । गृञ्जीकटुकरोहिणीगवेधुकार्कमूलविडङ्गसर्षपा-

*धनुराकारमध्यस्थः पाठो नास्ति खपुस्तके । †धनुराकारमध्यस्थो नास्ति पाठः कपुस्तके ।

१ क. °न्तचेष्टा° । २ क. °वनोत्कृ° । ३ क. °मृष्य च ।

न्गोमूत्रपिष्टानातपशुष्का गुलिका नाडीव्रणदोषप्रशमनीं कुर्यात् । निम्बार्कपूतीकरञ्जकरवीरपत्रतिलक्षारलवणैः समभागैः पिष्टां गुलिकां नाडीव्रणविशुद्धयर्थमप्रमत्तो भिषग्दद्यात् । कुष्ठतगरहरिद्राचित्रकसैन्धवतिलकुलित्थक्षारान्समभागान्पिष्ट्वाऽश्वमूत्रेण गुलिकाः कार्याः । आतपशुष्का नाडीव्रणलेपनमुत्तमं दद्यात् । सैन्धवलवणकिण्वदन्त्यतिविषाचित्रकमूलोत्तमकरणास्तिलक्षाराः समभागाः पिष्ट्वा, आतपशुष्का नाडीव्रणानां सपूयानां शोधनं दद्यात् । स्वर्णक्षीरातगरविडङ्गमहौषधशुकनासादन्ती)देवदारुसैन्धवलवणं समभागं पिष्ट्वा गुटिकामातपशुष्कां नाडीव्रणशोधनं दद्यात् । ग्रन्थिर्यस्य भवति पक्वः सपूयः पिच्छिलः, तच्छोधनमिदम् । हस्तिलिण्डरसं किण्वलवणं चाऽऽलेपनमप्यग्रं प्रदद्यात् । सर्षपचित्रकदन्तीसैन्धवमिति । स्नुहीक्षीरपिष्टं कृत्वा दुष्टव्रणशोधनं दद्यात् । चित्रकनागदन्तीयवक्षारपिष्टं दुष्टव्रणचिकित्सितमिति । पाठामधुरसादन्तीमधूकानि सैन्धवलवणसंयुक्तं दुष्टव्रणशोधनं दद्यात् । दन्तीशुकनासार्कमूलं सैन्धवलवणसंयुक्तं दुष्टव्रणशोधनं दद्यात् । चित्रकसर्षपतेजोवतीदन्तीश्वेतालवणसंयुक्तं प्रदुष्टव्रणलेपनं दद्यात् । हरिद्रादारुहरिद्राशुकनासादन्तीकटुरोहिणीबिल्वसैन्धवलवणसंयुक्तं समभागपिष्टं व्रणशोधनं दद्यात् । पाठादन्त्यतिविषाविषघ्नादेवदारुयवक्षारसयुक्तं व्रणशोधनं दद्यात् । पिचुमन्दनक्तमालपत्राणि पिष्ट्वा कांस्यनीलयुक्तं व्रणरोपणं दद्यात् । मुष्ककाक्षीवतिलकुलित्थक्षारसर्षपयुक्तं क्षिप्ररोपणं घृतसंयुक्तं दुष्टव्रणलेपनमुत्तमं दद्यात् ॥

तत्र साध्यानां शस्त्रकर्मोपक्रमविशेषाननुव्याख्यास्यामः ॥

अथ भिषग्यन्त्राध्यायोक्तेन विधिना सुयन्त्रितं वारणमभिविश्वास्याऽऽशृ(श्रि)त्यस्तम्भानुगतं गतिमन्तं स्वल्पमुखं च नाडीव्रणमेषण्या च विदित्वा हृद्दिपत्रेण शस्त्रेणानुलोमं पूयप्रतिहरणार्थं छेद्यं कुर्यात् । ततश्चात्र किण्वसैन्धवक्षौद्रसर्पिर्यवक्षारैः श्लक्ष्णपिष्टैः क्षौमं वस्त्रं प्रलिप्य वर्तिं प्रणिदध्यात् । अथार्कक्षीरपलाशलाङ्गलीश्यामात्रृ(त्रि)वृद्दन्तीचित्रकयवक्षारनिम्बपत्राणि स्नुहीक्षीरस्वर्जिकाहरितालपिप्पलीमूलक्षवकशङ्खिन्यर्कक्षीरयुक्तं कल्कं शोधनं दद्यात् । तर्कार्यारग्वधपटोलशङ्खिन्यश्वगन्धानक्तमालमधुकजीवकाङ्कोल्लखदिरवनकर्पासीहरिद्रासुरसासप्तपर्णीनिम्बकरवीरकुटजास्फोटारोहिणीक्षीरिण्यामलकीः क्वाथयित्वा तेन नाडीं रोपयेत् । शङ्खिनीचित्रकतेजोवतीत्रृ(त्रि)वृद्भीवेरदन्तीकुष्ठकटुकरोहिणीस्नुहीसुवर्णक्षीर्यर्कक्षीरे सिद्धं सर्पिः पुराणमुपदिश्यते शोधनार्थम् । बृहत्यश्वगन्धाजशृ-

---

१ क. °क्षारासं° । २ क. °कुक्षिति° । ३ क. घृतसंसृष्टं । ४ क. °श्वास्य सृत्य । ५ ख. कल्कशोधनं ।

हरिद्रासर्षपपाठाचित्रकपिप्पलीमूलमूर्वाकोशातकीकटुकाकाकाण्डत्रपुसीसमदनफलानि च गवां मूत्रेण पी(पे)षयित्वा गवां मूत्रेण तैलं पचेत् । ततः पारपक्केन नाडीः शोधयेत् । अथ जीवन्त्यारग्वधगोजीमुष्ककटुतुम्बकमञ्जिष्ठाक्षीरवृक्षमवालैः श्लक्ष्णपिष्टैर्वर्तिरोहणमुपदध्यात् । शल्लक्यश्वकर्णमुष्ककाश्मन्तककरवीरारग्वधादिवृक्षाणां त्वक्क्वाथयित्वा रोपणार्थं कषायमेतैरेवौषधैर्जीवन्त्यारग्वधादिभिः सर्पिस्तैले कषायगर्भे रोपणार्थं विपाचयेत् ॥

अथातोऽग्निकर्म व्याख्यास्यामः ।

नाडीषु श्रीवेष्टकमधूच्छिष्टगुग्गुलुमेदोभिर्वर्तिवदनुवृत्तां गुलिकां कुर्यात् । यावद्दाहस्य सोष्मणः प्रवेगोपशमः स्यादिति । अतो द्विव्रणीयोपचारः ॥

(* इति शस्त्रकर्माग्नि† ...... ...... ...... ।

......कथयिष्यामः । मर्मोपचारान्व्याख्यास्यामः ॥ )

अथ चेच्छस्त्राग्निकर्मणार्त्तमार्गः( ? )स्यात्तत्र नाडीदोषनिर्हरणार्थं भेषजविधिमनुव्याख्यास्यामः । यवतगरपिचुमन्दपूतीकरञ्जकुष्ठैलामलककरवीरार्कपत्राणि तिलकुतिलक्षारसंपुक्तान्यश्वमूत्रेण पिष्ट्वा गुलिकाः कृत्वाऽर्कक्षीरसंतप्तनाड्यां निदध्यान्नाडीदोषनिर्हरणार्थम् । अथवाऽञ्जनतगरकुष्ठहरितालमनःशिलाकटुरोहिण्यश्वगन्धालाङ्गलीसौराष्ट्रीरोचनासुरसावराचित्रकबिल्वसर्षपखदिरसारगवाक्षीदन्तीविडङ्गान्यर्कशोभाञ्जनकमूलानि च तिलक्षारेण पिष्ट्वा गुलिकाः कारयेत् । ता नाड्या(ड्यां) निदध्यादर्कसंतप्तनाडीदोषनिर्हरणार्थं चेति ॥

अत ऊर्ध्वं क्षारकर्मम(र्मा)नुव्याख्यास्यामः ॥

मुष्ककपलाशतिनिशसर्जारग्वधकरञ्जचिरिबिल्वशिग्रुककुतिलस्फूर्जकपाटलारिमेदपारिभद्रककरवीरापामार्गाश्वगन्धावरार्जुनेङ्गुदीकुटजतिलकतिलसौगन्धिकावल्गुजकटुकतुम्बीकूष्माण्डीकाकजङ्घाकोशातकीवेतसबिल्वमाचाचलसप्तपर्णकृतमालहरिद्रानीपयवनानि चेत्येवं संभृत्य संभारं काण्डशः कल्पयित्वाऽऽदित्यशोषितमौषधच्छुष्कं दाहयेद्विविक्तदेशे त्वतृणभूमिभागे।ततो भस्म समादाय महाभाजनस्थं पुनः श्रा(स्रा)वयेदजाविगामहिष्यश्वाश्वतरखरोष्ट्राणां मूत्रैः । ततः सुपरिश्रु(स्रु)तं तैलमायसे कुम्भे शनैर्मृद्वग्निना पचेत् ।तत्राऽऽवपेल्लाङ्गलिकीदन्तीचित्रकपिप्पलीमूलतीक्ष्णगन्धाश्वगन्धापलमरिचशृङ्गवेरस्वर्जिकायवक्षारविडसैन्धवसूक्ष्मार्कक्षीराणि शनैर्दर्व्या घट्टयेद्यावाम्भःशर्करास्रग्धसान्द्रश्लक्ष्णमथ पाको निवर्तते । ततो वैश्वानरपूजां कृत्वा कृष्णायसे निर्मले भाजने स्थापयेत्सपि-

* धनुश्चिह्नान्तरगतः पाठस्तुल्यो द्विपुस्तके। † पुस्तकद्वयेऽपि त्रुटिचिह्नं न वर्तते ॥

१ क. °र्करसं तस° । २ क. कृष्णावमे । ३ क. भोजने ।

धाने त्र्यहं सप्ताहं वा । ततश्च प्रत्यहनि(?) शिरःस्नातो वैद्योऽहतवासा ब्राह्मणान्स्वस्ति वाच्य ततः शस्त्रेण संशोध्य नाडीमुखं तीक्ष्णेन रुधिरपूयपरिस्रावान्वासोभिरपनीय ततः सूक्ष्मासु गतिमतीषु शलाकां क्षारेण प्रलिप्य क्षारबलं चावेक्ष्य निपातयेत् ॥

अथवाऽऽर्द्रां वर्तिं गुलिकां वा कृत्वा निपातयेत् । पक्वजाम्बवसंकाशां गतिमवेक्ष्य क्षारमथ निवर्तयेत् । अथ मोहात्प्रमादाद्वाऽतिदग्धं वेपथुश्वसनजृम्भणप्रमोहशोषदाहज्वरशो(?)णितातीवातिप्रवृत्ति(?)तमेवमवस्थमभिसमीक्ष्य धान्याम्लदधिमस्तुसु(शु)क्तसौवीरकाणामन्यतमेन सेचयेत् ॥

अथवा दध्यम्लबदरोत्क्लेदमातुलुङ्गरसानामन्यतमेन सेचयेत् । दाडिमतिन्तिडीकाम्रपेशीश्च कृष्णतिलसंयुक्तं कल्कं शुक्ते(क्ते)न पी(पे)पयित्वा घृताक्तमालेपनं दद्यात् । क्षीरदधिसर्पिर्मेदोवसाभिश्च सततमनुलिम्पेत् । शस्त्राग्निप्रणिधानोक्तविधिरनुष्ठेयः ॥

अथारिमेदार्जुनकदम्बरोधारग्वधक्षीरिकासोमवल्कस्यन्दनमेषशृङ्गीधवशिरीषशालाजकर्णबदर्यङ्कोटपलाशवकुलधातक्यरिमेदान्संहृत्याष्टगुणे ह्यम्भसि क्वाथयित्वा पादावशिष्टमवतार्य श्रा(स्रा)वयित्वा तेन रसेन तैलद्रोणं पाचयेत् । पच्यमाने चात्र गिरिकर्णिकाश्वगन्धापाठातिल्वकमालत्यलाबुशिंशपानागदन्तीमूर्वाशुकनासातेजस्विनीनां मूलानि दृषदि पेषयित्वा प्रत्येकतश्चैनं बिल्वप्रमाणं समावपेत् । सिद्धमपहृत्य भूयो गुडपलशतं पिप्पलीचूर्णप्रस्थेन पुनरप्यधिश्रयेत् । तत्सिद्धमवतार्य सुसंस्कृतं स्नेहविधिप्रोक्तेन विधिना पाययेत् । न्यग्रोधोदुम्बराश्वत्थमधूककदम्बधवकदरमहाजम्बूपलाशप्लक्षश्रीपर्णीमेषशृङ्गीपूतीकभिपक्र्वजकर्णककुभानां त्वचः समाहृत्य वृक्षादन्यश्वगन्धावर्षाभूमोरटाहरिद्राद्वयशृगालविन्नाभद्रोदुम्बरीस्रुवहानां मूलैः सह निष्क्वाथयेत् । क्वाथावशेषेणानेन तैलं विपाचयेत् । तत्र च दारुहरिद्राहरेणुकैलाप्रियङ्गुमञ्जिष्ठा चेति । तत्सिद्धमपहृत्य स्नेहपानोक्तेन विधिना पाययेत् । ततोऽस्य नाडी समाधिमुपगच्छति ।

न्यग्रोधोदुम्बराश्वत्थप्लक्षमधूकजम्बूपलाशाशनवेतसखिरबिल्वकदम्बश्रीपर्ण्य-जकर्णयवा मेषशृङ्गी शिरीष इत्येषामष्टादशानां त्वक् च मूलानि समाहृत्य चतुर्षु तोयकुम्भेषु क्वाथयेत् । अर्धावशिष्टमवतारयेत् । ततः प्रातरुत्थितमप्रसेतवन्तं (?) वारणं पाययेदर्धप्रस्थं कुडवं वा । यावद्वा स्वपिति नागस्तावद्दद्यान्नाडीव्रणविशुद्ध्यर्थम् । लाङ्गलीचित्रककुटजकरवीरमातुलुङ्गपत्रैः सपञ्चलवण-

१ क. मुखं पि° ।

हरिद्रायष्टीमधुकं चेति, आन्तरिक्षोदकसंयुक्तैस्तैलं पाचयेत् । ततोऽस्य बस्तिनेत्रेण पिचुनाऽपि व्रणनाड्यां तैलमिदं दद्यान्नाडीव्रणविशुद्ध्यर्थम् । यदि हृदयगता नाडी, अन्यं वा गूढप्रदेशमुपगता ततोऽस्य तैलपानाभ्यङ्गेन च नाडी प्रशान्तिमुपगच्छति ॥

मुद्गो(द्गौ)दनं घृतसंयुक्तं दद्यात् । प्रवालानि च हरितमृदूनि क्रमशो मत्स्यण्डिकागर्भाणि दद्यात् ॥

तत्र श्लोकः—

यथोक्तेनोपचारेण यस्तु प्रक्रमते व्रणान् ।
आगन्तुर्दोषजो वाऽपि तस्य सिद्धिर्नियच्छति ॥

इति श्रीपालकाप्ये गजायुर्वेदे महाप्रवचने महापाठे तृतीये शल्यस्थाने नाडीव्रणचिकित्सितं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

## अथ षोडशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
कुतः शिराः संभवन्ति केषु देशेष्ववस्थिताः ॥ १ ॥
कति वातवहा विद्वन्कति पित्तवहाः शिराः ॥
श्लेष्माणं कति धर्मज्ञ रुधिरं कति वा सिराः ॥ २ ॥
श्वे(स्वे)दं मदं वा शुक्रं वा का वहन्ति द्विजोत्तम ॥
का मांसमस्थि मेदो वा मज्जानं वा वहन्ति काः ॥ ३ ॥
काभिरास्वादनं कुर्यात्काभिर्वा संप्रहृष्यति ॥
सिराणां विचयं कृत्स्नं यथावद्वक्तुमर्हसि ॥ ४ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यो महामुनिः ॥
विस्तरेण यथातत्त्वं सिराविचयमब्रवीत् ॥ ५ ॥
गर्भस्य हृदयं पूर्वं सह प्राणेन वर्धते ॥
ततः सिराः संभवन्ति सूर्यादिव गभस्तयः ॥ ६ ॥
सर्वाः शरीरसंसृष्टास्तिर्यगूर्ध्वमधस्तथा ॥
सर्वाश्चेष्टाः प्रकुर्वन्ति सिरा वै यत्र वर्धिते ॥ ७ ॥
तस्मात्तु मातृके द्वेऽप्ये(?) हृदयात्कण्ठमाश्रिते ॥
जिह्वामूले निबद्धे द्वे ये रसास्वादकारणम् ॥ ८ ॥

---

१ क. प्राणैर्न । २ क. °मथापि वा ॥ स° ।

ततः कण्ठे च मध्ये च धमन्योऽष्टौ समाश्रिताः ॥
कर्णयोस्तु तथा विद्याद्याभिस्तु परिजीवति ॥ ९ ॥
ततः शिरा बस्तिकोशमुरो वालं गुदस्तथा ॥
मातृकाः प्राप्नुवन्त्येतास्तलगात्रापरं तथा ॥ १० ॥
एवमङ्गेषु सर्वेषु मातृका देहगोचराः ॥
काये शिराः सप्तशतं विभागाः शृणु पार्थिव ॥ ११ ॥
गुदं मेढ्रमथो नाभिं तत्र बस्तिं समाश्रिताः ॥
ताभिः संमूर्छितो वायुर्धमनीः प्रतिपद्यते ॥ १२ ॥
शतार्धमेव ता विद्याच्छिरा वै देहगोचराः ॥
या रसान्प्रविभागेन(ण) वायुमेव वहन्ति ताः ॥ १३ ॥
नाभेस्तु हृदयं यावदपरा परतस्तु या ॥
ताभिः संमूर्छितं पित्तं धमनीः प्रतिपद्यते ॥ १४ ॥
शतार्धमेवं तु शिराः पित्तमेव वहन्ति याः ॥
उरःसंधिशिरोग्रीवं मर्माणि च समन्ततः ॥ १५ ॥
ततः संमूर्छितः श्लेष्मा धमनीः प्रतिपद्यते ॥
विद्धि पञ्चाशदेवैताः शिराः श्लेष्मवहा गजे ॥ १६ ॥
तावन्त्या(न्त्यः) फुप्फुसयकृद्धृदयानां च मध्यतः ॥
या रसानुविभागेन शोणितं संवहन्ति तु ॥ १७ ॥
त्वङ्मांसमध्ये विज्ञेयाः शिरा रसवहाः पृथक् ॥
यथास्थानविभागेन धातूनाप्याययन्ति याः ॥ १८ ॥
मांसमेदोस्थिमज्ज्ञानां शुक्रस्य च नराधिप ॥
एकैकस्याः शतार्धं तु शिरा ज्ञेयाः पृथक्पृथक् ॥ १९ ॥
दोषधातुप्रकर्षेण हर्षेण च बलेन च ॥
मदः संजायते राजन्स्वभावाच्चैव दन्तिनाम् ॥ २० ॥
शतार्धमेव तु शिराः पृथङ्मदवहाः स्मृताः ॥
या रसानुविभागेन कटौ मेढ्रे च संस्थिताः ॥ २१ ॥
समासात्कण्डरा ह्यष्टौ विद्धि गात्रापरे तथा ॥
पश्चात्पुरस्ताच्चैकैकं पादं प्रत्येकमाश्रिताः ॥ २२ ॥
सूक्ष्मो विचारी पुरुषः कटुः शीतश्च मारुतः ॥
उष्णमम्लं द्रवं पित्तं विवर्णं दारुणं भृशम् ॥ २३ ॥

१ क. परिजीवति । २ क. शिरो । ३ क. °च्छिरो वै । ४ क. °भावश्चैव ।

मधुरः शीतवीर्यश्च घनः श्वेतः कफो गुरुः ॥
बलवाल्लँवणाम्लश्च स्निग्धः प्राणविवर्धनः ॥ २४ ॥
आत्मैव योनिर्वातस्य पित्तमाग्नेयमुच्यते ॥
कफं सोमात्मकं विद्यादेतांस्त्रीन्देहसंस्र(श्रि)तान् ॥ २५ ॥
आत्रेयस्तु रसः प्रोक्तो वाशिष्ठं शोणितं भवेत् ॥
काश्यपं तु भवेन्मांसं मेदश्चाप्यथ गौतमम् ॥ २६ ॥
भारद्वाजानि वास्थीनि मज्जा चाप्यथ कौशिकी ॥
जामदग्न्यं भवेच्छुक्रमित्येते सप्त धातवः ॥ २७ ॥
ज्ञेयाः शरीरे तु शिराः स्वेदमेवं वहन्ति याः ॥
व्यायामे च निदाघे च मुखतः श्रा(स्रा)वयन्ति तम् ॥ २८ ॥
यथा प्रस्पन्दते शैलाद्वर्षान्ते तेजसा रविः ॥
एवमेव मुखात्स्वेदं प्रश्र(स्र)वन्ति मतङ्गजाः ॥ २९ ॥
शिराः शतानि सप्तैवं व्याख्यातानि यथातथम् ॥
सहस्राण्यर्धषष्ठानि स्नायूनासंश्च(?) ताः शिराः ॥ ३० ॥
सर्वा वातादिभिर्दोषैः शिरा रक्तेन वाऽन्विताः ॥
वहन्ति कायजान्धातून्निर्दिशेत्सर्वदेहिनाम् ॥ ३१ ॥
आश्रयाच्छोणितादस्य यकृत्तस्य विवर्धते ॥
रक्तदोषात्मिका चैव प्लीही(हा)वृक्कौ च दन्तिनः ॥ ३२ ॥
शोणितस्य तु या धेनुः फुप्फुसं तस्य जायते ॥
असृक्पित्तकफानां तु यत्तेजो मारुतान्वितम् ॥ ३३ ॥
तेनास्य संभवन्त्यत्र पचेव गुदबन्धनम् ॥
शोणिते वर्धमाने तु बलं तेजश्च वर्धते ॥ ३४ ॥
शोणिते क्षीयमाणे तु क्षीयन्ते सर्वधातवः ॥
देहिनां शोणितं विद्धि प्राणायतनमुत्तमम् ॥ ३५ ॥
मात्रया रुधिरं तस्माद्दुष्टमप्यपकर्षयेत् ॥
षण्णां रसानां यत्तेजः कायं पुष्णाति हस्तिनाम् ॥ ३६ ॥
[4]पित्तस्थाने रसस्थानं हस्तिनां संप्रकीर्तितम् ॥
रसः कपोतवर्णाभः पच्यमानो ह्यहाद्भवेत् ॥ ३७ ॥

---

१ क. °व च दन्तिनाम् ॥ व्या° । २ क. °ण्यष्टसार्धानि । ३ क. °वृद्धौ च ।
४ क. पित्तं स्थानरसं स्थानं ।

तृतीये वा चतुर्थे वा पक्ववर्णः स उच्यते ॥
पञ्चमेऽहनि षष्ठे वा किंशुकाभ इति स्मृतः ॥ ३८ ॥
एवं शुक्रं तु नागानां सप्ताहात्परिपच्यते ॥
दोषाणां प्रकृतिं ज्ञात्वा शिराव्यूहविशारदः ॥ ३९ ॥
शस्त्रकर्मणि निष्णातो पृश्चैषां श्रेष्ठ उच्यते ॥
सर्वासां सरितां यद्वत्प्रतिष्ठा वरुणालयः ॥ ४० ॥
तद्वत्सिराणां सर्वासां प्रतिष्ठा हृदयं स्मृतम् ॥
तस्माद्गर्भे शयानस्य व्यक्तं भवति हस्तिनः ॥ ४१ ॥
हृदयं च शिरश्चैव तस्मात्कायो विवर्धते ॥
शरीरविचये पूर्वं मया सम्यक्प्रकीर्त्यते ॥ ४२ ॥
मनोबुद्ध्यन्तरास्थानां त्रिविधः सोऽनुकीर्त्यते ॥
अन्तरात्मा शरीरस्य मुह्यति त्वसृजः क्षयात् ॥ ४३ ॥
मात्रया रुधिरं तस्माद्दुष्टमप्यपकर्षयेत् ॥
तत्र मात्राप्रमाणं तु द्विविधं संप्रवक्ष्यते ॥ ४४ ॥
शरीरमभिविज्ञेयं यथादोषं यथाबलम् ॥
वातजानां तथा प्रोक्तं लिङ्गं तस्माद्विवर्जितम् ॥ ४५ ॥
न विश्रा(स्रा)व्यं महीपाल प्राणवत्स्वपि हस्तिषु ॥
कदाचिद्दोषबाहुल्यात्स्कन्नं नैव प्रवर्तते ॥ ४६ ॥
तत्र मात्राप्रमाणं तु यथावदुपदेक्ष्यते ॥
तस्मान्मात्राप्रमाणाच्च विशेषं संप्रचक्षते ॥ ४७ ॥
तत्र मात्राप्रमाणं तु यथावदुपदेक्ष्यते ॥
सप्तमं भागमाहारात्तस्माद्रक्तं तु मोक्षयेत् ॥ ४८ ॥
सप्तारत्नेर्महीपाल भागेनानेन संमितम् ॥
शेषाणां वारणानां तु श्रा(स्रा)वयेन्मतिमान्भिषक् ॥ ४९ ॥
एवं प्रमाणमुद्दिष्टमतः शृणु महीपते ॥
येषां गजानां वै श्रा(स्रा)व्यमविश्रा(स्रा)व्याश्च ये गजाः ॥५०॥
वातरोगेषु नागानामविश्राव्य भिषग्भवेत् ॥
कृशे हीनेन्द्रिये चैव हृद्रोगे गुल्म एव च ॥ ५१ ॥
तथाऽतिबाले वृद्धे च प्रकृत्या दुर्बले गजे ॥
शोषे च वातप्रकृतावतिवातप्रहान्विते ॥ ५२ ॥

---

१ क. तद्वच्छरीरिणां सर्वप्र° । २ क. शिराश्चैव । ३ रु. मन्ये बु° ।

धातुक्षये पाण्डुरोगे त्वविश्राव्यमसृग्भवेत् ॥
वातव्याधिषु यत्प्रोक्तं तत्कार्यमवसेचनम् ॥ ५३ ॥
हेतुं तु संप्रवक्ष्यामि यस्मात्तत्र विधीयते ॥
वातात्प्राणश्च चेष्टा च सिरा रक्तवहाश्च याः ॥ ५४ ॥
तासां चैव विशेषेण वायुरेव प्रवर्तकः ॥
पञ्चधा धारयत्येष शरीरं नृपसत्तम ॥ ५५ ॥
यस्मात्तस्माद्विशेषेण शरीरमभिवर्धयेत् ॥
अतः परं प्रवक्ष्यामि येषां विश्रा(स्रा)वणं हितम् ॥ ५६ ॥
पादरोगाक्षिरोगेषु मन्यास्तम्भे गलग्रहे ॥
शोफेषु गात्ररोगेषु शीर्षव्याधिषु चोच्यते ॥ ५७ ॥
तथैव दिग्धविद्धे च बालेदष्टे महीपते ॥
सेर्पदष्टे च नागानां विश्रा(स्रा)वणमिहेष्यते ॥ ५८ ॥
स्थिरा ये दोषवन्तश्च ग्रन्थयः संधिमाश्रिताः ॥
अभ्यङ्गैरुपनाहैश्च स्वेदैरुन्मर्दनैश्च ये ॥ ५९ ॥
प्रदेहैः पीडनैश्चैव न प्रशाम्यन्ति दन्तिनाम् ॥
तेषां विश्रावणं कार्यं श्वयथूनां यथाऽधिप ॥ ६० ॥
शरीरमभिविज्ञाय प्रकृतिं सात्म्यमेव च ॥
अपीतवन्तं पूर्वाह्णे ज्ञात्वा सुमनसं गजम् ॥ ६१ ॥
दोषसंचालनार्थाय क्रामयेद्वे धनुःशते ॥
ऊष्मणा चाल्यते यस्मात्तस्मादुष्णेन सेचयेत् ॥ ६२ ॥
सुयन्त्रितमवस्थाप्य वारणं कुशलो भिषक् ॥
यन्त्रोपकरणान्यत्र यथोक्तान्युपकल्पयेत् ॥ ६३ ॥
प्रतिकर्मविधिप्रोक्तं (*शस्त्राग्निप्रणिधौ च यत् ॥
ततः पुण्याहघोषेण स्तम्भे वारणमालितम् ॥ ६४ ॥
हैवनं च यथा प्रोक्तं) कर्मसिद्धिमपीष्यते(?) ॥
कर्तव्यं वारणानां तु यथावदभिनिश्चितम् ॥ ६५ ॥
ततः समालभ्य गंजं........................ ॥
...............चोदकेन......................... ॥ ६६ ॥

---

*धनुश्चिह्नद्वयान्तःस्थो नास्ति पाठः कपुस्तके ।

---

१ क. °लदष्टे । २ क. सर्पदष्टे । ३ क. गेनं । ४ क. °पि स्वादकेन ।

वासयित्वा च शस्त्राणि यथापूर्वमुदाहृतम् ॥
शरीरविषये चैव शिराव्यूहे च हस्तिनाम् ॥ ६७ ॥
अस्थीनि संधयश्चैव मर्माणि च महीपते ॥
विदित्वा विषयं कुर्याच्छिराणामवसेचनम् ॥ ६८ ॥

तत्र शरीरस्थानि सप्त शिराशतानि, संभवन्ति च । तासां दश मातृका नाम यास्तिर्यगूर्ध्वमधश्च सम्यक्प्रतिपन्नाः शरीरं धारयन्ति, रसादींश्च, धातून्, वातपित्तश्लेष्मासु विप्रतिपन्नेष्वन्तःशरीरेषु सोम्याद्धमन्यः, ताः समनुव्याख्यास्यामः । तत्र शरीरप्राग्भागमास्र(श्रि)त्य द्वे तथाऽधस्तिर्यक्प्रतिपन्ने । पश्चात्काये द्वे । एकैकशश्चैव तासां प्रविभागो भवति । शिरःकण्ठनयनहस्तगात्रापरवंशपृष्ठवक्त्रप्रतिमानवस्त्यण्डकोशत्वगित्येतांश्च भागानाश्रित्यावस्थिताः । तासां प्रविभागमनुव्याख्यास्यामः । प्रसारणाकुञ्चनगमनोद्यतानां विभागेन वर्तन्ते चेष्टावत्यः सर्वं शरीरमभिव्याप्यावस्थिता मर्मभागेषु चानुबद्धाः, ता वर्जयेत् ॥

तासां मदवहाः प्रोक्ताः पञ्चाशत्तु नराधिप ॥
कटौ मेढ्रे च संबद्धाः स्ववेध्याः पृथिवीपते ॥ ६९ ॥
इन्द्रियार्थं प्रवृत्ता यास्ताः पञ्चाशत्प्रकीर्तिताः ॥
गन्धरूपरसस्पर्शान्याः प्रपद्यन्ति देहिनाम् ॥ ७० ॥
एताः पार्थिव नागानां विनाशाय भवन्ति तु ॥
तासां विश्रा(स्रा)वणं नित्यं छेदनं चैव गर्हितम् ॥ ७१ ॥
चेष्टावत्यश्च या नागे शिरा रसवहाश्च याः ॥
मेदोवहाः शुक्रवहास्ताः सर्वाः परिवर्जयेत् ॥ ७२ ॥
वायुः (?) पित्तं तथा श्लेष्मा (?) रक्तं चैव वहन्ति याः ॥
तासां विभागं वक्ष्यामि येषु भागेषु चाऽऽस्र(श्रि)ताः ॥ ७३ ॥
तासां विश्रा(स्रा)वणं कार्यं यथादोषं महीपते ॥
समीपस्था तु या यस्य सा दोषं तस्य निर्हरेत् ॥ ७४ ॥
दोषोपचितदेहस्य क्रिया नैव प्रवर्तते ॥
यदि नाऽऽसृ(श्रि)त्य रक्तस्य क्रियते किंचिदौषधम् ॥ ७५ ॥
सुविशुद्धशरीरत्वात्तत्तदर्थाय कल्पते ॥
यथा ह्युष्णाभिसंतप्तः प्राप्य शीतोदकं नरः ॥ ७६ ॥

१ क. °न्तः सश° । २ क. सात्म्याद्ध° । ३ °पृष्ठप्रवक्त्र° ।

सद्यस्त्यजति तं दोषं त्यक्त्वा च सुखमिच्छति ॥
तस्माद्विश्रा(स्रा)वणं कार्यं विधिनाऽनेन हस्तिनाम् ॥ ७७ ॥
यथाविकारं कुर्वीत भोजयेत्तत्तथा द्विपम् ॥
सप्ताहं पञ्चरात्रं वा त्रिरात्रमपि वा पुनः ॥ ७८ ॥
स्निग्धस्वेदोपपन्नस्य समीक्ष्य गुरुलाघवम् ॥
विमृश्य पूर्वं श्वयथुं दोषलिङ्गसमन्वितम् ॥ ७९ ॥
बन्धैर्यथोक्तैः कर्तव्यं यथावदवपीडनम् ॥
तस्य तस्य प्रदेशस्य चेष्टानां संनिवारणम् ॥ ८० ॥
यन्त्रं विधिज्ञं कुर्वीत बन्धेनानेन संयतम् ॥
मोहसंदानभागेषु तथाऽपस्कारयोरपि(?) ॥ ८१ ॥
अष्ठीवयोस्तु भागानां पूर्वसंस्थानमिष्यते ॥
श्लक्ष्णं समाहितं चैव नाभितः षोडशाङ्गुलम् ॥ ८२ ॥
तथा वृश्चिकसंस्थानं शिरस्या(स्य)यं विधीयते ॥
वंशे चोत्तरप्रदे(रदे)शे च समं कर्कटकान्वितम् ॥ ८३ ॥
मन्याभागांसदेशेषु कूर्मसंस्थानमिष्यते ॥
एवं यन्त्रविधिः प्रोक्तो विस्तरेण महीपते ॥ ८४ ॥
एवं बन्धनबद्धस्य विश्रा(स्रा)वणमतः परम् ॥
अनेन क्रमयोगेन(ण) स्थानादुन्नाम्यते(?) शिराः ॥ ८५ ॥
तासां परीक्षा कर्तव्या वैद्यैः सम्यक्प्रपीडने ॥
पाणिना पादयोस्तत्र अङ्गुष्ठेन प्रपीडयेत् ॥ ८६ ॥
विज्ञाय नागं भागज्ञो विध्येत्तु ताः समाहिताः ॥
तत्राऽऽविद्धाः शिराः सम्यक्पार्श्वदेशेऽथवा भवेत् ॥ ८७ ॥
न प्रवर्तते सा सम्यक्तस्या दोषो न शाम्यति ॥
स्तम्भः शोफश्च दाहश्च क्षिप्रमेवोपजायते ॥ ८८ ॥
तस्माद्यथोक्तं कर्तव्यं पुनस्तस्य चिकित्सितम् ॥
अतिविद्धा तु या कष्टदोषमत्यर्थमीरयेत् ॥ ८९ ॥
तस्माद्यन्त्रविधिस्तत्र क्षिप्रमेव स मोक्षयेत् ॥
मुक्तबन्धनमोश्वेवं सलिले त्ववगाहयेत् ॥ ९० ॥

---

१ क. °नागेन । २ क. संयुतम् । ३ क. °ते ॥ ते वंशे चेत्प्रदे° । ४ क. पार्श्वयो° । ५ क. °माम्येवं ।

प्रदेहैः शीतलैश्चैवं प्रदिह्यात्तु पुनः पुनः ॥
सर्पिः क्षीरं च नागाय विधिवत्संप्रदापयेत् ॥ ९१ ॥
शीतांश्च मधुरांश्चैव भावांस्तस्मै प्रदापयेत् ॥
यद्येवं नोपपद्येत क्षिप्रं प्राणैर्विमुच्यते ॥ ९२ ॥
सम्यग्वेधे तु दोषाणां समो वृद्धिर्विपर्ययात् ॥
छव्यस्त्वपि महाराज षट्पूर्वं संप्रकीर्तिताः ॥ ९३ ॥
तासामेकैकशो राजन्प्रमाणं संप्रवक्ष्यते ॥
एका तत्र प्रमाणेन अध्यर्ध(र्धं) यवसंमिताः(ता) ॥ ९४ ॥
प्रथमा तु महीपाल द्वितीया द्वियवा स्मृता ॥
शेषाणामेतदेवाऽऽहुः प्रमाणं मनुजाधिप ॥ ९५ ॥
अध्यर्धाङ्गुलमेवं तु प्रमाणमभिधीयते ॥
श्वयथुस्त्वपि विज्ञेयो दोषलिङ्गैः पृथग्विधैः ॥ ९६ ॥
व्रीहिवक्त्रेण शस्त्रेण विध्येदत्वरया भिषक् ॥
अथ चोत्पलपत्रेण कुशपत्रेण वा पुनः ॥ ९७ ॥
त्र्यङ्गुलं निर्गमं कुर्याद्भागं विज्ञाय तत्त्वतः ॥
बहुलं च चतुश्चैव प्रदेशमभिलक्षयेत् ॥ ९८ ॥
यथोक्तेनोपचारेण विध्येदत्वरया नृप ॥
दोषलिङ्गेन निर्मुक्तं विशुद्धं दोषवर्जितम् ॥ ९९ ॥
प्रमुच्य यन्त्रं विधिना निर्वाणे चावगाहयेत् ॥
निवृत्तं पीतपानीयं भोजयेद्रसभोजनम् ॥ १०० ॥
एष सर्वो विधिः कार्यो भिषजा सिद्धिमिच्छता ॥

—:○:—

अत ऊर्ध्वं शिराणां तु विचयः संप्रवक्ष्यते ॥ १ ॥
येषु देशेषु यं दोषं यथावद्विनिवर्तयेत् ॥
संप्रवक्ष्यामि नागानां तन्मे निगदतः शृणु ॥ २ ॥
अवग्रहस्य चाधस्तात्कुम्भस्योपरि संश्रिताः ॥
विद्धवग्रहयोश्चापि(?) विज्ञेया मध्यमाश्रिताः ॥ ३ ॥

* 'श्चापि' इति भवेत् ॥

१ क. श्वयथुं स्व°। २ क. अङ्गुलं। ३ क. पूर्वो। ४ क. ख. संप्रचक्ष्यते। ५ क. °थाविधि नि°।

विद्धाक्षिकूटयोर्मध्ये ईषिकाग्रे प्रतिष्ठिताः ॥
तथा घाटाप्रदेशे च बिन्दुमध्यं तथैव च ॥ ४ ॥
निर्याणोपरि चाप्यन्याः शङ्खदेशे समाश्रिताः ॥
शिरोरोगेषु नागानामेता वेध्या महीपते ॥ १०५ ॥
तेनैव विधिना बद्ध्वा यथा पूर्वं प्रकीर्तिताः ॥
अक्षिकूटकटश्रो(स्रो)तोमध्ये सम्यग्व्यवस्थिताः ॥ ६ ॥
तथैव तालुकृष्णान्ते मध्ये विध्येदतन्द्रितः ॥
वितानास्यप्रदेशानां मध्ये जिह्वान्तरे तथा ॥ ७ ॥
अपाङ्गदेशस्याधस्ताद्या कनीनिकयोरपि ॥
नेत्ररोगेषु नागानामेता वेध्याः पृथक्शिराः ॥ ८ ॥
एतेनैवोपचारेण सम्यं विज्ञाय तत्त्वतः ॥
यतः स्थानस्य चाधस्ताद्गुह्यभागस्य चोपरि ॥ ९ ॥
विध्येदसंभ्रमाद्वैद्यः शिरामेनां गलग्रहे ॥
तथा सगदयोश्चापि मन्याभागान्तरे तथा ॥ ११० ॥
विध्येदत्वरया वैद्यः कण्ठव्याधिषु हस्तिनः ॥
स्तनान्तरस्य चाधस्तादष्टाङ्गुलसमा स्थिताः ॥ ११ ॥
विध्येत्प्रमाणतो वैद्यस्तथा द्रोणिकसंस्थिताः ॥
नाभिप्रदेशे विज्ञेया ऊर्ध्वादष्टादशाङ्गुला ॥ १२ ॥
शेफे द्रोणीकसंस्थाने सम्यग्ज्ञात्वाऽथ वेधयेत् ॥
नाभिप्रदेशे पार्श्वे च चतुरङ्गुलसंमिताम् ॥ १३ ॥
मध्ये त्वनुसृतां विध्येत्तथैवान्तरस्तनयोः ॥
शुक्रप्रदेशस्याधस्तादण्डकोशादधस्तथा ॥ १४ ॥
विज्ञाय दोषोपचयं यथावदवसेचयेत् ॥
तेनैव क्रमयोगेन(ण) द्रोणीकवदुपाचरेत् ॥ १५ ॥
तथैव मन्ययोश्चापि बहिरन्तश्च संस्थितौ ॥
शिरे(रो) यन्त्रविधानेन *त्वचा पीड्यावसेचयेत् ॥ १६ ॥
अतः संदानभागस्य मध्ये बद्ध्वाऽवसेचयेत् ॥
तेनैव क्रमयोगेन(ण) यथापूर्वमुदाहृतम् ॥ १७ ॥

---

* 'त्वचपीड्या' इति तूचितम् ।

---

१ क. °थाऽऽमग° । २ क. °न्तस्य सं° । ३ क. त्वचपी° ।

अतः पिण्डकयोश्चापि संदानोपरि संस्र(श्रि)तम् ॥
विदित्वा विधिवत्माज्ञो दोषं विद्ध्वाऽवसेचयेत् ॥ १८ ॥
अस्थित्लाङ्गूलवंशस्य कलाभागान्तरे तथा ॥
समं विज्ञाय भागज्ञो मध्ये विध्येच्छिरां नृप ॥ १९ ॥
वंशपक्षासमांसेषु तथैवोत्कृष्टयोरपि ॥
वंशावभागमास्र(श्रि)त्य पर्शुकासंधिसंश्रिताः ॥ १२० ॥
शिरास्तत्रापि विज्ञेया दोषनिर्हरणे नृप ॥
रन्ध्रकक्षाविभागे च यन्त्रं बद्ध्वाऽवसेचयेत् ॥ २१ ॥
आसनान्तादधोभागे ग्रीवामध्यसमाश्रिता ॥
(†मन्ययोर्जवभागस्थां सम्यङ्मध्येऽवसेचयेत् ॥ २२ ॥
अथापस्करभागस्य पादस्यान्तःसमाश्रिताम् ॥ )
गात्ररोगेषु नागानां विध्येत्समवपीड्य ताम् ॥ २३ ॥
अपस्करस्य चाधस्तादष्टाङ्गुलसमाश्रिताम् ॥
दशाङ्गुले चापस्कराद्बद्ध्वाऽपि च विनिर्दिशेत् ॥ २४ ॥
दाहेन सहितं शोफं विज्ञाय कुशलो भिषक् ॥
पूर्वोक्तेनैव विधिना सम्यङ्मत्वाऽवसेचयेत् ॥ १२५ ॥
अन्तर्बहिः पुरस्ताच्च गात्रे मध्यं समाश्रितम् ॥
भांगं विज्ञाय विधिवन्मत्वा रोगं यथाक्रमम् ॥ २६ ॥
व्यधयेद्यन्त्रविधिना सम्यक्कृत्वा च पीडनम् ॥
प्रोहसंदानभागेषु बहिरन्तः समाश्रिताम् ॥ २७ ॥
वामपूर्वेण भागेन संमितां विद्धि पार्थिव ॥
तेनैव विधिना तासां सम्यक्श्रा(स्रा)वणमिष्यते ॥ २८ ॥
विंशतिः कर्मभागानामुपरिष्टान्महीपते ॥
त्र्यङ्गुलं द्व्यङ्गुलं वाऽपि ताः प्रमुच्यावसेचयेत् ॥ २९ ॥
पादरोगेषु नागानामेता वेध्या महीपते ॥
चिक्कयोः पार्श्वदेहस्था बहिरन्तः समाश्रिताः ॥ १३० ॥
व्यधयेदेवमेवैताश्चिक्काभागं विवर्जयेत् ॥
कर्मोपरि तु याः प्रोक्ताः शिर(रा)गात्रबहिः स्थिताः ॥ ३१ ॥

---

† धनुश्चिह्नद्वयान्तःस्थो नास्ति पाठः कपुस्तके ।

---

१ क. भावं । २ क. °हमन्दान° ।

दोषाणामतिवृद्धानां प्रकोपं घ्नन्ति ताः शिराः ॥
एवमेतेषु सर्वेषु श(शि)राः प्रोक्ता महीपते ॥ ३२ ॥
दोषधातुप्रयोगैस्तु तासां विश्रा(स्रा)वणं हितम् ॥
संख्या समासतो ज्ञेया षष्टिस्तु चतुरुत्तरा ॥ ३३ ॥
एवमेतच्छिराजातं यथातदनुपूर्वशः ॥
शिराव्यूहे च यद्राजन्वातादीनां तु लक्षणम् ॥ ३४ ॥
श्वयथुं दोषवन्तं तं नानालिङ्गसमन्वितम् ॥
दृष्ट्वा नागस्य तं विद्याद्विद्रधिं कुशलो भिषक् ॥ १३५ ॥
स्थिरत्वाद्ग्रन्थिबन्धाच्च ग्रन्थिरित्यभिधीयते ॥
तेषामेतेन कल्पेन कार्यं संशमनं भवेत् ॥ ३६ ॥
अथवा दोषशमनादाधिक्यं यस्य लक्ष्यते ॥
तथैव तस्य कर्तव्यं यथाप्रोक्तं चिकित्सितम् ॥ ३७ ॥
शिराणामपबन्धार्थाः स्नायुकूर्चाः प्रकीर्तिताः ॥
अशीतिरेव विज्ञेया विभागस्तासु वक्ष्यते ॥ ३८ ॥
यदेहं(ये देहे) संधयः प्रोक्तास्तेषां तत्र च बन्धनम् ॥
यत्र तत्र च संबद्धाः संधिदेशं समाश्रिताः ॥ ३९ ॥
सर्वेष्वङ्गप्रदेशेषु तस्मात्ताः परिवर्जयेत् ॥
संधिसंधानमप्येतत्षड्विधं संप्रकीर्तितम् ॥ १४० ॥
तन्नास्थ्नामपि संधानं कीर्तितं यच्चतुर्विधम् ॥
शरीरविचये पूर्वं मया सम्यङ्नराधिप ॥ ४१ ॥
मनो मे मुह्यति स्मृत्वा रक्तक्षीणस्य का(क)ष्टताम् ॥
तस्मान्मात्राप्रमाणेन नित्यमेवाभिषेचयेत् ॥ ४२ ॥
यत्र मांसावगाढत्वाच्छिरा नैवोपलभ्यते ॥
स्थिरत्वाच्छ्वयथोश्चैव प्रच्छन्नं तत्र कारयेत् ॥ ४३ ॥
अनन्तरं प्रस्थपित्वा दोषलिङ्गान्वितं नृप ॥
लवणेन सतैलेन कुर्यात्तस्यावसेचनम् ॥ ४४ ॥
प्रच्छन्ने व्यधने चैव तेनासृक् श्र(स्र)वते भृशम् ॥
तत्र प्रक्षालनं कुर्याच्छीतेनैव च वारिणा ॥ १४५ ॥
इक्षुस्तिलोत्पलातलैः प्रदेहं तस्य कारयेत् ॥
समङ्गाधातकीपुष्पैश्चन्दनोशीरपद्मकैः ॥ १४६ ॥

१ क. °प्रकोपैस्तु । २ क. °मध्ये त° । ३ क. °वावसेच° ।

अनेन क्रमयोगेन(ण) सम्यक्संपद्यते सुखी ॥ १४७ ॥
इति श्रीपालकाप्ये गजायुर्वेदे महाप्रवचने महापाठे तृतीये शल्यस्थाने
शिराव्यूहव्यधो नाम षोडशोऽध्यायः ॥ १६ ॥

---

अथ सप्तदशोऽध्यायः ।

---

अङ्गाधिपतिरव्यग्रं पालकाप्यं कृताञ्जलिः ॥
आपृच्छद(द्)न्तचे(वे)ष्टानां शुष्यतानां(?) चिकित्सितम् ॥ १ ॥
किंमूलो दन्तविश्रा(स्रा)वो ज्ञेयं चौत्पातिकं कथम् ॥
स्यादनौत्पातिकः कस्माद्दन्तस्य श्र(स्र)वणं कथम् ॥ २ ॥
इति पृष्टोऽब्रवीत्प्रश्नं मुनिरङ्गेश्वरं तथा ॥
श्रूयतां पृथिवीपाल यथायोगं यथाक्रमम् ॥ ३ ॥
अत्यर्दितः श्र(स्र)वेद्दन्तः पूतिकं पूयशोणितम् ॥
सद्यः कृमीन्वा नागस्य तस्य दैवकृतो विधिः ॥ ४ ॥
तस्य त्यागो हि दन्तस्य पतनात्प्राग्विनिश्चितः ॥
तस्यात्यागे ह्यवाप्नोति मित्रार्थे(र्थ) बलभूक्षयम् ॥ ५ ॥
व्यायामात्पतनं यस्य दन्तस्येह द्विपस्य तु ॥
भवेत्करीरीमूलाभ्यां गदन्तं गजमुत्सृजेत् ॥ ६ ॥
[*.......................सह तूर्णं समुत्सृजेत् ॥ ]
भग्ने शेषं स्थितं याप्यं समूलं सकरीरिकम् ॥ ७ ॥
विनिष्कीर्णं यद्धि स्यात्तद्व्रणवत्साधु साधयेत् ॥
चे(वे)ष्टस्योपरि दन्तस्योद्रङ्गे स्याद्यदि च श्रु(स्नु)तिः ॥ ८ ॥
तस्य प्राक्पतनादिष्टं गजस्योत्सर्जनं न हि ॥
दन्तनाडी तु यस्य स्याद्वातादीनां प्रकोपजा ॥ ९ ॥
न तत्रौत्पातिकं किंचिन्न चास्य पतने भयम् ॥
अन्तःस्वेदा गजा यस्मान्मांसे शुषिरता तथा ॥ १० ॥
तैजसी प्रकृतिश्चापि कोपे भूयिष्ठता ततः ॥
यस्य श्रु(स्तु)तिस्तु दुर्गन्धा विषाणस्योपलक्ष्यते ॥ ११ ॥

---

* धनुश्चिह्नद्वयान्तःस्थो नास्ति पाठः कपुस्तके ॥

---

१ ख. मन्यार्थे । २ क. श्रुतम् । ३ क. °तितं किं° । ४ क. यस्माच्छ्रुति° ।

कर्मजेऽपि समुत्पाते तत्रास्य च्यवनं स्मृतम् ॥
पुष्पनेत्रं तु वृत्तास्यमनुपूर्वं समं दृढम् ॥ १२ ॥
बस्तिर्जरद्गवः श्रेष्ठं तस्मिन्व्रणे विधीयते ॥
दृढां बलवतीं श्लक्ष्णामेषणीं ताम्रनिर्मिताम् ॥ १३ ॥
गण्डूपदास्यां सूक्ष्मां च कारयेद्भिषगुत्तमः ॥
स्पूर्जार्कनिम्बजातानां हरिद्रानक्तमालयोः ॥ १४ ॥
पुत्रंजीवकभङ्गस्य निष्क्राथं कुटजस्य च ॥
सुखोष्णः करवीरस्य सप्तपर्णस्य चोभयोः ॥ १५ ॥
क्षालनं बस्तिना कार्यं क्षौमपट्टैस्तु शोधनम् ॥
पूतिगन्धं च कण्डूं च क्वाथ एष प्रणाशयेत् ॥ १६ ॥
मार्दवं शोधनं चैव व्रणस्याऽऽशु करोति च ॥
वर्षाभूश्चैव बिल्वं च निक्काथो वा वचान्वितः ॥ १७ ॥
सोभाञ्जनकतर्कारीयूथिकाभङ्गसंयुतः ॥
अलर्ककाकदन्तीनां पूतीकैरण्डयोरपि ॥ १८ ॥
सुरसाकुटजत्वग्भ्यां संयुक्तो व्रणधावनः ॥
मधुशिग्रुर्धवश्चैव निष्क्राथः कुटजस्य च ॥ १९ ॥
पूतीकस्याग्निमन्थस्य पुत्रंजीवकनिम्बयोः ॥
सप्तपर्णत्वचश्चास्य नक्तमालस्य चोभयोः ॥ २० ॥
तेन वा बस्तियुक्तेन क्षालनं दन्तिनो व्रणे ॥
जात्यर्ककाकदन्तीनां पूतीकैरण्डयोरपि ॥ २१ ॥
विडङ्गं त्रिवृता दन्ती चित्रकः पिप्पलीद्वयम् ॥
श्यामा सलवणा कार्या पिष्टः स्याद्व्रणपूरणम् ॥
स्यात्त्वालेपो वचा शुण्ठी पाठा कटुकरोहिणी ॥ २२ ॥
अक्षिपीलकगण्डीरे सुवहाऽतिविषा तथा ॥
तेजोवत्यथवा पिष्ट्वा(ष्टा) सुवर्णा क्षीरिणी तथा ॥ २३ ॥
शुण्ठी सुवर्चिका चैव कषायं लशुनानि च ॥
लाङ्गलिकासमायुक्तः क्षौद्रेण सह संप्लुतः ॥ २४ ॥
लेपोऽयं दन्तनाडीषु वारणानां सुखावहः ॥
नक्तमालहरिद्राभ्यां करवीराङ्कुरस्य च ॥ २५ ॥

---

१ क. तस्यास्य चवनं । २ क. °त्रं वीजक° । ३ क. °स्तिनीकार्थं क्षौ° ।
४ क. °पीडकठाण्डी° ।

पूतीकस्य च जात्याश्च कल्केन कुटजस्य च ॥
दन्तनाडीषु तैलं स्याद्वृश्चिकालीहरेणवा (?)॥ २६ ॥
कुस्तुम्बुरुस्तथैला च शोधनी साक्षिपीलुकाः ॥
श्रीवेष्टकसमायुक्ताः कुटजस्तालपत्रिकाः ॥ २७ ॥
जात्याः सकरवीराद्या भङ्गः पूतीकपल्लवाः ॥
अभीरुपत्री सुवहा गुग्गुलुः सुकुटमटः ॥ २८ ॥
करञ्जपल्लवा मुस्ताहंसपादीहरेणवः ॥
एतानि पाके तैलस्य समपिष्टानि योजयेत् ॥ २९ ॥
तेन तैलेन वा शोध्या दन्तनाड्यस्तु दन्तिनाम् ॥
अपूतिकमविश्रा(स्रा)वं कण्डूदोषविवर्जितम् ॥ ३० ॥
विज्ञाय तु व्रणं शुद्धं क्रियां कुर्यादिमां भिषक् ॥
बिल्वाश्वत्थमधूकानां त्वग्भिर्न्यग्रोधशाल्मयोः ॥ ३१ ॥
सबीजकोदुम्बरायाः सोमवल्कशिरीषयोः ॥
निष्क्वाथः क्षालनं(ने) कार्यः सुखोष्णः सरलस्य च ॥ ३२ ॥
तेनोपद्रवहीनस्तु व्रणो रोहति दन्तिनः ॥
शमीक्षुरकमूलानि पाटलामूलमेव च ॥ ३३ ॥
वितानकं सहोशीरं कुटजः शालितण्डुलाः ॥
इक्कटा मधुकं रोध्रं मन्मितस्तालमस्तकः ॥ ३४ ॥
विदार्यर्षभकश्चैव सुवहाजीवकावपि ॥
कुलिङ्गाक्षी पयस्या च तथैव तालपत्रिका ॥ ३५ ॥
किरात्या[1] सह पक्कं तु तैलं स्याद्व्रणरोपणम् ॥
गतिः स्याद्यदि संरूढा प्रकोपमुपगच्छति ॥ ३६ ॥
पूतिस्रावी भिषग्वा स्याच्छृणु तत्रापि यो विधिः ॥
पटोलं हस्तिपिप्पल्यः कुटजस्य फलानि च ॥ ३७ ॥
वृश्चिकाली विडङ्गानि पृथ्वीकाः श्वेतसर्षपाः ॥
कुस्तुम्बुरुसमायुक्तं गोमूत्रे क्वाथयेच्चिरम् ॥ ३८ ॥
क्वाथेनाथ सुखोष्णेन तेन तां शोधयेद्गतिम् ॥
सर्पगन्धा मधूच्छिष्टं सर्वबीजानि गुग्गुलुः ॥ ३९ ॥
सर्षपैः सह धूपः स्यान्नाडीनां दन्तयोर्हितः ॥
पूतिगन्धमविष्यन्दं दन्तनाड्या शिरोरुजम् ॥ ४० ॥

---

१ क. ख. किरास्य ।

आक्षेपयति धूपोऽयं दन्तनेत्रसुखावहः ॥
पृष्टपर्ण्यश्मभस्यो च छिन्नरुत्तालपत्रिकः ॥ ४१ ॥
समङ्गा च करञ्जश्च सुवहाऽतिबला बला ॥
महासहा च विश्वा च निक्वाथस्तैलपाचनः ॥ ४२ ॥
सुवहागिरिकर्ण्यौ च कपिकच्छूः समूलिका ॥
महौषधं रसं क्राथं तैलेन सह पाचयेत् ॥ ४३ ॥
द्विगुणक्षारसंयुक्तं कल्कश्चैव भिषग्वरः ॥
मञ्जिष्ठायाः प्रियङ्ग्वाश्च मधूकस्य हरिद्रयोः ॥ ४४ ॥
मांस्याः कालानुसार्याश्च ध्यामजीवकयोरपि ॥
ऋषभस्य सरोभस्य वचाश्रीवेष्टकस्य च ॥ ४५ ॥
प्रपौण्डरीकस्य तथा श्लक्ष्णं पिष्ट्वा प्रदापयेत् ॥
त्र्यहं शिरोविरेकः स्यात्तैलपीतस्य च त्र्यहम् ॥ ४६ ॥
पश्चाद्रस्यावसेकस्य दन्ताप(वे)ष्टश्रु(स्रु)तस्य च ॥
काकोली मधुपर्णी च सालपर्णी सरोहिणी ॥ ४७ ॥
पयस्या च लुलिङ्गाक्षी छिन्नरुण्मुद्गपर्ण्यपि ॥
अम्बष्ठा चैव तैलं स्यात्तेन तैलं विपाचितम् ॥ ४८ ॥
द्विगुणक्षीरसंयुक्तं तैलमात्रावशेषितम् ॥
तेन चाभ्यञ्जनं पानं नस्यकर्म च पूज्यते ॥ ४९ ॥
शशतित्तिरिलावानां मयूरवृषभस्य च ॥
युक्तं मरिचचूर्णेन पिप्पलीशुण्ठिसैन्धवैः ॥ ५० ॥
स्निग्धं सलवणं चैव तं रसं पाययेद्गजम् ॥
देयं शाल्योदनं चैव रसैस्तैरेव संस्कृतैः ॥ ५१ ॥
यदा चास्य स्थिरीभावः समाधिश्चैव दन्तयोः ॥
पञ्चाहान्तरितं तस्मादथवाऽपि त्र्यहं तथा ॥
प्रतिपानं प्रसन्नां च तैलयुक्तां प्रदापयेत् ॥ ५२ ॥
इतीदं दन्तनाडीनां सनिदानं चिकित्सितम् ॥
पृच्छते रोमपादाय पालकाप्येन कीर्तितम् ॥ ५३ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने दन्तनाडीचिकित्सितं नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

१ क. तरसं ।

अथाष्टादशोऽध्यायः ।

---

*षोडश दशनाः प्रोक्ता नागानां सर्वदा नृप ।
द्वावन्यावधिकौ दन्तावुपर्यूर्ध्वौ च विज्ञेयौ ॥
हन्वस्थिसंधिरुद्धो वायुर्मज्जास्थिबृंहणं कुरुते ।
हन्वस्थिदन्तदोषादधिदन्तैस्यानतस्य नश्वरतः ॥
स्ववेदना स्यात्सुदारुणा तेन दन्तमूलेषु ।
परुषच्छविर्विवर्णो कृशश्च मन्दाभिलाषश्च ॥
तस्य गलग्रहनिर्मितयन्त्रेण सुयन्त्रितस्य नागस्य ।
स्तम्भालितस्य राजन्विकासमुविदारितास्यस्य ॥
द्वात्रिंशदङ्गुलायतदशनपरिणाहेन लोहदण्डेन ।
एणीपदेन कुर्यादुद्धरणं तयोः सम्यक् ॥
व्रीहिमुखेन च परिशोध्य सर्वतस्तस्य दन्तमूलेषु ।
उष्णोदकधौतेषु मधुसर्पिः पूरणं दद्यात् ॥
तेन सुखी भवति गजो बलवान्सुखविक्रमश्चैव ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थानेऽधिकदन्तचिकित्सितं नामाष्टादशोऽध्यायः ॥ १८ ॥

---

अथैकोनविंशोऽध्यायः ।

---

देवराजप्रतीकाशश्चम्पायां पृथिवीपतिः ॥
अभिगम्याऽऽश्रमं पुण्यं पालकाप्यमथाब्रवीत् ॥ १ ॥
यथा शिरा भवेच्छिन्ना भिन्ना वायुविघट्टिता ॥
अतिप्रवृत्ते रुधिरे स्थापनं च कथं भवेत् ॥ २ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
शृणु सर्वं महाराज अविक्षिप्तेन चेतसा ॥ ३ ॥
केवलं शास्त्रकर्माणि ह्यशास्त्रज्ञाश्चिकित्सकाः ॥
मर्मभागमजानन्तो हिंस्युः स्नायुशिरास्तथा ॥ ४ ॥

---

* आदर्शद्वयेऽपि तुल्यत्वादस्मिन्नध्याये छन्दोविचितिश्चिन्तनीया ॥

---

१ क. हस्तिसं°। २ क. °न्तश्चानृश्चनः । वर°। ३ क. °ता यस्य । ४ ख. °तः स्वस्य दन्तेषु । ५ क. ख. शिरो । ६ क. °विनृद्धिता ।

दुर्गृहीतं भवेच्छस्त्रं तिर्यग्वा विनिपातयेत् ॥
तेन स्नायुः शिरा वाऽपि विशेषेणोपहन्यते ॥ ५ ॥
तस्मिन्प्रवर्तते राजञ्शोणितं जलयन्त्रवत् ॥
तस्य सिद्धिं प्रवक्ष्यामि साध्यासाध्यं च सर्वशः ॥ ६ ॥
अस्थिमर्मगताश्चैव संधिजातास्तथैव च ॥
शिरा नागस्य वक्ष्यामि ता मे विस्तरतः शृणु ॥ ७ ॥
नाभ्यामेव तु संभूता धमन्यो दश पञ्च च ॥
नानाश्रो(स्रो)तोवहाश्चैव नानाधातुवहाश्च ताः ॥ ८ ॥
धमनीप्रभवानां तु शतानि दश पञ्च च ॥
हस्ते गात्रापरे चैव शिरा काये च दन्तिनाम् ॥ ९ ॥
नृपस्थितांसेऽथ बाले च जघन्यापरयोरपि ॥
अण्डकोशे च नागस्य विद्धि सप्त शतानि वै ॥ १० ॥
तासामुपशिराश्चैव स्नायवश्च सहस्रशः ॥
एवं स्नायुकृता संख्या रोमकूपसमा नृप ॥ ११ ॥
एकस्कन्धो यथा वृक्षः शाखाभिर्बहुभिर्वृतः ॥
एवं नाभिप्रवृत्तास्तु शिराः स्नायुश्च कुञ्जरे ॥ १२ ॥
तासां वक्ष्यामि विस्तारं येषु भागेषु हस्तिनाम् ॥
सद्यः प्राणहरः स्यात्तु शिराच्छेदो महीपते ॥ १३ ॥
पुरो नखे च मोहे च चिक्कायां पलिहस्तयोः ॥
संदानजवभागे च विक्षोभे च महीपते ॥ १४ ॥
भागेष्वेतेषु[1] नागस्य शिराच्छेदो विनाशयेत् ॥
एता दश शिरा[2] राजन्सद्यः प्राणहराः स्मृताः ॥ १५ ॥
उरोग्रीवागुहा(दा)भागे स्कन्धे मूर्ध्नि च हस्तिनः ॥
शिरा दश विजानीयाद्धस्ते पञ्च विनिर्दिशेत् ॥ १६ ॥
विभागे द्वे धमन्ये द्वे धमन्ये द्वे कृकाटिके ॥
तथा द्वे रसवाहिन्यौ शिरा दश तु कीर्तिताः ॥ १७ ॥
नानाश्रो(स्रो)तोवहाश्चैव भागेष्वेतेषु दन्तिनाम् ॥
सद्यः प्राणहरा राजन्नासां छेदं विवर्जयेत् ॥ १८ ॥
वातकुम्भस्य चान्ते द्वे ईषीके द्वे समाश्रिते ॥
ईषीकाकुम्भयोर्मध्ये हस्तश्रो(स्रो)तोवहा नृप ॥ १९ ॥

---

१ क. नागेष्वेतेषु । २ क. ख. शिरो ।

हस्ते पञ्च शिराः श्वेता वारणस्य प्रकीर्तिताः ॥
सद्यः प्राणहरा राजंस्तासां छेदो विवर्जितः ॥ २० ॥
निर्याणमध्ये पञ्चूषे विलागे दन्तवेष्टयोः ॥
कटिश्रो(स्रो)तसि मध्ये च तासां छेदो विनाशयेत् ॥ २१ ॥
वसस्यातु(?)च मध्ये च तत्पले च समाश्रिते ॥
दलिरे पृथिवीपाल तासां छेदो विनाशयेत् ॥ २२ ॥
पेचकस्य च मध्ये स्यात्करीषस्य च मध्यतः ॥
प्रस्रावस्य च मध्यस्थः शिराच्छेदो विनाशयेत् ॥ २३ ॥
तथैवाऽऽन्तरसक्थ्नोश्च अण्डकोशस्य पार्श्वतः ॥
अष्टास्वेव महीपाल शिराच्छेदो विनाशयेत् ॥ २४ ॥
संदानभागे मण्डूक्यो ग्रन्थी सकुटिकाद्वये ॥
भागेष्वेतेषु नागस्य शिराच्छेदो विनाशयेत् ॥ २५ ॥
ततुभागे च रन्ध्रे च अण्डकोशे च दन्तिनः ॥
स्तनान्तरे च नाभ्यां च शिराच्छेदो विनाशयेत् ॥ २६ ॥
अक्ष्णोर्वै कर्णसंधौ च शिरा नागमनुस्मृताः ॥
भागेष्वेतेषु नागस्य शिराच्छेदो विनाशयेत् ॥ २७ ॥
अतिप्रवृत्ते रुधिरे वारणस्य महीपते ॥
शोणितस्य क्षयाच्चैव वायुर्मर्माणि बाधते ॥ २८ ॥
हृदयं पीड्यते चास्य शोफश्चास्योपजायते ॥
मूर्छां च भजते नागस्तृष्णाऽप्यस्य विवर्धते ॥ २९ ॥
दुर्मना वर्णतः पाण्डुर्यवसं नाभिनन्दति ॥
एवंलिङ्गं महाराज प्रत्याचक्षीत वारणम् ॥ ३० ॥
उत्तानायाः प्रसन्नाश्च छवीरोमसमाश्रिताः ॥
शिरास्नायु(?) महाराज छेदमाहुर्मनीषिणः ॥ ३१ ॥
यदा शिरा भवेच्छिन्ना भिन्ना वाऽपि विघट्टिता ॥
अतिप्रवृत्ते रुधिरे स्थापनानि निबोध मे ॥ ३२ ॥
श्रीपर्णीमथ तां बद्ध्वा धातुकीमदनावुभौ ॥
सूक्ष्मचूर्णानि कृत्वा तु तं व्रणं प्रतिसारयेत् ॥ ३३ ॥
यदि वाऽनेन योगेन शोणितं न प्रतिष्ठते ॥
क्षौमस्य तु मषी चूर्णं तथा सर्जरसस्य च ॥ ३४ ॥

१ क. °तू ॥ मन्दान° । २ क. °गेश्वेते° । ३ क. शिरो । ४ ख. °कागद° ।

धातकीमदनौ चोभौ काश्मर्याः प्रस्थयोर्जवौ ॥
सूक्ष्मचूर्णानि कृत्वा तु तं व्रणं प्रतिसारयेत् ॥ ३५ ॥
ततः शोणितवेगं तच्चूर्णेनानेन तिष्ठति ॥
यदि वाऽनेन योगेन शोणितं न प्रतिष्ठते ॥ ३६ ॥
मधुकं चन्दनं रोध्रं सर्जं पद्मकमेव वा ॥
सूक्ष्मचूर्णानि कृत्वा तु तं व्रणं प्रतिसारयेत् ॥ ३७ ॥
गोधूमश्चैव रोध्रं च कदम्बश्चैव गैरिकम् ॥
सूक्ष्मचूर्णीकृतैरेतैस्तं व्रणं प्रतिसारयेत् ॥ ३८ ॥
अर्जुनश्च धवश्चैव यष्टी मधुकमेव च ॥
सूक्ष्मचूर्णानि कृत्वा तु तं व्रणं प्रतिसारयेत् ॥ ३९ ॥
समुद्रफेनं तेजोह्वां गोमयस्य रसेन च ॥
शङ्खमध्यं मधुक्षीरमरिमेदस्य ग्रन्थयः ॥ ४० ॥
तथा पलाशनिर्यासो निर्यासस्तिनिशस्य च ॥
भूमीकदम्बकश्चैव गैरिकः सह लाक्षया ॥
सूक्ष्मचूर्णानि कृत्वा तु तं व्रणं प्रतिसारयेत् ॥ ४१ ॥
एभिर्योगैर्यथाप्रोक्तैर्यदि रक्तं न तिष्ठति ॥
अवगाह्य महाराज वारणं तु प्रवेशयेत् ॥ ४२ ॥
गम्भीरे शीतले देशे प्रण(न)ष्टतृणशर्करे ॥
यदि चैभिः क्रियायोगैः शोणितं न प्रतिष्ठते ॥ ४३ ॥
अश्वत्थोदुम्बरं चैव न्यग्रोधं काकजम्बुकम् ॥
क्षोदयित्वा महाराज महास्थालीषु पाचयेत् ॥ ४४ ॥
क्वाथेनानेन शीतेन तं व्रणं प्रतिषेचयेत् ॥
अथाग्निश्च प्रयोक्तव्यो विधिना तेन दन्तिनाम् ॥ ४५ ॥
सर्पिषा म्रक्षयित्वाऽथ अग्निकर्म प्रयोजयेत् ॥
नातिदग्धं व्रणं कुर्यादामदग्धं चिकित्सितम् ॥ ४६ ॥
गन्धनिर्वापणार्थाय सर्पिषा परिषेचयेत् ॥
शस्त्राग्निप्रणिधानोक्तैस्तैश्च निर्वापयेद्गजम् ॥ ४७ ॥
पानं च सर्पिषा मिश्रं क्षीरमस्य विधीयते ॥
यथावकाशे महति शस्त्रकर्म विधीयते ॥ ४८ ॥

---

१ क. प्रतष्ट° ।

स्वस्ति वाच्य द्विजान्वैद्यः शुचिर्भूत्वा समाहितः ॥
वासितैश्च भवेच्छस्त्रैर्बन्धैर्बद्ध्वा मतङ्गजम् ॥ ४९ ॥
यथा शिरास्तथा शस्त्रं सर्वगात्रेषु चारयेत् ॥
मनश्चक्षुः समाधाय हस्तेन परिमृश्य च ॥ ५० ॥
शस्त्रं निपातयेत्तत्र शिराश्च परिवर्जयेत् ॥
विश्रा(स्रा)व्या ग्रन्थयो ये च तान्मे निगदतः शृणु ॥ ५१ ॥
स्थिरा ये मेदसा चैव ये च संधिं समाश्रिताः ॥
ये च मर्मगता नित्यं येऽन्ये चैवंविधाः स्मृताः ॥ ५२ ॥
अभ्यङ्गैरुपनाहैश्च स्नेहैरुद्वर्तनैरपि ॥
प्रदेहैः पीडनीयैश्च विश्रा(स्रा)व्या ग्रन्थयस्तु ते ॥ ५३ ॥
यथा दोषोपसृष्टानि शोणितानि परीक्ष्य वा ॥
तथा विश्रा(स्रा)व्यमाणे च तत्रैव उपसर्पयेत् ॥ ५४ ॥
वारणं मन्दलवणां पाययेत्तादृशीं सुराम् ॥
तया शोणितवृद्धिश्च जायते दन्तिनस्तथा ॥ ५५ ॥
न हि केवलशास्त्रेण न तथा कर्मदर्शिना ॥
वैद्येन शक्यं भवितुं चिकित्सां वाऽपि वेदितुम् ॥ ५६ ॥
सूत्रं विभजते बुद्ध्या त्रीणि पश्यन्ति चक्षुषा ॥
साध्यासाध्यं च याप्यं च नास्ति तत्र विचारणा ॥ ५७ ॥
अदृष्टकर्मका ये च शास्त्रहीनाश्चिकित्सकाः ॥
प्राप्य कर्मावसीदन्ति बहवो धीरमानिनः ॥ ५८ ॥
शास्त्रज्ञः कर्मणा हीनः कर्मज्ञः शास्त्रवर्जितः ॥
तावुभौ न प्रशस्येते पालकाप्यवचो यथा ॥ ५९ ॥
यः कर्मणि च शास्त्रे च उभयत्र विशारदः ॥
स पूज्यः सततं राज्ञा दानमानप्रतिग्रहैः ॥ ६० ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने शिराच्छेदो नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

अथ विंशोऽध्यायः ।

---

अथाङ्गराजो विनयादभिगम्य भगवन्तं पालकाप्यं पप्रच्छ—'भगवन्वारणानां नानाविधं विषमदुर्गमसंबाधगमनगिरिशिखरकंदरारोहणावतरणसम-

---

१ क. वाद्य । २ क. वा चरेत । ३ क. °न विशारदैः ॥ ६० ॥

र्थानां संग्रामे शक्त्यृष्टितोमरपरशुभिण्डिमालाभिघातादभिहतदेहानां कथं कर्माणि विज्ञेयानि । तेषां भगवन्कति कर्मा(र्मा)णि, किं च मर्मप्रमाणम्, कथं वा चिकित्सेत, केन वा शास्त्रानुसारेण मर्मप्रदेशा विज्ञेयाः, न शक्यं मर्माण्यज्ञाता (ज्ञात्रा) शस्त्राद(दि)चारणं कर्तुम् । यथा वारणानां न चाऽऽबाधकरं भवति, तथा मे वक्तुमर्हसि । भगवञ्शुश्रूषुरस्मि ' इति ॥

ततः पालकाप्यः प्रोवाच—इह खलु भो वारणानां सप्तोत्तरमर्मशतम् । पूर्वमेव तु शरीरविचये मर्मसंग्रहे समासतो व्याख्यातम् । मर्मप्रमाणमिदानीं यथा विज्ञायते नागस्य शरीरे तद्वक्ष्यामः—तत्रावग्रहहृदयाण्डकोशवातकुम्भबिम्बकपणवनाभिनिष्कोस(श)मुष्ककमृदुकुक्षिः ॥

तत्र गुदाण्डकोशे हृदयमेढ्रमध्योदरकरप्रत्यङ्ग सप्रतीकाशप्रतीमानगुहस्तनप्रोहसंदानभागग्रन्थिसकुटिकातलपलिहस्तवि(चि)क्कारन्ध्रान्तरापरकुक्षी (?) करीषप्रस्रावकटनयनकर्णहस्तवदनतालुस्रोतःकक्षाभागनिष्कोशमन्यान्तर्बाहुपणवकबिम्बकवातकुम्भा अपस्कराष्ठीव्यमृदुकुक्षिगलपृष्ठपतस्थानग्रीवामन्याभागतालुवाहित्थशम्बुकजिह्वाविलावङ्क्षणविक्षोभचूचुकमुष्ककूर्मांसतलसंधित्र्यस्थिक्षपकलाभागांसेषु नरसंध्युरसि चेति । स्तनचिक्कालमध्यभागतालुमेहनरन्ध्रगलकण्ठकक्षावङ्क्षणजिह्वासकुटिकातलसंधिकूर्मप्रोहसंधिपतस्थानविक्षोभप्रतिमानपलिहस्तत्र्यस्थिवाह्नित्थशम्बुकवक्षःसंधिकुक्षमध्यसुरसंदानभागकटकर्णमुखतालुनेत्रचूचुकपायुमेहनहस्तश्रो(स्रो)तांस्यष्ठीव्यगुहभोगप्रत्यङ्गसगुहान्तरबाहुग्रीवाविभागापस्करे करीपस्रावशंबुककरमध्यप्रतीकाशांसक्षपभागकलाभागान्तरापरोदरपृष्ठमध्याख्यानां सद्यःप्राणहरकालान्तरप्राणहरसशल्यप्राणहरवैगुण्यकराणां मर्मणां सप्तोत्तरशतं विज्ञेयम् ॥

इदानीमेषां विभागं प्रमाणं व्याख्यास्यामः ।

तत्र गुदमध्ये मर्म षडङ्गुलप्रमाणम् । हृदयमध्ये मर्माष्टाङ्गुलप्रमाणम् । अण्डकोशमध्ये मर्म षडङ्गुलप्रमाणम् । बिम्बकमध्ये मर्म षडङ्गुलप्रमाणम् । पणवकमध्ये मर्म षडङ्गुलप्रमाणम् । नाभिमध्ये मर्म षडङ्गुलप्रमाणम् । निष्कोशमध्ये मर्म षडङ्गुलप्रमाणम् । मुष्ककमध्ये मर्म षडङ्गुलप्रमाणम् । मृदुकुक्षिमध्ये मर्म चतुरङ्गुलप्रमाणम् । स्तनमध्ये मर्म षडङ्गुलप्रमाणम् । चिक्कामध्ये मर्म षडङ्गुलप्रमाणम् । तलमध्ये मर्माष्टाङ्गुलप्रमाणम् । मन्याभागे मर्म चतुरङ्गुलप्रमाणम् । तालुमध्ये मर्म चतुरङ्गुलप्रमाणम् । मेहनमध्ये मर्म चतुरङ्गुलप्रमाणम् । रन्ध्रमध्ये मर्म सप्ताङ्गुलप्रमाणम् । गलमध्ये मर्म सप्ताङ्गुलप्रमाणम् ।

---

१ क. °नभाग° । २ क. °विलागा° ।

कैक्षाभागे मर्म नवाङ्गुलप्रमाणम् । वङ्क्षणमध्ये मर्म दशाङ्गुलप्रमाणम् । जिह्वामूले मर्म त्र्यङ्गुलप्रमाणमिति । एषामन्यतमे मर्मणि गाढविद्धः सद्यः प्राणैर्वियुज्यते ॥

इत्येतानि चतुस्त्रिंशति* सद्यःप्राणहराणि ॥

अत ऊर्ध्वं छवीनां भिन्नानां लक्षणं व्याख्यास्यामः । इह खलु भोः षट् छव्यो भवन्ति हस्तिनः । तत्र यदा प्रथमा छविर्भिद्यते, तदा पुरीषोदकनिभः स्रावो भवति । द्वितीयायामुदकश्रा(स्रा)वः । तृतीयायां शोणितश्रा(स्रा)वः । चतुर्थ्यां मेदःश्रा(स्रा)वः । पञ्चम्यां मज्जश्रा(स्रा)वः । षष्ठ्यां मर्माभिघातो ज्ञेयः ॥

—:०:—

अत ऊर्ध्वं दन्तिनां मर्माणि कालान्तरप्राणहराणि वक्ष्यामः । तत्र सकुटिकामध्ये मर्म षडङ्गुलप्रमाणम्, तत्र गाढं विद्धो मासत्रयान्म्रियते । तलसंधिमध्ये मर्म षडङ्गुलप्रमाणम्, तत्र विद्धो मासत्रयान्म्रियते । कूर्ममध्ये मर्म षडङ्गुलप्रमाणम्, तत्र गाढं विद्धः षण्मासाभ्यन्तरे विनश्यति । मोहसंधिमध्ये मर्म षडङ्गुलप्रमाणम्, तत्र गाढं विद्धो मासद्वयेन म्रियते । यतस्थाने मर्म सप्ताङ्गुलप्रमाणम्, तत्र गाढविद्धो मासद्वयान्म्रियते । विक्षोभमध्ये मर्म सप्ताङ्गुलप्रमाणम्, तत्र गाढं विद्धः षण्मासाभ्यन्तरे म्रियते । प्रतिमानमध्ये मर्म सप्ताङ्गुलप्रमाणम्, तत्र गाढं विद्धो मासत्रयान्म्रियते । पंलिहस्तमध्ये[1] मर्म सप्ताङ्गुलप्रमाणं, तत्र गाढं विद्धो मासत्रयान्म्रियते[2] । त्र्यस्थिमध्ये मर्म सप्ताङ्गुलप्रमाणम्, तत्र गाढं विद्धो मासत्रयाद्व्यापद्यते । वाहित्थमध्ये मर्म सप्ताङ्गुलप्रमाणम्, तत्र गाढं विद्धः षण्मासाभ्यन्तरे विनश्यति । शम्बुकमध्ये मर्माष्टाङ्गुलप्रमाणम्, तत्र गाढं विद्धो मासत्रयाद्व्यापद्यते । वक्षःसंधिमध्ये मर्माष्टाङ्गुलप्रमाणम्, तत्र गाढं विद्धो मासद्वयान्म्रियते । कुक्षिमध्ये मर्माष्टाङ्गुलप्रमाणम्, तत्र गाढं विद्धो मासद्वयान्म्रियते । संदानभागमध्ये मर्माष्टाङ्गुलप्रमाणम्, तत्र गाढं विद्धः षण्मासाभ्यन्तरे विनश्यति । इत्येतानि पञ्चविंशतिमर्माणि कालान्तरप्राणहराणि ॥

—:०:—

अत ऊर्ध्वं वैगुण्यकराणां लक्षणं वक्ष्यामः[3] । कटकर्णमुखताल्लुनेत्रचूचुकपायुमेहनहस्तश्रो(स्रो)तःसु पञ्चदशसु प्रत्येकं चतुरङ्गुलप्रमाणम्, तत्र गाढं विद्धो

† कण्ठमध्ये मर्म सप्ताङ्गुलप्रमाणम् । इत्यधिकमितः परं कपुस्तके ॥

* आदर्शद्वयेऽपि तुल्यः पाठः । तथाऽप्युक्तसंख्या तु न लभ्यते ॥

१ क. पणिह° । २ क. ख. °ते । अस्थि° । ३ क. °मः । तालुपायुमेहनहस्तमुखकण्ठकर्णनेत्रचूचुकश्रो° ।

वैकल्यात्कृच्छ्रजीवी भवति । अष्ठीव्यधयोर्मर्म चतुरङ्गुलप्रमाणम्, तत्र गाढं विद्धोऽपकर्षति । गुहाभागमध्ये कर्णाश्रितं मर्म चतुरङ्गुलप्रमाणम्, तत्र गाढं विद्धः स्तब्धगात्रो भवति । प्रत्यंसमध्ये मर्म पञ्चाङ्गुलप्रमाणम्, तत्र गाढं विद्धः स्तब्धकर्णो भवति । अन्तर्बाहुमध्ये मर्म पञ्चाङ्गुलप्रमाणम्, तत्र गाढं विद्धो हृद्रोगी भवति । ग्रीवामध्ये मर्म षडङ्गुलप्रमाणम्, तत्र गाढं विद्धस्य मन्यास्तम्भो भवति । बिलाङ्गमध्ये मर्म षडङ्गुलप्रमाणम्, तत्र गाढं विद्धश्चक्षुर्विकलो भवति । अपस्कारमध्ये मर्म षडङ्गुलप्रमाणम्, तत्र गाढं विद्धः स्तब्धगात्रो भवति । करीपस्रावमध्ये मर्म षडङ्गुलप्रमाणम्, तत्र गाढं विद्ध आनाहेन पीड्यते । चूचुकयोर्मध्ये मर्म षडङ्गुलप्रमाणम्, तत्र गाढं विद्ध उरःसङ्गमवाप्नोति । करमध्ये मर्म षडङ्गुलप्रमाणम्, तत्र गाढं विद्ध उत्कर्णकेन पीड्यते । प्रतीकास(श)मध्ये मर्म षडङ्गुलप्रमाणम् । तत्र गाढं विद्धः पाकलेन पीड्यते । अंश(स)मध्ये मर्म षडङ्गुलप्रमाणम्, तत्र गाढं विद्धो गात्रभङ्गमवाप्नोति । क्षयभागे मर्म सप्ताङ्गुलप्रमाणम्, तत्र विद्धस्य गात्रस्य रुजा भवति । कलाभागमध्ये मर्म सप्ताङ्गुलप्रमाणम्, तत्र गाढं विद्धोऽतीसारमवाप्नोति । अन्तरापरमध्ये मर्म सप्ताङ्गुलप्रमाणम्, तत्र गाढं विद्धो मूत्रसङ्गमवाप्नोति । उदरमध्ये मर्म सप्ताङ्गुलप्रमाणम्, तत्र गाढं विद्धो मेढ्रशोषमवाप्नोति । पृष्ठमध्ये मर्म विंशत्यङ्गुलप्रमाणम्, तत्र गाढं विद्धोऽपररोगी भवति । इत्येतानि चतुस्त्रिंशन्मर्माणि वैगुण्यकराणि भवन्ति । तत्र वैगुण्यकराणां चतुर्दशानां मर्मणां लक्षणान्युक्तानि ॥

तत्र श्लोकाः—

एवं सप्त महाराज शतं च परिकीर्तितम् ।
वारणानां शरीरेषु मर्मणामिति निश्चितम् ॥
तस्मान्मर्माणि संरक्षेद्वारणानां भिषग्वरः ।
.... .... .... .... ....ततः कुर्यात्क्रियापथम् ॥
यो मर्माणि न जानाति वारणानां विभागशः ।
न स कायक्रिया(?)नागे विषयान्ते तमुत्सृजेत् ॥

इति श्रीपालकाप्ये गजायुर्वेदे महाप्रवचने तृतीये शल्यस्थाने मर्मप्रमाणो नाम विंशोऽध्यायः ॥ २० ॥

---

१ क. °रामध्येऽप° । २ क. °शत्पञ्चाङ्गुलं प्र° । ३ क. °शतिमर्मा° ।

## अथैकविंशोऽध्यायः ।

---

अङ्गश्च राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
एरण्डकानामुत्पत्तिं ब्रूहि लिङ्गं तथा क्रियाम् ॥ १ ॥
पूर्वं च निर्विषो भूत्वा सविषः केन जायते ॥
दष्टस्तु सप्तरात्रेण कस्मात्कुप्यति दन्तिनाम् ॥ २ ॥
मासैश्च सप्तभिः कस्मात्तथा संवत्सरैरपि ॥
के वर्णाः कानि रूपाणि जातयः कति च स्मृताः ॥ ३ ॥
निर्विषं च कथं दष्टमविषं चात्र वै कथम् ॥
एवं पृष्टस्तु राजेन्द्र(?) पालकाप्यस्ततोऽब्रवीत् ॥ ४ ॥
शृणु सर्वं महाराज यन्मां त्वं परिपृच्छसि ॥
भौमास्तथाऽऽन्तरिक्षाश्च श्वानस्तु द्विविधाः स्मृताः ॥ ५ ॥
भौमास्तु त्रिविधा ज्ञेया ग्राम्यारण्यसमुद्भवाः ॥
तेषामृतुविपर्यासाद्रसानां च विपर्ययात् ॥ ६ ॥
गर्भा एव तु जायन्ते मातुराहारजै रसैः ॥
मण्डूकान्कृकलासान्वा सर्पवृश्चिकगोनसान् ॥ ७ ॥
यदा तु नरमांसं वा श्वमांसं वा समश्नुते ॥
विषं तदुपयुक्तं हि मात्रा त्वस्य तदा भवेत् ॥ ८ ॥
संतर्पयति तं गर्भं तर्पितं च प्रसूयते ॥
तेन दोषश्च जायेत गर्भस्थस्यैव देहिनः ॥ ९ ॥
अप्रकोपाद्धि दोषाणां जातः स्वस्थो भवेद्यदा ॥
कोपयेत्तु तदा दोषांस्तस्य तत्संचितं विषम् ॥ १० ॥
अन्योन्यमूर्छिताः सर्वे मंदं कुर्वन्ति दोषजम् ॥
तेन श्वा भ्राम्यतेऽत्यर्थं विनमत्युन्नमत्यपि ॥ ११ ॥
लालाप्रसेकी च तथा क्रोधनो मदचेष्टितः ॥
श्लथलाङ्गूलचरणो मदचेष्टोऽनवस्थितः ॥ १२ ॥
यदसौ भक्षयेत्प्राप्य तल्लिङ्गः सोऽपि जायते ॥
सविषं त्रिविधं दष्टं निर्विषं तु चतुर्विधम् ॥ १३ ॥
दष्टं चतुर्भिर्दंष्ट्राभिस्तत्कष्टमिति निर्दिशेत् ॥
दष्ट्वा क्षिपति योऽत्यर्थमतिदष्टमतिक्रियम् ॥ १४ ॥

---

१ क. सप्तति । २ क. सा । ३ क. मन्दं । ४ ख °दचेष्टि° ।

एवं द्विविधमाख्यातं सविषं निर्विषं शृणु ॥
विस्फोटितं विलिखितं ग्रथितं स्निग्धशोणितम् ॥ १५ ॥
व्यवकृष्टं विजानीयान्निर्विषं तद्भवेन्नृप ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव तु जातितः ॥ १६ ॥
शुक्ला रक्ता धूम्रवर्णाः कृष्णाश्चेति यथाक्रमम् ॥
तेषां गन्धाः स्मृता मौममत्स्यचन्दनसर्पिषाम् ॥ १७ ॥
शुक्लास्तु श्लैष्मिका ज्ञेया रक्ता वै पित्तसंभवाः ॥
धूम्रा वातसमुत्थास्तु संकीर्णा मिश्रलक्षणाः ॥ १८ ॥
तेषां वर्णविभागेन प्रतिकुर्याच्चिकित्सितम् ॥
कालेन यावता दष्टो हस्तिनः प्रति कुप्यति ॥ १९ ॥
तावतैव तु कालेन भूयो भूयः प्रकुप्यति ॥
तत्रेमे हेतवः प्रोक्ता श्वदष्टस्य प्रकोपनैः ॥ २० ॥
मेघविद्युन्निपातेन अशनेः पतनेन वा ॥
अजीर्णाध्यशनाद्वाऽपि तथैवाप्यतिभोजनात् ॥ २१ ॥
जलमध्यगतो वाऽपि पश्चाऽऽत्मानं प्रपश्यति ॥
सप्तमे दिवसे मासे पक्षे संवत्सरेऽपि वा ॥ २२ ॥
परिकुप्यति यद्दष्टं तस्मात्कुर्याच्चिकित्सितम् ॥
विषं तत्त्रिविधं ज्ञेयं त्रिवेगं त्रिःप्रतिक्रियम् ॥ २३ ॥
प्रथमे विषवेगे तु नमत्यपि च कम्पते ॥
नदत्पूर्ध्वमुखोऽत्यर्थं द्वितीये जृम्भते मुहुः ॥ २४ ॥
तृतीये जृम्भतेऽत्यर्थं श्वसन्नदति वाऽसकृत् ॥
श्र(स्र)स्तलाङ्गूलचरणः श्र(स्र)स्तकर्णशिरोधरः ॥ २५ ॥
मूर्छति क्रोधनोऽत्यर्थं म्रियते नात्र संशयः ॥
इति त्रयाणां वेगानां लक्षणं परिकीर्तितम् ॥ २६ ॥
एवंप्रकारस्य यथा दर्शनं नाभिजायते ॥
असाध्यं तं विजानीयात्त्रिवेगाक्षिप्तकश्च यः ॥ २७ ॥
याप्यो बभ्रुसवर्णाभः शेषाः साध्याः क्रियां प्रति ॥
धूपाञ्जनं च पानं च विविधाश्च क्रियाः स्मृताः ॥ २८ ॥
कुङ्कुमं तगरं कुष्ठं श्वेतपर्ववचा स्मृताः ॥
एतदञ्जनपानेषु धूपनेषु च योजयेत् ॥ २९ ॥

श्वेतसर्षपमादाय पिप्पलीमरिचानि च ॥
एतद्गुडेन संयुक्तं छायायां परिशोषयेत् ॥ ३० ॥
एतदञ्जनपानाभ्यां धूपने च प्रशस्यते ॥
कुष्ठं ध्यामकसंयुक्तं वार्ताकीबीजमेव च ॥ ३१ ॥
देवदारु च सर्पिश्च पुष्पाणि असनस्य च ॥
त्रिफलाऽतिविषा कुष्ठं तथा पाषाणभेदकः ॥ ३२ ॥
गवां मूत्रेण पिष्टं तु क्षौद्रेण सह योजितम् ॥
एतत्पानाञ्जने देयं गजानां हितमिच्छता ॥ ३३ ॥
पुराण............राजसिद्धार्थका वचा ॥
हिङ्गुजीरकशुण्ठी च सर्पिश्चापि गुडं तथा ॥ ३४ ॥
दष्टे तु कुपिते पानं रसाञ्जनमनुत्तमम् ॥
पिप्पली पिप्पलीग्रन्थिर्मधुसर्पिःसमन्वितम् ॥ ३५ ॥
एरण्डदष्टं कुपिते पानं दद्यात्तथाऽञ्जनम् ॥
आर्द्रकं सगुडं कुष्ठं घृतेन सह योजितम् ॥ ३६ ॥
पिण्डं दद्याद्गजानां तु दष्टानामुपशान्तये ॥
कुष्ठं च तगरश्चैव आर्द्रकं गुडमेव च ॥ ३७ ॥
श्वदष्टस्य तु नागस्य पिण्डं दद्याद्विचक्षणः ॥
हरिद्रा हरितालं च मञ्जिष्ठा समनःशिला ॥ ३८ ॥
श्वेतसिद्धार्थकाः कुष्ठं कपित्थं तगरं तथा ॥
गोरोचना शुना पित्तं समभागानि योजयेत् ॥ ३९ ॥
तदभ्यञ्जनपानं च आलेपं चास्य दापयेत् ॥
क्षीरमिक्षुरसं चास्मै अन्नपानं प्रदापयेत् ॥ ४० ॥
शाल्योदनं ससर्पिष्कं भोजयेन्मुद्गसंयुतम् ॥
मृदुं च यवसं दद्यात्सर्पिश्चास्य प्रवर्तते ॥ ४१ ॥
क्षान्तिश्चास्य क्रियायोगे सिद्धिः कर्माभिनीतवत् ॥
अन्तरिक्षगताः श्वानः कामगा दिव्यचारिणः ॥ ४२ ॥
तेषां मूत्रपुरीषाणि लालाश्चापि विषं भवेत् ॥
दष्टवद्गजते रूपं सीदत्यपि च दंष्टवत् ॥ ४३ ॥

१ क. °गादित्यचा° । २ क. °त् ॥ दष्ट° । ३ क. °दष्टवत् ।

इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन निवेदितः ॥ ४४ ॥

इति श्रीपालकाप्ये गजायुर्वेदे महाप्रवचने तृतीये शल्यस्थान एरण्डको नामैकविंशोऽध्यायः ॥ २१ ॥

---

अथ द्वाविंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां देवराजसमद्युतिः ॥
पालकाप्यं महाराजः पप्रच्छ विजितेन्द्रियः ॥ १ ॥
मर्माणि कति नागानां शरीरेषु महामुने ॥
तत्र मर्माणि सर्वाणि भागागोचरतत्त्वतः ॥ २ ॥
*ते प्रसादाद्भगवते (?) तदिच्छामि च वेदितुम् ॥
पालकाप्यस्ततस्तस्य श्रुत्वा वचनमब्रवीत् ॥ ३ ॥
शरीरस्य च वक्ष्यामि नागस्याहं महीपते ॥
तद्यथा चानुपूर्वेण प्रदेशान्मर्मसंस्थितान् ॥ ४ ॥
तत्र कुम्भस्य मध्ये तु मर्मैकं मनुजाधिप ॥
नाम्ना प्रवेपणं नाम सद्यःप्राणहरं हितम् ॥ ५ ॥
श्रवणश्रो(स्रो)तसी स्यातां मर्मणी द्वे महीपते ॥
सद्यःप्राणहरे विद्धि वारणस्य न संशयः ॥ ६ ॥
तथा निर्याणमध्येऽपि वालो यत्र प्रदृश्यते ॥
मर्म तद्वारणस्यापि सद्यः प्राणहरं हितम् ॥ ७ ॥
नेत्रयोरुपरिष्टात्तु इषीकागुच्छयामृतम् ॥
मर्म तस्मिन्क्षते नागः पञ्चत्वमुपगच्छति ॥ ८ ॥
अवग्रहस्य मध्ये तु कपालं यत्समाश्रितम् ॥
सीवनीमर्म तं विद्यात्क्षते तस्मिन्न जीवति ॥ ९ ॥
मस्तकाकृति(?) यौ पिण्डौ तयोर्मध्ये तु मस्तकौ ॥
भिन्नो मस्तकमध्ये तु नागः प्राणैर्वियुज्यते ॥ १० ॥
पिञ्जूषस्योपरिष्टात्तु कर्णसंधिसमाश्रितम् ॥
कर्णश्रो(स्रो)तोनुगं मर्म क्षते चास्मिन्विपद्यते ॥ ११ ॥

---

* 'तव प्रसादाद्भगवंस्तत्' इति तूचितम् ॥

---

१ ख. गति । २ क. °कालुंगु° । ३ क. मस्तुकौ । ४ क. ख. भिन्नौ ।

दन्तान्तरस्य मध्ये तु प्रतिमानस्य चोपरि ॥
फेत्करं नाम तन्मर्म सद्यः प्राणहरं नृप ॥ १२ ॥
वातकुम्भस्य चाधस्तात्प्रतिमानस्य चोपरि ॥
तालुश्रो(स्रो)तोवहं मर्म भिन्ने तस्मिन्न जीवति ॥ १३ ॥
अथोपरिष्टाद्ग्रीवायाः कर्मसंधिसमाश्रिताम् ॥
मर्म वायसतुण्डं तु विद्धस्तस्मिन्न जीवति ॥ १४ ॥
ग्रीवासंधिमनुप्राप्तमधो मस्तकपिण्डयोः ॥
मध्ये पणवकं नाम मर्म प्राणहरं स्मृतम् ॥ १५ ॥
वारणस्य गुहाभागे मर्म संधिसमाश्रितम् ॥
धमन्याध्मापनं नाम सद्यः प्राणहरं नृप ॥ १६ ॥
गुहाभागेऽपरमपि पत्तस्थानं समाश्रितम् ॥
मर्म तस्मिन्क्षते नागः पाकलेन विपद्यते ॥ १७ ॥
गुहाभागेऽपि मध्ये तु कर्मसंधिसमाश्रितम् ॥
मर्म तस्मिन्क्षते नागः स्तब्धग्रीवो भवेन्नृप ॥ १८ ॥
शङ्खसंधिगतं यत्तदुपवाहिसमाश्रितम् ॥
मर्म तस्मिन्क्षते नागः सद्यः प्राणैर्वियुज्यते ॥ १९ ॥
मन्ययोर्मध्यतश्चैकं गलसंधिसमाश्रितम् ॥
मर्म तन्निर्गलं नाम सद्यः प्राणैर्वियोजयेत् ॥ २० ॥
उपरिष्टादुरोमन्या* गलभागस्य चाप्यधः ॥
हिक्कामर्मेति तद्विद्यात्सद्यः प्राणहरं हि तत् ॥ २१ ॥
संधिमध्ये तु नागस्य उरोमणिसमाश्रितम् ॥
तस्मिन्क्षिते द्विपं क्षिप्रं वातस्कन्दो विनाशयेत् ॥ २२ ॥
उरोमणेर्मध्यतस्तु मणिर्नाम प्रतिष्ठितम् ॥
मर्म तद्वारुणं विद्यात्सद्यः प्राणहरं नृप ॥ २३ ॥
चतुरस्रं च मध्ये तु यत्राऽऽवर्तः प्रदृश्यते ॥
आवर्तं नाम तन्मर्म सद्यः प्राणहरं स्मृतम् ॥ २४ ॥
अथोपरिष्टात्कायस्य प्रवक्ष्यामि महीपते ॥
आसनस्य तु पार्श्वे तु वंशनागस्य संश्रितम् ॥ २५ ॥

---

* 'मण्या' इति भवेत् ।

---

१ क. फत्करं । २ क. कर्णसं° । ३ क. °स्य गूहा° । ४ क. गूहाभागे । ५ क. कर्णसं° । ६ क. °तन्निङ्क ग° । ७ ख. °द्वारणं ।

उत्कर्णकेन मातङ्गः क्षते तस्मिन्न जीवति ॥
अधस्तात्पेचकस्याथ गुदभागस्य चोपरि ॥ २६ ॥
मर्म तस्मिन्क्षते नागो मूत्रसङ्गेन नश्यति ॥
अथ निष्कोशमध्ये वै मर्मैकं मनुजाधिप ॥ २७ ॥
सद्यः प्राणहरं तत्तु वारणस्य ([†]विनिर्दिशेत् ॥
पर्शुकास्तु समाश्रित्य निष्कोसस्य तु पार्श्वतः ॥ २८ ॥
मर्म प्राणहरं तत्तु वारणस्य) नराधिप ॥
पक्षतोऽप्यथ नागस्य मर्मैकं समुदाहृतम् ॥ २९ ॥
क्षते तस्मिन्महीपाल वातानाहः प्रधावति ॥
वारणस्य महीपाल कक्षाभागं समाश्रितम् ॥ ३० ॥
मर्म तस्मिन्क्षिते नागं पाकलस्तु विनाशयेत् ॥
तनुभागस्य चाधस्तान्मर्म रन्ध्रसमाश्रितम् ॥ ३१ ॥
तस्मिन्क्षिते वारणस्य व्याधिरुत्कर्णको भवेत् ॥
कक्षाभागस्य मध्ये तु क्षयभागं समाश्रितम् ॥ ३२ ॥
मर्म प्राणहरं विद्धि वारणस्य महीपते ॥
उपरिष्टात्तु कायस्य मर्मभागाः प्रकीर्तिताः ॥ ३३ ॥
गात्रापरे प्रवक्ष्यामि मर्माणि प्रविभागशः ॥
आसनस्य तु पार्श्वे तु मर्मैकं समुदाहृतम् ॥ ३४ ॥
ततस्तस्मिन्क्षते नागं गात्रशोफो विनाशयेत् ॥
अपस्कारस्य चाधस्ताद्वैशाखस्य तु मध्यतः ॥ ३५ ॥
तत्र क्षतस्तु मातङ्गः स्तब्धगात्रः सदा भवेत् ॥
गात्रस्य पूर्वभागे तु जवभागस्य पार्श्वतः ॥ ३६ ॥
तत्र मर्म महीपाल सद्यः प्राणहरं स्मृतम् ॥
विष्कयोः पश्चिमे भागे वालयस्तत्र दृश्यते ॥ ३७ ॥
मर्म तस्मिन्क्षते नागः सद्यः प्राणान्विमोचयेत् ॥
विशेषयोः पश्चिमेन व(प)लिहस्तस्य मध्यतः ॥ ३८ ॥
मर्म तस्मिन्क्षते नागः सद्यः प्राणैर्वियुज्यते ॥
नेत्रमण्डलभागे तु मर्मैकं पृथिवीपते ॥ ३९ ॥

† धनुश्चिह्नान्तरगतो नास्ति पाठः खपुस्तके ।

१ क. ख. मागतः । २ क. °ष्कोसम° । ३ क.. वातानाहं । ४ क. तु यव° ।

नाम्ना आलिङ्गितं नाम तदपि प्राणनाशनम् ॥
अथास्य मोहमध्ये तु मर्मैकं समुदाहृतम् ॥ ४० ॥
तस्मिन्क्षते महीपाल नागः प्राणैर्वियुज्यते ॥
पारुष्यपश्चिमे भागे कर्मस्योपरि पार्थिव ॥ ४१ ॥
पलिपादे महीपाल मर्म प्राणहरं स्मृतम् ॥
पुरोनखस्य यत्पार्श्वे नखश्रो(स्रो)तस्य मध्यतः ॥ ४२ ॥
मर्म तस्मिन्क्षते नागं गात्रशोफो विनाशयेत् ॥
स्तनयोश्चूचुकः पार्श्वे मर्मैकं पृथिवीपते ॥ ४३ ॥
सद्यः प्राणहरं तु स्याद्वारणस्य हि पार्थिव ॥
अथ वङ्क्षणपार्श्वे तु मर्मैकं समुदाहृतम् ॥ ४४ ॥
रक्तश्रो(स्रो)तोवहं नाम तदपि प्राणनाशनम् ॥
वङ्क्षणस्याप्यधोभागे वारणस्य महीपते ॥ ४५ ॥
मर्म तस्मिन्क्षते नागः सद्यः शोफेन नश्यति ॥
अष्ठीव्यसंधिमाश्रित्य मर्मैकं तु महीपते ॥ ४६ ॥
क्षते तत्र भृशं नागस्त्वपरे परिकर्षति ॥
मण्डूक्या वाऽपि नागस्य मर्मैकं समुदाहृतम् ॥ ४७ ॥
क्षते तस्मिन्महीपाल ख(ष)ण्ढः संजायते गजः ॥
तथा सकुटिकायां तु मर्मैकं समुदाहृतम् ॥ ४८ ॥
सद्यः प्राणहरं त्वेतद्वारणस्य विनिर्दिशेत् ॥
अपरातलयोर्मध्ये मर्मैकं समुदाहृतम् ॥ ४९ ॥
सद्यःप्राणहरं तं तु वारणस्य विनिर्दिशेत् ॥
इत्येष कीर्तितः सम्यक्प्रविभागस्तु मर्मणाम् ॥ ५० ॥
यथावदनुपूर्वेण वारणानां हितैषिणा ॥
तत्र भागेषु सर्वेषु मर्माणि परिरक्षयेत् ॥ ५१ ॥
मर्मभागेषु नागानां शस्त्रकर्म न कारयेत् ॥
सुपक्वं भिषजा ज्ञात्वा शस्त्रकर्म नियोजयेत् ॥ ५२ ॥
शस्त्रकर्माणि नागस्य शिरास्नायूंश्च वर्जयेत् ॥
सर्वसंधिषु मर्माणि विज्ञाय कुशलो भिषक् ॥ ५३ ॥
मर्मभागेषु नागस्य तिर्यक्शस्त्रं न पातयेत् ॥
अनुलोमं तु यत्रैवं यथेष्टं सिद्धिरिष्यते ॥ ५४ ॥

---

१ ख. °स्नायुश्च ।

गजानां न हयानां च मानुषाणां तथैव च ॥
छेदं तु विविधं कार्यं वारणस्य विजानता ॥ ५५ ॥
वृद्धिपत्रेण तीक्ष्णेन मण्डलाग्रेण वा पुनः ॥
आसनेऽथ कलाभागे कण्ठे वंशे च गण्डयोः ॥
वृत्तच्छेद्यं तु कर्तव्यं भागेष्वेतेषु दन्तिनाम् ॥ ५६ ॥
पञ्चाङ्गुलपदं कुर्यात्सप्ताङ्गुलमथापि वा ॥
नवाङ्गुलं वा नागस्य शस्त्रकर्म विधीयते ॥ ५७ ॥
एतत्सर्वं विनिश्चित्य च्छेदं नागस्य कारयेत् ॥
वासितेनैव शस्त्रेण कर्म कुर्याद्विचक्षणः ॥ ५८ ॥
वेध्यं व्रीहिमुखेनैव मण्डलाग्रेण लेखनम् ॥
विश्रा(स्रा)वणं कुठारेण वेत्सदन्तेन च स्मृतम् ॥ ५९ ॥
सीवनं द्विविधं विद्याद्गुणवद्ग्रन्थिमत्त्वपि ॥
स्थिरेषु त्ववकाशेषु ग्रन्थिसीवनमिष्यते ॥ ६० ॥
मांसलेष्वेवकाशेषु चलेषु मृदुसंधिषु ॥
गुणसीव्यं च कर्तव्यं वारणस्य विजानता ॥ ६१ ॥
सीवने तु भवेत्सूची सूक्ष्मा त्वष्टाङ्गुलायता ॥
नागदन्तकसंस्थाना श्लक्ष्णा वै सुसमाहिता ॥ ६२ ॥
कंधरावग्रहा भागे कुक्षौ पक्षेषु संधिषु ॥
नागदन्तकसूच्या वै सीवनं सम्यगिष्यते ॥ ६३ ॥
संग्रामे हस्तियुद्धे वा विक्षतस्य तु हस्तिनः ॥
सद्यःक्षते महाराज सीवनं तु विधीयते ॥ ६४ ॥
पक्करेष्ववकाशेषु परिश्रा(स्रा)विषु दन्तिनाम् ॥
संधानान्येव कार्याणि सीव्यं तत्र न कारयेत् ॥ ६५ ॥
शतं सप्त च मर्माणि भागाभागेषु हस्तिनाम् ॥
प्रोक्तानि पालकाप्येन अङ्गराजाय पृच्छते ॥ ६६ ॥
व्रणकर्मणि नागस्य अभ्यङ्गः पूज्यते सदा ॥
स्नेहपानं च नागानां स्निग्धमेव च भोजनम् ॥ ६७ ॥

---

१ क. ख. नागेष्वेतेषु । २ ख. च्छेद्यं । ३ क. ख. तत्सदन्तेन । ४ क. °न्थिवत्त्व° । ख °न्थिमत्स्वपि । ५ क. °ष्वककालेषु । ६ क. सीवनं । ७ क. ख. कर्माणि । ८ क. ख. °कर्माणि ।

तस्मात्तु कुशलो वैद्यः श्रुतवान्कालदेशवित् ॥
परीक्ष्यकारी शूरश्च जितक्रोधो जितेन्द्रियः ॥ ६८ ॥
अप्रमत्तश्च दक्षश्च यशसश्चैव रक्षिता ॥
वैद्य एवंविधो राजन्न प्रमुह्यति कर्मसु ॥ ६९ ॥
एष ते पृथिवीपाल यथावदनुपूर्वशः ॥
मर्मणामिह सर्वेषामशेषेण विनिश्चयः ॥ ७० ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने मर्मविद्धो नाम द्वाविंशतितमोऽध्यायः ॥ २२ ॥

---

अथ त्रयोविंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
भगवन्कति कामानां नृपाणां विजिगीषताम् ॥ १ ॥
प्रायशो युध्यमानानां वारणेषु ध्रुवो जयः ॥
संग्रामे युध्यमानानां कायवेध्यं पृथग्विधम् ॥ २ ॥
शस्त्राकृतिविशेषैश्च तथा छेद्यं च जायते ॥
शस्त्रकर्मणि चाप्येवं दन्तैर्वा प्रतिहस्तिनाम् ॥ ३ ॥
तत्राल्पोऽथ कथं कश्चिद्व्रणः प्राणान्तिको भवेत् ॥
अथ येन प्रबाधन्ते प्राणास्तद्वक्तुमर्हसि ॥ ४ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
स्वभावात्सर्वसत्त्वानां प्राणा देहसमाश्रयाः ॥ ५ ॥
देहप्राणेष्वथाऽऽपन्नाः प्राणा मर्माश्रयास्तथा ॥
तेजोनिलगुणैः सार्धं पुरुषो मर्मसंश्रयः ॥ ६ ॥
तस्मान्मर्माश्रयं विद्यात्प्राणबाधाकरं व्रणम् ॥
मर्म चाप्यभिविज्ञेयं प्रतिभागाच्चतुर्विधम् ॥ ७ ॥
सद्यः प्राणहरं चैव तथा कालान्तरेण च ॥
तथा सशल्यप्राणं च वैगुण्यकरमेव च ॥ ८ ॥
तत्रानलगुणैर्युक्तं सद्यः प्राणहरं भवेत् ॥
कालान्तरप्राणहरं सौम्याग्नेयमुदाहृतम् ॥ ९ ॥

---

१ क. शूरस्य । २ क. ख. प्राणदे° । ३ क. प्राणम° ।

तथा सशल्यप्राणं च वायव्यं कथ्यते बुधैः ॥
सौम्यं वैगुण्यकरणमिति*पूतगुणाश्रयः ॥ १० ॥
सद्यःप्राणहराण्यादौ तत्र वक्ष्यामि पार्थिव ॥
गुदोऽण्डकोशो हृदयं मेण्ढ्रं पणवकस्तथा ॥ ११ ॥
मन्याभागे विवेकश्च मलो नाभिस्तथैव च ॥
मृदुकुक्षी सनिष्कोशौ कक्षाभागौ तथा तलाः ॥ १२ ॥
वङ्क्षणौ मुष्कभागो च तालु जिह्वा स्तनान्तरम् ॥
रन्ध्रौ कुम्भं तथा वक्षः कण्ठश्चोदरमेव च ॥ १३ ॥
करीषास्राव इत्येवं सद्यःप्राणहराणि तु ॥
चतुस्त्रिंशत्तु मर्माणि निर्दिष्टानि मनीषिभिः ॥ १४ ॥
अग्निर्जीवाश्रयो यस्माज्जीवश्चाग्निसमाश्रयः ॥
तस्मात्तत्र क्षते क्षिप्रं प्राणांस्त्यजति वारणः ॥ १५ ॥
कालान्तरप्राणहराण्यथ वक्ष्यामि तच्छृणु ॥
प्रोहे सकुठिके त्र्यस्थिसंदानो तलसंधयः ॥ १६ ॥
विक्षोभौ कूर्मभागौ च उरःसंधिरुरस्तथा ॥
पलिहस्तौ यतस्थाने अन्तर्बाहू तथैव च ॥ १७ ॥
कालान्तरविनाशीनि याप्याभागौ च पार्थिव ॥
निर्याणे चैव कुम्भे च स्रोतसः कुम्भयोरपि ॥ १८ ॥
क्षीरिके च महीपाल पुरस्कारे तथैव च ॥
पञ्चविंशतिरेतानि ज्ञेयानि परिसंख्यया ॥ १९ ॥
क्रमाद्यावत्क्षपयति साम्यस्तेजोगुणैर्गुणात् ॥
यस्मात्क्रमेण म्रियते कालप्राणहरं ततः ॥ २० ॥
तत्रोपद्रवजातं च रोमस्थमभिलक्षयेत् ॥
ततः सशल्यप्राणानि प्रवक्ष्याम्यनुपूर्वशः ॥ २१ ॥
निर्याणश्चैव कुक्षी च स्रोतसी कर्णयोस्तथा ॥
कुम्भश्चैव महीपाल पुरस्कारोऽथ चूचुके ॥ २२ ॥
स्यातामक्षिगुहे चैव बिदुलं वदतां वर ॥
विद्यात्सशल्यप्राणानि मर्माणीह चतुर्दश ॥ २३ ॥

---

* भूत इति स्यात् ॥

---

१ क. गणना° ।

यावच्छल्यनिरुद्धस्तु वायुस्तिष्ठति मर्मणि ॥
तावत्सशल्यप्राणेषु स जीवति मृतोऽन्यथा ॥ २४ ॥
अथ वैगुण्यकारीणि अपस्कारस्तथैव च ॥
विज्ञाय तु गुदाभागो क्षयभागं ततः परम् ॥ २५ ॥
अस्ये चैव विभागे च करस्य श्रो(स्रो)तसी तथा ॥
प्रतिमानं गुदाभागो चत्वारो ग्रन्थयस्तथा ॥ २६ ॥
तथाऽन्तरपरे स्यातां प्रवक्ष्याम्यत उत्तरम् ॥
करश्च प्रत्यगंसौ च प्रतीकासौ तथैव च ॥ २७ ॥
नेत्रे चैव महीपाल मुनिभिः परिकीर्तिते ॥
ग्रीवा चान्तरसूना च वाहित्थं च नराधिप ॥ २८ ॥
पेचकश्च वितानं च वैगुण्यकरसंग्रहः ॥
एतान्येव चतुस्त्रिंशत्प्रोक्तानि मनुजाधिप ॥ २९ ॥
स्थिरा यतः सौम्यगुणाः स्थिरत्वाच्च न मृत्युदाः ॥
तस्मात्तद्वैगुण्यकरं मृत्युदं क्लेशयेन्न तम् ॥ ३० ॥
इति सप्तोत्तरं प्रोक्तं शतं ते मर्मणां मया ॥
धैर्यं वीर्यं बलं सत्त्वं संघातः पौरुषा गुणाः ॥ ३१ ॥
एतेष्वधिष्ठिताः सर्वे गुणा मर्मसु हस्तिनाम् ॥
यस्मात्तस्मात्क्षते तत्र प्राणांस्त्यजति वारणः ॥ ३२ ॥
मारणादुच्यते मर्म नैरुक्तैः शास्त्रनिश्चयात् ॥
तथैवाष्टविधं प्राहुः संख्यया मनुजाधिप ॥ ३३ ॥
शिरामर्मास्थिमर्माश्च(?) धमनीमर्म चापरम् ॥
स्नायुमर्म च विज्ञेयं कोष्ठमर्म तथैव च ॥ ३४ ॥
संधिमर्म च विज्ञेयं स्रोतोमर्म तथैव च ॥
दोषमर्म च विज्ञेयं वक्ष्यन्ते तत्र हेतवः ॥ ३५ ॥
शिरामर्मण्यभिहतो रक्तश्रा(स्रा)वाद्गजोऽधिकः ॥
क्षिप्रं वियुज्यते प्राणैस्तस्मात्तदभिरक्षयेत् ॥ ३६ ॥
अस्थिमर्मण्यभिहतः शुक्रमज्जापरिश्र(स्र)वात् ॥
परित्जेयद्गजः प्राणानस्थिधातुक्षयात्ततः ॥ ३७ ॥
हिंस्यते धमनीमर्म यदा नागस्य मर्मसु ॥
तदाऽप्यगुणनिश्रा(स्रा)वाद्गजस्त्यजति जीवितम् ॥ ३८ ॥

---

१ क. ख. मृतेऽन्य° । २ क. ख. शिरोम° ।

स्नायुमर्मण्यभिहतः स्नायुसंश्र(स्र)वणाद्गजः ॥
विश्लिष्टसंधिर्भवति स्नायुर्देहनिबन्धनः ॥ ३९ ॥
कोष्ठमर्मण्यभिहतः करीषस्रावपीडितः ॥
महाक्षयाभिभूतस्तु प्राणांस्त्यजति वारणः ॥ ४० ॥
संधिमर्माभिघाताच्च चेष्टावैगुण्यमुत्तमाः ॥
प्राप्नुयाद्वारणः क्षिप्रं मरणं वातपीडितः ॥ ४१ ॥
श्रो(स्रो)तोमर्माभिघाताच्च स्वगुणैः स्रोतसां गजः ॥
विमुक्तस्त्यजति प्राणान्विगुणो वाऽपि जीवति ॥ ४२ ॥
दोषाशयाभिघाताच्च क्षीणपित्तकफानिलः ॥
प्राणांस्त्यजति मातङ्गो दोषमर्मसु ताडितः ॥ ४३ ॥
रक्षणं मर्मणां नित्यं तस्मात्कार्यं विचक्षणैः ॥
शस्त्रकर्मविधिज्ञैश्च कार्यं शस्त्रावचारणम् ॥ ४४ ॥
असिद्धिरल्पसिद्धिर्वा हिंसितेष्वपि कर्मसु ॥
विपत्तिः श्रेयसी वाऽपि सिद्धिर्याहच्छिकी भवेत् ॥ ४५ ॥
अस्थिस्नायूपपन्ना ये गम्भीराश्चैव सर्वशः ॥
शिरामर्मगता ये च न च्छेद्या ये च संधिषु ॥ ४६ ॥
स्नायुजाले न कार्यं च तज्ज्ञैः शस्त्रावचारणम् ॥
अनुलोममृजुगतिं त्वचि सम्यक्समाहितम् ॥ ४७ ॥
श्वयथूनां विदग्धानां कार्यं शस्त्रावचारणम् ॥
यथा व्यापद्यते नागः स्वयोगाच्छस्त्रकर्मणाम् ॥ ४८ ॥
न तथा म्रियते दोषैः प्रवृद्धैरपि वारणः ॥
शस्त्रकर्मणि निर्युक्ते सेवनं सर्पिषा हितम् ॥ ४९ ॥
पानं च सर्पिषः श्रेष्ठं स्निग्धं भोजनमेव च ॥
शस्त्रकर्मणि निर्युक्ते हवनं शान्तिकर्म च ॥ ५० ॥
वारणस्य तु कर्तव्यं यथोक्तं शस्त्रकर्मणि ॥
तस्मात्सर्वप्रहाराणां विद्धमादि प्रकीर्त्यते ॥ ५१ ॥
अर्वाच्छस्त्रावसृष्टानि त्ववकृत्तं तथैव च ॥
वृष्टदग्धे च राजेन्द्र पश्चाद्गे(न्य)व्रणसंज्ञितम् ॥ ५२ ॥
तस्माद्विद्धमिति प्राहुः शास्त्रतत्त्वार्थकोविदाः ॥
तस्मात्प्रयोगकुशलं लघुहस्तं जितेन्द्रियम् ॥ ५३ ॥

---

१ क. °धिश्चैव का° । २ क. °ज्ञतव्रण° ।

परीक्ष्यकारिणं शूरं बलिनं शास्त्रकोविदम् ॥
यशस्विनमलुब्धं च जितक्रोधं जितक्लमम् ॥
वैद्यं नियोजयेद्राजा प्रतिकर्मसु हस्तिनाम् ॥ ५४ ॥ इति ।

तत्र श्लोकाः(कः)—

इति भिषगनुशिष्य बुद्धी शुभमशुभं च ततः शुभं च कुर्यात् ॥
विपुलबलयशोर्थकीर्तिहेतोर्विपुलगुणार्थी गजे परीक्ष्य ॥ ५५ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने
मर्मविद्धो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## अथ चतुर्विंशोऽध्यायः ।

---

अङ्गराजो महाप्राज्ञः कुबेरसमविक्रमः ॥
हस्तिशालासमासीनं पालकाप्यं स्म पृच्छति ॥ १ ॥
भगवन्यत्त्वया प्रोक्तं रोगज्ञानं सलक्षणम् ॥
तत्र मे संशयः कश्चित्तन्मे शंसितुमर्हसि ॥ २ ॥
शुद्धश्लेष्मसमुत्पत्तिः शुद्धपाकल आदितः ॥
प्राग्भागोष्णः कथं विप्र पश्चाद्भागेन शीतलः ॥ ३ ॥
न चोष्णलक्षणं चेति हस्तिनां जायते ज्वरः ॥
निदानलक्षणो ह्येष यस्त्वयोक्तो महामुने ॥ ४ ॥
कथं साध्यश्च बालोऽयं कूटश्चायं न सिध्यति ॥
समानदोषैर्विप्रेन्द्र तावुभावपि कीर्तितौ ॥ ५ ॥
पक्कलः पुण्डरीकश्च वातपित्तकृतावुभौ ॥
विकारेषु विरुध्येते चिकित्सायां तथैव च ॥ ६ ॥
शनैः क्षीयेत वा केन हेतुना च मृदुग्रहः ॥
कथं च भूतसंसृष्टो दृष्टः कुक्कुटपाकलः ॥ ७ ॥
दैवाच्च केचिदिच्छन्ति दोषतश्चापरे जनाः ॥
एकाङ्गग्रहसंज्ञस्तु पाकलो मुनिसत्तम ॥ ८ ॥
दृश्यते भूतसंसृष्टो दोषतश्च न दृश्यते ॥
स कृशत्वेन संयोज्यः कथं तीक्ष्णोदरानलः ॥ ९ ॥

शारदश्चोपलक्ष्यश्च प्रसुप्तः पाकलो भवेत् ॥
महापाकलसंज्ञश्च श्लेष्मणः संचयाद्भवेत् ॥ १० ॥
न चाऽऽदौ क्रियते कस्मात्प्रतीकारः कफस्य वै ॥
महत्त्वं चैव यत्तस्य तन्मे शंसितुमर्हसि ॥ ११ ॥
एतान्सपरिहारान्मे सनिरुक्तान्ससंभवान् ॥
तत्त्वतो निखिलान्प्रश्नान्महार्थान्वक्तुमर्हसि ॥ १२ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
शृणु राजन्नवहितो यन्मां पृच्छसि संशयम् ॥ १३ ॥
नाभेरुपरि पित्तस्य स्थानं हृदयमाश्रितम् ॥
नाभेः पश्चिमभागे तु स्थानं वायोर्निरुच्यते ॥ १४ ॥
प्रोक्तान्यामाशयः पर्वाण्युरः कण्ठः शिरस्तथा ॥
स्थानान्येतानि सर्वाणि श्लेष्मणो दन्तिनां नृप ॥ १५ ॥
शुद्धपाकलनिर्वृत्तौ स्थानात्पित्तं च विच्युतम् ॥
श्लेष्माणं पश्चिमं भागमानयेत्सह वायुना ॥ १६ ॥
ततः श्लेष्मानिलौ तत्र शीतलं कुरुते गजम् ॥
प्राग्भागसोष्मता तस्य सा तु पित्तस्य वीर्यतः ॥ १७ ॥
सुरशापाद्गजेन्द्राणामन्तःस्वेदत्वमाहितम् ॥
न चोष्मलक्षणस्तेषां हस्तिनां जायते ज्वरः ॥ १८ ॥
कदाचिदङ्गमत्यङ्गं यदा गच्छति मारुतः ॥
तेन वालस्य राजेन्द्र युज्यते यदि भेषजम् ॥ १९ ॥
तेन सिध्यति बालोऽयं कूटहेतुः प्रवक्ष्यते ॥
मुक्त्वा स्थानानि सर्वाणि कूटादानं प्रभञ्जनः ॥ २० ॥
सहसा हृदयं गच्छेद्धृतश्चापि च पातयेत् ॥
हृदयग्रहणाद्वायुः कूटस्तेन न सिध्यति ॥ २१ ॥
व्यानो वायुः प्रकुपितो ह्युरान्सश्रितो नृप ॥
पित्तमुत्क्षिप्य जनयेत्पक्कलं कोपमाश्रितम् ॥ २२ ॥
गुरुस्थानोपरोधाच्च रौद्रस्तस्माद्भवेद्गजः ॥
इत्येष पाकले हेतुः पुण्डरीके प्रवक्ष्यते ॥ २३ ॥
मारुतः कुपितः पित्तं कोपयेन्मनुजाधिप ॥
पित्तं सरक्तं नागस्य त्वचं दूषयति प्रभो ॥ २४ ॥

---

१ क. °दश्चोपजायेत ल° । २ क. कूटे हेतुः प्रचक्षते ।

तस्माद्दृष्ट्युक्तो विकारोऽयमधिकश्चैव लक्षयेत् ॥
मारुतः कुपितो देहे कारणैः पूर्वकीर्तितैः ॥ २५ ॥
मांसं मेदो रसं रक्तं मज्जां शुक्रं च दन्तिनाम् ॥
यस्मात्क्रमोत्क्षपयति तेनैष क्षीयते शनैः ॥ २६ ॥
श्लेष्माभिभूतो योऽत्यर्थं पेशलं तु लभेत वै ॥
समानः कुपितस्तस्य प्राणापानौ च दूषयेत् ॥ २७ ॥
व्यानोदानौ च संहृष्य कुर्यात्कुकुटपाकलम् ॥
शरीराणां च भूतानां विपर्यासस्ततो भवेत् ॥ २८ ॥
विपर्यस्तेषु भूतेषु भूतसंश्लेषवद्भवेत् ॥
तस्माद्भूतोपसृष्टस्तु दृष्टः कुकुटपाकलः ॥ २९ ॥
स्पृष्टस्य वारुणैः पाशैर्गजस्याऽऽदौ नराधिप ॥
पीड्यमानस्य तैः पाशैर्वातः श्लेष्मा च कुप्यति ॥ ३० ॥
एवं स दैविको भूत्वा पश्चाद्दोषेण लिप्यते ॥
आदानं दैवमेवास्य दोषाणां संप्रकीर्तितम् ॥ ३१ ॥
पित्तादानैर्गजे पित्तं वृद्धमग्निं विवर्धयेत् ॥
तीक्ष्णज्योतिः स भवति शारदत्वं स गच्छति ॥ ३२ ॥
ततः सुषिरमांसत्वाद्वायुर्नागस्य कुप्यति ॥
श्लेष्माणं कोपयेत्पश्चाद्विकारः श्लैष्मिकः स्मृतः ॥ ३३ ॥
बलेन संचितः श्लेष्मा जठरं कुरुते गजम् ॥
स यदा जठरो नागः सहसा कर्म कार्यते ॥ ३४ ॥
समानः कुपितं प्राणं पश्चात्संदूषयेद्यतः ॥
क्षीयते हेतुना तेन कृशत्वे तु प्रतिक्रिया ॥ ३५ ॥
मारुतः कफमादाय हृदयं संश्रितस्तु यत् ॥
करोति महतीं पीडां तेनायं पाकलो महान् ॥ ३६ ॥
वातोऽत्र कारणं यस्मात्तेन वाते प्रतिक्रिया ॥
कर्तव्या नृपशार्दूल पालकाप्यमतानुगा ॥ ३७ ॥
महारोगो यतश्चायं पतनाच्च महद्भयम् ॥
उभयत्र महत्त्वाच्च महापाकलसंज्ञितः ॥ ३८ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने दोषविवायो(चयो) नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

१ क. ख. °मात्क्षिप°। २ क. ख. दूष्यते। ३ क. सादरत्वं च। ४ क. °तः शुषि°।

## अथ पञ्चविंशोऽध्यायः।

---

अङ्गराजो हि चम्पायां पालकाप्यं स्म पृच्छति ॥
भगवन्नग्निदग्धानां वारणानां महामुने ॥ १ ॥
व्रणा देशेषु जायन्ते नानासंस्थानवर्णकाः ॥
तेषां रूपं चिकित्सां च ब्रवीतु भगवान्मम ॥ २ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
तत्राग्निदग्धो द्विविधस्त्वग्गतः स्फोट एव च ॥ ३ ॥
द्रवात्स्थिराच्च विज्ञेयः स तु दाहो नराधिप ॥
भवेज्जतुमधूच्छिष्टसगुडामेध्यपावकैः ॥ ४ ॥
अङ्गराशीविषाभ्यां च तथाऽशनिनिपाततः ॥
दाहयोनिः स्वयं प्रोक्ता बहुधा पार्थिवोत्तम ॥ ५ ॥
विकल्पतः पञ्चविधो राजन्दाहः प्रकीर्तितः ॥
परंपरादिद्रव्येभ्यस्तथाऽऽदित्याग्निसेवनात् ॥ ६ ॥
ज्वालाबाष्पैश्च नागानां दग्धमुत्पद्यते नृप ॥
तत्र वैद्यो यथाशास्त्रं कर्म कुर्यादतन्द्रितः ॥ ७ ॥
परिषेकं प्रदेहं च चूर्णं तैलं घृतं वसाम् ॥
अतिदग्धस्य नागस्य यथाक्रमं सुखोदकम् ॥ ८ ॥
मे(इ)क्षुरसं पयश्चैव मधुकं च सशर्करम् ॥
तण्डुलोदकमप्येवं सुराश्चैव पृथग्विधाः ॥ ९ ॥
एष कार्यो भवेत्सेको वैद्यैः संनिहितैः सदा ॥
एतेन दाहो रोगश्च वेदना च प्रशाम्यति ॥ १० ॥
अतः प्रलेपं कुर्वीत मधुपर्णी शतावरी ॥
तालीसपत्रमञ्जिष्ठातिलाश्चोतेन लेपयेत् ॥ ११ ॥
ततः सयष्टीमधुकं सर्वमालोड्य भाजने ॥
प्रलेपं कारयेद्वैद्यस्त्वग्निदग्धप्रशान्तये ॥ १२ ॥
एवमेवानुपूर्वेण कुर्यादालेपनं भिषक् ॥
अश्वत्थोदुम्बरप्लक्षान्मधुकं काकजम्बुकम् ॥ १३ ॥

---

१ क. च प्रब्रवीतु भवा° । २ ख. °ज्जन्तुम° । ३ क. ख. °च्छिष्टे स° । ४ क. °लाश्चेते° ।

एलां मधुरसां चैव श्लक्ष्णपिष्टानि कारयेत् ॥
तेनास्य व्रणमालिम्पेद्घृताक्तेन पुनः पुनः ॥ १४ ॥
दाहो निवर्तते तेन वेदना चोपशाम्यति ॥
लभते सौमनस्यं च यवसं चाभिनन्दति ॥ १५ ॥
रोध्रं च मांषपर्णी च हरिद्रे चाप्युभे तथा ॥
क्षीरिकायाः शतावर्याः पयसा च घृतं पचेत् ॥ १६ ॥
ततोऽस्य दग्धं नागस्य म्रक्षणेन प्ररोहति ॥
अथवा रोपणं तैलं विपचेत्तेन रोपयेत् ॥ १७ ॥
मांसी समङ्गाममृतां माषपर्णीं तथैव च ॥
मधुकं च समञ्जिष्ठं कुशमूलं च पेषयेत् ॥ १८ ॥
एतत्सर्वं समाहृत्य क्षीरेण सह योजयेत् ॥
तत्तैलं पाचयेद्धीरो यथायोगं यथासुखम् ॥ १९ ॥
तेनास्य व्रणमभ्यङ्ग्यान्नित्यमेवमतन्द्रितः ॥
क्षिप्रं प्ररोहते तेन अग्निदग्धं समन्ततः ॥ २० ॥
तथैव कारयेच्चूर्णं रोपणं मनुजाधिप ॥
पद्मं समङ्गा तगरं जीवकर्षभकावुभौ ॥ २१ ॥
मधुकं धातकीपुष्पं रोध्रं सर्जरसं तथा ॥
बलामतिविषां चैव सूक्ष्मचूर्णानि कारयेत् ॥ २२ ॥
प्रतिचूर्णनमेवं स्यादिदमन्यच्च रोपणम् ॥
सुपिष्टानथ कृष्णांश्च तिलांस्तु मधुना सह ॥
घृतेन मिश्रयित्वाऽथ रोपणं वा प्रलेपनम् ॥ २३ ॥
सुप्ररूढव्रणं नागं प्रसूनत्वक्तनूरुहम् ॥
दोषप्रशमनार्थाय घृतेन सह भोजयेत् ॥ २४ ॥
इत्यङ्गराजो विधिवद्धस्तिशास्त्रसमाश्रयम् ॥
श्रावितं(तः) पालकाप्येन अग्निदग्धचिकित्सितम् ॥ २५ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने वृद्धोपदेशे तृतीये शल्यस्थानेऽग्निदग्धचिकित्सितं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

१ ख. शालां । २ ख. सर्वर° ।

## अथ षड्विंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
कथं लूताः संभवन्ति वारणानां महामुने ॥ १ ॥
स पृष्टस्त्वङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
अतो लूताः प्रवक्ष्यन्ते भास्करानुचराश्च ताः ॥ २ ॥
तासां लालाः प्रति प्राप्ता विनाशयति वारणम् ॥
मालती पुष्कराग्रे तु काकोल्यपि च वर्त्मनि ॥ ३ ॥
अङ्गुल्यां मेदिनी नाम स्थूलहस्तेऽतिभावनी ॥
कुम्भे च प्रोभवा नाम विद्वोश्च हरिणी स्मृता ॥ ४ ॥
आसने विजया नाम श्यामा ज्ञेया तथोरसि ॥
ओष्ठीव्ये मधुका नाम धनुर्नामा तु या मुखे ॥ ५ ॥
अंसयोरपि कापोती सुभगा दन्तवेष्टयोः ॥
मण्डे गृध्रनखी नाम पांशुका गात्रयोरपि ॥ ६ ॥
कर्णिकारी भवेत्प्रोहे कोशे च कुक्कुटी स्मृता ॥
अक्षिका तल्पले चैव मेढ्रे वसुमती तथा ॥ ७ ॥
नाभ्यां पुष्करमध्ये तु स्वगता रन्ध्रदेशयोः ॥
नाम्ना गुल्मवती नाम मस्तकेषीकयोर्दशेत् ॥ ८ ॥
एकविंशतिरित्येता देशेष्वन्येष्वपि स्मृताः ॥
सर्वाः संमोहसंदाहव्यापत्सु परिकीर्तिताः ॥ ९ ॥
सर्वासु च भ्रमच्छर्दिस्तृष्णादाहसमुद्भवाः ॥
विशेषान्मस्तकेषीकास्तनगण्डकटाँक्षिषु ॥ १० ॥
स्तनान्तराण्डकोशांसतल्पलेष्वप्रतिक्रिया ॥
धूमभ्रमरशुभ्राभ्रपकोदुम्बरसंनिभाः ॥ ११ ॥
कटुकाश्च कपोताश्च कर्णिकारनिभास्तथा ॥
वदन्ति वर्णतो लूतास्तासां कुर्यात्क्रियां भिषक् ॥ १२ ॥
तां छिन्द्यान्मण्डलाग्रेण प्रोत्क्षिप्य बडिशेन तु ॥
ताश्चाग्निना दहेत्सम्यक्कुर्याच्चाऽऽशु प्रलेपनम् ॥ १३ ॥

---

१ क. प्रावता । २ क. ख. विद्वेश्च । ३ क. भ्रेया । ४ क. ख. आपीघे । ५ क. कुर्कुटी । ६ क. ख. °योर्देशेत् । ७ क. °ट्यादिषु ।

हरिद्राद्वयमञ्जिष्ठामपुन्नाटफलेन तु ॥
श्लक्ष्णैर्हिङ्गुलकागारधूमसैन्धवसंयुतैः ॥ १४ ॥
प्रपौण्डरीकरोध्रत्वक्सारिवोत्पलकन्दुकैः ॥
नवनीतयुतैः क्षीरैः क्षालितं लेपयेत्पुनः ॥ १५ ॥
ततो मन्त्रं त्रिरुक्त्वाऽस्य पुनः कुर्याच्चिकित्सितम् ॥
शीतावगाहक्षीराज्यपानमृल्लेपनैः शुभैः ॥ १६ ॥
उत्तरे हिमवत्पार्श्वे पर्वतो गन्धमादनः ॥
तस्य कुक्षौ निवसति कुमारी पुण्यलक्षणा ॥ १७ ॥
ऐणेयचर्मवसना सर्पमेखलमण्डिता ॥
गोनसांश्चोत्तरां कृत्वा भुङ्क्ते नानाविधं विषम् ॥ १८ ॥
सा तत्र नित्यं लपति विद्या जाङ्गुल्यहं शुभा ॥
विषाण्यहं दोषयामि निहन्मि विषकुम्भके ॥ १९ ॥
मया मन्त्रपदाः सृष्टा यैर्दष्टः साध्यते गजः ॥
स मां स्मरतु मन्त्रांश्च दष्टो यो लूतया क्वचित् ॥ २० ॥

'इरिलि मिरिलि द्रमिडि द्रामिडि गुलमगुलमाशिरोवेष्टानि अङ्गानामङ्गनाटानि अङ्गानां दंशानाशने यक्षराक्षसपिशाच मिरिलि स्वाहा' ।

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने षड्विंशो लूताध्यायः ॥ २६ ॥

---

अथ सप्तविंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
चरन्तस्तेऽपि बहवो विषकीटा नराधिप ॥ १ ॥
तस्मिन्मिथुनकाले तु मुदिता जन्तवः स्मृताः ॥
सृजन्ति शुक्रं मूत्रं वा पुरीषं स्वेदमेव वा ॥ २ ॥
हस्तिनां यदि चेत्काये पतेयुर्मनुजाधिप ॥
स्फोटास्तत्रोपजायन्ते तस्मिन्देशे महारुजाः ॥ ३ ॥
अग्निदग्धा इवाऽऽभान्ति दाहश्चान्तः प्रजायते ॥
हस्तेन जिघ्रत्यसकृल्लालां च विसृजत्यपि ॥ ४ ॥

---

१ क. या । ख. सा । २ क. °शो भूता° ।

सुखं न लभते चैव यवसं नाभिनन्दति ॥
परिमूत्री भवेच्छ्वासी मुहुंस्तुदति विस्वरम् ॥ ५ ॥
विसर्प इति तं प्राहुर्दृष्ट्वा केचिदपण्डिताः ॥
एतदेवास्य विज्ञानमत ऊर्ध्वं चिकित्सितम् ॥ ६ ॥
जलौकाभिर्हरेद्रक्तं शस्त्रेण निशितेन वा ॥
शुद्धे तस्मिन्हृते रक्ते चेन्द्रगोपकसंनिभे ॥ ७ ॥
शीतलेन ततः सिञ्चेत्सलिलेन मतङ्गजम् ॥
अथास्य लेपं वक्ष्यामि येनायं लभते सुखम् ॥ ८ ॥
खदिरं चाश्वकर्णं च धवं शैलमुदुम्बरम् ॥
अश्वत्थं सिन्दुवारं च उशीरं नलदं तथा ॥ ९ ॥
वरुणस्य प्रवालानि करञ्जतरुजानि वा ॥
अश्वमारकनिर्गुण्ड्योर्मधूकस्य तथैव च ॥ १० ॥
तगरः श्वेतकिणिही श्यामा काला तथैव च ॥
श्लक्ष्णपिष्टकृतांश्चैताञ्शीतले भाजने स्थितान् ॥ ११ ॥
कृष्णमृत्तिकया सार्धं घृतेन सह संसृजेत् ॥
दिह्यात्प्रलेपेनैतेन सुखी संपद्यते गजः ॥ १२ ॥
परिषेकस्ततः कुर्याद्विषनाशनमुत्तमम् ॥
क्षीरवृक्षत्वचश्चैव मधूकाश्मन्तकत्वचः ॥ १३ ॥
श्लक्ष्णपिष्टं द्रवीकृत्य नवे कुम्भे निपातयेत् ॥
तेन कुर्यात्परीषेकं ततः संपद्यते सुखी ॥ १४ ॥
अभ्यङ्गः शतधौतेन सर्पिषा चैव कारयेत् ॥
अङ्कोठं वरुणं शेलुं तथा द्वे च पुनर्नवे ॥ १५ ॥
श्वेतां श्यामां च भा⋯⋯रोहिषं चापि तत्समम् ॥
सलिले पाचयेदेनं ततस्तमवतारयेत् ॥ १६ ॥
तस्मिन्नेव च निक्काथे द्विद्रोणे भेषजं भवेत् ॥
दन्तीमूलपलं चैव तृ(त्रि)वृतायास्तथैव च ॥ १७ ॥
चित्रकस्य पलं चैव शुकाख्यायास्तथैव च ॥
फणिज्झकपलं चैव विडङ्गानां पलं तथा ॥ १८ ॥
पिप्पलीनां पलं चैव शृङ्गवेरपलं तथा ॥
पाठाया गजपिप्पल्या बीजपूरफलं तथा ॥ १९ ॥

---

१ क. °हुर्नृद° ।

यावन्त्येतानि सर्वाणि घृतं तावत्प्रदीपयेत् ॥
तत्सर्वमेकतः कृत्वा शनैर्मृद्वग्निना पचेत् ॥ २० ॥
एवं तु पाययेन्नागं विषं तेन प्रशाम्यति ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेनाथ नोदितः ॥ २१ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने सप्तविंशो विषकीटचिकित्साध्यायः ॥ २७ ॥

---

अथाष्टाविंशोऽध्यायः ।

---

अथ व्यालेन दष्टस्य लक्षणं वारणस्य च ॥
चिकित्सां च महाराज शृणु कीर्तयतो मम ॥ १ ॥
व्यालो यदाऽक्षिकाविष्टो वारणं दशति प्रभो ॥
वातमूर्छानिदानानि द्विरदः कुरुते तदा ॥ २ ॥
व्यालवद्भ्रमते क्रुद्धो वित्रसेच्च जलाशयात् ॥
व्यापन्नचित्तश्च गजो मूर्छते व्यथतेऽपि च ॥ ३ ॥
एतल्लक्षणविज्ञानं चिकित्साऽतः प्रवर्तते ॥
दहेच्छलाकया तस्य दशां भिषगतन्द्रितः ॥ ४ ॥
समन्ताच्चापि दष्टस्य कार्यं शोणितमोक्षणम् ॥
तस्य कार्यं विशेषेण रात्रिक्षिप्रचिकित्सितम् ॥ ५ ॥
या तु वातगतिः प्रोक्ता क्रियास्तस्य तु कारयेत् ॥
धूपाञ्जनाभ्यङ्गविधेस्तस्य रक्षोघ्नमिष्यते ॥ ६ ॥
काश्यपस्य मताच्छेषं चिकित्सितमुपाचरेत् ॥
अनाविष्टाश्चिकित्स्यः स्यादाविष्टश्च न सिध्यति ॥ ७ ॥

तत्र श्लोकः—

इक्षुविकारः पललं तिलतैलं क्षारमार्कमिति ॥
पीतं सद्यो विषमिह शुष्काभ्रमिवानिलः क्षिपति ॥ ८ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने व्यालदष्टो नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

१ क. °ष्टस्य न । २ क. विषं हन्ति शु° ।

## अथैकोनत्रिंशोऽध्यायः ।

---

अथातः प्रदेशज्ञानं नामाध्यायं व्याख्यास्यामः ।

इति ह स्माऽऽह भगवान्पालकाप्यः । इह खलु शरीरं मूलम् । तन्मूलान्यङ्गप्रत्यङ्गानि लोकप्रसिद्धानि । पञ्चदश प्रदेशाः प्रत्यङ्गानीत्यनर्थान्तरम् ॥

तत्र प्रदेशानामग्रेऽङ्गुलिः । अङ्गुल्यभ्यन्तरे वर्त्म । ततः स्रोतसी । एतयोरन्तरं श्रो(स्रो)तोन्तरम् । तस्मात्पुष्करम् । पुष्करे राजिः । (†तदुपर्यङ्गुलम् । ) अङ्गुल्या उपरि गण्डूषः । ततोऽग्रहस्तः । गण्डूषपार्श्वयोः श्रीः । एतयोरभ्यन्तरं गण्डूषा । तदुपरि बहिष्कर्षः । एतस्य दक्षिणपार्श्वे आकर्षः । वामपार्श्वे परिकर्षः । पृष्ठत उपकर्षः । तस्यैवाभ्यन्तर उत्कर्षः । एतैः प्रदेशैः समन्वितोऽग्रहस्तः । बहिष्कर्षादुपरि मध्ये हस्तस्य संभोगः । एतस्य पार्श्वयोर्हस्तबाहू । तयोश्चाभ्यन्तरं संभोगान्तरम् । संभोगस्योपरि त्रिराजिः । त्रिराजेरुपरि पर्व । तस्योपरि स्थूलहस्तः । एतस्याभ्यन्तरे पलिहस्तः । पलिहस्तस्योपरि पृथुहस्तः । पृथुहस्तस्याभ्यन्तरेऽतिहस्तः । अतिहस्तस्याभ्यन्तरे राजयः । सर्वगता वलयश्चेति ॥

तत्र श्लोकः—

अङ्गुलीप्रभृति प्रोक्ताः क्रमेण द्विरदस्य ते ।
अष्टौ च विंशतिश्चैव प्रदेशा हस्तमाश्रिताः ॥

आस्ये कृष्णान्त(र)म् । ततस्तालु । तालुमध्ये श्रो(स्रो)तसी । अतो मध्ये तालुवंशः । ततो जिह्वाभ्यन्तरे भक्षणार्थं दशनाः षोडशाधस्ताच्चोपरिष्टाच्च । तेषु चतस्रो दंष्ट्राः । तत ओष्ठः । तस्याभ्यन्तरे वर्त्मनी । तत ओष्ठप्रस्राव ओष्ठपार्श्वयोः । ओष्ठबाहू अधस्तात् । ओष्ठसंधी ओष्ठसंध्योः । ततः सृक्किणी । ओष्ठाधो रोमकूर्च इति ॥

तत्र श्लोकः—

कृष्णान्तादय इत्येते क्रमशः परिकीर्तिताः ।
प्रदेशा मुखसंबद्धास्त्रिंशदिह तु संख्यया ॥

दन्तयोर्दन्ताग्रे दन्तमध्ये दन्तमूले । दन्तयोरुपरि दन्तवेष्टौ । एतयोरुपरि प्रवेष्टाविति ॥

---

† धनुश्चिह्नान्तर्गतः कपुस्तके नास्ति ।

---

१ क. नाम व्या° । २ क. पुष्करमध्ये ।

तत्र श्लोकः—

इत्येते त्वभिविज्ञेयाः प्रदेशा दन्तयोर्दश ।
यथावदनुपूर्वेण शिक्षाविद्भिरुदाहृताः ॥

बहिर्मुखे दन्तान्तरे प्रतिमानम् । तस्य पार्श्वयोः शम्बुके । प्रतिमानस्योपरि मध्ये मुखस्य वाहित्थम् । तस्य पार्श्वयोर्विलागौ । विलागयोरुपरि कर्कटमध्ययोः कटस्रोतसी । कटस्रोतसोरधस्तात्कटप्रस्रावौ । कटप्रस्रावयोरधस्ताद्गण्डौ । गण्डयोरधस्तात्कपोलौ । कपोलयोर्मध्ये रोमकूर्चौ । रोमकूर्चयोरधस्ताद्धनू । हन्वोरधस्तात्सगदे । तयोः संधिः सगदासंधिः । एतयोरन्तरं सगदान्तरम् । कटयोः पार्श्वतो घाटे । घाटयोरुपरि कटसंधी । कटसंध्याश्रितौ श्रवणाविति ॥

तत्र श्लोकः—

त्रयस्त्रिंशदिह प्रोक्ताः प्रदेशा मुखमाश्रिताः ॥
प्रतिमानप्रभृत्येते क्रमशः शास्त्रनिश्चिताः ॥

चक्षुषोरक्षिगुहे । अक्ष्णोरुपर्यक्षिकूटौ । अक्ष्णोरधस्तादक्षिस्रावौ । अक्ष्णोः पूर्वभागयोः कनीनिके । पश्चाद्भागयोरपाङ्गौ । पक्ष्ममण्डले वर्त्ममण्डले शुक्लमण्डले कृष्णमण्डले दृष्टिमण्डले पक्ष्मवर्त्मसंधी वर्त्मशुक्लसंधी शुक्लकृष्णसंधी कृष्णदृष्टिसंधी कनीनिकासंधी चेति ॥

तत्र श्लोकः—

प्रदेशा[1] नेत्रयोरेते द्वात्रिंशदिह कीर्तिताः ।
दृष्टिमण्डलसंयुक्ता व्यक्ता द्वादश संधिजाः ॥

शिरसि वाहित्थम् । वाहित्थस्योपरि कुम्भौ । एतस्याभ्यन्तरे कुम्भान्तरम् । एतस्याग्रे कुम्भस्योपरि बिम्बकौ । बिम्बकपार्श्वयोः पाकले । अक्षिकूटोपरीषीके । इषीकयोर्मध्य इषीकान्तरादूर्ध्वे इषीकाग्रे । इषीकाग्रयोर्बहिः पार्श्वे निर्याणम् । पार्श्वयोरधस्तान्निर्याणसंधी । निर्याणसंध्योरूर्ध्वं बिम्बकस्योपरीषीकाग्रमध्ये तिर्यगायतोऽवग्रहः[2] । अवग्रहस्योपरि पुरस्कारः । पुरस्कारस्योपरि निर्याणम् । तयोरन्तर उन्नता तिर्यगायताऽवग्रहवर्तिः । अवग्रहवर्त्या उपरि मस्तकौ । मस्तकयोर्मध्ये विदुः[3] । मस्तकयोर्बहिःपार्श्वयोर्विताने निर्याणयोः पश्चात्पार्श्वायेः कूर्ममस्तकसंधी केशाश्चेति ॥

तत्र श्लोकः—

१ क. ख. प्रदेशो । २ क. ख. °वगाहः । ३ क. ख. विदू ।

चतुर्विंशतिरित्युक्ताः शिरसः क्रमशो मया ।
यथावदनुपूर्वेण प्रदेशा हस्तिनामिह ॥

कर्णयोः कर्णाग्रे कर्णपर्वतौ । कर्णयोरधस्तात्प्राक्कर्णौ कर्णमध्ययोः । तयोः पर्यन्तौ मध्यकर्णौ। कर्णयोरधस्तात्कर्णपाली । कर्णयोर्बहिर्बहिष्कर्णौ, अन्तरेऽन्तरकर्णौ कर्णपर्वतौ । कर्णयोः कर्णपिञ्जूषौ । कर्णावर्तपार्श्वयोः कर्णपिञ्जूकौ । कर्णावर्तपार्श्वपार्श्वयोः कर्णपञ्जूकौ । अधस्तात्कर्णसंधी । ततः श्रोत्रे । श्रोत्रपार्श्वयोर्वातालके कर्णचूलिके कर्णपिप्पल्यावुद्यानवत्यावुद्यातौ चेति ॥

तत्र श्लोकः—

एते कर्णाश्रिताः शास्त्रे संख्यया दन्तिनामिह ।
त्रिंशत्प्रदेशा व्याख्याता यथावदनुपूर्वशः ॥

ग्रीवायां ग्रीवापृष्ठम् । तस्याधस्ताद्गलः । ततः कण्ठपार्श्वयोर्धमन्यौ । गलपार्श्वयोर्दुर्दुरौ । दुर्दुरयोरुपरि मन्ये । मन्ययोरुपरि (†गुहे । गुहाभ्यां समुद्गौ । समुद्गपार्श्वयोः पिण्डिके । पिण्डिकयोरुपरि गुहाभागौ । तयोर्यतस्थाने) । यतस्थानपार्श्वयोः पार्ष्णिघातौ । पार्ष्णिघातयोरुपर्युत्सङ्गौ । उत्सङ्गयोरुपरि स्कन्धः । स्कन्धमध्ये पणवकश्चेति ॥

तत्र श्लोकः—

त्रयोविंशतिरित्येते संख्यया परिकीर्तिताः ।
ग्रीवाप्रदेशा नागानां क्रमशः शास्त्रनिश्चिताः ॥

उरसि ग्रीवासंध्याश्रितोऽन्तर्मणिः । अन्तर्मणेरधस्तादुरोमणिः । उरोमणिपार्श्वयोर्गात्रसंध्याश्रितौ विक्षोभौ । विक्षोभयोर्मध्य आवर्तमणिः । आवर्तमणेः प्रभृति हृदयम् । हृदयादुरः । ततः संधिः । उरोगात्रमध्ये चतुरक्षान्तरमिति ॥

तत्र श्लोकः—

प्रदेशाः सप्त संख्याता उरसस्तु नृपोत्तम ।
हृदयस्थानप्रदेशान्प्रवक्ष्याम्यत उत्तरम् ॥

हृदय(ये) स्तनौ । (यं) चूचुकयोर्मध्ये क्षीरिके इति ॥

तत्र श्लोकः—

हृदयस्थानसह (?) ते व्यक्ता मे जठराश्रयाः ।
दश प्रदेशा व्याख्याता दन्तिनामिह संख्यया ॥

गात्रयोरासनपार्श्वयोः प्रतीकासौ । प्रतीकासयोरधस्तादंसौ । अंसाधस्तात्प्रत्यंसौ । प्रत्यंसाधस्ताद्बाहू । बाहुमध्ययोरुपरि प्रत्यंसफलकौ । अंसफलकाध-

---

† धनुश्चिह्नगतं कपुस्तके न ।

स्ताद्गात्रसंधयः । संधयोरधस्तात्क्षयौ । क्षययोरधस्तात्पृष्ठतो वहिः । तयोरधः पुरस्तात्पिण्डिकौ । पिण्डिकयोरधस्ताद्वैशाखौ । वैशाखयोरधस्ताज्जवभागौ । जवभागयोरधस्ताद्विशेषौ । विशेषयोरधस्तादुत्सङ्गौ । उत्सङ्गयोरधस्तात्प्रोत्साहौ । प्रोत्साहयोरधस्तात्पर्वणी । पर्वण्योरधस्तात्संदानभागौ । संदानभागयोरधः पक्षिपादौ । तयोरधः कूर्मौ । ततो दश नखाः । ततो दश नखविशिखाः, दश नखाग्राणि । ततो राज्यः । ततः पश्चात्पादयोर्दश नखाः । तेषामुभौ पुरोनखौ । पुरोनखद्वयस्य प्रत्येकं बहिःपार्श्वे द्वौ सनखौ । अन्तःपार्श्वे नखश्रा(स्रा)वौ । तेषां चतुर्णां बहिःपार्श्वतश्चत्वारः पार्श्वे नखाः । इत्येवं नखा विंशतिः । पार्श्वनखयोरुपरि बहिःपार्श्वेऽपराजयः । अन्तःपार्श्वे नखयोरुपरि तलप्रोहौ । तलप्रोहयोरुपरि विक्षे । विक्षयोरुपरि पलिहस्तौ । पलिहस्ताभ्यन्तरे निवाहू । पलिहस्तयोरधस्तात्प्राक्कर्णौ *नवहौ । पलिहस्तयोरुपर्यपस्कारौ । अपस्कारयोरुपरि पाद्यौ । पाद्ययोरधस्ताद्गात्रग्रहौ ॥

तत्र श्लोकः—

षडेते नवतिश्चैव प्रदेशा गात्रसंश्रिताः ॥
आसनात्प्रभृति †श्रीमानातलात्परिकीर्तिताः ॥

काय आसनम् । आसनात्परो वंशः । वंशपार्श्वे तल्पलौ । वंशादुपरि कुवंशः । कुवंशस्य मध्ये पश्चिमासनम् । पश्चिमासनात्परं त्र्यस्थि । तस्योभयपार्श्वयोरुत्कृष्टौ । अस्याः परो लाङ्गूलवंशः । पश्चिमवंश इत्येके । अपरवंश इत्यपरे । लाङ्गूलवंशस्याधस्ताल्लाङ्गूलसंधिः । लाङ्गूलसंधेरधस्तात्पेचकः । पेचकाधस्ताद्गुदः । पायुरित्येके । गुदाधस्तात्करीषस्रावः । कायस्य मध्ये कक्षाभागौ । कक्षाभागपार्श्वयोः करणौ । ततः पृष्ठतः पादौ यत्र प्रतिबद्धाः पर्युकाः । पक्षयोरुपर्यवतारौ । पक्षपश्चाद्भागयोः कुक्षी । कुक्षिमध्ये निष्कोसौ । ततः संकोसौ । तयोरुपरि मृदुकुक्षी । वंशस्य पश्चाद्भागाश्रितौ पक्षसंधी । ततः पक्षयोरधस्तादायामकाण्डे । तयोरधः कक्षौ । आयामकाण्डयोः पश्चादपरसंधिः । अपरसंधेरधस्तादनुसारौ । तत्र आहृदयाज्जठरम् । जठरमध्ये कोशम् । कोशस्याग्रतो नाभिः । तत एव हृदयादनुस्तुतान्तरं स्तनाः । तस्याः पार्श्वे स्तनौ । उत्कृष्टसंधयोरधस्तादुत्कृष्टसंधी इति ॥

तत्र श्लोकः—

* निवाह्वोः पलिहस्तयोरिति भवेत् । † 'श्रीमन्नातलात्' इति भवेत् ।

१ ख. प्रोत्सयो° । २ क. प्रदेशे ।

चत्वारिंशच्च पञ्चैव प्रदेशाः परिकीर्तिताः ।
संख्यया कुञ्जराणां तु कायमध्ये समाश्रिताः ॥

अपरयोर्जघनम् । जघनस्याधस्तात्पार्श्वयोरधस्तात्करीषप्रस्रावादधः कलाभागौ । कलाभागयोरधस्ताद्बहिःपार्श्वे जघनस्य पश्चात्पिण्डिके । पिण्डिकयोरधस्तान्मण्डूक्यौ । मण्डूक्योरधस्तात्संदानभागौ । संदानभागयोरधस्तात्संत्कुटिके । सत्कुटिकासंधिपार्श्वयोश्चत्वारो ग्रन्थयः । सत्कुटिकयोरधस्तात्पार्ष्णी । पार्ष्ण्योरधस्तात्तलप्रोहौ तयोरभ्यन्तरपार्श्वे कचाः । बहिःपार्श्वे राजयः । तलप्रोहयोरधस्तात्तलकर्णौ । ततस्तलौ । समन्ततस्तलसंधी । संध्योरुपर्यष्ठीव्यौ । अष्ठीव्याधस्ताद्वक्त्रसक्थिनी । अनन्तरं वक्त्रसक्थ्नोरधस्तादपरान्तरे । संदानभागयोरधस्तात्कूर्मौ । कूर्मयोरधस्ताद्दशनकर्म । दश नखकूर्माः । दश नखशिखाः । तेषां पुरो नखादिविभागो गात्रनखवज्ज्ञेयः । नखान्तराण्यष्टाविति ॥

तत्र श्लोकः—

चतुःसप्ततिरित्येते प्रदेशाः परिसंख्यया ।
आतलात्प्रभृति प्रोक्ता जघनात्प्रभृति प्रभो ॥

मेढ्रस्य करीषप्रस्रावाधस्तादण्डकोशः । अण्डकोशस्य पार्श्वयोर्वङ्क्षणौ । वङ्क्षणपार्श्वयोर्मुष्कौ । अण्डकोशस्योपरि कोशसंधिः । मेहनस्तलः । तत्संधिनिर्गमात्प्रत्यूहः । प्रत्यूहस्याग्रे ककुदम् । ककुदान्मेढ्राग्रम् । तस्य मध्ये श्रो(स्रो)त इति ॥

तत्र श्लोकः—

एवं मेढ्राश्रिताः शास्त्रे प्रदेशा दन्तिनामिह ।
संख्ययैकादश प्रोक्ता यथावदनुपूर्वशः ॥

लाङ्गूलस्य सर्वत्र ग्रन्थयः । लाङ्गूलमध्ये वर्तकः । अभ्यन्तरे किली । तस्या बहिः संवर्तकाः । अधस्तात्किल्याः संवालः । तस्याधस्ताद्वालपुष्करम् । वालपुष्कराधस्तात्पर्व, इति ॥

तत्र श्लोकाः—

सप्तैते संख्यया सर्वे ये लाङ्गूलसमाश्रिताः ।
प्रदेशा हस्तिनां प्रोक्ता गजशास्त्रविशारदैः ॥
हस्तास्यदन्तवदनदृक्शिरःकर्णकंधराः ।
उरोहृदयगात्राङ्गमपरामेढ्रवालधिः ॥

---

१ क. °त्सकुटि° । २ क. सकुटि । ३ क. सकुटि° । ४ क. °नस्तानलः । ५ क. सर्वस्य । ६ क. ये न लाङ्गूलमा° ।

एतानि पञ्च दश च हस्तिनोऽङ्गानि ये श्रिताः ।
चतुःषष्टिशतं प्रोक्तं ते प्रदेशाः प्रमाणतः ॥
शरीरं हि चिकित्सायाः प्रदेशज्ञानमुच्यते ।
शरीरमेवं विज्ञाय प्रदेशैर्बहुभिर्वृतम् ॥
वारणानां यथाशास्त्रं प्रतिकर्म प्रयोजयेत् ।
विदितेषु प्रदेशेषु सुखं कर्माणि वेदषुः (?) ॥
कर्मणामनभिज्ञस्तु गजं व्यापादयेद्भिषक् ।
वैतेनैव विना तस्याः प्रयोगो नेष्यते क्वचित् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने प्रदेशज्ञानं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

अथ त्रिंशोऽध्यायः ।

---

अथासनस्थमासीनमभिवाद्याङ्गराजो रोमपाद*(एव)मब्रवीत्—'भगवञ्शास्त्रे छेद्यभेद्यलेख्यविस्रावणविदारणैषणसीवनान्युक्तानि कर्माणि । तत्र कीदृशेन किंसमुत्थेन वा शस्त्रेण कीदृशं किं कर्म चानुष्ठेयम् ॥

अथोवाच भगवान्पालकाप्यः—इह खलु भो हस्तिनामागन्तवो दोषसमुत्थाश्च व्रणविधयो बहुविधा भवन्ति । तेषां दोषप्रशमनार्थं शस्त्रविधानं संस्थानप्रमाणतश्च वक्ष्यामः ॥

तत्र कुण्ठं खरधारं वक्रं ह्रस्वमनतिस्थूलं दीर्घमानतं खण्डं वर्जयेत् । गुणवद्विपरीतं न चातिनिशितं शस्त्रमवचारयेत् ॥

तत्र तीक्ष्णेनायसा विधिवन्निष्पन्नेन कुशलकर्मारः शस्त्राणि कुर्यात् । तदुत्तमेन हि द्रव्येणोत्तमेन चाऽऽचार्येण क्रियया चोत्तमया कृतं शस्त्रं कार्यं साधयेदिति । तस्मात्प्रयत्नः कार्यः शस्त्राणामुत्तमानां करणे ॥

तत्र शस्त्राणि दशनामसंस्थानानि भवन्ति । तद्यथा—वृद्धिपत्रम्, कुशपत्रम्, मण्डलाग्रम्, व्रीहिमुखम्, कुठाराकृति, वत्सदन्तम्, उत्पलपत्रम्, शलाका, सूची, रम्पकश्चेति । फालजाम्बवतापिकादर्व्याकृतयश्चेति । एतान्यग्निकर्मविधाने चत्वारि चान्यानि शल्योद्धरणानि यथायोगं सिंहदंष्ट्रं गोधामुखं

---

* आदर्शद्वयेऽप्यदृष्टः पूरितः ।

---

१ क. °नसाऽभि° । २ ख. वातोऽनेन । ३ क. चक्रं । ४ क. °मति° । ५ क. °तिशीतं । ६ क. °म्नवौष्ठता° ।

कङ्कमुखं कुलिशमुखं चेति । तिस्र एषिण्यः । एकविंशतिरेव वाऽयोमयानि साधनानि भवन्ति । तेषां संस्थानं प्रमाणं कर्माणि वक्ष्यामः—तत्र दशाङ्गुलप्रमाणं वृद्धिपत्रम् । षडङ्गुलप्रमाणं वृत्तम् । चतुरङ्गुलप्रमाणं पत्रम् । त्र्यङ्गुलविस्तीर्णं पाटनार्थं छेदनार्थं चेति । षडङ्गुलवृत्तमर्धाङ्गुलं सर्वतः । तत्र पूर्णचन्द्राकृतिरग्रे मण्डलाग्रम् । लेखनार्थमक्ष्णोर्व्रीहिमुखम् । उत्पलपत्रकमष्टाङ्गुलमेवैकम् । तथाष्टाङ्गुलप्रमाणमध्यर्धाङ्गुलविस्तृतमुभयतोधारं ( * व्रीहिमुखाकृति व्रीहिमुखम् । मुञ्जभेदनार्थं छेदनभेदनार्थं चेति । नवाङ्गुलं कुशपत्रम् । पञ्चाङ्गुलं वृत्तम् । चतुरङ्गुलं पत्रम् । अध्यर्धाङ्गुलतुलविस्तृतमुभयतोधारं ) कुशपत्राकृति गम्भीरपाकभेदनार्थं षडङ्गुलं वृत्तम् । अध्यर्धाङ्गुलं पत्रम् । पूर्णचन्द्राकृत्याग्रमण्डलाग्रम् । लेखनार्थमक्ष्णोर्व्रीहिमुखप्रमाणमुत्पलपत्रं भेदनार्थं कुठाराकृति कुर्यात् । कुठारो (?) शस्त्रप्रच्छेदनार्थम् । वत्सदन्ताकृति वत्सदन्तं दशाङ्गुलम् । एकैकमध्यर्धाङ्गुलमुखम् । एवमेतानि च त्रीण्यपि यथायोगं प्रच्छनार्थम् । सूची सेवनार्थम् । अष्टाङ्गुलं नागदन्ताकृति । त्र्यस्रा चतुरस्रा वा दृढा समाहिता समा वा शलाका वने वर्त्मविधृत्यर्थम् । रम्पकस्त्र्यङ्गुलमुखो दशाङ्गुलवृत्तः पादशोधनार्थं नखच्छेदनार्थं चेति । एषणी दशाङ्गुला विंशत्यङ्गुला त्रिंशदङ्गुला यथायोगमञ्जनशलाकाकृति मुखतः श्लक्ष्णा समा चैवमेतास्तिस्र एषण्यः प्रमाणतः कार्याः । कोरण्टकपुष्पाकृति मुखनेत्रताम्रायसं षोडशाङ्गुलमनुपूर्वं व्रणानां प्रक्षालनं कुर्याद्बडिशं चक्राग्रमष्टाङ्गुलप्रमाणमक्ष्णोः ·पटलोद्धरणार्थं चेति ॥

तत्र श्लोकः—

यथोक्तान्येवमेतानि शस्त्राणि विधिवद्भिषक् ।
कारयित्वा यथायोगं कुर्याद्व्रणविदारणम् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने
त्रिंशः शस्त्रविधिरध्यायः ॥ ३० ॥

---

अथैकत्रिंशोऽध्यायः ।

---

क्षारयोगं प्रवक्ष्यामि यथा सिध्यति कुर्वतः ॥
विविधानां विकाराणां क्षारः प्रशमने हितः ॥ १ ॥

---

* धनुराकारमध्यस्थः पाठो नास्ति कपुस्तके ॥

देशे प्रशस्ते जातं तु प्रशस्तं ग्राहयेद्द्रुमम् ॥
मुष्ककं मध्यपवसं काण्डशस्तं प्रकल्पयेत् ॥ २ ॥
अश्मन्तकं दाहयित्वा तु तिलैनालेन संमितम् ॥
तद्भस्म परिनिर्वातं सुनिगुप्तं निधापयेत् ॥ ३ ॥
गोगजाश्वखरमूत्रैरालोड्य विधिवद्भिषक् ॥
परिश्रा(स्रा)व्य च तद्भस्म सप्तकृत्वः पुनः पुनः ॥ ४ ॥
परिश्रु(स्रु)तं तु तं क्षारमायसे भाजने पचेत् ॥
पञ्चभागावहीनं तु तत्र वापं समाचरेत् ॥ ५ ॥
सुवर्चिका सुधाचूर्णं यवक्षारो विडं तथा ॥
कासीसं शङ्खचूर्णं च तथा सौराष्ट्रिकामपि ॥ ६ ॥
चूर्णीकृत्यैतदावापं पच्यमाने विनिक्षिपेत् ॥
दर्व्या च घट्टयेत्सम्यग्यावद्दर्वीप्रलेपनम् ॥ ७ ॥
उत्तार्य स्थापयेद्गुप्तं ततो वैद्यः प्रयोजयेत् ॥
व्रणा येऽल्पव्रणा राजन्दुष्टमांसचिताश्च ये ॥ ८ ॥
सास्रावा नाडिका जन्तोः कृमिदुष्टाश्च ये व्रणाः ॥
कण्डूमन्तः प्रदुष्टाश्च ये च केशाः प्रकीर्तिताः ॥ ९ ॥
वातिकाः पैत्तिकाश्चापि श्लैष्मिकाश्चापि ये व्रणाः ॥
क्षारेणानेन साध्यास्तु यथायोगं भिषग्जता ॥ १० ॥
गम्भीरानुशया ये च व्रणास्ते राजसत्तम ॥
सुरा सौवीरकं चापि व्रणप्रक्षालनं हितम् ॥
इत्ययं क्षारयोगस्तु पालकाप्येन कीर्तितः ॥ ११ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थान
एकत्रिंशः क्षाराध्यायः ॥ ३१ ॥

---

## अथ द्वात्रिंशोऽध्यायः ।

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
भग्नं कतिविधं दृष्टं भगवन्ब्रूहि तत्त्वतः ॥ १ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
शरीरे पूर्वमुक्तानि यानि चास्थीनि दन्तिनाम् ॥ २ ॥

---

१ ख. काण्डशस्त्रं । २ क. °लताले° । ३ क. °नुगता ये ।

अस्थ्नां तेषां प्रवक्ष्यामि यथावद्भङ्गकारणम् ॥
पतने ह्यवपाते च समरेऽभिहतस्य च ॥ ३ ॥
स्खलनभ्रंशनावेधैः पतनैरपि दन्तिनाम् ॥
नागानामभिघातैर्वा भज्यन्तेऽस्थीनि सर्वशः ॥ ४ ॥
तेषां नामापि वक्ष्यामि भग्नानां मनुजाधिप ॥
निष्पिष्टमथ विश्लिष्टं तथा प्रक्षिप्तमेव च ॥ ५ ॥
तिर्यक्क्षिप्तमतिक्षिप्तं मुक्तकाण्डं च यद्भवेत् ॥
स्थापितं जर्जरीभूतं चूर्णितं मथितं च्युतम् ॥ ६ ॥
मज्जानुजातं मथितं भग्नं चैव तथा स्मृतम् ॥
त्रयोदशविधं त्वेवं भग्नं भवति दन्तिनाम् ॥ ७ ॥
यथावदनुपूर्वेण कीर्तितं ते मया नृप ॥
पालकाप्यवचः श्रुत्वा ततः प्रोवाच पार्थिवः ॥ ८ ॥
तत्र यच्छिन्नभिन्नं च स्फोटितं मोटितं तथा ॥
त्वङ्मांसममृतं चैव स्थानभ्रष्टं च यद्भवेत् ॥ ९ ॥
कथं तदभिजानीयात्काण्डमुक्तं तथैव च ॥
एतन्मे पृच्छतः सर्वं भगवन्वक्तुमर्हसि ॥ १० ॥
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥
नातिमात्रं भवेच्छोफो वेदना च न शाम्यति ॥ ११ ॥
अस्थिस्थाने स्थितं दृष्ट्वा निष्पिष्ट इति तं विदुः ॥
यः संधिदेशे श्वयथुर्यदा वा स्याद्रुजाऽन्वितः ॥ १२ ॥
एभिर्लिङ्गैर्महाराज विद्याद्विश्लिष्टमेव तु ॥
निवृत्तो विषमः संधिर्गात्रदेशे यथा भवेत् ॥ १३ ॥
वेदना वर्धते वाऽपि तथा ह्युत्क्षिप्तमादिशेत् ॥
यद्वै पार्श्वगतं स्थानात्तिर्यक्क्षतमिति स्मृतम् ॥ १४ ॥
अतिक्रान्तं भवेत्संधिं तद्वा निक्षिप्तमुच्यते ॥
वेदना शूनभावश्च केवलं विच्युते सदा ॥ १५ ॥
मथितं पृथुलं विद्धि चूर्णितं तु महारुजम् ॥
स्फालितं स्फाटितं नाम जर्जरं जर्जरीकृतम् ॥ १६ ॥
वेदना परिशोषश्च भृशमस्योपजायते ॥
सशल्यमिव चाऽऽध्मातं सरुजं जर्जरं तु यत् ॥ १७ ॥

---

१ क. ख. °त्क्षिप्यमा° ।

वारणानां महीपाल यथावदुपलक्षयेत् ॥
यदा न क्षमते स्पष्टं विसृष्टं शब्दवत्तथा ॥ १८ ॥
विषण्णो वाऽनुवृत्तो वा वारणो न लभेत्सुखम् ॥
भग्नस्यास्थ्नस्तु विज्ञानं वेदना चाभिवर्धते ॥ १९ ॥
स्फालितं त्वस्थिमध्येऽन्यन्मज्जानुगतमेव तत् ॥
काण्डमुक्तं तु यत्किंचिद्विश्लिष्टं तत्प्रकीर्तितम् ॥ २० ॥
चतुर्विधानामस्थ्नां तु तेषां वक्ष्यामि लक्षणम् ॥
कपालास्थीनि भिद्यन्ते भज्यन्ते नालिकास्तथा ॥ २१ ॥
नाम्यन्ते तरुणास्थीनि स्फुटन्ति रुचका नृप ॥
अत्यर्थमभिघाताच्च मन्यते चूर्ण्यते तथा ॥ २२ ॥
अस्थित्रयं नृपश्रेष्ठस्तरुणास्थिसुखक्रियाम् ॥
इति भङ्गाः समुद्दिष्टा यथावदनुपूर्वशः ॥ २३ ॥
चिकित्सोपक्रमस्तेषां साध्यासाध्यं च वक्ष्यते ॥
(*अप्राप्तं ........................................ ) ॥ २४ ॥
अत ऊर्ध्वं महाराज चिकित्सां न प्रयोजयेत् ॥
स्थानस्थश(†यनं चात्र) यन्त्रे वाऽपि प्रतिष्ठिते ॥ २५ ॥
वारणं शीतलेनाथ जलेन परिषेचयेत् ॥
(*.................................... लभते सुखम्) ॥ २६ ॥
यस्त्वपर्वणि भङ्गः स्यादसाध्यः स नु कीर्त्यते ॥
ऊर्ध्वं संवत्सराधाप्यो भङ्गो भवति हस्तिनाम् ॥ २७ ॥
च्युतप्रम्लानविश्लिष्टव्याविद्धेषु महीपते ॥
सर्वेषामेव भग्नानामेतदेव चिकित्सितम् ॥ २८ ॥
कर्तव्यं च मनुष्येण नागानां हितमिच्छता ॥
एवं हि कीर्तितं सर्वं मया भग्नचिकित्सितम् ॥ २९ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने
भग्नचिकित्सितं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

* धनुराकारमध्यस्थौ पाठौ न स्तः कपुस्तके ॥ † धनुराकारमध्यस्थः पाठो नास्ति खपुस्तके ॥

---

१ क. मनुष्येन्द्र ।

## अथ त्रयस्त्रिंशोऽध्यायः ।

परापरज्ञं तत्त्वज्ञं वेदवेदाङ्गपारगम् ॥
पालकाप्यं महात्मानं रोमपादः स्म पृच्छति ॥ १ ॥
कथं व्यापद्यते कुक्षौ मूढगर्भः कथं भवेत् ॥
लक्षणं मूढगर्भाया गर्भनिर्हरणं तथा ॥ २ ॥
श्र(स्र)वणं लयनं चैव वक्तुमर्हसि(ति) तद्भवान् ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥ ३ ॥
विषमशय्यपान्यशनैर्व्याधिभिश्च क्षुधा तथा ॥
अतियानातिभाराद्वा लङ्घनप्लवनादपि ॥ ४ ॥
वातमूत्रपुरीषाणां धारणादभिघातनात् ॥
उपद्रवान्मनस्तापात्कुक्षौ गर्भो विपद्यते ॥ ५ ॥
आचतुर्थाच्च मासाच्च रक्तं श्र(स्र)वति संनिभम् ॥
ऊर्ध्वं संघातभूतस्तु पतेदासप्तमादपि ॥ ६ ॥
यथापर्यागतं काले फलं वृन्तात्प्रमुच्यते ॥
एवं विमुच्यते गर्भस्तन्तुमुक्तश्च जायते ॥ ७ ॥
पूर्वोक्तकारणैर्वाऽपि यस्याः कुक्षौ विपद्यते ॥
मृतगर्भा तदाऽत्यर्थं पूतिमूत्रपुरीषिणी ॥ ८ ॥
पूतिर्निःश्वासिनी क्षामा न चाऽऽहाराभिलाषिणी[1] ॥
दुर्मना दुर्मनस्का च गुरुमाणा च हस्तिनी ॥ ९ ॥
विपन्नमत्स्यगन्धा वा मृतगर्भेति तां विदुः ॥
धर्मार्थं च यशोर्थं च मित्रार्थं च भिषग्वरः ॥ १० ॥
भर्तुस्त्वनुमतेनास्या[2] गर्भं शल्यं तु निर्हरेत् ॥
सर्पिषा कल्कमिश्रेण शाल्मल्या[3] धन्वनस्य च ॥ ११ ॥
दक्षिणं करमभ्यच्यं योनिद्वारं च सर्वशः ॥
विश्वासयित्वा सर्वस्वं पर्श्रायित्वा च हस्तिनीम् ॥ १२ ॥
प्रवेश्य हस्तं योनौ तु गर्भमार्गेण वा हरेत् ॥
ऋजुमार्गेण नाऽऽगच्छेत्तं तु शस्त्रेण निर्हरेत् ॥
छित्त्वा तथाऽऽनुपूर्व्येण तस्याङ्गानि पृथक् पृथक् ॥ १३ ॥

---

१ क. नवाहाराविभाषि° । २ क. भर्तुः स्वभिम° । ३ ख. °ल्यं मुनि° ।

अक्लीबो दारुणो भूत्वा त्वरमाणो जितेन्द्रियः ॥
सूतिकारक्षणार्थं तु निःशेषं निर्हरेत्तु तम् ॥ १४ ॥
यदि वाऽपि विशल्योऽयं जरायुर्न प्रमुच्यते ॥
तत्र लाङ्गलकीकन्दं पानमस्यै प्रदापयेत् ॥ १५ ॥
एलागुडसमायुक्तं न चेदेतेन सिध्यति ॥
ततः पूर्वोक्तविधिना हस्तेनैव तु निर्हरेत् ॥
*विमृश्य नारीगर्भं च तस्यास्तमपसंहरेत् ॥
उपाचरेद्विशल्यां च सूतिकाविधिना भिषक् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने तृतीये शल्यस्थाने मूढगर्भापनयनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

अथ चतुस्त्रिंशोऽध्यायः ।

---

इदमन्यत्प्रवक्ष्यामि शल्यभूते चिकित्सितम् ॥
प्रशस्ते तिथिनक्षत्रे मुहूर्ते करणे तथा ॥ १ ॥
कृत्वा सामान्ययज्ञं तु ततो दन्तमुपाचरेत् ॥
शोलाऽवश्यं भवेत्कार्या जलाध्या(भ्या)से तु शीतले ॥ २ ॥
निवाता कुसुमाकीर्णा द्रव्योपस्करसंभृता ॥
प्रमाणेनोत्तमं स्तम्भं निखातं चात्र कारयेत् ॥ ३ ॥
दृतयश्च परिश्रा(स्रा)व्याः शरीरे वारिपूरिताः ॥
घृतेन शतधौतेन कषायैः शीतलैस्तथा ॥ ४ ॥
लेपयेच्चास्य वदनं पटेनाऽऽच्छादयेत्ततः ॥
दध्ना च सघृतेनैनं शाल्यन्नं भोजयेद्द्विपम् ॥ ५ ॥
पूर्वोक्तैस्त्रयोदशभिर्बध्नीयात्तैर्मतङ्गजम् ॥
वत्सादन्ताकृतिमुखा जलौकःपृष्ठसंनिभाः ॥ ६ ॥
द्वात्रिंशदङ्गुलायामा लोहसूचीस्तु कारयेत् ॥
ताभिः संवेष्टयेद्दन्तं विवृताभिरथाङ्कुलम् ॥ ७ ॥
दन्तवे(वे)ष्टानुसारेण ततस्ताः कुशलो भिषक् ॥
नोन्नता न चावनता न च पार्श्वगता नृप ॥ ८ ॥

---

* इदमर्धम् 'एलागुड'– इत्यतः प्राक्पुस्तकेऽस्ति ।

---

१ क. °यरं ह° । २ क. शाल्या । ३ क. वातेन । ४ क. °यात्तं मत° ।

शनैः प्रवेशयेत्सूचीर्व्यापत्तिर्न भवेद्यथा ॥
तालुस्रोतः करश्रो(स्रो)तस्तथा नेत्रनिबन्धनम् ॥ ९ ॥
शिराः स्नायूंश्च रक्षेत्तु उन्मार्गगमनं तथा ॥
त्र्यहात्त्र्यहात्प्रवेश्यैतान्द्व्यङ्गुलं द्व्यङ्गुलं भिषक् ॥ १० ॥
क्षारेण लेपयेच्चाग्रं तेन मांसं विशुध्यति ॥
प्रवेशयित्वाऽङ्गुलानि विंशतिस्त्रिंशदेव ताः ॥ ११ ॥
चतुर्विंशत्यङ्गुलं वा ततोऽस्थीनि विनिर्दिशेत् ॥
मुखप्रमाणं सत्त्वस्य स्वबुद्ध्या विभजेद्भिषक् ॥ १२ ॥
यदा विमुक्तो मांसेन बन्धमूलाच्चलत्यपि ॥
यन्त्राध्यायविधिप्रोक्तैर्बन्धैर्बद्ध्वा मतङ्गजम् ॥ १३ ॥
त्रिभागे वेधयेद्दन्तं शलाकां चानुकारयेत् ॥
तत्र सूत्रमयीं रज्जुं दन्ते बद्ध्वा नवां दृढाम् ॥ १४ ॥
ततोऽन्यां वर्धयेत्तस्मिन्रज्जुं वा रत्नुकां(?)दृढाम् ॥
वक्त्रभ्रमरकं यन्त्रं ततोत्सेधायमेव च ॥ १५ ॥
यन्त्रमेकतमं तस्मिन्पुरस्तात्संनिवेशयेत् ॥
ततस्तं योजयेत्प्राज्ञो यन्त्रयोगेन बुद्धिमान् ॥ १६ ॥
प्रक्षिपेच्च बलाद्रज्जुं यथा दन्तो निपात्यते ॥
दन्तमार्गं च नागस्य पूरयेन्मधुसर्पिषा ॥ १७ ॥
जलेऽवगाहयेच्चैनं विमले शीतले च तम् ॥
पानार्थं दापयेत्क्षीरं घृतयुक्तं नराधिप ॥ १८ ॥
शाल्योदनं च सघृतं भोजनाय प्रदापयेत् ॥
पूर्वमेकं च नागाय सर्पिषा दापयेद्भिषक् ॥ १९ ॥
द्विव्रणीयोपचारस्य कर्तव्यं स्यादतः परम् ॥
असाध्यदन्तनाडी या दन्ते यस्येह जायते ॥ २० ॥
दन्तस्रावीति तं विद्यात्तस्योपायः प्रवक्ष्यते ॥
विद्ध्वा दन्तं त्रिभागेन दूषयित्वा करीरिकाम् ॥ २१ ॥
तस्मात्तु चालितं रक्तं कृत्वा तु सुपरिश्रु(स्रु)तम् ॥
पूर्वोक्तेनैव विधिना दन्तं नागस्य साधयेत् ॥ २२ ॥
भोजनं चास्य तेनैव क्रमेणोपचरेद्भिषक् ॥
भज्यते यस्य वा दन्तः पतेद्वा सकरीरिकः ॥ २३ ॥

वनं प्रस्थापयेत्तं तु न तस्मै प्रतिकारयेत् ॥
उन्मार्गगमने सूची दोषानुत्पादयेद्बहून् ॥ २४ ॥
व्यापदश्चास्य जायन्ते यास्ता निगदतः शृणु ॥
शोफोऽस्य कूर्मसंस्थानो मांसं दूषयते यदा ॥ २५ ॥
मांसधावनतुल्यस्तु श्रा(स्रा)वश्चास्य प्रवर्तते ॥
श्रो(स्रो)तसा प्रक्षरत्युग्रं श्रो(स्रो)तः संदूषयेद्यदा ॥ २६ ॥
व्यापत्संजायते नेत्रे दूषिते नेत्रबन्धने ॥
वेदना गद्गदत्वं च स्नायुच्छेदे प्रजायते ॥ २७ ॥
यवनिक्काथतुल्यस्तु श्रा(स्रा)वस्तस्य प्रवर्तते ॥
करकर्णास्यसंतप्तः शिराः संदूषयेद्यदा ॥ २८ ॥
श्रा(स्रा)वो माञ्जिष्ठतुल्यो वा रक्तो वाऽथ प्रवर्तते ॥
वैकल्यं जायते चास्य प्राणैर्वाऽपि प्रयुज्यते ॥ २९ ॥
अतोऽर्थं रक्षयेद्राजन्नुन्मार्गगमनाद्भिषक् ॥
सद्यः क्रियामथोत्सृज्य मत्वाऽवस्थां च पीडितः ॥ ३० ॥
सद्यःक्षतविधानोक्तां क्रियां तस्येह कारयेत् ॥
शोफस्योपशमं दृष्ट्वा वेदनायास्तथैव च ॥ ३१ ॥
आरभेत्स(त) ततो दन्तं पूर्वोक्तेनैव कर्मणा ॥
मन्दोष्मा जायते शोफो वेदना च तथा भवेत् ॥ ३२ ॥
सम्यक्श्रा(स्रा)वसमे सूच्याः क्लेदश्चैवोपजायते ॥
अत्यर्थं च यदा सूची दन्तं नागस्य कर्षति ॥ ३३ ॥
तदा सुखं न लभते भज्यते वा न संशयः ॥
तत उत्सृज्य तां सूचीं पुनः सम्यक्प्रवेशयेत् ॥ ३४ ॥
पूर्वोदितविधानेन व्यापत्तिर्न भवेद्यथा ॥
.... .... .... .... .... .... .... .... .... ॥ ३५ ॥
.... .... .... .... .... .... .... .... .... .... ॥
इत्युक्तो भूमिपालेन पालकाप्यस्ततोऽब्रवीत् ॥ ३६ ॥
यष्टिदन्ताः सदन्ताश्च प्रशलाकास्तथाऽपरे ॥
राजिदन्ता ग्रन्थिदन्ताः पर्वदन्तास्तथाऽपरे ॥ ३७ ॥

---

१ ख. सत्त्वावस्थां । २ ख. उत्सृजतां । ३ क. पूर्वोद्दिष्टवि° । ४ क. ख. °न्तास्तु द° ।

वल्लीदन्ताश्च वक्राश्च द्विपुटास्त्रिपुटास्तथा ॥
अतिदीर्घाश्च ह्रस्वाश्च अतिस्थूलाः कृशास्तथा ॥ ३८ ॥
भवन्ति दन्ता नागानां दुर्भगा विषमास्तथा ॥
एवं बहुविधा भेदा दन्तानां दन्तिनां नृप ॥ ३९ ॥
महाविकल्पाश्चत्वारः शृणु कीर्तयतो मम ॥
अन्तर्मुखावूर्ध्वमुखावधःपार्श्वगतौ तथा ॥ ४० ॥
दन्तावूर्ध्वमुखौ यौ तौ करालाविति निर्दिशेत् ॥
आपाण्डुरौ पार्श्वमुखावाग्यौ......वाऽप्यधोमुखौ ॥ ४१ ॥
दन्तावनुगतौ ह्रस्वं मानं ह्रस्वौ तु तौ विदुः ॥
आभ्यन्तरगतौ यस्य सदन्तः स तु कीर्तितः ॥ ४२ ॥
संमुखौ संकटौ ज्ञेयौ विशालौ चास्थिसंमितौ ॥
एकपार्श्वौ मुखाभ्यां तु स साधीत्युच्यते नृप ॥ ४३ ॥
एते विशल्या व्याख्याताः शृणु दोषानुपक्रमम् ॥
पूर्वोक्तैः कारणैर्युक्तो दन्तो यस्येह दृश्यते ॥ ४४ ॥
कल्पयित्वा तु तं दन्तं लक्षयेद्यत उद्यतः ॥
अनुपूर्वं ततः कृत्वा तत्रान्यं योजयेद्दृढम् ॥ ४५ ॥
काष्ठदन्तोपमं कृत्वा माहिषं शृङ्गमेव च ॥
मूले तु कर्तरिं कृत्वा दन्तमूलसमां नृप ॥ ४६ ॥
कुशलं शिल्पिनं चैव ग्राहयित्वा समन्ततः ॥
आयसैश्च त्रिभिः पट्टैः कीलां चास्यानुकारयेत् ॥ ४७ ॥
सूचीप्रयोगाद्दतस्य तथा पीडनमेव च ॥
तेनैव विधिना राजन्यो मया परिकीर्तितः ॥ ४८ ॥

—:०:—

अतः परं प्रवक्ष्यामि दन्तानां संभवं नृप ॥
वातकुम्भादधस्ताच्चु वृत्ताः स्युः सकरीरिकाः ॥ ४९ ॥
संभूता नृपशार्दूल विज्ञेया वातसंभवाः ॥
रन्ध्रधुवाश्च विज्ञेया दन्तमध्ये व्यवस्थिताः ॥ ५० ॥
सप्तत्रिंशश्चपञ्चिशश्त्रिंशच्चैव प्रमाणतः ॥
नद्युंभयाद्रिवा(चा)रीणामङ्गुलानि करीरिकाः ॥ ५१ ॥

---

१ क. दुर्गता । २ क. मुखाभ्यां । ३ क. समाधी° । ४ ख. विशाल्या । ५ ख. सचाप्र° । ६ क. °या क्षत° । ७ क. °द्युर्भवाद्रि° ।

षडङ्गुला नदीजस्य वृद्धिर्भवति दन्तयोः ॥
अध्यर्धं विश्वरूपस्य त्र्यङ्गुलं गिरिचारिणः ॥ ५२ ॥
मारुतस्तु यदा चे(वे)ष्टौ दूषयित्वोष्मणा सह ॥
मत्कुणस्तेन जायेत अग्राह्यः स तु दन्तिनाम् ॥ ५३ ॥
एकवेष्टनिरोधेन एकदन्तो भवेन्नृप ॥
द्विदन्तानां तु नागानां प्रकृत्या जायते नृप ॥ ५४ ॥
त्रिदन्ताश्चापि जायन्ते चतुर्दन्तास्तथाऽपरे ॥
पिशाचाश्चासुराश्चैव न तेषां ग्रहणं स्मृतम् ॥ ५५ ॥
गृहीताः पापमिच्छन्ति स्वभावानुगतास्तथा ॥
स्पृशन्ते यस्य सङ्गाय दृश्यन्ते वा नराधिप ॥ ५६ ॥
न तस्य ग्रहणं कार्यं पराष्ट्रं तमुत्सृजेत् ॥
न्यूनाधिकत्वं नागानां वैषम्यं वैकृतं तथा ॥ ५७ ॥
तत्सर्वं मारुताद्विद्धि समत्वं चैव यद्भवेत् ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रणोदितः ॥ ५८ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचने महापाठे वृद्धोपदेशे तृतीये शल्यस्थाने दन्तोद्धरणं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

समाप्तं चेदं तृतीयं शल्यस्थानम् ॥

---

१ क. मारुतस्य ।

अथातश्चतुर्थमुत्तरस्थानमारभ्यते ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
हितं निःश्रेयसं चैव गजानामनुचिन्तयन् ॥ १ ॥
यदा मयेयं विजिता सागरान्ता वसुंधरा ॥
तदा मे वारणैस्तुल्यं न कृतं कर्म केनचित् ॥ २ ॥
गुरुभाराभिवहनं गमनं विषमेषु च ॥
तरसा मर्दनं चैव तरणं सलिलस्य च ॥ ३ ॥
तीव्राघाता विघाताश्च तोयौघस्यावतारणम् ॥
सर्वगात्रायुधत्वं च वारणेष्वेव दृश्यते ॥ ४ ॥
नान्यैरसंमिताः सन्ति गुणा दन्तिषु केवलम् ॥
त्रिविधेष्वपि ये न स्युर्बलाङ्गेषु महामुने ॥ ५ ॥
अप्रमेयैर्गुणैरेतैर्बलाङ्गं प्रथमं गजाः ॥
अपि शालागताः कृत्स्नां रक्षन्ति सनृपां महीम् ॥ ६ ॥
कथं ते भगवन्नागा नीरोगा बलशालिनः ॥
भवेयुर्जवसंपन्ना बलिनो मददर्पिताः ॥ ७ ॥
तेषां मे भगवन्प्रश्नमिममाख्याहि पृच्छतः ॥
तैर्हि मे वाहनं तुल्यमन्यद्भुवि न विद्यते ॥ ८ ॥
तेषां कतिविधः स्नेहः कीदृशः किंप्रयोजनः ॥
कत्युपायाः कथं चापि प्रदातव्यो विजानता ॥ ९ ॥
यच्चान्यदपि नागानां कर्तव्यं हितमिच्छता ॥
तदशेषेण भगवन्सर्वं व्याख्यातुमर्हसि ॥ १० ॥
ततः प्रोवाच भगवान्पालकाप्यो महामुनिः ॥
पृच्छते रोमपादाय प्रश्नं गजहितं शुभम् ॥ ११ ॥
सर्पिस्तैलं वसा मज्जा संस्कृतासंस्कृतं भवेत् ॥
वारणेभ्यः प्रदातव्यं स्नेहजातं चतुर्विधम् ॥ १२ ॥
सर्वौषधप्रयोगेभ्यः स्नेहपानं मतं मम ॥
स्नेहपानं प्रशंसन्ति पूर्वाचार्या मनीषिणः ॥ १३ ॥
तद्धि वर्णकरं बल्यं सर्वव्याधिहरं स्मृतम् ॥
उत्तमाधममध्यानां कुञ्जराणां यथागमम् ॥ १४ ॥

---

१ क. विषयेषु । २ ख. घ. °संस्मिताः । ३ क. प्रदातव्या ।

स्नेहपाने विधिं कृत्स्नं तमिमं प्रवरं शृणु ॥
आषाढे समतिक्रान्ते श्रावणे पर्युपस्थिते ॥ १५ ॥
बहुले चातिक्रान्ते च शुक्ले स्नेहं समावपेत् ॥
यदाऽल्पसारं तरुणं तृणं वर्षासु लक्ष्यते ॥ १६ ॥
स्नेहपानं तदा कार्यं रोगघ्नं बलवर्धनम् ॥
सम्यक्परिणमेच्छिष्य(च्छष्प)मल्पसारं तथाऽसितम् ॥ १७ ॥
लघुत्वात्तैलवृद्धौ च हितं न हितमन्यथा ॥
शीतकालश्च विहितः शीतसात्म्या हि हस्तिनः ॥ १८ ॥
भूर्यम्बुपानेन तदा मन्दतृष्णा तदा भवेत् ॥
अहितं मृत्तिकादीनां सततं यन्निषेवते ॥ १९ ॥
तद्वस्निशर्कि निष्पिष्टं तैलं काले निषेवितम् ॥
ऋतुसंधौ विशेषेण यो देहे कुपितोऽनिलः ॥ २० ॥
तं तैलं हन्ति सहसा शक्रः शत्रुमिवौजसा ॥
आर्तवं तु यथाकामं पाययेन्नत्वनार्तवम् ॥ २१ ॥
मन्यन्तेऽनार्तवेऽप्यन्ये स्नेहं प्रायोगिकं जनाः ॥
मदकोदकदुग्धैश्च सुरया विधयाऽपि वा ॥ २२ ॥
संयुक्तं दन्तिनां देयं क्वचित्क्वचिदसंयुतम् ॥
तेषामभ्यञ्जने पाने नस्तकर्मानुवासने ॥ २३ ॥
मेढ्रतः कटतश्चैव प्रदानं षड्विधं स्मृतम् ॥
व्याधिनिर्ग्रहणार्थं च बलार्थं चैव दन्तिनाम् ॥ २४ ॥
स्नेहपानं महीपाल हितं तद्धि प्रयोजनम् ॥
तत्र तैलं प्रदातव्यं सुकृतं चक्रसंभवम् ॥ २५ ॥
गजानाममलं चैव सद्यःकृतमपूतिकम् ॥
विश्रं(स्रं) पुराणमत्यर्थं विवर्णं कटुकं च यत् ॥ २६ ॥
पूतिकं चातिदग्धं च घृतमेतद्विवर्जितम् ॥
मांसपक्वमनिर्दग्धरसोपधिसमन्वितम् ॥ २७ ॥
त्रिवृतं दन्तिनां देयं सर्वस्नेहसमुद्भवम् ॥
महिषाजवराहाणां वसा सद्यो विनिःसृता ॥ २८ ॥

---

१ क. °ले च तथाक्रा° । २ क. घ. समाचरेत् । ३ क. लभ्यते । ४ क. °क्तिभिः श्रेष्ठं तै° । घ. °क्तिनिःश्रेष्ठं तै° । ५ क. प्रयोजयेत् । ६ ख. घ. °द्यःक्षत° । ७ क. °तपानं प्रशस्यते ॥ मां° ।

त्रिवृतार्थे प्रदातव्या गात्राभ्यङ्गे च दन्तिनाम् ॥
हेमन्ते तैलपानं तु वर्षासु च विधीयते ॥ २९ ॥
वसा मज्जा च नागानां वसन्ते संप्रदीयते ॥
शरत्काले निदाघे च घृतपानं प्रशस्यते ॥ ३० ॥
एवं यथर्तुसामान्यात्स्नेहं नागेषु दापयेत् ॥
वर्षासु पुष्टा नागेन्द्राः स्नेहादिभिरुपक्रमम् ॥ ३१ ॥
तुरङ्गा रणदक्षाश्च योधाश्च रणकर्कशाः ॥
वैशेषिकं बलं लब्ध्वा व्यायामैश्च स्थिरीकृताः ॥ ३२ ॥
प्रवातवर्षे कुर्वीत राज्ञः कर्माष्टमासिकम् ॥
न मार्गप्रतिपन्नेषु परेषां विषयेऽपि वा ॥ ३३ ॥
शक्यं बलिक्रियां कर्तुं रोगाणां वा प्रतिक्रियाम् ॥
हेमन्तकाले च पुनर्निदाघसमयेऽपि च ॥ ३४ ॥
स्नेहपानं बद्धफले तृणे शुष्के च वर्जितम् ॥
दोषाः शुष्कतृणे दृष्टा तथा बद्धफले तृणे ॥ ३५ ॥
शुष्केणानह्यते नागः सफलेनास्य जीर्यति ॥
दिनैर्हैमन्तिकैः पीतं पानं सम्यङ्न जीर्यति ॥ ३६ ॥
अथ सर्पिः पिबेन्नागः शीते तदपि लीयते ॥
निदाघे तैलपानेन मूर्छा तन्द्रा प्रजायते ॥ ३७ ॥
पिपासा वमथुश्चापि त्वग्दोषाश्चैव दन्तिनाम् ॥
तस्माद्धेमन्तकालं च ग्रीष्मकालं च वर्जयेत् ॥ ३८ ॥
हिताहितज्ञो नागानां कालाकालविभागवित् ॥
काले वा यदि वाऽकाले तैलं दत्तमजानता ॥ ३९ ॥
सर्वानुपद्रवान्कुर्याद्व्यापादयति वा गजम् ॥
रक्षेद्यत्नेन वैद्यस्तु स्नेहपीतं मतङ्गजम् ॥ ४० ॥
आतपाच्च प्रवाताच्च अजीर्णाध्यशनादपि ॥
अतितोयावगाहाच्च पानाच्छीतस्य चाम्भसः ॥ ४१ ॥
सात्म्यासात्म्यविपर्यासादतिचङ्क्रमणादपि ॥
निदाघे स्नेहपीतस्य दोषाः पूर्वं प्रकीर्तिताः ॥ ४२ ॥

---

१ ख. दृष्ट्वा । २ क. दिने हेमन्तिके । ३ क. ख. घ. तिलपानेन । ४ क. °सा च प्रथुश्चा° ।

स्नेहं प्रवाते पिबतो वायुरङ्गानि बाधते ॥
अजीर्णाध्यशनाद्वाऽपि स्नेहे कोष्ठे व्यवस्थिते ॥ ४३॥
आनाहो वा भवेत्तस्य मरणं वाऽपि जायते ॥
अतितोयावगाहाच्च कायाग्निरुपशाम्यति ॥ ४४ ॥
पिपासा वर्धते चापि स्नेहस्तस्य न पच्यते ॥
यदि पीत्वा गजः स्नेहं जलमक्कथितं पिबेत् ॥ ४५ ॥
तेन तस्यापचारेण स्नेहो भवति दुर्जरः ॥
वेदना सर्वगात्रेषु वमथुश्चापि जायते ॥ ४६ ॥
कुक्षिर्विहन्यते चास्य दौर्मनस्यं भवत्यपि ॥
सात्म्यासात्म्यविपर्यासात्स्नेहपीतस्य दन्तिनः ॥ ४७ ॥
जायते चापि दौर्बल्यं रोगाः प्रादुर्भवन्ति च ॥
अतिचङ्क्रमणाद्वाऽपि सद्योऽव्यायामसंभवः ॥ ४८ ॥
वायुः प्रचलितः स्थानात्सर्वाण्यङ्गानि बाधते[1] ॥
पाकरुस्तस्य भवति प्रेवोपो(?)[2] वाऽतिदारुणः ॥ ४९ ॥
भेदश्च पर्वणां चापि गात्राणामपि वेष्टनम् ॥
स्नेहोपयोगाद्द्विगुणः परिहारो विधीयते ॥ ५० ॥
विरूक्षणं बृंहणं च कर्मणश्च प्रवर्तनम् ॥
तस्मात्कुर्याद्बुधो वैद्यस्तैलपाने त्ववेक्षणम् ॥ ५१ ॥
दुर्युक्तं तैलपानं तु विषं हालाहलं भवेत् ॥
इत्येष स्नेहपानस्य कालाकालविधिः स्मृतः ॥ ५२ ॥
स्थावरो जङ्गमश्चैव द्विविधः स्नेह उच्यते ॥
तस्य चैवं प्रयुक्तस्य विकल्पा बहवः स्मृताः ॥ ५३ ॥
सर्पिस्तैलं वसा मज्जा मेदो मांसं पयो दधि ॥
एवमादि विजानीयात्स्नेहजातं पृथग्विधम् ॥ ५४ ॥
तिलादिजस्तु यः स्नेहः स्वशास्त्रे परिकीर्तितः ॥
स्थावरस्तु समाख्यातो नानाफलसमाश्रयः ॥ ५५ ॥
तत्र सर्पिर्वसा मज्जा तैलं चैवोत्तमं स्मृतम् ॥
घृतं तु सविशेषत्वात्तेषु श्रेष्ठतमं स्मृतम् ॥ ५६ ॥
यथावदनुपूर्वेण गुणांस्तस्य निबोध मे ॥
मधुरं शीतवीर्यं च लघु चैवाविदाहि च ॥ ५७ ॥

---

१ ख. घ. साधते । २ क. प्रवापो ।

हितं वाते च पित्ते च मेदःशुक्रविवर्धनम् ॥
दारुणानां मृदुकरं बलवृद्धिकरं तथा ॥ ५८ ॥
प्रसृष्टमल्पमूत्रं च ग्रहणीदीपनं तथा ॥
सुकुमारकरं बल्यमायुष्यं चक्षुषोर्हितम् ॥ ५९ ॥
अल्पक्लेशं सुखस्पर्शं स्नेहानामपि चोत्तमम् ॥
घृतान्यन्यानि वक्ष्यामि भैषज्यं सर्वदेहिनाम् ॥ ६० ॥
तत्र ये पित्तला नागाः प्रकृत्याऽवनताश्च ये ॥
मदक्षीणाश्च वृद्धाश्च धेनुकासु च निश्रु(स्नु)ताः ॥ ६१ ॥
बाला दुर्बलपादाश्च ये च नेत्रातुरा गजाः ॥
तेभ्यः सर्पिः प्रदातव्यं गजा ये च नवग्रहाः ॥ ६२ ॥
घृतादनन्तरं तैलमृषिभिः समुदाहृतम् ॥
गुणांस्तस्य प्रवक्ष्यामि यथावदनुपूर्वशः ॥ ६३ ॥
तैलं त्वच्यं बलकरं लेखनीयं तिलोद्भवम् ॥
विदाहि चोष्णवीर्यं च कषायमधुरं तथा ॥ ६४ ॥
वातश्लेष्महरं चैव विपाके कटुकं स्मृतम् ॥
कृमिघ्नं पिच्चलं चापि मेदोघ्नं योनिशोधनम् ॥ ६५ ॥
अव्यायामैरुपचिता ये गजाः स्थूलशारदाः ॥
वातोपव्रुतदेहाश्च ये चाल्पलघुविक्रमाः ॥ ६६ ॥
वातप्रकृतयो ये च श्लैष्मिका ये च वारणाः ॥
बहुशश्चापि सज्जन्तो ये चाऽऽनाहेन कुञ्जराः ॥ ६७ ॥
सहसा ह्रसते येषां मांसं चाध्वप्रयोजने ॥
तेषां तैलं प्रदातव्यं ये चापि कृमिकोष्ठिनः ॥ ६८ ॥
धेनुकानां तु विहितं तैलमेव महीपते ॥
तासां हि बहुवातत्वाद्वायुः कोष्ठे प्रकुप्यति ॥ ६९ ॥
वसा हि वातशमनी दन्तिनां मधुरा स्मृता ॥
वृष्या विपाके मधुरा बलवर्णप्रसादनी ॥ ७० ॥
स्रोतोभिघाते विहिता मन्यास्तम्भे गलग्रहे ॥
भग्नस्फटितविद्धानां गात्ररोगेषु चोत्तमाम् ॥ ७१ ॥
मज्जा बल्या विशेषेण वातपित्तविनाशिनी ॥
कफं मेदश्च शुक्रं च वृद्धिं नयति दन्तिनाम् ॥ ७२ ॥

---

१ क. °मि यथावदनुपूर्वशः ॥६०॥ २ क. घ. योगजाः । ३ क. °तोविघा° ।

उष्णश्चैवोष्णवीर्यश्च गुरुश्चापि प्रकीर्तितः ॥
वातरोगहरो वृष्यः स्रोतसां परिशोधनम् ॥ ७३ ॥
तैलादर्धं घृते मात्रा ततोऽर्धं त्रिवृता भवेत् ॥
मज्ज्ञश्चैव वसायाश्च मात्रा प्रायोगिकी स्मृता ॥ ७४ ॥
इति स्नेहगुणाः प्रोक्ताः कालाकालौ च हस्तिनाम् ॥
अतः परं प्रवक्ष्यामि स्नेहपाने विधिं नृप ॥ ७५ ॥
शालां सुगुप्तां सुच्छि(च्छ)न्नां सर्वतः कटकैर्वृताम् ॥
देशे यथोक्ते कुर्वीत नित्यं बलिविभूषिताम् ॥ ७६ ॥
अजातपर्व तरुणं शुचि चोपहरेत्तृणम् ॥
यथाकालं यथामात्रं स्थलजं च विशेषतः ॥ ७७ ॥
उष्णोदकाः(कं) कटाहानि स्नानपानाय दन्तिनाम् ॥
नित्यं संनिहितानि स्युः स्नेहकाल उपस्थिते ॥ ७८ ॥
अलिन्दांश्च घटांश्चैव पर्याप्तानुपकल्पयेत् ॥
पानार्थे चैव तैलस्य सलिलस्य च हस्तिनः ॥ ७९ ॥
काष्ठान्युष्णोदकस्यार्थे संशुष्कान्युपकल्पयेत् ॥
कुशलांश्चापि गृह्णीयान्नागस्य परिचारकान् ॥ ८० ॥
वैद्यं च शास्त्रकुशलं दृष्टकर्माणमेव च ॥
हस्त्यध्यक्षं च तत्रैव संदिशेत्पितृवद्धितम् ॥ ८१ ॥
मुखद्वारविशुद्धाय सुकृतं पानपायिने ॥
हस्तैः सुमर्दितं कृत्वा तैलं नागस्य दापयेत् ॥ ८२ ॥
दापयित्वा त्र्यहं मद्यं ततो रूक्षं च भोजनम् ॥
विरूक्षितशरीराय स्नेहं नागाय दापयेत् ॥ ८३ ॥
उपायं चापि सुकृतं तैलं चक्रसमुद्भवम् ॥
स्थापयेद्भोजने स्निग्धे तैलं दद्याद्विचक्षणः ॥ ८४ ॥
उपार्जयेच्च त्रिवृतं सर्वं स्नेहसमुद्भवम् ॥
पानार्थे च वसा ग्राह्या गात्राभ्यङ्गे च हस्तिनाम् ॥ ८५ ॥
मापयित्वा प्रमाणेन यथोक्तेन तु बुद्धिमान् ॥
यथोक्ते तिथिनक्षत्रे स्वस्थं विज्ञाय वारणम् ॥ ८६ ॥
भक्ततैलप्रमाणेन श्रेष्ठां मात्रां प्रदापयेत् ॥
पादहीनं(नां) तथा मध्यां मध्यार्धेन कनीयसीम् ॥ ८७ ॥

---

१ क. ख. घ. स्वच्छं । २ ख. घ. चारणम् ।

एष एव क्रमो वृद्धेरा समाप्तेर्विधीयते ॥
यथाग्नि पञ्चरात्रं वा त्रिरात्रं वा मतङ्गजम् ॥ ८८ ॥
सप्ताहं वा पि वा स्नेहं पानी गुणयुतो भवेत् ॥
यदि न स्नेहमर्यादां प्राप्य न स्निह्यते गजः ॥ ८९ ॥
स्नेहान्तां पीनिमेकैकां पुनस्तां प्रतिलोमयेत् ॥
केचित्पीनीं व्यवस्यन्ति दिनान्यष्टादशोत्तमाम् ॥ ९० ॥
मध्यमां दश पञ्चैव सप्त पञ्च कनीयसीम् ॥
तासां वक्ष्यामि राजेन्द्र प्रमाणं च शृणुष्व मे ॥ ९१ ॥
एष एव क्रमो वृद्धेरा समाप्तेर्विधीयते ॥
त्रिषष्टिराढकानि स्युरुत्तमायाः प्रमाणतः ॥ ९२ ॥
मध्यमाया द्विपञ्चाशदाढकानि च निर्दिशेत् ॥
कनीयसीं विजानीयाद्विचत्वारिंशदेव हि ॥ ९३ ॥
एतत्प्रमाणं निर्दिष्टं पीनीनां त्रिविधं मया ॥
यस्मात्प्रीणयते पीनी देहे नागस्य पार्थिव ॥ ९४ ॥
तस्मात्पीनीति सा प्रोक्ता सम्यग्दत्ता मनीषिभिः ॥
दिनान्यष्टादशैवात्र दापयेत्तैलसर्पिषी ॥ ९५ ॥
दश पञ्च च तैलस्य सर्पिषः सप्त पञ्च च ॥
मात्रा यद्यपि निर्दिष्टाः स्नेहस्य करिणां नृप ॥ ९६ ॥
अग्नेर्बलाबलं ज्ञात्वा यथाग्न्येव प्रदापयेत् ॥
समस्तं पायितः स्नेहं स्निग्धो भवति नान्यथा ॥ ९७ ॥
तत्र त्वग्निपरीक्षायामिदं लक्षणमिष्यते ॥
वैद्यस्तत्र विबुध्येत गजरक्षार्थमुत्थितः ॥ ९८ ॥
तत्र यः पीतवान्स्नेहं परिणामेन मुह्यति ॥
न वा नमति मातङ्गो न चात्यर्थं प्रवेपते ॥ ९९ ॥
†स्पष्टलाङ्गूलनयनः †स्पष्टकर्णशिरोधरः ॥
न च तिष्ठति मातङ्गः स्तम्भमालानमाश्रितः ॥ १०० ॥
ग्रासार्थं चोद्यमानस्य न वा कुप्यति वारणः ॥
तस्य स्नेहं यथायोगं क्रमेणाभिप्रवर्धयेत् ॥ १ ॥

---

† स्पृष्ट इति स्यात् ।

---

१ क. गुणवृतो ।

यस्त्वतो विपरीतानि लिङ्गानि कुरुते गजः ॥
न तस्य वर्धयेत्स्नेहं स्नेहो यस्य न जीर्यति ॥ २ ॥
अरतिर्गात्ररुग्ग्लानिर्दाहस्तृष्णा विजृम्भणम् ॥
सीकरभ्रममोहाश्च स्नेहेऽजीर्णे विमुह्यति ॥ ३ ॥
(*एषामुपशमे विद्याज्जीर्णस्नेहस्य लक्षणम् ॥
स्नेहपीतो यदि स्नेहे जीर्यमाणे प्रमुच्यति ) ॥ ४ ॥
अतस्तं लम्भयेच्छय्यां जलेनाक्ष्णोश्च सेचयेत् ॥
ग्रहणीं दीपयेच्चास्य दीपनैः कुशलो भिषक् ॥ १०५ ॥
येन योगेन नागस्य स्नेहयोगो विवर्धते ॥
तेन योगेन कर्तव्यं विधाया ऽप्यपकर्षणम् ॥ ६ ॥
चतुर्भागे चतुर्भागमर्धेऽर्धं चापकर्षयेत् ॥
त्रिभागवृद्धौ तु भवेत्त्रिभागाद्यपकर्षणम् ॥ ७ ॥
स्नेहत्रिभागवृद्धौ तु कर्तव्यं दन्तिनां भवेत् ॥
वैद्यो लवणवर्जाया विधाया ऽप्यपकर्षणम् ॥ ८ ॥
हीनं चतुर्थेनांशेन स्नेहस्य तच्चूर्णं हितम् ॥
अध्यर्धांशेन हीनं वा प्रदद्यात्प्रथमेऽहनि ॥ ९ ॥
ततोऽर्धमासं च ततः क्रमेणैवं प्रदापयेत् ॥
आध्मातकुक्षिरचलः प्रकोपान्मातरिश्वनः ॥ ११० ॥
परुषं फेनिलं नीलं तथा मारुतपीडितम् ॥
सत्त्वस्थिरमदुर्गन्धमविदग्धमसंप्लुवम् ॥ ११ ॥
संशुष्कं पिच्छिलं लिण्डं कृच्छ्रान्निर्गममेव च ॥
अपक्वमुदके यच्च क्षिप्रमेव निमज्जति ॥ १२ ॥
प्रवाहणविसर्गे च शकृन्मूत्रानिलस्य वा ॥
वायुर्न चातिप्रगुणो यस्य प्राणैश्च हीयते ॥ १३ ॥
तस्य व्यावर्तयेत्स्नेहं यथाकालं यथाबलम् ॥
दौर्बल्यमधिकं गच्छेदतिस्नेहेन पीडितः ॥ १४ ॥
गात्राणि चास्य सीदन्ति बलहानिश्च जायते ॥
अतीसारश्च तृष्णा च वर्णभेदश्च लक्ष्यते ॥ १५ ॥

---

* धनुश्चिह्नद्वयान्तःस्थः पाठो नास्ति कपुस्तके ।

---

१ ख. विण्डं । २ क. °णस्य ही° ।

भिन्नं स्विन्नमदुर्गन्धि शकृदाशु प्रमुञ्चति ॥
कृच्छ्रादल्पाल्पमापीतं मूत्रं सृजति वारणः ॥ १६ ॥
हस्तगात्रापरैर्नागः सीदति भ्रमतीव च ॥
न च सम्यक्तृणे लोभं कुरुते प्राणकर्षितः ॥ १७ ॥
अतिस्निग्धस्य नागस्य लिङ्गान्येतानि लक्षयेत् ॥
नागमेवंविधं स्निग्धं क्रमेणैवं विरूक्षयेत् ॥ १८ ॥
स्नेहजीर्णे तृणं किंचिद्भक्षयित्वा जलं पिबेत् ॥
स्नापयेच्च ततो युक्ता(क्त्या) दद्यात्तृणमनिग्रहम् ॥ १९ ॥
वातानुलोमता हर्षः श्रेष्ठता लिण्डमूत्रयोः ॥
प्रकाङ्क्षा लाघवं चैव स्नेहे जीर्णे निदर्शनम् ॥ १२० ॥
गुरुत्वं सर्वकायस्य मूत्रानिलशकृद्ग्रहः ॥
यवसेऽल्पप्रकाङ्क्षा च तदजीर्णस्य लक्षणम् ॥ २१ ॥
कृष्णाभं यच्च दुर्गन्धं विच्छिन्नं फेनिलं च यत् ॥
द्रवं खरं सशूलं च तत्पुरीषमपक्वजम् ॥ २२ ॥
अवेदनमदुर्गन्धं श्लेष्मणा विद्धि वर्जितम् ॥
यथा यवसवर्णं च पक्वमित्युच्यते शकृत् ॥ २३ ॥
परिषेकश्च कर्तव्यः सुखोष्णेनात्र वारिणा ॥
तैलघृतं तु पीताय कदुष्णेनोभयक्रियाम् ॥ २४ ॥
शय्याभागोत्थितं नागं पीततैलं तथैव च ॥
शनैरेकेन वा रूढं गमयेद्द्वे धनुःशते ॥ १२५ ॥
गजस्याधिक्रमकृतान्गुणदोषान्निबोध मे ॥
प्रवर्तनं ग्रासपाने छा(स्था)ने स्कन्धस्य कर्शनम् ॥ २६ ॥
उत्साहप्राणजननं रुजाशोकनिबर्हणम् ॥
मृदूकरं शरीरस्य श्रो(स्रो)तसां परिशोधनम् ॥ २७ ॥
कामाग्निज्वलनं बल्यं मनसश्च प्रसादनम् ॥
गात्रापरव्यथार्ते च नागे कफविकारिते ॥ २८ ॥
श्रेयस्तु व्याधिते वाऽपि प्रागुत्थाय विचारणम् ॥
व्याधितेषु विशेषेण नित्यं चङ्क्रमणं हितम् ॥ २९ ॥
यत्पित्तं तैलजनितं लिण्डशोषं च यद्भवेत् ॥
तयोर्निर्हरणार्थाय तैलान्ते पाययेद्घृतम् ॥ १३० ॥

१ क. °न्गुणान्दो° । २ क. ख. घ. लिण्डं शोषं ।

सप्ताहमथ पञ्चाहं त्रिरात्रमथवा पुनः ॥
ति(तै)लपानाद्घृतं वाऽपि वृद्धयर्थेन प्रदापयेत् ॥ ३१ ॥
हृष्टोदग्रः स मातङ्गस्तेजोबलसमन्वितः ॥
लघुर्जवबलामर्षादीप्ताग्निर्धेनुकामेना ॥ ३२ ॥
मांसोपचयसंयुक्तः कामवानिन्द्रियैः (*पटुः ॥
विसृष्टलिण्डमूत्रस्तु स्निग्धत्वक् प्रियदर्शनः ॥ ३३ ॥
मृदुभिर्विशदैः स्निग्धैः सर्वश्रोतोभिर)न्वितः ॥
यान्यान्प्रार्थयते कामान्समस्तांश्चोपपादयेत् ॥ ३४ ॥
न वेपते उरश्चास्य सम्यग्भक्ते च जीर्यति ॥
न क्षुद्रमतिशुष्कं च स्निग्धं वृत्तं च युक्तितः ॥ १३५ ॥
पक्वलिङ्गान्वितं काले शकृद्वाऽपि प्रमुञ्चति ॥
ततो जवे च भारे च स्थाने च शयनेऽपि च ॥ ३६ ॥
न च स्वेदमवाप्नोति सुखं शेते विबुध्यते ॥
वातादीनां च दोषाणामनुलोमप्रवर्तनम् ॥ ३७ ॥
इन्द्रियैरिन्द्रियार्थं च यथावदवगच्छति ॥
नित्योदग्रोऽथ सुमनाः सम्यक्स्निग्धो भवेद्द्विपः ॥ ३८ ॥
यदा तु गुरुगात्रत्वं क्रमे न्यासे च लक्ष्यते ॥
मन्दमुद्धरते गात्रं मन्दं च परिवीजति ॥ ३९ ॥
अल्पमूत्रपुरीषश्च जृम्भते च पुनः पुनः ॥
पर्यश्रु चोपलक्ष्येत ध्यानस्वप्नपरोऽपि वा ॥ १४० ॥
विनमत्ययं चाभीक्ष्णं द्वेष्टि शय्यासनं निशि ॥
क्षिप्रं न कुरुते संज्ञां दुर्मनाः संभवेद्गजः ॥ ४१ ॥
विद्यात्सुमनसं नागं दीप्ताग्निं धेनुकार्थिनम् ॥
मृदुगात्रमुदीर्णं च रूपेभ्यो न च कुप्यति ॥ ४२ ॥
रुजावन्न भवेत्तस्य त्वक्प्रसादश्च लक्ष्यते ॥
शरीरोपचयश्चास्य स्वाम्पर्थाश्च विवर्धते ॥ ४३ ॥
शब्दं स्पर्शं रसं रूपं गन्धं वाऽपि विशेषतः ॥
सर्वाण्येतानि निःसङ्गं वेत्ति यः पञ्च पञ्चभिः ॥ ४४ ॥

*कपुस्तके धनुश्चिह्नान्तर्गतं पाठमलिखित्वा 'इन्द्रियान्वितः' इति लिखितमास्ति ।

१ क. ख. घ. हृष्टोदग्रं । २ क. °मता ॥ ३२ ॥

घनं स्निग्धं च यस्य स्याच्छकृत्पाण्डु विवर्णतः ॥
मृत्तिका शर्करा वाऽपि यत्र मिश्रा न दृश्यते ॥ १४५ ॥
एकवर्णमदुर्गन्धमविदग्धमनप्लुवम् ॥
पुरीषं दृश्यते यस्य स नागो रोगवर्जितः ॥ ४६ ॥
तैले दत्ते घृते दत्ते स्नेहं यद्यतिसार्यते ॥
पश्चाहमथसप्ताहं कदुष्णं स पिबेज्जलम् ॥ ४७ ॥
दर्भमूलपलान्यष्टौ सलिले क्वाथयेच्छुचौ ॥
एतत्स्निग्धाय पानीयं देयं वातानुलोमनम् ॥ ४८ ॥
किंचित्स्निग्धपुरीषाय यवागूं पाययेद्भिषक् ॥
यदा यच्च प्रयोक्तव्यं स्नेहपानाय तच्छृणु ॥ ४९ ॥
यावद्द्रोणो भवेन्नागस्तावत्प्रस्थान्सुसंस्कृतान् ॥
तन्दुलानां प्रमाणेन यवागूं पाययेद्भिषक् ॥ १५० ॥
एतैश्च मुद्गसहितैरनयैव हि मात्रया ॥
कृत्वा यवागूं नागाय त्र्यहं भूयः प्रदापयेत् ॥ ५१ ॥
तन्दुलाद्याढके भुक्तं मुद्गानामाढके रसम् ॥
कृत्वा नागाय दातव्यमस्नेहलवणं त्र्यहम् ॥ ५२ ॥
ततो भक्तचतुर्भागं चतुर्भागरसप्लुतम् ॥
लवणस्य चतुर्भागं सैकाहं प्रतिभोजयेत् ॥ ५३ ॥
विधार्थं त्वथ भुञ्जीत रसार्धेन मतङ्गजः ॥
लवणस्योचितस्यार्धयोगं चास्मिन्प्रदापयेत् ॥ ५४ ॥
रसस्य तु यथोक्तस्य विधाया लवणस्य च ॥
पादहीनं प्रदातव्यं समस्तं भोजयेत्कृतम् ॥ १५५ ॥
धान्याम्लैर्दाडिमाम्लैश्च दध्यम्लैः स्वरसंयुतम् ॥
भक्तं त्र्यहं त्र्यहं दत्त्वा प्रसन्नां पाययेत्त्र्यहम् ॥ ५६ ॥
यथापूर्वं समादिष्टो भोजनस्य विधिक्रमः ॥
रसजातेषु सर्वेषु *तथा कार्यक्रमो भवेत् ॥ ५७ ॥
यवसस्य चतुर्भागं स्नेहस्यान्ते प्रदापयेत् ॥
ततोऽर्धमर्धस्यार्धेन हीनं सर्वक्रमात्ततः ॥ ५८ ॥
स्नेहे निवृत्तमात्रे तु गात्राभ्यङ्गो विधीयते ॥
विधां समस्तां च तथा शीतं चाम्भोऽवतारयेत् ॥ ५९ ॥

---

* 'तथा' इति तूचितम् ।

नागं ततः स्वलंकृत्य बलिनं व्याधिवर्जितम् ॥
प्रशस्ते तिथिनक्षत्रे पार्थिवाय प्रदर्शयेत् ॥ १६० ॥
अथ क्रमेण कुर्वीत रक्षां बद्ध्वाऽध्वकर्मसु ॥
स्नेहं ततोऽस्य जनयेन्मदं च मदवर्धनैः ॥ ६१ ॥
तैलक्षीरघृताद्यैश्च रोगसंशमनैः पुनः ॥ ६२ ॥
इत्यङ्गाधिपनोदितेन मुनिना हेत्वर्थयुक्ता स्मृता
पीनी प्रीतिगुणेन वारणहिता मात्रोपचारक्रमैः ॥
यां पीत्वाऽऽतपशीतवृष्टिपवनाद्यत्यर्दितानां क्रमो
नीरोगो बलवान्गजः श्रु(स्रु)तमदो भूत्वाऽथ हन्याद्रिपून् ॥ १६३ ॥

इति श्रीपालकाप्ये गजायुर्वेदे महाप्रवचने महापाठे वृद्धोपदेशे चतुर्थ उत्तरस्थाने स्नेहपानं नाम प्रथमोऽध्यायः ॥ १ ॥

---

अथ द्वितीयोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां हस्तिशास्त्रविशारदम् ॥
पालकाप्यं महाप्राज्ञं सुखासीनं स्म पृच्छति ॥ १ ॥
स्नेहपानं तथा कार्यं वारणानां महामुने ॥
सर्पिर्वाऽपि कथं देयं वसा मज्जाऽपि वा कथम् ॥ २ ॥
कस्मिन्दिने वा मासे वा तैले मात्रा च का स्मृता ॥
जीर्यमाणं कथं तैलं विद्याज्जीर्णं कथं पुनः ॥ ३ ॥
अजीर्णायां(?) कथं कुर्यादेतदिच्छामि वेदितुम् ॥
उपचारप्रयोगं च निष्ठा तैलस्य वाऽऽदितः ॥ ४ ॥
माननिर्माणयोगं च यवसे वाऽपि को विधिः ॥
आहारं च कथं दद्यात्तैलपीताय दन्तिने ॥ ५ ॥
शय्याभङ्गं कथं कुर्यात्कथं च रसभोजनम् ॥
को घृतस्योपचारश्च देयो वा कीदृशो गजे ॥ ६ ॥
विचार्य सम्यग्बुद्ध्या हि भगवन्वक्तुमर्हसि ॥
पालकाप्योऽङ्गराजेन स पृष्टस्त्विदमब्रवीत् ॥ ७ ॥
शृणु राजन्निदं सर्वं यथावदनुपूर्वशः ॥
सर्पिस्तैलं वसा मज्जा यस्मिन्काले प्रदीयते ॥ ८ ॥

आषाढे समतिक्रान्ते श्रावणे समुपस्थिते ॥
बहुले च व्यतिक्रान्ते शुक्ले स्नेहं प्रदापयेत् ॥ ९ ॥
हस्तश्रवणपुष्येषु चित्रायामश्वयुज्यपि ॥
दशम्येकादशीद्वित्र्यष्टम्यादिषु तिथिष्वपि ॥ १० ॥
बलाभिजितसावित्रमैत्रेषु विजयेषु च ॥
वर्जिता ऋतवो ये च तैलपानस्य ताञ्शृणु ॥ ११ ॥
ग्रीष्मे हेमन्तकाले च तैलपानं न दापयेत् ॥
उद्योगे पूजितावेतौ ऋतू विजयकाङ्क्षिभिः ॥ १२ ॥
हृष्टो वा विजयार्थं यो गजो राज्यान्तरं व्रजेत् ॥
पीड्यमानोऽपि चान्येन राजा योद्धुं समुत्सहेत् ॥ १३ ॥
हेमन्ते सस्यसंपूर्णा मेदिनी शीतलोदका ॥
पत्त्यश्वरथनागानां भवेच्चापि सुखावहा ॥ १४ ॥
लोभाद्वा यो व्रजेद्यात्रां भयाद्वाऽप्यथवा च यः ॥
अकस्मात्संप्रयोगात्तु व्यापत्तिर्द्विरदे ध्रुवा ॥ १५ ॥
महामात्रैस्तदा नागा विनीयन्ते च कर्मसु ॥
शिशिरे घर्मकाले च वारणानां नराधिप ॥ १६ ॥
घर्मकाले च ये दोषाः स्नेहपानस्य ताञ्शृणु ॥
ग्रीष्मे सूर्यांशुभिर्दग्धा वृक्षा गुल्मास्तथैव च ॥ १७ ॥
मेदिनी दवदग्धा च संक्षिप्तपयसोदका ॥
निदाघजलरोधे च स्नेहतृष्णा प्रवर्तते ॥ १८ ॥
क्षिप्रं प्राणा विपद्यन्ते तृणाग्निरिव पार्थिव ॥
इत्येतैः कारणै राजन्नृतुर्ग्रीष्मो विगर्हितः ॥ १९ ॥
तस्मात्प्रावृषि तैलं तु वारणेभ्यः प्रदापयेत् ॥
तृणानि हरितान्यत्र स्युर्वनस्पतयस्तथा ॥ २० ॥
पूर्णा वापी तडागानि मेदिनी सस्यसंवृता ॥
शोभते हरतेऽत्यर्थमिन्द्रगोपकदर्दुराः ॥ २१ ॥
न चातिशीतं नात्युष्णं न च युद्धं न कर्म वै ॥
सर्वावस्थाश्च राजानो जलपूर्णा च मेदिनी ॥ २२ ॥
स्वादुपानोदके पथ्ये विचित्रपयसावृते ॥
स्थाने ग्रामे शिवे रम्ये स्नेहपानं समाचरेत् ॥ २३ ॥

श्रावणे तैलपानं स्यादादौ भाद्रपदस्य च ॥
तैलमात्रा तु नागस्य मात्रार्धमस्य संमता ॥ २४ ॥
उत्तमाधममध्यानां भवेया हस्तिनां भवेत् ॥
तैलं स्थूले प्रदातव्यं कृशे सर्पिर्विधीयते ॥ २५ ॥
उरःक्षतानां भग्नानां वसां मज्जां च दापयेत् ॥
तैलस्याथ प्रवक्ष्यामि प्रयोगमत उत्तरम् ॥ २६ ॥
प्रतिपानं विशुद्धाय कवलैर्दीपिताय च ॥
प्रातरुत्थाय नागाय तैलपानं समाचरेत् ॥ २७ ॥
जीर्णेऽल्पता(म)स्यं देयं च ततस्तोयावगाहनम् ॥
स्नातपीतोदकं चैव निवाते स्थापयेत्ततः ॥ २८ ॥
यथोचितं च यवसं तस्य दद्याद्विचक्षणः ॥
दिवा च स्नेहयोगेन स्नापयेत्तस्य हस्तिनः ॥ २९ ॥
पीते चतुर्नालिके च शय्यां रात्रौ नयेद्गजम् ॥
अभ्युद्गताय यवसं वारणाय प्रदापयेत् ॥ ३० ॥
प्रभाते सुलघुं च बद्धरस(मू)त्रपुरीषिणम् ॥
ततः सुमनसं ज्ञात्वा तैलं नागाय दापयेत् ॥ ३१ ॥
द्रोणं चतुर्थे दिवसे पीतवन्तं मतङ्गजम् ॥
धनुःशतायतां वीथीं नयेद्वीथेर्गतेन तम् ॥ ३२ ॥
चोद्यमानस्य तत्तैलं सर्वतः प्रतिधावति ॥
सम्यग्गच्छति कोष्ठं च विक्रियां न च गच्छति ॥ ३३ ॥
स्वच्छन्नं चोदकं दद्याद्यावत्साम्यं च कांदिकम्(?) ॥
पञ्चाढकं भवेदेयं दिवसे पञ्चमे गते ॥ ३४ ॥
षष्ठे षडाढकं दद्याद्दिवसे तस्य हस्तिनः ॥
दिवसे सप्तमे चैव परीक्षेत मतङ्गजम् ॥ ३५ ॥
अच्छपानं च पिबतः कोष्ठो यस्य न भिद्यते ॥
रूक्षं तु तस्य तं विद्यात्कोष्ठं मारुतपीडितम् ॥ ३६ ॥
आढकक्रमयोगेन वर्धयेत्तस्य हस्तिनः ॥
यां मात्रां जरयेत्सम्यक्तां मात्रां समुपाचरेत् ॥ ३७ ॥
उत्तमाय च नागाय देयं प्राभिनवाढकम् ॥
मध्ये च विनिविष्टेन ह्यधमाय नराधिप ॥ ३८ ॥

१ क. जीर्णे त्वस्य ततो देयं त°।

चतुर्विंशत्याढकं तु पाययेच्च कनीयसे ॥
सप्ताहं पाययेत्स्नेहमुत्तमाग्निं मतङ्गजम् ॥ ३९ ॥
मध्यमाग्निं च पञ्चाहं मन्दाग्निं त्र्यहमेव च ॥
विरिच्यते ततः सम्यक्कोष्ठं चाऽस्य विशुध्यति ॥ ४० ॥
एतत्स्नेहप्रमाणं तु विधिं चैव समाचरेत् ॥
विभागेन विधानाच्च रूक्षं भोजनमिष्यते ॥ ४१ ॥
स्नेहमच्छं तु पिबतो लवणं न प्रदापयेत् ॥
यस्यापि पिबतस्तैलं वारणस्य न जीर्यति ॥ ४२ ॥
तस्य विश्रम्य दातव्यं द्व्यहं वा त्र्यहमेव वा ॥
पिप्पलीशुण्ठिमरिचं सपञ्चलवणायुतम् ॥ ४३ ॥
विश्राम्येतस्य पिण्डं तु सायं प्रातः प्रदापयेत् ॥
तक्रं वातहरं चैव लवणांश्च प्रदापयेत् ॥ ४४ ॥
यथोक्तं यवसं चैव नानार्थेषु सुखोदकम् ॥
एवं जीर्णे यदा तैलमथैनं पाययेत्पुनः ॥ ४५ ॥
अथास्याजीर्णतैलस्य चिह्नानीमानि लक्षयेत् ॥
दाहं संजनयेच्चैव गात्राणि मूर्छा च दन्तिनः ॥ ४६ ॥
तैलं वमति संक्षोभ्य हृदयं चास्य पीड्यते ॥
वेपते श्वसिति स्थूलं मुखशोषश्च जायते ॥ ४७ ॥
भिन्नं चैव पुरीषं स्याद्रक्तमल्पं च मेहति ॥
स्नेहव्यापत्सु च प्रोक्ता क्रिया तस्य समाचरेत् ॥ ४८ ॥
सम्यग्जीर्यमाणे तु तैले तस्याप्यतः परम् ॥
रूपस्य कुरुते गात्राणि हृष्टं च पारिवीजति ॥ ४९ ॥
विकारान्परिणामे तु कुरुते वारणो मुखे ॥
विजृम्भते विनमति तृष्णा चास्योपजायते ॥ ५० ॥
जीर्यमाणस्य विज्ञानं जीर्णे जीर्णे प्रदापयेत् ॥
अथैनं सुस्निग्धं स्नेहं यवागूं प्रतिपादयेत् ॥ ५१ ॥
ईप्सितं यदि मांसेषु तैले दद्याद्यथोत्तमम् ॥
यं प्रमाणं तस्यापि वदतस्तन्निबोध मे ॥ ५२ ॥
पञ्च सार्धः स्मृताः श्रेष्ठे पञ्चमो मध्यमे स्मृताः ॥
त्रिभागः सार्धो अधमस्य इत्येवं स्नेहनिश्चयः ॥ ५३ ॥

यदा पूर्णो भवेत्स्नेहः संसर्गं तस्य कारयेत् ॥
पश्चाहं पाययेन्मण्डं भक्तं चास्मै प्रदापयेत् ॥ ५४ ॥
पश्चाहं मुद्गमण्डस्य दद्याच्च यवसं लघु ॥
शक्तुद्रवेण वा यवं निःस्नेहं रूक्षमेव च ॥ ५५ ॥
चतुर्थांगं विधायास्तु वारणं प्रतिभोजयेत् ॥
वर्धयेत्क्रमशश्चास्य मुद्गयूषेण भोजयेत् ॥ ५६ ॥
पिप्पलीशृङ्गवेराभ्यां पञ्चमूलघृतसंस्कृतान् ॥
दापयेत्क्रमशश्चास्मै संस्कृतं रसभोजनम् ॥ ५७ ॥
शालीनामोदनं दद्यात्सुस्विन्नं मृदुमेव च ॥
मुद्गोदकं च स्निग्धे स्नेहपीते प्रशस्यते ॥ ५८ ॥
भक्तं स्नेहं रसं ग्रासं क्रमयोगेन(च) वर्धयेत् ॥
पर्वाणि पञ्च नागाय लवणस्य प्रदापयेत् ॥ ५९ ॥
वर्धयेत्सान्त्विकं तावद्यावत्पूर्णं प्रमाणतः ॥
गात्राणां मर्दनेकं तु कन्दरेषु प्रयापयेत् ॥ ६० ॥
शशातित्तिरलावानां माहिषपृषतैणयोः ॥
षड्भागार्धमाषैर्वेसवारं प्रकल्पयेत् ॥ ६१ ॥
पिप्पलीमरिचैर्युक्तः शुण्ठीगुडसमन्वितः ॥
वेसवारः प्रदेयः स्यात्क्रमं तेनैव कारयेत् ॥ ६२ ॥
कृसरामाषपिण्याकपिष्टो गुडसमन्वितः ॥
प्रदेयो बृंहणार्थाय मांसपानं च दन्तिनाम् ॥ ६३ ॥
भक्षा पञ्चलवणैर्युक्ता त्रिकटुकेन च ॥
वराहमहिषाणां च कुक्कुटानां खरोष्ट्रयोः ॥ ६४ ॥
श्वाविच्छल्यकगोधानां मृगाणां जाङ्गलानाम् ॥
रसमुक्तम्ललवणं धान्यकुस्तुम्बुरान्वितम् ॥ ६५ ॥
हिङ्गुसैन्धवसंयुक्तं तथा त्रिकटुकेन च ॥
रसं प्रदापयेन्नागे दाडिमाम्लकसंयुतम् ॥ ६६ ॥
मेदैर्वा मांसैः पूर्वोक्तैर्यवासस्तु प्रकल्पितैः ॥
दधिमिश्रकटूष्णोन्मथैर्गुडशर्करया युतैः ॥ ६७ ॥
सुरासवैर्बृंहणार्थाय वेसवारं प्रदापयेत् ॥
पञ्चमूलासवपानं च चास्मै प्रदापयेत् ॥ ६८ ॥

१ क. °मुखेन तु° । २ क. प्रकल्पयेत् ।

एतेनैवोपचारेण रस्यो मासत्रयं गजः ॥
रसप्रयाणं वक्ष्यामि वारणानां यथाक्रमम् ॥ ६९ ॥
अर्धाढकं मत्स्यरत्नी रसं नागाय दापयेत् ॥
सायं प्रातश्च निर्गच्छेद्यथापूर्वमरोगवान् ॥ ७० ॥
यथाशास्त्रमसंदिग्धं वस्तवं समुपाचरेत् ॥
एवमाप्यायते नागो न च तैलं विपद्यते ॥ ७१ ॥
गृह्णाति सर्वमीर्याणि हार्याण्यपि हरत्यसौ ॥
स्निग्धरोमच्छविर्नागः स्नेहितः स सुखी भवेत् ॥ ७२ ॥
तैलमात्रा तु या प्रोक्ता सर्पिषो वा विधीयते ॥
उपचारविधिश्चैव यथा तैले तथैव च ॥ ७३ ॥
सर्पिरश्वयुजे मासि वारणेभ्यः प्रदापयेत् ॥
सुखोष्णं पाययेत्सर्पिः प्रातरुत्थाय वारणम् ॥ ७४ ॥
कारयेत्कट(व्ट)कच्छन्नं हस्तिवेश्मास्य सर्वतः ॥
समृद्धे चाग्निसंदीप्ते मतिवाहोऽनुकारयेत् ॥ ७५ ॥
गोकरीषसुसं(सं)कीर्णा शय्या चास्य हिता भवेत् ॥
यवमानि च देयानि हरितानि मृदूनि च ॥ ७६ ॥
कवलाश्च प्रदेयाः स्युस्तथा वातहरा गजे ॥
प्रभाते मुदितं दृष्ट्वा ततश्च क्रमयेद्गजम् ॥ ७७ ॥
धनुःशतायतां वीथीं वाहयेत्प्रथमं गजम् ॥
बलं प्रकृतिसात्म्यं च जीर्णाजीर्णं च लक्षयेत् ॥ ७८ ॥
द्वितीयं द्विगुणं वीथ्यां वाहयेद्वारणं शनैः ॥
षष्णाडिकं तु याते तु स्नपनं चास्य निर्दिशेत् ॥ ७९ ॥
यवू(षु)द्भुताय यवसं वारणाय प्रदापयेत् ॥
प्रभाते स्थानमासीय दृष्ट्वा सुमनसं गजम् ॥ ८० ॥
सर्पिः प्रदापयेत्तस्मै पूर्वोक्तैस्तैरुपक्रमैः ॥
एष ते सर्पिषः प्रोक्तो विधिवच्छस्य(?) भूमिप ॥ ८१ ॥
दुर्बलो बलमाप्नोति मांसं तेजश्च वर्धते ॥
तथाऽध्वानं विषहते शीतमुष्णं च वारणः ॥ ८२ ॥
स्नेहं विषहतेऽस्यर्थं न च कर्माणि सज्जते ॥
इत्येते सर्पिषः पाने गुणाः सम्यक्प्रकीर्तिताः ॥ ८३ ॥

---

१ क. °केऽसतिया° ।

वसामज्जाप्रमाणं तु निश्चितं वक्ष्यते ततः ॥
मज्जा चैव यथा प्रोक्ता तन्मे शृणु महीपते ॥ ८४ ॥
वेणुवेत्रलतयोर्मध्ये यथान्मज्जा भवते भिषक् ॥
महिषाजवराहाणां ये चान्ये वनचारिणः ॥ ८५ ॥
नक्रपाठीनमत्स्यानां ये च स्थूलजलचारिणः ॥
मज्जा तेभ्यः प्रधानतमा वसा चाऽपि महीपते ॥ ८६ ॥
रोगाः सम्यक्प्रशाम्यन्ति बलं तेजश्च वर्धते ॥
मांसोपचितसर्वाङ्गैर्लाघवं चास्य जायते ॥ ८७ ॥
मज्जायां विधिरित्येव गुणाश्चापि प्रकीर्तिताः ॥
क्रमः स एव पूर्वोक्तो यथोक्तः सर्पिषो यथा ॥ ८८ ॥
समाचरेच्चयोर्दिष्टं वैद्यः शास्त्रविशारदः ॥
यवसानि विविधानि चारणं ताम्रपत्रिकम् ॥ ८९ ॥
भेदनीयानि आनीयात्तृणान्येतानि पार्थिव ॥
उत्कटं रोहिषं चैव ऊर्णिपादं तथैव च ॥ ९० ॥
उप(त्प)लं पद्मकं चैव यवान्यश्वाङ्कुलं स्मृतम् ॥
संघातार्थं प्रदेयं स्यात्स्नेहपीतेषु हस्तिषु ॥ ९१ ॥
इति स्वबुद्ध्या विनयेन शिष्यया-
दुवाच तेऽङ्कं विधिवत्प्रपारितम् ॥
करोत्वयोगं बलिनं च वारणं
स चापि राजा भिषजामुपास्यताम् ॥ ९२ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदमहाप्रवचने चतुर्थे उत्तरस्थाने स्नेह-
पानविधिकथनं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

अथ तृतीयोऽध्यायः ।

अङ्गे हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
अनुपानविधिं कृत्स्नं श्रोतुमिच्छामि तत्त्वतः ॥ १ ॥
वेदकोषकुरङ्गाणां पृथक्त्वेकतमस्य च ॥
गुणदोषाश्च ये तत्र तन्मे व्याख्याहि पृच्छतः ॥ २ ॥
ततः प्रोवाच भगवान्पालकाप्यो महामुनिः ॥
आसन्नमोक्षमोपायः पायनीमवरक्षितः ॥ ३ ॥

सपादे द्व्यरत्नी च आयामस्तस्य दन्तिनः ॥
द्व्यरत्नी वितस्तिश्च नाहोऽप्यस्य विनिश्चितः ॥ ४ ॥
अङ्गुलानि च चत्वारि पञ्चमांशो यवस्य च ॥
स्मृतोत्तमस्य नागस्य वर्षवृद्धिः समुच्छ्रये ॥ ५ ॥
पञ्चाङ्गुलं समधिकं यवभागश्च पञ्चमः ॥
तस्य स्याद्दीर्घतायामे परिणाहे षडङ्गुला ॥ ६ ॥
अहीनाङ्गस्य नागस्य जन्मना वा विरोधिनः ॥
समवेतप्रमाणं स्याद्विषमं स्यादतोऽन्यथा ॥ ७ ॥
वृद्धाः स्त्रीणाश्च बालाश्च न निर्देश्या हि रूपतः ॥
बालः समस्तरूपश्च क्षीणो वृद्धश्च हीयते ॥ ८ ॥
पूर्वकायेऽधिको यश्च यश्च पश्चात्प्रपीडितः ॥
विक्षिप्तश्चातिसंक्षिप्तो हीनग्रीवामुखस्तथा ॥ ९ ॥
यो विशालश्रोणिपृष्ठपार्श्वकोरसित(?)स्तथा ॥
अग्रतश्चापि कुब्जश्च पृष्ठतश्च समुन्नतः ॥ १० ॥
वामनो भयहीनश्च विकटोऽत्यर्थमाहितः ॥
अत्ययं दीर्घगात्रश्च अप्रमेयश्च षोडश ॥ ११ ॥
विपरीतगुणा येऽन्ये निर्माणे चाविरोधिनः ॥
तेषु मानं प्रयोक्तव्यं समस्तगुणयोगतः ॥ १२ ॥
स्वर्थे चैव मातव्यो नागो वैद्यैः प्रमाणतः ॥
ततः सुस्थितसर्वाङ्गः समादेशाभयो गजः ॥ १३ ॥
अनुबद्धो मानमतो मातव्यो दण्डरज्जुभिः ॥
अग्रभ्यस्यासयोः कार्यो दण्डस्तिर्यक्प्रतिष्ठितः ॥ १४ ॥
ग्रीवसंस्थेन दण्डेन ऊर्ध्वं दण्डं चरं स्पृशेत् ॥
स च येन प्रदेशेन दण्डो दण्डं च संस्पृशेत् ॥ १५ ॥
*ताप्यस्तत्रैव तत्रास्य प्रमाणं वर्ष्मणो भवेत् ॥
सप्त षट् चैव सप्त स्युः पञ्चैव पारिभाषिताः ॥ १६ ॥
उत्तमाधममध्यानां वर्ष्ममाने च रत्नयः ॥
तिर्यग्दण्डायतः स्यात्पः कुम्भयेचकयोर्गजः ॥ १७ ॥

* 'ताप्य' इति 'स्थाप्य' इति वा भवेत् ॥

१ क. °स्य वाप्मना वा विरोधिनः ॥५॥ स°। २ क. अर्धाग्रीवश्च कु°। स-
मपाश्चश्चापि कु° ।

अत्रापि बहवो दृष्टा गुणाः शास्त्रविशारदैः ॥
इति स्नेहविचारस्य सम्यक्पानगुणक्रमः ॥ ६३ ॥
सविधायोगयवसं सर्वं देयं च कीर्तितम् ॥
वक्ष्यमाणं समुद्दिष्टं त्रिविधेष्वेव हस्तिषु ॥ ६४ ॥
तत्क्रमेण समुद्दिष्टं दीप्ताग्न्यभ्यधिकं भवेत् ॥
ततोऽङ्गपतिरक्षुद्रो विनयात्पुनरुत्थितः ॥ ६५ ॥
अब्रवीच्चतुरस्त्वग्रः पुनः प्रश्नमनुत्तमम् ॥
भगवन्यवसयोरिष्टं कीर्तयिष्याम्यहं तथा ॥ ६६ ॥
ये तु यस्मिन्गुणा दत्ते तन्मे व्याचक्ष्व पृच्छतः ॥
ततः प्रोवाच भगवानादितो यवसे गुणान् ॥ ६७ ॥
तृणं तृष्णापहं प्रोक्तं तृणं तृप्तिकरं स्मृतम् ॥
मनःप्रसादनं चैव ग्रहणीदीपनं तथा ॥ ६८ ॥
वातपित्तकफानां च रक्तस्य च निबर्हणम् ॥
तृणं हरयेत(?) दोषानुदीर्णानपि हस्तिनाम् ॥ ६९ ॥
तृणाद्वर्धयते प्राणांस्तृणात्संभवतीन्द्रियम् ॥
श्रमग्लानिविघातनं तन्द्री निद्रा च हस्तिनाम् ॥ ७० ॥
तृणं यथा नाशयति शृणु यस्माच्च कारणात् ॥
सोमादापः संभवन्ति तृणमद्भ्यश्च जायते ॥ ७१ ॥
यत्किंचित्स्थावरं चैव प्रभूतं जङ्गमं तथा ॥
आप्याययति तत्सर्वं सोमो वै पृथिवीगते ॥ ७२ ॥
सोमात्मकाश्च मातङ्गा शीतसात्म्या विशेषतः ॥
तस्माद्यदा ब्रजेदर्कः पर्यायेणोत्तरां दिशम् ॥ ७३ ॥
क्षीयन्ते हि तदा नागा हीनप्राणा भवन्ति च ॥
दक्षिणायनसंस्थे तु सूर्ये सुखपरायणाः ॥ ७४ ॥
आस्वादयन्ति नित्यशः तृणं नागा न संशयः ॥
भवन्त्युत्साहवन्तश्च तृणेनैव मतङ्गजाः ॥ ७५ ॥
तदा च *पुष्टं विपुलं बलवन्तो भवन्ति च ॥
ततः प्रहृष्टमनसो रमन्ते धेनुकाधिपाः ॥ ७६ ॥

* 'पुष्यन्ति पुष्टं' इति भवेत् ।

१ क. °चरेष्वेव ।

संस्कृतासंस्कृतं चैव द्विविधं संप्रचक्ष्यते ॥
तत्र संस्कृतमेवाग्रे प्रवक्ष्यामि यथाक्रमम् ॥ ९२ ॥
भक्तं मांसरसं क्षीरं खलकं च तथा दधि ॥
संस्कृतं लोकतः प्रोक्तमसंस्कृतमतः शृणु ॥ ९३ ॥
एतैर्विवर्जितं सर्वं तद्भक्ष्यं च नराधिप ॥
वक्ष्यामि भक्ष्यं नागानां तन्मे निगदतः शृणु ॥ ९४ ॥
कुवलं पल्लवं मन्थं शालाल्वत्मूलमेव च ॥
तृणानि चेति जानीयाद्भक्ष्यं राजन्विशेषतः ॥ ९५ ॥
पेयान्यपि च वक्ष्यामि यानि नागाः पिबन्त्यतः ॥
यवागूक्षीरमद्याश्च रसाश्च विविधा नृप ॥ ९६ ॥
स्नेहाः सर्वे महीपाल संस्कृतासंस्कृताश्च ये ॥
पंचकं त्रिवृतं चैव महास्नेहश्च पार्थिव ॥ ९७ ॥
तैलं घृतं पञ्चकं च वसा च त्रिवृतं स्मृतम् ॥
स्नेहाः सर्वेऽथ मांसानि मेदोमज्जारसास्तथा ॥ ९८ ॥
सर्वा वाप्येकतः पक्त्वा महास्नेह इति स्मृतः ॥
पेयान्येतानि चोक्तानि लेहानपि निबोध मे ॥ ९९ ॥
उत्कारिका वेसवारो मोदकाश्च नराधिप ॥
उत्कारिकां प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ १०० ॥
त्रिपाकबीजं खर्जूरं मस्तकं पनसानि च ॥
पद्मोत्पलपर्णानि घृतेन सह पाचयेत् ॥ १ ॥
मत्स्यण्डिका शर्करा वा तत्र देया यथाक्रमम् ॥
लक्ष्मणोत्पलचूर्णानि पिप्पलीतण्डुलास्तथा ॥ २ ॥
घृते गुडं च संयोज्य पाचयेन्मतिमान्भिषक् ॥
लड्डुकाः सुकृता वै क्षौद्रं वाऽथ कसेरुकः ॥ ३ ॥
तथा पुष्करबीजानि लक्ष्मचूर्णानि कारयेत् ॥
घृतेन परिषेकोऽपि युक्त्या सम्यग्विपाचयेत् ॥ ४ ॥
एवं दद्यात्तु नागस्य कायाग्निबलवर्धनम् ॥

इत्युत्कारिका ॥

अतः परं प्रवक्ष्यामि वेसवारं महीपते ॥ ५ ॥

---

१ क. ख. वल्कं ।

संसक्तकुक्षिपवनस्य पवनोऽथेव मारुतः ॥ ७८ ॥
न कुप्यति यथैवापि मारुतः स्थिरतां गतः ॥ ७९ ॥
संशुष्कयवसाहारैर्बहुशनकुशासनैः कृशैः ॥
आपन्ने ये गजानां वै बहुधा चैव मातृषु ॥ १८० ॥
गर्भे एवानिलस्तेषां कुपितो गात्रसंधिषु ॥
संस्थितम्(?) कुप्यति मुहुः स्कन्धं च कुरुते सकृत् ॥ ८१ ॥
गात्रावकुञ्चनमित्याहुस्तं द्विपं शास्त्रकोविदाः ॥
येषां न कम्पतेऽत्यर्थं विशेषो गात्रसेचनैः ॥ ८२ ॥
तेषामपि भवेत्पानमथ तैलस्य पूजितम् ॥
महोदराश्च ये नागास्तथा येऽपि च शारदाः ॥ ८३ ॥
प्रसन्ना सर्वगन्धैरन्विता तेषु दापयेत् ॥
वारुणी दीपयत्यग्निं अनपत्यकृतापहम् ॥ ८४ ॥
प्रसादनीया हृष्या च बृंहणी वीर्यवर्धिनी ॥
कृमिघ्ना तैलसंपुक्ता श्लेष्माणं च निरस्यति ॥ १८५ ॥
हिता व्यायामदग्धाय तथा वाऽनिलरोगिणे ॥
क्षुभितानिलवंशानां विप्लुतमस्तवल्कलाम् ॥ ८६ ॥
मदिरा द्राक्षया युक्ता हिता क्षौद्रेण चान्विता ॥
भाराध्वगमनश्रान्ता वधबन्धार्दिताश्च ये ॥ ८७ ॥
संहता ये च विहिता गजाः संग्रामकर्मसु ॥
([1]तेभ्यो गुडयुता देया दन्तिभ्यो मदिरा सदा ॥ ८८ ॥
वज्रवत्संनिपातेषु विहिता ये महीक्षिपैः ॥
वारुणी पञ्चाम्लयुक्ता रसैर्जाङ्गलवर्जितैः ) ॥ ८९ ॥
तेभ्यो गजेभ्यो दातव्या यथान्यायं महीपते ॥
समानादेऽग्निदौर्बल्ये तृषितानामह एव च ॥ १९० ॥
मदिरा वान्तने पथ्या क्वाथैः सह योजिताः ॥
वातोन्मथितदेहाश्च नामकुलाश्च ये गजाः ॥ ९१ ॥
तेषां दधि सुरा देया पञ्चापक्वजपैर्युता ॥
श्रान्ता ये तृषिता ये च भिन्नमूत्रपुरीषिणः ॥ ९२ ॥

---

[1] धनुश्चिह्नद्वयान्तःस्थो नास्ति पाठः कपुस्तके ।

---

१ क. न कुप्यति मुहुः सद्यं नागस्य कुरुते सकृत् । २ क. °या यथान्यायं महीपते ॥ आ° ।

पित्तप्रशमनो बल्यस्तृष्णोपशमनस्तथा ॥
मेदकः संप्रदातव्यो ग्रीष्मे तु ग्रहकारिणा ॥ ७ ॥
विरुढानां कषायेण मुद्गान्स्विन्नान्प्रमाणतः ॥
कषाये खादिरे चैव प्रभाते च सुशीतलान् ॥ ८ ॥
कुटजस्येक्षुरस्यापि किण्वस्य च गुडस्य च ॥
सूक्ष्मचूर्णं समालोड्य निम्बस्य च धवस्य च ॥ ९ ॥
षण्णां तु पञ्चपञ्चाशत्प्रमाशानामरत्निनाम् ॥
सौवीरस्याऽऽढकेनाथ तिलतैलेन वा पुनः ॥ २२० ॥
समं संमर्द्य तत्सर्वं प्रातरेव प्रदापयेत् ॥
मांसं च वर्धते तेन न च कुप्यन्ति धातवः ॥ ११ ॥
दोषाश्चास्य न कुप्यन्ति विरुढान्मेदकादतः ॥
क्षीरिणां कषाये तु कृत्वान्यान्पाचयेद्भिषक् ॥ १२ ॥
रजन्या वा कषायेऽम्भःसुस्विन्नान्कापयेन्नृप ॥
खदिरासननिम्बानां चूर्णं च कुटजस्य च ॥ १३ ॥
यमुनां पञ्चपञ्चाशत्प्रभूनः कार्मुकस्य च ॥
कुडवः कुडवश्चात्र प्रदातव्यो विजानता ॥ १४ ॥
स्यात्किण्वगुडतैलानां प्रत्येकं पञ्चविंशतिः ॥
समं संमर्द्य तत्सर्वं प्रातः शीतं प्रदापयेत् ॥ २१५ ॥
शरीरं चीयते धातुं दोषाः कोपं न यान्ति च ॥
ग्रहणी दीप्यते चास्माद्गजस्याक्षीरमेदकात् ॥ १६ ॥
मांसभृततण्डुलांश्चापि चूर्णयित्वा च पूर्ववत् ॥
रात्रौ सम्यक्कृतं चूर्णं वाऽप्यपक्वं सुशीतलम् ॥ १७ ॥
प्रभाते तद्गुणायाथ दापयेद्बालकण्वयोः ॥
बलामानागबलाशतपुष्पाकोलोत्पलकन्दजाम् ॥ १८ ॥
तथेक्षुरकबीजानां चूर्णं च समुपाहरेत् ॥
सर्वेषां पञ्चपञ्चाशत्प्रमाणानामरत्नितः ॥ १९ ॥
तैलेन सर्पिषा वाऽपि दध्नस्त्वथाढकेन च ॥
चूर्णितं च संमर्द्य प्रातरेव प्रदापयेत् ॥ २२० ॥
पित्तप्रशमनं बल्यं तृष्णादाहप्रणाशनम् ॥
कफवातहरं पथ्यं मदसंजननं तथा ॥ २१ ॥

शीतलं मधुरं स्निग्धं जीवनं बृंहणं हितम् ॥
आयुष्यं चैव वृष्यं च पयः परमभेषजम् ॥ ३६ ॥
(*ग्रहणीदीपनं चैव तथोपचयकरं तथा ॥
मधुरस्निग्धभावाभ्यां वातरोगविनाशनम् ) ॥ ३७ ॥
शैत्यान्माधुर्यभावाच्च पित्तप्रशमनं नृप ॥
एवमुक्तैर्गुणैर्युक्तं कफे नातिहितं भवेत् ॥ ३८ ॥
तदेव रक्तपित्तानां भेषजं परमं स्मृतम् ॥
क्षीरपानाद्धि सततं जायन्ते प्राणिनो भुवि ॥ ३९ ॥
निर्विकाराः प्रवर्तन्ते तस्मात्सर्वहितं पयः ॥
गर्भान्निष्क्रान्तमात्रस्तु क्षीरं नागोऽभिनन्दति ॥ २४० ॥
मासान्वर्धयते क्षीरं वर्षं च जनयत्यपि ॥
तस्मात्क्षीरं नृपश्रेष्ठ हस्तिनां दापयेद्भिषक् ॥ ४१ ॥
वृद्धास्तरुणका ये च धेनुकाश्च च विश्रुताः ॥
तेभ्यः प्रयत्नतः क्षीरं केवलं संप्रदापयेत् ॥ ४२ ॥
संजातमात्रमासेषु सर्पिष्कं संविधीयते ॥
तेन संजायते नागः प्रव्यक्तकनुरदः ॥ ४३ ॥
स्थिरोपचितगात्रश्च प्रसन्नेन्द्रियमानसः ॥
वह्न्यादिभिश्च मुख्यं च रात्रिपर्युषितं च यत् ॥ ४४ ॥
दोषान्प्रकोपयत्येतद्दोग्ध्रनोपहतं च यत् ॥
तृष्णां छर्दिं च जनयेद्ग्रहणीं दूषयत्यपि ॥ २४५ ॥
सद्यःक्षतमसंसृष्टं पयः सर्वगुणावहम् ॥
†इमेष्वेव विकारेषु क्षीरपानं न शस्यते ॥ ४६ ॥
मन्यास्तम्भे हनुस्तम्भे अर्दिते तापतालुके ॥
शिरस्तापे चास्थिभङ्गे गलाने शूने तथैव च ॥ ४७ ॥
कोष्ठमूलेषु सर्वेषु योनिमूलाश्च ये स्मृताः ॥
प्रवाहिकायां दातव्यं पयो मध्यं प्रमाणतः ॥ ४८ ॥
वृद्धे बाले कृशे क्षीणे पित्तरोगहतेषु च ॥
धेनुकासु च दातव्यं भग्नेषु विभवेषु च ॥ ४९ ॥

* धनुश्चिह्नान्तर्गतो नास्ति पाठः कपुस्तके । † आर्षप्रयोगोऽयम् ।

१ क. °पयेतश्च योन° ।

कटसंरुद्धभागानां कटस्नेहनमिष्यते ॥
तत्र ये हेतवः प्रोक्ताः कटश्रो(स्रो)तोनिरोधने ॥ ७८ ॥
शरशक्त्यृष्टिखड्गानां प्रतिघातैः पृथग्विधैः ॥
प्रतिहस्ता(स्त्य)भिघाताद्वा प्रकोपादनिलस्य च ॥ ७९ ॥
वृक्षप्राकारभित्तीनां हरणाद्घृष्यतः करौ ॥
ज्वलनाभिहि(ह)तस्यापि रुध्येते दन्तिनः कटौ ॥ २८० ॥
एवं बहुविधोपायैः संनिरुद्धकटो गजः ॥
दानपूर्णायतकटस्तिष्ठत्यल्पपरिश्र(स्र)वः ॥ ८१ ॥
सलोष्टकाष्ठैर्मातङ्गः कटान्तमभिघर्षति ॥
बहुशश्चावकिरति वालुकोदककर्दमैः ॥ ८२ ॥
लिङ्गैरेतैर्विजानीयात्संनिरुद्धकटं गजम् ॥
कटश्रो(स्रो)तोविशुद्ध्यर्थमिमं कुर्यादुपक्रमम् ॥ ८३ ॥
भद्रदारुहरिद्राभ्यां लवणैर्लशुनैरपि ॥
विडङ्गैः पञ्चमूलाभ्यां सरत्नेन च दन्तिनः ॥ ८४ ॥
सर्पिःसिद्धमनिर्दग्धमन्तःश्रो(स्रो)तः प्रदापयेत् ॥
बस्तिदानेन नागस्य विशुद्धिरुपजायते ॥ २८५ ॥
माहिषं त्वथ गव्यं वा तत्र बस्तिं तु ग्राहयेत् ॥
तत्र नेत्रं दृढं बद्ध्वा काञ्चनं रौप्यमेव वा ॥ ८६ ॥
कोरटं पुष्पवृन्ताग्रं सुश्लक्ष्णं सुसमाहितम् ॥
द्वादशाङ्गुलमायामं प्रवेशे त्र्यङ्गुलं भवेत् ॥ ८७ ॥
मुद्गमात्रप्रमाणेन स्रोतसाऽथ समन्वितम् ॥
बस्तिदानेन नागस्य कण्ठशुद्धिर्भविष्यति ॥ ८८ ॥

—:0:—

अतो गुणान्प्रवक्ष्यामि विधिवद्गात्रसेचने ॥
सर्वसेके च नागानां यथावदभिनिश्चितम् ॥ ८९ ॥
गुरुबन्धाभिघाताभ्यां विरुद्धपरिवर्तनात् ॥
विषमे कर्दमे निम्ने सलिले वाऽपि धावतः ॥ २९० ॥
स्खलनैर्भर्त्सनैर्बन्धैः प्ररोधैर्वाऽपि दन्तिनाम् ॥
अभिघातैश्च विविधैः स्तम्भो गात्रेषु जायते ॥ ९१ ॥

---

१ ख. सरसेन । २ क. °स्य विशुद्धिरुपजायते ॥ ८८ ॥ माहिष्ये(ण) कण्ठशुद्धिर्भविष्यति न संशयः । अ° ।

तथैव विषमाहाराच्छयनाद्वाऽपि दन्तिनाम् ॥
दुःस्थानाच्चापि नागानां जायते गात्ररोगता ॥ ९२ ॥
तेषां तैलेन सिक्तानां सर्पिषा वसयाऽपि वा ॥
भवन्ति मृदुभूतानि श्वयथुश्चोपशाम्यति ॥ ९३ ॥
आदीप्तस्य प्रशमनं हरणे प्रतिहस्तिनः ॥
सहसा वाऽप्यभिहतस्तरणान्महतोऽपि वा ॥ ९४ ॥
क्षुभ्यन्ते दन्तिनोऽङ्गानि ततस्तिष्ठति वारणः ॥ २९५ ॥
स्तब्धगात्रापरकरः श्र(स्र)स्तश्रवणवालधिः ॥
भवेच्चैव ततः क्षिप्रं काष्ठभूतः सुदुर्मनाः ॥ ९६ ॥
यथोद्दिष्टप्रमाणेन सर्पिषा तस्य दन्तिनः ॥
सेचनं सर्वगात्राणां विहितं तृत्रतेन वा ॥ ९७ ॥
शेषैर्वाऽपि यथायोगमित्ययं विहितो विधिः ॥

—:():—

अतः परं प्रवक्ष्यामि शिरसो म्रक्षणे गुणान् ॥ ९८ ॥
विक्षतान्यङ्कुशाग्रेण दन्तितो घातनेन च ॥
ततो घृष्टानि सहसा कवलैः कुवलैरपि ॥ ९९ ॥
निर्वाणमुपगच्छन्ति भवन्ति च नराधिप ॥
शिरांसि स्निग्धकेशानि तथाऽलंकारमेव च ॥ ३०० ॥
दृष्टिश्च नाविला तस्य श्रो(स्रो)तश्चास्य न हन्यते ॥
कोशाद्विक्षरते मूत्रं प्रभिन्नस्य महीपते ॥ १ ॥
दन्तिनः पच्यते कोशः सर्व एव समन्ततः ॥
तस्य गैरिकयुक्तेन घृतेन परिषेचनम् ॥ २ ॥
तत्रारत्नेः प्रदातव्यं गैरिकस्य पलं भवेत् ॥
वृश्चिकाः कृकलाशा(सा)श्च तथैव गृहगोलिकाः ॥ ३ ॥
छर्दनात्क्रमपश्चान्ये बहवो वारणे हिताः ॥
रात्रौ विनिःसृता धाम्नो भुजङ्गाश्च महाविषाः ॥ ४ ॥
ध्यातिष्ठन्त्यप्रदीपत्वाद्भक्षयित्वा च तान्गजः ॥
तीव्रां बाधामवाप्नोति मरणं वा नियच्छति ॥ ३०५ ॥
सुमना दुर्मनस्त्वं च कृतत्वं लिण्डमूत्रयोः ॥
सुखं विज्ञायते रात्रौ दीपे ज्वलति दन्तिनः ॥ ३०६ ॥

तस्माद्गजहितार्थं च रक्षणे चानुजीविनाम् ॥
गजागारे प्रदीपार्थं स्यात्तैलकुडवो नृप ॥ ७ ॥
दन्ताभ्यङ्गे तु सामर्थ्यमत ऊर्ध्वं प्रवक्ष्यते ॥
दृढौ स्थिरौ दन्तवेष्टौ करीरी चैव दन्तिनाम् ॥ ८ ॥
विषाणैः प्रहरतां च न हीयन्ते च दन्तिनाम् ॥
न राजयश्च जायन्ते स्निग्धा दन्ताश्च भूमिप ॥ ९ ॥
एतत्सर्वं महीपाल दन्ताभ्यङ्गे विधीयते ॥

---

नेत्राभ्यङ्गे तु सामर्थ्यमत ऊर्ध्वं शृणुष्व मे ॥ ३१० ॥
अभीक्ष्णं साधु पश्यन्ति घृताभ्यङ्गेषु योजिताः ॥
अक्षिरोगा न जायन्ते स्थिरा दृष्टिस्तु जायते ॥ ११ ॥
नेत्रजानि तु रोमाणि स्निग्धान्यस्य दृढानि तु ॥
भवन्ति न न भिद्येत दृष्टिस्तस्य कदाचन ॥ १२ ॥
शोभते चैव नेत्रं च निर्वाणं परमेव च ॥
एतत्सर्वं महीपाल नेत्राभ्यङ्गे विधीयते ॥ १३ ॥
पादाभ्यङ्गे तु नागानां वक्ष्यते गुणविस्तरम् ॥
नखा न परिभिद्यन्ते स्थिराः पादा भवन्ति वा ॥ १४ ॥
न चाध्वनि निषीदेत न च क्षीणतलो भवेत् ॥
न जायन्ते कचाः पादे न चक्षुरुपहन्यते ॥ ३१५ ॥
सर्वश्रमविनाशाय पादाभ्यङ्गो विधीयते ॥
यथा हि पादपः सिक्तः सर्वतः परिमाणतः ॥ १६ ॥
मूलतः स्कन्धतश्चापि सत्पुष्पफलवानपि ॥
एवं स्नेहपरीषेकैर्वारणास्तु विधीयते ॥ १७ ॥
प्रीणाति रोमकूपेभ्यः प्रविष्टो मांसमेदसी ॥
रोमान्तराणि नागस्य त्रिभिर्मात्राशतैः स्थितः ॥ १८ ॥
शुद्धाः प्रविशति स्नेहस्त्वक्चतुर्भिश्च गच्छति ॥
रक्तं व्रजति वीर्येण मात्राणां पञ्चभिःशतैः ॥ १९ ॥
षड्भिर्मांसं प्रपद्येत शतैर्मेदश्च सप्तभिः ॥
शतैरष्टाभिरस्थीनि मज्जानं दशभिर्व्रजेत् ॥ ३२० ॥
मांसं मेदोऽस्थि वाऽऽसाद्य स्वशक्तिपरिणामतः ॥
वस्त्रस्थः शमयेद्रोगान्वातपित्तकफात्मकान् ॥ २१ ॥

---

१ ख. घ. °दोस्थि तामासा° ।

इत्यङ्गायेदं शुभलघुपदयुक्तं
दाना(नं) स्नेहानां द्विरदहितं विधिज्ञः ॥
कृत्स्नं प्रोवाच क्रमगुणविधियुक्तं
विप्रो नागानां प्रथितविपुलबुद्धिः ॥ ३२२ ॥ इति ॥

इति श्रीपालकाप्ये गजायुर्वेदशास्त्रे महाप्रवचने श्रीपाठे
चतुर्थ उत्तरस्थानेऽन्नपानविधिकथनं नाम
तृतीयोऽध्यायः ॥ ३ ॥

---

## अथ चतुर्थोऽध्यायः ।

---

अथ खलु भगवन्तं पालकाप्यं रोमपादोऽङ्गाधिपतिरधिकतरमपृच्छत् । 'भगवन्, कति स्नेहविशेषाः, कति स्नेहपाकविशेषाः, कति स्नेहद्वाराणि, कति स्नेहसंयोगाः, केषां च व्याधीनामुपशमनकः स्नेह उपदिश्यते, किमुत्तममध्यमाधमानां नागानां स्नेहप्रमाणम्, केषां च स्नेहपानं प्रदेयम्, तदशेषेणाभिधत्तां भगवान्' इति ॥

अथ भगवानुवाच पालकाप्योऽङ्गरोमपादाय—'शृणु भद्रमुख स्नेहान्, स्नेहविशेषांश्च । तद्यथा—नवनीतं घृतं मस्तिष्कं मज्जा तैलं फलतैलं मेदो वसा शुक्रमित्येते नव स्नेहविशेषाः । तत्र शुक्रमस्तिष्कव्यपेतान्गार्ग्यः प्रोवाच । प्रयोगतः स्नेहान्समाभिवेशः । चतुरः स्नेहांस्तेषां प्राह गौतमः सर्पिस्तैलं वसा मज्जा चेति । भरद्वाजस्तु स्थावरजङ्गमौ द्वौ विशेषौ प्राह । स्थावरस्तु वीरुद्वनस्पतिवानस्पत्यजः । तत्र तैलं प्रधानम् । जङ्गमस्तु पयोदधिनवनीतघृतानि । तेषु घृतं प्रधानम् । पानविरेचनानुवासनोत्तरवस्तिककटबस्त्यभ्यङ्गगात्रसेकनस्यकर्माणि च । एतेषु प्रयोज्याः स्नेहाः । तत्र प्रवरमध्यमाधमवारणानां स्नेहपानं प्रदेयम् । तत्र क्लान्तपिपासितपाकलाभिभूतातियातबलक्षीणमदक्षीणकृशविभ्रमामाशयविकाराणां च बालवृद्धधेनुकानामकृतमुखद्वारणामकामानामन्नपानेष्वप्रसन्नानां च स्नेहपानमादेयं भवति । देया च तेषां विधा स्नेहसंयुक्ता यथाद्रोणप्रमाणविहिता । तयाऽस्य धातुवृद्धिश्छविप्रसादः सौमनस्यं यवसाभिनन्दनत्वं चोपजायते ॥

तत्र मात्राप्रमाणं यथाविचारं स्नेहगतमनुव्याख्यास्यामः ॥

द्रोणेऽर्धाढकीनं प्रमाणं कृत्वोत्तमस्यारत्निप्रमाणस्य विचारः । स्नेहोपयोगेन

पुनराढकम्, तथा कुवलपल्लवयवसलवणविधाप्रमाणं यथोपदिष्टमन्नपानविधौ विधेयम्। एवमेतेन प्रमाणेन यथाद्रोणमष्टा(व)रत्निसप्तारत्निषडरत्निपञ्चारत्निचतुररत्नित्र्यरत्नीनां स्नेहपानमनुविधेयं भवति। तत्र ग्रीष्मवर्षाशरद्धेमन्तशिशिरवसन्तेषु स्नेहपानमप्रसेयम्(?) । अथ पित्तप्रबलभूयिष्ठानां पित्तनिर्हरणार्थं गोघृतं प्रधानमुपदिश्यते । मेदःश्लेष्मानिलव्याध्यभिभूतानां तैलमष्टारत्निप्रमाणस्य चत्वारिंशदाढकानि पानार्थमुपकल्पयेत्। अच्छपाने स्नेहमपि वर्धयेत्। भक्तस्नेहात्प्रभृति पञ्चविधां ह्रासयेत्तु। तथाऽऽढकविवृद्धिर्यावद्दशाढकम्। अतो द्व्याढकविवृद्धिर्यावद्विंशत्याढकम्। अतः परं त्र्याढकविवृद्धिर्यावत्रिंशदाढकम्। अतः परं चतुराढकविवृद्धिर्यावत्पूर्वोदिष्टं स्नेहप्रमाणं स्यात्। तस्माद्वहर्णां पूर्वमेव कवलपिण्डप्रतिपानैर्दीपयित्वा सुमनसं जीर्णयवसकवलकुवलभक्तं विदित्वा द्विपक्षशयितं वा यथाकालोत्थितमात्मशब्दानुवयसां भिषगुत्सृष्टमूत्रपुरीषं परीक्ष्य स्नेहं पाययेत्। पीतवन्तमभिज्ञाय ऋजुवीथ्यां प्रतिवार्य द्वे पदशते त्रीणि वा स्थानमुपानयेत्। ततोऽस्य चतुरङ्गुलोच्छ्रायं यवसमुपानयेत्। अपबद्धपर्वशष्पं तस्योपपुज्यमानं मुखवैशद्यमुत्पादयति, पिपासां चोपहरति॥

अथैनं लङ्घितस्नेहमभिज्ञाय लोहितकशालितण्डुलानां षष्टिकानां व्रीहीणां विधाष्टभागस्य प्रद्रवभूयिष्ठामस्यन्दिसिद्धामलवणामस्नेहामीषदुष्णां यवागूं पाययेत्। पीतवन्तं चावगाहयेत्। नदीप्रस्रवणसरस्तडागानामकर्दमसलिलेऽवगाह्य स्थानमुपनयेत्। लङ्घनप्लवनहरणीयानि यानि चान्यानि व्यायामजातीयानि सर्वाण्येव विवर्जयेत्। अथैनं स्थानमुप·········यित्वा यवसेनैवोपच्छन्दयेत्। विधाह्रासं चोपनयन्प्रक्रमयेद्यवसेन। एवं प्रतिपूर्णमभिज्ञाय द्विनालिके शय्याभागमुपनयेत्। तस्योपनीतशय्याभागस्य श्वासो वेपथुर्ग्लानिश्चोपशाम्यति। शायकाधोरणैश्चाप्रमत्तैर्मृत्तिकाभक्षणकृताद्दोषात्संरक्ष्यो भवति । मृत्तिकारक्षणं शङ्कुमस्य हस्ते बध्नीयात्। द्विपक्षशयनं(*चैनं) चतुर्नाडिकावशेषायां रजन्यां यथाकालोत्थितमात्मच्छन्दोपयुक्तयवसं सुमनसमभिज्ञाय द्वितीयेऽहनि स्नेहं पाययेत्। एतेनैव क्रमयोगेन(ण) यथोदिष्टमष्टारत्निविशिष्टत्र्यरत्न्यधमं दशवर्षात्प्रभृति यावदशीतिकाः, तावत्स्नेहपानं नियोजयेत्। तावन्तं च कालं स्नेहं दद्याद्यावत्स्नेहप्रतिसार्यते, स्निग्धमृदुलिण्डश्चाभिवर्तते।

तत्र श्लोकः—

> कोष्ठनिर्वापणार्थं तु तैलपीतस्य दन्तिनः।
> दोषाणां(णां) चानुलोमार्थं घृतपानं प्रशस्यते॥

---

* कपुस्तके नास्ति ॥

तत्र सर्पिः पाने ································ ।
सुखोष्णोदकेनावसेकः पानं स्नानुसंभवः ॥
स्नेहपानगुणानन्यत्(न्यान्)प्रवक्ष्याम्यत उत्तरम् ।
तत्र तावत्प्रवक्ष्यामि महापीनीगुणोदयम् ॥
तत्रोपर्युक्त्या विधिवदुत्साहं जनयत्यपि ।
लाघवं चैव गात्राणामथवाऽग्नेर्विवर्धनम् ॥
अध्वनस्तूर्णगमनं महतश्चाम्भसो भवेत् ।
लवणं मर्दनं चैव गृहप्राकारदन्तिनाम् ॥
कर्माण्येतानि मातङ्गो गुरूण्यन्यानि यानि च ।
तानि पीनीगुणैर्युक्तः करोत्यपपरिश्रमम् ॥
दृढसर्वेन्द्रियबलः प्रसन्नत्वक्तनूरुहः ।
भवत्युत्साहसंपन्नो यथाकालप्रभेदनः ॥
दुःस्थानमथ दुःशय्यां वधबन्धाभिघातनम् ।
स्नेहपीतो विषहते शीतमुष्णं च वारणः ॥
सुखसंवर्तनप्रेक्ष्यः सुखस्थानोपवेशनः ।
भवत्यपि च मातङ्गः सुखसर्वाङ्गचेष्टितः ॥
अत ऊर्ध्वं तु नागानां सर्वसेके गुणाञ्शृणु ।
गुरूष्णम्नो मलहरः स्नेहनो बलकृत्तथा ॥
मृदुकरश्चेति गुणाः षडभ्यङ्गे प्रकीर्तिताः ।
एतत्ते कीर्तितं राजन्यथा पृष्टं त्वयाऽनघ ॥

—:():—

अथ प्रोवाच नृपतिर्विनयेन कृताञ्जलिः ।
यस्तु दृष्टो भगवता आहारविधिविस्तरः ॥
सर्वं दास्यामि नागेभ्यो तत्ते तस्मिन्महामुने ।
गुणा ये भगवन्दृष्टा तन्मे व्याचक्ष्व पृच्छतः ॥
एकैकस्य च ये दोषा गुणाश्चैव महामुने ।
ततः प्रोवाच भगवान्पालकाप्यो महामुनिः ॥
कृत्याकृत्यविधिं सर्वं वारणानां यथाक्रमम् ।
(*शृणु सर्वमशेषेण यत्त्वं मां परिपृच्छसि ॥

* धनुश्चिह्नद्वयान्तःस्थो नास्ति पाठः कपुस्तके ॥

१ क. °युक्तवि°। २ क. °दतः । दुः° ।

बलं नागेषु राजेन्द्र प्रोक्तं प्रकृतिसंभवम् ।
तद्बलं द्विविधं भूप प्रवक्ष्यामि यथाक्रमम् ) ॥
विधास्नेहरसैर्युक्तं यच्च प्रकृतिसंभवम् ।
तद्धि श्रेष्ठं बलं राजन्बले बलसमाश्रितम् ॥
ततः प्रयोगे सततं विपरामर्षणे तथा ।
षड्रसा यं महीपाल आहारविधिमाश्रिताः ॥
तेषां विभागं वक्ष्यामि यथातथ्यं महीपते ।
कषायं मधुरं शीतं पित्तघ्नं तिक्तमेव च ॥
अम्लं च लवणं चैव तस्य तीक्ष्णं च कोपनम् ।
कषायं कटुकं तिक्तं रूक्षं चानिलकोपनम् ॥
अम्लमुष्णं च लवणं स्निग्धं वातनिवृत्तये ॥
मधुरं लवणं सौम्यं शीतं च कफवर्धनम् ॥
तिक्तं च कटुकं चैव रूक्षं च कफनाशनम् ।
मधुराम्लकषायाणां लवणस्य तथैव च ॥
दद्यादरत्निपलिकं दन्तिने प्रथमे दिने ।
कटुकस्याथ कर्षं च तिक्तस्य द्विगुणं ततः ॥
भागान्वृद्ध्या क्रमः कार्यो यावत्सम्यक्प्रतिष्ठितः ।
पित्तसात्म्यस्य नागस्य परिशुद्धमुखस्य च ॥
पलानि मधुरः पिण्डपष्टिर्देया विजानता ।
तिक्तकः पञ्चहीनो वा दशभिः कटुको नृप ॥
षष्टिरेव कषायस्य लवणस्य तथैव च ।
सप्तहस्ताय दातव्यो हीनो हीनाय दन्तिने ॥
विज्ञेयो विंशतिपलः केवलस्तु प्रमाणतः ।
ज्ञेयमौषधवर्गाणां प्रमाणं पिण्डवत्प्रभो ॥
मात्रया हीनया द्रव्यं विकारं न निवर्तयेत् ।
अधिकं कुरुते दोषं वारणस्य महीपते ॥
तस्मादग्निं बलं कालं शरीरं प्रकृतिं वयः ।
सात्म्यं सत्त्वं च विज्ञाय भिषग्भेषजमाचरेत् ॥
द्रोणे तु विंशतिपलं भेषजानां विधीयते ।

एतत्प्रमाणं (*घृतमनु)विधेयं भवति, अथ वातरक्तपित्तोपशमने वर्तते,

* कपुस्तकस्थोऽयं पाठः । ख—घपुस्तकयोस्तु वर्णानां त्रुटिरेव स्थापिता ॥

श्लेष्मणश्चाऽऽधिक्यमभिनिवर्तयति, पित्तजातव्याधीनामुपशमने वर्तते । बल-वर्णकरं वृष्यं कृत्स्नाङ्गबृंहणं मतम् । वर्चःसंघातकरमग्निदीपनं श्वयथुगात्ररोगप्रशमनं रक्तगुल्मशोणिताण्डवातरोगोत्कर्णकवातानाहस्कन्धसर्वाङ्गरोगपाण्डुरोगव्रणशोषीशिरोभितापगात्रशोफशूलविद्युन्मालीकदम्बपुष्पहस्तग्रहमन्याग्रहाक्षि-रोगसमुत्पन्नानां च सर्वेषामुपशमने सर्पिर्वर्तते । तत्र तैलं पित्तं वर्धयत्युष्णवीर्यत्वात्, कटुकषायत्वाच्च श्लेष्माणमुपशमयति । त्वग्वर्णप्रसादजननं मृदुकरणमेकाङ्गगतानां च व्याधीनां सर्वाङ्गगतानां च, विबन्धभेदनम्, कण्डुकृमिहरम्, कोष्ठविशोधनम्, आक्षेपकानां च बाह्याभ्यन्तरायामजवगण्डग्रहाभिस्थूलानां च लेखनम्, मृत्तिकाभ्यवहारिणामवसन्नमृत्तिकानां वातश्लेष्मकृतानां च व्याधीनां सर्वेषामुपशमं नयेत् ॥

स्नेहपानाशनैस्तैलमुपदिश्यते ।

वसा तु सर्वाभ्यवहाराणां परमधातुतुल्यवीर्यत्वात्सर्पिषो वातपित्तोपशमनी श्लेष्मा शिरोविरेचकजननी सर्वरसानां च धातूनां परमगुणगुणिता विशेषवती तत्प्रसवधर्मत्वाच्छुक्रस्येति ।

मज्जा तु रसशोणितमांसमेदोस्थिमज्जपरंपरोपयोगत्वाद्रसाद्यानां परमधातुमभिनिवर्तयतीति । सा तु मज्जाक्षये हि भिषजा नागाय दीयते । यो हि धातुः क्षयमुपगतो भवति तस्य च धातोस्तेनैव च धातुविशेषेण वर्धनं कार्यम् । मज्जा वातप्रशमनी श्लेष्मणो भूयः संवर्धनीति । अथ वसातैलादीनां सर्वेषां संस्कृतानामभिहिताच्चतुर्भागविहीनो विधिः । तैलसर्पिर्वसानुघृतानामुपसंस्कृतानामर्धपानां सवितव्यं भवति । व्याधितानामव्याधितानां द्विरदपतीनां यथाव्याधिबलं सर्वत्र सात्म्यं वयो ग्रहणीबलाबलं वा रौक्ष्योक्ष्याकर्षापकर्षेण स्नेहपानं कार्यम् । स्नेहपानात्परमात्प्रभृति यथापूर्वोद्दिष्टस्नेहपानेनोपरमेत । अन्नं यवागूं मुद्गयूषं वा यावद्वा पुरीषं संबध्यते मुद्गयूषस्नेहलवणं दद्यात् । घनमनवसंहतमस्निग्धवर्णमविच्छिन्नश्लक्ष्णं पाण्डुभावोगतमविदग्धमनुष्णमदुर्गन्धमित्येवं बलं शुद्धमभिविज्ञाय त्र्यहं मुद्गयूषरसं भोजनं च दद्यात् । सर्वसेकं च मुखवर्जं तैलेनोपहरेत् । सर्पिषा चास्य मुखमभ्यञ्जयेत् । एतेन क्रमोपचारेण संजातबलमांसस्य यथोक्तप्रमाणं प्रतिपानं दद्यात् । ततः शीतोपचारम् ।

अत ऊर्ध्वं विधोपचारमुपदेक्ष्यते । तस्य यथोक्तविधायाश्चतुर्भागमवधारयेत् । ततोऽर्धां पादहीनां संपूर्णां दद्यात् । संपूर्णायाः स्नेहश्चतुर्भागमवतारयेत् । ततस्तरतमयोगे नव विधाः स्नेहाभ्यासोऽस्य पुनर्मांसं, द्रोणेऽस्य पञ्चाशत्पलप्रमाणं लावतित्तिरक्रकरकपिञ्जलानां यथाप्रधानमवचारयेत् । ततो महिषवराह-

शरभशार्दूलस्वजिचमराश्वतरवृषभोष्ट्ररुरुगवयगोधाश्वविधशल्यकष्टमालकुररमांसैर्यथोद्दिष्टप्रमाणैरसंस्कृतं युक्ताम्ललवणं नातिस्निग्धं च भोजनं दद्यात् । ततः कुलीरशङ्कुनकशिशुमाररोहितमत्स्यकूर्ममहाशकलपाठीनचर्मिणाम् । तैलोदकपिप्पलीमरिचसैन्धवलवणसंयुक्तेन मातुलुङ्गरसविस्फार्जितेनार्जकपत्रच्छन्नसुगन्धेन रसेन यथोद्दिष्टप्रमाणेन भोजयेत् । एतैरेव मांसैर्यथोद्दिष्टैः सुकल्पितैर्दधिघृतमरिचसैन्धवशृङ्गवेरगुडशर्करामाधुर्योपगतं सुसंस्कृतमुपकल्पयेद्द्वेसवारम् । तेनास्य वर्धितशरीरस्य स्थिरकठिनमांसजाव्यायामास्यमर्थं च निक्षेप्स्यते । गोजाविमहिषीणां सुसारेण दध्ना युक्तानि भोजनान्युपकल्पयेत् । तथा गुडक्षीरदधिपिण्याकरससंयुक्तं पिण्डं भोजनं दद्यात् । तस्यैव बृंहितशरीरस्य कृमिकोष्ठहरं मूत्रबस्तिविशोधनं छविवर्णप्रसादनं सैन्धवसुवर्चिकायवक्षारं सौवर्चलरोमकपिप्पलीमरिचशृङ्गवेरचव्याजमोदतेजोवतीपिप्पलीमूलकहस्तिपिप्पलीचित्रकहिङ्गुविडङ्गपञ्चलवणसंयुक्तं यथोक्तप्रमाणमासवं सुरां वा प्रतिपानं दद्यात् । ततः प्रतिपानपीतस्य षड्रात्रोषितस्य पिप्पलीशृङ्गवेरमधुतैलं सुरा गुड इत्येतत्षडङ्गप्रतिपानं ग्रहणीदीपनं रुचिकरं त्वक्प्रसादनं दद्यात् । एवमेतेन विधिना पीतः स्नेहप्रतिपानभोजनविकल्पैर्विधिविहितैः संरक्ष्यः । विशेषि(ष)तश्च नागानां मृद्भक्षणरक्षणं कार्यम् ।

पर्यवगताक्षं कवलकानां मृत्तिकाणां(नां) च विशेषेणाभिलषमाणं पिपासितमार्गकुवलयवसाभिनन्दिनं दन्तिनं विशेषतः प्रवाहिनं भिन्नलिण्डशय्यास्तम्भाभिकामं प्रमेहवन्तमतिस्निग्धं विद्यात् ।

ग्रथितपुरीषमलाघवोपपन्नं पर्यश्रुकमाध्मातं रूक्षवृत्तलिण्डं दुर्बलाग्निं सलिलकाममतिप्रमाथशीलमस्निग्धं विद्यात् ।

स्निग्धं मृदुस्निग्धविच्छिन्नं पुरीषं लाङ्गूलश्रवणहस्तैः सम्यक्परिवीजिनं प्रसन्नेन्द्रियमानसं सर्वाहारजाताभिकामिनं सुस्निग्धं विद्यात् ।

अथ प्राग्भोजनविधानमनुव्याख्यास्यामः ॥

भोजनाप्यापनेऽर्धाढकीयं द्रोणं पूर्वोद्दिष्टप्रमाणेन[1] विधास्नेहं पाययेत् । ततः पश्चाद्रूक्षं भोजयेत् । तेन नागस्याधःकायः प्रबली भवति, वातमनुलोमयति, ग्रहणीं दीपयति, बलवर्णवृद्धिं चोपजनयति, वातमूत्रपुरीषाणां च यथाकालं विसर्गमुपपादयति ॥

यस्तु पूर्वमन्नं भुक्त्वा पश्चात्स्नेहमनुपिबति, तस्य नयनदन्तगात्रगता विकाराः

---

१ क. ततोऽर्धां पादहीनां बृं° ।

प्रशान्तिमुपगच्छन्ति, वक्षसश्च बलवृद्धिमनुजनपति, पूर्वकायः प्रबली भवतीत्येतदनुभक्तिकं स्नेहपानमुपदिशन्त्याचार्याः ॥

अत ऊर्ध्वं षड्तुविभागजं स्नेहपानविधिमनुव्याख्यास्यामः ॥

यदा तु ग्रीष्मे–विततमयूखः सविता मध्यमकोष्ठमुपगतो भवति, तदा वायुः प्रबलो भवति । खरपरुषोष्णभावात्कालस्य तद्वायुरभिभवति, तदा नृवारणानां नानाविधलिङ्गवेदनाश्च विकारान्कुरुते । तदा तैलमसंस्कृतं त्रिभागजलसंयुक्तं मासमेकं खजाकमथितमच्छं दापयेत्पूर्वाह्णे । ततः प्राप्ते मध्याह्ने चावगाह्य यथा चतुर्गुणसंयुक्तं तृणमुपयोजयेत्, विधां (*चास्मै यथावत्प्रमाणविहितां दद्यात् । मृत्तिकारक्षणं च विशेषतः कार्यम् । एतमुपयोजयेत्, न वातदोषजा विकाराः संभवन्ति । तदा तैलोदकपानेन क्षुत्पिपासासहत्वं प्रसन्नतनुरोमता ग्रहणीदृष्टिबलं मुखशोषं पित्तकोपचयेत् । रोगाभवो बृहत्कायता वारणानां भवति ॥

अथ वर्षाकाले क्षीयमाणदिवसे मन्ददिवसकरविसर्गे निचितजीमूतसलीलविसर्गे कलुषनदीजलावर्तबहुलनानामृदुशष्पमृत्तिकाभक्षणकृतैर्दोषैः क्षीणधातुशरीराणां वारणानां नानाविधलिङ्गवेदना विकाराः संभवन्ति । तस्माद्यथोक्तप्रमाणमानुभुक्तिकं सर्पिस्तैलं यथाकालं पाययेत् । तेनैषां वातपित्तजा विकाराः शान्तिमुपगच्छन्ति । स्थिरकठिनशरीरा अनाविलाः संभवन्ति । निरुपहतवीर्याः संपूर्णदेहाश्च विशेषेण भवन्ति ॥

अथ शरदि[1] दिवसकरकराभिनिर्दिष्टे जगति विहितवीर्यास्वोषधीषु सस्यैर्बहले भूमिभागे मन्दवृष्टिजलधरशब्दवीरुद्वनस्पतिवानस्पत्यानामसमत्वागतवीर्यस्वादुष्णभूयिष्ठास्वोषधीषु तदा सर्पिःक्षीरपानं वारणानां प्रातः संविधेयं भवति तदा च क्षीरसर्पिर्भ्यो निदाघसमुत्थाः पित्तप्रबलभूयिष्ठा विकाराः प्रशान्तिमुपगच्छन्ति ॥

यदा तु हेमन्ते भिन्नजात इव विश्वंभरा इव बाष्पायमाणाः सरितः सप्रष्ठजलमभिवहन्ति तदा यवसौवीरकसंस्कृतं तैलमुपदिशन्ति । तेनैषां श्लेष्मणः संजायमानस्य प्रवेगोपशमो भवति । वातश्लेष्मप्रशान्तिश्च भवति ॥

शिशिरे यदा तु शिशिरपवनजातशेषे गजानां संजातबलवीर्याणामौषधीनामुपयोगाच्छ्लेष्मणो भूयस्त्वं भवति । वारणानामत्यर्थं स्थूलशरीराणामिति ।

---

* धनुश्चिह्नद्वयान्तःस्थः पाठो नास्ति कपुस्तके ॥

---

१ क. देहा । २ क. ख. खजानम° । घ. खर्जवम° ।

प्रवेगप्रशमाच्छ्लेष्मणः पूर्वलिङ्गत्वं प्रायशो भवति । ततस्त्रिफलारससंयुक्तमयथोक्तप्रमाणं तैलं पाययेत् । अनेन कफजा विकाराः प्रशान्तिमुपगच्छन्ति ॥

अथ वसन्ते संजातबलवीर्यास्वौषधीषु प्रमुदितविहगेषु पुष्पभारावनतशाखिष्वाम्रकुरबकवनखण्डबहलेषु द्विरेफानुनादिषु वनदेशेषु द्विरदपतीनां त्रिभागप्रसन्नायुक्तं तैलं दापयेत् । पूर्वोद्दिष्टसामान्यक्रियाविधिर्नुष्ठेयो भवति । अनेन च मातङ्गाः प्रहृष्टा दीप्ताग्नयोऽनुपहतवीर्या यवसाभिनन्दिनः शुद्धमूत्रबस्तयः प्रसन्नवयसश्च भवन्ति । इत्येष षड्तुपानविधिर्विहितः ) पूर्वाचार्यैरिति । आस्वादे मधुरा विपाक ईषत्तिक्तकटुकषायां च व्युपगतफेना नातिबलवती सुरो तच्छील्याभिपूजिता भिषग्भिरुपयोज्या नागानां भवति द्रोणे द्व्याढकं तु पयः सर्पिषोऽर्धाढकं विनीय दापयेत् । अथैव द्रोणे ततः प्रभृति यथाप्राणप्रमाणेन पयसः सर्पिषश्च वृद्धिरनुष्ठेयो भवति । एवमेतत्सर्पिःक्षीरपानमध्वक्लान्तस्तच्छविरदुर्बलकृष्यबालबलक्षीणभग्नमथितविष्कताकर्यातिनीतभारक्लान्तधातुकोपहतशोणितपित्तपित्तातिसारविषसंसर्गोपहतदेहगात्ररोगाभिभूतानां मदपरिस्रावक्षीणानां क्षीणदेहानां नव(ग्र)हाणां प्रशस्तं भवति । न तु क्लान्तपीतपानीयमूर्छितश्लेष्मगुल्ममूत्रापघातापष्टमेहीकृमिकोष्ठ्यामाशयविकारगलग्रहातङ्काभिभूतानाम् । मृत्तिकाभ्यवहारिणां (च) क्षीरपानमप्रदेयं भवति । मस्तिष्कमज्जाघृतनवनीतं तिलतैलं फलतैलमेदोवसाः सर्वाण्येव च यथोद्दिष्टानि च प्रमाणतः पयांसि रसांश्च जाङ्गलभूशयानां च महति कटाहे समालोड्य मृद्वग्निना पचेत्, शनैर्दर्व्याऽवघट्टयेत् । तत्संजातफेनमभिगतद्रव्यरसं वृत्तगुलिकमात्रानुपहतमविदग्धमभिविज्ञाय दर्व्या तदौषधमुद्धृत्योद्वर्तनकृतमादाय तत्र मृदुपाकं तैलं पक्त्वा व्रणविधिषु योज्यम् । नागानां बल्यं स्थिरीकरणं भवति । तदा मध्यमपाकं बस्तिनस्येषु प्रयोगकुशलैर्यथाविधिविहितम् । इहाऽऽचार्यैरभ्यङ्गसाधनार्थे च खरपाकं प्रशस्यते । तत्राभ्यङ्गमङ्गप्रत्यङ्गाश्रयव्याधिप्रशमनं क्रियाप्रयोगकुशलं प्रयुक्तं मृदुकरणमध्यं व्याधितृष्णोपशमनं प्राहुराचार्याः । तत्र सहस्रपाकं प्रधानमुपदिशन्ति । शतपाकं मध्यम्, दशावरे, विंशत्यपरे, कनीयन(?)स्नेहानुगतद्रव्यानिष्पन्नं सततभावनात् । संयुक्ततैलद्रव्यकपालपालं काष्ठचर्मसंसर्गोपगमतैलैर्नित्यमत्र तैलविधानं कार्यमभ्यङ्गार्थम् ।

अत ऊर्ध्वं सद्यःस्नेहविधिमनुव्याख्यास्यामः ॥

---

१ क. °था चेत्युप° । २ क. °रावच्छी° । ३ क. °नं वाऽऽहु° । ख. °नं चाऽऽहु° ।

वराहवसापिप्पलीलवणमज्जाघृततिलपिष्टसंयुक्तं सद्यःस्नेहः । वराहजमांसमूलकबदरदधियुक्तं सद्यःस्नेहः । पिप्पलीमरिचशृङ्गवेरचव्याजमोदस्थूलमत्स्यवसातैलैर्यवागूः सद्यःस्नेहः । स्थलकुक्कुटवराहमांससंयुक्ता कृशरा सद्यःस्नेहः । मेदोमेदुकीमत्स्यरससंयुक्तः पायसो वा सद्यःस्नेहः । पयोऽनुपानगुडतैललवणसंसिद्धां कृशरां भोजयेत्सद्यःस्नेहः । सुसंस्कृतं वेसवारं भक्षितवतः फणिज्जकरससंयुक्तां सुरां पाययेत्सद्यःस्नेहः । दधिपयोयवकुलत्थबदरचूर्णसिद्धं फाणितगर्भं गुडसंयुक्तं सद्यःस्नेह इति ॥

यदा व्यायामयोजितखेदानां पर्वतारोहणादध्वगमनात्परिखिन्नदेहानां सशर्करं चाध्वगमनं मधु सेवमानानां स्थानप्रतिरुद्धानां दण्डप्राजनवृक्षलोष्टकाष्ठाभिघातैश्चातिमात्रविहितविच्युतभग्नशाखानां वाताद्गात्रस्तम्भापरिणमनचलनलङ्घनहरणीयस्तम्भनीयेषु व्यायामव्यवायसमुत्थेष्वेवमादिषु विकारेषु संभ्रमजनितखेदेषु गात्रगतेषु च विकारेषु प्रदेयोऽभ्यङ्गः सर्वगतः स्नेहोऽस्य मार्दवं जनयति, छविं प्रसादयति, लिक्षायूकाश्चोपहन्ति, रोमकूपप्रविष्टः स्नेहः स्निग्धोष्णस्वेदनमार्दवमुपजनयति, शिरास्नाय्वस्थिसंधिपेशीनां प्रसादमभिनिवर्तयति। चतुर्विधः स्नेहोऽभ्यङ्गेषु योज्यः । अथ शिशिरे सुभगकाले हिमपतनजातखेदाः संस्तब्धशरीरा जडीभूतकरचरणप्रदेशा यदा भवन्ति द्विरदाः, तदा तेषां तिलतैलाढककिण्वगैरिकदशपलं सामुद्रलवणपञ्चपलं च चूर्णीकृत्य दृषदि पेषयित्वा मन्दाग्निनाऽधिश्रित्य चैतत्कथितमभिज्ञायावतार्य शिरोवर्जं सर्वकायमभ्यञ्जयेत् । घृतेन शिरः । त्र्यहं चैवं प्रयोजयेत् । तेनास्य च्छविर्न परिपाट्यते, वातातपहिमपतनसहिष्णुर्भवति । न चापि वातपित्तनिमित्ता विकाराः संभवन्ति । यदा तु प्राजनाङ्कुशाभिघातैः शिरःकर्मकृतैः प्रलेपैः क्षारैर्वा नानाविधवेदनाः कदम्बपुष्पीविद्युन्मालिवल्मीकपिटकाः संभवन्तीत्येवमादयो विकारा नेत्रगताः शिरोगताश्च, तेषामुपशमननिमित्तमभ्यङ्गः सर्पिषा कार्यः । तेन घनाङ्कुशप्रतिचारान्सम्यग्वेत्ति, तथाऽक्षीणि रोहन्ति मूर्धजातवरमस्तककेशाश्चास्योपजायन्तेऽलंकाराश्चेतीत्यर्थं शिरोभ्यङ्गं दद्यात् । यदा तु प्रश्नु(स्नु)तकटप्रदराजिविभूषितस्यावकटमुखविशुद्धिस्तदा कटबस्तिविधानेन कटविशोधनं कार्यम् । उभयतः कटविशुद्धश्रो(स्रो)तोमुखस्य वारणस्य यथावेगोपगतं दानं सम्यक्प्रवर्तयति ॥



अत ऊर्ध्वं तस्य बस्तिदाननासिकागुणान्वक्ष्यामः ॥

कर्णनयनग्रीवामन्याकटमुखदन्तवेष्टतालुजिह्वाक्षिशिरोदन्तोर्ध्वभागजा जत्रु-

जा विकाराः मार्जनाङ्कुशाभिघातजाश्च विकारा न संभवन्ति । वयःस्थापन-स्वरवर्णजननं रोमवर्णप्रसादच्छवीजननं धमनीशिरास्नाय्वस्थिमांससंधीनां च स्थिरीकरणं नस्यकर्मण्यस्य विधानम्, कर्मणोऽस्य वा विधानम्, गुणाश्च व्याख्याताः ॥

—:-:—

अत ऊर्ध्वं बस्तिगुणान्वक्ष्यामः ॥

यथावत्तस्य विधाऽपरां शकटिकाशाखावातभग्नविच्युतममथिताष्ठीव्यला-क्कूलवंशवक्ष्यत्रय(त्र्य)स्थिजघनकलाभागेषु सर्वाङ्गगतेषु वातविकारेषु प्रशस्तो बस्तिः ।

तस्य विधानं यथाविधबस्तिसिद्धौ वक्ष्यामः । उत्कृष्टक्षयभागेषु शय्याभा-गोपगतानां ये व्रणा रुधिरप्रस्राविणः, तोदभेदपरिकर्षणदाहपूरयसिका(?)-न्विताश्च कण्डूबहुलाः पिच्छिलपरिस्राविणः । तेषां प्रशमनार्थं यथागुणस्नेह-प्रविचारः पूर्वमेवोक्तो द्विव्रणीयेऽस्माभिरिति । अविदितपुरुषरक्षणार्थं, सर्प-कीटपिपीलिकारक्षणार्थं, दण्डाङ्कुशप्रतोदनरक्षणार्थं सायकप्रपतनरक्षणार्थं, सुमनोदुर्मनस्त्वप्रत्यवेक्षणार्थं च सर्वकालं मनःप्रह्लादनो दीपः कार्यः । तस्मा-न्नित्यं संनिहित्ततैलौषधविधानं वारणाय विधेयं भवति नित्यं भिषजा । यदाऽ-ण्डकोशो मदाभिभूतस्य तीक्ष्णोष्णभावान्मूत्रस्य सततप्रसेकात्पुष्पितो भवति, तदाऽस्य परिपोद्यते छविरभीक्ष्णम्, ततोऽस्य द्रोणे पलप्रमाणेन गैरिकचूर्ण-संयुक्तेन घृतकुडवेनाण्डकोशनिर्वापणार्थमभ्यङ्गं दद्यात् ।

———

अथाभ्यङ्गार्थं पत्रभङ्गीयं तैलं व्याख्यास्यामः ।

सोभाञ्जनकैरण्डाग्निमन्थतर्कारीसुरसानिर्गुण्डीकर्णिकारसीकषल्यर्ककुबेरा-क्षीणां प्रत्येकं पत्रभङ्गं जर्जरं समुपकल्प्य तेषां रसानां त्रीन्भागानिष्पीडयेत् । तत्र देयं चतुर्भागं तिलतैलमनुपहतं महति कटाहे ताम्रमये कृष्णायसे वरे वरपाकं विपाचयेत् । वातसंपूर्णकोष्ठानां वाताभिभूतशरीराणां गात्ररोगेषु सर्वेषु विशेषेणाभ्यङ्गार्थं तैलमेतदग्रतः कार्यं भवति ॥

———

अथ बलातिबलातैलमनुव्याख्यास्यामः ।

बलातिबलापलशतमपां विंशतिप्रस्थे जर्जरीकृत्य सुप्रक्षालितं विपाचयेत् । यतश्चतुर्भागावशिष्टं नस्यास्थापिनं सुसंवर्तितशरीरं निष्काथ्यावतारयेत् ।

१ क. °सीसब° ।

सम गवां पयसश्चतुःप्रस्थे मधुकभद्रदारुणोऽर्धपलं पेषयित्वाऽधिश्रयेत् । प्रस्थान्पञ्चात्र तैलं पश्चमालोड्य पाचयेत् । तदनुपदग्धं सिद्धमवतार्य बस्तिकर्मपानाभ्यङ्गनस्यकर्मसूपयोज्य यथार्थं सिद्धिर्भवति ।

—:०:—

अथ वज्रकतैलविधिं व्याख्यास्यामः ।

बलातिबलयोः पलशतं खण्डशः कल्पयित्वा विंशतिप्रस्थेऽपामधिश्रयेत्, चतुर्भागावशिष्टमवतार्य निष्क्वाथं तत्राऽऽवपेत् । देवदारुमधुकरास्नाजीवकर्षभकाकोलीमुद्गपर्णीमाषपर्णीमेदामहामेदाछिन्नरुहाकर्कटशृङ्गीपयस्याकाकनाशा इत्येतेषामौषधानां कार्षिकान्भागान्कृत्वा पयोष्टगुणं निष्क्वाथ्यानूपानां मांसानां पलशतप्रमाणं पञ्चमं तैलप्रस्थं कृत्वाऽधिश्रयेत् । तद्यथार्थसिद्धमवतार्य सर्ववातजानां विकाराणां निबर्हणार्थं दद्यात् । एतेनैव निष्क्वाथेन प्रतिवापौषधैश्च पयोजाङ्गलरसनिहितैः सिद्धं सर्पिः कृत्वा पित्तजानां विकाराणामुपशमनीयं बलावहं मंदसंजननं दद्यात् ।

—:०:—

अथ त्रिवृतविधिमनुव्याख्यास्यामः ।

द्विपञ्चमूलं श्वदंष्ट्रा द्विदर्भं द्विगुच्छं द्विशैरेयकं वत्सादनीशतावरीकुलत्थयवबदरश्रीपर्णीमधूकानां पूर्वोद्दिष्टप्रमाणं निष्क्वाथं कृत्वा सर्वमधुरप्रतीवापः । अनन्तावनकुष्माण्टं द्राक्षासवलोभहरिवरसरलभद्रदारुव्याघ्रनखरास्नाकुष्ठतगरहरेणुकापिप्पलीशृङ्गवेरचव्यातमालपत्रनलिकोशीरमञ्जिष्ठादारुहरिद्राणां सर्पिस्तैलवसानां प्रस्थे प्रतिवापं कार्षकमौषधानां भागं कृत्वा चतुर्गुणेन पयसा संयोज्य विंशतिपलकं मांसप्रमाणं कृत्वा जाङ्गलानूपोदकानां रसं त्रिगुणं खजाःवमथितमवतार्य ततो नक्रमहिषवराहशिशुमारवसानामुपदानं कृत्वा यथार्थं कटाहेऽधिश्रयेत् । तं मन्दाग्निना सिद्धं यथाक्रममवतार्य सिद्धलक्षणसंपन्नं कनीयसं त्रिवृतमाचक्ष्महे । ततस्तद्वातसमुत्थानां शरीराणां च हस्तिनां नस्यकर्माभ्यङ्गयोजनोत्तरपानेषु हितं तद्यथार्थमेवंविधानामन्येषां च प्रयोजयेत् । इत्येवं त्रिवृतविधिराद्यः कनीयान्व्याख्यातः ॥

अथाशीतिव्यञ्जनस्य वायोर्निबर्हणं कोष्ठानुगतशरीरस्य च वायोर्विशेषतः प्रशमनं जलधरसलिलविसर्गादद्भिराप्यायितायां मेदिन्यां बस्तिनस्याभ्यङ्गाच्छपानादिषु सततमुपयुज्यमानं तेजोबलवीर्यसंपादनं चाऽऽयुषश्च प्रत्यानयनं रसशोणितमांसमेदोस्थिमज्जाशुक्रक्षयावसन्नानां च बलक्षीणमदक्षीणोरकर्णकवातगतिहस्तग्रहदन्तरोगपादरोगगात्ररोगार्दितदेहानां वातस्कन्दबा-

ह्याम्यन्तरायाममर्दितशरीरजवगण्डकशीतकण्कमानां वा तथा विनयकर्मसंभवानां च गाढबन्धमबद्धानामुन्मथितप्रमथितसंक्लिष्टनिहितदुःस्वार्थदुर्विरिक्तानां निर्भुग्ननिर्बद्धताभिहि(ह)तभग्नावनतविच्युत(?) एवं निर्वेष्टिति पिष्टीस्थितिविमथितानामागन्तूनां गात्ररोगाणामुपशमनार्थं त्रिवृतविधिर(म)त्र व्याख्यास्यामः। कृष्णश्वेतकषायवर्णानां तिलानां तैलमुत्पाद्य, अथातसीसर्षपैरण्डतैलान्युपादाय गोजाविमहिषीणां सर्पिश्च पुनर्महिषरुरुपृषतगोजाविखरोष्ट्रव्याघ्रसिंहद्वीपितरक्षुश्वाविच्छल्यकवराहशिशुमारनक्रपाठीनतिनिशमकरकच्छपचर्मिणामजगरशृगालवानराणां यथाप्रधानं यथालाभं वसाः संहृत्य, एतेषामेव च महिषादीनां सत्त्वानां मस्तिष्कं प्रत्येकभाजनस्थमुपकल्पयेत्। गोजाविमहिषाणां सुरभितृणनिषेविणां प्राणवतां प्रभूतयवसाहाराणां पयांस्युपहार्य महति कटाहे महास्थाल्यां वाऽधिश्रयेत्। पक्त्वाऽष्टभागावशिष्टं पयोऽवतार्य शीतीभूतं दधिवद्बलवद्भिः पुरुषैः कन्याभिर्वाऽवमथ्य क्षीरघृतमुत्पाद्य प्राज्यमेवं क्षीरघृतकरणविधिः। तथोदकानां मत्स्यनक्रशिशुमारपाठीनचर्मिपाटलाक्षश्वाविच्छल्यकरोहितकर्कटकेल्लिसत्कूर्माणां च निर्यूहं कटाहेऽधिश्रयेत्। पक्त्वाऽस्याष्टभागावशिष्टं प्रकल्पयेत्। तथा जाङ्गलानां लावकतित्तिरवर्तिकककुभक्रकरकपिञ्जलबर्हिणकुक्कुटानां निर्यूहान्कृत्वा तद्रव्यं संस्कृतानुपाद्योदकानां च हंसकारण्डवचक्रवाककारनन्दीमुखाटाबकबलाकामद्गुक्रौञ्चपूर्वादीनां यथालाभं स्वपातान्सुसंस्कृतान्स्वजावमथितान्रसानुपकल्पयेत्। यवबदरकुलत्थमधुकश्रीपर्णीसणबीजाढकीमहत्पञ्चमूलविदारिकन्दादिकं च वर्गं पूर्वोद्दिष्टेन प्रमाणेन कनीयसस्त्रिवृतस्य यथोद्दिष्टं प्रमाणं मन्दाग्निसिद्धं निष्क्राथं नस्यावस्थापिनमुपकल्पयेत्। स्थानासनयोगाभ्यां द्विपानां देशकालपरिणामे सति*……॥

—:०:—

अथोचितक्रियास्वपहतवीर्या सिण्ण(?) महौषधगणमत्र व्याख्यास्यामः॥

जीवकर्षभको मुद्गपर्णीमेदाच्छिन्नरुहीक्षीरकाकोलीपयस्याकर्कटशृङ्गीकाकनासारास्नामहामेदापष्टीमधुकानन्तासारिवासरलभद्रदारुहरिद्रवरुणनागपुष्पमञ्जिष्ठारक्तचन्दनोशीरकुष्ठतगरव्याघ्रनखशतपुष्पामांसीपर्ण्हरिवेरकुङ्कुमकुटन्नटभद्रमुस्तासूक्ष्मेलास्थूलैलाखर्जूरद्राक्षापिप्पलीमूलचव्याजमोदतेजोवतीविडङ्गशृङ्गवेराणां यथाप्रमाणमनुविधाय दृषदि पेषयित्वा श्लक्ष्णमोषधगणमेकीभावमुपकल्प्य पयांसि सर्पिस्तैलवसामज्जा वा त्वेकीभावमुपकल्प्य मन्दाग्निसिद्धं मध्यमावरोत्तरपाकं यथाविधि साधयित्वा तेनैव च क्रमेण रसमायाभिर्यूहान्पु-

* 'अत्र कियान्पाठस्त्रुटितस्त्रिष्वप्यादर्शेषु' इति प्रतिभाति॥

नरधिश्रयेत् । एवं सहस्रपाकमुत्तमम्, शतपाकं मध्यमम्, अवरं दशपाकम्, त्रिवृतं साधयेदिति ।

तत्र श्लोकः—

एवं मया स्नेहविधिः प्रकल्पितः प्रमाणविद्भिर्विहितो यथार्थतः ॥
यथाविकारं च यथार्थतः क्रियां गजेषु कुर्याद्भिषजां वरस्तथा ॥ इति ।

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचने श्रीपाठे चतुर्थे उत्तरस्थाने स्नेहविधिकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## अथ पञ्चमोऽध्यायः ।

---

ऋषिं प्रश्नविदां श्रेष्ठमादित्यसमतेजसम् ॥
अङ्गराजो महाबुद्धिः पालकाप्यं महौजसम् ॥ १ ॥
सुखोपविष्टं वरदं कृतजप्यं कृताञ्जलिम् ॥
उपसंगृह्य चरणौ पप्रच्छ प्रयतो मुनिम् ॥ २ ॥
प्रजासु हितकामस्त्वं नित्यं धर्मचिकीर्षया ॥
रक्षणं च परो धर्मस्तत्र युक्तोऽहमञ्जसा ॥ ३ ॥
तन्मे बलममित्रघ्नं दन्तिनो दत्तवारणः ॥
तैरियं पृथिवी लब्धा समुद्रवसना मया ॥ ४ ॥
तेषाममितसत्त्वानां न किंचिदिह वर्तते ॥
भयमन्यत्र रोगेभ्यस्तथैषां भयमुत्तमम् ॥ ५ ॥
तेषां पुरस्तान्निखिला चिकित्सा कीर्तिता म(त्व)या ॥
मह्यं शुश्रूषवे सम्यग्भगवन्व्यक्तलक्षण ॥ ६ ॥
बस्तयो हि चिकित्सार्धं व्यापित्वात्सर्वमेव वा ॥
तेषां विधिं विशेषेण भगवन्प्रब्रवीतु मे ॥ ७ ॥
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥
उवाच निखिलं त्वेवं विधिवत्सिद्धिदायकम् ॥ ८ ॥
गुणानुपद्रवांश्चैव कृत्याकृत्यविनिश्चयः ॥
येषु वा स्थापनं कार्यमनुवासनमेव च ॥ ९ ॥
केवलं चानुवास्या ये येषु वा स्थापनं हितम् ॥
तत्र द्रव्यप्रमाणानि स्नेहबस्तिनिरूहयोः ॥ १० ॥

प्रमाणं स्नेहकालाश्च भेषजानां तथैव च ॥
विधिसंस्कारयोगश्च स्नेहपाकश्च तत्त्वतः ॥ ११ ॥
व्यापदः सिद्धयश्चैव परिहारस्तथैव च ॥
कार्याकार्यकरं ज्ञानं तत्सर्वमुपदिश्यते ॥ १२ ॥
बस्तयो हि चिकित्सार्थं सम्यग्दत्ता विजानता ॥
रुजमाशु निघ्नन्ति दोषाणामाशु शोधनात् ॥ १३ ॥
कोष्ठं न स्तम्भ्यते चैव दौर्बल्यं न च बाधते ॥
न च दोषाः प्रबाधन्ते दुष्टाश्चौषधपानजाः ॥ १४ ॥
अजीर्णे जीर्णमित्येवं न च शङ्का प्रबाधते ॥
अनुपानं च हरणं दोषाणां बस्तिना भवेत् ॥ १५ ॥
बृंहणं स्नेहनं बल्यं मनसश्च प्रसादनम् ॥
जववीर्योपपत्तिस्तु सहित्वं सर्वकर्मणाम् ॥ १६ ॥
बलेन्द्रियविवृद्धिस्तु तथा च स्मृतिमेधयोः ॥
उपलब्धोपलब्धिस्तु यथावत्परिकर्मणि ॥ १७ ॥
वल्योपान्त्यशैथिल्यं जरा वा न गजोत्तमम् ॥
मेदो न घर्षयत्याशु बस्तिभिः स्थिरतां गतम् ॥ १८ ॥
स यथा शीर्णपत्रोऽपि वृद्धवृक्षोऽथ कुञ्जरः ॥
समये वारिणा सिक्तो हरिताङ्कुरकोमलः ॥ १९ ॥
तरुणो जायते क्षिप्रं पुष्पवान्बलवानपि ॥
एवमाप्यायते हस्ती बस्तिना संप्रतर्पितः ॥ २० ॥
धात्विन्द्रियोजसा युक्तस्तथा वै बस्तिमान्भवेत् ॥
अपरे जघनं वंशो विशेषेण तु दन्तिनाम् ॥ २१ ॥
तेषां निर्ग्रहणार्थाय बलिश्रेष्ठोऽभिजायते ॥
श्लेष्मजान्पित्तजांश्चैव साधयेत्साधुयोजितः ॥ २२ ॥
नास्त्यन्यत्तादृशं कर्म हस्तिनां बस्तिनः परम् ॥
आनद्धो मुक्तिकालग्धः कृमिकोष्ठी तथैव च ॥ २३ ॥
एकाङ्गं बाधते यस्य सर्वाङ्गमपि वायुना ॥
रुद्धमूत्रपुरीषश्च शूनो म्लानस्तथैव च ॥ २४ ॥
सर्वत्र विहितो बस्तिरनुपमो बलवर्धनः ॥
लाघवस्योपजननः समेषु विषमेषु वै ॥ २५ ॥

सर्वप्रदेशजान्रोगान्सर्वशश्च निरस्यति ॥
चिरस्थितान्प्रशमयेदभ्यञ्जनविमर्दनैः ॥ २६ ॥
प्रदेहै रसपानैश्च स्वेदैर्वाऽपि पृथग्विधैः ॥
नस्यतो मुखतश्चैव स्नेहपानैर्यथाविधि ॥ २७ ॥
बस्तयः परमास्तेषां हिता रोगनिबर्हणाः ॥
यास्तु पूर्वं विनिर्दिष्टा कोष्ठे वै विंशतिः शिराः ॥ २८ ॥
बिसनालप्रतीकाशा दन्तिनः सर्वदेहगाः ॥
याश्च नाडीसमुत्थानाः कण्ठनाडीबहिःसृताः ॥ २९ ॥
ताभिः संचार्यते स्नेहः स्वं स्वं स्थानं तथा तथा ॥
यथा ग्रीष्मेऽथ मध्याह्ने ह्यादत्ते वारि भास्करः ॥ ३० ॥
तथा पानादिभिः स्नेहः पारंपर्येण जीर्यते ॥
स्नेहयेच्च दृढं स्नेहो रोगांश्च विनिवर्तयेत् ॥ ३१ ॥
न च पाककृतान्दोषानुत्पादयति कांश्चन ॥
पक्काशयगतस्यास्य यद्वीर्यं तेजसेरितम् ॥ ३२ ॥
ततस्तज्जायते क्षिप्रमपानाख्येन वायुना ॥
ततस्तदचिरादेव समानः प्रतिपद्यते ॥ ३३ ॥
समानेन तु विक्षिप्तं व्यानं चाऽऽप्नोति तत्क्षणात् ॥
व्यानात्पुनरुदानं तु तथैव समवाप्नुते ॥ ३४ ॥
उदानानन्तरं चैव प्राणमाप्नोति तत्क्षणात् ॥
क्षिप्तं तत्प्राणविक्षिप्तं सर्वधातुषु लीयते ॥ ३५ ॥
रसादिषु यथायोगं कुरुते धातुतेजसाम् ॥
बलमारोग्यवर्णं च लघुत्वं चैव दन्तिनः ॥ ३६ ॥
समलं वाऽपि यत्किंचिद्यदपानो निरस्यति ॥
प्रथमः स्नेहबस्तिः स्याद्बस्तिवंक्षणमार्गयोः ॥ ३७ ॥
स्नेहनः शोधनश्चैव द्वितीयस्त्वग्निदीपनः ॥
तृतीयस्तु बलं कुर्याच्चतुर्थो रसबृंहणः ॥ ३८ ॥
बृंहयेत्पञ्चमो रक्तं षष्ठो मांसं विवर्धयेत् ॥
मेदोस्थिबृंहणो ज्ञेयः सप्तमः पुष्टिवर्धनः ॥ ३९ ॥
अष्टमश्च विशेषेण नवमश्चापि वर्धयेत् ॥
मज्जाशुक्रौ यथायोगमित्येते नव बस्तयः ॥ ४० ॥

नागानामिह निर्दिष्टा विस्तरेण यथाक्रमम् ॥
एषां दोषाः समुद्भूता मज्जाशुक्रसमाश्रयाः ॥ ४१ ॥
यथोक्तद्विगुणा देयास्तेषामेतेऽत्र बस्तयः ॥
यस्मादनुवसत्यन्नं जीर्णं चापि निरस्यति ॥ ४२ ॥
अनुवास इति ख्यातिं लभते तेन कर्मणा ॥
यस्मान्निरूहयत्याशु दोषान्पक्वाशयस्थितान् ॥ ४३ ॥
मलापहरणात्सद्यो निरूह इति कीर्तितः ॥
उत्तरं बस्तिमिच्छन्ति मेढ्रे यस्तु विधीयते ॥ ४४ ॥
एष कायप्रशुद्धो स्याच्छीघ्रं यो विनिवर्तते ॥
न चेन्निवर्तते काले भूयो दानं प्रशस्यते ॥ ४५ ॥
अनुवासो निरूहस्तु तथैवोत्तरबस्तिकः ॥
त्रिविधो वक्ष्यते बस्तिर्गुदमेढ्रसमाश्रितः ॥ ४६ ॥
तत्र बस्तिर्न दातव्यो विषदुष्टाय हस्तिने ॥
नित्यं रोगभयार्तेभ्यः पानार्तेभ्यस्तथैव च ॥ ४७ ॥
मूर्छापिपासादुष्टेभ्यः स्नेहपीताय दन्तिने ॥
प्राक्छर्दिमोहदुष्टेभ्यो ये च स्युः पादरोगिणः ॥ ४८ ॥
स्वभावादुर्बलाग्निभ्यस्तथाऽतिस्थविराय च ॥
अत्यर्थं चातिबालाय बस्तिर्न स्यात्कथंचन ॥ ४९ ॥
बस्तिदानपरिक्लेशं कदाचिदिह ये गजाः ॥
न सहेयुरसात्म्यत्वान्न तेषां बस्तयः स्मृताः ॥ ५० ॥
येषां चापि प्रणिहितो नोर्जां किंचिदुपाहरेत् ॥
कुर्याद्वा महतीं पीडां न तेषां बस्तिरिष्यते ॥ ५१ ॥
न कफे स्नेहबस्तिः स्यान्मेदुरस्य तथा नृप ॥
रूक्षणीये(*न विधिना ) पाण्डुरोगाश्च ये स्मृताः ॥ ५२ ॥
कुष्ठगुल्मप्रमेहाश्च तथा विद्रधयोऽपि च ॥
अन्येषां चैवमादीनां विदध्यान्नानुवासनम् ॥ ५३ ॥
अतस्तु विपरीताय बृंहणं येषु शस्यते ॥
धार्यन्ते ये च दोषेण न तेष्वास्थापनं स्मृतम् ॥ ५४ ॥
कुष्ठकम्प्यतियुक्तेभ्यो मूर्छायां तमके(?) तथा ॥
क्षते क्षये च धातूनां पिपासार्ते तथैव च ॥ ५५ ॥

* धनुश्चिह्नान्तर्गता वर्णाः कपुस्तकानुसारेण लिखिताः, खग्पुस्तकयोस्तु रिक्त एव प्रदेशः स्थापितः ।

१ क. येषां । २ क. °बस्तयः ॥ त्रि° ।

सर्वत्र बस्तिर्न भवेन्निरूहो वाथवेतरः ॥
सामान्यं च विशेषं च बुद्ध्या(द्ध्वा)तु नृपसत्तम ॥ ५६ ॥
मूलं चैवानुबद्धं च पृथक्च युगपत्स्थितम् ॥
व्याधीनामुपपद्येत्तु देशकालौ तथैव च ॥ ५७ ॥
राजंश्चतुर्भिर्युक्ताय पादैः साध्याय हस्तिने ॥
आरम्भेण यथोक्तेन विधिनाऽऽरम्भ इष्यते ॥ ५८ ॥
प्रशस्ते तिथिनक्षत्रे मुहूर्ते चापि पूजिते ॥
कृत्वाऽऽहुतिं सपुण्याहं स्वस्ति वाच्य द्विजोत्तमान् ॥ ५९ ॥
स्थानं सबाहुयन्त्रं च पुरस्तान्नतमिष्यते ॥
उन्नतं पृष्ठतः कार्यं पक्षयोश्च समं भवेत् ॥ ६० ॥
त्रिपदाश्च क्रमं बेदूध्वा गजपेचकसंमितः ॥
कार्यो माङ्गल्यवृद्धिश्च सुनिविष्टः सुसंहतः ॥ ६१ ॥
भिषक् तत्रोपविष्टस्तु पीडयेत्सुसमाहितः ॥
सुखारोहावरोहश्च बस्तिभूमाववस्थितः ॥ ६२ ॥
तत्रोपविष्टः सुमना लघुहस्तो जितेन्द्रियः ॥
भिषक् प्रपीडयेद्बस्तिं निरीक्ष्य च यथाविधि ॥ ६३ ॥
वांक्षं वा वैणवं वाऽपि श्लक्ष्णं च गुलिकामुखम् ॥
तिन्दुकस्याश्वकर्णस्य मधुकस्य धवस्य च ॥ ६४ ॥
भूर्जस्पन्दनयोश्चैव सारैर्नेत्राणि कारयेत् ॥
द्वावरत्नी भवेदोष्ठं स्वनुपूर्वसमाहितम् ॥ ६५ ॥
मध्यमं तु भवेन्नेत्रं द्विचत्वारिंशदङ्गुलम् ॥
षडङ्गुलं जघन्यं तु मध्यमात्परिहापयेत् ॥ ६६ ॥
षोडशाङ्गुलमेवास्य नाहो(हः) श्रेष्ठस्य मानतः ॥
उद्दिष्टमेतन्नेत्राणां प्रमाणं वक्ष्यते नृप ॥ ६७ ॥
ये प्रमाणान्न युज्यन्ते ज्येष्ठमध्याधमा गजाः ॥
पेचकस्योपरिष्टाच्च न्यस्न्योऽधस्तात्तथैव च ॥ ६८ ॥
लाङ्गूलवंशमानेन नेत्रमायामतो भवेत् ॥
नेत्रमूले च कर्तव्या कर्णिका द्वादशाङ्गुला ॥ ६९ ॥

---

१ क. पायैः । २ क. बुद्ध्वा । ३ क. ख. घ. वार्क्ष्यं

वलाक्षो(?)इविषन्यार्थे यथायेन चतुष्टयम् ॥
सर्वं प्रवेशयेदेवं गुदे नागस्य बुद्धिमान् ॥ ७० ॥
इति मुमर्दितां कृत्वा तत्र नेत्रं निबद्धयेत् ॥
उत्तमाधममध्यानां श्रेष्ठमध्यमकन्यसैः ॥ ७१ ॥
नेत्रच्छिद्राणि कार्याणि सामान्यामलकीफलैः ॥
वल्यस्तु तिस्र एवाऽऽहुर्गुदे नागस्य भूपते ॥ ७२ ॥
उत्तमस्य भवन्त्येताः षोडशाङ्गुलविस्तृताः ॥
अष्टभागेन हीनाः स्युर्मध्यमस्य प्रमाणतः ॥ ७३ ॥
मध्यमा(:)सप्तमो भागो जघन्ये वलयः स्मृताः ॥
चतुरशीत्यपरत्नीनां वलयो विद्धि संमिताः ॥ ७४ ॥
अङ्गुलानि दशाष्टौ च प्रमाणेन पृथक् पृथक् ॥
अष्टारत्नीषु विज्ञेयो वलयोऽष्टादशाङ्गुलाः (?) ॥ ७५ ॥
आदानी प्रथमा तासां द्वितीया तु प्रवाहिनी(णी) ॥
संकोचनी तृतीया च वलयस्तिस्र एव हि ॥ ७६ ॥
तेषां नेत्रप्रमाणानि वलीनामानि कारयेत् ॥
स्रोतःप्रमाणान्येतेषां नेत्राणामनुपूर्वशः ॥ ७७ ॥
परिणाहस्तु कर्तव्यः संविभज्य यथायथम् ॥
स्नेहे या मुखतो मात्रा सा देया त्वनुवासने ॥ ७८ ॥
यथावर्ष्मप्रमाणेन यथायोग्यविरोधि च ॥
स्थानं माङ्गल्यवार्त्ते च पुरस्तात्प्रतमिष्यते ॥ ७९ ॥
उन्नतं पृष्ठतः कार्यं पक्षयोश्च समं भवेत् ॥
तत्र स्थाने सुखं तिष्ठेद्वारणः सुखयन्त्रितः ॥ ८० ॥
पक्षयोश्च पुरस्ताच्च पुरुषैः स्वैरधिष्ठितः ॥
ततो विश्वासयन्तश्च क्षमयन्तश्च तं गजम् ॥ ८१ ॥
परिस्पृशन्तश्च करैस्तिष्ठेयुः परिकर्मिणः ॥
यन्त्रं नेत्रकराद्याभिः क्षान्तिभिः क्षमितस्य च ॥ ८२ ॥
तथा वासितवालश्च कर्तव्यः स्यादुपक्रमः ॥
सुवर्धितनखं हस्तं सर्पिषाऽभ्यज्य दक्षिणः ॥ ८३ ॥

---

१ क. °सभागेन ज° । २ क. °त्नीरर° । ३ क. दक्षिणम् ।

पेचके च सूत्रं दृढावरेऽथोर्ध्वमुपस्थितम् ॥
पूर्वमेवानुबद्ध्वा तु नेत्रबस्तिं समाहितम् ॥ ८४ ॥
कदुष्णं स्नेहमासिच्य निर्वातमुपसंहरेत् ॥
नलेन दक्षिणेनास्य गुदस्य द्वारमर्पयेत् ॥ ८५ ॥
मूले प्रबद्धे नेत्रस्य निश्छिद्रेण च चर्मणा ॥
वामेन प्रतिगृह्णीयान्नेत्रमध्यं समाहितम् ॥ ८६ ॥
तदूर्ध्वमुखमुत्क्षिप्य गजायोपहरेद्भिषक् ॥
तदाऽभ्यस्नेहसंयुक्तं स्नेहाभ्यक्तगुदस्य च ॥ ८७ ॥
प्रणिदध्यात्स्वयं वैद्यो गुदे नेत्रं समाहितम् ॥
अनुवंशं यथा माप्नुबस्तेश्चाबन्धनाद्भिषक् ॥ ८८ ॥
सुसमाहितसर्वाङ्गः शनैर्वैद्यः प्रवेशयेत् ॥
नात्युन्नतं न च नतं कदाचिदिह पूज्यते ॥ ८९ ॥
न च तिर्यग्गतं नेत्रं नाप्यूर्ध्वं नाप्यधोमुखम् ॥
कथंचित्प्रणयेद्धीरः सकृच्चैव प्रदापयेत् ॥ ९० ॥
ततो निष्क्रम्यते नेत्रं शेषमेवमपाहरेत् ॥
ततो वाक्शतमात्रं तु दत्ते तिष्ठेदतन्द्रितः ॥ ९१ ॥
अत ऊर्ध्वं भिषङ्नागं पदानां गमयेच्छतम् ॥
शनैरत्रासयञ्शस्तैर्वाग्भिश्च परिशंसयेत् ॥ ९२ ॥
मनः प्रह्लादयेत्तस्य विषयैः कालयोगिभिः ॥
पाणिना लम्बनेनैव वंशवीणास्वनेन वा ॥ ९३ ॥
दक्षास्तं गीतघोषैश्च रमयेयुरनेकपम् ॥
[1]यान्यान्क्रमयते भावांस्तांस्तांस्तस्य समाचरेत् ॥ ९४ ॥
न तस्य मनसः किंचिद्व्याघातमुपकल्पयेत् ॥
ततः प्रत्यानयेत्स्थाने सुस्थितः सुमनाः सुखी ॥ ९५ ॥
स्थितस्यैव समाकाङ्क्षेद्बस्तेः प्रतिनिवर्तनम् ॥
स्विन्नायोष्णाम्बुना पूर्वं हेमन्ते जलदागमे ॥ ९६ ॥
आतुताय जलं शीतं दद्याद्धे ग्रीष्म एव च ॥
शीत एवावगाहो वा शीतसात्म्यतया भवेत् ॥ ९७ ॥
[2]कल्पमेनं तु कुर्वीत पूर्वं निमित्तकं बुधः ॥
उचिताभोजनादेर्ध्वं ततो भुक्तवतो लघु ॥ ९८ ॥

१ क. ख. घ. °रसर्प° । २ क. °दर्थं त° ।

पादभोगाविहीनाङ्ग(?)यथाव्याधि यथाबलम् ॥
रक्तशाल्योदनं स्निग्धं पयसा वा रसेन वा ॥ ९९ ॥
जाङ्गलेन विविक्तेन नात्यर्थमसिताय च ॥
कदुष्णं युक्तलवणं युग(क्त)स्नेहं गजे हितम् ॥ १०० ॥
शीतलं वा प्रदातव्यं यथासात्म्यमवेक्ष्य तु ॥
पयसोपस्कृते पूर्वं प्रदद्याल्लघुभोजनम् ॥ १०१ ॥
प्रतिच्छन्नाय च पुनर्नृणां न लघु नाल्पशः ॥
कृताहाराय विधिवद्रा(द्र)जायाङ्कपते ततः ॥ १०२ ॥
सुप्रतिष्ठितभक्ताय कृतचङ्क्रमणाय च ॥
कृतमार्गाय विधिवत्प्रदद्याच्च यथाविधि ॥ १०३ ॥
प्रदत्ते भिषजा वस्तौ न शयीत न भक्षयेत् ॥
न पिबेदनु मातङ्गो न च चेष्टां समाचरेत् ॥ १०४ ॥
सुस्थितः स्वस्थसर्वाङ्गः सुमना नियतेन्द्रियः ॥
प्राग्दत्ते च मुहूर्तेऽस्मिन्सायं दत्ते तथैव च ॥ १०५ ॥
(*अत ऊर्ध्वं तृणं दद्यात्सायं चापा(प्या)श्रयं नयेत् ॥
सुखशय्यो भवेन्नागो मृदुशय्यस्तथैव च ॥ ६ ॥)
न चास्य मनसः किञ्चिद्व्याघातमुपकल्पयेत् ॥
याश्चाप्यनन्तराश्चेष्टा निर्वाणं पानमेव च ॥ ७ ॥
ताभिश्चैवात्र वर्तन्ते ताः सर्वाः समुपाचरेत् ॥
प्रत्यागते यथाकालं पुनस्तद्वत्प्रकल्पयेत् ॥ ८ ॥
दीप्ताग्नौ वातरोगे वा विधिमाश्रित्य पूर्ववत् ॥
तस्मिन्प्रत्यागते स्नेहे पुनरेवानुवासयेत् ॥ ९ ॥
येषा भवति सस्नेहस्तथा शाम्यति मारुतः ॥
निरूढं वा विरिक्तं वा सद्य एवानुवासयेत् ॥ ११० ॥
न स्यात्कदाचिन्निःस्नेहो रात्रौ वा यदि वा दिवा ॥
एष एव विधिर्दृष्टो गजानां वातरोगिणाम् ॥ ११ ॥
नात्र कार्यस्तु संदेहः सिद्धमेतद्भिषग्जितम् ॥
एष उक्तो विधिः सम्यगनुवासे मया नृप ॥ १२ ॥

---

* धनुश्चिह्नान्तरगतः पाठो नास्ति कपुस्तके ।

---

१ क. °भागविहीनानां य° । २ क. स्नेहयुक्तं । ३ क. °णं वातमे° । ४ क. बस्तौ । ५ ख. ग. यद्वा ।

आस्थापनं तु वक्ष्यामि शृणु वैसमसाधिप ॥
अनुवासनमात्राया द्विगुणा तस्य शस्यते ॥ १३ ॥
आस्थापनविधौ मात्रा चिरस्थानं न चेष्यते ॥
न च भुक्तवते देया मातङ्गाय पुनः पुनः ॥ १४ ॥
अनुबन्धान्निरूहस्य प्रदानं बाधते द्विपम् ॥
एकं द्वितीयमेवं च तृतीयमपि योजयेत् ॥ ११५ ॥
यावद्वा साधु मन्येत समीक्ष्य गुरुलाघवम् ॥
वयो व्याधिमृतुं देशं सात्म्यकालौ बलाबलम् ॥ १६ ॥
सत्त्वं वाऽपि परीक्ष्ये(क्षे)त जातिं च मतिमान्भिषक् ॥
तस्या वर्तनकालस्तु मुहूर्तं प्रसमीक्ष्यते ॥ १७ ॥
भित्त्वा पुरीषसंघातं दोषमादाय चोल्बणम् ॥
तीक्ष्णोष्णस्नेहलवणैरन्वितस्तु विशेषतः ॥ १८ ॥
पूर्वो मध्योऽवकृष्टस्तु जघन्यो मधुरः स्मृतः ॥
अत्युष्णो नातितीक्ष्णश्च लवणश्च विशां पते ॥ १९ ॥
अकृत्वैव निवर्तेत कृतो मात्राधिकश्च यः ॥
समुत्क्लेदनकर्मा हि प्रथमः परिकीर्त्यते ॥ १२० ॥
मध्यमो दोषहरणो जघन्यस्तु प्रसादनः ॥
संघोनुवासनं केचित्केचिदास्थापनं पुनः ॥ २१ ॥
ऋषयः संव्यवस्यन्ति पूर्वं गुणसमीक्षया ॥
आस्थापननिरस्ये तु पुरीषे निर्मले गुदे ॥ २२ ॥
अनुवास्य इति प्राहुर्हेन्तुं चैवात्र मे शृणु ॥
पुरीषविहिते मार्गे योऽनुवासं प्रयच्छति ॥ २३ ॥
न तस्य साधकः स्नेहो भस्मनीवाऽऽहुतिर्हुता ॥
आस्थापनहृतो दोषः शुद्धकोष्ठस्य दन्तिनः ॥ २४ ॥
बस्तिमग्नो न भवति शुद्धो व्योम्नि यथा शशी ॥
अनुवासोपपन्नाय निरूहं यः प्रयच्छति ॥ १२५ ॥
ततो विरूक्ष्यते तज्ज्ञैः स्नेहस्तस्य न साधकः ॥
स्नेहस्वेदोपपन्नाय पुरीषे संश्रिते तथा ॥ २६ ॥
यथावन्मलदोषाणां क्लेदभावाः शुभावहाः ॥
अनुवासनमेव स्यादास्थापनमतः परम् ॥ २७ ॥

व्यक्तमात्रो भवेत्पूर्वो शाल्यो मध्यमदोषतः ॥
(*··· ··· ··· ···मध्योषधस्तु दोषहा) ॥ २८ ॥
ततो लघुतरं कार्यं समीक्ष्य गुरुलाघवम् ॥
अनामयच्छति याशुद्धे यथाकालं निरूहणम् ॥ २९ ॥
ततस्तेनैव विधिना पुनरन्यो विधीयते ॥
ततस्तीक्ष्णतरः किंचिदर्धमात्रान्वितः पुरा ॥ १३० ॥
विरेको वर्तयश्चापि बस्तिः प्रतिनिवर्तते ॥
तस्मान्निरूहसिद्ध्यर्थं स्मृतं चैवानुवासनम् ॥ ३१ ॥
निरूहस्य पुनर्देयः स्नेहबस्तिर्विशेषतः ॥
स्नेहक्षीरनिरूहाणामयुग्मा बस्तयस्तथा ॥ ३२ ॥
गजानां मात्रया दत्ता यस्य युग्मा भवन्ति ते ॥
कायाग्निदीपनाः सर्वे बस्तयः पक्षसंधिषु ॥ ३३ ॥
बलवर्णकराः पथ्याः सम्यगारोग्यसिद्धये ॥
संशोधनो हिमार्यस्य दोषाणां चानुलोमनः ॥ ३४ ॥
वारणानां निरूहस्तु प्रथमो मलशोधनः ॥
समाक्षिपति पित्तं च पक्वाशयगतस्तथा ॥ १३५ ॥
सकृच्छ्लेषहरो ज्ञेयो द्वितीयस्तु नराधिप ॥
वातं जयति मूर्धन्यं तृतीयः कफवर्धनः ॥ ३६ ॥
मृदूष्णलवणो मध्यः पादहीनः प्रमाणतः ॥
क्लेदनार्थं प्रदेयस्तु बस्तिरादाय संततः ॥ ३७ ॥
पटुतीक्ष्णोऽम्ललवणो मात्रया चाधिकस्तु सः ॥
देयो दोषहरो बस्तिः क्लान्तदोषाय हस्तिने ॥ ३८ ॥
तृतीयस्तु पुनर्देयो न्यूनो नापि न चाधिकः ॥
दोषान्संहरति मोक्षैः शमयत्युदरं च सः ॥ ३९ ॥
चतुर्थस्तु प्रदेयः स्याच्छर्करामधुसंयुतः ॥
भेषजैर्मधुरैश्चापि तैलः कृष्णैः सवेतसैः ॥ १४० ॥
हृतदोषाय नागाय घृतक्षीरविमिश्रितः ॥
व्यापद्धीननिरूहस्य स(श)कृद्वारसमुद्गतः ॥ ४१ ॥

---

* धनुश्चिह्नान्तर्गतः पाठो नास्ति कपुस्तके ।

---

१ क. °कफमर्दनः ।

कफान्तं वातपित्तान्तं कुक्षिशैथिल्यलाघवम् ॥
गात्रापरमृदुत्वं च व्याधेरपि विनिग्रहः ॥ ४२ ॥
लक्षणं तु निरूढस्य मूत्रशुद्धिकृदेव च ॥
लक्षणं दुर्निरूढस्य आनाहो रक्तमूत्रता ॥ ४३ ॥
विड्वातनिग्रहं शूलमाध्मानं व्याधिवर्धनम् ॥
निष्पुरीषस्य नागस्य निरूढस्यातियोगतः ॥ ४४ ॥
वायुर्गात्राणि कुक्षिं च शूलेनाऽऽवेष्टयेद्भृशम् ॥
तस्मान्निरूहयेत्सम्यक्सिद्धिकामो विचक्षणः ॥ १४५ ॥
अपकर्षति वासेभ्यः क्षारः सर्वं यथामलम् ॥
अपकर्षति दोषान्वै आस्थापनमनेकधा ॥ ४६ ॥
बल्यं वृष्यं बृंहणीयमिन्द्रियाणां प्रसादनम् ॥
जीवकृज्जीवनं मेध्यं गजस्याऽऽस्थापनं मतम् ॥ ४७ ॥
क्षुत्पीडितो मदाविष्टो बालो वृद्धो गदातुरः ॥
स्नातः पीतोदकश्चैव भुक्तवांस्तृषितश्च यः ॥ ४८ ॥
वितृष्णो जीर्णभक्तश्च दुर्मना यश्च वारणः ॥
भीरुश्चैवाप्यनास्थाप्यः श्वासी यश्च मतङ्गजः ॥ ४९ ॥
एतेषामनुपूर्वेण शास्त्रमार्गानुसारिणा ॥
चिकित्सकेन क्षीरेण देयाः स्युः क्षीरबस्तयः ॥ १५० ॥
मात्रा बस्तेर्विधिरतः क्षीरबस्तिश्च वक्ष्यते ॥
अशनादुत्तरं पीतो यथा स्नेहोऽभियोगतः ॥ ५१ ॥
पूर्वकायस्य विहितः स्नेहनः शास्त्रदर्शनैः ॥
स्नेहनः सर्वतस्तद्वद्विज्ञेयो दोषनाशनः ॥ ५२ ॥
अनन्ययोगजानां तु मात्रा बस्तिः प्रशस्यते ॥
क्षीणधातुकृशा नागा वृद्धाः क्षीणबलाश्च ये ॥ ५३ ॥
पश्चात्स्रूपहताश्चापि मदक्षीणास्तथैव च ॥
एषामग्नेर्विवृद्ध्यर्थं ग्रीष्मे प्रावृषि वा हितः ॥ ५४ ॥
देयः प्रायोगिको बस्तिर्विशेषेण तु दन्तिनः ॥
पूर्वाह्णे स्नातपीताय भुक्ताय च विधानतः ॥ १५५ ॥
रसायनं परं नित्यं पूर्वोक्तविधियोजितम् ॥
अतः परं प्रवक्ष्यामि क्षीरबस्तिविधिं शुभम् ॥ ५६ ॥

विधिवत्क्वथितं क्षीरमुभयोः पञ्चमूलयोः ॥
कल्कैर्युक्तं तिलोशीरपद्मकोत्पलकम्पवैः ॥ ५७ ॥
रास्नामपौण्डरीकाभ्यां मुस्तकेन तथैव च ॥
मृद्वीकाशर्करामांसीमञ्जिष्ठामधुसंप्लुतैः ॥ ५८ ॥
मधुरैर्जीवनीयैश्च देयो बस्तिः समन्वितः ॥
विधिवत्पृथिवीपाल दन्तिनां बलवर्धनः ॥ ५९ ॥
पित्तरक्तविकारेषु ग्रीष्मे शरदि वा हितः ॥
पाकलेषु बहिर्दाहे दाहे चान्तर्गते तथा ॥ १६० ॥
मूर्छाभ्रमे तथा श्वासे क्षीणे घर्मश्रमेषु च ॥
बस्तिर्हितोऽयं राजेन्द्र तथा वाऽप्यभितोऽपि च ॥ ६१ ॥
निरूढानां च नागानामारण्यानां तथैव च ॥
गजास्त्वभ्यन्तरस्वेदाः शीतसात्म्या विशेषतः ॥ ६२ ॥
(*तस्मात्प्रशस्यते त्वेष बस्तिरूष्मानिलापहः ॥
पयसः प्रथमो बस्तिर्हितस्तु रसरक्तयोः ॥ ६३ ॥
मांसास्थिमेदसां वृद्धौ द्वितीयः क्षारयोजितः ॥
आप्यायते शुक्रमज्ज्ञस्तृतीयः पयसैव तु ॥ ६४ ॥
निहन्ति दोषानुत्कृष्टान्सुमनो जठरस्य तु ॥
स्नेहबस्तिर्यदा शीघ्रं दत्तमात्रो निवर्तते ॥ १६५ ॥
न हीनगुणमाप्नोति स्नेहस्याऽऽशु निवर्तनात् ॥
तमेव दापयेत्स्नेहं पुनरेव भिषग्वरः ॥ ६६ ॥
महाबलास्तु मातङ्गा वातप्रायास्तु दन्तिनः ॥
प्रवहन्ति तदा स्नेहं शीघ्रं तेन निवर्तते ॥ ६७ ॥
तस्मान्न दोषो दत्ते तु द्वितीये नात्र संशयः ॥
इत्येष सर्वबस्तीनां विधिरुक्तो विशेषतः ॥ ६८ ॥
विपरीते तु जायन्ते व्यापदो विविधात्मिकाः ॥
नेत्रबस्तिकृताश्चैव भूयश्च भिषजा कृताः ॥ ६९ ॥
इमं तत्र प्रवक्ष्यामि निरूहप्रणिधौ विधिम् ॥
यथास्वं सर्वदोषाणां कषायाणि घृतं वसा ॥ १७० ॥
चतुष्पदानां मूत्राणि तैलं दधि सुरा मधु ॥
बदराम्लं च दुग्धं च धान्योदकतुषोदकम् ॥ ७१ ॥

---

* धनुश्चिह्नान्तरगतः पाठो नास्ति कपुस्तके ।

फलानि लवणं चैव निरूहद्रव्यमिष्यते ॥
सुरयोष्णाम्बुना मूत्रैस्तैलेन लवणेन च ॥ ७१ ॥
स्ववर्गीयैस्तु संयुक्तैः श्लेष्माण्युष्णा हिता गजे ॥
धान्याम्लफलनिष्क्वाथैः सकुलत्थयवैः शुभैः ) ॥ ७२ ॥
स्ववर्गैश्चानिले पथ्याः स्निग्धा लवणमूर्छिताः ॥
पयोरसघृतैर्युक्ताः स्ववर्गीयैश्च शीतलाः ॥ ७४ ॥
काषायमधुरा पित्ते बस्तयः स्युः सशर्कराः ॥
अपामार्गस्य च फलं तथा जीमूतकस्य च ॥ १७५ ॥
मदनस्य च पिष्टं स्यादावापं सर्वबस्तिषु ॥
सर्षपाः सरला रास्ना कुष्ठं तेजोवती तथा ॥ ७६ ॥
पिप्पल्यः शतपुष्पा च मृद्वीका मधुकं मधु ॥
भद्रदारु तथैला च सैन्धवं चेति बस्तिषु ॥ ७७ ॥
निरूहस्य भवेद्देयः स्वावापः पटुसैन्धवः ॥
श्लक्ष्णकल्कैः समायुक्ताः सुपक्वथितभेषजाः ॥ ७८ ॥
सुस्निग्धलवणा व्यक्ताः खजावमथिता हिताः ॥
कषायभागाश्चत्वारः कुर्यात्स्नेहस्य पञ्चमम् ॥ ७९ ॥
अष्टमं भेषजानां तु लवणस्य तु षोडश ॥
पूर्वमेवं तु ये प्रोक्तास्तत्रौषधगणा मया ॥ १८० ॥
यथालाभं यथावच्च तांस्तानादाय शास्त्रवित् ॥
कषायाणि निरूहाणां कल्कचूर्णानि यानि च ॥ ८१ ॥
अनुवासे च तत्सर्वं वर्गं समेधु योजयेत् ॥
श्यामा कुटन्नटं चैव त्रिफला चित्रकं तथा ॥ ८२ ॥
तथा दारुहरिद्रा च फलानि मदनस्य च ॥
जीमूतकानि दन्ती च द्रवन्ती सर्षपा तथा ॥ ८३ ॥
शृङ्गवेरं वचा चैव तगरं देवदारु च ॥
पिप्पली भद्रमुस्ता च द्विगुणं चैव सैन्धवम् ॥ ८४ ॥
बलां चतुर्गुणां कृत्वा श्लक्ष्णकल्कं प्रपेषयेत् ॥
मूत्रैर्गजखरोष्ट्राणां दध्यम्लैः सुरयाऽपि च ॥ १८५ ॥
धान्याम्लबदरी क्लेदतिक्ततैलैः समन्वितैः ॥
कटुको व्यक्तलवणः श्लेष्मघ्नो बस्तिरिष्यते ॥ ८६ ॥

---

१ क. °यथास्वं च । २ क. °मनुयो° । ३ क. °काऽथ द° ।

स्थूलाश्च कुष्ठिनो ये च मेदुराः पाण्डुरोगिणः ॥
कर्षणो दोषहरणो देयस्तेषां यथा हितः ॥ ८७ ॥
दन्ती द्रवन्ती श्यामार्कं कुटजं कृमिवेधनम् ॥
अपामार्गं हस्तिकर्णं जीमूतं सकुटम्भटम् ॥ ८८ ॥
शतपुष्पा च कुष्ठं च तगरं चतुरङ्गुलम् ॥
सप्तलां च गवाक्षीं च शङ्खिनी केषुकं तथा ॥ ८९ ॥
अजगृङ्ग्यजगन्धे च कपिलां तुलसीं तथा ॥
प्रक्कीर्यामुदकीर्यां च गवाक्षीं च समाहरेत् ॥ १९० ॥
वातिकेनैव विधिना बस्तिर्दत्तो न शीतलः ॥
संशोधनीयः श्रेष्ठः स्याद्ग्रन्थिते कुपितेषु च ॥ ९१ ॥
क्षीरवृक्ष्या च रोध्रं च पिण्डीरुककसेरुके ॥
अभीरुपत्रिका श्यामा धवं खदिरमेव च ॥ ९२ ॥
तुरन्ती चाग्निमन्थं च नीपं कट्फलचेतसम् ॥
षष्टी सुवर्णक्षीरी च वज्रजम्बू सधातुकी ॥ ९३ ॥
तिलांश्च पद्मकोशीरमित्येतानि समाहरेत् ॥
पित्तकेनैव विधिना बस्तिर्दत्तस्तु शीतलः ॥ ९४ ॥
भवेच्छ्रु(स्त्रु)तपुरीषस्य वृद्धसंग्रहणो हितः ॥
पयस्यां च मृणालं च शृङ्गाटककसेरुकम् ॥ १९५ ॥
बलामतिबलां चैव स्वयंगुप्ताफलानि च ॥
विदारी मधुकं चैव मृद्वीका क्षीरमोरटम् ॥ ९६ ॥
यवगोधूमचूर्णानि तथा मधुकराणि च ॥
अविच्छन्नामतिच्छन्नामित्येतानि समाहरेत् ॥ ९७ ॥
पित्तकेनैव विधिना वाजीकरणमुच्यते ॥
अश्वगन्धाविदारीभ्यां युक्त एष पुनः पुनः ॥ ९८ ॥
बृंहणीयो भवेद्वस्तिरभ्यस्तस्तत्त्वबुद्धिना ॥
संशोधनीयो निष्क्वाथः सिद्धार्थकवचान्वितः ॥ ९९ ॥
उष्णः सतैलतीक्ष्णः स्यादानाहे बस्तिरुत्तमः ॥
सहोदुम्बरबीजैस्तु पंचकोलसमीकृतः ॥ २०० ॥
कोविदारस्य निम्बस्य नीपस्य च तथा पुनः ॥
कोष्ठकस्याथ निष्क्वाथो मूत्रयुक्तो न शीतलः ॥ २०१ ॥

---

१ क. °स्तिर्देयस्तु ।

सतैललवणो बस्तिः शीघ्र इत्यभिनिश्चितः ॥
वृत्तो नातिद्रवः काथो वृक्षा ये पिच्छिलाः स्मृताः ॥ २ ॥
शमीवृक्षस्य शाल्मल्या धन्वनस्य तथैव च ॥
वृत्तो नातिद्रवः क्काथो वृक्षा ये पिच्छिलाः स्मृताः ॥ ३ ॥
श्लेष्मातक्या परूषस्या ऐरावत्यास्तथैव च ॥
गाङ्गेरुकाया इत्येष बस्तिस्तेषां तु पिच्छिलः ॥ ४ ॥
शशैणोरभ्रबस्तानां वराहस्याथ पक्षिणाम् ॥
रुधिरैर्महिषाणां च रक्तबस्तिर्विधीयते ॥ २०५ ॥
यश्च शोणितजो बस्तिः पिच्छिलो यश्च कीर्तितः ॥
एतौ संग्रहणीयत्वात्पूजितावतिसारिणाम् ॥ ६ ॥
सर्वांश्चैवौषधिगणानतीसारनिवर्तकान् ॥
एवं यथास्वं युञ्जीत यथायोगं समीक्षितुम् ॥ ७ ॥
पूर्वमेव यथोद्दिष्टा येऽस्माभिः स्नेहबस्तयः ॥
तेषां वक्ष्यामि सर्वेषां पुष्कलं साधने विधिम् ॥ ८ ॥
पादभागौषधिगणैः परिपक्कं समं द्रवम् ॥
चत्वारोऽशा द्रवस्यास्य[1] स्नेहांशः पञ्चमो भवेत् ॥ ९ ॥
बिल्वमात्रस्य कल्कस्य यत्र नास्ति महागणः ॥
महतीत्यौषधिगणैस्ततोऽर्धः संमितो भवेत् ॥ २१० ॥
तृतीयभागमर्धं वा समीक्ष्य गुरुलाघवम् ॥
एतत्सर्वं समानीय कृतं निर्गुणितं शुचिम् ॥ ११ ॥
मज्जाभिश्च वसाभिश्च क्षारैश्च सह साधितम् ॥
जाङ्गलैश्च रसैर्युक्तं जलैश्चापि विशेषतः ॥ १२ ॥
उदश्विद्दधिमण्डैश्च क्काथैश्चापि पृथग्विधौ ॥
पचेन्मृद्वग्निना किंचिद्धस्त्यर्थं मधुसंयुतम् ॥ १३ ॥
खरपाकं भवेत्काथमभ्यङ्गार्थं[2] महीपते ॥
पानार्थं चापि कर्तव्यं मृदुरेव तु जानता ॥ १४ ॥
सम्यक्सिद्धं तु कर्तव्यं बस्तिकर्म निरूहयोः ॥
मुखतो नश्य(स्य)तश्चैव पायुतो मेढ्रतस्तथा ॥ २१५ ॥
कटतो मृक्षणार्थं च प्रदानं षड्विधं भवेत् ॥
तत्र बस्तिगुणास्तावत्पुरस्तात्परिकीर्तिताः ॥ १६ ॥

---

१ क. गणस्यास्य । २ ख. घ. °वेत्कार्यम°।

शेषानुदाहरिष्यामि गुणानुत्तरबस्तिषु ॥
राजंस्तत्र विकारेषु मेढ्रव्याधिषु येऽप्यते ॥ १७ ॥
बस्तेरुत्तरसंज्ञस्य संयोगः सिद्धिकाङ्क्ष(ङ्क्षि)नः ॥
मूत्रकृच्छ्रप्रमेहेषु मूत्रवातेषु चाधिकम् ॥ १८ ॥
मूत्रसङ्गे जठरके यथान्यायं महीपते ॥
वातकुण्डलिकायां च शोणितं यः प्रमेहति ॥ १९ ॥
एतेषु वै विकारेषु प्रशस्तो बस्तिरुत्तरः ॥
पुष्पनेत्रस्य बस्तेश्च प्रमाणं यद्द्रवस्य च ॥ २२० ॥
तदुत्तरं प्रवक्ष्यामि यथाशास्त्रं महीपते ॥
चतुर्दोषसमुत्थेषु संसृष्टेष्वितरेषु च ॥ २१ ॥
यथास्वमौषधैः सम्यक्स्नेहमात्रां तु साधयेत् ॥
यथोक्तं पूर्ववद्ग्राह्यं पयः पीतवतः शृतम् ॥ २२ ॥
बस्तेर्गमनमार्गार्थं यवागूं च घृतप्लुताम् ॥
मेढ्रप्रमाणमादाय नेत्रमुत्तरबस्तिकम् ॥ २३ ॥
वृत्तं श्रो(स्रो)तःप्रमाणेन श्लक्ष्णं कुर्यात्समीहितम् ॥
अनुवासनमात्रायास्तस्यांशं षोडशं भवेत् ॥ २४ ॥
स्नेहप्रमाणमेतत्स्यात्कार्यमुत्तरबस्तिषु ॥
पुरस्तादुच्छ्रिते स्थाने विधिवच्छ्रिताय च ॥ २२५ ॥
ऋतुस्थिताय स्वस्थाय लघवे पूजिताय च ॥
अथालेप(?)भिषग्नेत्रं प्रणयेत्सुसमाहितम् ॥ २६ ॥
प्रमाणमार्गमेषण्या श्रो(स्रो)तोमार्गमनुव्रजेत् ॥
नाड्यां समूत्रि(?) संप्राप्य ततस्तत्र शनैः शनैः ॥ २७ ॥
पीडयेच्च यथा प्रोक्तमास्थापनविधौ यथा ॥
निष्कृष्य च ततो नेत्रं नाडी(*स्थान)मतः सृजेत् ॥ २८ ॥
आकाङ्क्षेत मुहूर्तं च बस्तेः प्रतिनिवर्तनम् ॥
सर्वश्चास्य विधिः कार्यो यथोक्तः पूर्वमेव हि ॥ २९ ॥
आदाने विनिवृत्तो च संस्कारक्रम एव च ॥
आनायाति यथाकालं वर्तिमनुविधापयेत् ॥ २३० ॥

* खघपुस्तकयोर्नोपलभ्यते ।

१ क. °कृच्छ्रे प्रमेहे च मूत्रवाते ततोऽधि° । २ क. °त्समाहित° ।

नाडीछिद्रप्रमाणेन दीर्घमष्टाङ्गुलं भिषक् ॥
बृहतीफलनिर्यासस्तथाऽपामार्गतण्डुलाः ॥ ३१ ॥
निर्गुण्ड्यारग्वधानां च तथा सहचरस्य च ॥
सुरसस्य च पत्राणि पिप्पल्या मरिचानि च ॥ ३२ ॥
आगारधूम इत्येषां वर्तिर्मूत्रप्रवर्तिनी ॥
ततस्तीक्ष्णतरां वर्तिमपानेऽन्यां प्रवेशयेत् ॥ ३३ ॥
लवणत्र्यूषणमयीमपानप्रतिपूरणीम् ॥
द्वादशाङ्गुलमात्रां तु दीर्घत्वेन प्रवेशयेत् ॥ ३४ ॥
स्वभ्यक्तस्य च (*नागस्य) पूर्वमेव यथाविधि ॥
निःसृतः स्रोतसो वाऽपि प्रदेया नु[1] विशां पते ॥ २३५ ॥
उपास्य नु मुहूर्तं च तथैवान्यां प्रवेशयेत् ॥
आस्थापनीयवच्चापि सर्वेष्वेव[2] विधिर्हितः[3] ॥ ३६ ॥
बस्तिदानप्रमाणेन वक्ष्यन्ते परतस्ततः ॥
नेत्रबस्तिः कृतास्त्वेवं[4] चतुष्पादकृतास्तथा ॥ ३७ ॥
षड्विधा व्यापदस्तासां योनिशुद्धिश्च वक्ष्यते ॥
अतिमात्रप्रवेशं च हीनमात्रं तथैव च ॥ ३८ ॥
तिर्यगूर्ध्वमधश्चापि नेत्रस्य क्षेपणे तथा ॥
पुनः पुनस्तथोऽत्यर्थं[5] मृदु यच्चापि पीडितम् ॥ ३९ ॥
अतिमात्रं तथा हीनं व्यत्यासाद्भेषजस्य च ॥
कालातिनयनं चैव बन्धशैथिल्यमेव च ॥ ४० ॥
भिषग्दोषकृता ज्ञेयास्तासां दोषमतः शृणु ॥
तत्र नेत्रे विचलिते बलाक्षिप्ते ततस्ततः ॥ ४१ ॥
प्रतिनिष्पीडिते नेत्रे क्षण्यन्ते[6] वलयोऽपि वा ॥
असंप्राप्तेऽथवा तिस्रो वलीनेत्रे च पीडिते ॥ ४२ ॥
प्रतिनिष्पीड्यते बस्तिर्वायुर्वेगेरितस्तथा ॥
गतेऽपि वा गुदमुखं पुरीषे प्रतिहन्यते ॥ ४३ ॥
दुर्बले बस्तिनेत्रे वा दुर्बले वाऽपि सिञ्चति ॥
अतिमात्रप्रवृत्तेषु वेदना स्यात्पुरा गुदे ॥ ४४ ॥

---

* ख. घ. पुस्तकयोर्नोपलभ्यते ।

---

१ क. तु । २ ख. घ. सर्वस्त्वेव । ३ क. °धिर्मतः । ४ ख. घ. °तास्त्वैवं । ५ क. °थाऽभ्यर्थं । ६ क. क्षणान्ते ।

क्षणान्ते वलयस्तस्मात्तस्मान्नातिप्रवेशयेत् ॥
सवलीके कृते बस्तौ पीडिते वा पुनः पुनः ॥ ४५ ॥
कोष्ठे वायुप्रवेशः स्यात्तस्मान्नैवं समाचरेत् ॥
अभ्यर्धे पीडिते बस्तौ नेत्रे वाऽपि प्रवेशिते ॥ ४६ ॥
पक्वाशयातिसारी स्याद्वेदनार्तो महीपते ॥
ईषत्तु पीडिते बस्तौ विषमं च प्रवेशिते ॥ ४७ ॥
नेप्सितं देशमाप्नोति स्याच्च बस्तिर्न कारकः ॥
औषधानां विपर्यासे यथास्वं दोषवर्धनम् ॥ ४८ ॥
तस्य वा प्रशमो व्याधेरन्येषां जन्मभावतु(तः) ॥
हीनमात्रे तु भेषज्ये कार्यस्यासाधनं भवेत् ॥ ४९ ॥
अतिमात्रे तु मात्रं तु दोषस्य हरणं भवेत् ॥
तेन दौर्बल्यमाप्नोति संज्ञानाशोऽपि वा भवेत् ॥ २५० ॥
उपद्रवाणां चोत्पत्तिर्मरणं वा ततो भवेत् ॥
कालातिनयतोऽप्येवं नियतं दोषवर्धनम् ॥ ५१ ॥
अन्येषां वा विकाराणामुत्पत्तिस्तदुपेक्षणात् ॥
अग्रेऽतिकर्कशं स्थूलमसमं चैव यद्भवेत् ॥ ५२ ॥
तन्नेत्रं वेदनां घोरां हस्तिनामुपपादयेत् ॥
अधुना स्रोतसा तस्य चिरात्स्नेहः प्रसिच्यते ॥ ५३ ॥
अर्धदत्ते कथंचिच्च सहसाऽस्य निवर्तयेत् ॥
तत्र वेगविघातात्तु जायन्ते गुदमेढ्रयोः ॥ ५४ ॥
बस्तौ चोपद्रवाः कष्टास्तस्माचैतन्न शस्यते ॥
भिषगातुरयोश्चैव तथैव परिकर्मिणः ॥ २५५ ॥
यथोक्तमेतद्विज्ञेयमसिद्धौ लक्षणं नृप ॥
अनथा(या) व्यापदा सिद्धौ सिद्धयश्च ततः परम् ॥ ५६ ॥
प्रवक्ष्यामि पृथक्त्वेन या मुक्ताः पार्थिवा यतः ॥
तत्र वातेन पित्तेन श्लेष्मणा वाऽपि भूयसा ॥ ५७ ॥
पुरीषेणाथवाऽत्यल्पो बस्तिः स्नेहः कथंचन ॥
संपृक्तो गत एकत्वं न चेत्प्रतिनिवर्तते ॥ ५८ ॥
मृदुश्चाल्पश्च विच्छिन्नस्नेहो नैव निवर्तते ॥
असंशुद्धशरीरस्य मार्गदोषेण संवृतो ॥ ५९ ॥

बहु भुक्तवते बस्तिर्यन्त्रेव परिवर्तते ॥
दूरं बस्तेः प्रविष्टस्य स्नेहमात्रासमेन तु ॥ २६० ॥
समा विद्या न सा जातु पुनः प्रतिनिवर्तते ॥
निदानेषु यथा प्रोक्तं दोषाणां व्यञ्जनं मया ॥ ६१ ॥
तेन तेनान्वितो बस्तिर्यथास्वं स्यात्सुलक्षणः ॥
संसृष्टेन पुरीषेण बस्तौ कुक्षिर्विपद्यते ॥ ६२ ॥
निश्वासस्य च पूतित्वमाध्मानः शूलमेव च ॥
पक्वाशयगुरुत्वं च गात्रसादश्च जायते ॥ ६३ ॥
बस्तावेतत्पुरीषेण ग्रथिते भवति क्षणम् ॥
अन्नेन चैव संसृष्टे छर्दिर्मूर्छाऽङ्गगौरवम् ॥ ६४ ॥
आमाशयविशुद्धिश्च हिक्का श्वासस्तथैव च ॥
शूलं मानाविनन्दित्वं वायोरङ्गप्रवर्तनम् ॥ २६५ ॥
मुखप्रस्ता(स्रा)व इत्येवं लिङ्गमन्नेन संहते ॥
अत्युन्नतशरीरस्य पीडितोऽत बहुद्रवः ॥ ६६ ॥
अल्पाहारस्य भिषजा काये पूर्वं विशोधिते ॥
भूयश्चोच्छ्वासवेगेन संप्रक्तो बस्तिरुद्गतः ॥ ६७ ॥
सज्जमानोऽथवा नेत्रे मुखं वा प्रतिपद्यते ॥
अभ्युन्नतशरीरस्य बस्तिर्वातसमीरितः ॥ ६८ ॥
बस्तिमेव प्रपद्येत ततः स्नेहः प्रवर्तते ॥
अल्पतैलविधानेन हृदयोपद्रवो भवेत् ॥ ६९ ॥
अल्पत्वान्मार्दवाच्चैव न दोषहरणं भवेत् ॥
दोषः संमूर्छितो वाऽपि कोष्ठ एव विलीयते ॥ २७० ॥
अल्पो वा हृदये दोषान्हीनमात्रैस्तु बस्तिभिः ॥
दाहं तृष्णां च मूर्छां च तीक्ष्णो बस्तिरुदीरयेत् ॥ ७१ ॥
कुर्याद्वाऽप्यतियोगेन जीवादानं न संशयः ॥
अजीर्णे बस्तिदानेन गुदे दोषः प्रवर्तते ॥ ७२ ॥
छर्दिर्मूर्छा च शूलं च गात्रसादश्च जायते ॥
उच्छ्वासस्याविशुद्धिश्च जृम्भणं परिवर्तनम् ॥ ७३ ॥
प्रवारणं परिस्रावो निस्तम्भो रोमहर्षणम् ॥
अशुभानि भवन्त्येवमजीर्णे यः प्रयच्छति ॥ ७४ ॥

तस्मान्नैतेषु कालेषु बस्तिर्वै मणयेद्भिषक् ॥
नातितीक्ष्णो न च मृदुर्नात्युष्णो नातिशीतलः ॥ २७५ ॥
मात्राधिको वा हीनो वा निरूहो न विधीयते ॥
सत्त्वसात्म्यं च यो व्याधिं देशं कालं यथाबलम् ॥ ७६ ॥
समीक्ष्य पीडयेद्बस्तिं यथोक्तं कुशलो भिषक् ॥
तत्र नेत्रस्य दोषेण बस्तिदोषेण वा पुनः ॥ ७७ ॥
भिषग्दोषेण चोत्सर्गे पुनर्दानं विधीयते ॥
पुरीषे चानिले वाऽपि मवृद्धे ग्रथितेऽपि वा ॥ ७८ ॥
तीक्ष्णाः संशोधनीयाश्च प्रशस्यन्तेऽस्य बस्तयः ॥
गुदे क्षतेषु नागस्य पैत्तिको विधिरिष्यते ॥ ७९ ॥
निदाने पित्तलिङ्गानां दर्शने पैत्तिको विधिः ॥
वातिको वातलिङ्गेश्च श्लैष्मिकः श्लैष्मिकेषु च ॥ २८० ॥
संनिपातेषु बोद्धव्यं यथास्वं दोषलक्षणम् ॥
संशक्ते तु यथा कुर्याद्यथोक्तं पूर्ववन्मया ॥ ८१ ॥
अपाने वक्ष्यते कार्यं तस्य वै पैत्तिको विधिः ॥
नेत्राभ्यां मुखतो वाऽपि बस्तिः स्नेहस्य दर्शनम् ॥ ८२ ॥
उत्क्षिप्य रोपयेद्देशं यत्र स्यादुन्मुखो गजः ॥
रज्ज्वाऽतिपीडया चास्य ग्रीवायामीषत्तन्द्रितः ॥ ८३ ॥
अधः मपीडितो बस्तिरुरोमार्गानुगो भवेत् ॥
ततः स शोधनीयः स्यात्परिषेकश्च शीतलः ॥ ८४ ॥
भ्रष्टलिण्डममादश्च बस्तावूर्ध्वगते सति ॥
त्रिभिर्वातादिभिर्दोषैः पुरीषेणाथ वा पुनः ॥ २८५ ॥
अनागच्छति संरुद्धे तीक्ष्णः संशोधनः स्मृतः ॥
पवसेन तु संसृष्टे भक्तग्रासं निवर्तते ॥ ८६ ॥
दूरं प्रवेशितो बस्तौ यश्च नायाति दारुणः ॥
फलबिल्वकयोश्चापि निष्कायो बस्तिरिष्यते ॥ ८७ ॥
बदरकोलकुलत्थानां निष्कार्थस्तिल्वकस्य च ॥
श्यामात्रिवृत्तैलयुतः सुरया यो विधीयते ॥ ८८ ॥

---

१ क. क्षतेऽस्य । २ क. °थामाद्गतादितिः ॥ ८३ ॥

प्रणिदध्याच्च विधिवत्समं त्रिवृतया सह ॥
तैलं विपक्कमित्येष बस्तिर्दूरं प्रवेशितः ॥ ८९ ॥
तस्मिन्दत्तो निरूहस्तु बस्तिस्तेन प्रवर्तते ॥
पुनरेवानुवास्याथ यथोक्तेन क्रमेण तु ॥ २९० ॥
त्रिफलारम्यकं स्नेहः शालिमूलं तथैव च ॥
चिरबिल्वश्च विक्षेपः श्यामामूलं च सर्वतः ॥ ९१ ॥
हृदयोपद्रवे दद्यात्संशोधनमिदं भिषक् ॥
(*ततो बस्तिविधानं तु कार्यमाहुस्ततः परम् ॥ ९२ ॥
विसृष्टलवणस्तीक्ष्णः किंचिदुष्णतरस्ततः ॥
चतुर्थोऽशः प्रदातव्यस्तृतीयो वाऽर्धमेव च ॥ ९३ ॥
जीवादानेऽतियोगे च प्रदेया रक्तबस्तयः ॥
पिच्छिलाश्चापि देयाः स्युरेवमेवातिसारिणे ॥ ९४ ॥
भक्ते ग्रासावरोधे च च्छर्द्युद्गारे तथैव च ॥
शूलेन वातिको बस्तिराध्माने च विधीयते ॥ २९५ ॥
बस्तेश्च प्रणिधानं स्यात्ततस्तु परिकीर्त्यते ॥
पिच्छिला स्नेहबस्तिश्च पैत्तिकश्च विधीयते ॥ ९६ ॥
शिरसः पूरणे देयाः शोधनीयाश्च बस्तयः ॥
मूर्छायामुपचारस्तु शीत एव न संशयः ॥ ९७ ॥
वाजीकरणसंयुक्ताः शीता धातुक्षये हिताः ॥
कृशस्य बृंहणीयाश्च स्थूलस्य तु विशोधनाः ॥ ९८ ॥
प्रत्यनीकेन कर्तव्यं तस्य बस्तेश्चिकित्सितम् ॥
सर्वत्रैवं विजानीयादित्युद्देशः प्रकीर्तितः ॥ ९९ ॥
स्नेहनः सर्वपूर्वः स्याद्बलिनोऽथ विरेचनः ॥
आस्थापनं स्नेहबस्तिरित्येष क्रम इष्यते ॥ ३०० ॥
कृत्स्नेष्वर्थेष्वभिप्रायमतिदीप्तताग्निना ॥
इन्द्रियाणां प्रसादश्च सर्वत्र रतिरेव च ॥ ३०१ ॥
सुखस्वप्नावबोधश्च सुखोत्थानिस्तथैव च ॥
रोचते चास्य यत्किंचिद्बलमावहते च यत् ॥ २ ॥

*धनुश्चिह्नान्तरगतः पाठो नास्ति कपुस्तके ।

१ क. हृदयोपद्रवं विद्यात्संशोधनविधानतः । २ घ. °स्य तस्य चिकि° ।

वपुर्न सज्जते तेषु विहारमभिकाङ्क्षति ॥
तमश्च देहेऽप्यधिकं रजश्चाप्युपशाम्यति ॥ ३ ॥
सत्त्वमापूर्यते चास्य प्रसादं चाधिगच्छति ॥
प्रपद्यते कृतं शीघ्रं कृतं चानुसरेद्दृढम् ॥ ४ ॥
शीतोष्णानिलवर्षाणि सर्वाणि सहते भृशम् ॥
तेजस्वी च स्थिरश्चैव सुगन्धिश्चैव जायते ॥ ३०५ ॥
सुखसंवेशनोत्थानो जवसंपन्न एव च ॥
मृदं च हर्षजं शीघ्रं वारणः प्रतिपद्यते ॥ ६ ॥
सम्यग्दत्तस्य विज्ञानमित्येतत्संप्रकीर्तितम् ॥
पृच्छतस्तव राजेन्द्र विस्तरेण यथाक्रमम् ॥ ७ ॥
प्रवेशमर्यादावर्ष(?)कर्णिका द्वादशाङ्गुला ॥
आयामोऽर्धपरीणाहः कर्णिकोत्तरतो भवेत् ॥ ८ ॥
एतदेव प्रमाणं स्यात्पुष्पनेत्रस्य धीमता ॥
आयामे त्वथ कर्तव्यं तथैव स्यात्सकर्णिका ॥ ९ ॥
पुष्पनेत्रं तु कर्तव्यं ताम्रकायोमयं शुभम् ॥
श्लक्ष्णमेवानुपूर्वं च बस्तिर्गव्यश्च पूज्यते ॥ ३१० ॥
यावन्मन्द्रप्रवेशश्च बोद्धव्यश्च विजानता ॥
परिणाहश्च कर्तव्यो मूत्रमार्गप्रमाणतः ॥ ११ ॥
स्नेहमात्रा तु कर्तव्या षोडशांशा तु सा भवेत् ॥
सर्वमन्यद्धि कर्तव्यमनुवासनकर्मवत् ॥ १२ ॥
ततो वस्त्राश्रः कर्तव्यो बन्धने षोडशाङ्गुलः ॥
बस्त्यर्थं च दृतिः कार्या ऐणेया वाऽप्यथाऽऽजका ॥ १३ ॥
स्नेहोपयवसाश्चास्य प्रमाणं तु यथार्थतः ॥
ज्येष्ठा त्रिभागादुत्कृष्टं मध्यं नेत्रमतोऽधमम् ॥ १४ ॥
बस्तिर्नेत्रविधिस्त्वेष निष्प्रमाणविभागतः ॥
दृतिं तत्सदृशां कुर्यात्सुश्लिष्टां परमर्धिताम् ॥ ३१५ ॥
नेत्रच्छिद्रे प्रबध्नीयाद्यथापूर्वं समाहितः ॥
उत्तमस्य तु नागस्य भवेत्पञ्चाढकं मतम् ॥ १६ ॥
मध्यमाय भवेदेयं नित्यं तु चतुराढकम् ॥
अधमायाऽऽढकानि स्युर्वैचक्षण्येन दापयेत् ॥ १७ ॥

---

१ घ. °सोऽस्य ।

स्नेहप्रमाणमुद्दिष्टं यथावत्प्रविभागशः ॥
भूयोऽङ्गराजः पप्रच्छ कालकाप्यं महामुनिम् ॥ १८ ॥
अभुक्तं वा निरूहयेत भुक्तं वाऽनुवास्यते ॥
यदि तत्कस्य हेतोस्तु भगवन्मब्रवीतु मे ॥ १९ ॥
इत्युक्तस्तेन विनयात्तस्मै प्रोवाच तत्त्वतः ॥
अभुक्तवान्यदा नागः पूर्वमेवानुवास्यते ॥ ३२० ॥
तदाऽस्याऽऽमाशयं स्नेहः शून्यकोष्ठस्य गच्छति ॥
आमाशयस्थे स्नेहे तु पश्चाद्भोजयते द्विपम् ॥ ३२१ ॥
स्नेहेनाऽऽमाशयस्थे तु हृदयं तस्य पीड्यते ॥
संमूर्छितो विह्वलति तथाऽऽध्मानं नियच्छति ॥ २२ ॥
स भोजनविमिश्रस्तु नैवाधः प्रतिपीड्यते ॥
तेनाग्नेर्दुर्बलीभावः सहसैवास्य जायते ॥ २३ ॥
मन्दाग्निभावात्पित्तं च कफश्चास्य प्रकुप्यति ॥
तौ प्रदुष्टौ तु सहसा चाऽऽममार्गं निरुन्धतः ॥ २४ ॥
अन्तर्वाताभिभूतस्य स्नेहो नैव निवर्तते ॥
अनिवृत्तः स्थितः स्नेहो धमनीं तस्य दापयेत् ॥ ३२५ ॥
अधःश्रो(स्रो)तःसु रुद्धेषु वायुश्चोर्ध्वं प्रधावति ॥
चक्षुः श्रोत्रं शिरश्चास्य घ्राणं चैव रुणद्धि तु ॥ २६ ॥
तस्माद्भुक्तवते बस्तिः स्नेहस्तस्य विधीयते ॥
अभुक्तस्य निरूहः स्यादतिरूक्षस्तु भुक्तवान् ॥ २७ ॥
यदा तु भुक्तवान्नागो निरूह्येत विजानता ॥
बहून्रोगांस्तदा साध्यस्तन्निमित्तं नियच्छति ॥ २८ ॥
अत्यर्थं पाकलं तृष्णामतीसारमरोचकम् ॥
मूर्छां ग्लानिं मदं तन्द्रीं मरणं चापि गच्छति ॥ २९ ॥
उष्णस्तीक्ष्णश्च सहसा निरूहस्तु विशां पते ॥
पक्वाशयमपक्वं च भुक्तं तस्यापकर्षति ॥ ३० ॥
अभुक्तवति तस्मात्तु स्निग्धपूर्वोऽनुवासनैः ॥
उपपन्नो निरूहस्तु यथोक्तं कार्यसिद्धये ॥ ३१ ॥
अपवादांश्च बुध्येत यथोक्तानवधारयेत् ॥
ऊहापोहौ यथायुक्ति दृष्ट्वा कार्योऽऽतुराणि तु ॥ ३२ ॥

सप्तरात्रं तुराजेन्द्र कर्मोत्तममिति स्मृतम् ॥
द्वे मध्यमधमं त्वेकं मिवेतत्संप्रकल्पयेत् ॥ ३३ ॥
उत्तमे वोत्तमं ज्ञेयं मध्यमे वाऽपि मध्यमम् ॥
अधमे त्वधमं नित्यं यथावर्ण्यं यथाबलम् ॥ ३४ ॥
सप्ताहात्परतः स्नेहः सात्मीभावाच्च निर्गुणः ॥
तस्य विश्रम्य दातव्यं स्नेहं वा त्र्यहमेव वा ॥ ३५ ॥
कालस्तु दानाद्द्विगुणः परिहारो विधीयते ॥
बलवर्णसमाधौ च ततः सर्वं समाचरेत् ॥ ३६ ॥
व्यायामं भारहरणं गमनं सहसाऽध्वनि ॥
अतिस्थानं च शयनं युद्धव्यायाममेव च ॥ ३७ ॥
दुस्थानमथ दुःशय्यां तथाऽत्यशनमेव च ॥
असात्म्यभोजनं वाऽपि तथा भोजनमेव च ॥ ३८ ॥
अत्युष्णमतिशीतं च तथा वर्षानिलानपि ॥
शब्दादीनि च सर्वाणि प्रतिकूलानि यानि च ॥ ३९ ॥
बस्तौ दत्ते न सेवेत परिहारे तथैव च ॥
बलवर्णसमग्रो हि सहते विषमान्यपि ॥ ३४० ॥
एतत्सर्वं समाख्यातं यथोद्दिष्टं विशां पते ॥
बस्तिकर्मविधानं हि कृत्स्नं तुभ्यमरिंदम ॥ ४१ ॥

तत्र श्लोकः—

इमं विधिं यो निखिलेन कुर्याद्विधातुमापत्सु च यो न सीदति ॥
स भूमिपालेन विधातुमौषधं गजेषु कार्यो भिषजां वरस्तदा ॥ ४२ ॥
इति ॥

इति श्रीपालकाप्यविरचिते हस्त्यायुर्वेदमहाप्रवचने श्रीपाठे चतुर्थे उत्तरस्थाने बस्तिदानकथनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ षष्ठोऽध्यायः ।

---

अथ भगवन्तं पालकाप्यमाश्रमस्थमङ्गराजोऽभिवन्द्यामतीत् 'भगवन् कीदृशे भूमिभागे कस्यां दिशि हस्तिनः शाला कर्तव्या, किं प्रमाणम्, कीदृशी, किं संस्थानम्, उपाभागो द्वारं वा कस्यां दिशि हस्तिशालायाः कथं वा कस्मिन्मृतौ विधानमेतदिच्छामि वेदितुं तदशेषेण भगवन् व्याख्यातुमर्हसि' ॥

ततः प्रोवाच भगवान्पालकाप्यः शृणु राजन्स्थानविधिमुपदिश्यमानमशेषनागानाम् । तत्र शिवे रम्ये बहुद्रुमे भूमिभागे नातिदूरं नगरस्य स्थानं ग्रामं समाश्रितस्य(?) प्रागुत्तरस्यां दिशि चैत्यश्मशानदेवतायतनयक्षपिशाचराक्षसभूतायतनानि दूरतः परिहृत्य कृष्णश्वेतरक्तपीतपाण्डूनां भूमिवर्णानामन्यतमेन वर्णेनोपपन्नां भूमिं ज्ञात्वा सुस्निग्धभूमिभागे ब(शा)लां वारणस्योपकल्पयेत् ।

हस्तत्विष्याश्वयुक्चित्राश्रवणानामन्यतमे नक्षत्रे, दशम्येकादशीद्वितीयातृतीयासप्तमीनामन्यतमे दिवसे, सावित्रबालाभिजितामैत्रराक्षसभूतानामन्यतमे मुहूर्ते, शान्तिं कृत्वा ततोऽक्षतोदकपूर्णकलशैः सचन्दनैः प्रोक्ष्य भूमिभागं हुत्वाऽग्निं ब्राह्मणांस्तर्पयित्वाऽन्नैश्च दक्षिणाभिश्च ततः पुण्याहघोषेण तां समां शालां मापयेत् ।

त्रिविधस्तु विस्तारः शालानामेष्टव्यो भवति यथाहस्तिप्रमाणेन । तत्रोत्तमस्य चतुर्विंशत्यरत्निविस्तारा, मध्यमस्य द्वाविंशत्यरत्निविस्तारा, जघन्यस्य विंशत्यरत्निविस्तारा । द्विगुणायतां प्रागुद्वारामुदग्द्वारां वा प्रकल्पयेच्छालाम् । तत्र षट्किष्कूत्सेधहस्तद्वयं किष्कूत्सेधां ज्येष्ठस्य, पञ्चकिष्कूत्सेधां मध्यमस्य, द्वेचतुःकिष्कूत्सेधां जघन्यस्य । विस्तरार्धमात्रः प्राग्जीवः कर्तव्यः । ततः शालशाकतिनसार्जुनानामन्यतमेन द्रव्येण सारवन्तमग्रन्थिकोटरमप्राद्व(?)मुतक्षितमृजुं वृत्तं स्तम्भमनवबाधकरं हस्तिनां सगदोरसान्तं चतुरो हस्तान्निपातयेत् । सुपरिगृहीतं शङ्कुभिश्चतुरस्तात्पार्श्वतश्चाऽऽदशहस्ताऽनुत्सेधमस्य कुर्यात् ।

षट्पञ्चाशदङ्गुलपरिणाहमुत्तमस्य, चतुर्दशाङ्गुलपरिणाहं मध्यमस्य, द्वादशाङ्गुलहीनं जघन्यस्य । तस्याऽऽसनस्योपरि हस्तमात्रे गोस्तनं कारयेत् । अथास्य स्तम्भमूलेष्वश्लिष्टं पश्चात्प्रवणं सुश्लिष्टकरंकावेधनं (?) कुर्यात् । किंचिन्मध्ये निम्नोन्नतसंपुरस्ताद्विहस्तमात्रं हस्त(स्ति)विश्रामणार्थं कपिशीर्षं कुर्यात् । अवकृष्टं च पृष्ठतोऽग्रयोमनं कर्तव्यम् । पदपर्यन्तश्च हस्तिशालायां सर्वतोर्धकोष्ठकः कार्यः सुलिप्तो मृत्तिकया । ज्याभाग(गं)पूर्वेणोत्तरेण वा कुर्याद्यथाहस्तिप्रमाणं किंचिन्मध्यभागे निम्नोन्नतं पार्श्वेषु मृदुना सूक्ष्मेण च पांशुनाऽवकीर्णम् । एवं द्वौ हस्तिनः स्थाने स्तम्भौ शय्याभांगौ च विभज्य कारयेत् ।

ग्रीष्मकाले रात्रो पुनरागतं कण्टकमुपनेये(नयेत्) प्रवातार्थम् । पुवं (एवं) दिवसक्ला(क्लान्)न्तो वारणः सुखमाप्नोति । तानेवोदितसूर्ये कटकान्बन्धयेत्प्रच्छादनार्थं(त) येन पार्श्वेनातपस्यागमः । शेषाणि पार्श्वाणि विवृतानि कुर्यात्प्रवातार्थम् । प्रातरेवोपलेपयेच्छालाम् । निवृत्तस्य चास्य प्रवराप्रविष्टस्य मुहु-

मुहुः शीतलेन वारिणा सेचयेत् । स्थाने हस्तिकाले पाश्चरात्रिकं कुर्यात् । नवान्कुम्भान्शीतवारिपूर्णान्स्तिक्यस्यानुपरिश्रा(स्रा)वयेद्धृवीर्वा । यवसाव्यापोकानि चोदकानि यवसानि नित्यं संनिहितानि कर्तव्यानि पल्लवानि च विचित्राणि कुंप(कुव)लानि च । सायं चेमं निर्वाणातपस्यायतं बहिः सुखं मुहूर्तं स्थापयेत् । ग्रीष्मस्थानविधिरुक्तः ।

अथ वर्षास्वपि स्थानं कर्तव्यम् । यथा क्वचिदपि नोपक्लिद्यते तथा बहुविधै-*स्थाभेर्जैर्यवसैः सुविहितं कर्तव्यम् । प्रवृष्टे च देवे सर्वतः कटकैः संवृतं कुर्यात् । निवृष्टे पुनः कटकानपनयेत्प्रवातार्थम् । नित्यं संनिहितश्च धूमः कर्तव्यो दंशमशकादिग्रहणार्थम् ।

अथ हेमन्ते शीतवातनिग्रहार्थमथ(र्ध)कुड्योपगता दृढाः कटकाः कार्याः । निवातमेव रात्रौ कृत्वाऽतीतायां रजन्यामातपागममभिज्ञायापसारयेदातपप्रवेशार्थम् । ततो मन्दार्ककिरणैरेव तप्यमानः प्रह्लादमुपगच्छति शरीरे सुखमाप्नोति द्विरदपतिः सुखं च सलिलमवगाहयेत् । विचित्रैर्यवसैर्विविधैरपि हितमस्य स्थानं कुर्यादमुमिति ।

तत्र श्लोकौ—

वरं स्थानेषु विहितं यथोक्तं गुणसंपदा ।
कर्तव्यं वारणेन्द्राणां विधानं हितमिच्छता ॥ १ ॥
एवं सुविहिता यस्य राज्ञो राजन्गजोत्तमाः ॥
तस्य युद्धेषु विजयं प्रयच्छन्ति सुखानि च ॥ २ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचने वृद्धोपदेश उत्तराभिधाने परिवारचतुर्थस्थाने शालाविधानं नाम षष्ठोऽध्यायः (†प्रथमः) ॥ ६ ॥

---

अथ सप्तमोऽध्यायः ।

---

अथ भगवन्तं प्रभातिमासयन्तं दिवसकरकरालवपुषमतितपसमनेकऋषिगणमध्योपविष्टं पप्रच्छ रोमपादः पालकाप्यं 'कथमतिचपलभावानां क्षीणबलमांसशोणितानां यान्त्(तृ)वशाद्यातिप्रमाणमनपेक्षहरणीयमक्षमीयमर्दनीयप्लवनी-

---

* 'बहुविधैर्भूजैर्यवसैः' इति स्यात् । † 'प्रथमः' इति पाठस्तु पुस्तकद्वयेऽपि न अने कथं प्रक्षिप्तः ।

येषु हस्तियुद्धविमर्दोपगमा(गा)नां च गात्रविक्षोभदन्तप्रतिमानप्रवक्षसमुत्थाना नानाविधलिङ्गवेदना विकाराः संभवन्ति। तेषां नस्यविधानादृते न दोषोपशमनमस्ति नागानां तन्मेऽखिलतो नस्यविधानं समुपदेष्टुमर्हसि भगवन्येषां व्याधीनां प्रशमनकरं येषां च वृद्धिमुपजनयति यथा येषां च नस्यकर्माणि विधीयते यथा यच्च स्नेहप्रमाणं यथा चाति(च)पल्लानां यत्र विधिरनुष्ठीयते यथावस्थितस्योर्ध्वकरवारणस्य कर्म विधीयते तदखिलतो भगवन्व्याख्यातुमर्हसि' ।

अथ भगवानुवाच पालकाप्योऽङ्गराजाय रोमपादाय वस्तुजयस्व(?) यदीरितं वाक्यमिष्टशब्दमव्याहतमपुनरुक्तं संस्कृतपदविचित्रार्थम्—नागानां नस्यकर्मविधानमिदं भिषजा नित्यमशास्त्रज्ञेनाकर्मकुशलेनादृष्टपत्रेणादृष्टविधानेनोहापोहाभ्यां विप्रयुक्तेन न चाविपश्चिता नस्यकर्म प्रदातुमित्येतन्मे विवक्षितम् । तद्यथावदुपलम्भस्व शिरोरोगाक्षिरोगदन्तरोगकर्णरोगमुखरोगमन्याग्रहहस्तग्रहोत्कर्णगात्ररोगग्रीवास्तंभप्रमाथितप्रतिहरश्च यथाबिन्दुस्थानप्रविभागगजानां नानाविधलिङ्गवेदनाः परमदारुणविकारा भवन्ति । तद्यथाऽतिभृशं दारुणं भारमुद्वहतो हा(ह)रतो वा विभित(न्न)शरीरस्य श्लेष्माभिस्पन्दमुपगच्छति । स विस्पन्दमानः कुणपगन्धित्वं स्रवति । तेनास्य कण्ठकपोलमस्तककर्णकटतालुस्रोतोगतः श्लेष्मा प्रसिच्यते । तस्यातिप्रसेकात्सुषिरमार्गप्रचारेष्वेकीभावमुपगच्छते । श्रो(स्रो)तस्सु वायुरनुप्रपन्नस्तोदनपरिसर्पणताडनादीँल्लिङ्गविशेषाञ्जनयति । तस्य प्रतिव्याधिविहितसमुत्थाननिदानविशेषानवेक्ष्य यदा तु भिषग्भेषजपरिचारकापवैरैर्यथाविहितं भेषजमन्यथैव क्रियते तदा निःसृतदोषस्य श्लेष्मणाऽपहृते कफक्षीणश्लेष्मणा कटुकाम्ललवणानां रसानां सुपसेवनं च क्रियते ततस्तत्रभूयिष्ठं वारणा भवन्ति । तेन दाहभूयिष्ठत्वमस्य भवति तस्य लिङ्गदर्शनं पश्चाद्वक्ष्यामः ॥

तत्र श्लोकः—

नस्यकर्म तु नागानां वर्जितं येषु नित्यशः ॥
तानहं कीर्तयिष्यामि यथावदनुपूर्वशः ॥ १ ॥

अकृतमुखद्वारस्य कामाशनपानेष्वप्रक्षीणस्याध्वक्लान्तस्य तृषित उष्णप्रभिन्नदानक्लान्तशीतवातार्दितातिपातपीतपानीयस्याकाले विषमस्थानगतस्य चलस्तम्भस्थितस्य निशि चाप्रसुप्तस्य मृत्तिकाभ्यवहारिणस्तथा जीर्णपूर्वभक्तस्याविरिक्तशिरसाऽतिविरिक्तशिरसः शिरोविरेचनैरेवं नस्यकर्म विगर्हितं भवति । तथा च नागानां नस्यकर्मासम्यगुपचारेण दत्तमिमान्व्याधीञ्जनयति पक्ष-

ग्रहोत्कर्णकमन्याग्रहशिरोरोमगात्ररोगाक्षिरोगानेवमादींश्च पूर्वदेहिकान्विकारानिति ।

अथ दुर्विरिक्तलक्षणानमनुव्याख्यास्यामः । अतिनिर्धूतदोषस्य संनिरुद्धमार्गप्रचारस्य कर्णशूलो भवत्यतिमात्रम् । तेन शूलेनाभिभूतस्य पर्यस्तु(स्नु)ता भवति । विधुनोति शिरोमात्रम् । ततोऽस्य शिरो धुन्वतो मुखोपरि शोफो भवति । ततोऽस्य नेत्रे परिस्रावः प्रवर्तते तीक्ष्णम् । तस्य परिस्रावाभिभूतनयनस्य दृष्टिराविला भवति ।

अथातिविरिक्तलक्षणमनुव्याख्यास्यामः ।

यदा हि भिषजाऽत्यम्लकटुकोष्णातिलवणमतिरिक्तं शिरोविरेचनं प्रध्मापनं वा दीयते तदा काष्ठाकालानां प्रमाणमतिसेवमानानां नागानामतिधूमपानोच्छ्लेष्माजर्जरीभूतशरीराणां प्रलेपमिवोष्णेनाभिष्यन्दी भवति श्लेष्मा । ततो यथोक्ता निवातलिङ्गा उत्पद्यन्ते तोदभेदपरिघर्षणादयः स्वल्पाङ्गविकारा भवन्ति । विशेषश्च शिरो विधुनोत्यभीक्ष्णम् । बृंहति, परिस्रुतकरश्च भवति, मुहुर्मुहुरतिदुर्मना द्विरदः ।

अथ सम्यग्विरक्तलक्षणमनुव्याख्यास्यामः । प्रहृष्टकरचरणकर्णवालनयनोऽयमुपसेवते स्वस्थः सर्वाङ्गकरसंचारशरीरो यथाकालं वातमूत्रपुरीषोत्सर्गं करोति बलवर्णप्रसादपरीतशरीरः सुमनाः शीलादिषु न विकारमापद्यते ॥

इति श्रीपालकाप्येन ऋषिणा दुर्विरिक्तातिविरिक्तसम्यग्विरिक्तलक्षणमुपदिष्टम् । नस्य विधिरन्यत्राभिहितोऽस्ति ।

अभग्नयोगमश्रान्तं वेदव्रतकृतश्रमम् ॥
त्रिदशैः पूजितं नित्यं पालकाप्यं महामुनिम् ॥ १ ॥
रोमपादो महाराजः संशयं परिपृच्छति ॥
तृणसात्म्यास्तृणाहारास्तृणप्राणाश्च वारणाः ॥ २ ॥
तेषां देशमृतुं कालं तृणानां च रसारसम् ॥
वृक्षभक्ष्याङ्कुरतागुल्मान्भगवन्प्रब्रवीहि मे ॥ ३ ॥
स पृष्टस्त्वङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
निबोध मे महाराज प्रसन्नेनान्तरात्मना ॥ ४ ॥
पीतोषधिरसे काले आदित्यस्य प्रभस्त्विभिः ॥ [१]
प्राणसंजननार्थं च ग्रीष्मे सर्वं प्रयोजयेत् ॥ ५ ॥

---

१ क. ग. महाप्राज्ञः ।

वर्षासु स्थलजं देयं जलजं च विवर्जयेत् ॥
हेमन्ते जाङ्गलं भूपः स्थलजं च महीपते ॥ ६ ॥
वसन्ते तु तृणं दद्यात्कषायकटुकं रसे ॥
ग्रीष्मे तृणं शेषमार्द्रं दापयेच्च गुडोदकम् ॥ ७ ॥
कुल्माषमोदकं चैव सानुपानं प्रदापयेत् ॥
प्रावृट्काले महाराज दापयेत्पिष्टमोदकम् ॥ ८ ॥
छविरोमप्रसादार्थं पञ्चमेऽहनि दापयेत् ॥
अनूपजानि शरदि प्रदद्याच्छाद्वलानि वै ॥ ९ ॥
हेमन्ते स्थलजं दद्यात्प्रसन्नां चाचिरस्थिताम् ॥
प्रदद्याद्यवसान्येव बुद्धिमाञ्शास्त्रनिश्चयात् ॥ १० ॥
ऋतुष्वेवं महीपाल योगसात्म्यैरदन्तिनम् ॥
ओषध्यः फलपाकान्तास्तासां सर्वगतो रसः ॥ ११ ॥
भवत्यजातवीर्याणामम्लः श्लेष्मविवर्धनः ॥
अजातकाण्डं तरुणं पत्रलं शस्यमुच्यते ॥ १२ ॥
श्रावणे तु तृणं मासे भाद्रपदे जातपर्वकम् ॥
ईषन्मधुरमम्लं च जायते प्राणवर्धनम् ॥ १३ ॥
गर्भमाश्वयुजे मासे सगर्भं मधुरं भवेत् ॥
विमुक्तमम्लभावेन जायते मांसवर्धनम् ॥ १४ ॥
कार्तिके तु तृणं मासे जातवीर्यरसं भवेत् ॥
मांसशोणितमज्जानां बृंहणं प्राणवर्धनम् ॥ १५ ॥
मार्गशीर्षे तृणं राजन्पक्वं परिणतं दृढम् ॥
शुक्रवृद्धिकरं राजञ्जायते प्राणवर्धनम् ॥ १६ ॥
परिशुष्कार्द्रपत्रं च *शीर्षं पुष्पं फलं तथा ॥
पौषमासे तृणं विद्यान्नागानां मेदसो हितम् ॥ १७ ॥
तुषारपाताभिहतं सूर्येणोपहतं भवेत् ॥
माघमासे तृणं प्रायः संशुष्कमुपजायते ॥ १८ ॥
तृणमल्परसं चापि न वा प्राणविवर्धनम् ॥
क्वचिदार्द्रं क्वचिच्छुष्कं फाल्गुने मासि जायते ॥ १९ ॥

---

* 'शीर्षपुष्पफलं' इति भवेत् ॥

---

१ ख. घ. चारिर° ।

चण्डवातहतं शुष्कमल्पवीर्यं च संभवेत् ॥
चैत्रे मासे महाराज नागानां च न रोचते ॥ २० ॥
भूमौ निपतितं शुष्कं विच्छिन्नं विरसं तृणम् ॥
मांसे करीषप्रतिमं वैशाखे जायते भुवम् ॥ २१ ॥
दावाग्निदग्धे तु तृणे प्रायशो वृक्षभोजनाः ॥
न तृप्तिमधिगच्छन्ति ज्येष्ठे मासे मतङ्गजाः ॥ २२ ॥
कोमलं पल्लवं वल्लीसंजातमनुवृष्टिभिः ॥
कन्दमूलानि चाऽऽषाढे भक्षयन्ति मतङ्गजाः ॥ २३ ॥
तृणावस्था महाराज विज्ञातव्या विचक्षणैः ॥
सुरभि कुरुविन्दं वा प्रमोदाः श्वेतपत्रिकाः ॥ २४ ॥
मृदुशुण्ठी करीरं च तथा वानरपुच्छिका ॥
सौवस्तिका विचिटिका तथालोहितपत्रिका ॥ २५ ॥
रसादनी गिरितृणं तथा पर्णगुहा रसा ॥
एतानि मधुराण्याहुर्विपाके कटुकानि च ॥ २६ ॥
वातकोपीनि भूयिष्ठं श्लेष्मपित्तहराणि च ॥
गिरिकाशी वंशपत्री(?) नृत्यकन्दी तथैव च ॥ २७ ॥
(*इच्छागु गङ्कपत्री च तृणपल्लविकाऽपि च ॥ )
अर्जुनश्चोपलं चैव दण्डशूकप्रमोदकाः ॥ २८ ॥
तृणपर्णामृतश्चैव तथा काकपरूषकाः ॥
एतानि मधुराण्याहुर्विपाके तु मनीषिणः ॥ २९ ॥
पित्तश्लेष्मानिलार्तेभ्यो वारणेभ्यः प्रदीयते ॥
आर्द्रपत्री मरुवकं जूर्णामर्धविभाञ्जिकम् ॥ ३० ॥
स्थलजं रक्तदण्डं च कुंपलांश्चैव पत्रिकाम् ॥
कङ्कुवरकलोमीककरेणुसुपचीतृणम् ॥ ३१ ॥
सुपर्णवारिवेल्लं च काशं कुशतृणं[†] तथा ॥
उलूखलं प्रविरसं तथा पुच्छकमेव च ॥ ३२ ॥

---

* धनुश्चिह्नान्तरगतः पाठो नास्ति कपुस्तके । † कपुस्तके तु 'काशमथापि वा' इत्युत्तरमेकपृष्ठं रिक्तमेव रक्षित्वा द्वितीयपृष्ठप्रारम्भे 'तृणं तथा । उलूखलं' इत्याद्येव यथाश्रुतमुपलभ्यते ।

पुरुषं वरसोमं च तथैव चारुपत्रिकाम् ॥
सूतं च बिल्वजाश्चैव चिक्किणी रक्तकुण्डकम् ॥ ३३ ॥
रूक्षाणि मधुराण्याहुर्विपाके कटुकानि च ॥
वातकोपीनि भूयिष्ठं श्लेष्मपित्तहराणि च ॥ ३४ ॥
एतज्जाङ्गलमुद्दिष्टं तृणजातमसंशयम् ॥
*आनूपजं प्रवक्ष्यामि रसदोषविपाकतः ॥ ३५ ॥
श्यामाकं जूर्णपादं च शिल्पिकं कारभीतृणम् ॥
तिलपर्णी मञ्जरिका महामृदुलिका तथा ॥ ३६ ॥
महाश्यामाकमेवाथ तथैव शकटातृणम् ॥
प्रशान्तिका मञ्जरिका इक्षुपर्णी नलस्तथा ॥ ३७ ॥
श्लक्ष्णाकरपरा चैव तथा परुषपत्रिका ॥
पिठकारालगुडकं कलायं शतपत्रिका ॥ ३८ ॥
मृतवीरकपत्री च तथा मेषविषाणिका ॥
गुच्छं तृणं श्लक्ष्णगुच्छं तथा चैवेक्षुचालिका ॥ ३९ ॥
कदलीमिक्षुरेरण्डनारिकेलं नलस्तथा ॥
खर्जूरीपिण्डकं चैवं† .................... ॥ ४० ॥
.................................................. ॥
.................................................. ॥

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
अरिष्टानि गजेन्द्राणां भगवन्वक्तुमर्हसि ॥ १ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
अरिष्टानि महाराज शृणु वक्ष्यामि यानि ते ॥ २ ॥
येषामालोकनान्मृत्युं भिषग्जानाति दन्तिनाम् ॥
दृढं यस्य विपद्येत गजस्यौषधिभाजनम् ॥ ३ ॥
न तस्मै क्रियते कृत्यमिति वृद्धानुशासनम् ॥
क्रव्यादा यस्य विहगा व्याधितस्येह दन्तिनः ॥ ४ ॥

* 'अनूपजं' इति स्यात् । † इत उत्तरम् 'किंचित्त्रुटितमस्ति' इति खपुस्तके लिखितमुपलभ्यते ।

१ क. °ष्कुडलम् । २ क. °कजम् ॥ ३९ ॥ ३ क. °हामञ्जरिका । ४ ख. घ. मृ····वीरक° । ५ ख. घ. °रेरं च ना° । ६ क. °ण्डकी चै° । ७ क. °व देयो वै दन्तिनां सदा ।

उपर्युपरि गच्छन्ति बहुशः स न जीवति ॥
यस्याग्रहस्ते श्वयथुः पुष्करं नोपसेवते ॥ ५ ॥
तालु मन्ये गले चैव सोऽपि नागो न जीवति ॥
यस्यैकगात्रं हस्तश्च श्वयते म्लापते तथा ॥ ६ ॥
गच्छच्च रक्तं स्रोतोभ्यो न स जीवति तादृशः ॥
यो नागः स्रस्तहस्तः स्यादङ्गुलिश्चापि वेपते ॥ ७ ॥
अधः कायस्य यश्चापि न स जीवति वारणः ॥
वारणो जलमास्येन हस्तेनापि न रोचति (ते) ॥ ८ ॥
पीत्वा वमति भूयश्च न स जीवति (*तादृशः ॥
गच्छतस्तिष्ठतश्चापि यस्य गच्छति शोणितम् ॥ ९ ॥
करकर्णास्यमेढ्रेभ्यो दशाहं स न जीवति ॥ )
यस्यैकगात्रं शूनस्य खनत्येव नखैः क्षितिम् ॥ १० ॥
वेदनार्तश्च भवति न स जीवति तादृशः ॥
सूयन्ते यस्य गात्राणि वलनं नैव दृश्यते ॥ ११ ॥
शिरोग्रीवामणिर्यस्य जृम्भमाणो न जीवति ॥
हृस्वमूत्रपुरीषश्च स्वल्पाहारो न जीवति ॥ १२ ॥
स्पष्टानि यस्य रोमाणि निपतन्ति महीतले ॥
करकर्णास्यवालेभ्यो दशाहं सोऽपि जीवति ॥ १३ ॥
गजः कुणपगन्धिर्यो वाति वातानुसारतः ॥
परमोदनकाङ्क्षी च न स जीवति कुंजरः ॥ १४ ॥
विरिक्तो यदि वैद्येन स्वयं चाप्यतिसारतः ॥
पुनराध्मायते यस्तु यथा प्रेतस्तथैव च ॥ १५ ॥
श्यामोष्ठश्च विवर्णदृक् श्यामताल्वकमेहनः ॥
दुर्गन्धो विस्रगन्धिश्च त्रिरात्रं न स जीवति ॥ १६ ॥
गजो विशिष्टदृष्टिर्यो भवेत्संलुलितेक्षणः ॥
(†गजः संशुष्कवदनो न स जीवति तादृशः ॥ १७ ॥
ऊर्ध्वं तिर्यगधश्चैव भीतत्रान्तो मतङ्गजः ॥
विलोकयति सर्वत्र न स जीवति तादृशः ॥ १८ ॥

* धनुश्चिह्नान्तरगतो नास्ति पाठः कपुस्तके ॥ † धनुश्चिह्नान्तरगतो नास्ति पाठः कपुस्तके ।

१ ख. घ. शून्यस्य । २ ख. सूयते । घ. शूयते ।

कण्ठौ मुखं च नेत्रे च यस्योद्धमद्वृति दन्तिनः ॥
न च रक्तं स्त्रवेच्चैव न स जीवति तादृशः ॥ १९ ॥
अनाहारस्तु यो नागः पुरीषं बहु चोत्सृजेत् ॥
सोऽपि प्रेतसमो ज्ञेयो न स जीवति वारणः) ॥ २० ॥
ग्लानाक्षस्य नखा यस्य श्यामतां यान्ति दन्तिनः ॥
न स जीवति मातङ्गस्त्रिरात्रमिति मे मतिः ॥ २१ ॥
हस्तिनो यस्य लक्ष्येत पुण्डरीकपलाशवत् ॥
अग्रहस्तः प्रभाहीनो न स जीवति कुञ्जरः ॥ २२ ॥
निर्वाणादागतो नागो जघने लग्नमक्षिकः ॥
संनिषीदति गात्रैश्च च्छिद्रष्टा(च्छा)यो न जीवति ॥ २३ ॥
प्रत्यश्नाति च यो घासमुदकं चातिसार्यते ॥
प्रवाहमानो दुर्गन्धं न स जीवति तादृशः ॥ २४ ॥
(*शालाया यस्य निष्क्रान्ता(त्) बहिश्छायोपलक्ष्यते ॥
विशिरस्का स मातङ्गः सद्य एव विनश्यति ॥ २५ ॥
हरतः सलिलं यस्य घृतगन्धि प्रवाति तत् ॥
बस्तिसयनेपि(?)वासोऽपि त्रिरात्रं नाति वर्तते ॥ २६ ॥
हरितालसवर्णं तु जघनं यस्य हस्तिनः ॥
पीतकश्च करो यस्य न स जीवति तादृशः ) ॥ २७ ॥
समन्तात्परिलीयन्ते कृष्णा यस्य तु मक्षिकाः ॥
शरीरे चातिलीयन्ते न स जीवति तादृशः ॥ २८ ॥
यस्य तद्द्विगुणा छाया वारणस्योपलक्ष्यते ॥
न स जीवति मातङ्गः षड्रात्र इति निश्चितः ॥ २९ ॥
यस्य निर्गच्छतः स्थानाद्व्याधितस्येह दन्तिनः ॥
ब्रूयात्तिष्ठेति पुरतः क्षुतं च स्यात्तदग्रतः ॥ ३० ॥
शकुनो वा भवेत्तादृङ्मृतं तु तमिहाऽऽदिशेत् ॥
कडंगरं तृणं वाऽपि पथान्यत्रागभोजनम् ॥ ३१ ॥
ग्रसित्वा तद्भमत्याशु न स जीवति तादृशः ॥
एकाङ्गं वर्धते यस्य न च स्वादितुमिच्छति ॥ ३२ ॥
स्थाने स्तम्भबली यः स्यान्न स जीवति तादृशः ॥
उत्पद्य च विनिर्गच्छेद्यो गत्वा पुनरेति च ॥ ३३ ॥

---

* धनुश्चिह्नान्तरगतो नास्ति पाठः कपुस्तके ।

कपोलपायुमन्यासु शोफः सोऽपि न जीवति ॥
समाभीको मेहनस्तु यस्य स्र(स्न)पति लोहितः ॥ ३४ ॥
उरश्वासो च सहसा विगत्य प्रतिपद्यते ॥
संगदे च यदा श्वासः स शोफस्तस्य दन्तिनः ॥ ३५ ॥
तदा तेन सशोफेन मासादूर्ध्वं न जीवति ॥
क्षीणशोणितमांसस्य श्रूयेते यस्य हस्तिनः ॥ ३६ ॥
अक्षीण्यो सहसा यस्य मासादूर्ध्वं न जीवति ॥
मन्ययोर्यस्य लक्षेत (लक्ष्येत) श्वयथुर्जलचञ्चलः ॥ ३७ ॥
दौर्मनस्यं च सहसा सोऽष्टरात्रं न जीवति ॥
शब्दं प्रश्न न जानाति ताडितं नावबुध्यते ॥ ७८ ॥
न च वेदयते गन्धं न स जीवति तादृशः ॥
अकस्माद्यो भवेच्छूनः कृशोऽकस्माच्च जायते ॥ ३९ ॥
प्रकृतिश्चातिवर्तेत स सप्ताहं न जीवति ॥
एवमेतान्यरिष्टानि व्याख्यातानि यथायथम् ॥ ४० ॥
नागेषु च मनुष्येषु सदृशं मृगपक्षिषु ॥
प्रतिकर्मसु जानीयादेवं सर्वचिकित्सितम् ॥ ४१ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वे महाप्रवचने चतुर्थ उत्तरस्थानेऽरिष्टज्ञान-कथनं नाम नवमोऽध्यायः ॥ ९ ॥

---

अथ दशमोऽध्यायः ।

---

अथाङ्गाधिपतिः श्रीमाल्लोमपादो महाद्युतिः ॥
पप्रच्छ पालकाप्यं हि गजानां दन्तकल्पनाम् ॥ १ ॥
दुर्जातानि विषाणानि दीर्घाणि विषमाणि तु ॥
कपाटद्वारपरिघप्राकारहरणादिभिः ॥ २ ॥
भज्यन्ते वाऽथ शीर्यन्ते मुञ्चन्ति सकलानि च ॥
रक्षणं तेषु निखिलं भगवन्वक्तुमर्हसि ॥ ३ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
विधिं शृणु महाराज मम सम्यक्प्रभाषतः ॥ ४ ॥

---

१ क. °स्थानेऽरिष्टज्ञानं समाप्तम् । ख. °स्थानेऽरिष्टज्ञानं संपूर्णम् ।

एषां तथाऽनेकपानां कालातिक्रान्तहेतुभिः ॥
अज्ञानाद्वा प्रमादाद्वा न कृता दन्तकल्पना ॥ ५ ॥
दार्ढ्ये महारिता चैव कल्पितेषु प्रशस्यते ॥
न चातिशकलं चापि न च दन्तः प्रहीयते ॥ ६ ॥
आयसाभ्यां च कोशाभ्यां वज्रदन्तो दृढो भवेत् ॥
मुखं च गुप्तं भवति शोभते चापि वारणः ॥ ७ ॥
एतदर्थं गजेन्द्राणां क्रियते दन्तकल्पना ॥
बालवृद्धातुरक्षीणमत्तानां च न कल्पयेत् ॥ ८ ॥
वारणानां विषाणानि यदा सेना समुद्यता ॥
क्षीणे त्वमात्यव्यसनं व्याधिते व्याधितो भयम् ॥ ९ ॥
विवाले च कुमारस्य प्रभिन्नेऽग्निभयं भवेत् ॥
पुरोहितस्य व्यसनं वयोतीते मतङ्गजे ॥ १० ॥
तस्मान्न कारयेत्तेषां दन्तिनां दन्तकल्पनाम् ॥
सप्तमीं समतीतस्य न कुर्याद्दन्तकल्पनाम् ॥ ११ ॥
उद्योगे कल्पिते दन्ते सैन्योद्योगो न सिध्यति ॥
तथा ह्यायसबन्धेन न सिध्येद्दन्तकल्पना ॥ १२ ॥
(*तृणमाश्वयुजे मासे गर्जितं मधुरं हितम् ॥
विमुक्तमम्लभावाच्च जायते प्राणवर्धनम् ॥ १३ ॥
कार्तिके चातिफलदं जातवीर्यरसं तृणम् ॥
मांसशोणितमज्जानां वर्धनं प्राणवर्धनम् ) ॥ १४ ॥
स्निग्धकालश्च भवति यात्राकालस्तथैव च ॥
अत्यर्थं कल्पनायां तु मासद्वयमुदाहृतम् ॥ १५ ॥
अस्मिन्नेव भवेत्काले नवानां परिशोधनम् ॥
क्लृप्तमग्रविषाणी तु भूमौ निपतते यदि ॥ १६ ॥
व्याधिरुत्पद्यते चास्य (†तस्मिन्नुत्पातदर्शने ॥
एतदर्थं महीपाल कराभ्यां परिगृह्यते ॥ १७ ॥
शान्तनार्थं तु नागस्य) प्रतिमानं निवेशयेत् ॥
तस्य प्रकृतिपूजार्थं निक्षिपेदक्षतोदके ॥ १८ ॥

---

* अयं धनुश्चिह्नान्तर्गतः पाठो नैतदध्यायोपयुक्तः, किंतु रसवीर्यविपाकाध्यायान्तर्गतं भवेत् ॥ † धनुश्चिह्नान्तरगतो नास्ति पाठः कपुस्तके ॥

ऐरावणादयो राजन्कीर्तितास्ते दिशां गजा ॥
तेभ्यः प्रसूतिर्नागानां पूजामर्हति पार्थिव ॥ १९ ॥
अशास्त्रविद्यागद्यों न कुर्याद्दन्तकल्पनाम् ॥
हिंसतेषु(?) प्रमाणेषु यदि श्र(स्र)वति शोणितम् ॥ २० ॥
तद्रसेणोपसंगृह्य निक्षिपेदक्षतोदके ॥
प्रमाणादर्ति वृत्तेन न शुभं नाशुभं फलम् ॥ २१ ॥
अथ चेच्छास्त्रकुशलैर्मितैर्मानेन तत्त्वतः ॥
कल्पिते कल्पनास्थाने विधिना पर्युपासिते ॥ २२ ॥
अव्याधिते मासपक्षे यदि श्र(स्र)वति शोणितम् ॥
तदुत्पातादि विज्ञेयं पार्थिवस्य भयं भवेत् ॥ २३ ॥
तस्मिन्काले विनस्य(श्य)न्ति ये तत्र प्रवरा नराः ॥
नायका मन्त्रिमुख्याश्च पुरं राज्यं च पीड्यते ॥ २४ ॥
गृहीत्वा तस्य तद्रक्तं कृत्वा पञ्चाङ्गुलं मुखे ॥
नीरञ्जनविधिं[1] नागं रिपुराज्यं समुत्सृजेत् ॥ २५ ॥
एवं कृते कृताः सर्वा भवेत्तस्य प्रतिक्रियाः ॥
प्रमाणानि च वक्ष्यामि निरपायानि दन्तिनाम् ॥ २६ ॥
गिरिमिश्रनदीजानां सम्यक्शास्त्रविनिश्चयात् ॥
कुर्याच्यष्टे दन्तिनां तु चतुरष्टे तु कल्पनाम् ॥ २७ ॥
उभयोरन्तरे कार्या मिश्ररूपस्य भूमिप ॥
कृताऽन्यथा न नागस्य वृद्धिर्भवति दन्तयोः ॥ २८ ॥
अष्टार्धं मिश्ररूपस्य ततोऽर्धे गिरिचारिणः ॥
सप्तत्रिंशत्त्रयस्त्रिंशत्त्रिंशच्चैव यथाक्रमम् ॥ २९ ॥
नदीमिश्राद्रिचाराणामङ्गुलानि करीरिणाम् ॥
अतः परममीषां हि वक्ष्यन्ते दन्तजातयः ॥ ३० ॥
स्निग्धो सरुधिरो दन्तो रूक्षो रुधिरवर्जितो ॥
मधुसंकाशवर्णौ च नैव रूक्षो न चेतरो ॥ ३१ ॥
न चातिमधुसंकाशौ नैव रूक्षौ न चेतरौ ॥
पीतावपि हि विज्ञेयो दन्तजातिपरीक्षणे ॥ ३२ ॥
भस्मपाण्डुरवर्णौ तु नव्यास्थिसदृशावपि ॥
तौ रूक्षाविति विज्ञेयो पीतो स्निग्धो मधुप्रभो ॥ ३३ ॥

१ क. निरिञ्जनविधिं । ख. नरिञ्जनविधिं ।

तस्माद्विकृष्टां स्निग्धेषु विविक्षां गजदन्तयोः ॥
भिषजा मधुदन्तस्य कारयेद्दन्तकल्पनाम् ॥ ३४ ॥
दन्तजातिपरीक्षा च कल्पना समुदाहृता ॥
उत्सेधायाममायाता यस्य हस्तसमुच्चयाः ॥ ३५ ॥
तदष्टभागतो देयं दन्तयोरुभयोरपि ॥
मिश्रस्य नवभागश्च दशमो गिरिचारिणः ॥ ३६ ॥
मानसूत्रे स्थिता ह्येषा कल्पना समुदाहृता ॥
विद्ध्यादक्षिकूटाच्च नेत्रयोर्वा यदन्तरम् ॥ ३७ ॥
नेत्राभ्यां दन्तवेष्टौ च तयोर्यद्वा मुखान्तरम् ॥
एतत्प्रमाणं संगृह्य यदि स्यात्सर्वतः समम् ॥ ३८ ॥
प्रसार्य दन्ततः सूत्रं कल्पयेदधिकं ततः ॥
मुखमानविभक्तायां कल्पना समुदाहृता ॥ ३९ ॥
उत्सेधे सप्तकोऽरत्निरायामे नवको भवेत् ॥
दशकं परिणाहे तु कृत्वाऽरत्निसमुच्चयम् ॥ ४० ॥
एतदङ्गुलपर्वाग्रं मित्वा सूत्रेण तत्त्वतः ॥
सूत्रमष्टगुणं कृत्वा कल्पयेदधिकं ततः ॥ ४१ ॥
एषाऽष्टभागनिर्दिष्टा कल्पना समुदाहृता ॥
सप्ताङ्गुलं पार्वतेषु वारणेषु प्रदक्षिणम् ॥ ४२ ॥
ग्रामानीतेषु च पुनः कल्पनीया षडङ्गुलम् ॥
विषाणमूलतो मित्वा कल्पयेदधिकं ततः ॥ ४३ ॥
कर्णप्रमाणिका ह्येषा कल्पना समुदाहृता ॥
ह्रासयेदङ्गुलं तस्मान्मिश्ररूपस्य दन्तिनः ॥ ४४ ॥
प्रसार्य दन्ततः सूत्रं कल्पयेदधिकं ततः ॥
द्विःपरिक्षिपिका ह्येषा कल्पना समुदाहृता ॥ ४५ ॥
समप्रमाणो यो नागः समदन्तश्च यो भवेत् ॥
द्विःपरिक्षे विकारस्य कर्तव्या दन्तकल्पना ॥ ४६ ॥
इत्येतेषु प्रमाणेषु निरपायानि दन्तिनाम् ॥
त्र्यङ्गुलं द्व्यङ्गुलं वाऽपि च्छेदतः परिवर्जयेत् ॥ ४७ ॥
आरोग्याय च नागानां विजयाय महीपते ॥
या च पुष्टिकरी राज्ञः सा कार्या दन्तकल्पना ॥ ४८ ॥

---

१ क. विवक्षां । २ क. °श्रश्च नवभागस्य द° । ३ ख. घ. पार्वतीषु ।

दन्तिजातिपरीक्षा च मानसूत्रे स्थिता च या ॥
मुखमानविभक्ता च ¹तथा चैवाष्टभागिका ॥ ४९ ॥
वर्णप्रमाणिका चैव ²शैसिरिषिपिकावदः (?) ॥ ५० ॥
एवैताः कल्पना राजञ्शास्त्रेऽस्मिन्समुदाहृताः ॥
उभयोर्दन्तयोर्वाऽपि मानं यत्राष्टभागिकम् ॥ ५१ ॥
³सांष्टव (कं) चं भवेद्येन तेन मानेन कल्पयेत् ॥
येन येन तु मानेन किंचित्कार्येऽधिको भवेत् ॥ ५२ ॥
नागस्य दक्षिणो दन्तः कुशलैर्दन्तकल्पकैः ॥
रक्षणार्थं च दन्तानां शोभार्थं चैव हस्तिनाम् ॥ ५३ ॥
युद्धार्थं चैव संग्रामे प्रतिमोकांश्च कारयेत् ॥
दन्तांश्चापि महीपाल तुल्यानां वायसाननैः ॥ ५४ ॥
तस्मात्कङ्कमुखं चापि वायसानां मुखानपि ॥
मण्डलाग्रमुखान्वाऽपि दन्ताग्रकृतिकास्तथा ॥ ५५ ॥
ईषभाराचशक्तीनां नानामुखविभक्तयः ॥
तन्मुखाकृतयः कार्याः परसैन्यविमर्दने ॥ ५६ ॥
कार्यौ द्वितोलिकौ कोशावुत्तमस्य तु दन्तिनः ॥
अध्यर्धमानकौ वाऽपि कर्तव्यौ मध्यमस्य तु ॥ ५७ ॥
तदर्धमानौ कर्तव्यौ जघन्यस्य तु दन्तिनः ॥
प्रमृष्टतैलधौतस्य गुणयुक्तास्तथैव च ॥ ५८ ॥
कारयेत्प्रतिमोकांश्च कुशलैः शिल्पिभिस्तथा ॥
द्वात्रिंशदङ्गुलायामौ कर्तव्यावुत्तमस्य च ॥ ५९ ॥
अष्टविंशाङ्गुलौ मध्यौ मध्यमास्यावरान्तिकौ ॥
परिणाहो नृपस्तेषां विषाणानां समो भवेत् ॥ ६० ॥
तथा मकरदंष्ट्रांश्च सिंहदंष्ट्रांश्च कारयेत् ॥
सौवर्णान्राजतांश्चापि तथा रीतिकया कृतान् ॥ ६१
कषायाङ्गारशुद्धेन सुशुष्केणाथ कारयेत् ॥
प्रवालमणिमुक्ताभिर्वज्रवैडूर्यभूषितान् ॥ ६२ ॥
तथैवाप्यारकूटेन शक्त्याऽत्र परिकारयेत् ॥
⁴वेयःसंधिनिरेलज्ञ(?)रनुपूर्वं समाहितान् ॥ ६३ ॥

---

१ क. तथा चाष्टविभागिका । २ क. कुक्षिराक्षेपकाचयः । ३ क. साष्टया
४ ख. ग. वयसैन्यसंधिनिरेलज्जै ।

यथार्हं गुणयुक्तेषु कारयेद्योगहस्तिषु ॥
प्रतिमोका विधातव्या यथाशास्त्रप्रमाणतः ॥ ६४ ॥
मधूच्छिष्टं च लाक्षां च सह सर्जरसेन च ॥
तेन क्काथेन नागेभ्यः प्रतिमोकांश्च बन्धयेत् ॥
मैत्रे मुहूर्ते कर्तव्यः प्रशस्तेऽहनि पूजितैः ॥ ६५ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचने चतुर्थे उत्तरस्थाने
दशमो दन्तकल्पनाध्यायः ॥ १० ॥

---

अथैकादशोऽध्यायः ।

---

अथ रसवीर्यविपाकाध्यायः ।

—:():—

रोमपादो महातेजाश्चम्पाया ईश्वरः स्मृतः ॥
पप्रच्छ स महात्मानं पालकाप्यं तपोधनम् ॥ १ ॥
रसाः कति समाख्याताः किं वीर्यं किं गुणो भवेत् ॥
विपाकश्च महाभाग एतदिच्छामि वेदितुम् ॥ २ ॥
के च सौम्या रसा ज्ञेयाः के चाग्नेयाः प्रकीर्तिताः ॥
के च वा सेव्यमाना(श्च) शमयन्ति रसा गुणैः ॥ ३ ॥
के पित्तं शमयेयुश्च श्लेष्माणं शमयन्ति के ॥
उदीरयन्ति के वातं श्लेष्माणं पित्तमेव च ॥ ४ ॥
अरोगो बलवांश्चापि रसैः कैर्वारणो भवेत् ॥
स्थिरत्वं जायते केन क्षारत्वं केन जायते ॥ ५ ॥
एतन्मे पृच्छतः सर्वं भगवन्वक्तुमर्हसि ॥
तस्य तद्वचनं श्रुत्वा पालकाप्यस्ततोऽब्रवीत् ॥ ६ ॥
शृणु मे सर्वमेवैतद्यथा प्रोक्तं नराधिप ॥
निश्चयादेक एवाऽऽह गौतमो(मः) ऋषिसत्तमः ॥ ७ ॥
यस्मादम्बुमयं सर्वं जगत्स्थावरजङ्गमम् ॥
*........................................................ ॥ ८ ॥
अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
इक्षुदानं च नागानां श्रोतुमिच्छामि तत्त्वतः ॥ १ ॥

---

* रसवीर्यविपाकाध्याये त्रुटितं प्रतिभाति ।

एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
(*उत्तमे वारणे वद्याद्विक्षुपञ्चशतान(न्य)पि ॥ २ ॥
शतानि त्रीण्यथार्धं च दापयेन्मध्यमे गजे ॥
द्वे शते च तदर्धं च जघन्याय प्रदापयेत् ) ॥ ३ ॥
ये गुणा इक्षुदानस्य ते† तान्वक्ष्यामि तत्त्वतः ॥
आरण्यानां तु नागानामिक्षुदानं प्रशस्यते ॥ ४ ॥
सर्वथैव च देयं च कालं देशं बलं प्रति ॥
दीर्घकालेन सिध्यन्ति प्रकृत्या शङ्किताश्च ये ॥ ५ ॥
ये चैव पित्तला नागास्तथैवोष्मक्षताश्च ये ॥
इक्षुदानेन सिध्यन्ति सर्पिषेक्षुरसेन वा ॥ ६ ॥
पुरोपा(धा)नानुबन्धेन अत्यर्थायाम(स)सेवया ॥
कुप्यन्ति धातवः सर्वे संनिरोधेन दन्तिनाम् ॥ ७ ॥
कायस्तम्भे शिरस्तम्भे मन्यास्तम्भे मदक्षये ॥
ग्रासे प्रतिहते चैव शिरोरोगे च पैत्तिकाः ॥ ८ ॥
वैगुण्यकरणे चैव श्रुत्वाहतभयेऽपि च ॥
शोकाऽभिभूते सततं वधबन्धनपीडयोः ॥ ९ ॥
श्रान्ते प्रस्विन्नसर्वाङ्गे स्रस्तकाये सुमर्दने ॥
इक्षुदानं प्रशंसन्ति सौमनस्यहिताय च ॥ १० ॥
मदक्षीणेषु नागेषु हिताः पथ्यास्तथैव च ॥
मेदसो वर्धनाश्चैव पित्तरक्तविनाशनाः ॥ ११ ॥
शुक्रवृद्धिकराश्चैव क्षीणधातुविवर्धनाः ॥
बृंहणा जङ्गलाः स्निग्धाः पित्तघ्नाः कफवर्धनाः ॥ १२ ॥
तुष्टिपुष्टिकराश्चैव च्छवीरोमप्रसादनाः ॥
मधुराश्चापि(वि)दाहाश्च श्रमदोषहराः स्मृताः ॥ १३ ॥
तस्मिन्काले प्रदातव्यमिक्षुं कुर्याद(?) हस्तिने ॥
ग्रीष्मकाले तु नागानां त्र्यहं कण्ठस्य मोक्षणे ॥ १४ ॥
वर्षासु सप्तरात्रेण हेमन्ते दशमेऽहनि ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥ १५ ॥

---

* धनुश्चिह्नान्तरगतो भ्रष्टः पाठः कपुस्तकात् । † 'तांस्ते' इत्युचितम् ।

---

१ क. °पीडिते ॥ १७ ॥ २ क. अश्रदोषहराः ।

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचन उत्तरस्थान इक्षुदानविधिकथनं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

## अथ त्रयोदशोऽध्यायः ।

---

अत ऊर्ध्वं नस्यकर्मविधिं व्याख्यास्यामः ।

अथ खलु प्रवरमध्यमावराणां नागानां सुसरोवृष्टिसिक्तसलिलभूमिभागामगरुधूपितां पुण्याहघोषेण निष्कल्मषीकृतां मनोज्ञां शालां भिषग्यथोपदिष्टमर्गलायन्त्रमुपकल्प्य सुमतिविहितपरिचारकस्य जघननिषण्णस्योर्ध्वग्रीवस्योर्ध्वतो हस्तं कृत्वाऽवसेचयेदशिथिलमनतिबद्धमतिपीडितमवलीकमूर्ध्वं धारयित्वाऽर्गलायन्त्रे विषाणयोर्नियमनं कृत्वा ततः सुप्रतिष्ठितकायं वारणं स्नापयित्वा भिषक्कर्मशालामधिरुह्य हस्तिहस्तश्रो(स्रो)तसि दक्षिणं पूर्वमभिषिच्य वस्त्रमयं मुकुकं शेषतः प्रमाणं सूत्रावनद्धं निर्गमयन्तं निर्वाहणार्थं पयसो[1] ...... ...... निधाय पाणिना च पीडयेदेकेनोद्वासयेत्, एकेन पादातिकायां क्षामणक्रियां कुर्यात्, दत्तमात्रे चास्य पयसि मुखप्रदेशं तालुभागं जिह्वां च गुडदिग्धेन पाणिना संस्पृशेत् । केवलांश्चास्य पाणितलेनोपहरेत् । इक्षुविषमृणालशृङ्गाटककसेरुकाणामन्यतमं यवसोपगूढं दद्यात् । ग्रहकारणे वाऽस्य निग्रहं कुर्यात् । ततः क्षीरं शर्करामधुरं कृत्वा हस्त्वोरसोर्निदध्यात् । न चास्य कवलान्प्रसक्तान्दद्यात् । ऊर्ध्वग्रीवस्याधिकबलत्वं संपद्यते । तस्मादप्रसिक्तं नागं कवलैः संप्रयोजयेत् ।

एवं हि कवलान्भक्षयतः क्षीरमन्तः प्रपद्यते । यदा त्वेवं क्षमितः क्षीरमविसंवसु(?)मनुहरति, तदाऽस्य[2] यथाक्रमेण विहितं नस्यं शुद्धिमुपजनयति । ततः पूर्वमिव[3] नस्तः प्रधमनं पिप्पलीमरिचनागरपृथ्वीकाविडङ्गश्वेतसर्षपसैन्धवतगराणां द्रोणं पञ्चपलिकं प्रमाणमेकैकस्यौषधस्य सूक्ष्मचूर्णं प्रधमनं दद्यात् । पञ्चपलिकमात्रं प्रधमनं प्रचूर्णं धमनवर्गं तदेव सुरसफणिज्जकपत्ररसं सुखोदकयुक्तमल्पस्नेहं विरेचनं दद्यात् । तदेव पूर्वोक्तं पिप्पल्याद्यष्टद्रव्यं प्रधमनवर्गम् । अथवा पिप्पलीमरिचशृङ्गवेरचन्दनागुरुसर्जरसश्रीवेष्टकगुग्गुल्वामलकपरिपेलवशैलेयकजटामांसीकालानुसार्याणां पलप्रमाणं द्रोणं कृत्वा यथोक्तेन धूपविधानेन हस्तं वासयित्वा धूपं दद्यात् । यदा कटश्रोतयोः षट्कलमष्टकलं वा प्रसक्तमेतेन प्रमाणेन कर्णयोर्धूपमसक्तमुपगच्छति तद्रूपमात्रां

---

१ क. °सो मध्ये नि° । २ क. ख. ततोऽस्य । ३ क. पूर्वमेव ।

कलाप्रमाणं निमेषवृषनं दद्यात् । यदा ज्ञानात्प्रमादाद्वा भिषगप्रमाणेन चिर-काल धूपयति, तदाऽस्य मुखशोषो भवति । न त्वस्पर्थ पवसकुवलं च पल्लवं च शुष्कोष्ठकण्ठहृदयतालूनामेतेषामतिधूपनाच्छोषितबलानां पयसोपसेचनं पुनः पुनः प्रसादनमाहुराचार्याः । नस्यकर्मप्रधानमेतेनैव विधिना विरिक्तार्धका-यस्याभुक्तवतः पूर्वाह्णे मृदुस्नेहपाकमुपकल्पयेत् ॥

यथाऽपाधिप्रमाणेनौषधद्रव्यैः क्षीरविपाकैः साधयित्वा द्वादशाङ्गुलायतेन षोडशाङ्गुलपरिणाहेन कोलस्रोतःप्रमाणेन चिरकालं बस्तिना पीडयेत् । तत्र स्नेहप्रमाणं द्रोणे प्रस्थप्रमाणं दद्यात् ।

षडङ्गुलानि विस्तारादुत्सेधाच्चतुरङ्गुलः ॥
प्रस्थः सर्वप्रमाणेषु स्वकैरङ्गुलपर्वभिः ॥

एतेनैव प्रमाणेन स्नेहविधिप्रमाणं विज्ञाय तस्यानुषेकं दद्यात्, क्षीरदाने यथापूर्वमभिहितम् । *हस्तक्षान्तिमस्य यथोक्तां सेवेत । एतेनैव विधानेन मासार्धमर्धमासं वा यावद्वा साधु मन्येत, तावद्देशकालबलनिश्चयं यथार्थतो विज्ञाय नस्यकर्म कुर्यात् । यथाकृतकर्माणं वारणं पयसा सर्पिषा वा यथानु-भागप्रमाणं चतुर्भागमेव चारयित्वा भोजनं दद्यात् । भोजयित्वा मृदुवस्त्रेण प्रच्छादयित्वा सुखोदकानुपानं दद्यात् । अनुपानप्रयोजनं त्वन्नपाने द्रवीकृतोऽ-स्याऽऽहारोऽन्तर्भूतोभिन्नसंघातः सम्यक्पाकमुपगच्छति ॥

तत्र श्लोकौ—

या स्नेहमात्रा तु यथावदुक्ता गजप्रमाणे विहिता पुरस्तात् ॥
सा कोष्ठमागम्य रसत्वमेत्य बलं तु नागे जनयत्यभीक्ष्णम् ॥ १ ॥
अग्निं बलं वाऽपि हि वर्धयित्वा कण्ठोरसोः पार्श्वकटित्रिकाणाम् ॥
संघातवर्णौ मनसः प्रसादं दधाति नस्यं द्विरदेषु दत्तम् ॥ २ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचन उत्तरस्थाने नस्य-दानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

अथ चतुर्दशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
अञ्जनानां क्रियायोगो भगवन्वक्तुमर्हसि ॥ १ ॥

---

* 'हस्तिशान्ति' इति भवेत् ।

ततः प्रोवाच भगवान्पालकाप्यो महामुनिः ॥
शृणु मे निखिलं राजन्नञ्जनानामिमं विधिम् ॥ २ ॥
नखदन्तास्थिरोमाणि केशा वालास्तथैव च ॥
प्राणिनां खुरशृङ्गाणि लेखनायोपयोजयेत् ॥ ३ ॥
रोध्रादिद्रुमसाराश्च पाषाणा ये च केचन ॥
शङ्खदंष्ट्रा नखाः शुक्त्यो मणिर्मुक्ताश्च सर्वशः ॥ ४ ॥
वज्रप्रवाललवणं फलसाराश्च ये द्रुमाः ॥
मत्स्यकूर्मकपालानि यच्च किंचन संहतम् ॥ ५ ॥
तत्सर्वं संस्कृतं द्रव्यं तथाऽभ्रपटलान्यपि ॥
लेखनायोपयुज्यन्ते प्रधानं तत्र वक्ष्यते ॥ ६ ॥
सुवर्णं राजतं ताम्रं सीसं कालायसं त्रपुः ॥
मणिमुक्ताप्रवालाश्च गजमुक्ताश्च शृङ्गजाः ॥ ७ ॥
ससारगल्लस्फटिका वैडूर्यरुचकावपि ॥
अर्को विमलकश्चैव गोमेदाञ्जलपूलिकाः ॥ ८ ॥
सौगन्धिको लोहिताक्षस्तथा क्षीरपकश्च यः ॥
तथा हस्तिवराहाणां व्याघ्रसिंहनखावपि ॥ ९ ॥
पाठीनरोहितास्थीनि कपालं कमठस्य च ॥
शशमूर्धकपालानि गोपार्श्वौ महिषस्य च ॥ १० ॥
फलसारान्हरीतक्या बदर्याः किंशुकस्य वा ॥
आमलक्याः सखर्जूर्या द्रुमसाराः सचन्दनाः ॥ ११ ॥
समुद्रफेनः शङ्खश्च गर्दभस्य च पार्श्वकाः ॥
कुक्कुटाण्डकपालानि हंसस्य बर्हिणोरपि (?) ॥ १२ ॥
रजस्ताम्रायसं चैव निर्यासः खदिरस्य च ॥
पलाशमेषशृङ्ग्योष(श्च) निम्बस्य कुटजस्य च ॥ १३ ॥
पेषणार्थं प्रसन्नां वा मातुलुङ्गरसोऽपि वा ॥
एतद्रसाञ्जनं नाम श्रेष्ठं काचापकर्षणम् ॥ १४ ॥
पिप्पलीनां मषीं कृत्वा वस्त्रेण परिगालिताम् ॥
केशाः कूर्मपलाशानि सैन्धवं लशुनाञ्जनम् ॥ १५ ॥
एतानि समभागानि पीषयेच्छ्लक्ष्णचूर्णिताम् ॥
एतद्रसाञ्जनं नाम श्रेष्ठं काचापकर्षणम् ॥ १६ ॥

---

१ क. °मेदो जल° । २ क. °नि पेष° ।

(*कुक्कुटाण्डकपालानि शङ्खः काचोऽथ(च) चन्दनम् ॥
पालकाप्योऽङ्गराजाय प्रोवाच लेखनाञ्जनम् ॥ १७ ॥
अर्कस्फटिकवैडूर्यहरितालं मनःशिला ॥ )
कुक्कुटाण्डकपालानि हंसबर्हिणयोरपि ॥ १८ ॥
चन्दनं हरितालं च मुस्ता कालानुसारिवा ॥
मरिचानि च शुक्लानि लेखनीयं तदञ्जनम् ॥ १९ ॥
अनाविलं सुप्रसन्नं शुद्धं स्फटिकमानयेत् ॥
सुवर्णेनोपसृष्टं तु सौवर्णे राजते स्थितम् ॥ २० ॥
कुष्ठं हरिद्रा नलदं पिप्पल्यो मरिचानि च ॥
अञ्जयेद्द्विपमेतेन परमं हि तदौषधम् ॥ २१ ॥
वसन्ते यवशूकानि परिशुष्काण्युपाहरेत् ॥
तान्युषित्वा त्वजाक्षीरं रात्रीर्दश च पञ्च वा ॥ २२ ॥
तत उद्धृत्य शुष्काणि चूर्णं दृषदि कारयेत् ॥
कुक्कुटाण्डकपालैश्च हंसशङ्खमुखस्य च ॥ २३ ॥
अञ्जयेन्मधुना मिश्रं काचाकर्षणमञ्जनम् ॥
अमृतासंज्ञां भद्रां च नाकुली गन्धनाकुली ॥ २४ ॥
एतत्प्रसन्नया पिष्टं लेखनं श्रेष्ठमञ्जनम् ॥
शुण्ठ्या वा दधिमण्डश्च पिप्पल्यः सैन्धवस्तथा ॥ २५ ॥
किञ्जल्कं फाणितं किण्वं तथैव यवसक्तवः ॥
तण्डुलीपकमूलं च समभागं च कारयेत् ॥ २६ ॥
तैर्लिम्पेच्छ्रोत्रपाषाणं स्वेदयेच्चापि वेष्टितः ॥
अजाकरीषसुस्विन्नमजामूत्रेण पेषयेत् ॥ २७ ॥
एतल्लोहितकं सम्यगञ्जनं लेखनं भवेत् ॥
वसन्ते चैव पुष्पाणि सर्वाण्येव समाहरेत् ॥ २८ ॥
पेषयेत्तानि चैकत्र पिप्पलीलवणेन वा ॥
दृष्टः प्रसादनार्थाय एतच्छ्रेष्ठं हि भेषजम् ॥ २९ ॥
किंशुकस्य च पुष्पाणि मधुरं शर्करान्वितम् ॥
एतत्क्षौद्रेण संयुक्तं शीतलं परिषेचनम् ॥ ३० ॥

---

* चतुश्चिह्नान्तरगतः पाठो नास्ति कपुस्तके ॥

त्रिफला सर्वरोगेषु आचार्यैरभिपूजिता ॥
मधुना सह युक्ता च शीतला परिषेचने ॥ ३१ ॥
त्रिफलापालयो भागास्त्रयस्त्रिकटुकस्य च ॥
सैन्धवाञ्जनलोहानामेकैको भाग इष्यते ॥ ३२ ॥
अजाक्षीरेण संपिष्टा कण्डूतिमिरनाशिनी ॥
त्रिफला च समैर्भागैः सैन्धवं च समं भवेत् ॥ ३३ ॥
मधुना च समायुक्तं कण्डूनाशनमञ्जनम् ॥
आटरूषकपत्राणि तथा मरुबकस्य च ॥ ३४ ॥
उलूखले क्षोदयित्वा निस्राव्य स्वरसं ततः ॥
तेन शीतकषायेण परिषेकोऽक्षिरोगिणाम् ॥ ३५ ॥
कर्तव्यः सिद्धिकामेन वारणानां सुखावहः ॥
निस्तुषामाविकलकं गोमूत्रे परिषेचयेत् ॥ ३६ ॥
अर्धमासस्थितां शुष्कां श्लक्ष्णां दृषदि पेषयेत् ॥
उदुम्बरसमुद्गे तु संसृजेन्मधुसर्पिषः ॥ ३७ ॥
एतदञ्जनमिच्छन्ति दन्तिनां शुक्रनाशनम् ॥
चतुर्णां क्षीरवृक्षाणां त्वचस्तु समभागिकाः ॥ ३८ ॥
नवे कुम्भे सुविहिता त्रिरात्रमधिवासयेत् ॥
तत्परिश्रा(स्रा)व्य वस्त्रेण परिषेको विधीयते ॥ ३९ ॥
शिरोलेपश्च कर्तव्यो नेत्रपाकविनाशनः ॥
क्षीरवृक्षप्रवालांश्च निचुलं रोध्रमेव च ॥ ४० ॥
मांसी च समभागा तु क्षोदयित्वा विचक्षणः ॥
जलक्षीरसमायुक्तः परिषेको विधीयते ॥ ४१ ॥
नेत्ररोगहरो राजन्दन्तिनामिह पूजितः ॥
मृगवल्लीफलस्यापि कोशं कृत्वा विचक्षणः ॥ ४२ ॥
पूरयेन्नवनीतेन सुसुबन्धेन संपुटम् ॥
तत्र भोर्जपुटं दत्त्वा राजंस्तत्र समावृतः ॥ ४३ ॥
तोयपूर्णेन कुम्भेन स्थापयेत्तु विचक्षणः ॥
त्रिरात्रमुखि(षि)तं तस्मान्नेत्राभ्यङ्गो विधीयते ॥ ४४ ॥
प्रवालकीं सपटलां नालीं तु विनिहन्ति तु ॥
पिप्पल्यो मरिचं चैव सैन्धवं समनःशिला(ल)म् ॥ ४५ ॥

---

१ क. स्यात् । २ ख. घ. ससुबन्धेन ।

नक्रव्याघ्रनखं पत्रं कासीसं रोचना मधु ॥
मणिप्रवालमुक्ता च शृङ्गं तु शंबरस्य तु ॥ ४६ ॥
वैडूर्यं शङ्खनाभिश्च लवणं रोमकं तथा ॥
एतानि समभागानि कारयेत्तु विचक्षणः ॥ ४७ ॥
वेसवारे समुद्रे तु सर्वमेतन्निधापयेत् ॥
अञ्जनं दशरात्राणि दन्तिनां चाक्षिरोगनुत् ॥ ४८ ॥
त्रिफलामधुसंयुक्तमञ्जनं सर्वरोगिणाम् ॥
सैंधवं त्रिफला चैव पिप्पली मरिचानि च ॥ ४९ ॥
समुद्रफेनं शङ्खं च शर्करां समनःशिलाम् ॥
अञ्जनानि समांशानि यष्टीमधुकमेव च ॥ ५० ॥
समानीय महाराज सलिलेन प्रपीषयेत् ॥
ततस्तु गुलिकां कृत्वा वारणं सम्यगञ्जयेत् ॥ ५१ ॥
सर्वांश्च वातजान्रोगान्कफपित्तकृतांस्तथा ॥
तिमिरं पटलं काचं प्रावरं च निहन्त्यपि ॥ ५२ ॥
विजया नाम गुलिका व्याख्याता नेत्ररोगिणाम् ॥
अञ्जितस्यानया स्थानं निवातं शीतलं हितम् ॥ ५३ ॥
निष्क्वाथं परिषेकार्थमिममस्य तु कारयेत् ॥
आटरूषकपत्राढ्यां नेत्रयोः परिषेचनम् ॥ ५४ ॥
इदमञ्जनं नागानां सर्वनेत्ररोगहरम् ॥

इति श्रीविजया गुटिका ।

ह्रीवेरकमुशीरं च कुष्ठमेला तथैव च ॥
रोध्रं प्रियङ्गुमञ्जिष्ठा हरितालं मनःशिला ॥ ५५ ॥
एतां वर्तिं भिषक्कुर्याच्छायायां परिशोषिताम् ॥
सलिलेनोपसंघृष्य चक्षुषी नित्यमञ्जयेत् ॥ ५६ ॥
एष(षा)पित्तं च दाहं च रक्तं च शमयत्यपि ॥



प्रपौण्डरीकं मधुकं यवाश्चाऽऽमलकानि च ॥ ५७ ॥
सुमनापल्लवान्येव समभागानि कारयेत् ॥
तथा दारुहरिद्रां च तत्सर्वं परिणामयेत् ॥ ५८ ॥

१ ख. घ. केसवरे ।

नेत्राणां श्रा(स्रा)विणामेषा श्रेष्ठा प्रोक्ता रसक्रिया ॥
अक्षिपाकं च कण्डूं च क्लेदं चैव प्रणाशयेत् ॥ ५९ ॥
यावदेव कषायं तु तावद्दद्याद्रसाञ्जनम् ॥
तच्छनैः साधयेद्वैद्यः सिद्धमेवावतारयेत् ॥ ६० ॥
शृतं ते(तु) नेत्रसंयुक्तं ताम्रपात्रे निधापयेत् ॥
प्रपौण्डरीकाद्या रसक्रिया कण्डूक्लेददाहपाकहरा ॥ ६१ ॥

—:(०):—

पटोलं पिचुमन्दं च सुरसाऽऽमलकीति वा ॥
हरिद्रा त्रिफला रोध्रं सुमनःपल्लवानि च ॥ ६२ ॥
करञ्जस्य च बीजानि पत्राणि सुरसस्य च ॥
मधुकं च गुडूची च तोयेन सह साधयेत् ॥ ६३ ॥
तत्कषायं परिश्रा(स्रा)व्य पुनरेतदधिश्रयेत् ॥
रसा(?)क्रियां सुनिर्वृत्तामथ तामवतारयेत् ॥ ६४ ॥
अञ्जयेदेतया नेत्रे गजस्य मधुमिश्रया ॥
कण्डूं व्यपनयेदेषा व्रणं द्रगुपरोहयेत् ॥ ६५ ॥
अर्कपुष्पाणि कासीसं तुत्थं लोहाञ्जनं तथा ॥
रसश्चैवाथ ताम्रस्य दध्नाऽऽम्लेन प्रपीषयेत् ॥ ६६ ॥
एतत्क्लेदे च पाके च परिश्रा(स्रा)वेऽथ शस्यते ॥
आमलक्याः शिरीषस्य शल्लकीकिरवालयोः ॥ ६७ ॥
पात्राण्याहृत्य सर्वेषां कल्कमेकत्र कारयेत् ॥
तं कल्कं कारयित्वा तु च्छायायां परिशोषयेत् ॥ ६८ ॥
मनःशिलोपसंहृत्य शङ्खनाभिं तथैव च ॥
एतया दन्तिनां नित्यं तिमिरानञ्जयेद्भिषक् ॥ ६९ ॥
गुडश्च मधुकं चैव हरिद्रा सैन्धवं तथा ॥
वर्तिः क्षौद्रेण संयुक्ता नक्तान्धस्याञ्जने हिता ॥ ७० ॥
हरीतकीश्च संहृत्य शृङ्गवेरमयो रजः ॥
एतत्तु नाञ्जनं श्रेष्ठं तिमिरस्य प्रसादनम् ॥ ७१ ॥
उत्पलं मधुकं चैव गैरिकं रोध्रमञ्जनम् ॥
समभागानि संहृत्य पिष्ट्वा धात्रीरसेन तु ॥ ७२ ॥

---

१. ख. घ. अक्षपाकं ।

शिला तेन प्रक्षेप्या तं कल्कं साधयेत्ततः ॥
स्रोताञ्जनसमं कृत्वा सूक्ष्मचूर्णं तु कारयेत् ॥ ७३ ॥
एतच्चूर्णाञ्जनं श्रेष्ठं शीतं पित्तप्रसादनम् ॥
पैत्तिकेष्वपि रोगेषु रक्तजेषु प्रशस्यते ॥ ७४ ॥
अरुणं वातिकं विद्यान्नीलं भवति पैत्तिकम् ॥
श्वेतं तु कफजं विद्याद्बहुवर्णं कदम्बजम् ॥ ७५ ॥
जलबुद्बुदसंकाशं शुक्रमित्युपधारयेत् ॥
धातुप्रकोपजं यत्तु पटलं चैव कीर्तितम् ॥ ७६ ॥
प्रतिच्छन्नं तु यन्मध्ये ह्रस्वं भवति मण्डलम् ॥
चतुष्प्रकारं तच्चापि शुक्रमित्युपधारयेत् ॥ ७७ ॥
शिरोजालावृतं यच्च दीयते नयने तु यत् ॥
तदर्ममिति जानीयादसाध्यमिति वा पुनः ॥ ७८ ॥
इत्येते मारुतात्पित्ताच्छ्लेष्मणः शोणितात्तथा ॥
दन्तिनां नेत्रजा रोगा समुद्दिष्टा यथाक्रमम् ॥ ७९ ॥
एतेषां लक्षणं बुद्ध्वा ऽपक्वाऽपक्वेन हेतुना ॥
निदानेन यथोक्तेन ततः कुर्याच्चिकित्सितम् ॥ ८० ॥
वातघ्नीं वातिके कुर्यात्पित्तघ्नीं पैत्तिके क्रिया(म्) ॥
अवशे(से)कं यथाशास्त्रं घृतपानं तथैव च ॥ ८१ ॥
विधिवच्च परीषेकं तथैवाश्च्योतनानि च ॥
शिरसश्चापि सेकाय प्रतिपन्नानि यानि च ॥ ८२ ॥
रसक्रिया यथोक्ता च चूर्णाञ्जनानि यानि च ॥
सर्वाणि तानि मेधावी दृष्ट्वा सम्यगुपाचरेत् ॥ ८३ ॥
व्याधिं देशं च कालं च गजस्य च बलाबलम् ॥
इमे तु खलु रोगेषु सर्वेष्वेव प्रकीर्तिताः ॥ ८४ ॥
लेख्या साधारणा योग्या साध्यानामनुपूर्वशः ॥
अभयां चैव वच्यां च कासीसमथ पिप्पलीम् ॥ ८५ ॥
सैन्धवं बृहतीमूलं कल्कमेकत्र कारयेत् ॥
वारिणाऽच्छेन संसृज्य कृतं तं साधयेच्छनैः ॥ ८६ ॥
घनीभूतं यदा विद्यात्तदेनमवतारयेत् ॥
निधाय भाजने हृद्ये नेत्रे नागस्य वाऽञ्जयेत् ॥ ८७ ॥

---

१ क. अवशेषं । २ क. चूर्णान्यञ्जनकानि ।

पटलं शुक्रकाचौ च तथैवार्माणि यानि च ॥
क्षौद्रेण सह संयुक्तं हन्ति सर्वानुपद्रवान् ॥ ८८ ॥
मनःशिला ताम्रचूर्णं मधूकं बृहतीफलम् ॥
यावदेतानि सर्वाणि तावत्सैन्धवमाचरेत् ॥ ८९ ॥
अजाक्षीरेण तत्सर्वं श्लक्ष्णं दृषदि पीषयेत् ॥
तं कल्कं कारयेद्वर्तिं छायायां परिशोषयेत् ॥ ९० ॥
सलिलेनोपसंघृष्य चक्षुषी नित्यमञ्जयेत् ॥
लेखयेत्पटलं तत्तु शुष्काणि विविधानि च ॥ ९१ ॥
विभीतकपलाशानां भस्म शङ्खमयो रजः ॥
सैन्धवं च समांशानि सर्पिषा सह साधयेत् ॥ ९२ ॥
कपाले तानि लिप्तानि दाहयेद्गोमयाग्निना ॥
तां मषीं पीषयेच्छ्लक्ष्णां[1] क्षौद्रेण सह संसृजेत् ॥ ९३ ॥
पटले बुद्बुदे चैव गूढे कुर्यात्तदञ्जनम् ॥
लेख्या लेख्यास्तु ये चान्ये तथा रोगा पृथग्विधाः ॥ ९४ ॥
रक्तजेषु तु रोगेषु ताम्रं भवति लेखनम् ॥
त्रिभागमर्धशुक्लं वा रुधिरेणाप्लुतं तथा ॥ ९५ ॥
नेत्रराजीस्तु ताः प्राहुस्तिर्यगूर्ध्वप्रसारिताः ॥
तासां योगे भवेदस्रं दारुणं तीव्रवेदनम् ॥ ९६ ॥
पैत्तिकानां च रोगाणां समवायोपलक्षिते ॥
काचाक्षं पूर्वयुक्तानां रक्ताभिष्यन्दितेषु च ॥ ९७ ॥
अथवा रुधिरं यस्य यस्मात्प्रवति चक्षुषी ॥
रुधिरोदकपूर्णे वा रक्तस्रावीति तद्विदुः ॥ ९८ ॥
शिरसस्त्वभिघातेन चक्षुषी यस्य हस्तिनः ॥
संरम्भलोहिते स्यातां शृणु तस्य चिकित्सितम् ॥ ९९ ॥
अपसेकादि यत्किंचित्पैत्तिकानामुदाहृतम् ॥
विधिः सैर्वस्तु[2] पूर्वोक्तो रक्तजानां विधिस्तथा ॥ १०० ॥

त्रिकटुत्रिफलासमुद्रफेनशङ्खनाभिहरिद्रादारुहरिद्राहरितालमनःशिलाकुक्कुटाण्डकपालानि स्वर्णगैरिककालानुसारिवालशुनं तुत्थमयं चूर्णं मृद्वीकाशाबरमञ्जिष्ठासमभागानि कृत्वाऽक्षिसर्वरोगशिरोरोगवेदनोपशमनीकायपुष्पपटलबुद्बुदमांसवृद्धिलोहितराजीश्च जयति ।

१ क. पीषयेत्सूक्ष्मां । २ क. सर्वस्य ।

इति नीलमेघा नाम गुटिका ।

यकृद्राजं तु संछिद्य पूर्वैर्जैरेभिरौषधैः ।
मेदा चैव महामेदा जीवकर्षभकावपि ॥
काकोली क्षीरकाकोली मुद्गपर्णी तथैव च ।
माष(ष)पर्ण्यश्वगन्धे च सर्वं श्लक्ष्णं प्रपीषयेत् ॥
एभिर्यत्तत्समालोड्य परिघट्ट समाहितम् ।
एरण्डपत्रैः संस्थाप्य गोमयेन प्रलेपयेत् ॥
बहिर्मृत्तिकयाऽऽलिप्य निर्धूमेऽग्नौ प्रदापयेत् ।
तत्सिद्धमभिविज्ञाय पीषयित्वा समाहितम् ॥
कदुष्णं रसमादाय नेत्रे नागस्य पूरयेत् ।
पूर्वंस्निग्धस्य नेत्रस्य स्वेदं कुर्याद्विचक्षणः ॥
निर्वापणार्थं नेत्रस्य मन्थजेन तु सर्पिषा ।
सर्वांश्चैवाक्षिरोगांश्च हन्ति सत्यं न संशयः ॥

आज्यं पयो वा क्वथिताम्बुमिश्रमाज्यं पयो वाऽपि तुषारमिश्रम् ।
गवां पयश्चेक्षुरसेन युक्तं नारीपयः शर्करयाऽथ मिश्रम् ॥

परिषेचनार्थे नित्यं हितं .... .... .... .... ।
निष्पावमात्रो नागानां कल्कस्तीक्ष्णाञ्जनस्य तु ॥
तस्यार्धं मध्यमस्याथ मृदुनो द्विगुणो भवेत् ।
कल्काञ्जनात्पादहीनं ज्ञेयं चूर्णाञ्जनस्य तु ॥

सिद्धिं चिरोत्थं न कदापि याति नेत्रामयं स्वेदितमात्रवीर्यात् ।
वैद्यः सदेमान्नृप कुञ्जराणां प्रयोजयेद्योगवरांश्च सिद्धयै ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचन उत्तरस्थाने
चतुर्दशोऽञ्जनाध्यायः ॥ १४ ॥

---

अथ पञ्चदशोऽध्यायः ।

---

पालकाप्यो मुनिश्रेष्ठो यद्वाङ्गायाब्रवीत्पुरा ॥
यथानुमानं नागानां तदिदं संप्रचक्ष्यते ॥ १ ॥
भूतानि कलयत्येष कलाभिर्वा विभज्यते ॥
एतत्कालस्य कालत्वं स तु संवत्सरः स्मृतः ॥ २ ॥

---

१ ख. श्रमं । २ क. °माजं प° । ३ क. सिद्धं । ४ क. °चक्षते ।

एवमेकविधः कालो द्विविधोऽयनभेदतः ॥
अयने द्वे समाख्याते दक्षिणोत्तरसंस्थिते ॥ ३ ॥
आदानं च विसर्गश्च संज्ञे द्वे कीर्तिते मया ॥
उत्तरायणमादानं विसर्गो दक्षिणायनम् ॥ ४ ॥
तत्र त्वादानमाग्नेयं विसर्गः सौम्य उच्यते ॥
शिशिरश्च वसन्तश्च ग्रीष्मश्चाऽऽदानमुच्यते ॥ ५ ॥
विसर्गे वर्ष(?)विज्ञेयः शरद्धेमन्त एव च ॥
विसर्गे वायवो या(वा)न्ति नात्यर्थं रूक्षदारुणः[1](णाः) ॥ ६ ॥
गुणैराप्यायते सोमश्चांशुभिः पूरयञ्जगत् ॥
शश्वदाप्याययत्येवं यद्बलं विसृजत्यलम् ॥ ७ ॥
प्रवृत्तौ च निवृत्तौ च ज्ञेयं पर्याययोगतः ॥
रसौ तत्राम्ललवणौ मधुरश्चापि इष्यते ॥ ८ ॥
स्निग्धत्वाच्चापि कालस्य सौम्यत्वाच्च निसर्गतः ॥
यथाक्रमं बलं तेजो जायते तत्र हस्तिनः ॥ ९ ॥
आदाने रूक्षपरुषा दारुणा वान्ति वायवः ॥
उत्तराभिमुखे सूर्ये चन्द्रसैन्यं विहन्यते ॥ १० ॥
विवस्वानंशुभिस्तीक्ष्णैर्जगत्स्नेहं प्रकर्षति ॥
तस्मादादानमाग्नेयमृषयः परिचक्षते ॥ ११ ॥
कालस्वभावमार्गस्य तथेश्वरपरिग्रहात् ॥
वाय्वर्कसोमा जगतो हेतुभूता न संशयः ॥ १२ ॥
कालं तु रसदोषाणां तथा देहबलस्य च ॥
प्रवृत्तौ च निवृत्तौ च ज्ञेयाः (?) पर्याययोगतः ॥ १३ ॥
यथाक्रमं रौक्ष्यवृत्तिरादानस्योपदिश्यते ॥
तस्माद्रूक्षा रसास्तत्र विवर्धन्ते क्रमात्रयः ॥ १४ ॥
तिक्तः कषायः कटुकश्चतुर्थो नास्ति कश्चन ॥
क्रमाद्दौर्बल्यमिच्छन्ति प्राणिनां रससेवनात् ॥ १५ ॥
रसश्चाम्लोऽथ लवणो मधुरश्च विवर्धते ॥
स्निग्धत्वाच्चापि कालस्य सौम्यत्वाच्च निसर्गतः ॥ १६ ॥

---

१ क. °द्रूक्षर° ।

यथाक्रमं बलं चैव योजन(य)न्त्यत्र हस्तिनाम् ॥
इत्युक्तो द्विविधः कालस्त्रिविधः *संप्रवक्षते ॥ १७ ॥
शीतोष्णवर्षलिङ्गस्तु चतुर्मासविभागतः ॥
षड्विधस्त्वेष भेदेन निखिलः *संप्रवक्षते ॥ १८ ॥
हेमन्तः शिशिरश्चैव वसन्तो ग्रीष्म एव च ॥
वर्षा शरच्च ऋतवः षडुक्ताः कालचिन्तकैः ॥ १९ ॥
हेमन्ते हिमतेजोभिरंशुभिर्भगवान्रविः ॥
न तापयति भूतानि न च कर्षयति प्रजाः ॥ २० ॥
खे नीसैश्चन्द्रमा याति किरणैर्योजयन्प्रजाः ॥
मृदुशीतश्च पवनो वाति कालस्वभावतः ॥ २१ ॥
तस्मात्तस्मिन्नृतौ यान्ति विशुद्धिं मधुरा रसाः ॥
बलवन्तस्तु तेनात्र नागास्तु रससेवनात् ॥ २२ ॥
पित्तं तेषां शमं याति रसत्यागात्समीरितम् ॥
चयं गच्छति च श्लेष्मा शोणितं च प्रसीदति ॥ २३ ॥
बलिनः शीतसंरोधात्तदेषां पावको बली ॥
द्रव्यमात्रागुरुसहो भवत्यवहितः पचन् ॥ २४ ॥
आयुक्ते त्वनलीभात्तु(?) स हिनस्ति शरीरजम् ॥
हेमन्ते त्वनिलः शीतः शीतकाले प्रकुप्यति ॥ २५ ॥
स गैरिकः सर्वसेकस्तस्मादस्मिन्नृतौ वरः ॥
स्थानानि च निवातानि निष्कर्दमजलानि च ॥ २६ ॥
शय्याभागाश्च मृदवः सकरीषास्तृता हिताः ॥
आतपासेवनं चात्र कौपं तोयं च शस्यते ॥ २७ ॥
स्थलजं जाङ्गलं चात्र हस्तिनां पयसं हितम् ॥
सकृदेवावगाहश्च कर्म चात्र विधीयते ॥ २८ ॥
शालीनां षष्टिकानां च द्विकालं मृदुभोजनम् ॥
भोजयेद्वारणं स्निग्धैर्युक्ताम्ललवणै रसैः ॥ २९ ॥
प्रसहानूपजलजैर्मांसपुष्टैर्यथाविधि ॥
वेसवारयुतैश्चात्र भोजनार्थं प्रशस्यते ॥ ३० ॥

---

* 'वक्ष्यते' इति तूचितम् ।

---

१ क. °त्यागस° । २ क. पतन् । ३ क. हस्तिनं ।

सुरा च प्रतिपानार्थं पञ्चभिर्लवणैर्युता ॥
सततं शस्यते चात्र शिरश्चरणम्रक्षणम् ॥ ३१ ॥
मषीयुक्तेन तैलेन शिरोभ्यङ्गश्च पूजितः ॥
पूर्वरात्राच्चतुर्भागं तथैवापररात्रिकम् ॥ ३२॥
प्रयत्नाच्चारयेन्नागं दिवसाल्पतया बुधः ॥
एवमायुर्बलं वीर्यं जवस्तेषां महीपते ॥ ३३ ॥
हेमन्ते यदुपाश्नन्ति वृक्षान्स्निग्धान्गुरून्गजाः ॥
आहारांस्तेन जीवन्ति तद्वर्षं नात्र संशयः ॥ ३४ ॥
शिशिरे हिमनीहारमारुतैर्भास्करांशवः ॥
सहिता न प्रकाशन्ते दिशश्च तमसाऽऽवृताः ॥ ३५ ॥
आदानयोगाद्रूक्षेऽतिशीतश्चापि प्रभञ्जनः ॥
वाति तिक्तो रसस्तस्मात्तस्मिन्काले विवर्धते ॥ ३६ ॥
दारुणत्वादृतौ तस्माद्रौक्ष्यं भवति दन्तिनः ॥
विधिस्तत्रापि सर्वोक्तः कर्तव्यः शिशिरे बुधैः ॥ ३७ ॥
शिशिरः किंचिदधिकः प्रोक्तो हेमन्तकालतः ॥
तस्माद्विशिष्यते तस्मिन्नृतौ तत्र प्रच(त्व)क्ष्यते ॥ ३८ ॥
तदा गजानां शालासु ज्वलयेत्तु हुताशनम् ॥
कम्बलावरणं चात्र शीतत्राणार्थमिष्यते ॥ ३९ ॥
तृणं पुलाकोपनाहस्तिक्षवश्चैव दन्तिनाम् ॥
ग्रासार्थं वृक्षभागांश्च शस्तं कोष्णं च भोजनम् ॥ ४० ॥
उष्णपिण्डः प्रदातव्यः कफवातहरः सदा ॥
आर्द्रकं मरिचं कृष्णा सैन्धवं च जवानिका ॥ ४१ ॥
शतपुष्पाऽजमोदा च सर्वाण्येकत्र चूर्णयेत् ॥
यावन्त्येतानि सर्वाणि तावन्मात्रो भवेद्गुडः ॥ ४२ ॥
हेमन्ते शिशिरे पिण्डः करिणां वह्निवर्धनः ॥
वातश्लेष्मप्रशमनो बलवर्णकरः परः ॥ ४३ ॥
मद्यानुपाने परमो रसायनविधिर्मतः ॥

(इति) ऋतुपिण्डः ।

प्रतिमानं प्रसन्ना च लवणं त्र्यूषणायुतः ॥ ४४ ॥

१ क. °रात्रक° ।

सर्वसेकश्च तैलेन विहितो गैरिकायुतः ॥
परिवाहांश्च मातङ्गा(ः) सकृदेवावगाहयेत् ॥ ४५ ॥
मेघमारुतवर्षोष्णशीतसंबृंहितास्तथा ॥
शिशिरान्ते कफोद्रेकः पानात्ययनयोगतः ॥ ४६ ॥
सूर्यस्तपति चात्यर्थं वर्धन्ते दिवसास्तथा ॥
मेदुराः सुकुमाराश्च गजास्तेजोधिका भृशम् ॥ ४७ ॥
स्वल्पसंतापतो ह्येषां तस्माद्विष्यन्दते कफः ॥
वसन्ते नातिशीतांशुः सविता शीतमम्बु च ॥ ४८ ॥
पवनो नातिशीतोष्णो मह्यां सर्वः प्रकाशते ॥
साधारणे तत्र काले गजानां वर्धते रसः ॥ ४९ ॥
श्लेष्मा प्रकोपमायाति सौमनस्यं च जायते ॥
धातुसौ(सा)म्यं च नागानां जायते कारणैरिमैः(?) ॥ ५० ॥
हरन्ति पांशुं विशदं शीतमुक्तास्तथा द्विपाः ॥
सलिलानि च पानेषु पिबन्ति च हरन्ति च ॥ ५१ ॥
सस्यसस्यवतीं भूमिं दृष्ट्वा पुष्यन्ति चाधिकम् ॥
सलिलेनाभिसिक्तं च रसवत्तरुणं *नृणाम् ॥ ५२ ॥
प्रचारेषूपयुञ्जानाः कामवन्तो मतङ्गजाः ॥
कोकिलाकुलनादैश्च भ्रमराणां च कूजितैः ॥ ५३ ॥
वातेन पुष्पचित्रेण सुखेनाऽऽहिततेजसा ॥
भवन्ति हस्तिनीकामा मन्यन्ते वनजं सुखम् ॥ ५४ ॥
तेषां सुखत्वात्कालस्य रम्यत्वाच्चाथ सर्वशः ॥
†मनस्तुषो(?)च धातूनां शा(सा)म्यं भवति हस्तिनाम् ॥ ५५ ॥
तदा हि यवगोधूमाः कलापाश्चणकास्तथा ॥
यवसार्धं प्रशस्यन्ते शाल्यन्नं चैव भोजनम् ॥ ५६ ॥
मेदकः प्रतिपानं च अवगाहोऽथ दन्तिनाम् ॥
वनान्तेषु प्रचारेषु पांशुघातश्च पूजितः ॥ ५७ ॥
संमृष्टान्युपलिप्तानि कुसुमैर्भूषितानि च ॥
स्थानान्यत्र प्रशंसन्ति सौमनस्यविवृद्धये ॥ ५८ ॥
भाराध्वकर्मयोगांश्च नाति तत्र प्रयोजयेत् ॥
ग्रीष्मे मध्यमकाष्ठास्थो भृशं तीक्ष्णातपो रविः ॥ ५९ ॥

---

* 'तृणम्' इति स्यात् । † 'मनस्तुष्टौ' इति तूचितम् ॥

अपिबज्जगतः स्नेहमंशुभिः पवनस्तथा ॥
तीव्रो रूक्षः खरो याति परुषः शोषणात्मकः ॥ ६० ॥
रसस्तदा तु कटुकः काले योगो विवर्धते ॥
भवेत्तदा धातुशोषो दौर्बल्यं सर्वदेहिनाम् ॥ ६१ ॥
प्रभवत्यधिकं तृष्णा प्रचयं याति चानिलः ॥
सोमात्मकाः शीतसात्म्या मातङ्गाश्च विशेषतः ॥ ६२ ॥
निदाघकाले जायन्ते नागाः पित्तहता भृशम् ॥
तस्माद्विशेषतस्तेषां दौर्बल्यं चाभिवर्धते ॥ ६३ ॥
त्वग्दाहश्च क्षयस्तेषां गच्छतः श्लेष्ममेदसी ॥
दृष्यते रक्तपित्तं च धर्मयोगेन(ण) दन्तिनाम् ॥ ६४ ॥
जलाश्रयाश्रितं स्थानं तस्मिन्काले विधीयते ॥
घनच्छायं प्रभूतं च भूरितोयप्लुतं तथा ॥ ६५ ॥
त्रिश्चावगाहयेन्नागं ह्रदे शीते शिवोदके ॥
पूर्वाह्ने वाऽपराह्ने वा मध्याह्ने च विशेषतः ॥ ६६ ॥
हारयेत्कर्दमं शीतं त्वग्दाहविनिवृत्तये ॥
मध्याह्ने चापि शिक्यस्थाः स्रवेयुर्वारिपूरिताः ॥ ६७ ॥
वंशे घटाः शीततोया हतयश्चैव दन्तिनाम् ॥
एवं दिनोपसेवा च रात्रौ तस्य प्रशस्यते ॥ ६८ ॥
शय्याभागाश्च शीताः स्युर्मृदुपांशुजलावृताः ॥
निवृत्तिरध्वनश्चास्य कर्मणश्चोपदिश्यते ॥ ६९ ॥
शिरोलेपस्तथा काये शतधौतेन सर्पिषा ॥
श्रो(स्रो)तःसिद्धिर्भवेत्तेन क्लेदनं चैव चक्षुषोः ॥ ७० ॥
औदकं यवसं चात्र हरितं च प्रदापयेत् ॥
क्षीरिणां चैव वृक्षाणां पल्लवांश्चैव दापयेत् ॥ ७१ ॥
कुल्माषाः पल्लवाश्चापि ससर्पिर्गुडमोदकाः ॥
प्रातराशः ससर्पिष्को गुन्द्रा*वसपयोगुडः ॥ ७२ ॥
रात्रौ च रक्तशाल्यादिभोजनं जाङ्गले रसैः ॥
पयः सर्पिर्विमिश्रं वा शीतमस्मै प्रदापयेत् ॥ ७३ ॥

---

* 'सव' इति भवेत् ॥

---

१ क. °लाशया° । २ क. °न्द्रावास° ।

पयःपानं च नागस्य घर्मकाले प्रशस्यते ॥
पयःपीतस्य वा ह्यस्यौ गजस्य रसशोषकौ ॥ ७४ ॥
प्रतिपानं गुडयुतं द्राक्षाद्युदकमिश्रितम् ॥
अविदाहि च यन्मद्यं विधिज्ञस्तत्प्रदापयेत् ॥ ७५ ॥
काले तस्मिन्निशा ह्रस्वा कष्टश्चात्र तु जागरः ॥
तस्मादस्मिन्नयोत्थानं नार्तिरात्रकृतं भवेत् ॥ ७६ ॥
कट्वम्लोष्णविदाहीनि भोजनान्यौषधानि च ॥
घर्मकाले न शस्यन्ते यवसं तच्च तद्विधम् ॥ ७७ ॥
भाराध्वकर्मयोगांश्च नैव तत्र समाचरेत् ॥
ग्रासाभिंजनमं बल्यं मनसश्च प्रसादनम् ॥ ७८ ॥
विधायोगं चतुर्भागं घृतलेपनौहिकम् ॥
दापयेद्ग्रीष्मकाले तु यथायोगं विभागतः ॥ ७९ ॥
मधुफाणितसंयुक्तं मद्यं यवसमेव च ॥
दुर्बलाश्चातियानाश्च क्षीणा ये च मतङ्गजाः ॥ ८० ॥
तेभ्यः प्रदापयेद्युक्तं हितं यत्पानभोजनम् ॥
वर्षासु घर्मकालोष्णतापिता मेदिनी भृशम् ॥ ८१ ॥
अभिवृष्टा जलधरैर्द्रवभावं नियच्छति ॥
सबाष्पतोयविष्यन्दं विरसं बहु मुञ्चति ॥ ८२ ॥
वृक्षौषधितृणानां तु वैरस्यं जायते तदा ॥
तदा ह्यम्लो रसो वृद्धिं याति पित्तं च चीयते ॥ ८३ ॥
विरसाम्लाविशेषत्वात्सलिलस्य तृणस्य च ॥
वारणानां तदा वह्निर्मृदुत्वमुपगच्छति ॥ ८४ ॥
वातादयोऽग्निहीनानां कुप्यन्त्यत्र स्वभावतः ॥
नदीतोयप्रविष्टानि यवसान्योदकानि च ॥ ८५ ॥
व्यायामातपसेवा च दन्तिनां नात्र शस्यते ॥
पाने स्वापः प्रशस्यन्ते कूपप्रस्रवणोद्भवाः ॥ ८६ ॥
यवगोधूमशाल्यन्नं भोजनं च सफाणितम् ॥
जाङ्गलानां तु मांसानां रसा यूषाश्च संस्कृताः ॥ ८७ ॥

---

१ क. समाहरेत् । २ क. °नाहनम् । ३ क. °प्रविष्टा° ।

भोजनार्थेऽन्नपानार्थे कार्याः कायाग्निदीपनाः ॥
*(विशेषोऽहनि शीते च वर्षवाताकुले भृशम् ॥ ८८ ॥
व्यक्ताम्लस्नेहलवणं भोज्यं स्यादनिलापहम् ॥
स्थलजं यवसं चैव द्विरदानां घनागमे ॥ ८९ ॥[1]
स्थानानि विगतस्वेदनिष्पन्दानि च कारयेत् ॥
धूमश्च दंशनाशार्थं कार्यः स्थानेषु दन्तिनाम् ॥ ९० ॥
प्रसन्नां सगुडव्योषां सतैलां प्रतिपाययेत् ॥
नागानां जलदेशेषु प्रचारश्चात्र पूज्यते ॥ ९१ ॥
उदितेऽर्केऽवगाहश्च ग्रीष्मवत्तत्र कारयेत् ॥
वातादिदोषशान्त्यर्थं बलस्थैर्यार्थमेव च ॥ ९२ ॥
बस्तिकर्म च नागेभ्यो वर्षासु नियतं हितम् ॥
ऋतुरेष विशेषेण बहुकीटसरीसृपः ॥ ९३ ॥
तस्माद्यवसशुद्ध्यर्थं दीपं स्थानेषु कारयेत् ॥
शरद्यभ्रविनिर्मुक्तो भृशं तीक्ष्णातपो रविः ॥ ९४ ॥
संपचत्यौषधीः सर्वाः फलमन्तानि(?) यानि च ॥
तीक्ष्णातपत्वाच्च रवेर्भूमिपाकं नियच्छति ॥ ९५ ॥
प्रकुप्यति च नागानां सूर्यांशुपरितापितम् ॥
जगत्तु ताभिः शुभ्राभिराप्याययति चन्द्रमाः ॥ ९६ ॥
तस्मात्तत्रापि लवणो रसो वृद्धिं नियच्छति ॥
प्रकुप्यति च नागानां पित्तं शाम्यति चानिलः ॥ ९७ ॥
तत्रापि यवगोधूमाः(?) †शाल्यन्नानि प्रदापयेत् ॥
गुडसर्पिर्विमिश्राणि पित्तकोपहितानि च ॥ ९८ ॥
शशानां हरिणानां च रसैर्मधुरतिक्तकैः ॥ )
विशेषार्थे तदा कार्यो दन्तिनां पित्तशान्तये ॥ ९९ ॥
स्नेहनार्थं च तं क्षीरं तदा मांसरसोऽपि वा ॥
शस्यकालौ भवेतां द्वौ वसन्तशरदावुभौ ॥ १०० ॥
पूर्वस्निग्धशरीराणां शस्यारम्भो विधीयते ॥
संनाराः षष्टिका व्रीहिशालयः कङ्गवोऽपि वा ॥ १ ॥
यावच्चाऽऽर्द्रफलास्तावद्धस्तिभ्यः पुष्टये हिताः ॥
पुष्पिताः फलिताश्चापि मुद्गमाषमकुष्ठकाः ॥ २ ॥

* धनुश्चिह्नान्तर्गतपाठः कखपुस्तकयोर्नास्ति । † 'गोधूमशाल्य' इति भवेत् ।

१ क. °वदार्द्र° ।

यवसार्थं प्रशस्यन्ते यावम कठिनं फलम् ।
गोधूमः कठिनफलो नित्यं देयो यवोऽपि च ॥ ३ ॥
पुष्पितो रक्तजननः फलितो मांसवर्धनः ॥
अनूपजलजं मांसं वसा मेदो घृतं तथा ॥ ४ ॥
माहिषं च दधि क्षीरं तैलोष्णे चावमर्दयेत् ॥
घृतं क्षीरं यवाः शालिमांसानि मधुराणि च ॥ १०५ ॥
अतो यस्मिन्प्रशस्तानि दन्तिनां जलदात्यये ॥
शर्करं (?) प्रतिपानार्थे लवणार्थे च सैन्धवम् ॥ ६ ॥
दिवा स्थानानि शीतानि रात्रौ चन्द्रांशवो हिताः ॥
ग्रीष्मवच्चावगाहश्च कार्यः शरदि दन्तिनाम् ॥ ७ ॥
सूर्यांशुपरितप्तानां चन्द्रेणाऽऽप्यायितानि च ॥
आगस्त्योदकयुक्तानि निर्विषाणि शुचीनि च ॥ ८ ॥
निर्मलानि निपानेषु जलान्यमृतवत्तदा ॥
पानावगाहे करिणां प्रशस्तानि विशेषतः* ॥ ९ ॥
(†भोजनार्थे प्रदातव्यं जाङ्गलानूपमिश्रितम्) ॥
पूर्वाह्णे वाऽपराह्णे वा द्वौ कालौ तत्र बुद्धिमान् ॥ ११० ॥
प्रचारयन्वनभागानरण्येषु विभागवित् ॥
काशपुष्पपटीं शुभ्रां तदावि(चि)त्रितनिम्नगाम् ॥ ११ ॥
परिपक्वतृणां चैव धरणीं तत्र शालिनाम् ॥
कमलोत्पलकह्लारजातां गन्धवहस्तदा ॥ १२ ॥
मारुतः सुखसंस्पर्शो वाति शीतांशुशीतलः ॥
विचित्राणि स्वादवन्ति तृणानि सलिलानि च ॥ १३ ॥
शरद्गुणैः सुमनसो भवन्ति करिणस्तथा ॥
काले तु प्रतिकुर्वीत हस्तिनां दन्तकल्पनाम् ॥ १४ ॥
स्वातिसंपातयोगे च काले नीराजनास्तथा ॥
रामश्च यात्राकालोऽत्र शस्तः कर्मसु दन्तिनाम् ॥ ११५ ॥

---

* क–घपुस्तकयोस्तु—एतदुत्तरमेव 'विशेषोऽहनि' इत्यारभ्य 'रसैर्मधुरतिक्तकैः' इत्यन्तो धनुश्चिह्नान्तर्गतपाठ उपलभ्यते ॥

† धनुश्चिह्नान्तरगतः पाठो नास्ति ख–घपुस्तकयोः । तत्र 'भोजनार्थे' इत्येव 'रसैर्मधुरतिक्तकैः' इत्युत्तरमुपलभ्यते ॥

ऋतुसात्म्यमिदं प्रोक्तं चेष्टाहारव्यपाश्रयम् ॥
हिताहितविधानार्थं करिणां स्वच्छवृत्तकम् ॥ १६ ॥
चिकित्सायाः स्वच्छवृत्तिं स नित्यं हि चिकित्सितम् ॥
संवेशोत्थानयोः सम्यगवगाहे च दन्तिनाम् ॥ १७ ॥
यथाकालं समुद्देशं पालकाप्योऽब्रवीत्पुनः ॥
पूर्वाह्णे वाऽपराह्णे वा सर्वर्तुषु च पार्थिव ॥ १८ ॥
अनेन विधिना नागमवगाहनमानयेत् ॥
गच्छन्तं हारयेत्पांशुं वीथीमार्गेष्वनेकपम् ॥ १९ ॥
पङ्कं वा हारयेदेनं वप्रं च प्रतिषेधयेत् ॥
अवगाह्य प्रवातं च कर्णादूने समे जले ॥ १२० ॥
विशेषमात्रे मातङ्गो तोये प्रतिनिषादयेत् ॥
ततः संपच्य तैलेन तत्रैनं प्रतिवर्षयेत् ॥ २१ ॥
अवसिच्यावसिच्याद्भिरथैनमनुवर्तयेत् ॥
उभाभ्यामनुवृत्तं च पक्षाभ्यां वा मतङ्गजम् ॥ २२ ॥
कर्णौ यावत्समेतानि पुनः समवगाहयेत् ॥
( *आरक्षितानि शिरसि प्रक्षाल्यास्य प्रपीड्य च ॥ २३ ॥
प्रकामे(मं) तापयित्वा तु निवृत्तं स्थानमानयेत् ॥
आगतस्य च नागस्य मत्तस्य च विशेषतः ॥ २४ ॥
निवार्णस्योपचारोऽयं सर्वेष्वृतुषु कीर्तितः ॥
ग्रीष्मे प्रागुदयान्नागमवगाहाय योजयेत् ॥ १२५ ॥
छायायां (च) द्विपौरुष्यां सीदन्तमवगाहयेत् ॥ )
माध्यंदिने तु शालास्थं पाययेदुद्धृतोदकम् ॥ २६ ॥
इति ग्रीष्मविधिः प्रोक्तो वार्षिकः संप्रवक्ष्यते ॥
तस्याभ्युदितमात्रे तु सूर्ये वर्षासु बुद्धिमान् ॥ २७ ॥
निर्वापणाय नागानां कुर्यात्पूर्वाह्णिकं हितम् ॥
पुनर्निर्वृत्तिमात्राहं (?) हितं वर्षासु हस्तिनाम् ॥ २८ ॥
ऋतुसंधिषु सर्वेषु मृत्तिकाया निवारणम् ॥
गोमूत्रं पाययेन्नागं हस्ते शङ्कुं च बन्धयेत् ॥ २९ ॥

---

* धनुश्चिह्नान्तरगतः पाठो नास्ति कपुस्तके ।

---

१ क. हस्तिनामृतुसंधिषु ॥ हितं वर्षं च सर्वेषु ।

मृत्तिकाभक्षणा*त्पङ्कात्द्रक्षा वर्षासु हस्तिनाम् ॥
अत ऊर्ध्वं प्रवक्ष्यामि हेमन्ते विधिमुत्तमम् ॥ ३० ॥
मन्दीभूते पुनः शीते युगमात्रगते रवौ ॥
धू(पौ)र्वाह्णिकोऽवगाहस्तु वारणानां हिमागमे ॥ ३१ ॥
त्रिभागशेषदिवसे त्वपराह्णेऽवगाहयेत् ॥
हेमन्ते वारणं तोये तथैव परिघर्षयेत् ॥ ३२ ॥
पूर्वाह्णे चाऽऽतपे †पांशुर्यथाकर्म हरेद्बुधः ॥
अवगाह्य च तोये तं क्षिप्रमुत्तारयेद्गजम् ॥ ३३ ॥
अत्यर्थं शिशिरे काले पौषे मासेऽथ वारणम् ॥
सिञ्चेद्गैरिकतैलेन त्र्यहान्ते वाऽवगाहयेत् ॥ ३४ ॥
छविः प्रसन्ना भवति शीतं चैनं न बाधते ॥
व्रणाश्चाप्युपरोहन्ति यूका कण्डूश्च नश्यति ॥ १३५ ॥
इति सर्वेषु कालेषु निवार्णविधिरीरितः ॥
जलदोषांस्तु वक्ष्यामि यान्दृष्ट्वा परिवर्जयेत् ॥ ३६ ॥
पिच्छिलं कृमिशैवालपर्णपङ्कमलावृतम् ॥
विवर्णं विरसं स्पर्धं दुर्गन्धं वासितं जलम् ॥ ३७ ॥
मत्स्यगन्धि तु यत्तोयं भवेद्यच्चर्मगन्धि च ॥
सगन्धि क्षुण्णपानं च तानि तोयानि वर्जयेत् ॥ ३८ ॥
कृमिमिश्रजलान्याहुर्ग्रहणीदूषणानि च ॥
कौपमुद्भिदजं वाऽपि सारसं वा पिबेज्जलम् ॥ ३९ ॥
एवं सर्वास्ववस्थासु न विरुद्धं महीपते ॥
नैवं हि सलिलं व्याधिमुत्पादयति वारणे ॥ १४० ॥
महीद्रुमचराणां च मृतस्याऽऽशीविषस्य च ॥
निर्धावनं च वृक्षाणां यथावत्परिवर्जयेत् ॥ ४१ ॥
तोयं तु कटुकं नागो न पिबेद्वातकोपनम् ॥
अत्यर्थमधुरं यच्च श्लेष्माणमभिवर्धयेत् ॥ ४२ ॥
अम्लं पित्तं वर्धयति तोयं नागस्य निन्दितम् ॥
तादृग्रूपं पयो यच्चात्तादृशं च न सेवयेत् ॥ ४३ ॥

---

* यस्मादिति भवेत् । † 'पांशु' इति स्यात् ।

---

१ क. तोयं । २ क. तोयं ।

कषायं लवणं चैव निर्मलं च हितं भवेत् ॥
निर्दोषाणामलाभे तु यथालाभं पिबेज्जलम् ॥ ४४ ॥
जलावरोधान्निपतेत संमोहं वा नियच्छति ॥
तस्मात्सर्वास्ववस्थासु पानीयं न निवारयेत् ॥ १४५ ॥
अवगाहविधिश्चैव जलदोषाश्च कीर्तिताः ॥
शयनोत्थानकाण्डानां वक्ष्यते विधिरुत्तमः ॥ ४६ ॥
भुक्तवन्तं प्रतिच्छन्नं यवसेन तु वारणम् ॥
ग्रीष्मे संवेशयेद्रात्रौ गते त्वष्टार्धनाडिके ॥ ४७ ॥
शेषे षड्नालिके वाऽपि द्विपक्षशयनं गजम् ॥
नरः प्रतिनयेत्स्थानमिति ग्रीष्मविधिः स्मृतः ॥ ४८ ॥
संवेशयेत्तु वर्षासु रात्रौ षड्नालिके गते ॥
यथोक्तेनैव विधिना भुक्तवन्तं त्वनेकपम् ॥ ४९ ॥
अष्टभागिकशेषायां स्थानं प्रति नयेद्गजम् ॥
इति संवेशनोत्थाने वर्षाकाले प्रकीर्तिते ॥ १५० ॥
हेमन्तकाले तु पुनर्यथोक्तमशितं गजम् ॥
संवेशयेद्गजं रात्रावतिक्रान्तेष्टनालिके ॥ ५१ ॥
उभाभ्यामपि पक्षाभ्यामनुवृत्तमनेकपम् ॥
पुनः प्रतिनयेत्स्थानं शेषे तु दशनालिके ॥ ५२ ॥
दिनानां दीर्घह्रस्वत्वं विज्ञाय क्रमशो भिषक् ॥
यथोक्तक्रमतस्तेषां वर्धयेद्वा स भोजनम् ॥ ५३ ॥
शयनोत्थानशालानामित्ययं कीर्तितो विधिः ॥
निर्वाणं शयनं चैव सर्वर्तुषु च कीर्तितः (?) ॥ ५४ ॥

इति श्रीपालकाप्ये गजायुर्वेदे महाप्रवचन उत्तरस्थान
ऋतुचर्याध्यायः पञ्चदशः ॥ १५ ॥

---

अथ षोडशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
कार्याकार्यविधिं कृत्स्नं भगवन्वक्तुमर्हसि ॥ १ ॥
कस्मान्न दीयते तोयं भुक्तमात्राय दन्तिने ॥
कस्मात्त्वास्यात्कृता न स्यात्तथा कर्म विधीयते ॥ २ ॥

---

१ ख. °ड्नाडिके ।

उपस्थिते मदे वाऽपि प्रभिन्ने वाऽपि कुञ्जरे ॥
कस्मात्स्नेहो विरेको वा न देयस्तु महामुने ॥ ३ ॥
कस्मादुभयतः स्नेहो मुखतः पृष्ठतोऽपि च ॥
न प्रदीयेत युगपन्मार्गेभ्यो द्विजसत्तम ॥ ४ ॥
कस्माच्च भोजितायाऽऽज्यस्नेहबस्तिः प्रदीयते ॥
निरूहो भोजिते वाऽपि कस्मान्नैव प्रदीयते ॥ ५ ॥
कस्मात्पीतवते तोयं पश्चाद्भुक्तं प्रदीयते ॥
कस्माच्च शून्यकोष्ठाय स्नेहबस्तिर्न दीयते ॥ ६ ॥
प्रत्युद्गतस्य नागस्य कस्माच्छिण्डं न शोध्यते ॥
*(अरोग्ये(गे) व्याधिते नाथ समं कस्मान्न बाध्यते ॥ ७ ॥
कस्मान्न हस्तिवैद्येन चिकित्स्यः पुरुषः स्मृतः ॥
कस्मात्तु नरवैद्येन न चिकित्स्यो मतङ्गजः ॥ ८ ॥
कस्माद्दन्तनिवृत्ताय न देयो मोदको द्विज ॥
प्रतिपानं यथा तच्च यथायोगं प्रदीयते ॥ ९ ॥
कस्माच्च हस्तिशालायां नखरोम न कल्पयेत् ॥
कथं नीराजिताः सन्तो न निर्वाप्यास्तु कुञ्जराः ॥ १० ॥
कस्माच्चैव दिवास्वप्नं न प्रशंसन्ति दन्तिनाम् ॥
प्रतिपानौषधानां च ब्रूहि कालमशेषतः ॥ ११ ॥
स्नानस्य चापि यः कालो भक्तस्य यवसस्य च ॥
युक्त्या प्रतिनयं ब्रूहि यथा वाऽभिनयं मुने ॥ १२ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
कार्याकार्यविधिं सर्वं हेतुभिः संप्रदर्शयेत् ॥ १३ ॥
भोजयित्वाऽथ मातङ्गं मोहाद्यः पाययेज्जलम् ॥
विषमं पच्यते भुक्तं स भवत्युत्तरोदकः ॥ १४ ॥
न चात्र समानः सम्यग्भुक्तं चास्य न जीर्यते ॥
तस्मात्करिणे भुक्तवते पानीयं न विधीयते ॥ १५ ॥

---

* धनुश्चिह्नान्तरगतपाठः खपुस्तके पालकाप्योत्तरवाक्ये, पालकाप्योत्तरवाक्यं 'तस्मात्कर्मप्रयुक्ते तु' इत्यादिः 'व्याधितं परिवर्जयेत्' इत्यन्तः पाठोऽत्र राजप्रश्नवाक्य उपलभ्यते ॥

---

१ क. °स्थितम° ।

अजस्रं भक्षयन्त्येते शीतसात्म्या महामयः ॥
यस्माद्भुक्तवतः स्नेहो दुःखं पच्येत विप्लुतः ॥ १६ ॥
तस्मादुदकपूर्वं तु सुखं भुक्तं न जीर्यते ॥
पूर्वं पानीयपीतस्य भक्तभुक्तस्य दन्तिनः ॥ १७ ॥
नस्यकर्म प्रयुङ्क्ते यस्तस्य तोयपरिप्लुतः ॥
मूर्छां वा नयति स्नेहो अ(ह्य)तीसारमरोचकम् ॥ १८ ॥
व्यापादं वा पुनर्घोरं मिथ्याकर्मप्रयोगतः ॥
तस्मादभुक्तवत्येव नस्यकर्म विधीयते ॥ १९ ॥
विधानं तस्य कार्त्स्न्येन *नस्यदानं प्रकीर्त्यते ॥
विश्लेषं संधयो यान्ति पथि व्यायामतोऽपि वा ॥ २० ॥
तस्मात्कर्मप्रयुक्ते तु न विरेको विधीयते ॥
तेजसो हि समावेशान्मदः संजायते गजे ॥ २१ ॥
तैजसं नस्यमप्युक्तमतस्तं नावचारयेत् ॥
यथा हि भवने दीप्ते सर्पिषा परिषेचनम् ॥ २२ ॥
भवेदाशु प्रदाहाय नियतं तस्य वेश्मनः ॥
एवमेव प्रभिन्नस्य कुञ्जरस्य महीपते ॥ २३ ॥
तैलावचारणाद्दोषो हेतुभिः संप्रदर्शितः ॥
यत एवं विकाराय ततः स्नेहो न युज्यते ॥ २४ ॥
तैलसर्पिर्विरेकाणां मत्तेनैवावचारणम् ॥
प्रभिन्नः सर्वसेकेन मूर्छां प्राप्नोति दारुणाम् ॥ २५ ॥
शिरोऽभितापं लभते दृष्टिश्चास्योपहन्यते ॥
तस्मात्प्रभिन्ने मातङ्गे नाभ्यङ्गस्तु विधीयते ॥ २६ ॥
न सर्पिषा न तैलेन नित्यमेव विधीयते ॥
अपाने मुखतश्चैव युगपद्यदि दीयते ॥ २७ ॥
स्नेहः स्नेहेन सङ्गस्य परिणामं न गच्छति ॥
आनाहो वाऽतिसारो वा मूर्छा वाऽस्येपजायते ॥ २८ ॥
यस्मात्तस्मादुभयतो न स्नेहो दीयते नृप ॥
अभुक्तवान्विरूक्षेत भुक्तवच्च निराकृतः ॥ २९ ॥

---

* 'नस्यदाने' इति भवेत् ।

भुक्तवांश्चानुवास्येत तस्मान्नाभुक्तवान्गजः ॥
बस्तिसिद्धो मया पूर्वमेतत्सिद्धमशेषतः ॥ ३० ॥
कीर्तितं क्रमयोगेण हेतुभिः स्पष्टलक्षणैः ॥
स्वकरीषे च वसतिः कार्या भवति दन्तिनाम् ॥ ३१ ॥
विवर्जयन्ति रक्षांसि ग्रहाः परिहरन्ति च ॥
अभिचारो न भवति मनो न प्रतिहन्यते ॥ ३२ ॥
व्याधयश्च प्रशाम्यन्ति नोद्विजन्ते च कुञ्जराः ॥
तस्मादस्तमिते सूर्ये रक्षार्थं मनुजाधिप ॥ ३३ ॥
प्रत्युद्गतानां नागानां न लिण्डमपकृष्यते ॥
व्याधितं त्वाप्यरोगं वा नैकस्थाने निवेशयेत् ॥ ३४ ॥
रोगसंलेपनभयाद्व्याधितं परिवर्जयेत् ॥
मनुष्यवैद्यो नागानां चिकित्सां न प्रयोजयेत् ॥ ३५ ॥
हस्तिवैद्यो मनुष्याणामतो हेतोर्नराधिप ॥
अन्नसात्म्या हि पुरुषास्तृणसात्म्या मतङ्गजाः ॥ ३६ ॥
मात्राप्रकृतिसात्म्यानां (*वैशेष्याच्चापि पार्थिव ॥
यस्माच्छास्त्राणि च पृथङ्नराणां दन्तिनामिह ॥ ३७ ॥
तस्मान्नागभिषङ्नागांश्चिकित्सेन्ना भिषङ्नरान् ॥
क्षीरमेदकमद्यानां) तथा सौवीरकस्य च ॥
अनिर्वृत्ता च नागानां प्रातः पानं विधीयते ॥ ३९ ॥
क्षीरादीनि महीपाल तोयं पीत्वा पिबेद्यदि ॥
कोपयन्ति कफं पश्चात् पीतान्येतानि दन्तिनः ॥ ४० ॥
श्लेष्मणा हृदयं तस्य कुञ्जरस्य प्रपीड्यते ॥
नाभिनन्दति चाऽऽहारं भुक्तं चापि न पच्यते ॥ ४१ ॥
कृमिकोष्ठी भवत्येवं मृत्तिकां चाभिनन्दति ॥
यस्मात्तस्माद्गजेभ्यस्तु प्रातः क्षीरादि दीयते ॥ ४२ ॥
ऐरावणादयो राजन्कीर्तिता ये दिशां गजाः ॥
तस्मात्प्रसूतिर्नागानां विद्धीमानिह वारणान् ॥ ४३ ॥
यस्माच्च देवहस्तिभ्यः प्रसूता वारणा नृप ॥
तस्माद्गजोपकरणं वारणानां महीपते ॥ ४४ ॥

* धनुश्चिह्नान्तरगतो नास्ति पाठः कपुस्तके ।

१ ख. ग. कथं ।

अशुचिर्न स्पृशेत्कश्चिन्न वा रोहेन्मतङ्गजम् ॥
शुचिना तु सुखं वृद्धिं पुष्टिं च लभते सदा ॥ ४५ ॥
अनेनैव विशेषेण वारणानां महीपते ॥
शालासु *मुखवालानां कल्पनं न विधीयते ॥ ४६ ॥
पीडा भवति नागानां तस्मात्तत्र न कल्पयेत् ॥
षण्मासान्वर्धते रात्रिः षण्मासांस्त्परिहीयते ॥ ४७ ॥
क्षयं वृद्धिं विभज्याथ स्वापयेच्च मतङ्गजम् ॥
दिवास्वप्नस्तु नागानां दोषकोपाद्यतः पुनः ॥ ४८ ॥
प्रतिषिद्धो दिवास्वप्नस्तस्मात्तु नृपपुङ्गव ॥
द्वात्रिंशन्नाडिका रात्रिर्दिवसश्च समो यदा ॥ ४९ ॥
तदा त्रिंशतिमे चैव नालिकं (?) स्वापयेद्गजम् ॥
सेवतां तु दिवा स्वप्नमेषां श्लेष्मा प्रकुप्यति ॥ ५० ॥
शातार्त्तर्तुक्ष (?) नागानामतः स्वप्नो दिवा हितः ॥
प्रतिपानौषधादीनि पूर्वाह्णे भोजनानि वै ॥ ५१ ॥
स्नातस्य भक्तं पूर्वाह्णे सायाह्ने च तथाऽपरम् ॥
कृतमङ्गलशौचाश्च कृतस्वस्त्ययनक्रियाः ॥ ५२ ॥
नीराजनविधौ नागाः फाल्गुनाषाढकार्तिकैः ॥
समास्तेषु यथा प्रोक्ता इति राज्ञो घनाः स्मृताः ॥ ५३ ॥
नीराजितानां स्नानं च गजानां न विधीयते ॥
अतो निर्वसतीकल्पस्तत्र पुण्यो विधिः स्मृतः ॥ ५४ ॥
शान्तिस्वस्त्ययनादीनि नित्यं कार्याणि हस्तिनाम् ॥
बालवृद्धातुराणां च क्षीणानां च विशेषतः ॥ ५५ ॥
कर्तव्यो हस्तिनां सम्यग्दयापूर्वमनुग्रहः ॥
रक्षिता वारणा राज्ञां भवन्ति विजयावहाः ॥ ५६ ॥
यावतः सुभृतान्कुर्याद्वारणान्सर्वकामतः ॥
तावतः पृथिवीपाल वारणान्ग्राहयेद्धितान् ॥ ५७ ॥

---

* 'नखवालानां' इत्येव युक्तम् । 'कस्माच्च हस्तिशालायां नखरोम न कल्पयेत्' इतिप्रश्नानुकूल्येनैवोत्तरस्य वक्तव्यत्वात् ।

---

१ क. °सान्वर्धे° । २ क. °सान्परि° । ३ क. यदि । ४ क. °तान्कृत्वा वार° ।

( * रक्षिता वारणा राज्ञो भवन्ति विजयावहाः ) ॥
वहन्ति चैवं सुप्रीताः सततं पुरुषेश्वरान् ॥ ५८ ॥

इति श्रीपालकाप्ये गजायुर्वेदे महाप्रवचन उत्तरस्थाने कार्याकार्यविधिर्नाम षोडशोऽध्यायः ॥ १६ ॥

---

अथ सप्तदशोऽध्यायः ।

---

देवराजप्रतीकाशः पप्रच्छाङ्गो नराधिपः ॥
पालकाप्यमुपासीनं वेदविद्याविशारदम् ॥ १ ॥
प्रदक्षिणमभिक्रम्य पादानतकृताञ्जलिः ॥
भोजनेऽप्यथवा घासे पाने वाऽथ गुणान्प्रति ॥ २ ॥
संशयं ब्रूहि तत्त्वेन भगवन्मे प्रसीदत ॥
एवमुक्तोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥ ३ ॥
निखिलेनैव ते सर्वं व्याख्यास्याम्यनुपूर्वशः ॥
श्रूयतां मनुजाधीश यन्मां त्वं परिपृच्छसि ॥ ४ ॥
भोजनस्यानुपानस्य यथर्तुगुणसंपदः ॥
लवणं पाचयेद्भक्तमुदकं क्लेदयत्यपि ॥ ५ ॥
प्रीणनं प्राणजननं रसान्नं शोषकृद्दधि ॥
क्षीरं जीवयति श्रीमन्मांसं बृंहयति द्विपम् ॥ ६ ॥
सर्पिस्तु स्नेहनं चाय (?) क्षौद्रं शोधनमुच्यते ॥
संस्कृतो दीपनं क्षीरं तैलं वातहरं भवेत् ॥ ७ ॥
संवर्धनश्च धातूनां मेदकः प्राणवर्धनः ॥
वसा वर्धयति प्राणान्मेदो बृंहणमेव च ॥ ८ ॥
मदिरा दीपयत्यग्निं श्रमघ्ना च नराधिप ॥
यवसेन विचित्रेण मृदुना हरितेन च ॥ ९ ॥
यथर्तु सोपयुक्तेन बलं तेजश्च वर्धते ॥
भोजनं गुणसंपन्नं यथोक्तं प्राणधारणम् ॥ १० ॥
बलसंजननं चैव धातूनां च विवर्धनम् ॥
भोजने स्वादने चैवमित्येते गुणसंग्रहाः ॥ ११ ॥

---

* धनुश्चिह्नान्तरगतः पाठो नास्ति कपुस्तके ।

१ क. भवन्ति । २ क. चाऽस्य । ३ क. प्रसादतः । ४ क. संस्कृतोद्दीपनं ।

वारणानां यथाकालं पच्यन्ते मनुजाधिप ॥
ऋतुं वयः प्रमाणं च ग्रहण्याश्च बलाबलम् ॥ १२ ॥
देशं कालं च विज्ञाय ततः कुर्याच्चिकित्सितम् ॥
इत्येते विहिता राजन्नपानस्य वै गुणाः ॥ १३ ॥
पालकाप्येन मुनिना विनिश्चित्य यथातथम् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचन उत्तरस्थानेऽपानगुणाधिकारो नाम सप्तदशोध्यायः ॥ १७ ॥

---

## अथाष्टादशोऽध्यायः ।

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
सौवीरकस्तु यः प्रोक्तो जानीयां सति तत्कथम् ॥ १ ॥
कथं वा सेचनं तस्य पालकाप्यस्ततोऽब्रवीत् ॥
शिरस्नातोऽनुलिप्ताङ्गः शुक्लवासाः समाहितः ॥ २ ॥
पूजां प्रपूज्य देवेभ्यः स्वस्ति वाच्य द्विजानपि ॥
तदर्थं साधयेदम्लं विमलं शृङ्गनादिकम् ॥ ३ ॥
आढकानां चतुःषष्टि (?) पुराणघृतभाजने ॥
वचां विडङ्गं पिप्पल्यो मुद्राश्च मरिचानि च ॥ ४ ॥
शृङ्गवेरं मधुरसा पिप्पलीमूलमेव च ॥
उभे हरिद्रे कुष्ठं च मञ्जिष्ठा रोहिणी तथा ॥ ५ ॥
मधुकं लोध्रमित्येषामेकैकस्य विचक्षणः ॥
पलान्यर्धचतुर्थानि कुर्याद्वारपमत्र (?) वा ॥ ६ ॥
भल्लातकानां पञ्चाशदभयानां शतं तथा ॥
शालजम्बूपलाशस्य प्लक्षस्य वरणस्य च ॥ ७ ॥
करञ्जस्य मधूकस्य सर्जस्य कुटजस्य च ॥
खदिरस्याश्वकर्णस्य यवस्याऽऽम्रातकस्य च ॥ ८ ॥
विभीतकस्य निम्बस्य कृतमालस्य च त्वचः ॥
ग(गु)डूची कोविदारस्य सप्तपर्णस्य च त्वचः ॥ ९ ॥
उदुम्बरत्वचा सार्धं मुष्ककत्वक्तथैव च ॥
एकैकस्य त्वचो भागं पलानि दश कल्पयेत् ॥ १० ॥

एतंन्मासस्थितं प्रातः पानमध्ये प्रदापयेत् ॥
अर्धाढकीयं द्रोणं तु प्रमाणं परिकल्पितम् ॥ ११ ॥
एवं भक्ते च नागेभ्यो दद्यादेकुशलो भिषक् ॥
कृमिकोष्ठे वातगुल्मे मन्दाग्नौ दन्तिनां तथा ॥ १२ ॥
दापयेदन्तरायामे रोगेषु कफजेषु च ॥
सम्यक्सौवीरको दत्तो विधिं विज्ञाय तत्त्वतः ॥ १३ ॥
व्याधिं च शमयत्याशु बलं धातुश्च वर्धते ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रणोदितः ॥ १४ ॥

इति श्रीपालकाप्ये गजायुर्वेदे महाप्रवचन उत्तरस्थाने सौवीरक-पानविधिर्नामाष्टादशोऽध्यायः ॥ १८ ॥

---

## अथैकोनविंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
कथं प्रयोगकालेषु नागेभ्यो दीयते कथम् ॥ १ ॥
कथं हि कृतकर्मभ्यः पोतेभ्यश्च कथं सुरा ॥
स्थूलेभ्यश्च कृशेभ्यश्च मत्तेभ्यश्च प्रदीयते ॥ २ ॥
का च मद्यस्य संज्ञा वै वृद्धेभ्यो दीयते कथम् ॥
का मात्रा के गुणाः पाने कथं योज्या च वारुणी ॥ ३ ॥
षडङ्गमतिपानं च कथं कस्माच्च दीयते ॥
एतन्मे भगवन्ब्रूहि पृच्छतस्तु महामुने ॥ ४ ॥
एवं पृष्ठोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
सुरापानगुणांश्चापि संयोगं कालमेव च ॥ ५ ॥
बह्वोषधां जातरसां परिपक्वां चिरस्थिताम् ॥
तीक्ष्णां सुरां क्षौद्रयुतां दापयेत्कृतकर्मणि ॥ ६ ॥
अध्वागते गुडसुरामथवा विगुडोदकाम् ॥
मधुफाणितसंयुक्तां कोष्ठनिर्वापणे हिताम् ॥ ७ ॥
तस्य कोष्ठं शोधयति प्रसादयति शोणितम् ॥
आमं तन्द्रां पिपासां च वारुणी चापकर्षति ॥ ८ ॥

---

१ क. °तन्मांस° । २ क. °रके देशे वि° ।

अपरेद्युश्च विश्रान्ते पुनः प्रातः पुरंजय ॥
चङ्क्रमितनिषण्णाय विनीते चैव हस्तिने ॥ ९ ॥
दद्यात्षडङ्गपानं तु बलवर्णकरं हितम् ॥
पिप्पली शृङ्गवेरं च मधु तैलं गुडं सुरा ॥ १० ॥
एकत्र मूर्छयित्वा च प्रतिपानं प्रदापयेत् ॥
तत्षडङ्गप्रतीपानमिति संज्ञा विधीयते ॥ ११ ॥
तेनास्य चीयते रक्तं बलं वर्णश्च जायते ॥
ये च प्रचलिता दोषा भवन्त्यध्वप्रयोजनात् ॥ १२ ॥
क्षुभ्यमानशरीरस्य वातपित्तकफादयः ॥
एतेन प्रतिपानेन यथास्थानं नराधिप ॥ १३ ॥
शमं गच्छन्ति नागस्य दोषाय न भवन्ति वा ॥
तत्षडङ्गप्रतीपानं विश्रान्ताय प्रदीयते ॥ १४ ॥
उत्पन्नगुणकां तीक्ष्णां वारुणीं जातवक्षसाम् ॥
सुरां दद्यात्प्रयोगेण तैलं चैव न दापयेत् ॥ १५ ॥
अनयाऽध्वानं च सहते न च मूर्छति वारणः ॥
तृष्णा च न भवत्येव अनया पृथिवीपते ॥ १६ ॥
आ दशभ्यस्तु वर्षेभ्यः पोतकेभ्यो नराधिप ॥
गोक्षीरं नवनीतं च सदा प्रातर्विधीयते ॥ १७ ॥
सर्पिषा चैव सेकः स्यात्सर्पिषा चैव भोजनम् ॥
नित्यमुत्कारिकां दद्याच्छालूकानि बिसानि च ॥ १८ ॥
एतत्तु दद्यात्पोतेभ्यो ये चान्ये मधुरा रसाः ॥
आप्यायन्ते तथा पोता वपुश्चैषां न हीयते ॥ १९ ॥
स्थूलस्य मृदुमांसस्य क्षुभ्यन्तेऽङ्गानि यस्य च ॥
न तस्मै मेदकं दद्यात्तं यं क्रामादभीक्ष्णशः (?) ॥ २० ॥
तत्र श्रान्तं तथा खिन्नं न च संक्रामयेद्गजम् ॥
दद्यात्तैलोदकं पातुं योगवित्कुशलो भिषक् ॥ २१ ॥
कामं द्विपञ्चरात्रं च सोमवल्कयुतां सुराम् ॥
दद्यात्सगुडतैलं वा यथायोगं यथाविधि ॥ २२ ॥
छविः शोभा स्थिरा चास्य बलं चैव न हीयते ॥
षिडङ्गमेदको चास्मै दद्याद्वा क्षीवमेदको ॥ २३ ॥

स्थूलस्य बलमांसस्य श्लेष्मणा चार्दितस्य वै ॥
कार्त्स्न्येन विधिरुक्तोऽयं यथावद्राजसत्तम ॥ २४ ॥
अतः परं प्रवक्ष्यामि विधिं विस्तरतोऽपरम् ॥
विद्धि प्रकारयोगा हि प्रतिपानस्य निश्चितम् ॥ २५ ॥
सुरा च मधुरा पूर्वा श्लेष्मघ्ना पित्तवर्धिनी ॥
तीक्ष्णत्वाज्जरयत्यन्नं दीपनीयतमा स्मृता ॥ २६ ॥
वातशूलेषु भूयिष्ठं *तस्य दोषाः प्रशस्यते ॥
अतस्तीक्ष्णतरां प्राहुः प्रसन्नां मनुजाधिप ॥ २७ ॥
उष्णवीर्यां तनुरसां तथा वह्निप्रदीपनाम् ॥
वातश्लेष्महरां चैव तथा वह्निविवर्धनीम् ॥ २८ ॥
बलं विज्ञाय नागेभ्यस्तदेनां संप्रदापयेत् ॥
भोजितानां च नागानामनुपानेषु पूजिते ॥ २९ ॥
अत्याशितं जरयति कण्ठमार्गविशोधनी ॥
सौमनस्यकरी हृद्या मनोवर्णप्रसादनी ॥ ३० ॥
वातलेष्वपि सुतरां मन्दाग्नौ च प्रशस्यते ॥
मन्दोद्धृता या सुतरां तरुणी साप्यतिस्थिरा ॥ ३१ ॥
अव्यक्तरसवीर्यत्वान्न सा कर्मसु पूजिता ॥
वातपित्तप्रकोपी तु सीधुरुक्तो मनीषिभिः ॥ ३२ ॥
रूक्षश्च सकषायश्च विपाके कटुकस्तथा ॥
रूक्षत्वात्कटुतिक्तश्च श्लेष्माणमपकर्षति ॥ ३३ ॥
तथा रूक्षकषायत्वाद्रक्तपित्तहितोऽपरः ॥
एष पक्वरसः सीधुरपक्वरस एव च ॥ ३४ ॥
तत्तुल्यो रसवीर्येण गौरस्त्वम्लगुणाधिकः ॥
शार्करो भृशशीतत्वाद्दृष्टो वातविवर्धनः ॥ ३५ ॥
पित्तकोपी तु तीक्ष्णत्वाच्छ्लेष्माणं च निरस्यति ॥
अरिष्टो दीपनीयत्वात्सर्वेभ्योऽभ्यधिकैर्गुणैः ॥ ३६ ॥
सर्वदोषहरश्चैव नागानां मनुजाधिप ॥
उष्णवीर्यश्च रूक्षश्च विपाके कटुकश्च सः ॥ ३७ ॥

---

* 'तस्या दोषः' इति भवेत् ।

---

१ क. पित्तप्रवर्धनीम् ।

आस्वादतः स कटुकः स कषायरसः स्मृतः ॥
न वर्धयति नागानां कफपित्ते विशेषतः ॥ ३८ ॥
शाखावातं कोपयति स्नेहं मांसं च कर्षयेत् ॥
तस्मात्स्निग्धानि पानानि स्नेहयुक्तं च भोजनम् ॥ ३९ ॥
अरिष्टं पिबतो राजन्देयानि कुशलेन तु ॥
अल्पां तमनुपिष्टां तु माध्वीकं संप्रचक्षते ॥ ४० ॥
सुगन्धि च विशेषेण सुरसं चापि निर्दिशेत् ॥
कषायतिक्तरूक्षोष्णं प्रमोदि विशदं लघु ॥ ४१ ॥
कायाग्निदीपनं चैव मृद्वीकं मधु निर्दिशेत् ॥
मैरेयो मधुरः स्वादुस्तीक्ष्णो दीपनबृंहणः ॥ ४२ ॥
लघुर्विपाके कटुकः पित्तलो मारुतापहः ॥
असंप्राप्तं तथाऽम्लं च लवणं च विवर्जयेत् ॥ ४३ ॥
अग्निना दूषितं यच्च यच्च भाजनदूषितम् ॥
एतैर्दोषैः परीतानि मद्यानि प्रतिषेधयेत् ॥ ४४ ॥
करवीरोत्पलाम्भोजतुल्यगन्धेन यद्भवेत् ॥
तिलतैलसवर्णं स्याद्घृतमण्डनिभं च यत् ॥ ४५ ॥
आस्वादे तिक्तमधुरं प्रकृतिस्थं बलान्वितम् ॥
ईदृशं पाययेन्मद्यं सर्वदोषविनाशनम् ॥ ४६ ॥
पुनर्दोषान्प्रवक्ष्यामि दुष्टमद्यस्य तत्त्वतः ॥
विदाहमम्लिकां कुर्यादभिष्यन्दं हि नीलिकाम् ॥ ४७ ॥
त्वग्दोषान्पुष्पिता कुर्याद्घ्राणव्यक्तामरोचकम् ॥
सादोदावर्तगुल्मांश्च मरणं चाऽऽशु दन्तिनः ॥ ४८ ॥
उष्णेन चाभिसंतप्तादतः पित्तं प्रकोपयेत् ॥
अवसन्ना लेखनी स्यात्किण्वगन्धिर्न जीवति ॥ ४९ ॥
भक्तदुष्टा तथाऽऽध्मानं रसवन्त्वा कफोद्भवम् ॥
एवमेते सुरादोषा मया सम्यगुदाहृताः ॥ ५० ॥
एभिर्दोषैर्विमुक्तानि मद्यानि प्रतिपाययेत् ॥
इति मद्यस्य नृपते गुणा दोषा मयेरिताः ॥ ५१ ॥

अत ऊर्ध्वं प्रवक्ष्यामि प्रतिपानं षडर्तुकम् ॥
सर्वं वा लवणं दद्याद्धेमन्ते सुरसां सुराम् ॥ ५२ ॥

जातीव प्रसन्नां वा सीधुं वाऽपि चिरस्थिताम् ॥
दापयेल्लवणैः सार्धं नागानां शिशिरागमे ॥ ५३ ॥
माध्वीकं वा प्रसन्नां वा सीधुं वा त्र्यूषणान्वितम् ॥
दद्याद्वसन्ते नागेभ्यो मुनिप्रणं यथाविधि ॥ ५४ ॥
सरकः सगुडो ग्रीष्मे प्रदातव्यो विजानता ॥
माध्वीको वा जलयुतः प्रतिपानं वा सशर्करम् ॥ ५५ ॥
मध्वासवमरिष्टं वा सक्षौद्रं दापयेद्भिषक् ॥
वर्षासु सगुडं वाऽपि तैलं वा मदिरान्वितम् ॥ ५६ ॥
मध्वासवः शार्करो वा सजलः शर्करायुतः ॥
पयो दधि शरदागमे करिभ्यो नृपसत्तम ॥ ५७ ॥
प्रायशः पैष्टिकं मद्यं वातिकानां प्रशस्यते ॥
माध्वीकं मधुगौडो वा कफपित्ताधिकास्तु ये ॥ ५८ ॥
गुडान्विताऽनिलहरा हिता रक्तजयाय च ॥
बृंहणी दीपनी हृद्या वृष्या बल्या मनस्करी ॥ ५९ ॥
सद्यःश्रमहरा चैव वारणानां नराधिप ॥
वातश्लेष्मकृमिहरा सुरा तैलसमन्विता ॥ ६० ॥
दीपयत्यन्यथा पित्तं विधिना वर्तिता सुरा ॥
पित्तघ्नी विधिवद्युक्ता कोष्ठदोषनिबर्हणी ॥ ६१ ॥
सपञ्चलवणा हृद्या सर्वदोषापकर्षणी ॥
क्षुभितावर्धवंशानां प्रवातश्रमवक्षसाम् ॥ ६५ ॥
मदिरा दन्तिनां पथ्या लाक्षया सह योजिता ॥
संधानार्थं शरीरस्य धातुसाम्यार्थमेव च ॥ ६३ ॥
रक्तषोडशभागेन तुल्यां लाक्षां प्रदापयेत् ॥

—:0:—

अत ऊर्ध्वं प्रवक्ष्यामि कृशानां बृंहणे विधिम् ॥ ६४ ॥
कर्मणा ये परिक्षीणा वधबन्धेन वा पुनः ॥
हीनया विधया वाऽपि प्रभिन्ना मिश्रिताश्च ये ॥ ६५ ॥
क्षीणशोणितमांसाश्च कृशकायाश्च दन्तिनः ॥
सप्तरात्रं पयो दद्यात्ततः कुल्माषमेदकम् ॥ ६६ ॥
निर्यूषं कारयेत्सम्यक्कुलत्थानामथाऽऽढके ॥
त्रिंशद्विंशत्पलानि स्युः किण्वस्य च गुडस्य च ॥ ६७ ॥

एतत्प्रतिनये दद्यादेकरात्रं स्थितं भिषक् ॥
कुल्माषमेदकं दद्याद्रक्तस्नेहेन मूर्छितम् ॥ ६८ ॥
कुल्माषमेदकात्सद्यः शोणितं तु प्रजायते ॥
कच्छुकाशाल्मलींश्चापि खर्जूर्यांश्चापि मस्तकम् ॥ ६९ ॥
शाकवृक्षयवांश्चापि ये चान्ये मधुरा द्रुमाः ॥
छेदयेत्कुंपलार्थाय तैरेवं बृंहयेद्गजम् ॥ ७० ॥
हरितैश्चापि यवसैर्विचित्रैर्मृदुभिर्हितम् ॥
बृंहयेद्बृंहणकरैर्न च तीक्ष्णैरुपाचरेत् ॥ ७१ ॥
अवेक्षते सदा नागान्बन्धूनिव सदा भिषक् ॥
सुरोपयोगकुशलो मेदकेषु च शास्त्रवित् ॥ ७२ ॥
भृशं संतप्तदेहा ये बलात्कृशतराश्च ये ॥
अत्यन्तरूक्षकायाश्च रक्तपित्तातुराश्च ये ॥ ७३ ॥
बहुप्राणपरीताश्च पयसोऽभिद्रुतास्तथा ॥
नवग्रहैर्ये तेषां तु सुरापानं न शस्यते ॥ ७४ ॥
विपन्नं चातिवृत्तं च मद्यं मेदकमेव च ॥
वारणेभ्यो न दातव्यमतिमात्रं च यद्भवेत् ॥ ७५ ॥
नेष्टं च क्षीरपीताय मद्यपीताय वा पयः ॥
विरुद्धा वादरहितमुभयं विद्धि दन्तिने ॥ ७६ ॥

इति श्रीपालकाप्ये गजायुर्वेदे महाप्रवचन उत्तरस्थाने सुराप्रतिपानविधिर्नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथ विंशोऽध्यायः ।

---

अथाङ्गपतिरमरसदृशवरुणधनपतिसत्त्वे गुरुविक्रमप्रशान्तशत्रुहारकेयूरमुकुटमणिप्रभाभिरुद्द्योतितपादपङ्कजं क्रतुसमृद्धं पावकप्रभाभिरिव विराजमानमभिवाद्य विनयात्पप्रच्छ पालकाप्यम्, भगवन् ये त्विमे स्वयूथसुखसंवृद्धा हस्तिनः पर्वतनदीनदसरःप्रस्रवणदरीगिरिनिकुञ्जेषु विनतपुष्पभारशाखेष्वभिरताः क्वचिद्ग्रहणमुपगच्छन्ति, तान्दाम्यमानान्सोद्वेगान्गुरुबन्धाङ्कुशवाग्दण्डप्राजनैरभिहन्यमानान्दृष्ट्वा महत्कारुण्यमुत्पद्यते मनसः । तेषां ग्राम्यव्याधिसंतप्तदेहानां चिकित्सितमुपदेष्टुमर्हसि ॥

---

१ ख. घ. वा वादहि° ।

अथ विनयादवनतशिरसमभिसमीक्ष्योवाच पालकाप्यो महामुनिः—शृणु राजन्गुग्गुलुद्रव्यमनेकगुणसंपन्नममृतोपमं रसायनभूतमित्येषां चिकित्सार्थमुत्पादितं भगवता पशुपतिना । तस्योपयोगमुपदेक्ष्यामः । स्तम्भादौ वातिकेषु विकारेषु तथा बालपाकलुप्रसुप्तमृदुग्रहकुक्कुटमहापाकलोत्कर्णवातानाहविषमेहशिरोरोगतहृदयशूलगात्रस्तम्भस्कन्दमूर्छापाण्डुरोगहस्तग्रहवातगतिगुल्माभिषन्न(ण्ण)मृज्जगधानाहमेहोदरशोषिणां कृमिकोष्ठिक्षीरवसा॰घन्यापदादीनां वातकफादीनां विकाराणामन्येषां च प्रशस्तम् । तत्र प्रशस्तदेशजातमनुपहतवीर्यमचिरस्थितमशुष्कमनिर्दग्धमनन्यद्रव्यसंयुक्तमृत्तिकाङ्गारवर्जितमभिसंवीक्ष्याञ्जनरुचकभृङ्गराजप्रतीकाशं महिषाक्षं चोपकल्प्य पलद्वयात्प्रभृति विंशतिपलिकमराशिं कृत्वा ततस्तं महति कटाहे दृढे कुम्भेष्वा(वा) सूयते गोमूत्रत्रिफलाप्रसन्नामैरेयाणामन्यतमेन द्रव्येण यदि तदिवाकरकिरणसंतप्तं संजातफेनबुद्बुदं भवति, तदा बलवद्भिः पुंभिः कन्यकाभिर्वा दृषदि पेषयित्वाऽञ्जनमिव श्लक्ष्णं ततः सुमनसमभिसमीक्ष्य वारणं प्राक्सूर्योदयाद्वेणुभिः सुपरिगृहीतमारोग्यार्थं तु पूर्वोक्तैरेव द्रव्यैर्यथायोगमवलोक्य पाययेच्छारीरमानसदुःखकोपशोकभयदर्पहर्षैर्विमुक्तं युक्त्या विरिक्तं बुभुक्षितं सुस्थितसर्वाङ्गं गजम् ।

अथवा द्विपञ्चमूलत्रिफलाक्वाथपिष्टं पुनः प्रक्वाथ्य शीतीभूतं जीर्णाहाराय दद्यात् । क्षीरं प्रतिपानाय दद्यात् । स्वापयेदेकपक्षतः । यवसकवलकुवलजा(या)नां प्रतिषेधः । अथ प्रथमायां मध्याह्नवेलायां यवचतुर्गुणं संयुक्तेन्दुनीलफलहरितेन यवसेन कण्ठशोधनार्थं प्रतिच्छाद्य गोजाविमाहिषीणां पयः शृतमर्धभागावशिष्टमवतार्यं शर्कराचूर्णसंसृष्टं पाययेत् । तेनास्य जीर्णौषधस्य कोष्ठदाहशान्तिर्भवति । ततो जीर्णौषधं वारणमभिज्ञाय पुनः प्रच्छाद्य कवलैः स्वच्छन्दसुखप्रचारं चैनं नदीनदसरःपर्यन्तेषूदकपूर्णेष्ववगाहयेत् । विधानार्थं पुराणषष्टिकानामोदनं मुद्गयूषेण घृतस्निग्धेन सायमेककालं भोजयेत् । शय्याभागोऽस्य खरोष्ट्राणामेकतमेन पुरीषेणाऽऽतपशुष्केण स्वकरीषेण वा शय्याविधिविधानमसंबाधं कुर्यात् ।

तत्र श्लोकाः—

एष एव विधिः कार्य आ समाप्तेर्यथाविधि ॥
अन्यथा क्रियते मोहात्ततो व्यापत्तिमर्हसि ॥ १ ॥
दीनो म्लानमुखस्तस्य वेपथुः श्वयथुः क्लमः ॥
कदाचिदुष्णं भजते कदाचिच्छीतमेव च ॥ २ ॥

भवेद्धृत्कर्णसंतापी तृष्णया चातिपीडितः ॥
पुरीषं रक्तसंमृष्टमेकैकं कुरुते ध्रुवम् ॥ ३ ॥
राजद्वेषी भवेच्चास्य रक्तमेहित्वमेव च ॥
रसैश्चतुर्भिः संयुक्तो लवणाम्लविवर्जितः ॥ ४ ॥
तिक्तः कषायो मधुरस्त्रिदोषघ्नः कटुः स्मृतः ॥
माधुर्याच्छमयेद्वायुं कषायत्वाच्च पित्तहा ॥ ५ ॥
तिक्तत्वाच्छ्लेष्मशमनः स्निग्धत्वाद्बलवर्धनः ॥
कटुत्वाद्दीपनो राजन्कृमिघ्नश्चापि कीर्तितः ॥ ६ ॥
*स्नेहः पर्युषितानां च बृंहणार्थं हितः सदा ॥
कर्षणः केवलः शस्तः स्थूलानां मूत्रकृत्ततः[1] ॥ ७ ॥
असकृद्दोषशमनो मङ्गल्यः पुष्टिवर्धनः ॥
पाययेन्मासमेकं तु गुग्गुलुद्रव्यमुत्तमम् ॥ ८ ॥
कायाग्निबलसात्म्यानि वर्ष्म चावेक्ष्य तत्त्ववित् ॥
विधानं स्वच्छवृत्तस्य षड्तून्क्रमशः शृणु ॥ ९ ॥
दीयते निष्परीहारं गजेभ्यः सर्वदा यथा ॥
शस्यते तैलसहितं दद्यान्मद्यानुपानिकम् ॥ १० ॥
क्षीरानुपानिकं राजन्दद्याच्छरदि सर्पिषाम् ॥
हेमन्ते शिशिरे चैव कटुतैलसमाहितम् ॥ ११ ॥
दद्याद्वसन्ते तैलेन सुरायुक्तेन भूपते ॥
ग्रीष्मे घृतसमायुक्तं सितास्वण्डानुपानिकम् ॥ १२ ॥
एवं कण्ठविशुद्ध्यर्थं सर्वेष्वृतुषु शस्यते ॥
यस्य दोषस्य शमनं यद्द्रव्यं समुदाहृतम् ॥ १३ ॥
तद्द्रव्ययुक्तो देयो वा तच्छान्त्यै गुग्गुलोर्नृप ॥
वातादौ गुग्गुलोः कुर्यात्तैलस्यापि चिकित्सितम् ॥ १४ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचने वृद्धपाठे गुग्गुलुविधि-
र्नाम विंशोऽध्यायः ॥ २० ॥

---

* ख—घपुस्तकयोस्तु 'स्नेहयु·········तानां' इत्येवं समुपलभ्यते ।

1. क. मूत्रकृच्छ्रतः ।

अथैकविंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
के गुणाः क्षीरदानस्य वारणानां विशेषतः ॥ १ ॥
केभ्यो देयमदेयं वा पयः कतिविधं भवेत् ॥
एवमुक्तोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥ २ ॥
मधुरं शीतवीर्यं च विपाके मधुरं पयः ॥
स्निग्धमत्यर्थवृष्यं च तेजोबलविवर्धनम् ॥ ३ ॥
चक्षुष्यं बृंहणीयं च जीवनीयं रसायनम् ॥
कफाग्निवर्धनं चैव प्राणाह्लादरुचिप्रदम् ॥ ४ ॥
जरायुजानां सत्त्वानां जन्मप्रभृति पार्थिव ॥
सात्मीभूतं पयस्तस्मात्पयस्तु श्रेष्ठमुच्यते ॥ ५ ॥
तस्याष्टौ योनयः प्रोक्ताः गौः करेणुर्हया खरी ॥
महिषी करभी चैव च्छगला चाविकेति च ॥ ६ ॥
तत्र गव्यं पयः श्रेष्ठं दन्तिनां नयकोविद ॥
सृष्टमूत्रपुरीषत्वात्प्रष्ठयोनितयाऽपि च ॥ ७ ॥
कारेणवं पयः शीतमत्यर्थं गौरवान्वितम् ॥
कषायानुरसं पथ्यं कलभानां व्यवायि च ॥ ८ ॥
श्लेष्मलं वाडवं बल्यं नातिपित्तहरं स्मृतम् ॥
गार्दभं तु पयोद्रिक्तं कफघ्नं वातकोपनम् ॥ ९ ॥
बहुमूत्रपुरीषं स्यात्पयोऽभिष्यन्दि माहिषम् ॥
कारभं लवणं सोष्णं दीपनं लघु रूक्षकम् ॥ १० ॥
तत्रापि च गुणश्रेष्ठं प्राहुश्छागं पयो बुधाः ॥
अजानामल्पकायत्वात्कटुतिक्तनिषेवणात् ॥ ११ ॥
नात्यम्बुपानाद्व्यायामात्सर्वव्याधिहरं पयः ॥
अल्पस्नेहं तु विज्ञेयं वातघ्नं ह्याविकं पयः ॥ १२ ॥
वृद्धा बालास्तथा मत्ताः श्रान्ता ये चापि दुर्बलाः ॥
विहिताहरणीयैश्च संनिपातेन चापि ये ॥ १३ ॥
रक्तपित्तश्रमात्क्षीणा क्षीणा ये चापि वारणाः ॥
केवलं घृतयुक्तं वा क्षीरं तेभ्यः प्रदापयेत् ॥ १४ ॥

---

१ ख. घ. °योगुणाः ॥ अ° ।

पीतोदकाय च पयो न देयं स्यात्कदाचन ॥
न चातिस्नेहपीताय मद्यपीताय चैव हि ॥ १५ ॥
श्लेष्मरोगाभिभूताय गजायाजीर्णकाय च ॥
तद्धि कुष्ठकिलासानां दद्रुः सपिटकोद्गमाः ॥ १६ ॥
एवंविधानि जनयेत्कण्डूः पालित्यमेव च ॥
पयः कुभाजनगतं यच्चाम्लरसदूषितम् ॥ १७ ॥
शरद्धेमन्तवर्षासु शिशिरे चैव चारणः ॥
पयः पुष्टानसा·········अध्वकर्मसु योजयेत् ॥
भवन्ति सं(मु)हितगदा निरातङ्काश्च वारणाः ॥ १८ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचने क्षीरदानविधिरध्याय एकविंशः ॥ २१ ॥

---

अथ द्वाविंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
कृतजापमृषिश्रेष्ठं विनयेन कृताञ्जलिः ॥ १ ॥
पृष्टं मे निखिलं किंचिद्याकरोतु महातपाः ॥
ग्रीष्मस्य चान्तिमे पक्षे वर्षाणामागमे तथा ॥ २ ॥
दिवसे वाऽपि संपूर्णे आषाढे द्विजसत्तम ॥
ऐरावतसमो यस्तु संभूतः स कथं मुने ॥ ३ ॥
देवता का भवेत्तस्य सुतो वा कस्य सत्तमः ॥
केन वा कारणेनैव मर्त्यलोके महामुने ॥ ४ ॥
वर्षासु सततं वाऽपि पूज्यते च नराधिपैः ॥
एवमुक्तो मुनिश्रेष्ठः प्रोवाचेह जनाधिपम् ॥ ५ ॥
शुभां राजन्कथां दिव्यां पुण्यां प्रव्याहृतां मया ॥
श्रोतुमर्हसि भद्रं ते यथावदिति निश्चितम् ॥ ६ ॥
पुरा कृतयुगे राजन्देवानां दानवैः सह ॥
संग्रामे दारुणे राजन्निवृत्ते तारकामये ॥ ७ ॥
प्रहृष्टमनसः सर्वे देवा वृत्रभृदादयः ॥
दिग्वारणान्पूजयित्वा तत्तत्कामान्महाबलान् ॥ ८ ॥

---

१ क. °ण्डूः खालि° । २ क. °ष्टान्द्रसीकुर्यादुष्णक° । ३ क. घ. संभूत° ।

ससृजुः सपदि स्वान्स्वान्पूजयित्वा यथाक्रमम् ॥
अथ रुद्रो महातेजास्त्वैरावणगजं सुतम् ॥ ९ ॥
मेघं नाम महासत्त्वं महावीर्यं महाबलम् ॥
कैलासपर्वताकारं वायुवेगसमं जवे ॥ १० ॥
कुन्देन्दुकुमुदप्रख्यं सर्वव्यञ्जनपूजितम् ॥
शुभलक्षणसंपन्नमसृजत्पुत्रमंष्टमम् ॥ ११ ॥
परितुष्टेन मनसा साक्षाद्भूतपतिर्भवः ॥
उवाच मेघं वरय वरं यन्मनसेप्सितम् ॥ १२ ॥
ब्रवीमि देवतश्रेष्ठ दीयतां मे वरः प्रभो ॥
आषाढ्यां क्रियते पूजा तत्र या देवदानवैः ॥ १३ ॥
यक्षराक्षसगन्धर्वैस्तथा दैत्यैश्च किंनरैः ॥
पिशाचैः पन्नगैश्चापि सर्वैर्भूतैः समानुषैः ॥ १४ ॥
यथोत्साहातिशयान्नित्यं लिङ्गस्य तेजसा ॥
मम या हि महारुद्र तुभ्यं पूजां समाप्नुयात् ॥ १५ ॥
एवमुक्तस्तु भगवान्प्रोवाचेदं गजोत्तमम् ॥
एवमेव हि दिङ्नाग सर्वं ते च भविष्यति ॥ १६ ॥
श्रीगजो नाम विख्यातस्त्विह लोके भविष्यति ॥
अर्चयिष्यन्ति ते सर्वे नराः संभूय सर्वशः ॥ १७ ॥
इत्युत्पत्तिः समाख्याता श्रीगजस्य महात्मनः ॥
तेनैषा क्रियते पूजा द्विरदानां तु नित्यशः ॥ १८ ॥
इम(द)मन्यत्प्रवक्ष्यामि कल्पमस्य नराधिप ॥
चतुर्णां क्षीरवृक्षाणां द्रव्यमन्यतमं बुधैः ॥ १९ ॥
उपोष्य ग्राहयेद्वैद्यो बलिं होमं च कारयेत् ॥
पुण्याहघोषेण ततः स्वस्ति वाच्य द्विजोत्तमान् ॥ २० ॥
पञ्चारत्निप्रमाणं स्यादग्रन्थिकमकोटरम् ॥
श्लक्ष्णं चैवानुपूर्वं च साधुतक्षावतारितम् ॥ २१ ॥
आयामात्तस्य च भवेत्कर्णिका वा दशाङ्गुला ॥
विंशत्यङ्गुलमानाहात्कार्या स्यात्सुसमाहिता ॥ २२ ॥

---

१ क. °णसुतं गजम् । २ क. महावीर्यं महासत्त्वं महाबलम् । ३ क. °वाचेदं च'वरय व° । ४ क. सदा ।

वला गवाक्षवलिनमग्निव्यञ्जनकं तथा ॥
विदलं पाञ्चिकं भाण्डं तथैवाशनकण्टकम् ॥ २३ ॥
सचन्दनाश्च कलशाश्चतस्रोदककुम्भिकाः ॥
सामान्यपन्नवत्सर्वं शेषं द्रव्यमुपाहरेत् ॥ २४ ॥
ततो वैद्यः शुचिर्भूत्वा नमस्कृत्य महेश्वरम् ॥
सनत्कुमारं देवं च श्रीगजं च महाबलम् ॥ २५ ॥
सर्वान्देवान्नमस्कृत्य दिशश्चाष्टौ समाहितः ॥
सर्वानृषिगणांश्चैव तथा नक्षत्रमण्डलम् ॥ २६ ॥
समुद्रानापगाः सर्वाः समहोरगराक्षसाः ॥
पर्वतान्सर्वभूतानि जङ्गमाजङ्गमं च यत् ॥ २७ ॥
ऐरावताद्याश्च तथा विख्याता ये दिशां गजाः ॥
उपोष्य संविशेद्रात्रौ वासोभिरहतैर्भिषक् ॥ २८ ॥
सेनान्यं च नमस्कृत्य शुचिर्भूत्वा कृताञ्जलिः ॥
कुशास्तरणसंवीते स्थण्डिले प्रयतः शुचिः ॥ २९ ॥
श्वोभूते पुनरुत्थाय स्नातो भूत्वा समाहितः ॥
तथोक्त्वाऽथ गजेन्द्रस्य नमस्कृत्याभिरोहयेत् ॥ ३० ॥
सच्छत्रवालव्यजनमाल्यदामोपशोभितम् ॥
नन्दितूर्येण महता वाद्यमानेन शोभितम् ॥ ३१ ॥
(*सालंकरणकेयूरहेमजालविभूषितम् ) ॥
नानाकारैस्तथा वस्त्रैः समन्तात्परिवेष्टितम् ॥ ३२ ॥
चन्दनागुरुमिश्रैश्च सर्वगन्धैरलंकृतम् ॥
स्त्रीरूपवेषैः पुरुषैः परिचर्योपशोभितम् ॥ ३३ ॥
जल्पद्भिर्निष्ठुरं वाक्यं महसद्भिस्तथैव च ॥
चतुष्पथे वीथिमार्गे चत्वरेषु त्रिकेषु च ॥ ३४ ॥
राजमार्गेषु च भृशं घोषयन्तस्ततस्ततः ॥
त्वयि तुष्यन्ति(?) ते देवा राजानोऽपि जयैषिणः ॥ ३५ ॥
सेनापतिरमात्याश्च ये चान्ये तद्विधा जनाः ॥
पूजयन्ति यथान्यायं ये चैव गजजीविनः ॥ ३६ ॥

* कपुस्तके त्रुटितोऽयं पाठः ।

१ क. °होदररा° ।

अतोऽन्यथा प्रकुर्वाणाः सराष्ट्रबलवाहनाः ॥
राजानोऽपि विनश्यन्ति देवतातिक्रमेण वै ॥ ३७ ॥
प्रयुञ्जते च ये तस्मै सम्यक्पूजां नराधिप ॥
सपुत्रदारा वर्धन्ते सराष्ट्रबलवाहनाः ॥ ३८ ॥
आज्ञां महेश्वरस्येमां प्रतिगृह्णन्ति ये नृपाः ॥
संग्रामे सममप्यन्ते ते भवन्ति विदारणाः ॥ ३९ ॥
काले बीजानि रोहन्ति सम्यग्वर्षति वासवः ॥
न भवत्यत्र मरको व्याधिहानिस्तथैव च ॥ ४० ॥
निरामयं च भुञ्जीत राज्ञा कृत्स्ना वसुंधरा ॥
रत्नाकरवती देवी सशैलवनकानना ॥ ४१ ॥
अरोगा बलवन्तश्च जयन्त्येते मतङ्गजाः ॥
गजोपजीविनः सर्वे कामभोगैः समन्विताः ॥ ४२ ॥
पुत्रैश्च पशुभिश्चैव जीवन्ति च शतं समाः ॥
अरोगा बलवन्तश्च जायन्ते वै प्रजा भृशम् ॥ ४३ ॥
पुत्रार्थी लभते पुत्रान्धनार्थी लभते धनम् ॥
यांश्च प्रार्थयते कामान्सर्वांस्तान्प्राप्नुयान्नरः ॥ ४४ ॥
एवं वृत्तं महाराज शंभोर्भक्त्याऽन्वितं विभो ॥
श्रीगजस्य प्रतिकृतं त्रिषु लोकेषु पूजितम् ॥ ४५ ॥
मयाऽऽख्याता महाबाहो विस्तरेण यथाक्रमम् ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेद उत्तराभिधाने परिवारचतुर्थस्थाने
द्वाविंशः श्रीगजसंभवाध्यायः ॥ २२ ॥

---

## अथ त्रयोविंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
सर्वं द्रव्यगतं प्रश्नं क्रमेण मुनिसत्तमः(म्) ॥ १ ॥
सर्पिस्तैलं वसा मज्जा क्षीरं मूत्रं तथा दधि ॥
किमर्थं दीयते विप्र क्षौद्रं किमिति दीयते ॥ २ ॥
लवणोदकतैलं वा मेदकं वा सुसंस्कृतम् ॥
किमर्थं भोजनं वाऽपि किमर्थं वाऽनुवास्यते ॥ ३ ॥

किमर्थं सर्वसेकश्च शिरोभ्यङ्गस्तथैव च ॥
गैरिकेण समायुक्तः ससेकश्चापि कं पुनः ॥ ४ ॥
गात्रसेकः किमर्थं च किमर्थं तैलशोधनम् ॥
तथा तैलकषाये वा किमर्थं दीयते पुनः ॥ ५ ॥
दीपतैलं किमर्थं वा किमर्थं रसभोजनम् ॥
एतन्मे सर्वमाचक्ष्व यथावदनुपूर्वशः ॥ ६ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
शृणु सर्वं महाराज यदर्थं दीयते घृतम् ॥ ७ ॥
*स्तंज्य(?)गात्रपरो ये च (†ये च पर्यश्रुलोचनाः ॥
क्षीणशोणितमांसाश्च स्तब्धाङ्गाश्चापि ये गजाः ॥ ८ ॥
कर्मभिर्विहता ये च ) भारैर्गुरुभिरर्दिताः ॥
मदक्षीणाश्च ये नागा वृद्धा रूक्षास्तथैव च ॥ ९ ॥
ये कृशाश्चावसन्नाश्च लुप्ताङ्गाश्च विशेषतः ॥
युद्धाध्वगमने क्लिष्टा ये च नागा महीपते ॥ १० ॥
व्याधिभिः प्रतिपन्नाश्च नागा ये चापि दुर्बलाः ॥
घृतं तेभ्यः प्रदातव्यं व्याधिता ये च पित्तलाः ॥ ११ ॥
घृतं हि मधुरं शीतं मेदःश्लेष्मविवर्धनम् ॥
सृष्टमूत्रपुरीषं च बृंहणं बलवर्धनम् ॥ १२ ॥
ये च वातप्रकोपेन(ण) श्लेष्मणा च मतङ्गजाः ॥
उपसृष्टा महाराज तेभ्यस्तैलं प्रदापयेत् ॥ १३ ॥
उष्णाभितापि कटुकं त्वच्यं बलविवर्धनम् ॥
पित्तलं च तथा तैलं कफानिलनिबर्हणम् ॥ १४ ॥
यस्तु कर्माभिनीतस्य धेनुकासु च निःसृतः ॥
मदक्षीणस्तथा स्रद्यो(?) वयसा चापि विच्युतः ॥ १५ ॥
तस्मै मज्जा प्रदातव्या महाराज.वसाऽपि च ॥
पृथक्प्राह स योगैश्च ततः संपद्यते सुखम् ॥ १६ ॥
मधुरश्चोष्णवीर्यश्च विपाके कटुकः स्मृतः ॥
सर्वैरेतैर्गुणैर्युक्तो ज्ञेयो मज्जा वसाऽपि च ॥ १७ ॥

* 'स्तब्धः' इति भवेत् । † धनुश्चिह्नान्तरगतः पाठो नास्ति कपुस्तके ।

१ क. स्रज्यगात्र° । २ क. °राऽप्रे च ।

एतदर्थं भवेदेषा वसा मज्जा च दन्तिनाम् ॥
स्नेहश्चतुर्विधो ज्ञेयो बलार्थं दीयते पुनः ॥ १८ ॥
उपस्थाने च संयाने वर्तमाने च बन्धने ॥
परस्परविमर्दे च कर्मणा चातिपीडिते ॥ १९ ॥
अध्वनोऽत्युल्लङ्घनाद्वाऽपि गात्राणां विचयेन वा ॥
अवपानेन बन्धैर्वा दूरं वाऽऽसन्नवर्तनात् ॥ २० ॥
विश्लिष्टं मारुताद्भग्नं भग्नं यस्य च विच्युतम् ॥
पानार्थं प्रोच्यते तस्मै युक्तं स्नेहं चतुर्विधैः ॥ २१ ॥
यो हि सर्वाङ्गरोगी स्यादुरुपक्षहतोऽपि वा ॥
सर्वस्नेहसमायुक्तो महास्नेहः प्रशस्यते ॥ २२ ॥
इति स्नेहगुणाः प्रोक्ताः क्षीरस्यापि गुणाञ्शृणु ॥
अपृ(प)सृष्टा मदक्षीणा वयोतिताः क्षताश्च ये ॥ २३ ॥
कर्मप्रबद्धा मत्ताश्च दुर्बलाभिहि(ह)ताश्च ये ॥
दग्धाश्च कवलैस्तीक्ष्णैः शोणितोपहताश्च ये ॥ २४ ॥
पित्तोपसृष्टाश्च गजास्तेभ्यः क्षीरं प्रदापयेत् ॥
शमयत्यजि(ति)तापं च दीप्ताग्निश्चोपजायते ॥ २५ ॥
सम्यग्वातं च जयति च्छविश्चास्य प्रसीदति ॥
जीवनं बृंहणं हृद्यं सात्म्यं बलविवर्धनम् ॥ २६ ॥
मधुरं शीतवीर्यं च तेजःसामर्थ्यवर्धनम् ॥
आरोग्यजननं चैव तस्मात्क्षीरं प्रदापयेत् ॥ २७ ॥
क्षीरस्यैते गुणाः प्रोक्ता मूत्रस्यापि गुणाञ्शृणु ॥
दद्रूं कण्डूं(?) च उष्णं च जायन्ते यस्य दन्तिनः ॥ २८ ॥
मृत्तिकाबद्धकोष्ठाश्च श्लेष्मिकाश्च मतङ्गजाः ॥
कृमिकोष्ठातुरा ये च तेषां मूत्रं सदा हितम् ॥ २९ ॥
वातघ्नं चोष्णवीर्यं च तिक्तं क्षारान्वितं तथा ॥
प्रभिन्नवर्चः कटुकं विपाके मूत्रमुच्यते ॥ ३० ॥
मूत्रस्यैते गुणाः प्रोक्ताः शृणु मद्यगुणांश्च नः ॥
मारुतोपहतो यश्च यश्च वाऽऽध्मायतेऽधिकम् ॥ ३१ ॥
मूत्रसङ्गातुरो यश्च यश्च खादति मृत्तिकाम् ॥
अध्वनाऽपि च युक्तो यः कर्मणा यश्च पीडितः ॥ ३२ ॥

१ क. अध्वना°।

स्वच्छवृत्तस्य नागस्य प्रतिपानं सदा हितम् ॥
तेभ्यो देया सुरा नित्यं संस्कृताऽसंस्कृता भवेत् ॥ ३३ ॥
तथा वातानुलोम्यं च दीप्ताग्निश्चोपजायते ॥
श्रमश्च व्यपगच्छेत्तं मनस्वी चोपजायते ॥ ३४ ॥
उष्णवीर्या च तीक्ष्णा च विपाकेऽम्ला स्वभावतः ॥
कथयन्ति सुराज्ञास्तां केचित्पञ्चरसान्विताम् ॥ ३५ ॥
तस्मान्नित्यं सुरा देया वारणेभ्यश्चिकित्सकैः ॥
येषां श्लेष्मा च पित्तं च मारुतश्चापि कुप्यति ॥ ३६ ॥
पूर्वोक्तेन प्रमाणेन दधि तेभ्यः प्रदापयेत् ॥
अम्लं चैवाम्लपाकं च विपाके गुरु चोच्यते ॥ ३७ ॥
कफयोनेस्तथा क्लेदे पित्तयोनेस्तथैव च ॥
छर्घाति(?)वातिसारेषु विषदुष्टेषु हस्तिषु ॥ ३८ ॥
कफमांसप्रवृद्धेषु दापयेत्संततं मधु ॥
(† कर्शनं शीतवीर्यं च रूक्षं गुरु लघु स्मृतम् ॥ ३९ ॥
शोधनं लेखनं चैव कफपित्तहरं मधु ॥)
सर्वौषधिसमायुक्तं कषायं शीतलं तथा ॥ ४० ॥
श्लक्ष्णं सुगन्धि स्निग्धं च सद्यः प्राणविवर्धनम् ॥
मधुरं जीवनं चैव वृष्यं बलकरं तथा ॥ ४१ ॥
विपाककटुकं चैव संधानं कृमिनाशनम् ॥
अचिन्त्यवीर्यं गुणतः सर्वरोगप्रणाशनम् ॥ ४२ ॥
प्रशस्तमृषिभिर्नित्यं गुणैरेतैर्युतं मधु ॥
व्रणं शोधयेत्कायं मारुतं चानुलोमयेत् ॥ ५३ ॥
दीप्ताग्निश्च भवेन्नागः सुमनाश्चैव जायते ॥
वातमूत्रपुरीषं च यथाकालं प्रमुञ्चति ॥ ४४ ॥
आमं विपच्यते वाऽस्य *छविश्चास्य प्रसादयेत् ॥
हृद्रोगो न भवेत्तस्य मृत्तिकां च न खादति ॥ ४५ ॥
आध्माति न च मातङ्गो घनं लिण्डं च मुञ्चति ॥
अतिदानेऽपि राजेन्द्र रक्तपित्तं प्रकुप्यति ॥ ४६ ॥

---

* इतः पूर्वम्—'सम्यक्खातं च जयति च्छाविश्चास्य प्रसीदति ॥ जीवनं बृंहणं हर्षयम्' इत्यधिकं कपुस्तके । † धनुराकारमध्यस्थः पाठो नास्ति कपुस्तके ।

विलोलं चैव यवसं तस्य कोपे न खादति ॥
अतिसार्यति सोऽत्यर्थं मूर्छा चास्योपजायते ॥ ४७ ॥
अतिदाने त्विमे दोषा निदानं चापि मे शृणु ॥
विजृम्भते विनमति स्तब्धश्चैवावतिष्ठति(ते) ॥ ४८ ॥
मुहुर्मुहुर्निश्वस(सि)ति जघनेन निषीदति ॥
प्रमेलयेत्स्तम्भगतो यवसं नाभिनन्दति ॥ ४९ ॥
भवत्यग्निविहीनश्च यवसं नाभिपच्यते ॥
तस्माद्यथाप्रमाणं तु लवणं संप्रदापयेत् ॥ ५० ॥
अदानमतिदानं च न कदाचित्समाचरेत् ॥
वातघ्नं चोष्णवीर्यं च पित्तलं कर्षणं तथा ॥ ५१ ॥
श्लेष्मकृमिहरं चैव लवणं प्रोच्यते बुधैः ॥
आमाशयसमुत्थेषु महारोगेषु साधनम् ॥ ५२ ॥
कीर्तयिष्याम्यहं वर्गं वातश्लेष्मनिबर्हणम् ॥
बलां मधुरसां चैव मूर्वां तेजोवतीमपि ॥ ५३ ॥
पूतिकं सर्षपा हिङ्गु गण्डीरं जीवकं तथा ॥
हरीतकीविडङ्गानि करजं सारिवामपि ॥ ५४ ॥
पिचुमन्दं हरिद्रे द्वे पञ्चभिर्लवणैः सह ॥
कृत्वा सूक्ष्माणि चूर्णानि बदरामलकैः सह ॥ ५५ ॥
चतुर्गुणं पुनर्दद्यात्सामुद्रलवणं भिषक् ॥
द्रव्याणामर्धपलिकान्भागान्कुर्याद्विचक्षणः ॥ ५६ ॥
अभिषाणास्तथा बद्धा गजा ये पिष्ठमेहिनः ॥
मृत्तिकाविहि(ह)ताश्चैव कृमिकोष्ठास्तथैव च ॥ ५७ ॥
हृद्रोगी गुल्मिता ये च श्लेष्मानिलहताश्च ये ॥
वातमूर्छार्दिता ये च गजा रोगार्दिताश्च ये ॥ ५८ ॥
एवं तेभ्यः प्रदातव्यं सुरया गोमयेन वा ॥
कायाग्निबलमाधत्ते व्याधीनां च निबर्हणम् ॥ ५९ ॥
इत्यर्थमेतत्कटुकं लवणं दीयते पुनः ॥
दकतैलस्य सामर्थ्यं निबोध मनुजाधिप ॥
निमित्तं दकतैलेन सदा कुप्यन्ति दन्तिनः ॥ ६० ॥

इति कटुकलवणसंज्ञिकयोगा हस्तिनां चतुर्विंशतिद्रव्यकर्मसामान्यतो व्याधीनां निबर्हणे विशेषेण यथोक्तानां वेस्यप्रयोगस्य व्याख्यानम् ।

मुखशोषः श्रमस्तृष्णा मूर्छा वाऽस्योपशाम्यति ॥
प्रसन्नतनुरोमाणि बृहत्कायश्च जायते ॥ ६१ ॥
क्षीणशोणितमांसेभ्यो मत्तेभ्यश्च विशेषतः ॥
कर्मभिः पीडितेभ्यश्च मेदकान्दापयेद्भिषक् ॥ ६२ ॥
प्रस्विन्नं चैव कुल्माषं घृतं किण्वं गुडं तथा ॥
भोजयेत्सर्वमालोड्य वारणं मदवृद्धये ॥ ६३ ॥
गोधूमानथ सुस्विन्नान्घृतं किण्वं तथैव च ॥
भोजयेल्लवणीकृत्य द्वितीयो मेदकः स्मृतः ॥ ६४ ॥
प्रसृष्टवर्चो मधुराः सगोधूमा यवाः स्मृताः ॥
विपाकमधुराश्चैव वातपित्तनिबर्हणाः ॥ ६५ ॥
कषायतिक्ताश्च रसा गुरवश्च प्रकीर्तिताः ॥
गोधूमाः स्निग्धमधुरा वातघ्नास्तु यवैः सह ॥ ६६ ॥
यवास्तु पथ्या विज्ञेया नातिशुक्रबलप्रदाः ॥
यस्माद्बलं वर्धयते मांसं मेदोऽस्थिशोणितं ॥ ६७ ॥
तस्मान्मेदक इत्युक्तो भोजने च[2]—ते विधिः ॥
यश्च कर्मप्रवृद्धस्तु मदक्षीणश्च वारणः ॥ ६८ ॥
धेनुकासु च यः क्षीणो यः कृशो दुर्बलश्च यः ॥
स्वस्थवृत्ते च नागस्य भोजनं पूज्यते सदा ॥ ६९ ॥
आहारो धारयेत्प्राणान्प्रीणयेदिन्द्रियाणि च ॥
तस्मात्स्नेहसमायुक्तं युक्त्या च लवणीकृतम् ॥ ७० ॥
भोजनं भोजयेन्नागं रसयुक्तिसमन्वितम् ॥
सुगन्धिरम्लः स्निग्धश्च सद्यः प्राणविवर्धनः ॥ ७१ ॥
वाराहः कुक्कुटो वाऽपि ऐणेयो वा रसो हितः ॥
भक्तस्तैलार्धयुक्तेन कृमिकोष्ठी न जायते ॥ ७२ ॥
हृदयं न च लिप्येत मृत्तिकां च न खादति ॥
शिरोरोगाक्षिरोगेषु हस्तकर्णग्रहे भ्रमे ॥ ७३ ॥
युक्त्या स्नेहानुपानं च दद्याद्भक्तवतः सदा ॥
ग्रीवायामा(मं)सयोश्चाऽपि शिरसः स्रोतसोरपि ॥ ७४ ॥
भवेदुत्तरपानेन बलवानिन्द्रियेषु च ॥
गात्रापरविकारेषु धेनुकासु च निःश्रु(स्रु)तः ॥ ७५ ॥

---

१ क. °पाके म° । २ क. °ने चोच्यते वि° ।

पार्श्वपृष्ठकटिस्तम्भे दद्याद्वस्त्यावपीडनम् ॥
विषमं वा प्रभिन्नस्य व्यवस्थितमदस्य च ॥ ७६ ॥
घृतमण्डेन नागस्य छिद्रप्रक्षालनं हितम् ॥
धेनुकासु प्रसक्तेन मूत्रं यस्य सवेदनम् ॥ ७७ ॥
रक्तं च सहसा यस्य मेढ्रादच्छं प्रवर्तते ॥
मूत्रकृच्छ्रप्रमेहेषु वातगुल्मे तथैव च ॥ ७८ ॥
दद्यात्तस्योत्तरं बस्तिघृतेनैव चिकित्सकः ॥
अष्टादशाङ्गुलं चास्य नेत्रं ताम्रायसं भवेत् ॥ ७९ ॥
कोरण्टपुष्पवृन्ताग्रं प्रवेशे चतुरङ्गुलम् ॥
स्नेहेष्वेतेषु सर्वेषु दधि क्षौद्रं पयस्तथा ॥ ८० ॥
विमृश्य कुशलो वैद्यो भेषजानि प्रदापयेत् ॥
सर्वसेके तु सामर्थ्यं निबोध मनुजाधिप ॥ ८१ ॥
प्रसादयति रोमाणि शीतं चैव न बाधते ॥
वधबन्धसमुत्थाना ये व्रणास्तस्य हस्तिनः ॥ ८२ ॥
आगन्तवो वा दृश्यन्ते शरीरस्था महीपते ॥
ते मृदुत्वं प्रपद्यन्ते श्वयथुश्चास्य शाम्यति ॥ ८३ ॥
हन्युस्ते च कषास्तस्य सर्वसेकेन दन्तिनः ॥
हेमन्ते सर्वसेकस्तु भवेद्गैरिकसंयुतः ॥ ८४ ॥
तदाऽस्य द्विगुणं योगं तिलतैलेन कारयेत् ॥
खरत्वं गात्ररोगस्तु सर्वसेकेन शाम्यति ॥ ८५ ॥
मृदुत्वं जायते चास्य शिरास्नाय्वस्थिमर्मणाम् ॥
ततः किण्वगुडं माषाञ्लवणं गैरिकं तथा ॥ ८६ ॥
अतसीचूर्णभागं च संभृतं स्थापयेत्त्र्यहम् ॥
प्रत्युद्गतं स्थानगतं पूर्वाह्णे सेचयेद्गजम् ॥ ८७ ॥
तेन सेकस्त्रिरात्रं स्यात्ततस्तं परिकर्षयेत् ॥
पौषे प्रथमतः सिञ्चेन्माघे सिञ्चेदनन्तरम् ॥ ८८ ॥
फाल्गुने सिद्धतैलेन चैत्रे पङ्कं समुद्धरेत् ॥
एतेन क्रमयोगेण च्छविर्नागस्य जायते ॥ ८९ ॥
शीतमुष्णं च सहते मृदुगात्रश्च जायते ॥
गात्रसेके च सामर्थ्यं निबोध मनुजाधिप ॥ ९० ॥

---

१ क. शिरःस्ना° ।

स्थाने सततबद्धानां प्रयुक्तानां तथाऽध्वनः ॥
उष्णशीते तथा वाते सङ्गं संजायते भृशम् ॥ ९१ ॥
व्यूहेनैवोपनीतेन वेल्लिते चालिते तथा ॥
स्नेहेन त्रिवृतेनैव तेषामभ्यङ्ग (?) दृष्यते ॥ ९२ ॥
मार्दवं चैव गात्राणां क्षिप्रं भवति पार्थिव ॥
शिरोभ्यङ्गाच्च मातङ्गश्चक्षुषा साधु पश्यति ॥ ९३ ॥
शब्दं च सम्यग्जानीते व्रणश्चास्य न जायते ॥
अभिघातश्च नश्येत्तु क्षतं क्षिप्रं प्ररोहति ॥ ९४ ॥
केशाः शिरसि जायन्ते वायुः श्लेष्मा च नश्यति ॥
उत्कृष्टक्षयभागेषु जायते दन्तिनां व्रणः ॥ ९५ ॥
अनास्तीर्णासु शय्यासु म्रक्षणं तस्य दापयेत् ॥
तस्य तैलकषायं च देयं प्रक्षालनं क्षते ॥ ९६ ॥
त्रिफलाचूर्णसंयुक्तं स्थानं नित्यं चिकित्सकैः ॥
न श्र(स्र)वन्ति न भिद्यन्ते न क्षीयन्ते स्फुटन्ति च ॥ ९७ ॥
दुष्टास्तैलकषायेण प्रयोगेषु स्थिरास्तलाः ॥
सुखमाक्रमते भूमिं समेषु विषमेषु च ॥ ९८ ॥
अध्वनो गमने नित्यं छविश्चास्य न हीयते ॥
दीपतैलं यदर्थं तु दीयते शृणु तच्च मे ॥ ९९ ॥
शय्यायां तु स दृष्टायां सुखं स्वपिति वारणः ॥
आलानबन्धमोक्षाश्च दृश्यन्ते निशि सर्वतः ॥ १०० ॥
एते दीपेन शाम्यन्ति तस्माद्दीपं प्रदापयेत् ॥
श्रोतःशुद्धिं च शोभां च बलं पुष्टिं तथैव च ॥
निवृत्तिं चक्षुषश्चापि सदा कुर्याद्घृताञ्जनम् ॥ १०१ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेद उत्तराभिधाने परिवारचतुर्थस्थाने किमर्थकीनामाध्यायस्त्रयोविंशः ॥ २३ ॥

---

अथ चतुर्विंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
आनुपूर्वेण नागानां यदा स्नेहः प्रदीयते ॥ १ ॥

कथं स्निग्धं विजानीयादस्निग्धं वा मतङ्गजम् ॥
अतिस्निग्धं कथं विद्याद्धितं ब्रूहि तु मे विभो ॥ २ ॥
यदा तु नागः स्निह्येत अरोगो यदि वाऽऽतुरः ॥
स्वेदनैर्विविधैः स्निग्धैर्भिषग्भिः शास्त्रनिश्चितैः ॥ ३ ॥
सुनिःस्विन्नस्य नागस्य लक्षणं वक्तुमर्हसि ॥
कथं विरिक्तं जानीयाद्दुर्विरिक्तं च वारणम् ॥ ४ ॥
सम्यङ्निरूहितं चापि तथा चाप्यनिरूहितम् ॥
एतद्वेदितुमिच्छामि भगवन्संशयो हि मे ॥ ५ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
यदा भिन्नपुरीषः स्यादनुलोमश्च मारुतः ॥ ६ ॥
सस्नेहं च पुरीषं स्यात्तदा स्निग्धं प्रचक्षते ॥
पुरीषमल्पं कठिनं भुक्तं चास्य प्रजीर्यते ॥ ७ ॥
अस्निग्धमेवं जानीयादथ दृष्टेन मानसे ॥
यस्य गात्राणि सीदन्ति शकृद्भिन्नं च मुञ्चति ॥ ८ ॥
संलिप्तहृदयश्चैव यवसं नाभिनन्दति ॥
परिशुष्कमुखो दीनः पानीये कुरुते मतिम् ॥ ९ ॥
इत्येतैर्लक्षणैर्विद्यादतिस्निग्धं मतङ्गजम् ॥
मृदुगात्रो यदा नागः सविवर्णच्छविर्भवेत् ॥ १० ॥
स्विद्यमानस्त्वगातापी (?) स्वच्छगात्रश्च जायते ॥
लक्षणैरेवमेतैस्तु स्विद्यमानमनेकपम् ॥ ११ ॥
सुस्विन्नमिति जानीयाद्दीप्ताग्निमनुपद्रवम् ॥
यदा तु स्विद्यमानस्य स्विन्नस्य तु यथाबलम् ॥ १२ ॥
अतिस्वेदं प्रयुञ्जीत अज्ञानादल्पमेधसः ॥
अतिस्विन्नस्य नागस्य अक्ष्णोरश्रु प्रवर्तते ॥ १३ ॥
वेपथुस्तृषा च दाहश्च मूर्छा चास्योपजायते ॥
परिशुष्कमुखो दीनो न शय्यामभिनन्दति ॥ १४ ॥
गात्रेण गात्रं * संघृष्ट्य (?) न च तिष्ठति वारणः ॥
पांशुप्रमाथं सलिलमवगाहं च काङ्क्षति ॥ १५ ॥
अतिस्विन्नस्य नागस्य लक्षणं समुदाहृतम् ॥
स्विन्नस्य तु यथाव्याधिः प्रशान्तिमुपगच्छति ॥ १६ ॥

---

* 'संमृष्य' इति भवेत् ।

सम्यक्स्विन्नविपर्यासे दुःस्विन्नमिति निर्दिशेत् ॥
अतिरिक्तविरिक्ते च दुर्विरिक्ते च वारणः ॥ १७ ॥
लक्षणं वक्ष्यते राजंस्तन्निबोध यथातथम् ॥
वातमूत्रे प्रचलतः करीषं चातिवर्तते ॥ १८ ॥
दोषाः सह करीषेण प्रच्यवन्ते नराधिप ॥
पश्चाच्छ्लेष्मैव शुद्धस्तु अतिरिक्तस्य लक्षणम् ॥ १९ ॥
शूलं पार्श्वे सहृदये स्थाने न लभते सुखम् ॥
दृश्यतेऽत्र करीषस्य चन्द्रकाण्यसृजोक्षितम् ॥ २० ॥
दुर्बलो दुर्मनाः क्षामः परिशुष्कमुखो भृशम् ॥
अतियोगे विरिक्तं तु विद्यादेभिः सुलक्षणैः ॥ २१ ॥
अल्पदोषस्य महती मात्रा यस्य प्रदीयते ॥
सा तस्य दोषं निर्हृत्य परिताप्य यथाशयम् ॥ २२ ॥
अथवा जीवमादत्ते वारणस्य महीपते ॥
इत्येतल्लक्षणं विद्यादतिरिक्तस्य लक्षणम् ॥ २३ ॥
दुर्विरिक्ते गजे सिद्धिं प्रवक्ष्यामि महीपते ॥
शीतमस्मै तु कवलं दद्यान्नागाय योगवित् ॥ २४ ॥
सुखोदकेन पानार्थे परिषेकं च दापयेत् ॥
भोजनादिविधिं कुर्यादानाहेषु यथास्मृतम् ॥ २५ ॥
अस्निग्धस्य तु नागस्य चिकित्सां शृणु पार्थिव ॥
स्नेहपाने यथा प्रोक्तो विधिः स्नेहं समाचरेत् ॥ २६ ॥
अस्विन्नस्य तु नागस्य चिकित्सा तत्प्रवक्ष्यते ॥
यदुक्तं पित्तमूर्छायां तत्पूर्वं संमर्दी(दा)पयेत् ॥ २७ ॥
अस्विन्ने च यथायोगं पुनः स्वेदं समाचरेत् ॥
सम्यग्घीनातिरिक्तानां निरूहाणां महीपते ॥
बस्तिसिद्धौ विधिः कृत्स्नो निखिलेषु प्रकीर्तितः ॥ २८ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेद उत्तराभिधाने चतुर्थस्थाने परिचारकहेतुज्ञानं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

१ क. सांप्रतम् । २ क. °दीयते ॥ २७ ॥

## अथ पञ्चविंशोऽध्यायः ।

चम्पायां हस्तिशालायां शिष्यैः परिवृत्तं मुनिम् ॥
पालकाप्यमुवाचाङ्गः प्रणम्य प्राञ्जलिर्नृपः ॥ १ ॥
बहिः प्राणा हि पच्यन्ते दन्तवेष्टेषु दन्तिनाम् ॥
गजा हया नराश्चैव सर्वेऽथ मृगपक्षिणः ॥ २ ॥
आधारो हि महाब्रह्मञ्शरीरस्य हि धारणात् ॥
तस्योपयोगात्सर्वेषां प्राणो वर्धति ( ? ) देहिनाम् ॥ ३ ॥
तत्र तावद्गजानां मे संशयं वक्तुमर्हसि ॥
बलेष्वभ्यधिका नागास्तेष्वायत्तो जयो हि मे ॥ ४ ॥
न तेषां विहितं किंचिद्गजानां यद्धितं भवेत् ॥
कस्मिन्नृतौ वा किं देयं किं मात्रं कीदृशं च यत् ॥ ५ ॥
पल्लवं कुम्पलं वल्यः सर्वं चापि कुडङ्गरम् ॥
आदत्ते यवसं चैव विस्तरेण ब्रवीहि मे ॥ ६ ॥
ततः प्रोवाच भगवानङ्गाय परिपृच्छते ॥
यवसानि विचित्राणि कुम्पलं पल्लवानि च ॥ ७ ॥
आग्नेयं तु तथा सौम्यं द्विविधं यवसं स्मृतम् ॥
उदकं स्थलजं चापि द्विविधं जाङ्गलं च यत् ॥ ८ ॥
द्विविधश्च विपाकोऽस्य मधुरः कटुकस्तथा ॥
सौम्यं च मधुरं विद्यादाग्नेयं कटुकं भवेत् ॥ ९ ॥
आहारं त्रिविधं विद्याद्गजेषु मनुजाधिप ॥
भक्ष्यं भोज्यं च पेयं च रसैः षड्भिः पृथक्पृथक् ॥ १० ॥
मधुराम्लकटुस्तिक्तः कषायो लवणस्तथा ॥
कफमारुतपित्तानां रसेष्वेतान्[1]......... ॥ ११ ॥
[2]......द्विविधं चैतद्विहितं सर्वमेव तत् ॥
तेषां विभागः प्रोक्तस्ते शरीरविचये मया ॥ १२ ॥
तत्र तु त्रिविधो देशो त्रिपत्त्रिविधलक्षणः ॥
अनूपो जाङ्गलश्चैव तथा साधारणोऽपि च ॥ १३ ॥
बहुगुल्मलतावंशशैलो वे[3]...तृणोदकः ॥
बहुनिम्नोन्नतो यस्तु अनूप इति स स्मृतः ॥ १४ ॥

---

१ क. °तान्विनिर्दिशेत् ॥ ११ ॥ २ क. लक्षणं द्वि° । ३ क. बहुतृ° ।

तत्राध्वन्या महास्थूला मृदुमांसा महोदराः ॥
बहुवातकफाश्चैव अल्पपित्ताश्च वारणाः ॥ १५ ॥
ह्रस्वखण्ड(*तृणप्रायो अल्पतृणनगद्रुमः ॥
पर्याकाशसमश्चैव स देशो जाङ्गलो मतः ॥ १६ ॥
तत्र क्लेशसहाः शूराः कठिनाङ्गाः स्थिरेक्षणाः ॥
ह्रस्वखण्ड)विषाणाश्च वारणा मनुजाधिप ॥ १७ ॥
वातपित्तप्रकोपाश्च भवन्त्यल्पकफा गजाः ॥
एवमालोक्य देशं तु ततः कुर्यात्क्रियापथम् ॥
गजानामौषधं नित्यं यथादेशविभागतः ॥ १८ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेद उत्तराभिधाने चतुर्थस्थाने
त्रिविधिनामाऽध्यायः पञ्चविंशः ॥ २५ ॥

---

## अथ षड्विंशोऽध्यायः ।

---

अथ रोमपादोऽङ्गराजो भगवन्तं पालकाप्यमभिवाद्याभिगम्य पप्रच्छ 'भगवन्दम्यमानानां नागानां स्थानमुपपन्नानामतिकर्मणि चातिप्रयुक्तानां क्रमेण वर्ष्मसु प्रविचितं विधाय यवसाद्युपयुञ्जानाः पुष्टिमुपगच्छन्ति । केचिद्व्याधिभिरभिभूताः । तत्र को हेतुर्यथा वने बलिनोऽरोगास्तु भवन्ति । तथा मे भगवन्व्याख्यातुमर्हसि' इति ।

तच्छ्रुत्वा भगवान्पालकाप्योऽब्रवीत्—अङ्गराज तत्र सर्वेषां हस्तिनां शरीरे समास्त्रयो दोषा वातपित्तश्लेष्माणो भवन्ति । तेषां च प्रशमननिमित्तं षड्रसा भवन्ति । भक्ष्यभोज्यलेह्यपेयचतुर्विधाऽव्यवहार्यविषमप्रकृतेः केचिद्दुर्वर्णाश्च भवन्ति । केचिद्रन्धव्याधित्वमापन्ना भवन्ति । तेषां यथाप्रकृतिसत्त्वबलोत्साहवयोग्रहाण्यवेक्ष्य रसानां पथ्यापथ्यप्रमाणं व्याख्यास्यामः । इह खलु भो नागानां वयोरूपविशेषा भवन्ति वातपित्तश्लेष्मभ्यः समस्तव्यस्तेभ्यः । तत्रास्य निमित्तमुपदिश्यते सा तस्य प्रकृतिस्तद्रूपविशेषः । समास्तु तेषां प्रकृतयो भवन्ति तत्संप्रयोगेना(न)रूपसत्त्वबलादयः । अथ यस्य नागस्य समास्त्रयो दोषा भवन्ति । मध्यमे[1]....प्रकृतिमान्समत्वप्रयोगमेवाभिरामं सबलादिषूत्तमत्वं

---

* धनुश्चिह्नान्तरगतः पाठो नास्ति कपुस्तके ।

---

१ क. °ममध्यप्र° ।

प्राप्नोति । तस्मात्त्रिविधाः शरीरदोषा भवन्ति वातपित्तश्लेष्मणामन्योन्यविषम-प्रयोगजननसामान्या(?)च कुञ्जराणाम् ।

तत्र श्लोकः—

दोषाधिको भवेद्व्याधिः सामान्या प्रकृतिर्भवेत् ।
तस्मात्प्रकृतयो न स्युर्दोषाधिक्येन दन्तिनाम् ॥

अथ यो हस्ती वातप्रकृतिस्तस्येमानि सत्त्वशरीरायूंषि लिङ्गानि वेदितव्यानि । यस्य हस्तिनः श्लेष्मस्यान्ते वर्षासु पित्ते प्रचीयमाने वातधातुर्बलवान्* ............ । लेलिह्यमानेष्वरण्येषु प्रक्षीयमाणयवसेषु क्षीणोदकतृणाशयेषु † ................ यवसोदकदिवसकरकिरणाभितापनादानविसरे* काले †नागास्त्वङ्मूलपल्लवाहारैरल्पप्राणा भवन्त्यपल्पशुष्काः । तथा दिवसकरकिरणाभिहतानामोषधीनामीषज्जलधरसंछन्नानामुपयोगात्प्रण(न)ष्टग्रहनक्षत्रान्धकारमेघस्तनितनिर्घोषैर्विप्रसारङ्गविरूढं नृत्यच्छिखिकुलमीषत्कुसुमितवनखण्डाद्यारामशीतपरुषपवनाकम्पनादम्लमधुराः सर्वौषध्यः कटुतिक्तरसप्रायाः भवन्ति । तासां तरुणबलादीनां चोपयोगाद्वातो बलवान्भवति, तदा संजातकामः करी धेनुकां यदि[1] समायाति तदा जाते प्रकृत्या वातिकस्तस्य लक्षणानि सत्त्वशरीरबलवर्णतो भवन्ति । तद्यथाऽनवस्थितसत्त्वशरीरः, स्पन्दनो भीरुश्चपलो लघुसंचारपनो नाश्वासमर्थः परिशुष्कस्रोताः स्थूलालण्डनखानुचरणस्तब्धः परुपच्छविस्तब्धरोमाऽसुखश्चलचित्तो विप्रमज्योतिर्वि-*षमानसः प्रस ........ मूत्रपुरीषस्तीव्रकामो धेनुकासु रूढदन्तवदन .... यनो योऽल्परोमा ले ........ न्नो परिभिन्नतलनखः सर्वकर्मसु विषमो विरूपाक्षो बहुबहु ........ श्रुद्वारयुक्तोऽलस्थाते च नित्यमनवस्थितचित्तश्चिरग्राह्यः सततोत्सुकः क्षुत्पिपासासहः प्रत्यर्थवेद्यतीव(†भारसहो विवृतान्धि(स्थि)शिरास्नायुविद्धाङ्गः स वातप्रकृतिः । तस्योपचारं वक्ष्यामि ........ प्रभूततैललवणमांस)रसवत्प्रतीपानम् । यवसकवलकुवलयानि वातहितानि । सर्वदा मधुराम्ललवणरसोपयोगश्च प्रशस्तः ।

मधुरैर्लवणैरम्लैः स्नेहमांसरसान्वितैः ।
वातिको ....वहार्यः स्याद .... बलवान्गजः ॥

---

* आदर्शपुस्तकेषु त्रुटिचिह्नं न दृश्यते । † आदर्शेषु त्रुटिचिह्नं नास्ति ।
* 'दानावसरे' इति भवेत् । †नागास्त्वम्मूल इति भवेत् ।
* 'विषमासनः' इति भवेत् । † धनुर्द्वयान्तरगतः पाठो नास्ति कपुस्तके ।

---

[1] क. यदा ।

कषाये कटुतिक्तानां तथा च लघुरूक्षयोः ।
उपयोगादातुरः स्यादरोगोऽपि मतङ्गजः ॥
तस्मात्प्रकृतितत्त्वज्ञः प्रकृत्याऽनुगुणान्भिषक् ।
इत्या(त्य)न्नरस्या(सा)न्प्रविशेदारोग्यबलवृद्धये ॥

अथ यो गजः पित्तप्रकृतिस्तस्येमान्येव लिङ्गानि वेदितव्यानि—अथ खलु प्रावृडन्ते सलिलतृषितः सुरभिशिशिरेषु सलिलामृतं विसृक्षु वा वारिधरेषु घर्मबाहुल्याद्दुःस्थानशयनस्य जलौघसंनिरुद्धविचारमार्गत्वादेव्यायामस्याग्निदौर्बल्यमुपजायते । ततः पित्तमुपचीयते । घनसंवृतदिवसकराकरणत्वात्सुकुमारीकृते जीवनमनष्टे विय[1]दिन्द्रायुधबलाहके निर्मदपरभृतशिखिकुले प्रच्छन्ने नभसि तारागणदिग्वलये प्रफुल्लपद्मोत्पलकुमुदकल्हारसुगन्धिजलाशये क्रौञ्चकारण्डवचक्रवाकसारसानुगीतसरोदके प्रफुल्लवानीरासनसप्तपर्णबन्धुजीवे शरत्काले द्विरदः संसृष्टशुक्रसंचयो दिवा रात्रौ वा +........................................ ॥

कषायमधुराः शीता घर्मकाले क्रियाः स्मृताः ।
उष्णाम्ललवणाः स्निग्धाः शीतकाले विनिश्चिताः ॥
कटुतीक्ष्णोष्णरूक्षाश्च काले साधारणे हिताः ।
सर्वेष्वेव तु रोगेषु मनसः संप्रसादनम् ॥
गीतवादित्रनिर्घोषैर्वेणुवीणास्वनैस्तथा ।
मनोन्य(ज्ञ)मधुराहारैस्तथा स्वच्छन्दचेष्टितैः ॥
श्लेष्मणा गुरुगात्रो हि स्तब्धत्वं मातरिश्वनः ।
पित्तेन परिदाहोऽयं सर्वैर्वा पीडितोऽस्म्यलम् ॥
अस्मिन्द्रव्येऽभिलाषं मे दुःखत्यङ्गमिदं मम ।
तृषितो ह्यवितृप्तोऽस्मि क्षुधितोऽस्मीति वा पुनः ॥
वदतां हि क्रियाः सर्वाः सुखदुःखनिबन्धनाः ।
आयुर्वेदधरैर्दक्षैरेकैकाङ्गव्यवस्थितैः ॥
नराणां त्वततो व्याधिरुपलभ्येत वा न वा ।
वधबन्धपरिक्लेशं प्राप्नुवन्त्यतिदारुणम् ॥
पानभोजनमप्येषां बलादेव प्रदीयते ।
देहि भूयो ममाऽऽलम्ब.........श्चायं समोऽधिकः ॥

+ त्रुटिचिह्नमादर्शत्रयेऽपि नोपलभ्यते ।

[1] क. विद्युदिन्द्रा° ।

इतीमानामवपतां दुःखादुःखमनुस्वपम् ।
एवं व्याधिपरिज्ञानं कुर्यात्तस्मिन्निरूपणम् ॥
यत्नतो विविधाकारे""""दानैरुपलभ्यते ।
यत्नतो व्याधिरूपाणि शास्त्रतत्त्वविभागतः ॥
दुष्टदोषे परिज्ञानं यथावत्परिकीर्तितम् ।
हस्तिनां हितकार्येण पालकाप्येन धीमता ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेद उत्तराभिधाने चतुर्थस्थाने पथ्यापथ्यविचाराध्यायः षड्विंशः ॥ २६ ॥

---

अथ सप्तविंशोऽध्यायः ।

---

अथातः करीषाध्यायं व्याख्यास्यामः ।

इति ह स्माऽऽह भगवान्पालकाप्यः—'अथ खलु भो यदा हस्तिनां वातपित्तकफरुधिरसंनिपातैः पीड्यन्ते। मृत्तिकानाहदोषैर्वातपित्तकफव्याधिनिग्रहार्थमिमानि पुरीषाणि देयान्यष्टाविति । तत्र गोमहिष्यजाविगजवाजिगर्दभोष्ट्राणां करीषाणि ।

गव्यं करीषं गुल्मार्शकृमिकोष्ठविशोधनम् ।, वातानुलोमनं पित्तलमानाहमृज्जगधवातगुल्मविपदुष्टेभ्यः सह मूत्रेण दद्यात् ।

अथ माहिषं करीषमुष्णवीर्यं तीक्ष्णं पादरोगार्दितेभ्यो नागेभ्यः शुद्धमेव दद्यात् ।

आजं करीषं तीक्ष्णमुष्णवीर्यं कृमिकोष्ठविशोधनं वातानुलोमनं मृत्तिकाभिलाषिपाण्डुरोगिभ्यः प्रसन्नायुक्तं दद्यात् । वाजिकरीषमुष्णवीर्यं तिक्तं कृमिकोष्ठहरं श्लेष्मविनाशनं मृत्तिकाभिलाषिपाण्डुरोगिभ्यो लवणयुक्तं दद्यात् ।

इभकरीषमुष्णवीर्यं त्वक्प्रलेपनार्थं दद्यात् ।

आविकमुष्णवीर्यं कृमिकोष्ठविशोधनं मृत्तिकाभिलाषिपाण्डुरोगिभ्यो दद्यात् ।

औष्ट्रं श्लेष्महरं छविःप्रसन्नार्थं मृत्तिकाभिलाषिणे दद्यात् ।

गार्दभं करीषमुष्णवीर्यं मृत्तिकाभिलाषिपाण्डुरोगिभ्यो लवणयुक्तं दद्यात् । इति करीषाण्यष्टौ गुणदोषतो व्याख्यातानि ॥

अतःपरं मूत्रगुणान्व्याख्यास्यामः—

तत्र गवां मूत्रमुष्णवीर्यं मृत्तिकाभिलाषिभ्यो दद्यात् ।

माहिषं तीक्ष्णमाजं चोष्णवीर्यं मृत्तिकाभिलाषिणे दद्यात् ।

अथ गजमूत्रं तिक्तमुष्णवीर्यं मृद्दोषाय दद्यात् ।
गार्दभमुष्णवीर्यं वातश्लेष्महरं मृत्तिकाभिलाषिणे दद्यात् ।
औष्ट्रमतितीक्ष्णं कृमिकोष्ठविशोधनार्थं दद्यात् ।

तत्र श्लोकः—

स्निग्धानां वारणानां च दातव्यमिति निश्चयः ।
सर्वदा प्रतिपानार्थं रूक्षाणां न प्रशस्यते ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेद उत्तराभिधाने परिचारचतुर्थस्थाने करीषमूत्राध्यायः सप्तविंशः ॥ २७ ॥

---

अथाष्टाविंशोऽध्यायः ।

---

अथ हुताग्निहोत्रं पालकाप्यं रोमपादो विनयात्पप्रच्छ 'भगवन्यदेतद्द्रव्यं रसोननामामृतमिहोपदिष्टं तस्योत्पत्तिनिरुक्तानिष्टगन्धतां रसवीर्यविपाक उपयुक्तं यथानन्यान्पाने व्याधीन्निहन्ति, अशेषेण तन्मे व्याख्यातुमर्हसि' ॥

तत्र प्रोवाच भगवाञ्श्रीपालकाप्यः—इह खलु भोः सुपर्णः पुरा जननीहेतोराहरदमृतं विहायस्यतिवेगेन प्रलीनस्तस्यामृतभाजनात्संक्षोभात्ततो बिन्दुनिष्पातादनिष्टभूमावनिष्टगन्धमम्लरसोनमूलं लघुशीघ्रविपाकि तीक्ष्णरसमिति तस्माद्रसोनं रसोत्तममृतसंभवं ब्रुवन्त्याचार्याः ।

तद्रसोनं मूले कषायरसं, बीजे मधुररसं, पत्रे तिक्तरसं, पत्राग्रे कटुरसं, नाले लवणरसं, संधानजननं मलविशोधनमसृक्प्रसादनमग्निदीपनं तीक्ष्णोष्णकटुकषायत्वाच्छ्लेष्मनिबर्हणम् । स्निग्धोष्णत्वादनिलापहं माधुर्याद्रक्तपित्तप्रशमनम् । गुरुत्वाद्बलमुपकुरुते । पैहिल्यात् (?) स्नेहमाधुर्यगुरुत्वादिभिर्गुणैः संनिपातमवकर्षति । विचित्ररसवीर्यगुणविपाकतो रसाद्रनम्(?) । तस्माद्द्रुगमनविहतभग्नास्थिमर्पि(थि)तविच्युतमोटितजर्जरीकृतानामकामाशनपाननिश्चितानां च घृतयुक्तं रसोनं देयम् । अन्नपानक्षीरफाणितसंयुक्तं दद्यात् । तथा रसरुधिरमांसमेदोस्थिमज्जाशुक्रक्षयिभ्योऽन्ये प्रमदक्षीणानामन्येषु च सर्वरोगेष्वरोगाणां बलमांसविवृद्ध्यर्थं रसोनं दद्यात् । मृगमहिषवराहरोहितमत्स्यानां ताम्रचूडबर्हिणलावतित्तिराणां च सूपशोषितेन रसोनं दद्यात् । वेसवारेण सघृतेन शाल्योदनं च भोजयित्वा रसात्रसोनं देयम् । तेनास्य बृंहितशरीरस्य रसरुधिरमांसमेदोस्थिमज्जाशुक्राण्युत्साहबलवृद्धिर्भवति । क्षीरघृतसंयुक्तं वि····पोतेभ्यो बलमांसविवृद्ध्यर्थं दद्यात् । यदा तु वर्षासु वातभूयिष्ठा

वारणा भवन्ति । मूत्रक्षणादुत्कर्णकवातगतिवातानाहस्कन्दपाण्डुरोगगलग्रह-हस्तग्रहगुल्महृदयशूलगात्रापरसगदामन्यास्तम्भेषु च गजे तिलयुक्तं दद्यात् । अनुपानं च प्रसन्नां फाणितयुक्तां दद्यात् । यदा तु हेमन्तशिशिरवसन्तेषु भूयिष्ठश्लेष्माणो भवन्ति । मन्यास्तम्भश्लेष्माशिरोरोगाभिषण्णगलरोगकृमि-कोष्ठपिटकातीसारव्रणदद्रूकण्डूश्वयथुविकारिणां त्रिफलात्रिकटुकविडङ्गचूर्ण-संसृष्टं लशुनं दद्यात् । अनुपानं च सुखोष्णोदकमजाक्षीरमरिचचूर्णसंसृष्टं दद्यात् । यदा तु शरद्ग्रीष्मकालयो रक्तपित्तबाहुल्यं वारणानां भवति घर्म-दाहश्च विषमदमत्तगमनखिन्नदेहेभ्यश्च मृद्वीकाशर्कराचूर्णसंसृष्टं लशुनं दद्यात् । अनुपानं च मृद्वीकाशर्कराचूर्णसंयुक्तं क्षीरं दद्यात् । जीर्णे च जाङ्गलयवरसानि जूर्णीपाटपोटगलकुशकासपत्राणि च दापयेत् । अनन्तरं च शिशिरसलिले पानार्थमपनयेत् । भोजनं पूर्वोद्दिष्टं दद्यात् । विंशतिपलिकमरत्निं कृत्वा विधां ह्रासयित्वा तच्च भक्ततुल्यं स्नेहं दद्यात् । अथवा तैलेन सर्पिषा वा सुक्षुण्णं मृद्वास्थितं विधार्थयुक्तं शुद्धं वा दद्यात् । हरितं मृदु विचित्रं यवसं फाणितो-पनाहं दद्यात् । तीक्ष्णतिलोष्टज्यवृष्टिशीतवाग्दंदादिभ्यः (?) सर्वकालं रक्षणं कुर्यात् । कमलकह्लारबहुविधकुसुमविप्रकीर्णां भूमिभागां मनोज्ञामगुरु-धूपितां होमपूजां सर्वतःसुलिप्तां शालां कारयेत् । शय्याभागं चास्य मृदुपां-शुलसुखशयनं च करीषास्तृतं कारयेत् । अनेन क्रमयोगेन(ण) लशुनस्योप-योगात्षण्मासादूर्ध्वं वा वारणो दीप्ताग्निर्जवनः स्थिरो बलवान्समधातुररोगो लघुगात्रविहारश्च भवति । यावच्चोपयोगकालाद्द्विगुणपरिहारस्तावत्क्षीरं यवागूं मधुफाणितसंयुक्तां दद्यात् । तदनन्तरं च क्षीरपानं भक्ष्यभोज्यपेयलेह्यानि च मधुराम्ललवणकटुकषायाणि शाल्योदनं किंचिदम्लरसं दद्यात् । यथावर्ष-प्रमाणमात्रायोगाधिकमजीर्णं वा प्रकृतिऋतुकालदेशसात्म्यादिविपर्ययो वा लशुनमज्ञानाद्यच्छन्ति, तदाऽस्य कोष्ठे लशुनव्यापन्नममान्द्याधीञ्जनयति । आनद्धकुक्षिहृदये पीडास्थाने च सुखं लभते । यवसकवलकुवलयपानान्नभोज-नादीन्नाभिनन्दति । पर्यश्रुमीलितनयनो ध्यानशीलो निद्रालुः पाण्डुरोगी रक्तमेही च कृच्छ्रमेही च भवति । तस्यैवं लशुनव्यापन्नकोष्ठस्य स्नेहव्यापन्न-चिकित्सितं कुर्यात् ॥

तत्र श्लोकाः—

कषायकटुतिक्ताद्या मूलनालादिजा रसाः ।
बीजमेवानुगच्छन्ति तापिताः सूर्यरश्मिभिः ॥

हीनक्रिया न सिध्यन्ति व्याधयो विविधा गजे ।
तस्मात्कुर्वीत शास्त्रोक्तं विधिं सम्यक्चिकित्सकः ॥
भक्ष्ययोगप्रमाणज्ञो मात्रायोगविशारदः ।
औषधानां विभागज्ञः स राजन्कर्तुमर्हति ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेद उत्तराभिधानपरिचारचतुर्थस्थाने लशुनकल्पाध्यायोऽष्टाविंशः ॥ २८ ॥

---

## अथैकोनत्रिंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
लवणे योगमाख्याहि हितं यत्करिणां भवेत् ॥ १ ॥
रोमपादमिति ज्ञात्वा पालकाप्यस्ततोऽब्रवीत् ॥
लवणं संप्रवक्ष्यामि सर्वरोगप्रणाशनम् ॥ २ ॥
बिल्वाग्निमन्थस्योनाककाश्मर्यमथ पाटला ॥
पाषाणभेदकं रोध्रमपामार्गस्त्रिकण्टकम् ॥ ३ ॥
उभे हरिद्रे पाठा च तथैव च हरीतकी ॥
रोमकं च विडं चैव सामुद्रं सैन्धवं तथा ॥ ४ ॥
पिप्पली शृङ्गवेरं च मरिचानि च दापयेत् ॥
चव्यामतिविषां हिङ्गुविभीतकफलानि च ॥ ५ ॥
कुलीरशृङ्गी च तथा त्वचं निम्बकदम्बयोः ॥
मातुलिङ्गं च कालां च विडङ्गामलकी तथा ॥ ६ ॥
पूतिगन्धं च मुस्तां च काकमाची तथैव च ॥
हपुषा श्वेतया सर्वे मूर्वां तेजोवतीमपि ॥ ७ ॥
अम्बष्ठां तिन्तिडीकं च कण्डशः परिकल्पयेत् ॥
भागाः षष्टिपला ह्येते सूक्ष्मचूर्णीकृताः पृथक् ॥ ८ ॥
द्वात्रिंशत्को हिङ्गुभागो मूत्रेण सह योजयेत् ॥
पक्वं च तद्यथा सर्वं सम्यक्पिण्डीकृतं भवेत् ॥ ९ ॥
गोमूत्रमथ दद्यात्तु दधि मस्तु भिषग्वरः ॥
अथ तत्संवृतं सर्वं स्वनुगुप्तं निधापयेत् ॥ १० ॥
तिष्ठे चैव विपक्वं स्यात्स्वस्ति वाच्य द्विजांस्ततः ॥
निवास्य पञ्चरात्रं तु वैद्यशास्त्रविशारदः ॥ ११ ॥

दद्यात्तु कृमिकोष्ठिभ्यः क्षीणाभ्यामरिशाय च ॥
मदक्षीणाय नागाय तथा वै भिषगर्पते ॥ १२ ॥
एतच्च मूलजं शान्तं विषयं वाऽपि कृमिघम् ॥
अजीर्णमसकृद्भुक्तमानाहं च प्रयोजयेत् ॥ १३ ॥
गजानामथवाऽश्वानां महिषाणां गवामपि ॥
नरादीनामथान्येषां सत्त्वानां सर्वदा हितम् ॥
एवमेतत्प्रयोक्तव्यं भिषजा सिद्धिमिच्छता ॥ १४ ॥
इत्येतदङ्गाय विशेषतो वै प्रोक्तं मया सर्वमिदं हिताय ॥
संजीवनं चाग्निविवर्धनं च हितं गजानां लवणं यथावत् ॥ १५ ॥
इति श्रीपालकाप्ये हस्त्यायुर्वेदे चतुर्थ उत्तरस्थाने लवणयोगोऽध्याय एकोनत्रिंशः ॥ २९ ॥

अथ त्रिंशोऽध्यायः ।

पालकाप्यमुवाचाङ्गो रोमपादो महायशाः ॥
गुणा ये पांशुदानस्य प्रमाणस्य च ये गुणाः ॥ १ ॥
केषामदेयो देयो वा वारणानामुदाहृतः ॥
येषु कालेषु वा दत्तो गुणोपेतः स्मृतः सदा ॥ २ ॥
अथ पृष्टं यथोद्दिष्टं प्रोवाच मुनिसत्तमः ॥
निखिलेनाङ्गराजाय यथाशास्त्रविनिश्चयः ॥ ३ ॥
आरण्यो दम्यमानश्च दान्तश्चैव मतङ्गजः ॥
पुराणश्चेति विज्ञेयाश्चत्वारोऽमी विनिश्चयात् ॥ ४ ॥
आरण्यस्तु स विज्ञेयः स्कन्धहारेण (?) संयुतः ॥
वाक्यादङ्कुशदण्डाभ्यां संज्ञां *यो ऽलीव बुध्यते ॥ ५ ॥
दम्यमानः स विज्ञेयो दम्यते यो मतङ्गजः ॥
संग्रहैर्विप्रयुक्तश्च बन्धकन्धैश्च वारणः ॥ ६ ॥
वाक्यादङ्कुशतोत्रैश्च क्रियां यः प्रतिपद्यते ॥
स दान्त इति मातङ्गो नृपकारैरुदाहृतम् ॥ ७ ॥

* 'यो नैव' इति भवेत् ।

१ क. सदा स्मृतः ।

मुनिबद्धमदो दान्तो बलशौर्यसमन्वितः ॥
प्रभावितो यो यत्रासौ स पुराणो मतङ्गजः ॥ ८ ॥
वातारण्यं हन्तु तथा प्रमाथं पांशुमेव च ॥
धारयेत्सर्वदा नागं संज्ञानिग्रहकारणात् ॥ ९ ॥
दम्यमानस्य नागस्य क्रिया विश्रम्भकारणात् ॥
नागं दान्तं यथायोगमभिनिश्चित्य शास्त्रवित् ॥ १० ॥
कालाकालं प्रमाणं च पांशुं चैवाभिहारयेत् ॥
नवस्यैव पुराणस्य पांशुर्न प्रतिषिध्यते ॥ ११ ॥
कर्मान्तरे च दातव्यः प्रमाथः पांशुरेव च ॥
स पातात्प्रयतव्यश्च स भवेत्परिकर्मभिः ॥ १२ ॥
वर्षासु ग्रीष्मकालेषु प्रमाथाहरणं भवेत् ॥
एकेन बहुभिर्वाऽपि दोषैर्दुष्टस्य हस्तिनः ॥ १३ ॥
पांशुं चैव प्रमाथं च सततं प्रतिषेधयेत् ॥
मनसो हर्षजननः प्रमाथः पांशुरेव च ॥ १४ ॥
मनसः प्रभवश्चैवं ............... मनीषिभिः ॥
अथातः पांशुदानस्य वक्ष्यते गुणसंग्रहः ॥ १५ ॥
अथ श्रद्धां च कुरुते तथाऽऽहाराश्रमं भवेत् ॥
पांशुर्मत्तस्य नागस्य मनःसौख्यविवर्धनः ॥ १६ ॥
पांशुर्बलस्य जननो............... विवर्धनः ॥
पांशुरुष्णाभितप्तस्य जयसौख्यविवर्धनः ॥ १७ ॥
पांशुदानगुणोपेतो रसधातुर्विवर्धते ॥
रसतः शोणितं मांसं मेदोऽस्थीनि च दन्तिनाम् ॥ १८ ॥
क्रमान्मज्जा च शुक्रं च वर्धन्ते तेन धावतः ॥
पांशुदानगुणा ह्येते यथावत्समुदाहृताः ॥ १९ ॥
एवमेतत्प्रमाथस्य शृणु चान्यान्गुणानिमान् ॥
मलपङ्कापनयनं कण्डूविनयनानि च ॥ २० ॥
लिक्षायूकाप्रशान्त्यर्थं व्रणानां तु हिताय वै ॥
केचित्प्रमाथं पांशुं च उक्तेन...... प्रदापयेत् ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रचोदितः ॥ २१ ॥

इति श्रीपालकाप्ये चतुर्थस्थाने पांशुदानं नाम त्रिंशोऽध्यायः ॥ ३० ॥

---

१ क. °व कथितश्च म°। २ क. °नो रेतसश्च वि°। ३ क. उक्तेनैव ।

अथैकत्रिंशोऽध्यायः ।

अङ्गो हि राजा चम्पायां रोमपादः प्रतापवान् ॥
उवाच पालकाप्यं तु विनयेन कृताञ्जलिः ॥ १ ॥
सप्तधातूद्भवा यास्तु संग्रहे संप्रकीर्तिताः ॥
मदावस्था मुनिश्रेष्ठ तत्र मे संशयो महान् ॥ २ ॥
कतमं धातुमाश्रित्य प्रथमा संप्रवर्तते ॥
द्वितीया कतरं प्राप्य तृतीया च महामुने ॥ ३ ॥
(*चतुर्थी पञ्चमी चापि षष्ठी चैवापि सप्तमी ॥
कं कं धातुं समाश्रित्य प्रवर्तेत महामुने ) ॥ ४ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
रसाद्रक्ताच्च मांसाच्च मेदसोऽस्थ्नस्तथैव च ॥ ५ ॥
मज्ज्ञः शुक्राच्च राजेन्द्र मदावस्था प्रवर्तते ॥
यदा छविः प्रसन्ना स्यान्निश्वासः सुरभिस्तथा ॥ ६ ॥
सुमनाश्च भवेन्नागस्तथा रसगता नृप ॥
मदावस्थामिमां तां तु जानीयात्प्रथमां †बुधैः ॥ ७ ॥
एवमेव गुणाश्चास्य मुहुर्बृंहति च द्विपः ॥
आस्यं रक्तं च भवति ···· ····वमर्थेतिवे भृशम् (?) ॥ ८ ॥
तस्यावस्था द्वितीया स्याद्रक्ता सार्द्रकपोलिका ॥
उज्जृम्भणपरश्चैव बृहन्नागः पुनः पुनः ॥ ९ ॥
स्वेदल्पं च कोशेन न च रक्तमदो भवेत् ॥
साऽथोऽवस्था निबद्धा स्यात्तृतीया मांससंभवा ॥ १० ॥
यदा च वर्धते क्रोधः स्याज्जृम्भणपरस्तथा ॥
मेढ्रे च पृथुले स्यातां पुच्छे शूरश्च जायते ॥ ११ ॥
गन्धे पटुत्वमायाति लाघवं चास्य वर्धते ॥
वेगेऽप्युत्तमतां याति का····श्च भवत्यपि ॥ १२ ॥
चतुरङ्गबलं हर्षादभिद्रवति निर्भयः ॥
स्वाधीनश्च भवेद्धातुः वधेऽपि गजवाजिनाम् ॥ १३ ॥

---

* चतुर्द्वयान्तरगतो नास्ति पाठः कपुस्तके । † 'बुधः' इत्युचितम् ।

---

१ क. °सि बस्तिमिश्च ।

गजानां नृपमध्ये च तथा वाजिसमाजिषु ॥
विवादेष्वपि नागानां नान्यक्रीडोपसंभ्रमे ॥ १४ ॥
अन्तरापणभूम्यां च बालक्रीडाविहारयोः ॥
उद्वहेद्राजमात्रांश्च मदे मेदोद्भवे गजः ॥ १५ ॥
सवश्याङ्कुत्वचापिण्यां(?) चतुर्थ्यां नियतं गजः ॥
यदा त्वस्थीनि संप्राप्तो मदो भवति दन्तिनः ॥ १६ ॥
तदा भवेत्क्रोधपरः सर्वेषामेव भूमिप ॥
रथमश्वं नरं वाऽपि हस्तिनं वा विशेषतः ॥ १७ ॥
अन्यं वा किंचिदासाद्य सर्वं प्राणैर्वियोजयेत् ॥
अतिक्रामति मर्यादां वार्यमाणः प्रयत्नतः ॥ १८ ॥
किंचित्ससंज्ञो भवति निःसंज्ञश्च पुनर्द्विपः ॥
तां क्रोधनीं मदावस्थां जानीयात्तस्य दन्तिनः ॥ १९ ॥
अथ प्राप्ते तु मज्जानं तस्या वक्ष्यामि लक्षणम् ॥
स्थानस्थो योऽपि गच्छन्वा जले मध्ये स्थितोऽपि वा ॥ २० ॥
स च नोत्सहते गन्तुं क्रोधेन कलुषीकृतः ॥
स्थानानि हस्तिनां याति बद्धानां क्रोधमूर्छितः ॥ २१ ॥
मदादीनवसंधाय श्रुत्वा घण्टास्वनं तथा ॥
अटित्वा सुप्रदेशान्वै स्थानमेवोपतिष्ठति ॥ २२ ॥
एतां षष्ठीं मदावस्थां जानीयादतिवाहिनीम् ॥
अथ शुक्रमनुप्राप्ते मदे रूपं निबोध मे ॥ २३ ॥
अन्धो[1] न पश्यत्यपि च न शृणोति न बुध्यते ॥
रात्रौ दिवा च स्रवति रोषश्चापि प्रजायते ॥ २४ ॥
गन्धमस्या न तिष्ठति न चात्र प्रतिहस्तिनः ॥
निराहारस्य[2] चाप्यस्य न भवेत्प्राणतः क्षयः ॥ २५ ॥
मन्यन्ते केचिदाचार्या रिष्टमेवेति हस्तिनाम् ॥
अवस्थां सप्तमीं प्राप्य नैव जीवति वारणः ॥ २६ ॥
संभिन्ना मदमर्यादा मदकाष्ठा परा नृप ॥
स कृत्वा सुचिरं नागो मदविच्छर्दिमुत्तमाम् ॥ २७ ॥
क्षीणतोये यथा मेघो विच्छायाति(?)नृपोत्तम ॥
तथा क्षीणमदो नागः प्रशान्तिमुपगच्छति[3] ॥ २८ ॥

१ क. अंधो न यत्प° । २ ख. निरुहारस्य । ३ क. निर्गच्छति ।

तत्रापि ... तु वक्ष्यामि यथा स मृ(म्रि)यते गजः ॥
अथ वायुः कफश्चैव पित्तं रुधिरमेव च ॥ २९ ॥
कुप्यन्ति सहिताः सर्वे स च कोपः सुदारुणम्(ः) ॥
ते तु शुक्रमनुप्राप्ता वातपित्तकफास्त्रयः ॥ ३० ॥
शोणितं चापि ते सर्वे विनाशयन्ति वारणम् ॥
अस्थिप्राप्ते क्षयं याति मज्जाप्राप्ते तथैव च ॥ ३१ ॥
न तु शुक्रगते राजञ्जीवति द्विरदः क्वचित् ॥
सा सप्तमी मदावस्था स्वमूर्त्या दिव्यसंभवा ॥ ३२ ॥
प्रभिन्ना वारणेन्द्रस्य सहसा देहमाविशेत् ॥
न तां धारयितुं शक्ताः प्रसितदेहे मतङ्गजाः ॥ ३३ ॥
विशेच्छाया यथा देहं सर्वेषामेव देहिनाम् ॥
देहं तथा दिव्यमहो हस्तिनं प्रविशेन्नृप ॥ ३४ ॥
गजमत्तविशेषेण घर्षयत्यपि सर्वशः ॥
आति ... तः समाम्यश्च वर्धन्तेऽस्थीनि दन्तिनः ॥ ३५ ॥
मेदो मांसं च रक्तं च पित्तं श्लेष्मा च मारुतः ॥
उदीर्यन्ते प्रहर्षेण मेदस्तेनास्य जायते ॥ ३६ ॥
दशां तृतीयां संप्राप्ता ये माद्यन्ति मतङ्गजाः ॥
असंजातमदास्ते ते मदास्तेषु विपद्यते ॥ ३७ ॥
संप्राप्ता विंशतिं ये च मदं गृह्णन्ति दन्तिनः ॥
तांश्च ग्राहयेद्राजा द्विरदान्मिश्रविंशकान् ॥ ३८ ॥
यः पञ्चाशतमाश्रित्य मदावस्थां(स्था) प्रवर्तते ॥
तत्र तत्र हि सा प्रोक्ता तव प्रीत्या मयाऽनघ ॥
इत्यब्रवीत्पालकाप्यो राज्ञाऽङ्गेन प्रणोदितः ॥ ३९ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचन उत्तराभिधानपरिवारचतुर्थस्थाने मदावस्थानामाऽध्याय एकत्रिंशः ॥ ३१ ॥

---

अथ द्वात्रिंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
प्राह इत्युदितः पूर्वं तं मे व्याख्यातुमर्हसि ॥ १ ॥

---

१ क. °विधिं तु व° । २ संमृयते । ३ ख. °मत्तं वि° ।

ततः प्रोवाच भगवान्पालकाप्यो महामुनिः ॥
द्वौ ग्राहौ कीर्तितौ राजन्नागस्तन्तुक एव च ॥ २ ॥
तयोर्नागसमुत्पत्तिस्थानं रूपं च मे शृणु ॥
नागसत्त्वं महाराज गजं गृह्णात्यरिंदम ॥ ३ ॥
नागसत्त्वपरिज्ञानमिदं प्रोक्तं मनीषिभिः ॥
श्वसनः स्निग्धनीलाभः पश्चार्धतनुरायतः ॥ ४ ॥
नीलच्छविर्दीर्घहनुः निद्रालुः सूक्ष्मनिःस्वनः ॥
सकलमाषायतकरस्ताम्रजिह्वायतच्छविः ॥ ५ ॥
उदग्रः स्थूलहस्तश्च पिङ्गरक्तान्तलोचनः ॥
वारिजानां सगन्धो यो यवगण्डाप्रियश्च सः ॥ ६ ॥
पीनस्कन्धोऽल्पकर्णश्च चित्रपक्षोऽल्पपेचकः ॥
स्वप्नशीलस्तथाऽत्यर्थं स्वरे क्रूरे विशङ्कते ॥ ७ ॥
वृष्टिवाताशनिज्योत्स्नाधूमं चापि पिबेत्सदा ॥
नागसत्त्वः परिज्ञेयो नागस्य तरलो जयः ॥ ८ ॥
नागजातस्य नागस्य नित्यं नागजलाशयात् ॥
भयं भवति कालेन ततो नागत्वमिच्छति ॥ ९ ॥
नागपाशपरिक्षिप्तमवश्यं वशमागतम् ॥
तदा नागं हरत्याशु प्रत्यर्थं न तु विक्रमात् ॥ १० ॥
मणिरत्नोज्ज्वलशिरःस्वस्तिकाङ्कविभूषितः ॥
घोरो विद्युच्चलज्जिह्वस्तीक्ष्णदंष्ट्रो महाविषः ॥ ११ ॥
अनुगच्छति गच्छन्तं सुदीप्तो भाभिरव्ययः ॥
कषायमणिभिर्युक्तो ह्यमोघो ह्यजरामरः ॥ १२ ॥
तस्माद्भद्रेषु देशेषु नागानामालयेषु च ॥
(*दीप्ततोयासु वापीषु कूपेष्वारण्यकेषु च ॥ १३ ॥
सरस्सु च निभीयेषु(?) गिरिप्रस्रवणेषु च ॥)
नीलगम्भीरतोयासु सावर्तासु नदीषु च ॥ १४ ॥
उत्पलं कुमुदं वाऽपि पद्मं कोकनदं तथा ॥
विवर्णं दृश्यते यत्र तत्र वाच्यो द्विपस्तकः ॥ १५ ॥
नैव क्रीडेद्गजस्तेषु नागजातो विशेषतः ॥
स्थानेष्वेतेषु नियतं नागानामालयो भवेत् ॥ १६ ॥

* धनुश्चिह्नद्वयान्तःस्थो नास्ति पाठः कपुस्तके ।

चतुर्दश्याममावास्यां कृष्णाष्टम्यां तथैव च ॥
पञ्चम्यां चैव मुदिता नागाः क्रीडन्ति ते सदा ॥ १७ ॥
तस्मात्तेषु विशेषेण नागतीर्थं विवर्जयेत् ॥
अवश्यमवगाहस्तु कार्यः कार्यवशाद्यदि ॥
ग(गा)रुडेन विधानेन रक्षां कृत्वाऽवतारयेत् ॥ १८ ॥
हेमजैर्विविधैर्मन्त्रैर्द्विजोक्तैश्च विशेषतः ॥
भुजगेभ्यः समुद्दिश्य प्रयतश्च बलिं हरेत् ॥ १९ ॥
इति नागसत्त्वमृत्युर्नागानां तु प्रकीर्तितः ॥
एवं श्रुत्वाऽङ्गपतिः पुनः प्रष्टुमथाब्रवीत् ॥ २० ॥
भवन्ति(?) तन्तुकस्यापि श्रोतुमिच्छामि तत्त्वतः ॥
उत्पत्तिं च प्रभावं च प्रभवं चैव कीदृशम् ॥ २१ ॥
सूत्राणां सूत्रकश्चैव किमर्थमभिधीयते ॥
नागसंज्ञाकृतं चास्य ग्राहत्वं वा महामुने ॥ २२ ॥
कः प्रजानामभावाय को धर्मोऽनानुवर्तते ॥
गजप्राणा हि दस्युभ्यः प्रजारक्षाश्च पार्थिवाः ॥ २३ ॥
महान्तोऽपि हि संघाता बलिनो बलवत्तराः ॥
नालमेकस्य करिणः सत्त्वस्यान्वर्थवेदिनः ॥ २४ ॥
दैत्यदानवसंघाताः प्राप्य दिग्वारणाश्रणे ॥
क्षयं नीत्वा मुसरसैः ससैन्यबलवाहनाः ॥ २५ ॥
प्राकारभूताः सपदि वारणाः शत्रुवारणाः ॥
जयन्ति परसैन्यानि प्रसह्य बलवत्तया ॥ २६ ॥
यथा ते नाभिभूयन्ते मुच्यन्ते ग्राहतो हिताः ॥
रहस्यमत्र पद्मान्मप्यार्जं(?)मिह तद्वद ॥ २७ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
कदाचिदपि संमर्दात्संक्रुद्धस्य महात्मनः ॥ २८ ॥
सर्वलक्षणयुक्तस्य गजस्यैरावणस्य वै ॥
मदवेगपरिभ्रष्टाः पतितास्तु महीतले ॥ २९ ॥
बिन्दवस्तेऽश्रुभिः श्लिष्टाः पवनेन समीरिताः ॥
शक्रगोपसवर्णाश्च जनयन्त्यजरामरम् ॥ ३० ॥

१ स. घ. °तिः मुनिप्रष्टम्° ।

गोक्षीरहिमसंकाशं वेगतन्तुकमव्ययम् ॥
मदेन मदसंकाशमत्यर्थबलतेजसम् ॥ ३१ ॥
महामेघनिकाशानां गजानां विनिपातनम् ॥
नदीषु नीलतोयासु पद्मोत्पललतासु च ॥ ३२ ॥
सुनिगूढासु रम्यासु नित्यं तिष्ठन्ति तन्तुकाः ॥
सलिलस्य तु यो देशः सेव्यते नापि पक्षिणा ॥ ३३ ॥
सजीवाः सकृदावर्ता दृश्यन्ते यत्र निम्नगाः ॥
विवर्णं वा जलं यत्र शब्दं (?) चापि न लक्ष्यते ॥ ३४ ॥
अत्युष्णं चातिशीतं च तन्तुकं तत्र निर्दिशेत् ॥
यस्माद्गृह्णात्यतो ग्राहः सूत्राभः सूत्रतन्तुवत् ॥ ३५ ॥
तन्तुवद्वर्धते यस्मात्तस्मात्तन्तुकमुच्यते ॥
अवध्यत्वादमोघस्तु दारुणः सलिलाशयात् ॥ ३६ ॥
नागराजमदोत्पन्नास्तेन नागा इति स्मृताः ॥
न तस्य दृश्यते वक्त्रं न लाङ्गूलं न चोदरम् ॥ ३७ ॥
लूतीकाजालवत्सूक्ष्मः सर्वतो वाऽपि लक्ष्यते ॥
तदर्थं तस्य बलिनो विनियोगगतस्य च ॥ ३८ ॥
मदोत्पन्नस्य सहसा विनयातिमदस्य च ॥
भोगप्राप्तस्य करिणः प्राणवत्परिवेपते ॥ ३९ ॥
नागस्य तन्तुको हन्ति स्पृशन्नेव बलान्नृप ॥
अदृष्टकायस्य जले तन्तुकस्य यदृच्छया ॥ ४० ॥
न वध्यो दृश्यते यस्मात्सर्वथा भोगमाचरेत् ॥
नाग्निना न च शस्त्रेण नौकाभिर्न बलेन च ॥ ४१ ॥
न शक्यः शङ्खशब्दैश्च तस्य मोक्षो विशां पते ॥
गृहीतशस्त्रान्पुरुषानग्निहस्तांस्तथाऽपरान् ॥ ४२ ॥
छिद्यते नातिशस्त्रेण दह्यते दहनेन च ॥
दृष्ट्वा श्रुत्वाऽथ भो राजन्बहुशः परिवर्धते ॥ ४३ ॥
तस्मादेवं न कुर्वीत तन्तुकेनार्दिते गजे ॥
स गजेन्द्रमदोत्पन्नो येन शाम्यति तच्छृणु ॥ ४४ ॥
मेषशृङ्गेण चोत्थाप्य कूर्मपृष्ठे निपात्य च ॥
आदित्यकिरणैः स्पृष्टस्तुषार इव शाम्यति ॥ ४५ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचने सूत्रपाठे चतुर्थे उत्तरस्थाने नागतन्तुकग्राहाध्यायो द्वात्रिंशत्तमः ॥ ३२ ॥

---

अथ त्रयस्त्रिंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
हितार्थमब्रवीद्वाक्यं गजार्थे तत्त्वदर्शनः ॥ १ ॥
भगवञ्छ्रूयते मृत्युर्गजानां जलजो गजः ॥
तत्र वेदितुमिच्छामि भगवन्संशयो हि मे ॥ २ ॥
एवं पृष्टोऽङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥
शृणु राजञ्जले यादृग्यस्मिंस्तिष्ठेज्जलद्विपः ॥ ३ ॥
अगाधमतिसंस्निग्धं जलं यत्र सफेनिलम् ॥
सबुद्बुदं सनिर्घोषं पक्षिभिर्यन्न सेव्यते ॥ ४ ॥
असौम्यं दर्शने यत्र तस्मिंस्तिष्ठेज्जलद्विपः ॥
वदनं वारणस्येव दन्तान्किकरमस्तकाः ॥ ५ ॥
पादाश्चास्य समास्तस्य अष्टनाभिनखास्तथा ॥
स्थलापतो महावंशः पृष्ठकर्णो महोदरः ॥ ६ ॥
छविश्च कण्टकाकीर्णा मुखं दंष्ट्राकुलं महत् ॥
शेषं च मकरस्येव स ज्ञेयो जलवारणः ॥ ७ ॥
श्रुत्वाऽस्य गर्जितं सद्यः पीत्वा च तज्जलं गजाः ॥
आयुःसत्त्वबलोपेता वयस्था नीरुजाः स्मृताः ॥ ८ ॥
यस्मान्म्रियन्ते तस्मात्तं देशं क्षेमेण वर्जयेत् ॥
अष्टम्यां च चतुर्दश्याममावास्यां च धार्मिकः ॥ ९ ॥
नदीपद्मविधानेन बलिं कुर्यात्प्रयत्नतः ॥
महीपालाग्रजा विद्वान्सम्यग्ब्राह्मणसत्तमः ॥ १० ॥
पानेऽवगाहे मातङ्गो यदि तद्गोचरो भवेत् ॥
मृत्पिण्ड इव निर्वीर्यो विकर्षं यात्यसौ मनाक् ॥ ११ ॥
उच्यतेऽत्र क्रिया येन मुक्तो नागो भवेत्सुखी ॥
यैः भिषग्जलमातङ्गाद्रक्षयेत्तं नरोत्तम ॥ १२ ॥

सम्यक्संपूजयेद्राजा वैद्यं वस्त्रान्नभूषणैः ॥
*इत्यब्रवीत्पालकाप्यो राज्ञाङ्गेन प्रणोदितः ॥ १३ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचने उत्तराभिधानपरिवारचतुर्थे स्थाने जलहस्तिलक्षणं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

अथ चतुस्त्रिंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
जलौकालाबुशृङ्गाद्यैर्यदुक्तं रक्तमोक्षणम् ॥ १ ॥
तदशेषेण भगवन्सम्यगाख्यातुमर्हसि ॥
ततः प्रोवाच भगवान्पालकाप्यो महामुनिः ॥ २ ॥
जलौकानां विधानं तु यथाशास्त्रमुपायतः ॥
शोणितस्थापनार्थाय यथोक्तान्यौषधानि च ॥ ३ ॥
द्वादशैव जलौकानां जातयः परिकीर्तिताः ॥
षडत्र सविषा ज्ञेया निर्विषास्तु षडेव हि ॥ ४ ॥
पुष्करेषु प्रजायन्ते मधुराम्लं हि तज्जलम् ॥
अवन्तिविषये चान्या वत्सं(?) भूमीचरन्ति च ॥ ५ ॥
कलिङ्गेष्वपरान्ते च मध्यदेशे तथा परः ॥
कुशपुष्करसोनेषु जायन्ते ऊषरेषु च ॥ ६ ॥
पाञ्चाले यवने चैव सह्ये पाण्ड्ये तथैव च ॥
एते देशाः समाख्यातास्तव राजन्यथाक्रमम् ॥ ७ ॥
षडत्र सविषा उक्तास्तासां वक्ष्यामि लक्षणम् ॥
कृष्णाञ्जननिभा या च कृष्णवक्त्रा च या भवेत् ॥ ८ ॥
मस्तकश्चातिविःपीनो (?) विज्ञेया विषमाहिताः ॥
दीर्घायता यथा वल्ली विज्ञेया कर्बुरा नृप ॥ ९ ॥
मण्डूककुक्षिर्भवति स्वल्पेन पिसि(शि)तेन च ॥
तृतीया बलवा नाम विमुखी पापलक्षणा ॥ १० ॥
भवेत्सूक्ष्ममुखी पार्श्वा तथा रोमशमस्तका ॥
मुखं च कृष्णं भवति ............लामतिः ॥ ११ ॥

---

* 'प्रत्यन्तरोल्लिखितं सूक्तिरत्नाकरात्' इति त्रिष्वप्यादर्शपुस्तकेषु संदर्भमध्य एवेतः प्राक्समुपलभ्यते ॥

इन्द्रायुधनिभप्रख्या ऊर्ध्वराजीमुखा च या ॥
यस्मिन्वसति तोये च साऽतिभास्करवर्चसा ॥ १२ ॥
.................................मसाख्यां तां विनिर्दिशेत् ॥
इन्द्रायुधनि.........म्ना शृणु सामुद्रिका अपि ॥ १३ ॥
पित्तला भवति सक................................... ॥
या पुष्पाञ्चितसर्वाङ्गी विज्ञेया पञ्चमी तु सा ॥ १४ ॥
गोविन्दना भवेत्षष्ठी शृणु तस्यापि लक्षणम् ॥
भवेद्गोवृष ..........................रस्या नरेश्वर ॥ १५ ॥
कायश्च वृत्तो भवति सविषा तु विनिन्दिता ॥
एवेताः सविषा ज्ञेया निर्विषास्तु निबोध मे ॥ १६ ॥
पिङ्गला प्रथमा ज्ञेया बहु मुञ्चति शोणितम् ॥
हरिद्वर्णा प्रशस्ता च प्रशस्तां तां विनिर्दिशेत् ॥ १७ ॥
शङ्कुवक्त्रा द्वितीया च सुतगन्धमुखी भवेत् ॥
कायश्च वृत्तो भवति विद्यात्तामपि निर्विषाम् ॥ १८ ॥
कोटीकाभा भवेदन्या स्निग्धवर्णा च या भवेत् ॥
मूषिकाभा चतुर्थी च.....पतो वर्णतश्च या ॥ १९ ॥
स्पृष्टा भवति दुर्गन्धा पुण्डरीकमुखीं शृणु ॥
पुण्डरीकपलाशाभं मुखं यस्माद्विजायते ॥ २० ॥
एषाऽपि निर्विषा राजञ्शृणु शावरिकामपि ॥
मनःशिलाभा रुचिरा व्याविद्धा वा महस्पते ॥ २१ ॥
क्वचिन्मृद्वी च भवति कपिशां तां विनिर्दिशेत् ॥
हरिता पत्रवर्णाभा प्वकुमष्टादशाङ्गुला ॥ २२ ॥
.................................केश्चितत्र न संशयः ॥
न तां मनुष्यः सहते गजानामुत्तमा हि सा ॥ २३ ॥
इत्येता निर्विषाश्चैव व्याख्याताश्च जलौकसः ॥
जातीस्तासां प्रवक्ष्यामि यथावदनुपूर्वशः ॥ २४ ॥
पाण्डुदेशे तथा सह्ये जाताश्च यवनेषु याः ॥
एता विशेषतः श्रेष्ठास्त्ववकाशाश्च सर्वशः ॥ २५ ॥
एता महाशनाः प्रोक्ता विशिष्टाः सर्वकर्मसु ॥
नवपङ्काशया ह्येताः संकीर्णे न चरन्ति तु ॥ २६ ॥

स्थूलमध्याल्पकायाश्च परिक्लिन्ना तु या भवेत् ॥
अध्य(ध्या)यता तु या राजंञ्जलौकास्तां विनिर्दिशेत् ॥ २७ ॥
मृत्तिकां शालिपिष्टां च माषचूर्णमथापि वा ॥
विरूक्षयेज्जलौकार्थमर्दयेत्सतुजास्तु या ॥ २८ ॥
शुक्लेन चापि वस्त्रेण सर्वतः परिवेष्टयेत् ॥
निबद्धाः सर्वतः कृष्णा मुखमूलमपाशृणोत् ॥ २९ ॥
ततः शरावमध्ये च काञ्चने वाऽथ भाजने ॥
तत्रैतां निक्षिपेदाशु वस्त्रमासाद्य तत्त्वतः ॥ ३० ॥
जलैर्निर्वापयित्वा तु जलौकास्ता भिषग्वरः ॥
क्षीरेण श्वयथुं लिम्पेदथवा शोणितोक्षिताम् ॥ ३१ ॥
दद्याच्छस्त्रपदं चापि तस्मिन्ग्रहणहेतुकः ॥
जलौकाभिर्गृहीते तु शोणिते तस्य हस्तिनः ॥ ३२ ॥
कृते दोषापहरणे शोणितं न विदह्यते ॥
कृत्वाऽश्वखुरसंकाशं मुखं निवसति .... ....... ॥ ३३ ॥
.... ............... यित्वा तु तदा गृह्णात्यसंशयम् ॥
आदंशस्तुद्यते यस्तु कण्डूमांश्चैव जायते ॥ ३४ ॥
शुद्धवारि .... .... .... .... नाक्षिप्रं तमवगाहयेत् ॥
दंशं शोणितगन्धेन या तु नैव विमुञ्चति ॥ ३५ ॥
ततः सैन्धवचूर्णेन प्रतिसार्य जलायुकाम् ॥
हस्तेन तां ग्राहयित्वा ततो निष्पीडयेद्रजम् ॥ ३६ ॥
ये च वर्णाः समाख्याताः शोणितस्य पृथक्पृथक् ॥
तान्वर्णान्वा निरीक्षेत निःसृते शोणिते भिषक् ॥ ३७ ॥
इन्द्रगोपकवर्णं तु शुद्धं स्याद्यदि चेतरम् ॥
तस्मात्तं निःसृतं कुर्याद्रक्तमाशु विजानता ॥ ३८ ॥
न ह्यदृष्टे प्रकोपे च .... .... .... .... .... ॥
ईषज्जातं तु रुधिरं न व्याधिरतिवर्तते ॥ ३९ ॥
दोषावेशं च शमयेच्छीतलैर्मधुरैस्तथा ॥
.... ...... पूर्वमम्लाभिः कीर्तितास्ते जलौकसः ॥ ४० ॥
यदि वा कुशलो वैद्यः सविषामवतारयेत् ॥
विकारस्तत्र कार्त्स्न्येन यथावदुपदेक्ष्यते ॥ ४१ ॥

१ °येजलम् । २ क °षावशेषं श° ।

[illegible] ॥
चूर्णं [illegible] ॥ ४८ ॥
भेषजं [illegible] ॥
अनेन विधिना वैद्यो यः क्रियां कुरुते सदा ॥
अप्रमत्तश्च यत्नश्च स *गजः पुष्टिमावहेत् ॥ ४९ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेद उत्तराभिधाने परिवारचतुर्थस्थाने जलौकाध्यायश्चतुस्त्रिंशः ॥ ३४ ॥

---

अथ पञ्चत्रिंशोऽध्यायः ।

---

पालकाप्यमुपासीनं पप्रच्छाङ्गो महायशाः ॥
उपसर्गो हि नागानां कथं भवति दारुणः ॥ १ ॥
कथमाशु विपद्यन्ते बहवो वारणा मुने ॥
साध्यैरपि मदैर्युक्ता रिष्टैरपि विना क्षता(ः) ॥ २ ॥
श्रेष्ठो वा म्रियते सद्यः कथमेको मतङ्गजः ॥
महाकायेषु मरणं सद्य एव यथा मुने ॥ ३ ॥
एतन्मे पृच्छतो ब्रूहि सर्वमेतन्महामुने ॥
स पृष्टस्त्वङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥ ४ ॥
शृणु राजन्यथातथ्यं यन्मां त्वं पृष्टवानसि ॥
यदाऽऽक्रम्य मृगशिरस्तिष्ठत्यन्यतमो ग्रहः ॥ ५ ॥
राज्ञो वा जन्मनक्षत्रं ग्रहः कश्चित्प्रबाधते ॥
यस्मिन्देशे पशुपतिर्विष्णुश्चापि न पूज्यते ॥ ६ ॥
देवतानि च सर्वाणि भूतानि विविधानि च ॥
उपसर्गस्तदा राजञ्जायते प्राणनाशनः ॥ ७ ॥
यथा च गजशालासु न मांसरुधिरो [illegible] ॥
पर्वच्छिद्रेषु सर्वेषु भूतानां न निवेद्यते ॥ ८ ॥
शान्तिर्न क्रियते यत्र सर्वपापप्रशान्तये ॥
भूतानि तत्र विविधैर्व्याधिरूपैश्चरन्ति हि ॥ ९ ॥

---

* 'राज्ञः' इति दूषितम् ॥

---

१ क 'देशे यस्तु नास्य ।

पाकलो च महाघोरो रौद्रो वैष्णव एव च ॥
द्वौ तौ च घोरावत्यर्थं रूपिणौ गजनाशनौ ॥ १० ॥
तयोरन्यतमो मोहाद्यदा विशति पाकलः ॥
हुताशनार्चिर्मसिमेध्याविद्धैरूर्ध्वमूर्धजैः ॥ ११ ॥
लम्बभ्रूर्वक्त्रमांसश्च महाकर्णो महाभुजः ॥
सिन्दूरसदृशाभैश्च वदनैर्जिह्मलोचनः ॥ १२ ॥
शुकपत्रसवर्णाभैः श्मश्रुभिर्व्यापिताननः ॥
दंष्ट्रायुगेन(ण) तीक्ष्णेन करालेनेन्दुवर्चसा ॥ १३ ॥
अश्वमुखो नीलकण्ठः पृथूरस्को महाशिराः ॥
महाजानुः शुष्कजङ्घः पृथुपादो बृहन्नखः ॥ १४ ॥
कपालमालाभरणः शूलधृग्विश्वतोमुखः ॥
तथा खट्वाङ्गपाणिश्च नानाप्रहरणायुधः ॥ १५ ॥
व्याघ्रचर्मावृतश्चर्म वितत्याऽऽर्द्रं गजोद्भवम् ॥
मुक्ताट्टहासो विनदन्विविधान्भैरवान्रवान् ॥ १६ ॥
दीप्तमुष्टालपञ्शूलमुद्वमन्मांसशोणितम् ॥
विचित्रानेकरूपश्च युगाग्निरिव दुःसहः ॥ १७ ॥
बिभ्राणश्चैव शिरसा शृतं गजकलेवरम् ॥
बहुबाहुमुखः पांशुरदृश्योऽन्यैश्च देहिभिः ॥ १८ ॥
केवलं वारणैर्दृश्यो घोरः प्राणविनाशनः ॥
रूपेणानेन चरति पाकलः सर्वकोपजः ॥ १९ ॥
वैष्णवोऽप्यतसीपुष्पश्यामस्ताम्रायतेक्षणः ॥
विद्युल्लोलबृहज्जिह्वो विकटो वामनाकृतिः ॥ २० ॥
चलस्फिग्लम्बजठरः पिङ्गकुञ्चितमूर्धजः ॥
दारितास्यो महाहस्तश्चिपिटोऽतिमहाभुजः ॥ २१ ॥
वाराहमुखदंष्ट्रश्च नरसिंहाकृतिः पुनः ॥
दंष्ट्रान्तरविलग्नैश्च मानुषैश्च कलेवरैः ॥ २२ ॥
वारणास्थिमयं दाममभिरुह्य महद्द्रुवत् ॥
क्रीडमानो विवृत्ताक्षो मृतैर्गजकलेवरैः ॥ २३ ॥
शिवाक्रव्यादगोमायुप्रभृत्यनुगतः सदा ॥
नेत्राभ्यां वदनाच्चैव मुहुर्ज्वालां समुत्सृजन् ॥ २४ ॥

सशिरस्कं महाचर्म कृत्वा गजमयं ध्वजम् ॥
हरिश्मश्रुमुखैर्घोरैर्दीर्घैः रोमभिराचितः ॥ २५ ॥
व्याविद्धवक्त्राग्निजिह्वैर्जीवितं दन्तिनां वहन् ॥
वैष्णवैश्चापरैश्चिह्नैर्युतो वै घोरदर्शनैः ॥ २६ ॥
ज्वररूपी स्वयं मृत्युः सद्यो गजविनाशनः ॥
स तेन रूपेण यदा गजान्विशति पाकलः ॥ २७ ॥
दृष्ट्वा वा तादृशं रूपं पाकलस्य भयानकम् ॥
वातः श्लेष्मा च पित्तं च दन्तिनो रक्तमेव च ॥ २८ ॥
सर्वं भयेन देहस्थं भयाधिक्यात्प्रकुप्यति ॥
यदा मुखेन चाऽऽगत्य जघनेनावतिष्ठते ॥ २९ ॥
गजदेहं च सहसा यदा विशति पाकलः ॥
गजस्योभयतो वाऽपि धातवो भयपीडिताः ॥ ३० ॥
भिन्दन्ति हृदयं देहात्ततो नागो न जीवति ॥
यदा मुखेन चाऽऽगम्य मुखेनैव निवर्तते ॥ ३१ ॥
(*जघनेन यदाऽऽगम्य जघनेन निवर्तते ॥
तदा जीवयते नागः सिद्धिस्तत्र विनिश्चिता ॥ ३२ ॥
बलिकामो यदा वाऽपि गजं गृह्णाति पाकलः ॥)
तदा जीवयते नागः सिद्धिस्तत्र विनिश्चिता ॥ ३३ ॥
एतत्पाकलविज्ञानं चरतः शृणु लक्षणम् ॥
गजदेहं समाविश्य कामरूपी च कामगः ॥ ३४ ॥
वसाशोणितमांसानि वातपित्तकफांस्तथा ॥
दूषयित्वा तु कर्माणि कृन्तत्यन्तर्गतो ज्वरः ॥ ३५ ॥
क्रुद्धः स्वामी गृहस्येव गृहमभ्यगताञ्जनान् ॥
हेतुना येन मातङ्गा ज्वरं पश्यन्ति रूपिणम् ॥ ३६ ॥
प्रवक्ष्याम्यत ऊर्ध्वं च अग्निशापकृतं भयम् ॥
प्रविष्टोऽग्निर्यदा वासे शमीगर्भस्थितो गजे ॥ ३७ ॥
त्रिदशानां समाख्यातस्तत्र तामभिरुक्तवान् ॥
मूका भूत्वा ज्वरं घोरं दृष्ट्वा पाकलरूपिणम् ॥ ३८ ॥
न वै सेत्स्यथ वः शक्तिं ज्वरार्ताश्च मरिष्यथ ॥
हेतुनाऽनेन भीतास्ते ज्वरं दृष्ट्वा द्रवन्ति तु ॥ ३९ ॥

* धनुश्चिह्नान्तरगतो नास्ति पाठः कपुस्तके ॥

व्याधिं दृष्ट्वेव हरिणास्ततोद्विग्ना विचेतसः ॥
अश्रूणि मूत्रं लालां च सकृन्मूत्रन्ति चासकृत् ॥ ४० ॥
विमुच्य चारवं घोरं वेपमाना ज्वरातुराः ॥
मदान्धा इव मातङ्गा गच्छन्ति विषमेष्वपि ॥ ४१ ॥
प्रपतन्ति भयाच्चापि म्रियन्ते मारयन्ति च ॥
दिव्ययोगं समास्थाय ज्वरे योऽनुपसर्पति ॥ ४२ ॥
पुनर्नष्टः पुनः सृष्टः प्रहृष्टः पार्श्वतोऽग्रतः ॥
भूमावाकाशसंस्थश्च घोरा माया विदृश्यते ॥ ४३ ॥
एवं क्रूरो वैष्णवस्तु सर्वभूतवशंकरः ॥
यदा स्पृशति मातङ्गं तदा शय्यां विनाशयेत् ॥ ४४ ॥
चतुर्थे च महाराज पाकलो गजमाविशेत् ॥
गृह्णात्पाकलयत्यन्नः(न्नं) स्पृशत्युच्छ्वासयत्यपि ॥ ४४ ॥
गृहीतो म्रियते सद्यो महापातं नयत्यपि ॥
दर्शयेत्सर्वरूपाणि क्रमेणानुमितो गजः ॥ ४६ ॥
संस्पृष्टश्छायया त्यक्तश्चिराद्रूपाणि दर्शयेत् ॥
...... ....सहसा भूत्वा सद्यः स्वस्थो भवेत्पुनः ॥ ४७ ॥
तमुश्वासितमित्याहुः पाकलेन मतङ्गजम् ॥
बृंहते हस्तिरूपाणि हस्तं निष्पिष्य भूतले ॥ ४८ ॥
द्रुतं च पथि गच्छन्ति वीक्ष्य(क्ष)माणाः समन्ततः ॥
प्रस्तब्धकर्णलाङ्गूलाः सर्वतोद्विग्नचेतसः ॥ ४९ ॥
न च स्थानेषु तिष्ठन्ति निर्वाणं न भवन्ति च ॥
ज्वरस्तत्रोपसर्गाय चरतीत्यभिलक्षयेत् ॥ ५० ॥
व.....न्स कुञ्जरान्हन्ति श्रेष्ठं वाऽपि मतङ्गजम् ॥
तत्र क्रियां प्रकुर्याच्च शोभार्थी भिषजां वरः ॥ ५१ ॥
पूजयेद्यत्नतो रुद्रं विष्णुं सर्वांश्च देवताः ॥
रात्रौ भूतबलिश्चापि कर्तव्यो मांसशोणितैः ॥ ५२ ॥
सर्वासु राजशालासु चत्वरेष्ववटेषु च ॥
नगरात्स महामात्रान्निनयेद्वारणान्बहिः ॥ ५३ ॥
दिशि प्राच्यामुदीच्यां वा स्थानं जनमनोहरम् ॥
मनोरमतरान्देशानपरान्दन्तिनां ततः ॥ ५४ ॥

---

१ ०नुगतो ।

प्रचार्य वारणानाजन्वृक्षमक्षुणाशनान् ॥
अधिष्ठिता महारात्रैरेकाहारैः सुसंवृतैः ॥ ५५ ॥
सप्ताहमेवं संचार्य जपहोमपरायणैः ॥
पुरोहितस्तु कुर्वीत शान्तिं पापप्रणाशिनीम् ॥ ५६ ॥
तर्पयित्वा द्विजानन्नैर्दक्षिणाभिश्च पूजयेत् ॥
वासयेत्सहवत्सेषु वृषभाधिष्ठितास्तु गाः ॥ ५७ ॥
संमृष्टालंकृतं कृत्वा सर्वसंभारसंभृताः ॥
प्रवेश्या वारणा राजन्हस्त्यारोहैर्विशारदैः ॥ ५८ ॥
वेद्यैरहतवासोभिः सह व्याहृतिशोभिभिः ॥
आलानीयास्ततस्तम्भे बन्धेनानेन वारणाः ॥ ५९ ॥
यथा शतक्रतुः पूर्वं दृश्यते गर्भदारितः ॥
भूयःस्वात्मा यथा वत्स पुनः प्रविश स्वं गृहम् ॥ ६० ॥
भरद्वाजो मरुद्भिश्च हृतो भूप उदाहृतः ॥
तथा पुनः स्वशालायां क्षेमं वा लभ संभृतः ॥ ६१ ॥
प्रविशंस्तु निरुद्धस्तु स्तम्भे तिष्ठ शरच्छतम् ॥
अरोगो बलवान्भूयो राज्ञश्च विजयावहः ॥ ६२ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे उत्तराभिधाने परिवारचतुर्थस्थाने
महाप्रवचने वृद्धोपदेशे उपसर्गनिरूपणं नाम
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

अथ षट्त्रिंशोऽध्यायः ।

---

अङ्गो हि राजा चम्पायां पालकाप्यं स्म पृच्छति ॥
चतुर्मासीषु सर्वासु कथं नीराजयेद्गजान् ॥ १ ॥
लोहाभिहाराश्वयुजे कथं यज्ञो विधीयते ॥
को विधिः कोऽत्र नियमः को यज्ञः का च देवता ॥ २ ॥
प्रब्रूहि पृच्छतस्तन्मे यथावन्मुनिसत्तम ॥
स पृष्टस्त्वङ्गराजेन पालकाप्यस्ततोऽब्रवीत् ॥ ३ ॥
इदं शृणु महाराज यन्मां त्वं परिपृच्छसि ॥
लोहाभिहाराश्वयुजे योजयन्माकमयोजयेत् ॥ ४ ॥

जयाय नृपतेर्यस्माद्यज्ञं यत्नेन कारयेत् ॥
अयं हि प्रथमो यज्ञो नागानां संप्रवर्तते ॥ ५ ॥
सोऽयं संवत्सरे साध्यो यज्ञे नात्र विधीयते(?) ॥
तदा लोहित्यशिखरे संनह्यश्चाऽऽयुधानि च ॥ ६ ॥
तदा नीराजनाकालं वाहकाले प्रयोजयेत् ॥
नीराजना वाऽऽश्वयुजे गजानां संप्रचक्षते ॥ ७ ॥
रोगाणां तु निवृत्त्यर्थं तथा रक्षांसि पन्नगाः ॥
पिशाचा गुह्यकाश्चैव गन्धर्वा यक्षराक्षसाः ॥ ८ ॥
दानवाश्चैव सर्वेऽपि कौमाराश्चापि ये ग्रहाः ॥
ये घोरा राजयक्ष्माणो रुद्ररौद्राश्च देवताः ॥ ९ ॥
उपसर्गाश्च पापाश्च पीडा नक्षत्रजा च या ॥
बलिं वा भोक्तुकामाश्च (*हन्तुकामास्तथा परे ॥ १० ॥
तथा क्रीडितुकामाश्च ) घोररूपा महाग्रहाः ॥
देवोपघाता ये चान्ये तत्र शान्तिं व्रजन्ति ते ॥ ११ ॥
एतदर्थं महीपाल गजनीराजना स्मृता ॥
कार्तिकी प्रथमा राजन्द्वितीया फाल्गुनी तथा ॥ १२ ॥
आषाढी तु तृतीया स्यात्तिस्रो नीराजनाः स्मृताः ॥
चातुर्मासी भवेत्कार्या गजानां हितमिच्छता ॥ १३ ॥
तत्र यागं प्रवक्ष्यामि तन्मे शृणु नराधिप ॥
अश्वयुक्श्रवणं चित्राहस्ताश्विन्यः पुनर्वसुः ॥ १४ ॥
एष नक्षत्रयोगस्तु प्रशस्तो गजकर्मसु ॥
तिथिं तृतीयामिच्छन्ति तथा चैवात्र पञ्चमीम् ॥ १५ ॥
.................सप्तमीं चैव तथा चैकादशीमपि ॥
सावित्रं विजयो मैत्रो ध्रुवश्चाभिजितस्तथा ॥ १६ ॥
एते मुहूर्ताः पञ्च स्युः कर्मारम्भेषु हस्तिनाम् ॥
अथ पुण्याहघोषेण मुहूर्ता ये प्रकीर्तिताः ॥ १७ ॥
तेषामन्यतमे कुर्याद्विद्वान्यज्ञविधिं शुभम् ॥
यथार्हं देवतानां च भूतानां च बलिं हरेत् ॥ १८ ॥
उल्लापिकाश्च लाजाश्च धान्यं दधि घृतं मधु ॥
पायसं मत्स्यकुल्माषलोहिताक्षं गुडौदनम् ॥ १९ ॥

---

*धनुश्चिह्नद्वयान्तःस्थो नास्ति पाठः कपुस्तके ।

सजश्च सर्वमाख्याता कल्शास्तण्डुलाम्बुतम् ॥
सुप्रतिष्ठं भद्रपीठं मधमाल्यानुलेपनम् ॥ २० ॥
दीर्घाग्रान्हरितो दर्भान्विमाया चैव भोजनम् ॥
निवं शवं च विधिवत्तलेतुपरमाहरेत् ॥ २१ ॥
अञ्जनं तगरोशीरमिपकुं चैव योगवित् ॥
कुक्कुटं च वराहं च द्विखुरं च समाहरेत् ॥ २२ ॥
द्वे सूर्पे च तथा स्यातां द्वौ स्यातां व्यञ्जनौ तथा ॥
द्वे चापि पिटकौ(के) स्यातामष्टौ पटलकानि च ॥ २३ ॥
सर्वरत्नौषधींश्चापि धूपनं व्यञ्जनानि च ॥
रक्षाविधानं कुर्वीत गजानां स्वस्तिवाचनम् ॥ २४ ॥
तन्दुलाः स्वस्तिकाः पूता नवान्नं पायसं मधु ॥
पलाशाश्चापि समिधः शिग्रुकोदुम्बरास्तथा ॥ २५ ॥
अच्छिन्नाग्राः कुशाश्चैव दीर्घाग्रा हरितास्तथा ॥
गर्भागमे च कर्तव्या शान्तिः संध्याद्वयेऽपि च ॥ २६ ॥
पुरोहितो दक्षिणे च जुहुयाद्धव्यवाहनम् ॥
उत्तराग्निं च जुहुयाद्वैद्यः शुचिरलंकृतः ॥ २७ ॥
अहतक्षौमवसनः शुचिर्भूत्वा कृताञ्जलिः ॥
अष्टौ देवान्नमस्कृत्य गजानां स्वस्तिवाचने ॥ २८ ॥
प्रजापतिं च विष्णुं च सर्पभं च शचीपतिम् ॥
रुद्रं च बलदेवं च वरुणं धनदं तथा ॥ २९ ॥
सेनापतिं नमस्यामि गजानां स्वामिनं प्रभुम् ॥
सर्वजयप्रियं यज्ञं यज्ञभूमिं प्रकल्पयेत् ॥ ३० ॥
..................रतो वाऽपि ब्राह्मणानुमते शिवे ॥
प्रागुदक्प्रणये(वणे) देशे स्निग्धो.....विधिना शिवे ॥ ३१ ॥
प्रदक्षिणो.....दके सर्वत्र सुपरिक्रमे ॥
निवर्तमानच्छायायां मुहूर्ते पूजिते तथा ॥ ३२ ॥
गोमयेनावलिप्याथ यज्ञभूमिं निवेशयेत् ॥
तस्या स्थानान्तरं तत्र कुर्यादष्टावरत्नपः ॥ ३३ ॥
तोरणे प्राङ्मुखे वाऽपि शतयासि च कारयेत् ॥
प्रागुदक्प्रवणे देशे शय्यामार्गं च कारयेत् ॥ ३४ ॥

चतुरस्त्रे सूपलिप्ते दक्षिणे उन्नते शुभे ॥
उत्सेधवच्च सुशुक्लमीशात्प्राग्यतः शुभम् ॥ ३५ ॥
सुदृढं स्थापयत्स्तम्भं चतुरस्त्रं समाहितं ॥
उत्सेधेन दशारत्निं दशारत्न्युत्तरे भवेत् ॥ ३६ ॥
तस्याग्रे क्षौमकं बद्ध्वा शितयासी तथा स्मृता ॥
गोमयेनोपलिप्ताय पूर्वमेव सदाचितः ॥ ३७ ॥
हिंसां न जनयेत्तत्र तथा जनजनाविधिः ॥[1]
नोद्यानदेवोपहतान्नार्धशुष्का दृढात्मनः ॥ ३८ ॥
अनुगम्य नवान्वृक्षानृजुवृत्तान्शुभस्थितान् ॥
उत्सेधाद्द्वादशारत्नीन्कारयेत्तु विचक्षणः ॥ ३९ ॥
चन्दनैश्च यथोक्तैश्च स्नापयेदनुपर्वसु ॥
युग्मानि तस्य नागस्य कारयेदहतानि तु ॥ ४० ॥
हरिद्रापिष्टमादाय कुर्यात्पञ्चाङ्गुलानथ ॥
मङ्गलानि च सर्वाणि कारयेत विचक्षणः ॥ ४१ ॥
रोचनायाः प्रियङ्ग्वा च सम्पङ्नागं समालभेत् ॥
अद्भिश्चालंकृतं घृष्टं कुशाभिः समविस्तरेत् ॥
शोभितं वैजयन्तीभिर्निबद्धः पञ्चरज्जुभिः ॥ ४२ ॥
आरोग्याय च नागानां नृपस्य विजयाय च ॥
मध्ये च स्वस्तिकं कुर्यात्प्रशस्तांश्छत्रकुञ्जरान् ॥ ४३ ॥
अवकीर्णाय जलैश्च यज्ञभूमिं समन्ततः ॥
कुशोदुम्बरशाखाभिरच्छिद्राग्राभिरेव च ॥ ४४ ॥
प्रागग्राभिरुदग्राभिर्जातवेदः परिस्तरम् ॥
सचन्दनाम्बवान्कुम्भान्पूरयित्वाऽथ वारिणा ॥ ४५ ॥
स्थापयित्वा यथाभागं यागं समवकल्पयेत् ॥
सर्वमेव च संयुक्तमनुपूर्वं च निक्षिपेत् ॥ ४६ ॥
ततो मैत्रे मुहूर्ते च बोधयेज्जातवेदसम् ॥
काष्ठैः पलाशकैश्चापि संयुक्तोदुम्बरैस्तथा ॥ ४७ ॥
ज्योतिः संजनयेत्तत्र पावकं जुहुयात्ततः ॥
गृहीत्वोदकपात्रं च प्रोक्षयेद्धव्यवाहनम् ॥ ४८ ॥

---

१ क. °थावजननावधिः ।

अदिते नमस्तेऽनुमते नमस्ते देवसवितुर्नमस्ते ॥
उत्तिष्ठाग्ने विबुध्यस्व स्वभीतं चरितं मया ॥ ४९ ॥
विबोधयन्त्वप्सरसो वहयस्ताश्च ब्राह्मणाः ॥
यागं च मम पृच्छस्व प्रसन्नो हव्यवाहनः ॥ ५० ॥
श्रु(स्रु)वेणाऽऽज्यं गृहीत्वाऽथ शान्तिर्भवतु हस्तिनाम्, स्वाहा ॥
समिधे स्वाहा, भूः स्वाहा, भुवः स्वाहा, स्वः स्वाहा, भूर्भुवःस्वः स्वाहेति॥५१॥
बुद्धो बोधय भूतानि ब्राह्मणं वाऽमितौजसम् ॥
सहस्राक्षं भूपतिं च कुबेरं वरुणं यमम् ॥ ५२ ॥
विष्णुं चैव महात्मानं तथा नारदपर्वतौ ॥
उद्दालं काश्यपं कालं मरीचिं भृगुमेव च ॥ ५३ ॥
ऋषिमुख्यान्*मिष्यामि सर्वानेव कृताञ्जलिः ॥
आशिं चास्याऽऽहुतिं तेषां भूयः स्वस्ति गजे पुनः ॥ ५४ ॥
भवन्त्वरोगाश्च गजाः समृद्धिं तद्धि याजकाः ॥
द्विरदानां प्रयच्छन्तु बलारोग्ययशांसि च स्वाहा ॥ ५५ ॥
यक्षा भूतानि गन्धर्वा ओषध्यश्च दिशां गजाः ॥
आदित्या मरुतश्चैव अश्विनौ च तथा ग्रहाः ॥ ५६ ॥
गजानां संप्रयच्छन्तु वर्णारोग्ययशांसि च ॥
ऐरावतं पुष्पदन्तं कुमुदं वामनं तथा ॥ ५७ ॥
पुण्डरीकं नीलवर्णं सार्वभौमं सुतेजसम् ॥
सुप्रतीकं च नागौ द्वौ पर्वमालिनमेव च ॥ ५८ ॥
महागजास्तथैवान्ये ताञ्नमस्मे (?) कृताञ्जलिः ॥
आशिं चास्याऽऽहुतिं चैव भूयः स्वस्ति गजे पुनः ॥ ५९ ॥
भवन्त्वरोगाश्च गजाः समृद्धिं यान्तु याजकाः ॥
प्रयच्छन्तु च नागानां वर्णारोग्यशांसि च ॥ ६० ॥
अङ्गिरोजमदग्नी च वसिष्ठं पुलहं क्रतुम् ॥
दीर्घं परिचरं चैव पुलस्त्यं च्यवनं तथा ॥ ६१ ॥
देव्यः सद्यः स्थितास्त्वापस्तथा पर्वतमालिनम् ॥
हिमवत्प्रमुखांश्चापि तथैव कुलपर्वतान् ॥ ६२ ॥

---

* 'नमस्यामि' इति भवेत् ।

तथैव सर्वतोऽनन्तानभिष्यामि कृताञ्जलिः ॥
दिशो दश च ये नागाः संघःकायमधिष्ठिताः ॥ ६३ ॥
भूमिधरान्भुजङ्गांश्च तान्नमिष्ये कृताञ्जलिः ॥
आशिं चास्याऽऽहुतिं तेषां भूयः स्वस्ति गजे पुनः ॥ ६४ ॥
भवन्त्वरोगाश्च गजाः समृद्धिं यान्तु याजकाः ॥
प्रयच्छन्तु च नागानां वर्णारोग्ययशांसि च स्वाहा ॥ ६५ ॥
सरितश्च नमस्कृत्य चतुरश्च महोदधीन् ॥
गङ्गां च यमुनां चैव नर्मदां च महानदीम् ॥ ६६ ॥
गोदावरीं भीमरथीं कृष्णां वेणां च निम्नगाम् ॥
विपाशां च वितस्तां च चन्द्रभागामिलावतीम् ॥ ६७ ॥
तापीं च मनसस्तापीं कौशिकीं गण्डकीमपि ॥
कुर्वन्तु स्वस्ति नागानां निर्वाणं च रणे तथा ॥ ६८ ॥
आपगाः सरितश्च स्युर्देशेषु नगरेषु च ॥
आशिं चास्याऽऽहुतिस्तेषां भूयः स्वस्ति गजे पुनः ॥ ६९ ॥
भवन्त्वरोगाश्च गजाः समृद्धिं यान्तु याजकाः ॥
प्रयच्छन्तु च नागानां वर्णारोग्ययशांसि च स्वाहा ॥ ७० ॥
भूमी(मि)धरानभिमतान्महातेजान्महाबलान् ॥
वन्दे वन्द्यान्महाभागाञ्शुचिर्भूत्वा कृताञ्जलिः ॥ ७१ ॥
अनन्तं प्रथमं वन्दे सर्वलोकाभिपूजितम् ॥ ७२ ॥
कर्कोटकं धूमशिखं वासुकिं च महाबलम् ॥
कालिकं चात्र वन्दित्वा बलमुत्पलमेव च ॥ ७३ ॥
हरिं च विद्युज्जिह्वं च कम्बलाश्वतरावुभौ ॥
उभयं च तथाऽऽदित्यं जिह्वां चोपरि लेढि च ॥ ७४ ॥
प्रपतन्तः[1]...... ......श्चापि लाङ्गूलेन निषेवते ॥
अणुर्नागो महानागः पञ्चशीर्षो महाबलः ॥ ७५ ॥
नागो मणिग्रहश्चैव ये चापि धरणीधराः ॥
कुर्वन्तु स्वस्ति नागानां निर्वाणं ते रणे तथा ॥ ७६ ॥
अन्तर्भूमौ च ये नागा ये चापि दिशि गोचराः ॥
आशिं चास्याऽऽहुतिं तेषां भूयः स्वस्ति गजे पुनः ॥ ७७ ॥

---

१ क. °न्तः करैश्चापि।

भवन्त्वरोगाश्च गजाः समृद्धिं यान्तु पालकाः ॥
संप्रयच्छन्तु नागानां वर्णारोग्ययशांसि च स्वाहा ॥ ७८ ॥
उत्तरेण जयंश्चैवः सो(से)नान्यमभिकीर्त्य च ॥
सेनापतिं शक्तिधरं गजानां स्वामिनं प्रभुम् ॥ ७९ ॥
षष्ठीमिव क्रौञ्चरिपुं षण्मुखं द्वादशेक्षणम् ॥
रक्तमाल्याम्बरधरं घण्टाबर्हिणकुक्कुटान् ॥ ८० ॥
त्र्यम्बकं द्वादशभुजं कार्त्तिकेयं दुरासदम् ॥
रक्तप्रतिसरामाल्यः पताकावस्त्रचन्दनैः ॥ ८१ ॥
अर्चयेद्गुडसंपावपायसस्वस्तिकादिभिः ॥
तेषां प्रवर्तयेच्चापि समृद्धे जातवेदसि ॥ ८२ ॥
आशिं चास्याऽऽहुतिं तस्य भूयः स्वस्ति गजे पुनः ॥
भवन्त्वरोगाश्च गजाः समृद्धिं यान्तु पालकाः ॥ ८३ ॥
संप्रयच्छन्तु नागानां वर्णारोग्ययशांसि च स्वाहा ॥
पूर्वदक्षिणतो यां च दक्षिणां च दिशं तथा ॥ ८४ ॥
तथाच नैर्ऋतीं वन्दे पश्चिमां च दिशं तथा ॥
वायव्यां चोत्तरां चैव तथा पूर्वो……गाम् ॥ ८५ ॥
ततोर्ध्वं विदिशं वन्दे अदितिं देवमातरम् ॥
अधश्च ये दिशश्चैव तास्नमस्ये कृताञ्जलिः ॥ ८६ ॥
आशिं चास्याऽऽहुतिं तेषां भूयः स्वस्ति गजे पुनः ॥
भवन्त्वरोगाश्च गजाः समृद्धिं यान्तु पालकाः ॥ ८७ ॥
संप्रयच्छन्तु नागानां वर्णारोग्ययशांसि च ॥
स्वस्तिकापूपसंपावमधुश्चालान्भूतं दधि ॥ ८८ ॥
हिरण्यं च सुवर्णं च वासांस्यभिमवामि च ॥
धौरेयं च सुरां चैव वाचेषा वरवारुणी ॥ ८९ ॥
गुडमोदनमाल्यं च मत्स्यान्कुल्माष एव च ॥
सर्वमेतदुपन्यस्तं ग्रहाणामिमसोमिमार्न् ॥ ९० ॥
पुष्टिं ददुर्ग्रहाः सर्वे इदं भुक्त्वा वदस्व च ॥
प्रयच्छस्व च नागानां वर्णारोग्ययशांसि च स्वाहा ॥ ९१ ॥

---

* 'ग्रामान्' इति भवेत् ॥

---

१ ख. च. ग्रहणा° ।

व्यपोहस्व च पापानि इह राज्यं शतं समाः ॥
त्वया विसृष्टाः करिणो मनुष्याणां च संगताः ॥ ९२ ॥
अविसृष्टं त्वया नापि भोक्तुमर्हति कश्चन ॥
अपूतिमांसं सा रक्षमुपघ्रापरिवर्जितम् ॥ ९३ ॥
अनारूढं हि मनुजैस्त्वममारुह्य कुञ्जरम् ॥
गृहाण च यथावत्त्वं सेनान्ये भद्रमस्तु ते ॥ ९४ ॥
संप्रयच्छन्तु नागानां वर्णारोग्ययशांसि च स्वाहा ॥
पादायुधं ताम्रचूडं शतपत्रं मनोरमम् ॥ ९५ ॥
विचित्रपत्रं रक्ताक्षं कुक्कुटं दर्शयामि ते ॥
कुक्कुटं मे गृहाण त्वं सेनान्ये भद्रमस्तु ते ॥ ९६ ॥
संप्रयच्छन्तु नागानां वर्णारोग्ययशांसि च ॥
दंष्ट्राधरं चतुष्पादं पृथिव्यामुग्रदर्शनम् ॥ ९७ ॥
करेणुगात्रं रक्ताक्षं वराहं दर्शयामि ते ॥
वराहं तु गृहाण त्वं सेनान्ये भद्रमस्तु ते ॥ ९८ ॥
संप्रयच्छस्व नागानां वर्णारोग्ययशांसि च स्वाहा ॥
प्रभूतवर्णं लाङ्गूलं सर्वाङ्गसुसमाहितम् ॥ ९९ ॥
धौतमामलकैः पूतैश्छागं संदर्शयामि ते ॥
छागमेतं गृहाण त्वं सेनान्ये भद्रमस्तु ते ॥
संप्रयच्छस्व नागानां वर्णारोग्ययशांसि च स्वाहा ॥ १०० ॥
सहस्रमूलाव(द)नतं देवराजविलेपनम् ॥
प्रवरं सर्वमूलानामुशीरं दर्शयामि ते ॥ १ ॥
उशीरं मे गृहाण त्वं सेनान्ये भद्रमस्तु ते ॥ २ ॥
संप्रयच्छस्व नागानां वर्णारोग्ययशांसि च स्वाहा ॥
वैराजजां त्विमां मालां सहस्राक्षेण धारिताम् ॥ ३ ॥
संभूतां पर्वतश्रेष्ठे आहृतां गन्धमादनात् ॥
नारायणकृतावासां बलदेवप्रियां शुभाम् ॥ ४ ॥
गृहाण मालां प्रवरां सेनान्ये भद्रमस्तु ते ॥
संप्रयच्छस्व नागानां वर्णारोग्ययशांसि च स्वाहा ॥ १०५ ॥
इमाममृतसंभूतां देवतानां मनोहराम् ॥
प्रीतिसंजननीं देवीं भूतनागनिषेविताम् ॥ ६ ॥

सर्वेषु च प्रवाहेषु क्षेत्रनीराजनासु च ॥
नागानां च प्रवेशेषु मङ्गल्या वारुणी स्मृता ॥ ७ ॥
सुरां सुगन्धां सुरसां निशाचरमनोरमाम् ॥
पूजितां देवमनुजैः प्रसन्नां दर्शयामि ते ॥ ८ ॥
वारुणीं मे गृहाण त्वं सेनान्ये भद्रमस्तु ते ॥
संप्रयच्छस्व नागानां वर्णारोग्ययशांसि च स्वाहा ॥ ९ ॥
इमे शङ्खा मृदङ्गाश्च कांस्यवाद्यानि यानि च ॥
वीणा सपाणिपणवो(वा) नार्यः परिषदं गताः ॥ ११० ॥
आहृता मङ्गलार्थं वै गायन्ते मधुरस्वराः ॥
इहैकरात्रं दिवसं विजयाय नृपस्य च ॥ ११ ॥
विविधानि च रूपाणि सम्यगुद्वध्वा हुताशनैः ॥
कु(क्री)यमाने(णे) निमित्तज्ञो लक्षयित्वा विनिर्दिशेत् ॥ १२ ॥
कु(क्री)यमाणं क्षयं याति योऽग्निश्चिटचिटायते ॥
छिद्रार्थं पुरुषश्चापि वस्त्रगन्धस्तथैव च ॥ १३ ॥
अनेकवर्णो भवति अभ्रकाकृतिसंस्थितः ॥
होतृदाही च यो वह्निर्द्विजानां क्षयमादिशेत् ॥ १४ ॥
(*कूजमानस्त्वलिङ्गाद्योऽक्षयं राज्ये विरूपवान् ॥
धूमवान्न(न)श्मवान्नाथ चर्मगन्धसमश्च यः ॥ ११५ ॥
गोमुखाकृतिसंस्थानो गवां स क्षयमादिशेत् ॥ )
अव्यक्तवर्णो दुर्गन्धिर्विप्रकीर्णशिखोऽनलः ॥ १६ ॥
क्षिप्रं विनाशयेद्राष्ट्रं साम्राज्यं सपुरोहितम् ॥
राज्ञीमरणमेवापि वसागन्धसमोऽनलः ॥ १७ ॥
हीनस्वनश्च दीप्ताग्निः कुणपस्येव दह्यते ॥
संबन्धस्याच्छिन्नशिखो हतमाख्याति पार्थिवम् ॥ १८ ॥
श्यामः पापकृतिश्चापि वायसप्रतिनिश्चयः ॥
राज्ञः कोशविनाशाय युवराजवधाय च ॥ १९ ॥
एतद्धि कुरुते वह्निरविधूमाकृतिश्चयः ॥
करे चोरसि दाही च होतृदाही च यद्भवेत् ॥ १२० ॥

---

* धनुश्चिह्नान्तरगतो नास्ति पाठः कपुस्तके ।

---

१ क. प्रदेशेषु । २ क. होतृदाहे ।

तत्रार्थहानिं जानीयात्तस्मिन्नुत्पातदर्शने ॥
करीषधूमसंकाश इन्द्रायुधसमद्युतिः ॥ २१ ॥
हस्तिनां संक्षयं क्षिप्रं तद्विधो वह्निरादिशेत् ॥
कक्ष्यः कपिसंस्थानमथ वर्णसमन्धिकः ॥ २२ ॥
भयनाशं तदाऽऽरुयाति हूयमानो हुताशनः ॥
हरिद्रारिद्रवर्णाभो वेपमानो यदाऽनलः ॥ २३ ॥
निगडाकृतिसंस्थानस्तत्र शङ्खानिलाकृतिः ॥
पाशाकृतिनिभश्चापि राज्ञो निधनमादिशेत् ॥ २४ ॥
विच्छिन्नद्रवसूर्याणामाकृतारुदितस्वरः ॥
वामनो यस्य गन्धोघधूमः प्रतिनिवर्तते ॥ १२५ ॥
मत्स्यशोणितगन्धस्तु तुल्यो(?) मज्जश्च यो भवेत् ॥
राज्ञस्तत्र वधं दद्याच्छास्त्रप्रोक्तैरिमैर्भिषक् ॥ २६ ॥
अशुभान्येवमादीनि निमित्तानि च भूपते ॥
प्रासादादिभिरुच्चाभिः स्त्रीपदकलशाकृतिः ॥ २७ ॥
प्रदक्षिणावर्तशिखोऽससरक्तोदधिस्वनः ॥
शङ्खप्रभवमेघानां मेघदुन्दुभिनिस्वनः ॥ २८ ॥
सुवर्णरजतप्रख्यक्षीरपायसगन्धवान् ॥
शस्त्राणां कवचानां च ध्वजानां च महीपते ॥ २९ ॥
भास्वते तेजसाऽत्यर्थं संग्रामे जयमादिशेत् ॥
प्रहृष्टमनसश्चैव शुक्लाम्बरधरानपि ॥ १३० ॥
ईरयेयुः शुभान्भावांस्तज्ज्ञेयं जयलक्षणम् ॥
यदा त्वशुभोऽप्रसन्नो''''हव्यवाहनम् ॥ ३१ ॥
महाभयं विजानीयात्तस्मिन्नुत्पातदर्शने ॥
सृजन्मूत्रपुरीषो वै निद्राम(?)न्दुर्मना गजः ॥ ३२ ॥
व्याधितात्तेन भूपश्च निर्दिशेच्छास्त्रकोविदः ॥
असंभ्रान्तमना यस्तु निर्गच्छेत्तत्र वारणः ॥ ३३ ॥
यात्रासिद्धिं विजानीयान्नृपतेर्जयलक्षणम् ॥
'''''''''''''''''प्रकृति''''पार्श्वतो वा मतङ्गजः ॥ ३४ ॥

१ क. °धूपसं° । २ क. °कृतीरु° । ३ क. तुल्यौ । ४ क. यात्रास्थितं । ५ क. पृष्ठतः प्रकृतिर्यश्च पार्श्वतो ।

नवोदकाभिवृष्टाशाः पृथिव्या गन्धवद्भवेत् ॥
(*नृपस्य विजयं विद्याच्छीघ्रोत्थानो विधूमतः ॥ १३५ ॥
अनिर्गते राजेनाग ............ रणाद्यदि ॥
पशुर्मनुष्यो वत्सो वा चापि वा पुरुषर्षभः ॥ ३६ ॥
विद्याद्गजानां स भयं सारोहपरिकर्मणाम् ॥
पुरोहितविनाशाय तं निमित्तं विनिर्दिशेत् ॥ ३७ ॥
शान्त्यर्थं तस्य पापस्य विधिमन्यं समाचरेत् ॥ )
ऐरावतं समारुह्य यथेन्द्रेण पुराजितः ॥ ३८ ॥
जयत्वां पार्थिवाञ्शत्रूंस्त्वामारुह्य यथा रणे ॥
यदि दक्षिणगन्धस्य शस्तं चंक्रमणं भवेत् ॥ ३९ ॥
नागराजस्य नृपतेर्भूलाभं तत्र निर्दिशेत् ॥
शत्रुहानिं विजानीयाद्वामक्रान्ते विपर्ययः ॥ १४० ॥
छत्रध्वजपताकानामुल्कानां दर्शनं तथा ॥
भेदेन कलशानां च सत्पोत्राणां च छेदने ॥ ४१ ॥
धात्रीघातो विजानीयात्तस्मिन्नुत्पातदर्शने ॥
तोरणाद्द्वारमाप्नोति यदि नागो निवर्तते ॥ ४२ ॥
क्रोधाभिभूतः स गजो विनश्यति न संशयः ॥
श्रद्धया तु हविःशेषे पिण्डे भुक्ते यदा गजः ॥ ४३ ॥
महासुभिक्षं जानीयाद्दुर्भिक्षं छर्दनाद्भवेत् ॥
महद्भयं तत्र भवेत्तस्मिन्नुत्पातदर्शने ॥ ४४ ॥
समः स्निग्धोऽनुनादी च गम्भीरः पण्डितस्तथा ॥
वारणाय यदा शब्दस्तद्भवेज्जयलक्षणम् ॥ १४५ ॥
भिन्नोऽल्पशब्दो रूक्षश्च भेरीजर्जरनिस्वनः ॥
वादित्राणां यदा शब्दस्तदा न जयकल्पते(?) ॥ ४६ ॥
विस्वरं रचते भूमिः कम्पते स्फटते तथा ॥
नीराज्यमाने नागेन्द्रे भर्तारं त्वन्यमिच्छति ॥ ४७ ॥
निमित्तान्येवमादीनि शुभान्येव निवेदयेत् ॥
एतेष्वपि च कर्तव्यं शान्तिकर्म निवेशयेत् ॥ ४८ ॥

---

* धनुर्द्वयान्तरगतो नास्ति पाठः कपुस्तके ॥

---

१ क. समाप्ति° ।

आयुर्वेदस्त्विहाध्याये वारणानां समाप्यते ॥
चतुर्थं चोत्तरं स्थानं परिचाराभिसंज्ञितम् ॥ ४९ ॥
यस्त्विदं निखिलं वैद्यः शास्त्रं वेत्ति ससंग्रहम् ॥
यथावत्सपरीवारं प्रापणे न स मुह्यति ॥ १५० ॥
तस्य राज्ञो गजा नित्यं हस्ते देया जिगीषुणा ॥
स च योग्यः क्रियां कर्तुं वारणानां भिषग्वरः ॥ ५१ ॥

शुभविधिमनुसृत्य यश्चिकित्सां
निपुणमतिर्नियतं करोति वैद्यः ॥
स भवति सततं नृपेण पूज्यः
कृतमति(?) विबुधः समीक्ष्य नागान् ॥ ५२ ॥

इति राजकुलप्रदिशं चिकित्सा-
मृषिऋषभः स चकार पालकाप्यः ॥
तनुरुहचरणाय पृच्छते मां
सुरपतितोयधनेश्वरोपमाय ॥ १५३ ॥

इति श्रीपालकाप्ये हस्त्यायुर्वेदे महाप्रवचने वृद्धोपदेशे
उत्तराभिधाने परिवारचतुर्थस्थाने षट्त्रिंशो
गजशान्त्यध्यायः ॥ ३६ ॥

---

परिसमाप्तेयं पालकाप्यविरचिता हस्त्यायुर्वेदसंहिता ।